❀ ओ३म् ❀

श्रीभगवत्पतञ्जलि-विरचितं

# व्याकरण-महाभाष्यम्

## पञ्चमो भागः

---

### युवोरनाकौ ॥ ७ । १ । १ ॥

युवोरनाकावित्युच्यते कयोर्युवोरनाकौ भवतः । प्रत्यययोः । कथं पुनरङ्गस्ये-

---

**प्रदीपः**—युवोरनाकौ । इह युवोरिति समाहारद्वंद्वे 'युवुन' इति प्राप्नोति । इतरेतरयोगे तु युव्वोरिति । तत्र सौत्रत्वान्निर्देशस्य नुममकृत्वोकारलोपं वा कृत्वा निर्देश इति न दोषः । केचित्तु कर्मधारयं व्याचक्षते । अवयवधर्मेण समुदायस्य व्यपदेशात् । यथा समं चूर्णं कृण्वीत इति । एवं युश्चासौ समुदायो युवुलक्षणो वुश्चासाविति । तत्र समुदायस्याङ्गनिमित्तत्वासंभवादवयवयोर्यथासंख्यं कार्यविज्ञानम् । यथा च भाष्यं कयोर्युवोरिति तथेतरेतरयोगे द्वन्द्व इति निर्णयः । अतिप्रसङ्गं मत्वा पृच्छति—कयोरिति । प्रत्यययोरिति । अङ्गाधिकारादङ्गस्य निमित्ते यौ युवू तयोरनाकाविति सूत्रार्थाश्रयणात् । कथं पुनरिति । अङ्गाधिकारादङ्गस्यैव कार्यित्वं युक्तमिति भावः । सिद्धान्तवादिना तु वैयधिकरण्येन संबन्धो दर्शयितव्यः । संप्रति

---

**उद्योतः**—युवोरनाकौ । युवोरिति निर्देशानुपपत्तिमुद्भाव्य परिहरति—इहेति । नपुंसकत्वान्नुमः प्राप्तेरिति भावः । युव्वोरिति । ओसि यणादेशप्रसङ्गादिति भावः । आद्ये समाधत्ते—नुममकृत्वेति । सौत्रत्वादिति भावः । द्वितीय आह—उकारलोपं वेति । छान्दसोवर्णलोप इति भावः । समं चूर्णमिति । चूर्णं कणसमुदायः । तत्रावयवसामान्यात्समुदायस्य तथा व्यपदेशः । कृण्वीत इत्यत्रावयवयोः कृण्वीतत्वात्समुदायस्य तथा व्यपदेशः । वर्णौ वर्णेनेति समानाधिकरणसमासः । नन्वेवं समुदायस्यानाकौ स्यातामत आह—तत्रेति । यथा चेति । छान्दसश्च वर्णलोप इति तद्भावः । अतिप्रसङ्गमिति । युत्वाभुज्युरित्यादौ । अङ्गस्यैवेति । युवुशब्दान्तस्याङ्गस्येत्यर्थ इति भावः । यद्यपि सिद्धान्तेऽपि वैयधिकरण्यसंबन्धोऽभिमतस्तथाऽपि शिष्यबुद्धिपरीक्षार्थं तदनाश्रयणेन परिहरतीत्याह—सिद्धान्तवादिना त्विति । ननु शाब्दतोऽत्र विभक्तिरस्त्येवेत्यत आह—लौकिक

त्यनुवर्तमाने÷ प्रत्यययोः स्याताम् । युशब्दवुशब्दान्तमेतद्विभक्तावङ्गं भवति । यदि युशब्दवुशब्दान्तस्याङ्गस्यानाकौ भवतः सर्वादेशौ प्राप्नुतः× । निर्दिश्यमानस्याऽऽदेशा भवन्तीत्येवं न भविष्यतः । यत्र तर्हि विभक्तिर्नास्ति । नन्दना कारिकेति+ । अत्रापि प्रत्ययलक्षणेन विभक्तिः । यत्र तर्हि प्रत्ययलक्षणं नास्ति । नन्दनप्रियः कारकप्रिय इति* । मा भूतां याऽसौ सामासिकी विभक्तिस्तस्यां याऽसौ समासाद्विभक्तिस्तस्यां भविष्यतः । न वै तस्यां युशब्दवुशब्दान्तमङ्गं भवति । भवेद्यो युशब्दवुशब्दाभ्यामङ्गं विशेषयेत्तस्यानन्त्ययोर्न स्यातां वयं खल्वङ्गेन युशब्दवुशब्दौ विशेषयिष्यामः । अङ्गस्य युवोरनाकौ भवतो यत्रतत्रस्थयोरिति । यत्र तर्हि समासाद्विभक्तिर्नास्ति । नन्दनदधि कारकदधि× । एवं तर्हि—

न वा परं निमित्तं संज्ञा च प्रत्ययलक्षणेन ।

---

प्र०–तु सामानाधिकरण्येन संबन्धमाश्रित्य समाधीयते । युशब्दवुशब्दान्तमिति । कृत्तद्धितान्तत्वाद्युवुशब्दान्तस्य प्रातिपदिकत्वाद्विभक्तावुत्पन्नायां सत्यङ्गत्वे अनाकौ क्रियेते इत्यर्थः । यत्र तर्हि विभक्तिर्नास्ति नन्दना कारिकेति । लौकिके प्रयोगेऽत्यन्तमत्र विभक्तेरभावः । अत्राऽऽहुः—विभक्तावुत्पन्नायामनाकयोः कृतयोरकारान्तलक्षणेन टापा भाव्यम् । ततो हल्ङ्यादिलोपेनेत्यानुपूर्व्या सिद्धमेतत् । यथा या सेति । ततश्चाग्रन्थोऽयमिति नन्दन कारकेति पाठो युक्तः । नन्द यु स् इति स्थिते संबुद्धिगुणे कृतेऽकृते वा नित्यत्वादेङ्ह्रस्वात्संबुद्धेरिति लोपे कृतेऽङ्गत्वाभावादनाकाप्रसङ्गः । नन्दनप्रिय इति अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इति लुकि कृते न लुमताऽङ्गस्येति प्रत्ययलक्षणप्रतिषेधादनाकयोरप्रसङ्गः । भवेदिति । विशेषणविशेष्यभावे कामचारादङ्गेन युवू विशेष्येते न च तावङ्गान्तौ संभवतः । न च विशेष्येण तदन्तविधिर्भवतीति युवुभ्यां तदन्तविध्यभावाद्यत्र तत्र स्थितयोरङ्गावयवयोर्युवोरनाकौ भवतः । नन्दनदधीति । स्वमोर्नपुंसकादिति लुकि नित्यत्वात्कृते न लुमताऽङ्गस्येति प्रत्ययलक्षणप्रतिषेधादादेशाप्राप्तिः । न वा परमिति । नहीह विभक्तिः प्रत्ययान्तरं वा परं निमित्तत्वेनोपात्तमिति प्रत्ययलक्षणत्वमनाकयोर्नास्तीति न लुमताऽङ्गस्येति प्रत्ययलक्षणप्रतिषेधस्यायमविषयः । केवलमङ्गस्य युवोरनाकौ भवत इत्युच्यते । अस्ति च प्रत्ययलक्षणेनाङ्गसंज्ञा । नहि तस्यां विधीयमानायां न लुमताऽङ्गस्येति

---

उ०–इति । नित्यत्वादिति । अकृते गुणे ह्रस्वान्तत्वात्कृत एङन्तत्वाल्लोपप्राप्तेरिति भावः । अन्तरङ्गानपीति । एतेनान्तरङ्गत्वात्पूर्वमनाकाभ्यां भाव्यमित्यपास्तम् । नन्वङ्गस्य । विशेषणत्वात्तदन्तविधिः स्यादत आह—न च ताविति । नापि युवुभ्यामित्याह—न च विशेष्येणेति । नित्यत्वादिति । अन्तरङ्गानपीति

---

÷६. ४. १. ×१. १. ५५ +६. १. ६८. *२.४.७१; १. १. ६३. ×७. १. २३; १. १. ६३.

न चेह परं निमित्तमाश्रीयते । अस्मिन्परतो युवोरनाकौ भवत इति । किं तर्हि । अङ्गस्य युवोरनाकौ भवत इति । अङ्गसंज्ञा च भवति प्रत्ययलक्षणेन । अथवा तयोरेव यदङ्गं तन्निमित्तत्वेनाऽऽश्रयिष्यामः । कथम् ? अङ्गस्येति संबन्धसामान्ये षष्ठी विज्ञास्यते । अङ्गस्य यौ युवू । किंचाङ्गस्य युवू । निमित्तम् । ययोर्युवोरङ्गमित्येतद्भवति । कयोश्चैतद्भवति ? प्रत्यययोः ।

## युवोरनाकाविति चेद्धातुप्रतिषेधः ॥ १ ॥

प्र०—प्रतिषेधः प्रवर्तते । लब्धाङ्गसंज्ञस्य कार्यान्तरे विधातव्ये स प्रतिषेधः प्रवर्तते । न चाङ्गसंज्ञाऽङ्गस्य कार्यमिति प्रतिषेधाभावः । ननु चाङ्गस्येत्यत्राऽऽसप्तमाध्यायपरिसमाप्तेरङ्गाधिकारे वव्रश्चेत्यत्रोरदत्त्वस्य परनिमित्तकत्वात्स्थानिवद्भावे सति न संप्रसारणे संप्रसारणमिति वकारस्य संप्रसारणप्रतिषेध उक्तः स इहत्येन न वा परं निमित्तमित्यनेन ग्रन्थेन विरुध्यते । नास्ति विरोधो दर्शनभेदाद्यथोद्देशं संज्ञापरिभाषमिति पक्षमाश्रित्य न वा परं निमित्तमित्याद्युक्तम् । कार्यकालं संज्ञापरिभाषमाश्रित्य वव्रश्चेत्युक्तम् । तत्र हि पक्ष उरदित्यत्राङ्गसंज्ञासूत्रोपस्थानात्संनिहितः प्रत्ययो निमित्तत्वेनाऽऽश्रीयत इति परनिमित्तत्वं भवति । अथवेति । भवतु कार्यकालपक्षस्तत्रापि न दोष इति भावः । निमित्तत्वमिति । अनाकादेशविधाने । सबन्धसामान्ये षष्ठीति । निमित्तनिमित्तिभावलक्षणश्च संबन्धोऽन्तरङ्गत्वादाश्रीयते । प्रत्ययनिमित्तत्वाच्चाङ्गव्यपदेशस्य प्रत्यययोरेव ग्रहणं विज्ञायते । धातुप्रतिषेध इति । नन्वधुनै-

उ०—न्यायाच्चेत्यपि बोध्यम् । प्रत्ययलक्षणत्वं प्रत्ययनिमित्तकत्वम् । न चाङ्गसंज्ञेति । न लुमता तस्मिन्निति वार्तिकरीत्या प्राप्तेः सूत्रेऽप्यङ्गपदं पूर्वोपलक्षणमेवेति चिन्त्यमेतत् । तस्मान्निषेधानित्यत्वादङ्गसंज्ञा भवतीत्येव भाष्याशयः । विरुध्यत इति । उरदत्त्ववदस्यापि परनिमित्तत्वादिति भावः । संनिहित इति । स च लक्ष्यानुरोधादावृत्त्याऽऽत्वविशेषणमिति भावः । प्रकृते त्वावृत्त्या निमित्तत्वे न मानमित्येव भाष्याशयो युक्तः । यथोद्देशपक्षे तु सर्वथाऽसंनिधानेनैवेति तत्पक्षेणैव भाष्यं योजितमुपाध्यायैः । कार्यकालपक्ष इति चाऽऽवृत्तेरप्युपलक्षणमिदम् । अन्ये तु यथोद्देशेऽपि संज्ञापरिभाषादेशे कार्याणां गमनमिति क्ङिति चेति सूत्रकैयटोक्तपक्षे संनिधानं दुर्वारमिति भाष्यासंगतिरेव कैयटोक्तव्याख्यान इत्याहुः । परे त्वङ्गसंज्ञायाः परनिमित्तत्वेन तद्द्वाराऽऽत्वस्यापि परनिमित्तत्वमिति स्थानिवद्भावप्रवृत्तिरत्वस्य साक्षात्परनिमित्तत्वाभावेऽपि । अत एवाजर्घा इत्यादावत्वसिद्धिरितीदं तच्च सममिति न कश्चिद्भाष्ययोर्विरोधप्रसङ्ग इत्याहुः । ननु युवोरङ्गनिमित्तत्वमित्यङ्गस्य निमित्तत्वोक्तिरयुक्तेत्यत आह—अनाकेति । तयोरेव यद्रूपं युवु इति तदङ्गं प्रति निमित्तत्वेनाऽऽश्रयिष्याम इति भाष्यार्थ इति भावः । संबन्धान्तरस्यापि संभवादाह—अन्तरङ्गत्वादिति । शब्दयोश्च निमित्तनिमित्तिभावो वा स्थान्यादेशभावो वा । तत्रान्त्यस्यासंभवादाद्यस्यैव ग्रहणमिति भावः । युक्त्यन्तरमाह—प्रत्यय-

युवोरनाकाविति चेद्धातुप्रतिषेधो वक्तव्यः । युत्वा युतः युतवान् युतिः ।

**भुज्य्वादीनां च ॥ २ ॥**

भुज्य्वादिनां च प्रतिषेधो वक्तव्यः । भुज्युः कंयुः शंयुरिति××।

**अनुनासिकपरत्वात्सिद्धम् ॥ ३ ॥**

अनुनासिकपरयोर्युवोर्ग्रहणं न चैतावनुनासिकपरौ । यद्यनुनासिकपरयोर्ग्रहणं नन्दनः कारकः अत्र न प्राप्नुतो न ह्येताभ्यां युशब्दवुशब्दाभ्यामनुनासिकं परं पश्यामः । अनुनासिकपरत्वादिति नैवं विज्ञायते अनुनासिकः पर आभ्यां ताविमावनुनासिकपरौ अनुनासिकपरत्वादिति । कथं तर्हि ? अनुनासिकः परोऽनयोस्ताविमावनुनासिकपरौ अनुनासिकपरत्वादिति । यद्यनुनासिकपरयोर्ग्रहणमित्संज्ञा प्राप्नोति+। तत्र को दोषः ?

---

प्र०-वोक्तं प्रत्यययोर्ग्रहणमिति । सत्यमुक्तं न तु लभ्यते। सामानाधिकरण्येन संबन्धसंभवे वैयधिकरण्यपक्षाश्रयणस्यायुक्तत्वात् । भेदे हि निमित्तनिमित्तिभावो भवति । अभेदे च संभवति कथं भेद आश्रीयते । अथवा भाष्यकारेण पूर्वं स्वातन्त्र्येणोक्तमिदानीं वार्तिकमवतारितमित्यदोषः। भुज्य्वादीनां चेति । भुज्य्वादीनां संबन्धिनः प्रत्ययस्येत्यर्थः । सत्यपि वैयधिकरण्येन संबन्धेऽतिप्रसङ्गः । भुज्युरिति । भुजिमृङ्भ्यां युक्त्युकौ चेति युक्प्रत्ययः। मृत्युरित्यत्र त्युप्रत्ययो न युरिति मत्वा भाष्यकारेण मृत्युरिति नोदाहृतम् । कंयुरिति । कंशंभ्यां बभयुस्तितुतयस इति युस्प्रत्ययः । ननु सित्करणं पदत्वे सति हल्यनुस्वारार्थमिति । तत एवाऽऽदेशो न भविष्यति । नैतदस्ति । अवग्रहाय सित्त्वं स्यात् । अहलादावप्यनुस्वारार्थं वा । नह्येताभ्यामिति । रञ्जेः क्युन्वुन्वुन्ण्वुन्नित्यादीनामेवं प्रसङ्गः । अनुनासिकः परोऽनयोरिति । अवयवान्तरापेक्षया लब्धपरव्यपदेशोऽवयव एवानुनासिक आश्रीयते नान्यः । न च भुज्युरित्यादावुकारस्य सानुनासिकत्वं प्रतिज्ञातमिति दोषाभावः । इत्संज्ञा प्राप्नोतीति । लोपस्तु

---

उ०-निमित्तत्वाच्चेति । वैयधिकरण्याश्रयणस्यायुक्तत्वमुपपादयति-भेदे हीति । भेदस्य हि संबन्धितावच्छेदकयोर्या विरोधस्तज्ज्ञानसापेक्षज्ञानकत्वादविरोधे संभवति विरोधस्यान्याय्यत्वात्स न न्याय्यः । अत एव निपादस्थपतौ कर्मधारय एवाऽऽश्रीयते । न च कर्मधारये स्वामिवाचकस्थपतिशब्दस्य पूर्वनिपातापत्तिः । राजदन्तादिषु पाठादित्याहुः । वार्तिकमिति । तदर्थप्रतिपादकमित्यर्थः । भुज्य्वादीनां प्राप्त्यभावादनर्थकः प्रतिषेधोऽत आह-संबन्धिन इति । सत्यपीति । यद्यङ्गनिमित्तयुवोरित्यर्थेन युत्वादावदोष इत्युच्यते तथाऽप्ययं दोष इत्यर्थः । न युरितीति । एवं च तत्र योरङ्गनिमित्तत्वाभावादप्राप्तेस्तन्नोदाहृतमित्याशयः । अवग्रहेऽवान्तरपदत्वस्य नियामकतायाः सर्वत्रादर्शनादाह—अहलादावपीति । नन्दनादावप्रवृत्ताप्यनाकयोरवकाशं दर्शयति—क्युन्वुन्वुन्निति । अवयवान्तरेति । एवं चोकार एवानुना-

---

××५. २. १३८.+१. ३. २.

**तत्र ङीब्नुमोः प्रतिषेधः ॥ ४ ॥**

ङीब्नुमोः प्रतिषेधो वक्तव्यः । नन्दनः कारकः । नन्दना कारिका । उगिल्लक्षणौ ङीब्नुमौ प्राप्नुतः+ ।

**धात्वन्तस्य च ॥ ५ ॥**

धात्वन्तस्य च प्रतिषेधो वक्तव्यः । दिवु सिवु ।

**षिड्टित्करणं तु ज्ञापकमुगित्कार्याभावस्य ॥ ६ ॥**

यदयं युशब्दवुशब्दौ षिट्टितौ करोति शिल्पिनि ष्वुन् [ ३. १. १४५. ] ट्युट्युलौ तुट् चेति* तज्ज्ञापयत्याचार्यो न युवोरुगित्कार्यं भवतीति । कथं कृत्वा ज्ञापकम् । षिड्टित्करण एतत्प्रयोजनं षिड्टित इतीकारो यथा स्यात्÷ । यदि चात्रोगित्कार्यं स्यात्षिड्टित्करणमनर्थकं स्यात् । पश्यति त्वाचार्यो न युवोरुगित्कार्यं भवतीति ततो युशब्दवुशब्दौ षिड्टितौ करोति ।

**न वा षित्करणं ङीष्विधानार्थम् ॥ ७ ॥**

नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । किम् । षित्करणं क्रियते ङीष्विधानार्थम् । षित इति ङीष् यथा स्यात् ।

**टित्करणमनुपसर्जनार्थम् ॥ ८ ॥**

टित्करणेऽप्यन्यत्प्रयोजनमस्ति । किम् । अनुपसर्जनाट्टित इतीकारो यथा स्यात् । टितोऽनुपसर्जनाद्भवत्युगित उपसर्जनाच्चानुपसर्जनाच्च । एवं तर्हि—

**विप्रतिषेधात्तु टापो बलीयस्त्वम् ॥ ९ ॥**

विप्रतिषेधात्तु टापो बलीयस्त्वं भविष्यति । टापोऽवकाशः× । खट्वा माला । ङीपोऽवकाशः । गोमती यवमती । इहोभयं प्राप्नोति । नन्दना कारिका । टाब्भवति विप्रतिषेधेन । नैष युक्तो विप्रतिषेधः । विप्रतिषेधे परमित्युच्यते+ । पूर्वश्च टाप्परो ङीप् । ङीपः परष्टाप्करिष्यते । सूत्रविपर्यासः कृतो भवति । एवं तर्ह्युगितो ङीब्भवतीत्यत्राप्यतष्टाबित्यनुवर्तिष्यते । एवमप्य-

प्र०–भवतु मा वा भूदिति न विचार्यते । कृतेऽप्युकारलोपेऽवशिष्टस्याऽऽदेशविधानेन रूपनिष्पादनात् । धात्वन्तस्येति । दिवु इत्ययमप्यनुनासिकपर इत्यादेशप्रसङ्गः । **न वा षित्करणमिति** । ङीपि सतीकारोऽनुदात्तो भवति ङीषि तूदात्त इति सति प्रयोजने न ज्ञापकं षित्करणम् । **टित्करणमिति** । टिड्ढेत्यत्रानुपसर्जनादिति वर्तते । अत्रोगिल्लक्षणे ङीप्यविशेषेण प्राप्तेऽनुपसर्जनादेव यथा स्यादिति नियमार्थं टित्करणं स्यादित्यज्ञापकमुगित्कार्याभावस्य । **विप्रतिषेधादिति** । पूर्वविप्रतिषेधोऽत्र विवक्षितः । एवं

उ०–सिक इत्याश्रितमित्यर्थः । दिवु इतीति । उदितो वेतीट्विकल्पार्थं हि तत्रोकारोऽनुनासिकः ।

. + ४. १. ६; ७. १. ७०. * ४. ३. २२. ÷ ४. १. ४१; १५. × ४. १. ४. + १. ४. २.

कारान्तादुगित इहैव स्यात्। नन्दना कारिका, गोमती यवमतीत्यत्र न स्यात्। एवं तर्हि संबन्धानुवृत्तिः करिष्यते। अजाद्यतष्टाप् [ ४. १. ४ ] ऋन्नेभ्यो ङीप् [ ५ ] अतष्टाप्। उगितश्च [ ६ ] ङीब्भवति अतष्टाप्। वनो र च [ ७ ] वनो ङीब्भवति उगितोऽतष्टाप्। पादोऽन्यतरस्याम् [ ८ ] ङीब्भवति उगितोऽतष्टाप्। तत ऋचि*। ऋचि च टाब्भवति। उगितोऽत इति निवृत्तम्। तत्रायमप्यर्थो द्विष्टाब्ग्रहणं न कर्तव्यं भवति। प्रकृतमनुवर्तते। सिध्यत्येवं यत्त्विदं वार्तिककारः पठति 'विप्रतिषेधात्तु टापो बलीयस्त्व'मित्येतदसंगृहीतं भवति। एतच्च संगृहीतं भवति। कथम्? इष्टवाची परशब्दः+। विप्रतिषेधे परं यदिष्टं तद्भवतीति।

प्र०—तर्हीति। यदीष्टवाची परशब्दो न गृह्यते तदाऽनुवृत्तिर्वाक्यभेदश्चाऽऽश्रीयत इत्यर्थः। एवमपीति। एकवाक्यताश्रयणेन पर्यनुयुङ्क्ते। तत्रादन्तादुगितः पर्यायेण टाप्ङीपोः प्रसङ्गः। एवं तर्हि संबन्धानुवृत्तिरिति। यद्यपि वाक्यभेदेन संबन्धे दोषाभावः। उगितो ङीप् भवति। अदन्तादुगितो टाब्भवतीति। तथाऽपि परिहारान्तरसद्भावप्रतिपादनायेदमुक्तम्। उगितश्च ङीब्भवतीति। अतष्टाबिरयुत्तरार्थमत्रानुवर्तते। वनो र चेत्यत्रात उगितष्टाबिति वर्तते तत्र वन्नन्तस्यानुगित्त्वाददन्तत्वासंभवाच्च वाक्यभेद आश्रीयते। वन्नन्तस्य ङीब्रौ भवतः, उगितोऽदन्तान्ङीबपवादष्टाबिति। अतष्टाबित्यस्योत्तरत्रोपस्थानाय प्रतिसूत्रमनुवृत्तिं दर्शयति। टाबृचीत्यत्र टाब्ग्रहणं न कर्तव्यं भवतीति टाप उत्तरत्रानुवृत्तिरुपयुज्यते। टापः स्वातन्त्र्यनिराकरणायात उगित इत्येताभ्यां संबन्धः। उगितोऽत इति निवृत्तमिति। उगित इत्यस्य निवृत्तिराख्यायते। अत इत्येतत्सर्वत्र प्रकरणेऽनुवर्तते शितिब्राह्मणीति ङीब्नकारौ मा भूता-

उ०—ङीप्ङीषोर्विशेषं दर्शयति—ङीपीति। वाक्यभेद इति। उगितो ङीप्। अदन्तादुगितष्टाबित्यर्थ इति भावः। वाक्यभेदे प्रमाणमुगितश्चेति सूत्रमेवेति बोध्यम्। उत्तरार्थमत्रानुवर्तत इति। इह तु न फलम्। न चोगितोऽदन्ताट्टाब्विधानं फलम्। उगित इत्यस्य ङीपा सह संबद्धतया पूर्वक्लृप्तप्रवृत्तेरत इत्यस्य सत्त्वेन चोगित इत्यस्य तद्वाक्येऽसंबन्धेन तस्य फलस्य वक्तुमशक्यत्वमिति भावः। नन्वेवं वनो र चेत्यनेनैकवाक्यतयैव संबन्धः स्यादत आह—तत्रेति। अदन्तत्वासंभवाच्चेति यज्वभ्यामित्यादावपि बहिरङ्गविभक्तिनिमित्तनलोपस्यासिद्धत्वात्संनिपातपरिभाषया टापोऽप्राप्तेश्चेति भावः। नन्वेवमपि पादोऽन्यतरस्यामित्यादावनुवृत्तिप्रदर्शनं व्यर्थमत आह—अतष्टाबिति। अतोऽनन्तरमित्यर्थः। उत्तरत्रोपस्थितेः फलं दर्शयति—टाबृचीति। नन्वेवमपि टाप एव सा दर्श्यताम्। अत उगित इत्यनयोस्तत्प्रदर्शनं व्यर्थमत आह—टापः स्वातन्त्र्येति। पादोऽन्यतरस्यामित्यत्रेति शेषः। अत

*४. १. ९. +१. ४. २.

**धात्वन्तस्य चार्थवद्ग्रहणात् ॥ १० ॥**

अर्थवतोर्युवोर्ग्रहणं न च धात्वन्तोऽर्थवान् ।

**नुम्विधौ झल्ग्रहणम् ॥ ११ ॥**

नुम्विधौ× झल्ग्रहणं कर्तव्यम् । झलन्तस्योगित इष्यते । उगिदचां सर्व-नामस्थानेऽधातोर्झल इति । तच्चावश्यं कर्तव्यम् ।

**लिङ्गविशिष्टप्रतिषेधार्थम् ॥ १२ ॥**

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति यथेह भवति गोमान् यवमानेवं गोमती यवमतीत्यत्रापि स्यात् ।

**न वा विभक्तौ लिङ्गविशिष्टाग्रहणात् ॥ १३ ॥**

न वा वक्तव्यम् । किं कारणम् । विभक्तौ लिङ्गविशिष्टग्रहणं नेत्येषा परि-भाषा कर्तव्या । कः पुनरत्र विशेष एषा वा परिभाषा क्रियेत झल्ग्रहणं वेति । अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि । कानि ?

**प्रयोजनं शुनः स्वरे ॥ १४ ॥**

यथेह भवति* शुना शुन एवं शुन्या शुन्या + इत्यत्रापि स्यात् ।

**यूनः संप्रसारणे ॥ १५ ॥**

---

प्र०-मिति । कृकवाकुरित्यत्र जातिलक्षणो ङीप् मा भूदित्येवमर्थम् । **धात्वन्तस्य चार्थ-वद्ग्रहणादिति** । वर्णसमुदायग्रहणमिह न वर्णग्रहणमित्यर्थवद्ग्रहणपरिभाषोपतिष्ठते । प्रत्ययाप्रत्यययोः प्रत्यये संप्रत्यय इत्ययमप्यत्र परिहारः संभवति । **एवं गोमतीति** । ईकारात्परो नुम्प्राप्तोऽझलन्तत्वान्न भवति । एवं नन्दनः कारक इत्यत्राझलन्तत्वान्नुम-भावः । **न वा विभक्ताविति** । विभक्तौ यत्कार्यं विधीयते लिङ्गविशिष्टस्य तन्न भवती-त्यर्थः । **शुनेति** । सावेकाच इति प्राप्तं विभक्तेरुदात्तत्वं न गोश्वन्निति प्रतिषिध्यते । **शुन्येति** । गौरादित्वान्ङीपि कृत उदात्तयणो हल्पूर्वादित्यस्य विभक्तिस्वरस्य प्रतिषेधप्रसङ्गः । ननु विभक्तेरेतत्कार्यं न तु विभक्तौ परतः पूर्वस्येति कथं लिङ्गविशिष्टपरिभाषायाः प्रति-षेधः । नैष दोषः । विभक्तेर्यत्कार्यं, यच्च विभक्तौ परतः पूर्वकार्यं तत्सर्वं विभक्तौ कार्यमिति

---

उ०-इत्येतदिति समुदायस्यैव निवृत्तिः कथ्यते । एकदेशस्त्वनुवर्तत एवेति भावः । वर्णसमु-दायेति । उकारविशिष्टयोर्ग्रहणादिति भावः । इत्ययमपीति । अस्याः परिभाषाया असा-धारणप्रयोजनस्य भाष्येऽदर्शनादियं निष्फलेति केचित् । भाष्ये नुमापत्तिदोषं परिहरति—नुम्विधाविति । नैष दोष इति । विभक्ताविति विषयसप्तमीति भावः । नन्वस्य दोषस्यान

---

× ७. १. ७०. * ६. १. १८२. + ४. १. ४१; ३. १. ३; ६. १. १७४.

यूनः संप्रसारणे प्रयोजनम्। यथेह भवति+ यूनः पश्येत्येवं युवतीः पश्येत्यत्रापि स्यात्।

**उगिदचां नुम्विधौ ॥ १६ ॥**

उगिदचां नुम्विधौ प्रयोजनम्। यथेह भवति* गोमान् यवमानेवं गोमती यवमतीत्यत्रापि स्यात्।

**अनडुहश्चाऽऽम्विधौ ॥ १७ ॥**

अनडुहश्चाऽऽम्विधौ प्रयोजनम्। यथेह भवति÷अनड्वानित्येवमनडुहीत्यत्रापि स्यात्। न वा भवत्यनड्वाहीति। भवत्यन्येन यत्नेन। आमनडुहः स्त्रियां वेति×। लिङ्गविशिष्टग्रहणादीकारान्तस्य प्राप्नोति।

**पथिमथोरात्त्वे ॥ १८ ॥**

पथिमथोरात्त्वे प्रयोजनम्। यथेह भवति+ पन्थाः मन्था एवं पथी मथीत्यत्रापि प्राप्नोति। न केवलः पथिशब्दः स्त्रियां वर्तते। उपसमस्तस्तर्हि वर्तते। सुपथीति+×।

**पुंसोऽसुङ्विधौ ॥ १९ ॥**

पुंसोऽसुङ्विधौ प्रयोजनम्। यथेह भवति×÷ पुमानेवं पुंसीत्यत्रापि स्यात्। न केवलः पुंशब्दः स्त्रियां वर्तते। उपसमस्तस्तर्हि वर्तते। सुपुंसीति।

**सख्युर्णित्त्वानङौ ॥ २० ॥**

प्र०-सर्वत्र प्रतिषेधप्रवृत्तिः। एवं युवतीरिति। एवमर्थमन इत्युभयोः शेष इति नाऽऽश्रयितव्यं भवति। पथीति। समासैकदेश उदाहृतः। इतर एतावदेवोदाहृतमिति मत्वाऽऽह-न केवल इति। सुपथीति। शोभनः पन्था अस्यामिति बहुव्रीहिः। न पूजनादिति समासान्तप्रतिषेधः। ऋन्नेभ्यो ङीबिति ङीप्। भस्य टेर्लोप इति टिलोपः। सुपुंसीति। शोभनः पुमांसोऽस्यामिति बहुव्रीहिः। उरःप्रभृतिषु पुमानिति विभक्त्यन्तपाठस्य प्रयोजनमुक्तम्—एकवचनान्तस्यैव नित्यः कप् यथा स्यादिति। तेनात्र शेषाद्विभाषेति विकल्पो भवति। पातेर्डुम्सु-

उ०-इत्यपकर्षेण परिहृतत्वात्कथमेतत्प्रयोजनमत आह—एवमर्थमिति। साधुत्वान्वाख्यानप्रवृत्तस्य भगवतोऽसाधुशब्दोच्चारणमनुचितमत आह—समासैकदेश इति। भाष्ये—उपसमस्त इति। समस्तपर्यायोऽयम्। आचारक्विबन्तात्कर्तृस्त्रियां क्विबनभिधानान्नेति भावः। आचारक्विबेव नेत्यन्ये। ननु ऋक्पूरिति समासान्ते सति टापि सुपथेति भाव्यमत आह—न पूजनादिति। वस्तुतः पथः प्राचीनेष्वेव स इति सिद्धान्तादिनः स्त्रियामिति कपो दुर्वारत्वादिदं चिन्त्यम्। समासान्तविधेरनित्यत्वात्तदभाव इत्युचितम्। पातेर्डुमिति। सूतेः सप्रसवे पुमानिति स्त्रियामिति सूत्रस्यभाष्यात्सूतेर्म्सुंन् सस्य पो ह्रस्वश्चेति वक्तुमुचितम्।

+६. ४. १३३. *७. १. ७०. ÷७. १. ९८. ×७. १. ९८. +७. १. ८५. +×५. ४. १९; ४. १. ५; ७. १. ८८. ×÷७. १. ८९.

सख्युर्णित्त्वानङौ प्रयोजनम् । यथेह भवति +÷ सखा सखायौ सखाय एवं सखी सख्यौ सख्य इत्यत्रापि प्राप्नोति ।

**भवद्भगवदघवतामोद्वावे ॥ २१ ॥**

भवद्भगवदघवतामोद्वावे प्रयोजनम् । यथेह भवति** भोः भगोः अघो इत्येवं भवति भगवति अघवतीत्यत्रापि स्यात् ।

एतान्यस्याः परिभाषायाः प्रयोजनानि यदर्थमेषा परिभाषा कर्तव्या । एतस्यां च सत्यां नार्थो झल्ग्रहणेन ।

तदेतदनन्यार्थं झल्ग्रहणं कर्तव्यं नुम्प्रतिषेधो वा वक्तव्यः । उभयं न वक्तव्यम् । उपरिष्टाज्झल्ग्रहणं क्रियते÷तत्पुरस्तादपकृष्यते । एवमपि सूत्रविपर्यासः कृतो भवति । एवं तर्हि योगविभागः करिष्यते÷ । उगिदचां सर्वनामस्थानेऽधातोः [ ७. १. ७० ] युजेरसमासे [ ७१ ] । ततो नपुंसकस्य । नपुंसकस्य नुम्भवति । झल इत्युभयोः शेषः । ततोऽचः अजन्तस्य च नपुंसकलिङ्गस्य नुम्भवति ।

यद्यपि तावदेतदुगित्कार्यं परिहृतमिदमपरं प्राप्नोति । शातनितरा पातनितरा÷÷ । उगितो नद्या घादिषु ह्रस्वो भवतीत्यन्यतरस्यां ह्रस्वत्वं प्रसज्येत× नित्यं चेष्यते । उगितो या नद्येवमेतद्विज्ञायते । उगित एषा नदी । उगितो या परा । अत्र चैव दोषो भवत्युगितो ह्येषा परा नदी; ऐषुमतितरायां*× च प्राप्नोति । उगितः परा या विहिता । उगित एषा विहिता । उगित इत्येवं या विहिता । एवमपि भोगवतितरायां+ दोषो भवति । भोगवतितरा भोगवतीतरा । तस्मादु-

प्र०-ञिति प्रत्ययस्योगित्त्वादुगितश्चेति ङीप् । **सखी सख्याविति** । सख्यशिश्वीति भाषायामिति ङीष् । अनङ्णित्त्वे अत्र प्राप्नुतः । ङीष्विधानं तु सखीभ्यामित्याद्यर्थं स्यात् । **भवद्भगवादिति** । यदा संबुद्ध्या भवदादयो विशेष्यन्ते तदा भवत्यादीनामपि प्रसङ्गः । यदा त्ववशब्दो विशेष्यते तदा येन नाव्यवधानमित्येकवर्णव्यवधान ओत्त्वं प्रवर्तते भवत्यादौ तु वर्णद्वयव्यवधानादोत्त्वाभावः । तदभावात्तत्संनियोगविहितस्य रुत्वस्याप्यभाव इति केचिदाहुः । **नार्थो झल्ग्रहणेनेति** । गोमत्याद्यर्थेनेत्यर्थः । **पुरस्तादिति** । उगिदचां सर्वनामस्थानेऽधातोर्झल इति । ततो युजेरसमासे नपुंसकस्याच इति । अत्र झल इति वर्तते । **उभयोः शेष इति** । युजेर्झलन्तत्वाव्यभिचारादाद्यन्तावेव योगावपेक्ष्येते । झलिति लुप्त-

उ०-केचिदाहुरिति । प्रत्ययस्य प्रकृत्यंश उत्थिताकाङ्क्षतया भवदादिविशेषणत्वमेव युक्तमिति । अत्रारुचिः—भाष्ये-एवं भवति भगवतीति पाठः । भाष्ये—योगविभाग इति । योग विभागेऽपि क्रमभङ्गाभावान्न विपर्यास इति भावः । ननु झल इत्यस्य सूत्रत्रयेऽपि संबन्धादुभयोः शेष इत्ययुक्तमत आह—युजेरिति । ननु झल इति करणे सूत्रभेदः स्यादत आह—

+÷७. १. ९२; ९३ ** ८. ३. १.÷७. १. ७२.÷÷३. ३. ११७; ४. १. १५. × ६. ३. ४५.* × ५. २. ९४; ४. ३. १२०; ४. १. १५; ६. ४. १४८. + ४. १. ७३.

गितो या नद्युगितो या विहितेत्येवमेतद्विज्ञास्यते । एवं विज्ञायमाने शातनितरायां दोष एव ।

**सिद्धं तु युवोरनुनासिकत्वात् ॥ २२ ॥**

सिद्धमेतत् । कथम् । यकारवकारयोरेवेदमनुनासिकयोर्ग्रहणम् । सन्ति हि यणः सानुनासिका निरनुनासिकाश्च ।

---

प्र०–षष्ठीकं पदमाश्रीयते। **शातनितरेति**। शातिपातिभ्यां करणे ल्युटि कृते गौरादिषु शालनपातनेति पाठान्ङीप्। **उगितो या नदीति**। उगिच्छब्दोच्चारणेनेति भावः। इतरोऽगृहीताभिप्राय आह—**उगित एषेति**। पूर्वेणैवाभिप्रायेणाऽऽह—**उगितो या परेति**। उगिच्छब्दव्यापारेण विहितोगितः परेत्यर्थः । इतर आह—**अत्र चैवेति** । इषवोऽस्य सन्तीति इषुमान् तस्येदमित्यण् ङीप् । यस्येति लोपे कृत उगितः परा नदीति विकल्पेन ह्रस्वत्वं प्राप्नोति नित्यं चेष्यते । पूर्वोक्तेनाभिप्रायेणाऽऽह—**उगितो या परा विहितेति** । ऐषुमतितरायां चाणन्तान्नदी विहिता न तूगितः । इतरस्तु शातनितरामाश्रित्याऽऽह—**उगित एषेति** । **भोगवतीतरेति** । शार्ङरवादिषु भोगवद्गौरिमतोः संज्ञायामिति पाठान्ङीन्प्रत्ययः। उगित इत्येवं न विहित इति विकल्पेन ह्रस्वत्वं न प्राप्नोति। **उगितस्तु विहित इति** । विधानाश्रयणे तु विकल्पः सिध्यति शातनितरायां तु विकल्पः प्राप्नोति । **सिद्धं त्विति**। भाष्यकारीयमिदं वाक्यमित्याहुः । अन्ये त्वनुनासिकपरत्वादिति वाक्यमेवानेन व्याख्यातमित्याहुः। अनुनासिकप्रधानत्वादिति हि तस्यार्थः । अनुनासिकयणौ युवू इहानुकृतावित्यतिप्रसङ्गाभावः। उकारस्तु निरनुनासिक एवेत्युगित्कार्याभावः ।

---

उ०–झलितीति। करण इति। भावे स्त्रीत्वानुपपत्तिरित्यर्थः। गौरादिष्विति। टित्त्वान्ङीपि सिद्धे गौरादिपाठकल्पने मानं चिन्त्यम् । वस्तुतो ण्यासश्रन्थेति युजर्थः स पाठ आवश्यक इति तत्त्वम्। इतर आहेति । अगृहीताभिप्राय इति शेषः। भाष्ये—अत्र चैव दोष इति। अत्र दोषश्चादैषुमतितरायामपि दोष इति भाष्यार्थः। न चोगितः परेत्यर्थेऽपि पूर्वस्मात्परस्य ह्रस्वे कर्तव्येऽणो लोपस्य स्थानिवत्त्वादैषुमतितरेत्यत्र न दोष इति वाच्यम् । बहिर्भूततरनिमित्तकत्वेन बहिरङ्गह्रस्वस्य स्थानिवत्सूत्रदृष्ट्याऽसिद्धत्वेन पूर्वत्रासिद्धीय इव स्थानिवत्त्वाप्रवृत्तेः । पञ्चमीसमासस्यानित्यत्वाच्च । विधानाश्रयणे त्विति। विधानमेवाऽऽश्रीयते न तु स्वरूपपरत्वमिति भावः। भाष्ये—सिद्धं तु युवोरिति। केचित्तु युशब्द उकार उच्चारणार्थः। वस्तु केवल एव। विभक्त्या चैवोच्चारणे सहायसंपादनात् । प्रत्ययेष्वप्युकार उच्चारणार्थ एव । एवं चाङ्गाधिकारादङ्गसंज्ञानिमित्तयोर्य्वोरादेशविधानादतिप्रसङ्गाभावेन य्वोरनुनासिकत्वप्रतिज्ञाफलं चिन्त्यमिति वदन्ति। तन्न। विधेयविषय उच्चारणार्थानामपीत्संज्ञायास्तस्य लोप इति सूत्र उक्तत्वात् । तस्मादनुनासिकयण्विशिष्टयोर्य्वोरिमावादेशाविति भाष्यतात्पर्यम्। उकारस्त्विति। ल्युडादाविति शेषः। यत्र ल्युडादावनाकाविष्येते तेऽनुनासिकयणः पठनीयाः। भुज्युरित्यादयश्च निरनुनासिका इति दोषाभावः।

**आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ॥ ७ । १ । २ ॥**

**आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थम् ॥ १ ॥**

आयनादिषूपदेशिवद्भावो वक्तव्यः । उपदेशावस्थायामायनादयो भवन्तीति वक्तव्यम् । किं प्रयोजनम् । स्वरसिद्ध्यर्थम् । उपदेशावस्थायामायनादिष्विष्टः स्वरो यथा स्यादिति । शिलेयम् +× तैत्तिरीयः** । अक्रियमाणे ह्युपदेशिवद्भावे प्रत्ययसंज्ञासंनियोगेनाऽऽद्युदात्तत्वे कृत++ आन्तर्यत आदेशा अस्वरकाणामस्वरकाः स्युः ।

**न वा क्वचिच्चित्करणादुपदेशिवद्वचनानर्थक्यम् ॥ २ ॥**

न वा वक्तव्यम् । किं कारणम् । क्वचिच्चित्करणात् । यदयं क्वचिद्घादींश्चितः करोत्यग्राघद्घच्छौ च [ ४. ४. ११६; ११७ ] तज्ज्ञापयत्याचार्य उपदेशावस्थायामायनादयो भवन्तीति । कथं कृत्वा ज्ञापकम् । चित्करण एतत्प्रयोजनं चितः [ ६. १. १६३ ] इत्यन्तोदात्तत्वं यथा स्यादिति । यदि चोपदेशावस्थायामायनादयो भवन्ति ततश्चित्करणमर्थवद्भवति ।

---

**प्र०–आयनेयी०** । **आयनादिष्विति** । अङ्गाधिकारे विधानात्प्रकृतिप्रत्ययापेक्षा बहिरङ्गा आयन्नादयः प्रत्ययाद्युदात्तत्वं तु प्रकृतिनिरपेक्षत्वादन्तरङ्गमिति तदेव पूर्वं प्राप्नोतीत्युपदेशिवद्वचनं कर्तव्यम् । **शिलेयमिति** । शिलेव शिलेयम् । शिलाया ढ इति ढः । **तित्तिरिणा प्रोक्तमधीते** । तित्तिरिवरतन्तु इति च्छरण । **अस्वरकाः स्युरिति** । प्रवृत्तिकालापेक्षयेदमुच्यते । प्रयोगे तु स्वररहितस्याच उच्चारणाभावादनुदात्तं पदमेकवर्जमिति वचनाच्चानिष्टस्वराः प्राप्नुवन्ति । केचित्त्वान्तर्यत इत्यन्यथा व्याचक्षते । यथा—अनुदात्तोच्चारणे गात्राणां स्रंसनं स्वरस्य स्निग्धता कण्ठविवरस्य महत्त्वं च भवति । एवं व्यञ्जनोच्चारणेऽपि । अयोग्यत्वात्त्वनुदात्तधर्मोपजनो व्यञ्जनेषु नास्ति तदेवमस्वरकाणामुदात्तत्वरहितानामस्वरका इष्टोदात्तत्वरहितत्वादनुदात्ता एव स्युरित्यर्थः । **न वेति** । सत्यप्यङ्गाधिकारेऽङ्गत्वमनपेक्ष्य प्रत्ययोत्पत्तिकाल एवाऽऽयन्नादयो भवन्तीति चित्करणेन ज्ञाप्यते । तत्राङ्गानपेक्षत्वाद-

---

उ०–आयनेयी० । आयनादिषु झोऽन्त इत्यन्तादेशोऽपि गृह्यत इति धातोरिति सूत्रस्थभाष्यस्वरसः । ठस्येक इत्ययमपि गृह्यत इति कश्चित् । ननु परत्वादाद्युदात्तात्पूर्वमायन्नादयो भविष्यन्तीत्यत आह—अङ्गाधिकार इति । प्रकृतिनिरपेक्षत्वादिति । प्रत्ययसंनियोगशिष्टत्वादित्यपि बोध्यम् । उपदेशिवद्वचने तु कृतायनादीनामेव फत्रादीनामाद्युदात्तत्वविशिष्टानां विधानान्न दोषः । अन्यथा शिलेयमित्यादौ व्यञ्जनस्यैवाऽऽदेशादन्तोदात्तत्वं प्राप्नोति मध्योदात्तत्वं चेष्यत इति भावः । ननु स्वररहितस्याच उच्चारणायोगात्कथमस्वरकाः स्युरत आह—प्रवृत्तिकालेति । अनुदात्तधर्मेति । अनुदात्तत्वरूपधर्मेत्यर्थः ।

---

+×५. ३. १०२. ** ४. ३. १०२. ++ ३. १. ३.

**तत्रोणादिप्रतिषेधः ॥ ३ ॥**

तत्रोणादीनां प्रतिषेधो वक्तव्यः । शङ्खः शण्ढ इति ।

**धातोर्वेयङ्वचनात् ॥ ४ ॥**

अथवा यदयमृतेरीयङ् [ ३. १. २९ ] इति धातोरीयङं शास्ति तज्ज्ञापयत्याचार्यो न धातुप्रत्ययानामायनादयो भवन्तीति । यदि हि स्युऋतेश्छङित्येव ब्रूयात् । सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति । न चर्तेश्छङा सिध्यति । छङि सति वलादिलक्षण इट् प्रसज्येत* । इटि कृतेऽनादित्वादादेशो न स्यात् । इदमिह संप्रधार्यम् । इट् क्रियतामादेश इति किमत्र कर्तव्यम् ? परत्वादिडागमः । नित्य आदेशः । कृतेऽपीटि प्राप्नोत्यकृतेऽपि । अनित्य आदेशो न हि कृत इटि प्राप्नोति । किं कारणम् ? अनादित्वात् । अन्तरङ्गस्तर्ह्यादेशः । काऽन्तरङ्गता । इदानीमेव ह्युक्तमायनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति । तदेतदृतेरीयङ्वचनं ज्ञापकमेव न धातुप्रत्ययानामायनादयो भवन्तीति ।

**प्रातिपदिकविज्ञानाच्च पाणिनेः सिद्धम् ॥ ५ ॥**

प्र०–सति बहिरङ्गत्वे परत्वान्नित्यत्वाच्च कृतेष्वायनादिषु प्रत्ययाद्युदात्तत्वं भवतीतीष्टस्वरसिद्धिः । तत्रोणादिप्रतिषेध । इति ये त्वनुणादयः खल्घञादयस्तेषु खघयोरित्संज्ञया भाव्यं खित्यनव्ययस्य चजोः कुघिण्ण्यतोरिति लिङ्गात्तद्धितेषु सावकाशेनाऽऽदेशविधानेनेत्संज्ञा न बाध्यते । नित्य आदेश इति । उपदेशे यः प्रत्ययादिस्तस्याऽऽदेश इति कृतेऽपीटि प्राप्नोति । अनादित्वादिति । सांप्रतिकं प्रत्ययादित्वमाश्रित्याऽऽदेशो विधीयते । प्रातिपदिकविज्ञानादिति । पक्षान्तरैरपि परिहाराः संभवन्तीत्यव्युत्पत्तिपक्षाश्रयः ।

उ०–परत्वान्नित्यत्वाच्चेति । इदं चिन्त्यम् । आद्युदात्तत्वविशिष्टानामेव प्रत्ययानां विधानात् । तस्मान्निरूकरणेन प्रत्ययसंबन्ध्यादेशानामुत्पत्तिसंनियोगशिष्टकार्याद्पि पूर्वं प्रवृत्तिर्ज्ञाप्यत इति भाष्यार्थः । प्रत्ययविध्येकवाक्यतया कृतायनादिकानामेव चाऽऽद्युदात्तत्वविशिष्टानां तत्तच्छास्त्रैर्विधानमिति तात्पर्यम् । न बाध्यत इति । ततश्चोपदेश एवेत्त्वे लोपे चाऽऽदेशाप्राप्तिरित्युणादीनामित्येवोक्तमिति भावः । इटि कृते प्राप्त्यभावात्कथमादेशानां नित्यत्वमत आह—उपदेश इति । इति मन्यत इति शेषः । सांप्रतिकमिति । उपदेश इति पक्षाभावादित्यर्थः । सांप्रतिकसद्भावे भूतपूर्वगत्याश्रयणस्यायुक्तत्वादिति भावः । भाष्ये—ज्ञापकमेवेति । न च छसुनाविति वाच्ये तरबीयसुनावित्युक्तिः प्रातिपदिकप्रत्ययानामप्यादेशाभावं ज्ञापयेत् । आयनादीनां निर्विषयत्वापत्तेः फघछानां धातुप्रत्ययेष्वभावाद्रुफञादीनां चित्त्वस्य ष्यक्षत्रियेत्यादिनिर्देशानां चासंगत्यापत्तेश्चेत्याहुः । भाष्ये—प्रातिपदिकविज्ञा-

* ७. २. ३५.

प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेराचार्यस्य सिद्धम्। उणादयोऽव्युत्पन्नानि प्रातिपदिकानि।

झोऽन्तः ॥ ७ । १ । ३ ॥

**झादेशे धात्वन्तप्रतिषेधः ॥ १ ॥**

झादेशे धात्वन्तस्य प्रतिषेधो वक्तव्यः। उज्झिता उज्झितुमिति। प्रत्ययाधिकारात्सिद्धम्। प्रत्ययग्रहणं प्रकृतमनुवर्तते। क्व प्रकृतम्? आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् [ ७. १. २. ] इति।

**प्रत्ययाधिकारात्सिद्धमिति चेदनादेरादेशवचनम् ॥ २ ॥**

प्रत्ययाधिकारात्सिद्धमिति चेदनादेरादेशो वक्तव्यः। अपि नः श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै+। एवं तर्हि प्रत्ययग्रहणमनुवर्तत आदिग्रहणं निवृत्तम्। कथं पुनः समासनिर्दिष्टानामेकदेशोऽनुवर्तत एकदेशो वा निवर्तते।

**असमासनिर्देशात्सिद्धम् ॥ ३ ॥**

असमासनिर्देशः करिष्यते। प्रत्ययस्याऽऽदीनामिति। स तर्ह्यसमासनिर्देशः कर्तव्यः? न कर्तव्यः। क्रियते न्यास एव। कथम्? अविभक्तिको निर्देशः। प्रत्यय आदीनामिति।

प्र०—झोऽन्तः। इह प्रत्ययग्रहणेऽनुवर्तमान एकसमासनिर्दिष्टमादिग्रहणमप्यनुवर्तते तथा च शयान्ता इत्यत्रानादित्वाज्झस्यान्तादेशो न स्यादिति प्रत्ययग्रहणं नानुवर्त्यमिति मत्वाऽऽह—**झादेश इति**। झकारोपदेशस्तु प्रत्यय इव लाघवार्थः स्यात्। **शयान्ता इति**। शीङ उपसंवादाशङ्कयोश्चेति। लेट्। तस्य झः। लेटोऽडाटावित्याडागमः। टेरेत्वम्। वैतोऽन्यत्रेत्यैत्त्वम्। झोऽन्तादेशः। शब्लुक्। शीङः सार्वधातुके गुण इति गुणः। **कथं पुनरीति**। यदार्थाधिकारपक्ष उपात्तार्थशब्दाधिकारपक्षो वा तदाऽयं पर्यनुयोगः। वर्तिपदार्थस्य समुदायेऽर्थेऽन्तर्भावात्पृथगनुवृत्त्यसंभवात्। यदा त्वनाश्रितार्थ

उ०—नाच्च पाणिनेरिति। अत्र पाणिनेरित्युक्त्या सर्पिषा यजुषेत्यादिकतिपयारिक्तोणादिषु पाणिनेरव्युत्पत्तिपक्ष एवाभिप्रेत इति दर्शयति। वस्तुतः सर्पिषेत्यादौ षत्वमपि बहुलग्रहणादिति सर्वथाऽव्युत्पत्तिरेव तेष्विति बोध्यम्।

झोऽन्तः। अनादित्वादिति। अन्तरङ्गत्वादन्तादेशात्पूर्वमेवाऽऽडागम इति भावः। नन्वेवं धातुषु झकारोपदेशो व्यर्थोऽत आह—झकारोपदेशस्त्विति। प्रत्यये अति अत अन्तेति त्रिरुच्चारणाभावो लाघवम्। अत्र तु बहुवर्णोच्चारणाभावो लाघवमिति बोध्यम्। यदाऽर्थाधिकारेति। अर्थाध्याहारपक्षवत्तदा बोधनिर्वाहः। पदजन्योपस्थितेः शाब्दबोधाङ्गत्वेऽप्याह—उपात्तार्थेति। अन्तर्भावात्पृथगुपस्थित्यभावादिति भावः। यदा त्विति

+ ३. ४. ९४.

**तत्र शयान्ता इत्यनकारान्तत्वादङ्गस्याद्भावप्रतिषेधः ॥ ४ ॥**

तत्रैतस्मिन्प्रत्ययग्रहणेऽनुवर्तमान आदिग्रहणे निवृत्ते शयान्ता इत्यनकारान्तत्वादङ्गस्याद्भावः प्राप्नोति* तस्य प्रतिषेधो वक्तव्यः ।

**सिद्धमनानन्तर्यादनकारान्तेनाद्भावनिवृत्तिः ॥ ५ ॥**

सिद्धमेतत् । कथम् ? अनानन्तर्यादनकारान्तेनाद्भावो न भविष्यति ।

कथं कृत्वा चोदितं कथं कृत्वा परिहारः ? अनकारान्तग्रहणं प्रत्ययविशेषणमिति कृत्वा चोदितं झकारविशेषणमिति कृत्वा परिहारः । यद्यनकारान्तग्रहणं झकारविशेषणं शेरते अत्र न प्राप्नोति* ।

**तत्र रुटि संनियोगवचनात्सिद्धम् ॥ ६ ॥**

तत्र रुटि÷ संनियोगः करिष्यते । क एष यत्नश्चोद्यते संनियोगो नाम । चकारः कर्तव्यः । रुट् च । किंच ? यच्चान्यत्प्राप्नोति । किंचान्यत्प्राप्नोति ? अद्भावः । स तर्हि चकारः कर्तव्यः ? न कर्तव्यः । योगविभागः करिष्यते । शीङः । शीङ उत्तरस्य झस्याद्भवति । ततो रुट् । रुट् च भवति शीङ

प्र०-शब्दमात्रं प्रतिज्ञातस्वरितत्वमनुवर्तत इति पक्षस्तदा नास्ति चोद्यावकाशः । संख्याव्ययादेर्ङीबित्यतो दामहायनान्ताच्चेत्यत्राव्ययग्रहणाननुवृत्तावपि संख्याग्रहणानुवृत्तिदर्शनात् । **तत्रेति** । अन्तरङ्गत्वादाटि कृतेऽन्तादेशापवादोऽदादेशः प्राप्नोति । अनकारान्तादङ्गात्प्रत्ययस्य परत्वात् । **सिद्धमिति** । अनकारान्तेनाङ्गेन प्राधान्याज्झकार एव विशेष्यते । तत्र व्यवधानाददादेशाभावः । अन्तादेशस्त्ववधिमनुपादाय विधीयमानो व्यवधानेऽपि भवति । **शेरत इति** । प्रतिपदविधेर्बलवत्त्वाद्रुटि कृते व्यवधानाददादेशो न प्राप्नोति । निर्दिश्यमानस्याऽऽदेशा भवन्तीति वचनाज्झकारमात्रस्याऽऽदेशो विधीयते । तच्च रुटा व्यवधीयते । **रुटि संनियोगवचनादिति** । आगमादेशयोः सह विधानादागमेन

उ०-पक्षाङ्गीकारफलमाह—संख्याव्ययादेरिति । संख्याग्रहणेति । संख्यादिग्रहणेत्यर्थः । अन्तरङ्गत्वादाटि कृत इति । इदं वस्तुस्थितिकथनम् । अन्तरङ्गत्वं चाङ्गसंज्ञानपेक्षणात् । लावस्थायामेव अट् प्रवृत्तेर्वा । अनकारान्तादङ्गात्परप्रत्ययावयवझस्यादित्यर्थात् । आटः प्रत्ययभक्तत्वेन व्यवधायकत्वाभावादिति भावः । प्राधान्यादिति । तस्य स्थानित्वेन प्राधान्यम् । प्रत्ययस्त्ववयवित्वेन तद्विशेषणमिति भावः । अत्राङ्गस्येत्यत इत्यनुरोधात्पञ्चम्या विपरिणम्यते । झोऽन्त इत्यत्र त्वङ्गनिमित्तप्रत्ययावयवस्य झस्येत्यर्थान्नावध्युपादानमिति बोध्यम् । प्रतिपदविधेरिति । शीङो हि झस्य रुट् क्रियते स चानवकाशः । तत्रावश्यं प्राप्त आरम्भादिति भावः । एतेन परत्वान्नित्यत्वाद्रुडित्यपास्तम् । ननु रुडपि झोऽन्त इत्यतोऽनुवृत्तवर्णस्यैवेति रुटि सति तत्सहितस्याऽऽदेशेन भाव्यमिति कथं तस्य व्यवधायकत्वमत आह—निर्दिश्यमानस्येति । तादृशं झकाररूपं च व्यवहितमेवेति भावः ।

* ७. १. ५.÷७, १. ६.

इति । एवमपि पर्यायः प्रसज्येत । एवं तर्ह्यच्छब्दस्य रुटं वक्ष्यामि । तदच्छ-ब्दग्रहणं कर्तव्यम् । न कर्तव्यम् । प्रकृतमनुवर्तते । क प्रकृतम् । अदभ्यस्तात् [ ७. १. ४ ] इति । तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । शीङ इत्येषा पञ्चम्यदिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्य [ १. १. ६७ ] इति ।

**शीङो रुट् ॥ ७ । १ । ६ ॥**

**रुटि दृशिगुणप्रतिषेधः ॥ १ ॥**

रुटि दृशिगुणः प्राप्नोति×। 'अदृश्रन्नस्य केतवः*' इति । तस्य प्रतिषेधो वक्तव्यः । न वक्तव्यः । परस्मिन्निति क्ङिति च [ १.१.५ ] इति प्रतिषेधो भविष्यति । एवम'प्यदृश्रमस्य केतवः'+ इत्यत्र प्राप्नोति । एवं तर्हि पूर्वान्तः करिष्यते ।

प्र०–स्थानिनो व्यवधानाभावः । **एवमपि पर्याय इति** । अद्भावे कृते रुण्न प्राप्नोति, झस्य रुड्विधानादल्विधित्वात्स्थानिवत्त्वाभावाद्रुटि कृतेऽद्भावो न प्राप्नोति । व्यवधानात् । ततो विरोधात्तुल्यबलत्वाच्च पर्यायप्रसङ्गः । **एवं तर्हीति** । अच्छब्दस्य रुटि सत्य-वयवावयवोऽपि समुदायावयवो भवतीति रुटा व्यवधानाभावाद्गुणः शीङः प्रवर्तते ।

शीङो रुट् । **अदृश्रन्निति** । दृशेर्लुङि झेरन्तादेश इरितो वेत्यङि तस्य चान्तरङ्गत्वाद्गुणात्पूर्वं रुटि कृत ऋदृशोऽङि गुण इति गुणप्रसङ्गः । **परस्मिन्निति** । यदा क्ङिति चेत्यत्र निमित्तसप्तमीपक्षस्त्यक्तः परसप्तमीपक्ष आश्रितस्तदैतदुच्यते । वार्णा-दाङ्गं बलवदित्यनपेक्षिते वर्णाश्रयत्वादन्तरङ्ग एकादेशे कृते तस्य परं प्रत्यादिवद्भा-वान्ङित्सार्वधातुकं परमाश्रित्य क्ङिति चेति गुणप्रतिषेधः प्रवर्तते । येन नाप्राप्तिन्यायेन तन्निमित्त एव प्रतिषेधो गुणेन बाध्यते नतु ङित्सार्वधातुकनिमित्तः । प्रतिषेधाश्च बलीयांसो भवन्तीत्युभयप्रसङ्गे प्रतिषेधः प्रवर्तते । **अदृश्रमिति** । मिबादेशस्यामः पित्वाद्ङि-त्वाभावान्नास्ति गुणप्रतिषेधः । **एवं तर्हीति** । पूर्वान्ते रुट्यलघूपधत्वाद्गुणा-

उ०–भाष्ये–एवमपि पर्याय इति । योगविभागपक्षेऽयं दोषः । सहविधानबोधकचकाराभावात् । तदाह—अद्भावे कृत इत्यादि । चकारकरणे तु तत्करणप्रयुक्तं गौरवमेव दोष इति भावः । नन्वच्छब्दस्य रुटि तेन समुदायस्य व्यवधानाच्छीङः सार्वधातुक इति गुणो न स्यादत आह—अच्छब्दस्येति । रुड्विशिष्टस्यैव सार्वधातुकत्वादिति भावः ।

शीङो रुट् । गुणात्पूर्वं रुटीति । बहुलं छन्दसीत्यङ्गसंज्ञानिमित्तप्रत्ययमात्राश्रयो रुडन्तरङ्गः । गुणस्तु प्रकृतिप्रत्ययोभयविशेषाश्रयत्वाद्बहिरङ्ग इति भावः । कृत इति । तत्र कृतेऽपीत्यर्थः । ननु प्रतिषेधविषयोऽयं गुणः प्रतिषेधं बाधेतेत्यत आह—येन नेति । तन्नि-मित्त एवेति । अङ्गनिमित्तएवेत्यर्थः । नन्वेवमपि परत्वाद्गुणः प्रतिषेधं बाधेतेत्यत आह—प्रतिषेधाश्चेत्ति । विध्युन्मूलकत्वादिति भावः । प्रत्यापत्तिः प्रतिप्रसवः । यदि दृशोऽपूर्वो

× ३. १. ५७; ७. १. ८; ७. ४. १६, *अथर्ववेद २० । ४७ । १५ । +यजुर्वेद ८ । ४०

**पूर्वान्ते शीङो गुणविधिः ॥ २ ॥**

पूर्वान्ते शीङो गुणो विधेयः । शेरते । सूत्रं च भिद्यते । यथान्यासमेवास्तु ननु चोक्तं रुटि दृशिगुणप्रतिषेध इति । पूर्वान्तेऽप्येष दोषः । कथम् ? अयं दृशिगुणः प्रतिषेधविषय आरभ्यते स यथैव क्ङिति चेत्येतं प्रतिषे बाधत एवमनुपधाया अपि प्रसज्येत । तस्मादुभाभ्यामेव दृशेरक्प्रत्ययान्तरं वक्तव्यं **'पितरं च दृशेयं मातरं च'**= दृशेयमित्येवमर्थम्+ ।

**झादेशादाड्लेटि ॥ ३ ॥**

झादेशादाड्लेटि÷ भवति विप्रविषेधेन । झादेशस्यावकाशः× । लुनते लुनताम् अलुनत । आटोऽवकाशः । 'पताति दिद्युत्'* । उदधिं च्यावयाति । इहोभयं प्राप्नोति । अपि नः श्वो विजनिष्यमाणाः पतिभिः सह शयान्तै । आड्लेटि भवति विप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ?

**न वा नित्यत्वादाटः ॥ ४ ॥**

न वा वक्तव्यः । किं कारणम् ? नित्यत्वादाटः । नित्य आडागमः । स कथं नित्यः ? यद्यनकारान्तग्रहणं झकारविशेषणम् । अथ हि प्रत्ययविशेषणं; झादेशोऽपि नित्यः ।

---

प्र०–भावः । लघूपधगुणस्यैव हि ऋदृशोऽङि गुण इति प्रत्यापत्तिः क्रियते । अथवा गुणश्रुत्येक उपस्थानात्तस्यैवाङा विशेषणाद्येन नाव्यवधानमित्येकवर्णव्यवहितस्य गुणो भवति । रुटि कृते न भवति । **शेरत इति** । रुकि सत्यनिगन्तन्वाद्गुणाप्रसङ्गः । **पूर्वान्तेऽपीति** । क्ङिति चेति गुणे प्रतिषिद्धेऽपूर्वं ऋदृशोऽङि गुण इति गुणो विधीयते । स यथैव प्रतिषेधविषये प्रवर्तते तथैवानुपधाया अपि इकः प्रवर्तेत । अङ्ग्रहणं च श्रुतत्वाद्दृशेरेव विशेषणं नेकः । **दृशेरक्प्रत्ययान्तरमिति** । यश्च लिङ्याशिष्यङ् यश्चेरितो वेत्यङ् तत्प्रसङ्गे छन्दसि दृशेरग्वक्तव्यः । अथ भाषाया-मदर्शन्नित्यत्र ङित्सार्वधातुकनिमित्तः प्रतिषेधः कस्मान्न भवति । क्ङितीति निमि-त्तसप्तमीविज्ञानाद्वार्णादाङ्गं बलीय इत्येकादेशात्पूर्वमेव गुणविधानाद्वा स्थानिवद्भावाद्वै-कादेशस्य व्यवधानात्कृतार्थस्य वा प्रतिषेधस्य परत्वाद्गुणेन बाधनात् । झादेशोऽपि

---

उ०–गुणो विधीयत इत्याश्रीयते तदाऽपि न दोष इत्याह—अथवेति । अनुपधाया अपीति । प्रतिषेधसूत्राणां परिभाषावद्विध्येकवाक्यतया क्ङितीत्यस्योपधाया इत्यस्य च बाधे विनि-गमकाभावादिति भावः । नन्विकोऽङा विशेषणान्न दोष इत्युक्तं तत्राऽऽह—अङ्ग्रहणं चेति । लिङ्गात्श्रुतेर्बलवत्त्वादिति भावः । लिङ्याशिष्यङिति । दृशेयमित्यत्रास्य प्राप्तिः । स्थानिवद्भावाद्वेति । अचः परस्मिन्नित्यनेन । कृतार्थस्य वेति । भिन्न इत्यादौ । अत्र विधिरेव निषेधापवादकत्वेन निषेधाश्च बलीयांस इत्यस्याविषय इति भावः । झादेशादिति

---

= ऋग्वेद १ । २४ । १ + ३. १. ८६. ÷ ३. ४. ९४. × ७. १. ५. * ऋग्वेद ७ । २५ । १.

**अन्तरङ्गलक्षणत्वाच्च ॥ ५ ॥**

अन्तरङ्गः खल्वप्याडागमः । कथमन्तरङ्गः ? यदि प्राग्लादेशाद्धात्वधिकारः× । अथ हि लादेशे धात्वधिकारोऽनुवर्तत उभयं समानाश्रयम् । यद्येवानकारान्तग्रहणं प्रत्ययविशेषणमथापि लादेशे धात्वधिकारोऽनुवर्तत उभयथाऽपि पूर्वविप्रतिषेधेन नार्थः । कथम् ? बहुलं छन्दसि [२. ४. ७३] इत्येवमत्र शपो लुङ्न भविष्यति । तत्रानत इति प्रतिषेधो भविष्यति ।

**वेत्तेर्विभाषा ॥ ७ । १ ॥ ७ ॥**

**बहुलं छन्दसि ॥ ७ । १ । ८ ॥**

**अतो भिस ऐस् ॥ ७ । १ । ९ ॥**

**बहुलं छन्दसि ॥ ७ । १ । १० ॥**

इदं बहुलं छन्दसीति द्विः क्रियते । एकं शक्यमकर्तुम् । कथम् ? यदि तावत्पूर्वं क्रियते परं न करिष्यते । अतो भिस ऐसित्यत्र बहुलं छन्दसीत्येतदनुवर्तिष्यते । अथ परं क्रियते, पूर्वं न करिष्यते । बहुलं छन्दसीत्यत्र रुडप्यनुवर्तिष्यते ।

अपर आह । उभे बहुलग्रहणे एकं छन्दोग्रहणं शक्यमकर्तुम् । कथम् ? इदमस्ति । वेत्तेर्विभाषा । ततश्छन्दसि । छन्दसि च विभाषा । ततोऽतो भिस ऐस्भवति । छन्दसि विभाषेति ।

---

प्र०—नित्य इति । द्वयोश्च नित्यत्वे 'न वा नित्यत्वादाटः' इति न शक्यते वक्तुम् । ङ्कविशेषणपक्षेऽप्यभेदाश्रयेणाऽऽटो नित्यत्वम् । भेददर्शने तु शब्दान्तरप्राप्त्याऽऽडप्यनित्यः । यदि प्राग्लादेशादिति । तदा प्रत्ययमात्रापेक्षत्वादाडन्तरङ्गः ।

वेत्तेर्विभाषा । अतो भिस ऐसित्यत्रेति । वाक्यभेदेन संबन्धाद्भाषायामप्यैस् भवति । छन्दसि च विभाषेति । प्रत्ययमात्रस्य च्छन्दसि रुड् विधीयते विभाषा । व्यवस्थितविभाषाविज्ञानाच्च यथाप्रयोगं रुड्विधिः ।

---

उ०—पूर्वविप्रतिषेधवार्तिकमाटोऽन्तरङ्गत्वं लावस्थायामाटः प्रवृत्तिं चानभ्युपगम्येति बोध्यम् । सत्रत्यसिद्धान्तोऽप्येवमेव । शयान्ते इत्यत्र पूर्वमाटोऽप्रवृत्तावदादेशः स्यात् । पूर्वमाटि तु तेन व्यवधानान्नादादेश इति भावः । शब्दान्तरप्राप्त्याऽऽटोऽनित्यत्वं स्यादित्याशङ्क्याऽऽह—अभेदाश्रयेणेति । स्थानिविशेषमनादृत्य कार्यमात्रस्याभेदाश्रयेणेत्यर्थः । भेदेति । कार्यिभेदात्कार्यभेदाश्रयण इत्यर्थः ।

वेत्तेर्विभाषा । ननु बहुलग्रहणाभावे शीङो रुडिति सूत्रभाष्योक्तादन्तादिरयादौ एव स्यादत आह—प्रत्ययमात्रस्येति । नन्वेवमपि सर्वस्य प्रत्ययस्य विभाषा रुट् स्यादत आह—व्यवस्थितेति ।

## अतो भिस ऐस् ॥ ७ । १ । ९ ॥

इह वृक्षैः प्लक्षैरिति परत्वादेत्त्वं प्राप्नोति* । ऐस्भाव इदानीं क्व भविष्यति ।

कृत एत्त्वे भौतपूर्व्यात् ।

कृत एत्त्वे भूतपूर्वमकारान्तमित्यैस्भविष्यति ।

ऐस्तु नित्यस्तथा सति ।

एवं सति नित्य ऐस्भावः । कृतेऽप्येत्त्वे प्राप्नोत्यकृतेऽपि प्राप्नोति । नित्यत्वादैस्त्वे कृते विहतनिमित्तत्वादेत्त्वं न भविष्यति ।

एत्वं भिसि परत्वाच्चेदत ऐस्क भविष्यति ।
कृत एत्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति ॥

## नेदमदसोरकोः ॥ ७ । १ । ११ ॥

इमौ द्वौ प्रतिषेधावुच्येते । उभौ शक्याववक्तुम् । कथम् ? एवं वक्ष्यामि । इदमदसोः कादिति । तन्नियमार्थं भविष्यति । इदमदसोः कादेव नान्यत इति ।

## टाङसिङसामिनात्स्याः ॥ ७ । १ । १२ ॥

किमर्थमिनादेश उच्यते न नादेश एवोच्येत ? का रूपसिद्धिः ? वृक्षेण प्लक्षेण । एत्वे योगविभागः करिष्यते+ । कथम् ? इदमस्ति । बहुवचने झल्येत् [ ७. ३. १०३ ] । ओसि च [१०४] । तत आङि च [१०५] आङि च परतोऽत एत्वं भवति । वृक्षेण प्लक्षेण । तत आपः संबुद्धौ च [ १०६ ]

---

प्र०—अतो भिस ऐस् । परत्वादिति । एत्त्वस्यावकाशो: वृक्षेष्विति । ऐसोऽवकाशः कृत एत्त्वे । प्रागेत्त्वादुभयप्रसङ्गे परत्वादेत्त्वप्रसङ्गः । मुख्यशब्दार्थाश्रयणेनानवकाशं मत्वा पृच्छति—ऐस्भाव इदानीमिति । कृत एत्त्व इति । सांप्रतिकाभावे भूतपूर्वगतिराश्रीयते । ननु नाप्राप्त एत्त्व ऐसारभ्यमाणस्तस्यापवादो युक्तः । उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः । एवं तर्हि पूर्वपक्षवादिनोत्सर्गापवादमनाश्रित्य चोदितमिति तदनुसारेणैव सिद्धान्तवादी परिहरति—ऐस्तु नित्य इति ।

टाङसिङसामिनात्स्याः । आङि चेति । स्थानिवद्भावान्नादेश एत्वं विज्ञा·

---

उ०—अतो भिस ऐस् । मुख्यशब्दार्थेति । एवं चैत्वमपवादत्वाद्बाधित्वैसिति भावः । अनाश्रित्येति । सर्वथाऽसंभव एव बाधकत्वमिति वार्तिकरीत्येत्यर्थः । तथा सतीत्यनेनानवकाशत्वमेव दृढीकृतम् । कृते चारितार्थ्यमङ्गीकृत्य परत्वादेत्वमित्यङ्गीकार इति हि तदर्थः । अङ्गीकार इत्यनेनानवकाशत्वं सूचितम् ।

टाङसि० । नादेश आद्योऽभावादाह—स्थानिवद्भावादिति । न च परत्वादेत्त्वे नादेशविधायकवैयर्थ्यापत्तिः । तत्सामर्थ्यादेव पूर्वं नादेश एत्वमिति क्रमाश्रयणाददोषः ।

---

* ७. ३. १०३. + ७ ३. १०५.

आप आङि चौसि चेति । नैवं शक्यम् । इह हि अनेनेतीद्रूपलोपः प्रसज्येत× । झलि लोपः करिष्यते । न शक्यो झलि लोपः कर्तुम् । इह हि दोषः स्यात् । अया×विष्ठेति । एवं तर्ह्यन्लोपापवादो विज्ञास्यते* । कथम् ? एवं वक्ष्यामि । अन् ने चापि चेति । तन्नकारग्रहणं कर्तव्यम् । न कर्तव्यम् । क्रियते न्यास एव । लुप्तनिर्दिष्टो नकारः । यद्येवं नोपधाया इति दीर्घत्वं प्राप्नोति÷ । सौत्रो निर्देशः । अथवा नपुंसकनिर्देशः करिष्यते ।

अथ किमर्थमादुच्यते न अदेवोच्येत ? का रूपसिद्धिः, वृक्षात् प्लक्षात् । सवर्णदीर्घत्वेन सिद्धम्÷÷ । न सिध्यति । अतो गुणे पररूपमिति पररूपत्वं प्राप्नोति** । अकारोच्चारणसामर्थ्यान्न भविष्यति । यदि प्राप्नुवन्विधिरुच्चा-

प्र०—यते । अनेनेति । तस्य हलादित्वाल्लोपे सत्यनेनेति प्राप्नोति । झलि लोप इति । हलि लोप इत्यपनीय झलि लोप इति सूत्रं कर्तव्यम् । नकारस्तु झल् न भवतीति लोपाभावः । अयेति । इदमश्चतुर्थ्येकवचनस्य सुपां सुलुगिति यादेशः । तस्या-झलादित्वादिद्रूपलोपाप्रसङ्गाद्धलि लोप इति वक्तव्यम् । तथा चानेनेति न सिध्यति । एवं तर्हीति । नश्च आप् च नाप् तस्मिन् परत इदमोऽनादेश इति सूत्रार्थ आश्रीयते । लुप्तनिर्दिष्ट इति । निर्दिश्य लुप्त इत्यर्थः । यद्येवं नालोपस्यासिद्ध-त्वाद्दीर्घत्वं प्राप्नोति यथा राजेति । नैष दोषः । छन्दोवत्सूत्राणि भवन्ति । सुपां सुलुगिति लुकि कृते न लुमताऽङ्गस्येति प्रत्ययलक्षणप्रतिषेधाद्दीर्घत्वाभावः । सौत्र इति । सूत्रे कृतः सौत्रः । कृतलब्धेत्यण् । अकारोच्चारणसामर्थ्यादिति । अन्यथा तकार एव विधीयेत । आदेः परस्येत्यादेस्तकारे विहिते संयोगान्तलोपे च वृक्ष-दिति सिध्यति । तदेवं भाष्यकारेण नादेशोऽदादेशश्च व्यवस्थापितः । अन्ये त्वति-जरसिनातिजरसादिति सिद्धय इन आच्च विहिताविस्याहुः संनिपातपरिभाषाया अनित्यत्वाज्जरसादेशं वदन्तः । भाष्यकारस्तु संनिपातपरिभाषामाश्रित्य जरसादेशमन-भ्युपयन्नतिजरेणातिजरादिति भाव्यमिति मत्वा गौरवमुद्भावितवान् ।

उ०—लोपे-इदो लोपे । नश्चाऽऽप् चेति । अन् नापीति च्छेद इत्यर्थः । लुप्तनिर्दिष्ट इत्यत्र पूर्वकालेति समासे पूर्वं लुप्तः पश्चान्निर्दिष्ट इत्यर्थः प्रतीयते सोऽयुक्त इत्यत आह—निर्दिश्येति । भाष्यकारवचनात्परकालस्यापि पूर्वनिपात इति भावः । द्वितीयो नकारः पदान्तत्वाल्लुप्त इति तात्पर्यम् । ननु सूत्रेऽपि लक्षणानुसारेणैव निर्देशो युक्त इत्ययं परिहारोऽयुक्त इत्यत आह—छन्दोवदिति । छान्दसत्वानाश्रयणेऽपि परिहारमाह—भाष्ये-अथवेति । शब्दस्वरूपं विशेष्यमित्याशयः । प्रत्याख्यानेनेदं ध्वन्यते । एतत्तत्फलक्लेशपरिहारार्थं एवेकारो न त्वस्य फलान्तरकल्पनेऽभिनिवेष्टव्यमिति दिक् । अनभ्युपयन्निति । इणः शतरि रूपम् । इदं जराया इति सूत्रे स्फुटी भविष्यति । इति भाव्यमिति । इत्येव भाव्यमित्यर्थः । न च

× ७. २ ११३ ÷ ७. १. ३९. * ७. २. ११२; ११३. ÷ ६. ४. ८. ÷÷ ६. १. १०१
** ६. १. ९७.

रणसामर्थ्याद्बाध्यते सवर्णदीर्घत्वमपि न प्राप्नोति। नैष दोषः। यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तमेव नासौ बाध्यते। पररूपं प्रत्यकारोच्चारणमनर्थकं, सवर्णदीर्घत्वस्य पुनर्निमित्तमेव।

ङेर्यः ॥ ७ । १ । १३ ॥

किमिदं चतुर्थ्येकवचनस्य ग्रहणमाहोस्वित्सप्तम्येकवचनस्य ग्रहणम्? कुतः संदेहः? समानो निर्देशः। चतुर्थ्येकवचनस्य ग्रहणम्। कथं ज्ञायते? लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति। इहापि तर्हि चतुर्थ्येकवचनस्य ग्रहणं स्यात्? ङेराम्नद्याम्नीभ्यः [ ७. ३. ११६ ]। एवं तर्हि व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमितीह चतुर्थ्येकवचनस्य ग्रहणं व्याख्यास्यामस्तत्र सप्तम्येकवचनस्येति।

---

प्र०—ङेर्यः। कुतः संदेह इति प्रयोगे वृक्षायेत्यादौ चतुर्थ्यवगमादयुक्तः संदेह इति भावः। इतरो लक्षणमात्रशरणो भूत्वाऽऽह—*समानो निर्देश इति*। लक्षणप्रतिपदोक्तयोरिति चतुर्थ्येकवचनस्य ङे इति रूपं प्रतिपदोक्तं सप्तम्येकवचनस्य तु घेर्ङितीति गुणे कृते ङेरिति लाक्षणिकं रूपम्। इह पि तर्हीति। ङेरिति षष्ठ्यन्तं रूपमुपात्तं तच्चोभयोरपि लाक्षणिकमिति परिभाषाया अयमविषयः। अथ प्रत्ययात्पूर्वस्य भागस्य लाक्षणिकत्वप्रतिपदोक्तत्वसंभवापेक्षा परिभाषाप्रवृत्तिस्तदाऽन्यत्रापि प्रवर्तेत। एवं तर्हीति। लिङ्गदर्शनं चास्ति। तस्मै प्रभवति संतापादिभ्यः। तदस्यां प्रहरणमिति क्रीडायां ण इति।

---

उ०—विभक्त्यादेशेभ्यः परत्वाज्जरसादेशोऽतिजरसेत्याद्यपीतित्येवेत्यसंगतम्। अतिजरांसीत्यत्र जसः शिभावे कृते नुमूजरसोः प्राप्तौ नुम् विप्रतिषेधेनेति जराया इति सूत्रस्थभाष्येण विभक्तित्वज्ञानप्रकृतिप्रत्ययोभयसापेक्षजरसादेशापेक्षया विभक्तिकार्याणामन्तरङ्गत्वात्पूर्वं प्रवृत्तिस्वीकारेणादोषात्। टाङसीत्यादीनामङ्गनिमित्तटादीनामित्यर्थ इति नोभयापेक्षत्वम्। एतेन प्रत्ययविशेषापेक्षत्वेनाऽऽदेशा बहिरङ्गा इत्यपास्तम्। तादृशबहिरङ्गस्य भाष्ये क्वाप्याश्रयणाभावात्। किंच प्रकृतिप्रत्ययविशेषापेक्षत्वेन बहिरङ्गत्वं न वाचनिकम्। किंतु यद्विशेषधर्मज्ञानात्पूर्वमवश्यं यत्सामान्यधर्मज्ञानं तत्र पूर्वोपस्थितत्वेन सामान्यधर्मापेक्षस्यान्तरङ्गत्वं तद्बीजम्। अस्ति च 'रुदश्च पञ्चभ्य' इत्यत्र निमित्तभूतसार्वधातुकत्वज्ञानार्थं धातुविहितप्रत्ययत्वज्ञानं पूर्वमावश्यकम्। एवं च पूर्वोपस्थितसार्वधातुकत्वलिङ्त्वज्ञानमात्रापेक्षया सुटः सार्वधातुकत्वज्ञानकाले प्रवृत्तिरित्यन्तरङ्गत्वं यासुटः। तदुत्तरप्रवृत्तिकत्वाच्च बहिरङ्गत्वमीटः। नचैवं प्रकृते। किंच परत्वाज्जरसादेशे, एतत्कैयटग्रन्थस्यासंभवदुक्तिकतैव। पूर्वं जरसादेश इनाद्यप्राप्त्या तदभावपक्षे च तस्याप्राप्त्या संनिपातपरिभाषयाऽनभ्युपगमसित्यस्यासंगतत्वादिति दिक्।

ङेर्यः। ङेरित्यत्र प्रकृतिरूपापेक्षया लाक्षणिकत्वादि कथ्यत इत्याह—चतुर्थ्येकवचनेति।

**सर्वनाम्नः स्मै ॥ ७ । १ । १४ ॥**

**अश एकादिष्टात्स्मायादीनामुपसंख्यानम् ॥ १ ॥**

अशः+ एकादिष्टात्स्मायादीनामुपसंख्यानं कर्तव्यम् । अथो अत्रास्मै । अथो अत्रास्मात् । अथो अत्रास्मिन्निति । एकादेशे* कृतेऽत इति स्मायादयो न प्राप्नुवन्ति । किं पुनः कारणमेकादेशस्तावद्भवति न पुनः स्मायादयः ? न परत्वात्स्मायादिभिर्भवितव्यम् ? न भवितव्यम् । किं कारणम् ? नित्यत्वादेकादेशः । नित्य एकादेशः । कृतेष्वपि स्मायादिषु प्राप्नोत्यकृतेष्वपि । नित्यत्वादेकादेशे कृतेऽत इति स्मायादयो न प्राप्नुवन्ति । किमुच्यतेऽश इति नेहापि कर्तव्यम् । अत्रास्मै । अत्रास्मात् । अत्रास्मिन्निति । एकादेशे कृतेऽत इति स्मायादयो न प्राप्नुवन्ति । आनुपूर्व्यात् सिद्धमेतत् । नात्राकृतेषु स्मायादिषु हलादिर्विभक्तिरस्ति हलादौ चेद्रूपलोपो÷ न चाकृत इद्रूपलोप एकादेशः प्राप्नोति । तदानुपूर्व्यात् सिद्धम् । तत्तर्ह्युपसंख्यानं कर्तव्यम् ?

**न वा बहिरङ्गलक्षणत्वात् ॥ २ ॥**

न वा कर्तव्यम् । किं कारणम् । बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षण एकादेशः । अन्तरङ्गाः स्मायादयः । असिद्धं बहिरङ्गमन्तरङ्गे ।

**जसः शी ॥ ७ । १ । १७ ॥**

**जश्शसोः शिः ॥ ७ । १ । २० ॥**

किमर्थं शीभावः शिभावश्चोच्यते न शिभाव एवोच्येत । का रूपसिद्धिः ? ते ये के । आद्गुणेन सिद्धम् × नैवं शक्यम् । इह हि त्रपुणी जतुनी÷÷ । दीर्घश्रवणं न स्यात् । एवं तर्हि शीभाव एवोच्यताम् । नैवं शक्यम् । इह हि कुण्डानि वनानीति ह्रस्वस्य श्रवणं न स्यात् । तस्माच्छीभावः शिभावश्च वक्तव्यः ।

प्र०—सर्वनाम्नः स्मै । अश एकादिष्टादिति । लोकेऽप्रतिपादनाय वाक्यमुच्चार्यते तदेव व्याकरणेऽपि विभज्यान्वाख्यायते । ततश्चात्र अ ए इति स्थिते नित्यत्वादेकादेशः प्राप्नोति । तस्मिन्कृतेऽदन्तत्वाभावाद्वर्णविधावन्तादिवद्भावाभावात्ताद्रूप्यानतिदेशात्स्माद्यसिद्धिः । आनुपूर्व्येति । अत्र इदम् ए इति स्थिते त्यदाद्यत्वे कृते स्मायादयः । ततो नित्यत्वाद्गुणं बाधित्वेद्रूपलोपे कृते सवर्णदीर्घत्वेन रूपं सिध्यतीत्यर्थः । न वेति । पदद्वयाश्रयत्वादेकादेशो बहिरङ्गः । एकपदाश्रयत्वात्स्मायादयोऽन्तरङ्गाः ।

जसः शी । शीभावशिभावयोः क्वचिद्रूपाभेदं दृष्ट्वा प्रश्नः—किमर्थमिति ।

उ०—सर्वनाम्नः । पदसंस्कारपक्षे स्वार्थद्रव्यलिङ्गादिक्रमेणान्वाख्यानपक्षे च दोषाभावादाह—लोक इति । वर्णविधावित्यस्य प्रत्याख्यानेऽप्याह—ताद्रूप्येति ।

+२. ४. ३२. *६. १. १०१. ÷७. २. ११३. ×६. १. ८७. ÷÷७. १. १९.

## औङ आपः ॥ ७ । १ । १८ ॥

किमर्थो ङकारः । सामान्यग्रहणार्थः । औ इत्युच्यमाने प्रथमाद्विवचनस्यैव स्यात् । अथाप्यौडित्युच्यत एवमपि द्वितीयाद्विवचनस्यैव स्यात् । अस्ति प्रयोजनमेतत् ? किं तर्हीति ? ङित्कार्यं तु प्राप्नोति । खट्वे माले । याडापः [ ७. ३. ११३ ] इति याट् प्राप्नोति । नैष दोषः । नैवं विज्ञायते ङकार इदस्य-सोऽयं ङित् ङितीति । कथं तर्हि ? ङ एवेन्ङित् ङितीति । एवं सति वर्णग्रहणमिदं भवति वर्णग्रहणेषु चैतद्भवति यस्मिन्विधिस्तदादावल्ग्रहण इति । न दोषो भवति । अथवा वर्णग्रहणमिदं भवति न चैतद्वर्णग्रहणेषु भवत्यननुबन्ध-

---

प्र०—औङ आपः । किमर्थ इति । औङ इति भूतानुवादः । न कचिदौङिति रूपं विज्ञातमभूत्तस्य च भूतवदुपादाने किं प्रयोजनमिति प्रश्नः । औ इत्युच्यमान इति । निरनुबन्धकपरिभाषयेति भावः । यद्यपि टकारः प्रत्याहारार्थत्वात्समुदायानुबन्धस्तथाऽप्यनेकान्ता अनुबन्धा इति दर्शन एकान्ता इति दर्शने वाऽवयवावयवस्यापि समुदायावयवत्वदर्शनात्प्रत्ययस्याप्यनुबन्धः स्यात् । प्रयोजनाभावात्प्रत्ययानुबन्धो न भवतीति चेदिह तस्य ग्रहणं मा भूदिति प्रयोजनं स्यात् । यद्येवमौङ इत्युच्यमाने तदनुबन्धकग्रहणे नातदनुबन्धकस्येति द्वितीयाद्विवचनग्रहणं न प्राप्नोति । ङकारोच्चारणसामर्थ्याद्भविष्यतीत्यदोषः । ङित्कार्यं त्विति । औङ इति वचनात्प्रथमाद्वितीयाद्विवचनयोरौङो विधायकवाक्यमनुमीयत इत्युपदेशेऽन्त्यत्वान्ङकारस्येत्संज्ञायां सत्यां ङित्कार्यप्रसङ्गः । अथवेन । औङ इति वर्णमात्रं निर्दिश्यते ङकारस्त्वसंदेहार्थो नानुबन्धार्थः । ऋदोरबिति यथा दकारः । अज्ञातिमश्च प्रत्ययं औकारेण विशेष्यत

---

उ०—औङ आपः । ननूभयसंग्रहार्थं ङकारोच्चारणसत्त्वात्किमर्थ इति प्रश्नानुपपत्तिरत आह—औङितीति । असिद्धस्यानुवादे न प्रयोजनमित्यर्थः । अनेकान्ता इति । अत्र पक्ष आनन्तर्यमेव संबन्धो न त्ववयवावयविभावः । तथा समुदायस्येव प्रत्ययस्याप्यस्तीत्यर्थः । अवयवावयवस्यापीति । द्विगता अपि हेतवो भवन्ति । आम्राश्च सिक्ताः पितरश्च तृप्ता इति न्यायात् । अवयवस्य समुदायस्य चावयवत्वं न विरुध्यत इति भावः । इह । शीविधौ । तस्य । द्वितीयाद्विवचनस्य । न प्राप्नोतीति । अत्र टकारस्याप्यनुबन्धस्य भावादिति भावः । नन्वौङो विधानाभावेनोपदेशाभावात्प्रत्ययाद्यन्तत्वाभावाच्चेत्संज्ञाभावेन कथमित्कार्योपादनमत आह—औङ इतीति । चित्रङ इवेति भावः । असिद्धानुवादाभावात्तदनुपपत्त्या औऔटोरौङ् भवतीति वाक्यमनुमीयत इति तात्पर्यम् । नच याड्यवश्यंप्राप्ते शीभावारम्भादयमपवाद इति न दोषः । कृते चारितार्थ्येनासंभव एव बाधकत्वमिति वार्तिकरीत्या शङ्कासत्त्वात् । इत्संज्ञकङकारादावेति व्याख्याने आङ्याजयारामुपसंख्यानमिति सुपां सुलुक्सूत्रस्थवार्तिकविहिताङः प्रयाहवेत्युदाहरणमसंगतं स्यादित्यरुचेराह—भाष्ये—अथवा वर्णेति । असंदेहार्थ इति । आव इत्युच्यमाने किमयमाव उत औ इति संदेहः स्यादिति भावः । ननु

कग्रहणे न सानुबन्धकस्येति । अथवा पूर्वसूत्रनिर्देशोऽयं पूर्वसूत्रेषु च येऽनुबन्धा न तैरिहेत्कार्याणि क्रियन्ते ।

औकारोऽयं शीविधौ ङिद्गृहीतो ङिच्चास्माकं नास्ति कोऽयं प्रकारः ।
सामान्यार्थस्तस्य चाऽऽसञ्जनेऽस्मिन्ङित्कार्यं ते श्यां प्रसक्तं स दोषः ॥१॥
ङित्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत्स्यात्तच्च विद्यात्तदादौ ।
वर्णश्चायं तेन ङित्वेऽप्यदोषो निर्देशोऽयं पूर्वसूत्रेण वा स्यात् ॥ २ ॥

**अष्टाभ्य औश् ॥ ७ । १ । २१ ॥**

औशघौ

औशघाविति वक्तव्यम् । किमिदमघाविति । अनुत्तरपद इति । किं प्रयोजनम् ? इह मा भूत् । अष्टपुत्रः, अष्टभार्य इति ।

अस्तु लुक्तत्र ।

अस्त्वत्रौश्त्वं लुग्भविष्यति* ।

प्र०—इत्यौकारान्तस्य शीभावो विधीयमानोऽन्तवद्भावात्केवलस्याप्यौकारस्य प्रवर्तते। प्रत्ययस्य चानुबन्धभावाभावाभ्यां निरनुबन्धकपरिभाषा व्यवस्थां करोति न वर्णस्य । **अथवेति** । पूर्वाचार्यैर्द्वे अपि द्विवचने ङितौ पठिते । न चेह क्वचिदप्यौङ् प्रत्ययोऽस्ति । सामान्यग्रहणार्थं च पूर्वसूत्रनिर्देशस्तेन यः पूर्वसूत्र औङ् तस्य ग्रहणं भवतीति प्रथमाद्वितीयाद्विवचनयोर्ग्रहणसिद्धिः । **वर्णश्चायमिति** । औकारो वर्ण एव निर्दिष्टो न प्रत्यय इत्यर्थः । **तेन ङित्वेऽप्यदोष इति** । ङित्त्वे सति यो दोषः स नास्ति । ङित्त्वस्यैवाभावादित्यर्थः ।

**अष्टाभ्य औश् । औशघाविति** । औशादेशो नाप्राप्ते लुक्यारभ्यमाणो विशेषाभावात्सर्वस्य लुको बाधकः प्राप्नोतीति भावः । इतरो येन नाप्राप्तिन्यायेन षड्भ्यो लुगित्यस्यैवायमपवादो न सुपो धातुप्रातिपदिकयोरित्यस्यापीति मत्वाऽऽह—अस्त्विति । भवत्वौशादेशस्तस्य लुग्भविष्यतीत्यर्थः । एतच्चौशादेशप्रवृत्तिमभ्युपगम्योच्यते । नित्य-

उ०—निरनुबन्धकत्व औटः सानुबन्धकत्वाद्ग्रहणं न स्यादत आह—प्रत्ययस्य चेति । तदेतद्भाष्य उक्तं—नचैतद्वर्णग्रहणेष्वित्यादिना । अनेन औ इत्युच्यमाने प्रथमाद्विवचनस्यैव स्यादिति दोष उद्धृतः । ङित्वाभावाच्च याट्प्राप्तिरेव नेति बोध्यम् । ननु संभवति प्रत्ययग्रहणे कुतो वर्णग्रहणं स्यादित्यरुचेराह—भाष्ये—अथवेति । नचेहेति । एवं च सामर्थ्यात्पूर्वसूत्रनिर्देशस्तत्फलं च सामान्यग्रहणमिति भावः । भाष्ये—कोऽयं प्रकार इति । अयुक्तोऽयं निर्देशप्रकार इत्यर्थः । ङित्त्वे विद्याद्वर्णेति । याडाप इत्यत्रानुवृत्तं ङितीति कर्मधारयेण वर्णनिर्देश इत्यर्थः । तदादिविधौ च स्वरूपसत्सप्तम्येव निमित्तं न स्वर्थनिर्देश इत्युक्तम् । वर्णश्चायमिति । चशब्दो वार्थे । ननुः ङित्वस्यैवाभावे ङित्वे न दोष इत्ययुक्तमत आह—ङित्त्वे सतीति । अष्टाभ्य औश् । सर्वस्य । षड्भ्य इत्यस्य सुपो धात्वित्यस्य च । प्रवृत्तिमभ्युपगम्येति ।

* २, ४, ७१.

षड्भ्योऽप्येवं प्रसज्यते ।

इहापि तर्हि प्राप्नोति । अष्टौ तिष्ठन्ति । अष्टौ पश्येति+ ।

अपवादः

अपवादत्वादत्रौश्त्वं लुकं बाधिष्यते । इहापि तर्हि बाधेत । अष्टपुत्रः, अष्टभार्यः ।

यस्य विषये

यस्य लुको विषय औश्त्वं तस्यापवादः ।

यो वा तस्मादनन्तरः ॥ १ ॥

प्र०—त्वात्पूर्वमेव लुका भाव्यम् । अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति वा । इतरो लुको विशेषमपश्यन्यद्यपवादे प्रवृत्त उत्सर्गः प्रवर्तेत तदाऽतिप्रसङ्गः इत्याह—षड्भ्य इति । सूत्रैकदेशानुकरणमेतत् । षड्भ्यो लुगित्ययमप्यौशो लुक् प्राप्नोति । अथ विधानसामर्थ्यान्न भवति तदाऽष्टपुत्र इत्यत्रापि न प्राप्नोतीत्यर्थः । इतरो येन नाप्राप्ते तस्य बाधकमित्याश्रित्याऽऽह—अपवाद इति । षड्भ्यो लुगिति सर्वत्र प्राप्नोतीति स एवौशा बाध्यते, सुपो धातुप्रातिपदिकयोरित्ययं तु क्वचित्प्राप्नोतीति तं प्रत्यस्य बाधकत्वायोगात् । अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति पूर्वमेवलुक् प्रवर्तते । यो वा तस्मादिति । औशः षड्भ्यो लुगित्ययमनन्तरो द्वितीयाध्यायविहितस्तु व्यवहितः । ननु मध्येऽपवादा इति द्वितीयाध्यायविहितस्यैव लुको बाधा प्राप्नोति । नैष दोषः । यत्र द्वावपि व्यवहितौ पूर्वोत्तरौ तत्र पूर्वानुभवाहितसंस्कारोपजनितस्मृत्युपारूढस्य पूर्वस्य युक्तो बाधः । इह त्वनेकाध्यायव्यवहितो द्वितीयाध्यायविहितो लुङ् महता यत्नेन स्मरणीयः । अनन्तरस्त्वनुभवनीय इति स एव बाध्यते । अथवा सत्यामसत्यां वोपलब्धौ प्रत्यासत्त्याऽनन्तरस्यैव बाधेन भाव्यम् । एतच्च लुकः समकक्ष्यत्वमभ्युपगम्योक्तम् । भिन्नकक्ष्यौ त्वेतौ लुकौ ।

उ०—वस्तुतोऽस्त्वत्रौश्त्वमित्यस्य प्राप्नोत्यत्रौश्त्वमित्यर्थः । लुग्भविष्यतीत्यस्य लुग्बाधको भविष्यतीत्यर्थ इति न दोषः । गौणेऽप्यस्य प्रवृत्तिमभ्युपगम्यौशबाधाविति वार्तिकं प्रवृत्तमिति बोध्यम् । प्रियाष्टादीनां त्वनभिधानमेवेति तदाशयः । क्वचिदिति । समासादावित्यर्थः । ननु समासेऽप्यन्तरङ्गत्वादौश् प्राप्नोतीत्यत आह—अन्तरङ्गानपीति । व्यवहिताविति । कालतस्तुल्यावित्यर्थः । तत्र पूर्वेति । तत्र को बाध्यतामिति विशेषचिन्तायां पूर्वस्यैव बाधो न्याय्य इति भावः । पूर्वानुभवजसंस्कारजन्यस्मृतिविषयस्येत्यक्षरार्थः । उत्तरस्य त्वननुभवात्स्मृत्ययोगः । न्यायान्तरसत्त्वेऽपि प्रत्यासत्तिन्याय एवाऽऽश्रीयत इत्यर्थो 'यो वा तस्मादनन्तर' इति भाष्यस्येत्याह—अथवेति । येन नाप्राप्त्या यत्रोभयबाधकत्वं प्राप्तं तत्रैते न्याया व्यवस्थापका इत्याशयेनाऽऽह—एतच्चेति । एवं च 'यस्य विषये' इत्येष एव समाधिर्मुख्य

+७. १. २२.

अथवाऽनन्तरस्य लुको बाधकं भविष्यति । कुत एतत् ? अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति । अथेह कस्मान्न भवत्यौश्त्वम् ? अष्ट तिष्ठन्ति । अष्ट पश्येति ।

आत्वं यत्र तु तत्रौश्त्वम् ।

यत्रैवाऽऽत्वं तत्रैवौश्त्वेन भवितव्यम् । कुत एतत् ?

तथा ह्यस्य ग्रहः कृतः ।

तथा ह्यस्याऽऽत्वभूतस्य ग्रहणं क्रियते । अष्टाभ्य इति । ननु च नित्यमात्वम्+ । एतदेव ज्ञापयत्याचार्यो विभाषात्वमिति यदयमात्वभूतस्य ग्रहणं करोति । अष्टाभ्य इति । इतरथा ह्यष्टन इत्येव ब्रूयात् ।

औशघावस्तु लुक्तत्रषड्भ्योऽप्येवं प्रसज्यते ।
अपवादो यस्य विषये यो वा तस्मादनन्तरः ॥ १ ॥

आत्वं यत्र तु तत्रौश्त्वं तथा ह्यस्य ग्रहः कृतः ।
स्वमोर्लुक्च त्यदादीनां कृते ह्रस्वे न लुग्भवेत् ॥ २ ॥

प्र०–एकस्य सर्वत्र प्राप्त्याऽपरस्य क्वचित्प्राप्त्या । अथेहेति । अष्टाभ्य इति विभक्तौ लक्षणवशादाकारो निर्दिष्टोऽशक्त औशं विषयविशेषेऽवस्थापयितुम् । आत्वं यत्रेति । कृताकारस्यानुकरणमष्टाशब्दः । ननु चेति । लक्षणवशाद्विभक्तावाकारं विधाय निर्देशः कृत इति चोदकाशयः । एतदेवेति । लाघवार्थमष्टन इति वक्तव्ये कृतात्वस्येदमनुकरणं तस्य चैतत्प्रयोजनं कृतात्वाद्यथा स्यादकृतात्वान्मा भूदिति । यदि च नित्यमात्वं स्यात्ततो व्यवच्छेद्याभावात्कृतात्वानुकरणमनर्थकं स्यात्तस्मात्कृतात्वानुकरणनिर्देश आत्वविकल्पस्य ज्ञापकः । स्वमोरिति । उत्तरसूत्रोपस्थाप्यमानार्थसंग्रहः ।

उ०–इति भावः । ननु कृतात्वनिर्देशादात्वाभावे कथमतिव्याप्तिरत आह–अष्टाभ्य इति । अष्टन इति । न च यथान्यासे बहुवचनेन गौणेऽस्याप्रवृत्तिः । तव तु तदभावेन गौणेऽपि स्यादिति दोष इति वाच्यम् । आत्वपक्ष एव प्रवृत्तिरित्यर्थबोधनार्थं बहुवचनस्य चारितार्थ्येनेतरार्थकल्पने मानाभावात् । न च कृतात्वानुकरणादेकवचनेनैव सिद्धौ गौणेऽप्रवृत्त्यर्थमिति वाच्यम् । अष्टन इत्येव ब्रूयादिति भाष्यविरुद्धसूत्राशयकल्पनाया अनौचित्यात् । शब्दबाहुल्येन बहुवचनस्य न्यायप्राप्तत्वाच्च । 'तिसृभ्यो जस' इतिवत् । गौणानां प्रियाष्टादीनामनभिधानस्य स्पष्टता षडिति सूत्रभाष्य उक्तत्वाच्च । ज्ञापक इति । इदं च हलीत्यननुवृत्तिपक्षे । तदनुवृत्तिपक्षे तु जस्शसोर्विषय आत्वस्यापीदमेव ज्ञापकमिति बोध्यम् । उत्तरसूत्रोपस्थाप्यमानेति । उत्तरसूत्र उपसंख्यायमानेत्यर्थः ।

+ ७. २. ८४.

## स्वमोर्नपुंसकात् ॥ ७ । १ । २३ ॥

### स्वमोर्लुक्त्यदादिभ्यश्च ॥ १ ॥

स्वमोर्लुक्त्यदादिभ्यश्चेति वक्तव्यम्। इहापि यथा स्यात्। तद्ब्राह्मणकुलमिति। किं पुनः कारणं न सिध्यति?

कृते ह्यत्वे न लुग्भवेत्।

अत्वे× कृते लुग्न प्राप्नोति। इदमिह संप्रधार्यम्। अत्वं क्रियतां लुगिति किमत्र कर्तव्यम्? परत्वादत्वम्। नित्यो लुक्। कृतेऽप्यत्वे प्राप्नोत्यकृतेऽपि। अनित्यो लुग्न हि कृतेऽत्वे प्राप्नोति। अतोऽम् [ ७. १. २४ ] इत्यम्भावेन भवितव्यम्। तस्मात्त्यदादिभ्यश्चेति वक्तव्यम्।

इदं विचार्यते शिशीलुङ्नुम्विधिषु* नपुंसकग्रहणं शब्दग्रहणं वा स्यादर्थग्रहणं वेति। कश्चात्र विशेषः?

---

प्र०—**स्वमोर्नपुंसकात्**। **तदिति**। तदोः सः साविति सत्वमत्र प्राप्नोति। **नित्यो लुगिति**। अत्वं तु लुकि कृते न लुमताऽङ्गस्येति प्रत्ययलक्षणप्रतिषेधाद्विभक्त्यभावान्न प्राप्नोतीत्यनित्यम्। **अनित्यो लुगिति**। यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमित्येतत्तु पाक्षिकम्। यदा द्वयोर्लक्षणयोः संप्रधारणं क्रियते तदा यल्लक्षणप्रवृत्तावपि यस्य द्वितीयस्य लक्षणस्य प्रवृत्तिव्याघातो नास्ति तत्प्रति न तस्य दौर्बल्यम्। लक्षणान्तरेणैवैतत्प्रवृत्तिनिवारणाद्यथा वालिसुग्रीवयोर्युद्धे भगवता रामेण बालिनो वधेऽपि न सुग्रीवापेक्षं दौर्बल्यमभिदधति शूरमानिनः। एतद्दर्शनसंश्रयेणोच्यते यस्य च लक्षणान्तरेणेति। यदा त्वेष न्याय आश्रीयते लक्षणान्तरप्रवृत्तिनिमित्तमुपसंहरल्लक्षणं बलवद्भवतीतरत्तु तदुपसंहृतनिमित्तलक्षणान्तरोपपादितप्रवृत्तिविघातं दुर्बलमेव। तथा च भगवद्वासुदेवसहायत्वात्पाण्डवा बलिनो दुर्बलान्धार्तराष्ट्रान्विजिग्यिरे। तदा नास्त्येतद्यस्य च लक्षणान्तरेणेति। केचित्त्वन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इत्यत्रापि ग्रहणान्नित्यानां च परेषां च लुका बाधनमिच्छन्तस्त्यदाद्यत्वं लुका बाध्यत इत्याहुः। तथा चोच्यते सर्वविधिभ्यो

---

उ०—स्वमोर्नपुंसकात्। सत्वमत्रेति। सावत्वे कृते लुगप्राप्ताविति भावः। पाक्षिकमिति। कृताकृतप्रसङ्गमात्रेणापि क्वचिन्नित्यताभ्युपगमादिति भावः। तदेवोपपादयति—यदा द्वयोरिति। उपसंहरदिति। संपादयदित्यर्थः। यथाऽत्वशास्त्रम्। इतरत्त्विति। यथा लुक्शास्त्रम्।। तदुपसंहृतेति। तच्छब्देन प्रकृतेऽत्वविधायकं परामृश्यते। तत्संपादितनिमित्तकेनातोऽमिति लक्षणान्तरेणोपपादितः = सम्पादितः प्रवृत्तिविघातो यस्य तल्लुक्शास्त्रं दुर्बलमित्यर्थः। यथा वासुदेवसहायत्वेऽपि पाण्डवानां बलवत्त्वमेव व्यवहरन्ति तद्वदित्यर्थः। वासुदेवसहायत्वादिति। ल्यप्लोपे पञ्चमी। तत्सहायत्वं प्राप्येत्यर्थः। विजिग्यिर इति। इत्यभिदधतीत्युपन्यस्यते। वचनं विनाऽपीष्टसिद्धिं दर्शयति—केचित्त्विति। त्यदादिभ्यश्चेति वक्तव्य-

---

×७. २, १०२. *७. १. १९; २०; २१; ७२.

**शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधः ॥ २ ॥**

शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेधो वक्तव्यः । बहुत्रपुः बहुत्रपू बहुत्रपव इति । अस्तु तर्ह्यर्थग्रहणम् । यद्यर्थग्रहणं प्रियसक्थ्ना ब्राह्मणेनेत्यनङ् न प्राप्नोति* । अस्तु तर्हि शब्दग्रहणमेव । ननु चोक्तं शिशीलुङ्नुम्विधिषु नपुंसकग्रहणं शब्दग्रहणं चेदन्यपदार्थे प्रतिषेध इति ?

**सिद्धं तु प्रकृतार्थविशेषणत्वात् ॥ ३ ॥**

सिद्धमेतत् । कथम् ? प्रकृतस्यार्थो विशेष्यते । किं च प्रकृतम् ? अङ्गम्+ । अङ्गस्य शिशीलुङ्नुमो भवन्ति नपुंसके वर्तमानस्य । कथं प्रियससक्थ्ना ब्राह्मणेन ?

---

प्र०–लुग्विधिर्बलवानिति । शिशीति । अङ्गस्येत्यनुवर्तनादङ्गस्य य औङ् नपुंसकात्परस्तस्य शीति विज्ञायमाने शब्दग्रहणं भवति । यदाप्यङ्गादिति विभक्तिविपरिणाम आश्रीयते नपुंसकेन चाङ्गं विशेष्यते नपुंसकान्तादङ्गात्परस्येति तदाऽपि शब्दग्रहणम् । यदा तु नपुंसकाद्यो विहित इत्याश्रीयते, प्रधानं वा नपुंसकमङ्गेन विशेष्यते नपुंसकादङ्गात्परस्येति तदाऽर्थग्रहणम् । शब्दद्वारकं चार्थेन पौर्वापर्यादिकमाश्रीयते । प्रियसक्थ्नेति । नपुंसकस्य झलच इत्यतो नपुंसकग्रहणमस्थ्यादिसूत्रेऽनपुंसकसंज्ञाशब्दनिवृत्त्यर्थमनुवर्तते । "यद्यप्यभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु" । इति संज्ञाशब्दानामप्रसङ्गस्तथाऽपि न्यायानुसरणे गौरवप्रसङ्गान्नपुंसकानुवृत्तिराश्रीयते । उत्तरार्थं च । ई च द्विवचन इत्यत्र नपुंसकस्येति पुंवदिति चानुवर्तते । तेन च्छन्दसि नपुंसकस्य पुंवद्भावान्मधोर्गृह्णातीत्यादौ नुमभावसिद्धिः । सिद्धंत्विति । विषयविभागा-

---

उ०–मिति । भाष्ये काकुः । न वक्तव्यमित्यर्थः । हेतुस्तु प्रसिद्ध एव । अन्तरङ्गानपीति न्यायरूप इति तदाशयः । एतेनैतद्भाष्यबलादन्तरङ्गानपीति न्यायः सामासिकलुग्विषय एवेति भ्राम्यन्तः परास्ताः । एङ्ह्रस्वादिति सूत्रस्थभाष्यविरोधात् । अङ्गस्य य औङिति । अङ्गस्य निमित्तमित्यर्थः । नपुंसकाद्यो विहित इति । नपुंसकादर्थादित्यर्थः । नपुंसकादङ्गादिति । नपुंसकत्वविशिष्टाङ्गार्थादित्यर्थः । कथं पुनरर्थेन पौर्वापर्यमत आह—शब्दद्वारकं चेति । आदिना विधानम् । 'स्त्रियां' इति सूत्रस्थेन 'नह्यर्थेन पौर्वापर्यमस्ती'ति भाष्येणेदं विरुध्यते । तस्मादर्थग्रहणमित्यस्य भाष्यस्य नपुंसकार्थादङ्गात्परस्येत्यर्थः । अर्थपरस्य नपुंसकशब्दस्यार्थप्रतिपादके लक्षण इति भावः । अनङ्विधौ नपुंसकग्रहणाभावात्कथमन्याप्युदाहरणमत आह—नपुंसकस्येति । तेन च्छन्दसीति । वाक्यभेदेन संबन्धादिति भावः । व्यत्ययो बहुलमिति लिङ्गव्यत्ययेनापीदं सिध्यति । क्रियाभिव्यक्तेति न्यायः पदकार्य एवेति नात्र तस्य विषयोऽत एव सर्वनामसंज्ञायाः प्रतिषेध आरब्ध इत्यन्ये । अस्थ्यादिषु शब्दग्रहणमित्यनेन

---

* ७. १. ७५. + ६. ४. १.

**अस्थ्यादिषु शब्दग्रहणम् ॥ ४ ॥**

अस्थ्यादिषु नपुंसकग्रहणं शब्दग्रहणं द्रष्टव्यम् ।

युक्तं पुनरिदं विचारयितुम् ? नन्वनेनासंदिग्धेनार्थग्रहणेन भवितव्यं न हि नपुंसकं नाम शब्दोऽस्ति । किं तर्ह्युच्यतेऽस्थ्यादिषु शब्दग्रहणमिति ? अत्रा-प्यर्थग्रहणमेव । अत्रैतावान्संदेहः क्व प्रकृतस्यार्थो विशेष्यते, क्व गृह्यमाणस्येति । शिशीलुङ्नुम्विधिषु प्रकृतस्यार्थो विशेष्यतेऽस्थ्यादिषु गृह्यमाणस्य ।

**अड्डतरादिभ्यः पञ्चभ्यः ॥ ७ । १ । २५ ॥**

**अद्भावे पूर्वसवर्णप्रतिषेधः ॥ १ ॥**

अद्भावे पूर्वसवर्णस्य* प्रतिषेधो वक्तव्यः । कतरत्तिष्ठति । कतरत्पश्य ।

**सिद्धमनुनासिकोपधत्वात् ॥ २ ॥**

सिद्धमेतत् । कथम् ? अनुनासिकोपधोऽच्शब्दः करिष्यते ।

---

प्र०—अयेणाभिमतार्थसिद्धिः । शिशीलुङ्नुम्विधिष्वर्थग्रहणमस्थ्यादिषुशब्दग्रहणमित्यर्थः । **अस्थ्यादिष्विति** । विशेषणविशेष्यभावे कामचारान्नपुंसकार्थविशिष्टैरस्थ्यादिभिरङ्गं विशेष्यत इति नपुंसकास्थ्याद्यन्तस्याङ्गस्यानपुंसकस्याप्यनङ् भवति, पदाङ्गाधिकारे तस्य च ग्रहणं तदुत्तरपदस्य चेति वचनात्केवलानामप्यस्थ्यादीनामनङ् भवति । इदानीं भाष्यकारो विचारमेव पूर्वोक्तमाक्षिपमाण आह—**युक्तं पुनरिति** । अर्थमनपेक्ष्य शब्द-ग्रहणपक्षासंभव इति भावः । **किं तर्ह्युच्यत इति** । नैवेदं वक्तव्यमित्यर्थः । कस्मान्न वक्तव्यमित्याह—**अत्रापीति** । अर्थधर्मत्वाल्लिङ्गस्य नपुंसकार्थाभिधायित्वादस्थ्यादयो नपुंसकशब्देनाभिधीयन्त इत्यर्थग्रहणमेव भवति । तस्माद्विशेषणविशेष्यभावविचार एव युक्तो न तु यथेष्टसिध्यनङ्गत्वादसंभवादेकतरपक्षग्रहणविचारः ।

**अड्डतरादिभ्यः** । **अद्भाव इति** । सुस्थानिकेऽदादेशेऽयं दोषः । अमादेशे त्वदि स्थानिवद्भावादमि पूर्व इति पूर्वरूपं सिद्धमिति । **सिद्धं त्विति** । अनुनासिकत्वेन निवृ-

---

उ०—गृह्यमाणास्थ्यादिविशेषणं नपुंसकग्रहणमित्युक्तमित्याह—विशेषणेति । नपुंसकार्थविशि-ष्टैरिति । गुणः कृतार्थसंस्कार इति न्यायादिति भावः । नैवेदमिति । किंशब्द आक्षेपे इत्यर्थः । नन्वित्यस्यैकतरपक्षग्रहणविचार इत्यनेनान्वयः । युक्त इति च शेषः । तत्र हेतुः—यथेष्टेत्यादिः । शब्दग्रहणपक्षस्य यथेष्टसिद्ध्यनङ्गत्वादर्थपक्ष एवेष्टसंग्रहादसंभवाच्चास्य पक्षस्य कोट्यन्तराभावेन वार्तिककृत्कृतो विचारो न युक्त इत्यर्थः । एवं च गृह्यमाणसंभवे तद्वि-शेषणमेव लिङ्गग्रहणं तदभावे प्रकृतस्याङ्गस्येति निर्णयः । अत एव 'वा शा'विति नासूत्रि । तथा हि—नपुंसकग्रहणं गृह्यमाणशत्रन्तस्यैव नपुंसकत्वं यथा स्यादित्यर्थम् । तेन बहवो ददतो येषु तानि बहुददतीत्यत्र न । बहूनि ददन्ति येषु ते बहुददन्त इत्यत्र च नुम्भवतीति बोध्यम् ।

अङ्ग० । अमादेशे त्विति । कतरत्पश्येति भाष्योदाहरणस्य हे कतरत्त्वं पश्येत्यर्थो

---

* ६. १. १०२.

**दुक्करणाद्वा ॥ ३ ॥**

अथवा दुग्डतरादीनामिति वक्ष्यामि÷ ।

**डित्करणाद्वा ॥ ४ ॥**

अथवा डिदच्शब्दः करिष्यते+ । स तर्हि डकारः कर्तव्यः ? न कर्तव्यः । क्रियते न्यास एव । द्विडकारको निर्देशः । अदड्डतरादिभ्य इति ।

**नेतराच्छन्दसि ॥ ७ । १ । २६ ॥**

**इतराच्छन्दसि प्रतिषेध एकतरात्सर्वत्र ॥ १ ॥**

इतराच्छन्दसि प्रतिषेध एकतरात्सर्वत्रेति वक्तव्यम् । एकतरं तिष्ठति । एकतरं पश्य ।

**नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन ॥ २ ॥**

---

प्र०—त्तिर्लक्ष्यते तेनोच्चारणार्थोऽकारो दकारमात्रं त्वादेशः । आदेः परस्येत्यम आदेर्भवति मकारस्य तु संयोगान्तस्य लोप इति लोपः । उच्चारणार्थानां त्वनुनासिकत्वप्रतिज्ञायां ब्रुवो वचिरिति वच्यादीनां नुमूप्रसङ्गः । एतस्मिन्पक्षे हे कतरदित्यत्र संबुद्धिलोपप्रसङ्गं मत्वाऽऽह—दुक्करणादिति । कार्यिभेदाच्च दुका लुङ् न बाध्यते । **द्विडकारक इति ।** दकारस्य ष्टुत्वं स्वरूपविनाशप्रसङ्गान्न कृतं नापि डकारस्य संयोगान्तलोपः ।

**नेतरात् । नपुंसकादेशेभ्य इति ।** 'अलिङ्गे युष्मदस्मदी' इत्यनाश्रित्यायं विचारः । स्वौजसमां लुक्शिशयः परत्वादमा बाध्यन्त इत्यर्थः ।

---

उ०—बोध्यः । निवृत्तिर्लक्ष्यत इति । इत्संज्ञायां फलाभावादिति भावः । संयोगान्तस्य लोप इति । उत्तरसूत्रे झल्ग्रहणेन क्वचिदझलोऽपि लोप इत्यभिप्रेत्येदम् । ननूच्चारणार्थस्यापि निवृत्तयेऽनुनासिकत्वमावश्यकमत आह—उच्चारणार्थानां त्विति । परे तु विधेयविषय उच्चारणार्थस्यापि यत्नं विना निवृत्तिर्दुर्लभेत्यनुनासिकत्वमावश्यकम् । वच्यादौ नुम् तु न धातूपदेश इदित्वाभावात् । येषां हि पदार्थोपस्थितिकाले धातुत्वं तेषामुपदेशो धातूपदेशोऽस्य तु विधानोत्तरमतिदेशेन धातुत्वं स्थानिवद्भावेन भाष्यातिदेशिकधातुत्वं गृहीत्वेकः सत्त्वाच्चेत्याहुः । ननु येन नाप्राप्तिन्यायेन दुका लुको बाधे कतरदित्यादिरूपासिद्धिरत आह—कार्यिभेदाच्चेति । ननु कार्यिभेदेऽपि नुम्नुटोरिव बाधकत्वं दुर्वारमित्यरुचेराह—भाष्येऽथवा डिदिति । ननु त्रिडकारक इति वक्तुं युक्तमत आह—दकारस्येति । स्वरूपेति । विवक्षितादेशस्वरूपेत्यर्थः । नापीति । पूर्वोक्तहेतोरेव । एतदर्थमेव विधेयस्याप्यदः पूर्वनिर्देशः ।

नेतरा० । अमा बाध्यन्त इति । विभक्त्यादेशशब्देनामेवोच्यते । स्थानिभेदमाश्रित्य बहुवचनम् । यूयमित्यादावमादौ कृतेऽन्त्यस्य शेषेलोपे तन्निमित्तके कृते जसः शीत्यादि तु न । संनिपातपरिभाषाविरोधात् । ईदृशेऽपि संनिपातपरिभाषाप्रवृत्तावत्र

---

÷ १. १. ४६; ७. १. २१. + ६. ४. १४३.

नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा भवन्ति विप्रतिषेधेन । नपुंसकादेशानामवकाशः÷ । त्रपु त्रपुणी त्रपूणि । युष्मदस्मदोर्विभक्त्यादेशानामवकाशः* । त्वं ब्राह्मणः, अहं ब्राह्मणः । युवां ब्राह्मणौ, आवां ब्राह्मणौ । यूयं ब्राह्मणाः, वयं ब्राह्मणाः । इहोभयं प्राप्नोति । त्वं ब्राह्मणकुलम्, अहं ब्राह्मणकुलम् । युवां ब्राह्मणकुले, आवां ब्राह्मणकुले । यूयं ब्राह्मणकुलानि, वयं ब्राह्मणकुलानि । युष्मदस्मदोर्विभक्त्यादेशा भवन्ति विप्रतिषेधेन । अथेदानीं युष्मदस्मदोर्विभक्त्यादेशेषु कृतेषु पुनःप्रसङ्गाच्छिशीलुङ्नुम्विषयः कस्मान्न भवन्ति ? सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ।

## युष्मदस्मद्भ्यां ङसोऽश् ॥ ७ । १ । २७ ॥

किमर्थः शकारः ? सर्वादेशार्थः । शित्सर्वस्येति+ सर्वादेशो यथा स्यात् । नैतदस्ति प्रयोजनम् । अक्रियमाणेऽपि शकारेऽलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्याकारे कृते त्रयाणामकाराणामतो गुणे पररूपत्वे×÷ सिद्धं रूपं स्यात् तव स्वम् । मम स्वम् । यद्येतल्लभ्येत कृतं स्यात् । तत्तु न लभ्यम् । किं कारणम् ? अत्र हि तस्मादित्युत्तरस्याऽऽदेः परस्य [ १.१.६७;५४ ] इत्यकारस्य प्रसज्येत । अत उत्तरं पठति—

प्र०–युष्मदस्मद्भ्यां ङसोऽश् । किमर्थं इति । अकारस्याकारवचने प्रयोजनाभावादादेः परस्येत्यस्यानुपस्थानादलोऽन्त्यस्येति सकारस्याकारः । अतो गुण इति पररूपेण सिद्धमिति भावः । इतरस्त्वस्त्यकारस्याकारवचने प्रयोजनमिति मत्वाऽऽह—शित्सर्वस्येति । अन्तरेणापि शकारं सर्वादेशो भविष्यतीति । आद्यानुसंहाराभावेऽन्त्या-

उ०–पूर्वपक्षसिद्धान्ताकरणपरं भाष्यमेव मानम् । ङेप्रथमयोरित्यत्रामनुवर्त्योऽम् अमेवेति व्याख्याने पुनःप्रसङ्गेन दयाद्यापादनपरभाष्यविरोधः । अकृत्स्नपरिभाषा तु न क्वापि भाष्ये लक्ष्यसिद्ध्य आदृता शिशीविषयेऽपि पूर्वपक्षासंगतेश्च । अत एव 'ज्यादादीयसः', 'ज्ञाजनोर्जा', 'रीङृतः' इत्येतेष्वेतत्परिभाषाज्ञापनोत्तरं किमेतस्य ज्ञापने प्रयोजनमिति प्रश्ने पिपते र्गुणप्रतिषेधो न वक्तव्यो भवतीत्येवोक्तं नतु किंचिदपि लक्ष्यं प्रयोजनत्वेनोक्तम् । भ्यसोऽभ्यमित्यत्र सिद्धान्तेऽभ्यमित्येव च्छेद इति स्पष्टं युष्मदस्मदोरनादेश इति सूत्रे भाष्ये† । भाष्ये शिशीलुम्विषय इत्येव पाठः क्वचिन्नुम्विषय इति पठ्यते सोऽपपाठः । अमः सर्वनामस्थानत्वाभावात्प्रकृतेरिगन्तत्वाभावाच्चेत्याहुः ।

युष्मदस्मद्भ्याम् । अस्त्यकारस्येति । शेषेलोप इत्यर्थः । संपद्यत इति ।

† विमर्शः—तथा च भाष्यम् "हलीत्यनुवर्तते, न चादेशो हलादिरस्ति" (७.२.८६) यदि हि भ्यमादेशः स्याद् हलादित्वमस्य प्रसज्येत, तस्माद् 'भ्यसोऽभ्यमि'त्येव सूत्रपदच्छेदः कार्यः । कैयटनागेशभट्टयोरप्ययमेव सिद्धान्तः (७.२.८६) सूत्रे ।

÷ ७. १. २१; १९; २०. * ७. १. २८. + १. १. ५५. × ÷ १. १. ५२; ६. १. ९७

**ङस आदेशे शित्करणानर्थक्यमकारस्याकारवचनानर्थक्यात् ॥१॥**

ङस आदेशे शित्करणमनर्थकम्। किं कारणम्? अकारस्याकारवचनानर्थक्यात्। अकारस्याकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेण शकारं सर्वादेशो भविष्यति।

**अर्थवत्त्वादेशे लोपार्थम् ॥ २ ॥**

अर्थवत्त्वकारस्याकारवचनम्। कोऽर्थः? आदेशे लोपार्थम्। यः स शेषे लोपः [ ७. २. ९० ] आदेशे स विज्ञायते। ननु चाऽऽदेशो या विभक्तिरित्येवमेतद्विज्ञायते। आदेश एषा विभक्तिः। कथम्?

सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥

**तस्माच्छित्करणम् ॥ ३ ॥**

तस्माच्छकारः कर्तव्यः। न कर्तव्यः। क्रियते न्यास एव। कथम्? प्रश्लिष्टनिर्देशोऽयम्। अ अ अ इति। सोऽनेकाल्शित्सर्वस्य [ १. १. ५५ ] इति सर्वस्य भविष्यति।

---

प्र०—नुसंहाराद्द्वयोरकारयोः पररूपमित्यर्थात्सर्वादेशः संपद्यते। **यः शेषे लोप इति।** अनादेशे आत्वयत्वविधानादादेशः शेषः। **ननु चेति।** शेषे लोप इत्यत्र विभक्तावित्यनुवर्तते, तद्विशेषणं च शेषग्रहणमित्यादेशो या विभक्तिरिति विज्ञायते। नहि तदादिविधिरस्ति। यत आदेशादाविति विज्ञायेत। तस्मात्सत्यप्यादेशादित्वे विभक्तेरनादेशत्वान्नैवायं शेषः। ततो नास्त्यकारस्याकारवचने प्रयोजनम्। **सर्वे सर्वपदादेशा इति।** आदिविकारद्वारेण विभक्तेरेवाऽऽदेशो विधीयत इति विभक्तिरेवाऽऽदेशः स्यादिति शित्त्वं सर्वादेशार्थं क्रियते। सर्वपदादेशा इत्यत्र पदशब्देन न सुप्तिङन्तमुच्यते, किं तर्हि, पद्यते प्रतीयते येनार्थः, अन्वयव्यतिरेकाभ्यां कल्पिताभ्यां यस्य कल्पितार्थवत्ता तदधीयते। तत्रानन्यार्थादकारविधानादेकदेशद्वारेण विभक्तिरेवाऽऽदेशः। **प्रश्लिष्टनिर्देश इति।** ततश्चाकारद्वयलक्षणः समुदायोऽनेकाल्त्वात्सर्वादेशः प्रवर्तते। तस्मिन्प्रवृत्तेऽतो गुण इति पररूपमिति सिद्धमिष्टम्।

---

उ०—सर्वादेशफलसंपत्त्या सर्वादेशो भविष्यतीत्युक्तमिति भावः। न चान्यस्याऽऽदेशेऽपि विभक्तेरनादेशरूपत्वाद्योऽचीति दुर्वारम्। पररूपे विभक्तेरेवाऽऽदेशरूपत्वात्। न च वार्णादाङ्गं बलीय इति पररूपात्पूर्वमेव यत्वम्। एकस्थानिकत्व एव वार्णाङ्गयोस्तत्प्रवृत्तेरित्याशयात्। अनादेश इति। न चाऽऽदेशवत्त्वात्कथमयं शेष इति वाच्यम्। अनादेशपदे लाघवेन तत्पुरुषस्यैवाङ्गीकारादिति भावः। नहि तदादीति। अल्ग्रहणे तद्विज्ञानादिति भावः। ननु विभक्तेरयमादेशो न पदस्येति कथमत्रायं न्यायोऽत आह—पदशब्देनेति। अस्य च न्यायस्य शित्करणमेव ज्ञापकमिति बोध्यम्।

ङे प्रथमयोरम् ॥ ७ । १ । २८ ॥

प्रथमयोरित्युच्यते कयोरिदं प्रथमयोर्ग्रहणं, किं विभक्त्योराहोस्वित्प्रत्यययोः? विभक्त्योरित्याह । कथं ज्ञायते ? अन्यत्रापि हि प्रथमयोर्ग्रहणे विभक्त्योर्ग्रहणं विज्ञायते न प्रत्यययोः । क्वान्यत्र ? प्रथमयोः पूर्वसवर्णः [ ६. १. १०२ ] इति । अस्ति कारणं येन तत्र विभक्त्योर्ग्रहणं विज्ञायते । किं कारणम् । अचीति* तत्र वर्तते न चाजादी प्रथमौ प्रत्ययौ स्तः । ननु चैवं विज्ञायतेऽजादी यौ प्रथमावजादीनां वा यौ प्रथमाविति । यत्तर्हि तस्माच्छसो

प्र–ङे प्रथमयोरम् । प्राधान्यलक्षणस्य प्रथमार्थस्येहासंभवात्संनिवेशापेक्षया यस्य तावद्ग्रहणं विज्ञायते तत्र विशेषज्ञानाय पृच्छति—कयोरिति । यदि स्त्रीलिङ्गेन निर्देशस्ततो विभक्त्योर्ग्रहणेन भाव्यम् । पुंलिङ्गेन निर्देशे तु प्रत्यययोः । तत्र यद्यन्तरङ्गं प्राथम्यमाश्रीयते ततः पुंलिङ्गेन निर्देशात्प्रत्ययग्रहणम् । वर्गस्यासमाप्तावेव प्रत्यययोः प्राथम्यसंप्रत्ययात् । अथ तु 'सपूर्वायाः प्रथमाया विभाषा' 'प्रथमायाश्च द्विवचने' इत्यत्र शास्त्रे प्रसिद्धिराश्रीयते ततः स्त्रीलिङ्गनिर्देशाद्विभक्तिग्रहणम् । प्रत्ययग्रहणपक्षे च युस्मदस्मदोः प्रातिपदिकत्वात्प्रातिपदिकप्रत्यययोः 'सु' 'औ' इत्यनयोर्ग्रहणेन भाव्यम् । ननु द्वयोः कथं प्राथम्यं यावताऽऽद्यापेक्षया परस्य द्वितीयत्वम् । नैष दोषः । राश्यपेक्षया द्वयात्मकस्य समुदायस्य प्राथम्याविरोधात् । प्रथमसाहचर्याद्वा द्वितीयस्यापि प्रथमव्यपदेशः । यथाऽर्धर्चाः पुंसि चेति गोमयादीनामर्धर्चव्यपदेशः । अन्यत्रापीति । प्रसिद्धिमाह—अस्ति कारणमिति । यस्मात्कारणात्तत्र विभक्तिग्रहणं तदिह नास्ति । न चाजादी इति । प्रथमयोर्विशेष्यत्वमचीत्यस्य विशेषणत्वमिति भावः । न चाजादित्वं सोः संभवतीति सामर्थ्यात्तत्र विभक्तिग्रहणं विज्ञायते । अजादी यौ प्रथमाविति । अजादी विशेष्यौ, प्राथम्यं विशेषणं, तेन चाजादित्वाभावात्सुः परिह्रत औजसोः प्राथम्यं न विहन्ति । यथा ब्राह्मणाब्राह्मणपङ्क्तौ ब्राह्मणौ प्रथमावानयेत्युक्तेऽब्राह्मणः प्रथमोऽपि चोदनायामनन्तर्भावाद्ब्राह्मणयोर्न प्रथम-

उ०–ङे प्रथम० । ननु प्रथमशब्दस्यानेकार्थत्वेनाऽऽद्यर्थवृत्तेरेव ग्रहणमिति निश्चयाभावेन कुतोऽयं संदेहोऽत आह—प्राधान्येति । लिङ्गविषयसंदेहस्यापि निदानमाह—तत्र यदीति । अन्तरङ्गत्वमेव दर्शयति—वर्गस्येति । ननु प्रत्यययोर्ग्रहणे तिङाद्ययोः प्रत्यययोस्तिप्तसोर्ग्रहणं कुतो नेत्यत आह—प्रत्ययग्रहणेति । स्त्रीलिङ्गनिर्देशे तु प्रथमादिशब्दानां सुपां त्रिकेष्वेव रूढत्वादन्यग्रहणसंभव एव नेति भावः । समुदायस्येति । उद्भूतावयवभेदस्येत्यर्थः । ङेप्रथमयोरित्येकपदमेव । साहचर्याद्वेति । ङे इति लुप्तषष्ठीकं पृथक्पदमेव । एवं च द्विवचननिर्देशसामर्थ्याद्द्वितीयोऽपि प्रथमशब्देन लक्ष्यत इति भावः । अजादी विशेष्याविति । पूर्वं तदादिविधिः । पश्चाद्विशेषणत्वम् । शब्दरूपं विशेष्यमादाय भाष्य-

* ६. १ ७७.

नः पुंसि [ ६. १. १०३ ] इत्यनुक्रान्तं पूर्वसवर्णं प्रतिनिर्दिशति तज्ज्ञापयत्याचार्यो विभक्त्योर्ग्रहणमिति । इहाप्याचार्यप्रवृत्तिर्ज्ञापयति, विभक्त्योर्ग्रहणमिति यदयं शसो न [ ७. १. २९ ] इति प्रतिषेधं शास्ति । नैष प्रतिषेधः । नत्वमेतद्विधीयते । सिद्धमत्र नत्वं 'तस्माच्छसो नः पुंसि [ ६. १. १०१ ] इति । यत्र तेन न सिध्यति तदर्थम् । क्व च तेन न सिध्यति ? स्त्रियां नपुंसके च । युष्मान्ब्राह्मणीः पश्य, अस्मान्ब्राह्मणीः पश्य । युष्मान्ब्राह्मणकुलानि पश्य, अस्मान्ब्राह्मणकुलानि पश्येति । यत्तर्हि युष्मदस्मदोरनादेशे द्वितीयायां च [ ७. २. ८६; ८७ ] इत्याह तज्ज्ञापयत्याचार्यो विभक्त्योर्ग्रहणमिति ।

## भ्यसोभ्यम् ॥ ७ । १ । ३० ॥

किमयं भ्यम्शब्द आहोस्विदभ्यम्शब्दः ? कुतः संदेहः ? समानो निर्देशः ।

---

प्र०—व्यपदेशविघातहेतुः । **अजादीनां वेति** । अचीत्यनुवृत्तं निर्धारणसप्तम्यन्तं विज्ञायते । **यदयं शसो नेति** । ङे प्रथमयोरित्यम्भावस्य प्राप्तस्य शसो नेति निषेधः क्रियते । ततो योऽचीति यत्वे प्राप्ते द्वितीयां चेत्यात्वे कृते, प्रथमयोः पूर्वसवर्ण इति पूर्वसवर्णे, तस्माच्छसो नः पुंसीति नत्वे, युष्मानस्मानिति रूपं सिध्यति । इतरः प्रतिषेध आश्रीयमाणे पुंस्येव नत्वं स्यान्नस्त्रीनपुंसकयोरिति मत्वाऽऽह—**नैष प्रतिषेध इति** । आदेः परस्येत्यादेर्नकारे कृते सकारस्य संयोगान्तत्वाल्लोपः । एतच्चाभ्युपगम्य लिङ्गवत्त्वमुक्तम् । **यत्तर्हीति** । यदि प्रत्यययोरिदं ग्रहणं स्यात्ततो द्वितीयाया अनादेशत्वात्तस्यामात्वं सिद्धमेवेति द्वितीयायां चेत्यात्वविधानमनर्थकं स्यात् । ननु च योऽचीति यत्वे प्राप्ते तद्बाधनार्थमात्वविधानं स्यादिति कथं ज्ञापकम् । उच्यते । यद्येतावत्प्रयोजनं स्याद्योऽव्ययनमौटोरिति ब्रूयाद्यत्वे प्रतिषिद्ध आत्वस्य भावाद्युष्मानस्मानित्यत्रापि शसो नकारे कृते शेषे लोप इति लोपे सुपि चेति दीर्घत्वं भविष्यति ।

**भ्यसो भ्यम् । किमयमिति** । संहितायां निर्देशस्य साम्याद्विचारः । चत्वारोऽत्र पक्षाः संभवन्ति । भ्यमादेशः शेषे लोपोऽन्त्यलोपः । भ्यमादेशः शेषे लोपष्टिलोपः । अभ्यमादेशः शेषे लोपोऽन्त्यलोपः । अभ्यमादेश शेषे लोपष्टिलोप इति । तत्र यदा भ्यमादेशस्तदा शेषे लोपोऽन्त्यलोप एवाऽऽश्रयितव्यः । टिलोपे रूपासिद्धि-

---

उ०—प्रमाण्यात्तदादिर्विधिरिति भावः । **निर्धारणेति** । जातावेकवचनम् । **आदेर्नकार इति** । शसो नेत्युच्चारणार्थाकारेणाविभक्तिको निर्देश इत्यर्थः । **एतच्चेति** । तदनभ्युपगमे तु पुंस्यप्यसिद्धिरिति भावः । लिङ्गत्वमिति पाठेऽर्शआद्यजन्तात्त्वः । **आत्वं सिद्धमिति** । युष्मदस्मदोरित्यनेन । ननु युष्मानित्यत्राऽऽदेशविभक्तित्वात्कथमात्वमत आह—युष्मानित्यादि । **लोप इति** । अन्त्यलोप इत्यर्थः । स एव च सिद्धान्त इति भावः ।

**भ्यसोऽभ्यम्** । **शेषे लोपष्टिलोप इति** । शेष इति विषयसप्तम्या स्थानी निर्दिष्टः, सपर्यन्तात्त्व शेष इति भावः । **टिलोपे रूपासिद्धीति** । एवं च टिलोपान्त्यलोपयो-

किंचातः ? यदि तावद्भ्यम्शब्दः, शेषे लोपश्चान्त्यस्यैत्वं प्राप्नोति÷ । अथाभ्यम्शब्दः, शेषे लोपश्च टिलोपः, उदात्तनिवृत्तिस्वरः प्राप्नोति× । यथेच्छसि तथाऽस्तु । अस्तु तावद्भ्यम्शब्दः शेषे लोपश्चान्त्यस्य । ननु चोक्तमेत्वं प्राप्नोतीति ? नैष दोषः । अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति न भविष्यति । अथवा पुनरस्त्वभ्यम्शब्दः, शेषे लोपश्च टिलोपः । ननु चोक्तमुदात्तनिवृत्तिस्वरः प्राप्नोतीति ? नैष दोषः । उक्तमेतदादौ सिद्धमिति+ ।

## साम आकम् ॥ ७ । १ । ३३ ॥

किमर्थमामः ससकारस्य ग्रहणं क्रियते ? न आम आकमित्येवोच्येत ? के-

---

प्र०—प्रसङ्गात् । अभ्यमादेशे शेषेलोपेऽन्त्यलोपे च द्वयोरकारयोः पररूपमेकादेश उदात्तेनोदात्त इत्युदात्तत्वं भवति । युष्मदस्मदोः प्रातिपदिकस्वरेण प्रत्ययस्वरेण वाऽन्तोदात्तत्वात् । टिलोपपक्षे चाकारोच्चारणमर्थवत् । अन्त्यलोपेऽप्येत्वनिवृत्त्यर्थमित्यकारोच्चारणसामर्थ्यात्सवर्णदीर्घत्वेन भाव्यमिति न चोदनीयम् । तदेवं द्वितीयः पक्षोऽत्यन्तदुष्टस्तृतीयस्तु निर्दोष इति तत्परिहारेण पक्षद्वयाश्रयो भाष्ये विचारः । उदात्तनिवृत्तिस्वर इति । कर्षात्वतो घञोऽन्तः उदात्त इत्यतोऽन्तग्रहणमनुदात्तस्य च यत्रोदात्तलोप इत्यत्रानुवर्तते ततश्चान्तोदात्तं पदं प्राप्नोति मध्योदात्तं चेष्यते । अङ्गवृत्त इति । एत्ववत् सुपि चेति दीर्घत्वमपि न भवति । आदौ सिद्धमिति । अन्तग्रहणं नानुवर्तते । उच्चारणक्रमप्रत्यासत्त्या चाऽऽदेरेवोदात्तत्वम् ।

साम आकम् । किमर्थमिति । युष्मद्-आम् इति स्थित आदेशेनात्र भाव्यमिति यत्वं न प्रवर्तते । आदेशश्च शेष इत्यकृत आदेशे शेषत्वाभावाल्लोपाप्रसङ्गः । त्यदाद्यत्वमपि नास्ति द्विपर्यन्तानां विधानात् । ततश्चानकारान्तत्वादादेशप्रवृत्तिकाले सुडनास्तीति नार्थः ससकारनिर्देशेन । कृतेऽप्याकमादेशे शेषे लोपे टिलोपे च तथैव सुडनास्तीति भावः । इतरः कृत आदेशे शेषे लोपेऽन्त्यलोपे च सुडा-

---

उ०—लक्ष्यानुरोधेन व्यवस्थेति भावः । टिलोपपक्षे चेति । अभ्यमादेशपक्षे इदम् । अत्यन्तदुष्ट इति । रूपासिद्धेरिति भावः । नन्वमभ्यम आद्याकारस्योदात्तनिवृत्तिस्वरेऽपि न कश्चिद्दोषोऽतऽआह—कर्षात्वत इति । उच्चारणक्रमेति । इदं चिन्त्यम् । णिजां त्रयाणामित्यत्र त्रयाणां ग्रहणादाद्युदात्तश्चेत्यादावादिग्रहणाच्चास्यात्र शास्त्रेऽनाश्रयणात् । तस्मान्निमित्तत्वानादरेण यत्रानुदात्ते परत उदात्तलोपस्तस्योदात्त इत्यर्थादादेरेवेति बोध्यम् ।

साम आकम् । आदेशेनात्र भाव्यमिति । अकृतव्यूहपरिभाषयेति भावः । तदभावे नित्यत्वादाकमिति बोध्यम् । शेषे लोपे टिलोपे चेति पाठे चो वाक्यलंकारे । इतर इति ।

---

÷ ७. २. ९०; ७. १. १०३; × ६. १. १६१; १५९. + ६. १. १६१

नेदानीं ससकारस्य भविष्यति ? आमः सुडयं भक्त* आम्ग्रहणेन ग्राहिष्यते। अत उत्तरं पठति—

**साम्ग्रहणं यथागृहीतस्याऽऽदेशवचनात् ॥ १ ॥**

साम्ग्रहणं क्रियते। निर्दिश्यमानस्याऽऽदेशा भवन्तीत्येवं ससकारस्य न प्राप्नोति। इष्यते च स्यादिति, तच्चान्तरेण यत्नं न सिध्यतीति साम आकम्। एवमर्थमिदमुच्यते।

**न वा द्विपर्यन्तानामकारवचनादामि सकाराभावः ॥ २ ॥**

न वैतत्प्रयोजनमस्ति। किं कारणम् ? द्विपर्यन्तानामकारवचनात्। द्विपर्यन्तानां हि त्यदादीनामत्वमुच्यते÷ तेनाऽऽमि सकारो न भविष्यति।

**सुट्प्रतिषेधस्त्वादेशे लोपविज्ञानात् ॥ ३ ॥**

सुट्प्रतिषेधस्तु वक्तव्यः। किं कारणम् ? आदेशे लोपविज्ञानात्। यः स शेषे लोपः [ ७. २. ९० ] आदेशे स विज्ञायते।

**न वा टिलोपवचनादादेशे टाप्प्रतिषेधार्थम् ॥ ४ ॥**

प्र०–प्नोतीति भाविनः सुटो निवृत्त्यर्थं ससुट्कोपादानं कर्तव्यमिति मत्वाऽऽह—**केनेदानी**मिति। स एव परमतमाशङ्कते—**आमः सुडयमिति**। सुडप्ययमाम्भक्त इति यदि त्वं मन्यसे तत इदमुच्यते—**साम्ग्रहणमिति**। **निर्दिश्यमानस्येति**। यदि ससकारको न निर्दिश्यते तदाऽऽदेशविधानकालेऽसंनिहितः पश्चादन्त्यलोपे कृते प्राप्नुवन्सुट् केन निवर्त्येत ? इष्यते च तन्निवृत्तिरित्येवमर्थं ससकारग्रहणम्। अथवा त्यदाद्यत्वे कृते सुटि च निर्दिश्यमानस्याऽऽदेशा इति सुट्सहितस्य न प्राप्नोति। यस्तु निर्दिश्यते तस्य वचनसामर्थ्यान्निर्दिष्टग्रहणपरिभाषानुपस्थानाद्व्यवहितस्याऽऽकमादेशः प्राप्नोति ससुट्कनिर्देशात्ससुट्कस्य भवति। अत्र पक्षे 'आमोऽयं भक्त आम्ग्रहणेन ग्राहिष्यत' इति चोदकस्यैव ग्रन्थः। इतरस्तु पूर्वां व्याख्यामबुद्ध्वोत्तरां च दोषवतीमवगम्याऽऽह—**नवेति**। **टिलोप इति**। वक्ष्यमाणमपर्यन्तस्थान्यपेक्षया शेषे विज्ञा-

उ०–ससुट्कोपादानं विना भाविसुण्निवृत्तये नान्यो हेतुर्विद्यत इति भाष्यार्थः। शेषे लोपेऽन्त्यलोपे चेति पाठः। अत्रापि चः पूर्ववत्। यद्युत्तरवादिनोऽयमाशयस्तर्ह्यामोऽयमिति चोदकवचोऽनुपपन्नमत आह–स एवेति। अत उत्तरं पठतीत्येतद्व्याचष्टे–तत इदमिति। यदि ससकारक इति। निर्दिश्यमानस्य भाविनो विद्यमानस्य वाऽऽदेशा निवर्तका भवन्तीति सकाराभावे ससकारस्य निवृत्तिर्न प्राप्नोतीति भाष्यार्थ इति भावः। अत्र व्याख्यानेन वैस्थार्यमिम भाष्यस्वारस्यं मत्वा पक्षान्तरमाह–अथवेति। द्विपर्यन्तानामित्यनभ्युपगम्येदम्। ननु निर्दिश्यमानस्य तर्हि व्यवहितत्वान्न स्यादत आह—यस्त्विति। वचनसामर्थ्यादिति। चिन्त्यमिदम्। अतित्वाकमिति गौणे चरितार्थत्वात्। तस्मादत्र न स्यादित्येव भाष्याशयः। इतरस्त्विति। चोदक इत्यर्थः। उत्तरां चेति। त्यदाद्यत्वे कृत इति यस्तदनुपपन्नमित्यनेन प्रति-

* ७. १. ५२–७. २. १०२.

न वा सुट् प्रतिषेधो वक्तव्यः । किं कारणम् ? टिलोपवचनात् । आदेशे यः स शेषे लोपष्टिलोपः स वक्तव्यः । किं प्रयोजनम् ? टाप्प्रतिषेधार्थम् । टाब्मा भूदिति* । स तर्हि टिलोपो वक्तव्यः ?

**न वा लिङ्गाभावाट्टिलोपवचनानर्थक्यम् ॥ ५ ॥**

न वा वक्तव्यम् । किं कारणम् ? लिङ्गाभावात् । अलिङ्गे युष्मदस्मदी । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? न ह्यस्ति विशेषो युष्मदस्मदोः स्त्रियां पुंसि नपुंसके वा । अस्ति कारणं येनैतदेवं भवति । किं कारणम् ? योऽसौ विशेषवाची शब्दस्तदसांनिध्यात् । अत्र हि भवांस्तमुच्चार-

प्र०—यसाने टिरेव शेष इति तस्यैव लोपो विज्ञायते । शेष इति स्थानी विषयसप्तम्या निर्दिष्टः । लोपस्य चास्मिन्पक्ष उत्सर्गत्वादनादेश आत्वयत्वविधानादादेश एव विभक्ताववस्थितः । टाप्प्रतिषेधार्थमिति । टापोऽनुत्पत्त्यर्थमित्यर्थः । युष्मदस्मदोर्द्रव्यवाचित्वाद्द्रव्यस्य च लिङ्गसंख्यासंबन्धादन्त्यलोपे सत्यकारान्तत्वाट्टाप्प्राप्नोति । संनिपातपरिभाषायाश्च दोषः पठितस्त्यदाद्यकारष्टाब्विधेरिति टापि सा नाऽऽश्रीयते । अलिङ्गे इति । अभिधेयस्यालिङ्गत्वादलिङ्गे । शब्दशक्तिस्वाभाव्याल्लिङ्गरहित एव ताभ्यामर्थोऽभिधीयत इति तन्निवृत्तये टिलोपो नाऽऽश्रयितव्यः । योऽसौ विशेषवाचीति । ननु द्योतकाष्टाबादयः । तदुक्तं 'सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात्स्वार्थे टाबादय' इति । नैष दोषः । इदमप्युक्तम् । अथवा पुनरस्तु 'स्त्रियामभिधेयायामिति' । अथवा वचिर्द्योतने वर्तते वाचकेन खल्वप्युत्पत्तव्यम् । 'वाचकश्चेत्प्रयोक्तव्यो वाचकश्चेत्प्रयु-

उ०—पाद्यत इत्यर्थः । भाष्ये—सुट्प्रतिषेधस्त्विति । आदेशात्पूर्वं सुड् दुर्लभः । आदेशोत्तरं जातस्य तु निवृत्तिः कर्तुमशक्येति सुट्प्रतिषेध एव वक्तव्य इत्यर्थः । आदेशे स विज्ञायत इत्यनेन तत्रान्त्यलोपविधानमुक्तम् । तेन च सुट् प्राप्त्युपपादनं बोध्यम् । ननु षष्ठीनिर्देशाभावात्कथं तस्य स्थानित्वमत आह—शेष इतीति । यः स इति । यः प्रसिद्ध आदेशे शेषे लोपः स टिलोपो वक्तव्य इति भाष्याक्षरार्थः । नन्वत्र पक्षे शेषग्रहणस्य विभक्तिविशेषणत्वाभावादादेश इति कथं लभ्यतेऽत आह—लोपस्य चेति । अवस्थित इति । अस्य लोप इति शेषः । अवस्थितिरिति पाठान्तरम् । प्रतिषेधशब्देनानुत्पत्तिर्विवक्षितेत्याह—टाप इति । टापि सेति । अन्यथा या सेत्यादौ न टाप् स्यात् । तेन संनिपातपरिभाषया टाब्न स्यादिति न शङ्क्यमिति भावः । ननु लिङ्गस्यार्थधर्मत्वाद्युष्मदस्मद्शब्दरूपे अलिङ्गे इत्युनुपपन्नमत आह—अभिधेयस्येति । नन्वनयोर्द्रव्यवाचित्वेन लिङ्गयोग आवश्यकोऽत आह—शब्दशक्तीति । द्रव्यत्वं तद्वाच्यस्यार्थस्य संख्याकारकत्वाभ्यां योगादेवेति भावः । भाष्ये विशेषवाचीत्यनेन टाबादिर्विवक्षितः । तत्र तेषां द्योतकत्वाद्वाचीत्यनुपपन्नमिति शङ्कते—नन्विति । वाचकेन खल्वपीत्याद्यतिशायने तमबित्यत्रोक्तम् । तेषां च द्योतकत्वमेवाभ्युपगतमिति

* ४. १. ४.

यतु गंस्यते स विशेषः । ननु च नैतेनैवं भवितव्यम् । न हि शब्दनिमित्तकेन नामार्थेन भवितव्यम् । किं तर्हि ? अर्थनिमित्तकेन नाम शब्देन भवितव्यम् । तदेतदेवं दृश्यतामर्थरूपमेवैतदेवंजातीयकं येनात्र विशेषो न गम्यत इति । अवश्यं चैतदेवं विज्ञेयम् । यो हि मन्यते योऽसौ विशेषवाची शब्दस्तद‌सांनिध्यादत्र विशेषो न गम्यत इतीहापि तस्य विशेषो न गम्येत दृषत् समिदिति ।

---

प्र०–ज्यतामित्यत्र वचिद्योतने प्रयुक्तः । नहि शब्दनिमित्तकेनेति । ननु शब्दनिमित्त एवार्थः । तथा चैकरूपोऽप्यर्थो भिन्नशब्दोच्चारणान्नानारूपः प्रतिभाति । यथा पचति पाकं करोति । पाकक्रियाया निर्वृत्तिं करोतीति । तथा च वलाहको विद्योतते, वलाहके विद्योतते, बलाहको विद्योतत इति । कंसादीनां च साधनत्वं शब्दोपहितरूपाणां बुद्धिविषयाणां हेतुमति चेत्यत्र प्रतिपादितम् । एवं तर्हि यः शब्दो लोकेऽत्यन्तमदृष्टप्रयोगस्तन्निमित्तोऽर्थो न भवतीत्युच्यते । शब्दं प्रयुयुक्षमाणेन लोकस्यानुसरणात् । स्वसामर्थ्येन हि शब्दोऽर्थं प्रत्याययति । तच्च सामर्थ्यं लौकिकप्रयोगादवधार्यम् । अर्थरूपमिति । सत्यपि वस्तुतो लिङ्गवत्त्वे युष्मदस्मद्भ्यां न तत्प्रत्याययितुं शक्यत इत्यर्थः । युष्मदस्मदभिधेयं चार्थरूपशब्देनोच्यते । न वस्तुरूपम् । तस्यैव वस्तुनो ब्राह्मणादिशब्दैर्लिङ्गयुक्तस्य प्रतिपादनात् । न चायं नियमः । सत्त्वभूतोऽर्थोऽवश्यं लिङ्गयुक्तः प्रतीयत इति । पञ्च सप्तेति लिङ्गानवगमात् तथा च षट्संज्ञकेभ्यः स्त्री प्रत्ययप्रतिषेधः प्रत्याख्यायते । केचिल्लिङ्गविशेषनिषेधं मन्यमाना लिङ्गसर्वनामनपुं-

---

उ०–भावः । ननु शब्दनिमित्त एवेति । शब्दानुसारेणैवार्थागवतिर्न वस्त्वनुसारेण तदुच्यते–'यच्छब्द आह तदस्माकं प्रमाणमि'ति । पचतीत्यत्र क्रिया प्रधानं द्वितीये पच्यर्थस्याप्राधान्यं कर्मत्वेन प्रतीतिश्च । तृतीये तु क्रियाया अप्यप्राधान्यम् । तथा बलाहक इत्यत्र स्थित्वेति, द्वितीये निसृत्येति, तृतीये विद्युद्बलाहकयोरभेदाध्यवसायः । वस्तु त्वेकमेव सर्वत्रापि । शब्दजबुद्धौ प्रतिभासमान एव शब्दार्थ इत्यत्र दृष्टान्तान्तरमाह—कंसादीनां चेति । बुद्धिविषयाणामिति । कथकश्रोत्रोरिति भावः । कंसादीनामिदानीमविद्यमानत्वादिति तात्पर्यम् । यः शब्द इति । लोकव्यवहाराधस्य शब्दस्य यत्रार्थे सामर्थ्यमवगतं ततोऽन्यो योऽर्थं स तन्निमित्तो न भवति । व्युत्पत्तिसिद्धार्थप्रत्यायनाय शब्दप्रयोगादित्यर्थनिमित्तकेन शब्देन भवितव्यमिति भाष्यार्थ इति भावः । अर्थरूपशब्देनेति । निरनुस्वारः पाठः । युष्मदस्मच्छ्रवणानन्तरं यो बौद्धार्थः प्रतीयते सोऽत्रार्थरूपशब्देनोच्यत इत्यर्थः । वस्तुरूपस्य लिङ्गवत्त्वं दर्शयति—तस्यैवेति । ततश्च केवलयुष्मदस्मद्भ्यां लिङ्गविशेषानवगमादलिङ्गत्वमुक्तमिति भावः । पञ्च सप्तेत्याद्यर्थस्य सत्त्वरूपत्वं तु कारकत्वेनान्वयादेवेति बोध्यम् । प्रत्याख्यायत इत्यस्य कैश्चिद्वृत्तिकारादिभिरिति शेषः । नन्वत्र वार्तिककृताऽनयोरलिङ्गत्वमुक्तं पूर्वत्र तु लिङ्गवत्त्वमाश्रित्य विप्रतिषेध उक्त इति विरोधोऽत आह—केचिदिति ।

तस्मात्सुट्प्रतिषेधः ॥ ६ ॥

तस्मात्सुट्प्रतिषेधो वक्तव्यः, ससकारग्रहणं वा कर्तव्यम्। अथ क्रियमाणेऽपि ससकारग्रहणे कस्मादेवात्र सुण्न भवति ? ससकारग्रहणसामर्थ्याद्भाविनः सुट आदेशो विज्ञायते।

---

प्र०–सकयोगं युष्मदस्मदोरिच्छन्ति। तथा च शिशीलुङ्नुमां युष्मदस्मद्विभक्त्यादेशानां च प्रतिषेध उक्तः। अन्ये तु दर्शनभेदेन शिशीलुङ्नुमां विप्रतिषेधः पुंसि नत्वं च लिङ्गवत्त्वाभ्युपगमेन प्रदर्शितम्। सत्त्वभूतस्यार्थस्यावश्यं लिङ्गसंख्यायोगः। तथा च षट्संज्ञेभ्यः स्त्रीप्रत्ययनिषेधः कृतः। इह त्वलिङ्गत्वेन टाप्परिहृत इति विरोधं परिहरन्ति। **तस्मादिति**। टावभावे टिलोपानाश्रयणादन्त्यलोपे सति सुटः प्राप्तस्य प्रतिषेधो विधेयः। लाघवात्ससकारग्रहणं वा कर्तव्यम्। अथेति। आदेशप्रवृत्तिकाले संनिहित आदेशेन निवर्त्यो नान्यः। **ससकारग्रहणसामर्थ्यादिति**। नहि सत आदेशेन निवृत्तिः क्रियते। किं तर्ह्यत्यन्ताभावस्तस्मिन्विषये तस्यानेनोपायेनाऽऽख्यायते शास्त्रेण तु प्रसङ्गवतो निवृत्तिराख्यायत इति भाविनः सुटो निवृत्तिः ससुट्कनिर्देशेन प्रतिपाद्यते।

---

उ०–अत्र लिङ्गवत्त्वपक्ष एव युक्तः। सूत्रवार्तिकोभयसंमतत्वात्। टिलोपस्त्वनर्थक एव। संनिपातपरिभाषया टापोऽप्राप्तेः। अत एव वार्तिककृता 'त्यदाद्यत्वविषय एव टाब्विधौ' तस्य दोष उक्तो नतु सामान्यतष्टाब्विधौ। अत्र 'न वा लिङ्गाभावात्' इत्युक्तिस्त्वेकदेशिन इति तुच्छत्वात्सूत्रवार्तिकविरुद्धत्वाच्च न तत्खण्डने भगवत आदर इति बोध्यम्। टावभाव इति। अलिङ्गत्वात्संनिपातपरिभाषया वा तदभावे सिद्धे इत्यर्थः। ससकारग्रहणं वेत्येव न्याय्य इत्याह—लाघवादिति। अत्र सूत्रे सकारग्रहणं भाष्यकैयटयोः सुड्ग्रहणं चाऽऽगमोपलक्षणम्। तेन प्रत्ययोत्तरपदयोश्चेति सूत्रोदाहृतेऽतित्वाकमित्यादौ भाविनुटोऽपि व्यावृत्तिः। नहि सत इति। शब्दानित्यत्वप्रसङ्गादिति भावः। किं तर्हीति। यथाऽऽर्धधातुकविषयेऽस्तेरप्रयोगो भूशब्दस्य च प्रयोगोऽस्तेर्भूरित्यनेनोपायेन प्रतिपाद्यत इति भावः। कथं तर्हि स्थानिनं निवर्त्याऽऽदेशः क्रियत इति शास्त्रव्यवहारोऽत आह—शास्त्रेणेति। प्रसङ्गवतो बुद्धिस्थितस्यास्त्युपदेशात्सर्वत्रास्तिबुद्धौ प्रसक्तायामार्धधातुके भूबुद्धिप्रतिपादनेन तद्बुद्धिनिवृत्तिः क्रियते सैव च विषय आरोप्यत इति भावः। भाविनः सुट इति। भाविसुड्बुद्धिरित्यर्थः। तन्निवृत्तिश्चाऽऽमोऽभावात्। अत्र सामः स्थानित्वोक्त्याऽऽकमि स्थानिवत्त्वेन साम्त्वमेव न त्वाम्त्वम्। अत एवातित्वाकमित्यादौ प्रत्ययोत्तरपदयोरिति सूत्रभाष्योदाहृते आकम्सुडभावौ सिद्धौ। आम्येव साम्त्वस्याऽऽहार्यारोपेणाऽऽदेशः। आदेशस्य आम्त्वाभावाच्चात्र न सुट्। नच यत्र भावी सुट् तत्रैवायम्। सामो भावित्वस्य सर्वथा दुरुपपादत्वादिति भाष्यविरुद्धकल्पना व्यर्थेति दिक्।

## आत औ णलः ॥ ७ । १ । ३४ ॥

इह पपौ तस्थाविति त्रीणि कार्याणि युगपत्प्राप्नुवन्ति द्विर्वचनमेकादेश औत्वमिति+। तद्यदि सर्वत औत्वं लभ्येत कृतं स्यात्। अथापि द्विर्वचनं लभ्येतैवमपि कृतं स्यात्। तत्तु न लभ्यम्। किं कारणम्? अत्र हि परत्वादेकादेशो द्विर्वचनं बाधते। परत्वादौत्वम्। नित्य एकादेश औत्वं बाधेत। कं पुनर्भवानौत्वस्यावकाशं मत्वाऽऽह नित्य एकादेश इति। अनवकाशमौत्वमेकादेशं बाधिष्यते। औत्वे कृते द्विर्वचनमेकादेश इति यद्यपि परत्वादेकादेशः स्थानिवद्भावाद्द्विर्वचनं भविष्यति*।

प्र०—आत औ णलः। त्रीणि कार्याणीति। लित्स्वरस्तु प्रयोजनाभावान्नोपन्यस्तः। सर्वथाऽन्तोदात्तत्वस्य सिद्धत्वात्। औत्वं लभ्येत कृतं स्यादिति। एकादेशे कृत औत्वाप्राप्तिदोपस्तावत्परिहृत इत्यभिसंधाय द्विर्वचनासिद्धावपि कृतमित्युक्तम्। द्विर्वचनं लभ्येतेति। एकादेशे कृते व्यपवर्गाभावाद्या द्विर्वचनाप्राप्तिः सा परिहृता भवतीत्येतावता द्विर्वचनसिद्ध्या कृतमित्युक्तम्। परत्वादेकादेश इति। वर्णाश्रयत्वादन्तरङ्गत्वादपीति द्रष्टव्यम्। नित्य एकादेश इति। यद्यप्यकृत औत्वे सवर्णदीर्घत्वं प्राप्नोति कृते तु वृद्धिस्तथाऽपि व्यक्तिभेदमनाश्रित्यैकादेशसामान्याश्रयं नित्यत्वमुच्यते। औत्वं तु कृत एकादेशे नैव प्राप्नोतीत्यनित्यम्। अनवकाशमौत्वमिति। सावकाशस्य सवर्णदीर्घस्य बाधकमित्यर्थः। यद्यपीति। वार्णादाङ्गं बलीय इति पूर्वं द्विर्वचनं भवति। अथाप्यङ्गाधिकारविहितमाङ्गमुच्यते तथाऽपि न दोष इति भावः। स्थानिवद्भावादिति। द्विर्वचननिमित्तेऽचि परतोऽजादेशः स्थानिवद्भवतीति सूत्रार्थमाश्रित्यैकादेशे कृतेऽच्परत्वाभावात्स्थानिवद्भावाभाव आशङ्कितः। अचि यो विहितोऽजादेशः स स्थानिवदिति सूत्रार्थाश्रयणेन तु स्थानिवद्भाव उक्तः। नहि स्थानिवद्भावस्य परतोऽजुनिमित्तभूत आश्रीयते। किं तर्ह्यादेशस्य। यदि तर्हि स्थानिवद्भावाद्द्विर्वचनं ततो नित्यं तदिति पूर्वमेव तेन प्रवर्त्यम्। नैतदस्ति।

उ०—आत औ०। सर्वथेति। सत्यसति लित्स्वर एकादेश उदात्तेनोदात्त इत्यनेनान्तोदात्तत्वासिद्धेरिति भावः। एतेन त्रीणीति न्यूनमित्यपास्तम्। नन्वौत्वेऽपि द्वित्वात्पूर्वमन्तरङ्गत्वादेकादेशे व्यपवर्गाभावेन द्वित्वं न स्यादिति कृतमित्ययुक्तमत आह—एकादेश इति। ननु द्वित्वे एकादेशे औत्वं न स्यादिति कथं कृतं स्यादत आह—एकादेश इति। भाष्ये परत्वादौत्वमिति। एकादेशबाधकमिति पूर्वपक्षः। वार्णादाङ्गमिति। प्रत्यये परतः पूर्वस्य विधानादिदमप्याङ्गमिति भावः। स्थानिवद्भावाभाव इति। तत्र सति परत्वादेकादेश आशङ्कित इत्यर्थः। चोदकेन स्थानिवत्त्वमनाश्रित्य चोदितं तदाशयमाह—द्विर्वचननिमित्त इति। अचि परत इति स्थानिवत्त्वस्य निमित्तमित्यर्थः। यदि तर्हीति। एवं च स्थानिवद्भावादिति हेतुरयोग्यो नित्यत्वादिति भाष्यं युक्तमिति भावः। नन्वनवका-

+ ६. १. ८; १०१; ७. १. ३४. * १. १. ५९.

## विदेः शतुर्वसुः ॥ ७ । १ । ३६ ॥

### विदेर्वसोः कित्त्वम् ॥ १ ॥

विदेर्वसोः कित्त्वं वक्तव्यम् । किं प्रयोजनम् ? वसुग्रहणेषु लिडादेशस्यापि* ग्रहणं यथा स्यात् । किंच कारणं न स्यात् ? अननुबन्धकग्रहणे हि सानुबन्धकस्य ग्रहणं नेत्येवं लिडादेशस्य न प्राप्नोति सानुबन्धको हि स क्रियते । किं पुनः कारणं स सानुबन्धकः क्रियते ? अयमृकारान्तानां लिटि गुणः प्रतिषेधविषय आरभ्यते+ स पुनः कित्करणाद्बाध्यते । आतिस्तीर्वान् निपुपूर्वानिति । स तर्ह्यस्यैवमर्थोऽनुबन्धः कर्तव्यः ? न कर्तव्यः । क्रियते न्यास एव ।

---

प्र०—एकादेशोऽपि नित्योऽन्तरङ्गश्चेति स एव पूर्वं प्रवर्तते । क्रमप्रतिपत्त्यर्थं चानवकाशत्वमौत्वस्याऽऽश्रितम् । वृद्धिलक्षणं चैकादेशमौत्वं न बाधते नहि तस्मिन्नाप्राप्त औत्वमारभ्यते ।

विदेः शतुर्वसुः । वसोः कित्त्वमिति । लिडादेशस्य कित्त्वमस्तीति तदनुरोधेनास्य कित्त्वमुच्यते । अनुबन्धान्तरेणापि तस्य सानुबन्धकत्वं संपद्यते । अननुबन्धकग्रहण इति । स्थानिवद्भावादुगित्कार्यस्य सिद्धत्वादुकार उच्चारणार्थो नानुबन्ध इति मन्यते । सत्यपि वाऽस्य सानुबन्धकत्वे तदनुबन्धकग्रहणपरिभाषया क्वसोरग्रहणप्रसङ्गः । परिभाषोपादानं त्वग्रहणोपलक्षणम् । किं पुनः कारणमिति । असंयोगाल्लिट् किदिति कित्त्वस्य सिद्धत्वाद्वसुरेव लिटो विधीयताम् । अयमिति । यथा तेरतुरित्यादौ गुणो भवति तथा वसावपि स्यादिति तद्बाधनार्थं कित्त्वं क्रियते । एतच्च प्रयोजनोपलक्षणमिति संयोगान्तार्थमपि कित्त्वमित्याहुः । तेनाऽऽजिवानित्यञ्जेः,

---

उ०—शमौत्वं दीर्घवद्वृद्धिमपि बाधेतेत्यत आह—क्रमेति । औत्वं ततो वृद्धिस्ततः स्थानिवत्त्वाद्द्वित्वमिति क्रमप्रतिपत्त्यर्थं यदनवकाशत्वमाश्रितं तन्न नित्यत्ववदेकादेशसामान्यापेक्षं किंतु दीर्घापेक्षमेवेति वृद्धिर्भवत्येवेत्यर्थः । तदाह—वृद्धिलक्षणं चेति ।

विदेः शतुव० । ननु वसोः कित्त्वं न गुणाभावाय शतृस्थानिकत्वेन ङित्त्वादेव सिद्धेः । किंतु सामान्यग्रहणार्थं तस्य चानुबन्धान्तरेणापि संभवात्किं ककारानुबन्धेनेत्यत आह—लिडादेशस्येति । ननु वसुरुकारेण सानुबन्धक इति किमुच्यतेऽननुबन्धकग्रहण इति तत्राऽऽह—स्थानिवदिति । ननु विधेयविषय उच्चारणार्थस्यापीत्संज्ञाऽऽवश्यक्येव । किंपाल्विधित्वादुगित्त्वं दुर्लभमित्यत आह—सत्यपि वेति । तदनुबन्धकेति । यावदनुबन्धैरनुबन्धवत्ता तदन्यतमरहितग्रहणे तद्विशिष्टग्रहणं नेति भाष्यार्थं इति भावः । उपलक्षणमित्यस्य तथा भाष्यं व्याख्येयमित्यर्थः । ननु क्वसोः कित्त्वं गुणप्रतिषेधार्थं स्यादिति प्रश्नासंगतिरत आह—असंयोगादिति । आजिवानित्यादौ नलोपः कित्त्वस्य फलं, रेधिवानित्याक्षावेत्या-

---

* १. २. १०७.+७. ४. ११; १. २. ५; १. १. ५.

द्विसकारको निर्देशः । विदेः शतुर्वसुस्समासेऽनञ्पूर्वे क्त्वो ल्यप् ।

**समासेऽनञ्पूर्वे क्त्वो ल्यप् ॥ ७ । १ । ३७ ॥**

**ल्यबादेश उपदेशिवद्वचनम् ॥ १ ॥**

ल्यबादेश उपदेशिवद्भावो वक्तव्यः । उपदेशावस्थायां ल्यब्भवतीति वक्तव्यम् । किं प्रयोजनम् ?

**अनादिष्टार्थम् ॥ २ ॥**

---

प्र०–रेधिवानिति रधेर्नुमि सिद्धं भवति । ननु संयोगान्तार्थत्वे कित्त्वस्य कथं प्रतिषेधविषय आरभ्यमाणो गुणो बाध्यः ? उच्यते । ऋकारान्तेभ्यः परस्य क्सोरौपदेशिकातिदेशिककित्त्वद्वयसामर्थ्यात्क्ङिति चेति गुणनिषेधो द्विरुपतिष्ठते । तत्र पुनरुपस्थानं प्रतिषेधविषये गुणनिषेधं विधास्यति । केचिदाहुः—छान्दसः क्सुः । ततश्छन्दस्युभयथेति सार्वधातुकत्वान्ङित्त्वान्नलोपस्य सिद्धत्वात्संयोगान्तार्थं कित्त्वं नोपयुज्यते । **द्विसकारक इति** । वसुसित्यादेशो निर्दिष्टः । तत्र सकारस्य रुत्वविसर्जनीयौ कृतौ ततः सकारेण सानुबन्धत्वं वसोः संपद्यत इति वसुप्रदेशेषूभयोरविशेषणग्रहणं सिध्यति ।

**समासेऽनञ्पूर्वे क्त्वो ल्यप् । ल्यबादेश इति ।** अनेकपदाश्रयसमासनिमित्तो ल्यबादेशो बहिरङ्गो हित्वादयस्त्वेकपदविषयप्रकृतिप्रत्ययापेक्षा अन्तरङ्गा इति ते पूर्वं प्राप्नुवन्तीति भावः । तत्रोपदेशे समास इति विरोधात्समासो विषयत्वेनाऽऽश्रीयते समासे विषयेऽकृत एव तस्मिन्क्त्व उपदेशावस्थायामेव ल्यब्भवति तस्मिन्कृतेऽनल्विधाविति स्थानिवत्त्वनिषेधाद्द्वित्वाभावः । पूर्वोक्तविरोधपरिहाराय भाष्यकारोऽतिदेशं व्याचष्टे—**उपदेशिवद्भावो वक्तव्य इति** । **उपदेशावस्थायामिति** । अत्राप्युपमानोपमेयसंबन्धो द्रष्टव्यः । कृतेऽपि समासे ल्यब्भवन्नुपदेशिवद्भवति । अकृतेषु हित्वादिषु भवतीत्यर्थः । अथवा समास इति विषयसप्तम्याश्रयमेव भाष्यम् । उपदेशावस्थायां ल्यब्भवतीत्युपदेशिवद्भावो वक्तव्य इत्येतत्तु वस्तुव्याख्यानम् । उपदेशावस्थायां ल्यब्भवन्नन्यैरुपदेशिभिस्तुल्यं भवतीत्यर्थः । **अनादिष्टार्थमिति** । आदेश आदिष्टं

---

उ०–भ्यासलोपौ च । नन्विति । अन्यार्थत्वात्कित्त्वस्य सामर्थ्याभावादिति भावः । द्विरुपतिष्ठत इति । निषेधसूत्राणां परिभाषात्वादिति भावः । केचिदिति । अत्र पक्षे कित्त्वसामर्थ्यात्प्रतिषेधविषयगुणनिषेधः सूपपादः । अत एकेत्यत्र क्ङितीत्यनुवृत्त्यैत्वाभ्यासलोपावपि सिद्धाविति भावः ।

समासेऽनञ्० । विरोधादिति । क्त्वोपदेशे समासाभावादिति भावः । अनल्विधाविति । तकारादौ हलादौ चाऽऽदेशानां विधानादिति भावः । अत्राप्युपमानेति । उपदेशावस्थायामित्यर्थं इति भावः । तद्धुपदेशिद्भाव इति भाष्यमयुक्तं स्यादतआह—उपदेशिवद्भावो वक्त-

अकृतेष्वादेशेषु ल्यब्यथा स्यात् । के पुनरादेशा उपदेशिवद्वचनं प्रयोजयन्ति ? हित्वदत्त्वात्त्वेत्त्वेत्त्वदीर्घत्वशूडिटः× । हित्वम् । हित्वा प्रधाय । हित्वम् ॥ दत्त्वम् । दत्त्वा प्रदाय । दत्त्वम् ॥ आत्त्वम् । खात्वा प्रखन्य । आत्वम् ॥ इत्त्वम् । स्थित्वा प्रस्थाय । इत्त्वम् ॥ ईत्त्वम् । पीत्वा प्रपाय । ईत्त्वम् ॥ दीर्घत्वम् । शान्त्वा प्रशम्य । दीर्घत्वम् ॥ शत्वम् । पृष्ट्वा आपृच्छ्य । शत्वम् ॥ ऊठ् । द्यूत्वा प्रदीव्य । ऊठ् ॥ इट् । देवित्वा प्रदीव्य ॥ किं पुनः कारणमादेशास्तावद्भवन्ति न पुनर्ल्यप् । न परत्वाल्ल्यपा भवितव्यम् ? सन्ति चैवात्र केचित्पर आदेशाः । अपि च—

### बहिरङ्गलक्षणत्वात् ॥ ३ ॥

बहिरङ्गो ल्यप् । अन्तरङ्गा आदेशाः । असिद्धं बहिरङ्गमन्तरङ्गे । स तर्ह्युपदेशिवद्भावो वक्तव्यः ? न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयत्यन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधत इति यदयमदो जग्धिर्ल्यप्ति किति [ २. ४. ३६ ] इति 'ति किती'त्येव सिद्धे ल्यब्ग्रहणं करोति ।

---

प्र०—तस्याभावोऽनादिष्टमित्यव्ययीभावः । प्रखन्येति । ये विभाषेति विकल्पेनाऽऽत्त्वमिष्यते जनसनखनां सञ्झलोरित्यनेन तु ल्यबादेशात्पूर्वं नित्यं प्राप्नोति । प्रदीव्येति । पूर्वमिटि कृते निर्दिश्यमानस्याऽऽदेशा भवन्तीति केवलस्य क्त्वो ल्यपि सति इटः श्रवणं प्राप्नोति । अथापि कथंचित्सेट्कस्य स्थाने ल्यप् स्यात्तथाऽपि स्थानिवद्भावात्र क्त्वा सेडिति कित्त्वप्रतिषेधाद्गुणः प्रसज्येत । दीर्घत्वस्याङित्वात् । परत्वादिति । इष्टत्वादित्यर्थः । इतरस्त्विष्टानिष्टविभागो न ज्ञायत इति व्यवस्थाशब्द एवानेन परशब्दः प्रयुक्त इति मत्वाऽऽह—सन्ति चेति । बहिरङ्गलक्षणत्वादिति । समासापेक्षं बहिरङ्गं लक्षणं शास्त्रमस्येति समासः । अथवा बहिरङ्गः समासो लक्षणं निमित्तमस्येत्यर्थः । यदयमिति । ति कितीत्येव जग्धिभावस्य ल्यबादेशात्प्रागेव सिद्धत्वाल्ल्यब्ग्रहणं यथोक्तमर्थं ज्ञापयति । स्थानिवत्सूत्रे युष्मदस्मदोरनादेश इत्यनादेशग्रहणं

**स्नात्वाकालकादिषु च प्रतिषेधः ॥ ४ ॥**

स्नात्वाकालकादिषु च प्रतिषेधो वक्तव्यः । स्नात्वाकालकः पीत्वास्थिरकः भुक्त्वासुहितक इति ।

**तदन्तनिर्देशात्सिद्धम् ॥ ५ ॥**

तदन्तनिर्देशात्सिद्धमेतत् । कथम् ? क्त्वान्तस्य ल्यपा भवितव्यं न चैतत्क्त्वान्तम् ।

**समासनिपातनाद्वा ॥ ६ ॥**

अथवाऽवश्यमत्र समासार्थं निपातनं कर्तव्यं+ तेनैव यत्नेन ल्यबपि न भविष्यति ।

**अनञो वा परस्य ॥ ७ ॥**

प्र०–तत्स्थानापत्त्या तद्धर्मलाभस्य स्वरूपविधिना निरस्तस्य ज्ञापकमुक्तम् । ल्यब्ग्रहणं त्वलाश्रयेषु कार्येषु तद्धर्मलाभाभावस्य । यमर्थमन्तरेण यस्यानुपपत्तिस्तस्य सर्वस्य ज्ञापकं तद्भवतीत्यनेकोऽप्यर्थो ल्यब्ग्रहणेन ज्ञाप्यत इति विरोधाभावः । स्नात्वाकालकादिष्विति । मयूरव्यंसकादिषु समासप्रकरणात्समासार्थ एवैषां पाठः । तत्र समासेऽनञ्पूर्वे यो व्यवस्थितः क्त्वाप्रत्ययस्तस्य ल्यब्विधीयमानोऽत्रापि प्राप्नोति । तदन्तनिर्देशादिति । क्त्वान्तः समास इह निर्दिश्यत इत्यर्थः । समास इति निर्धारणे सप्तमी सामान्यापेक्षं चैकवचनम् । अथवा छान्दसं बहुवचनस्य स्थाने । निर्धारणं च समानजातीयस्य भवतीति क्त्वान्तः समासो गृह्यते । निर्धार्यमाणस्य क्त्वाग्रहणेन विशेषणात्तदन्तविधौ सत्ययमर्थो भवति । समासेष्वनञ्पूर्वेषु क्त्वान्तस्य समासस्य ल्यब्भवति स च निर्दिश्यमानस्याऽऽदेशा भवन्तीति क्त्व एव भवति । **समासनिपातनाद्वेति ।** समुदायानां साधुत्वमभ्यनुज्ञायते प्राकरणिकाप्राकरणिककार्यभावाभावविधानद्वारेणेत्यर्थः । येषु चात्र स्नात्वाकालकादिषूत्तरपदानुपात्तक्रियापेक्षः क्त्वाप्रत्ययस्तेषां सापेक्षत्वेऽपि निपातनात्समासः । **अनञो वा परस्येति ।** अनञ् चासौ पूर्वश्चेति समासो निपा-

उ०–ज्ञापकं स्यादत आह—स्थानिवत्सूत्र इति । यमर्थमिति । यं यमर्थमित्यर्थः । ननु मयूरव्यंसकादिपाठादेव ल्यबभावः सिद्धोऽत आह—मयूरेति । प्रकरणात्समासविध्यर्थ एव स पाठ इति भावः । ननु क्त्वान्तनिर्देशेऽपि स्नात्वेति क्त्वान्तमस्त्येवेत्यत आह—क्त्वान्तः समास इति । ननु विविभक्तिकत्वात्कथं समासपदेन क्त्वः सामानाधिकरण्यमत आह—निर्धारण इति । समास इति सप्तमी षष्ठ्यर्थे सौत्रीति वक्तुं युक्तम् । समुदायानामिति । समुदायनिपातनसामर्थ्यादप्राकरणिकमपि किंचिन्निपातनान्निषिध्यत इति भावः । ननु क्रिययोः समानकर्तृकयोः पूर्वकालवृत्तिक्रियावाचकात्क्त्वाविधानेन स्नात्वाकालक इत्यत्र क्त्वा दुर्लभः । पीत्वासुहितक इत्येवोदाहर्तुं युक्तम् । संपत्त्यादिक्रियापेक्षक्त्वाप्रत्यये तु सापेक्षत्वाद्वृत्तिर्दुर्लभेत्यत आह—येषु चेति । सापेक्षत्वेऽपीति । स्नात्वाकालकः संपन्न

+२. १. ७२. ग०

अथवाऽनञः परस्य ल्यपा भवितव्यं न चात्रानञं पश्यामः। ननु च धातुरेवानञ्। न धातोः परस्य भवितव्यम्। किं कारणम्? नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः। नञ्युक्तमिवयुक्तं वाऽन्यस्मिंस्तत्सदृशे कार्यं विज्ञायते। कुत एतत्? तथा ह्यर्थो गम्यते। तद्यथा—अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं पुरुषमानयति नासौ लोष्टमानीय कृती भवति। एवमिहाप्यनञिति नञ्प्रतिषेधादन्यस्मादनञो नञ्सदृशात्कार्यं विज्ञायते। किंचान्यदनञ् नञ्सदृशम्? पदमित्याह।

अथवा प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीत्येवं धातुरपि क्त्वाग्रहणेन ग्राहिष्यते। ननु चेयमपि परिभाषाऽस्ति कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति साऽपीहोपतिष्ठते। तत्र को दोषः? इह न स्यात्। प्रकृत्य प्रहृत्य।

प्र०—तनात्पूर्वशब्दस्य परनिपातः। विशेष्यत्वेन विवक्षितत्वाद्वा। अनञिति वा लुप्तसप्तमीकं पृथक्पदम्। सत्सप्तमी चेयम्। अनञि पूर्वे सति क्त्वो ल्यब्भवति। अर्थादनञः परस्येत्यर्थोऽवतिष्ठते। तदन्तविधिश्चात्र नाऽऽश्रीयते। क्त्वाप्रत्ययस्य प्राधान्येन प्रक्रमाद्विशेषणत्वाभावात्। येन विधिस्तदन्तस्येति। प्रत्ययग्रहणपरिभाषाश्रयस्तु तदन्तविधिः परस्ताद्वक्ष्यते येन नाव्यवधानमिति च धातुना व्यवधानमाश्रीयते। ननु चेति। असत्त्वभूतार्थवाचित्वादिना धर्मेण धातुरपि नञ्सदृशो भवति। न धातोः परस्येति। पदत्वनिबन्धनं सादृश्यमाश्रीयते नतु धर्मान्तरनिबन्धनम्। नास्त्यत्र प्रमाणमित्याशङ्क्याऽऽह—अथवेति। क्त्वाग्रहणेन धातुप्रत्ययसमुदायस्य परिग्रहात्तदवयवत्वाद्धातोः। स्वावयवेन पौर्वापर्यासंभवाद्धातुरनञ्ग्रहणेन न गृह्यते। प्रकृत्येति। गतेः क्त्वान्ते समुदायेऽनुप्रवेशात्पौर्वापर्याभावात्तद्व्यतिरिक्तनञ्सदृशशब्दान्तराभावा-

उ०—इत्यर्थात्प्रतीयमानक्रियासापेक्षत्वेऽपीत्यर्थः। नन्वनञ्पूर्व इति सूत्राक्षरेषु स्थितेषु कथमनञः परस्येत्यर्थलाभोऽत आह—अनभ्यासादिति। वस्तुतः पूर्वग्रहणमकृत्वा नञ इत्येव सूत्रे पाठ्यमिति भाष्याशयः। नन्वनञः परस्य क्त्वान्तस्येत्यर्थ इत्यत्र एव। माऽस्तु। ननु च धातुरेवेति भाष्यासंगतिः। नान्यः। प्रकृत्येत्यादौ धातुना व्यवधानाल्ल्यबनापत्तेः। नञिवयुक्तन्यायेन पदात्परस्येत्यर्थादत आह—तदन्तविधिश्चेति। येन विधिस्तदन्तस्येति तदन्तविधिश्चात्र नाऽऽश्रीयत इति पूर्वेणान्वेति। विशेषणासंविधानादिति भावः। प्रत्ययग्रहणपरिभाषेति। अस्या आशयं वक्ष्यामः। नन्वेवं प्रकृत्येत्यादौ न स्यादत आह—येन नेति। पदत्वनिबन्धनमिति। [illegible] भावः। भाष्ये—अथवा प्रत्ययग्रहण इति। न च विशेषणाभावात्तदन्तविधेः कथं प्राप्तिः। [illegible] बोधनं किंतु येन विधिरित्यस्यैवेति वाच्यम्। [illegible] तदन्तविधेरदोषात्। [illegible] येन विधिरिति सूत्रस्य [illegible] सार्वत्रिकत्वेन। [illegible] इत्येव युक्तम्। अथवा [illegible]

क्व तर्हि स्यात्? परमकृत्वा उत्तमकृत्वा×। न वा अत्रेष्यते। अनिष्टं च प्राप्नोतीष्टं च न सिध्यति। गतिकारकपूर्वस्यैवेष्यते। कुतो नु खल्वेतद्द्वयोः परिभाषयोः सावकाशयोः समवस्थितयोः प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवति, कृद्ग्रहणे गतिकारकपूर्वस्येति चेयमिह परिभाषा भवति प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीतीयं न भवति कृद्ग्रहणे गतिकारपूर्वस्यापीति।

प्र०—ल्यपोऽप्राप्तिः। परमकृत्वेति। परमशब्दो न गतिर्न च कारकमिति क्त्वान्तेऽनन्तर्भूतः पूर्व इति ततः परस्य क्त्वान्तस्य ल्यप्प्रसङ्गः। गतिकारकपूर्वस्यापीत्यपिशब्दात्केवलस्यापि कृत्वेत्यादेः क्त्वान्तस्य ग्रहणात्। आचार्य आह—न वा अत्रेष्यत इति। तस्मात्कृद्ग्रहणपरिभाषाऽत्र नाऽऽश्रीयते। चोदक आह—अनिष्टं चेति। आचार्य आह—गतिकारकपूर्वस्यैवेष्यत इति। प्रकृत्य पार्श्वतः कृत्येत्यादौ ल्यबादेश इष्यते। कृद्ग्रहणपरिभाषोपस्थाने च न सिध्यतीति नासावाश्रीयते। चोदक आह—कुतो न्विति। प्रत्ययग्रहणपरिभाषाया अवकाशः—उपगोरपत्यमौपगव इत्यत्र तद्धितान्तस्य प्रातिपदिकत्वात्सुब्लुग्भवति। कृद्ग्रहणपरिभाषाया अवकाशः—व्यावलेखी व्यावचर्चीति णचः स्त्रियामञिति गतिपूर्वस्य णजन्तत्वादञि सति वृद्धिस्वरौ भवतः। अत्र हि प्रत्ययग्रहणपरिभाषायाः स्त्रीप्रत्यये चानुपसर्जने नेति प्रतिषेधादुपस्थानाभावः। एवं सावकाशयोः परिभाषयोर्भिन्नफलयोर्विरोधात्पर्यायोऽप्रतिपत्तिर्वा प्राप्नोति। प्रत्ययग्रहणपरिभाषायामाश्रीयमाणायां प्रकृत्येति गतेः क्त्वान्तेऽनन्तर्भावात्पौर्वापर्योपपत्तौ

उ०—स्यापि निषेधः स्यात्। मम तु सौत्रस्यैव स निषेध इति भावः। एवं च समासेऽनञः पर स्याङ्गनिमित्तक्त्वान्तावयवस्य निर्दिश्यमानस्य क्त्वो ल्यबिति सूत्रार्थ इति स्नात्वाकालकादौ न दोष इति भावः। भाष्ये—गतिकारकपूर्वस्यापीति। गत्यादिसंनिधाने विशिष्टस्यैव क्त्वान्तग्रहणेन ग्रहणं तदसंनिधाने धातुप्रत्ययसमुदायस्यापीत्यर्थस्तदाह—गतेः क्त्वान्त इति। ल्यपोऽप्राप्तिरिति। सूत्रं परमकृत्वेत्यादौ चरितार्थं स्यादिति भावः। भाष्ये—परमकृत्वेति। सन्महत्परमेति विशेषणसमासः। केवलस्यापीति। यत्र तु गतिकारकपूर्वत्वं तत्र विशिष्टस्यैव क्त्वान्तत्वं न केवलस्य, अन्यत्र तु केवलस्यापि तत्त्वमिति भावः। गतिरनन्तर इत्यत्र तु गतेः पूर्वपदभूतायाः क्तान्ते उत्तरपदे कार्यविधानात्तत्समवधानेऽपि केवलस्य क्तान्तत्वेन ग्रहणम्। न चेह तथा मानमस्तीति तात्पर्यम्। आचार्य आह—न वा अत्रेति। अनञ इति नञ्भिन्नमव्ययमेव गृह्यत इति तदाशयः। तस्मादिति। यतः परमकृत्वेत्यत्र नेष्यते प्रकृत्येत्यत्र चेष्यते तस्मादित्यर्थः। चोदक इति। आशयानभिज्ञ इति शेषः। परिभाषानाश्रयणे मानाभावात्। अनिष्टे परमकृत्वेत्यत्रैव प्राप्नोति। इष्टे च प्रकृत्येत्यत्र न प्राप्नोतीति भावः। आचार्य आहेति। भाष्ये—एवकारस्य परमकृत्वेत्यादिव्यावर्त्यमिति भावः। पार्श्वत इत्याद्यादित्वात्सप्तम्यन्तात्तसिः। स्वाङ्गे तस्प्रत्यय इति क्त्वा। अत्र हि प्रत्ययग्रहणेति। यद्यपि तदादिनियमे निषिद्धे कृद्ग्रहणपरिभाषां विनाऽपि समुदायस्य तदन्त-

× २. १. ६१.

आचार्यप्रवृत्तिर्ज्ञापयतीयमिह परिभाषा भवति प्रत्ययग्रहण इतीयं न भवति कृद्ग्रहण इति यदयमनञिति प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् ? अयं हि नञ् न गतिर्न च कारकं, तत्र कः प्रसङ्गो यन्नञ्पूर्वस्य स्यात् । पश्यति त्वाचार्य इयमिह परिभाषा भवति प्रत्ययग्रहण इतीयं न भवति कृद्ग्रहण इति ततोऽनञिति प्रतिषेधं शास्ति ।

किं नञः प्रतिषेधेन न गतिर्न च कारकम् ।
यावता नञि पूर्वे तु ल्यब्भावो न भविष्यति ॥ १ ॥

---

प्र०—ल्यप् सिध्यति । ननु कृद्ग्रहणपरिभाषाश्रयण इति फलभेदः । कार्यकालं संज्ञापरिभाषमित्यत्र दर्शने समानदेशत्वात्परिभाषयोः परत्वेनापि व्यवस्था नास्ति । सांकुटिने त्वेवमव्यवस्थाप्रसङ्गाद्यथोद्देशपक्ष आश्रयितव्यः । तत्र हि परत्वेन व्यवस्थासिद्धिः । प्रत्ययग्रहणपरिभाषाऽङ्गसंज्ञासूत्रे योगविभागेन व्यवस्थापिता । कृद्ग्रहणपरिभाषा तु गतिरनन्तर इत्यत्रानन्तरग्रहणेन ज्ञापनात्परा भवति । यदयमिति । कथं पुनरेतज्ज्ञापकं यावता सत्यामपि कृद्ग्रहणपरिभाषायामपिशब्दात्केवलस्यापि क्त्वान्तस्य ग्रहणादकृत्वेत्यादौ नञोऽगतित्वादकारकत्वाच्च क्त्वान्तेऽनन्तर्भावादसत्यनञ्ग्रहणे ल्यप्प्रसङ्गः । अप्रकृत्येत्यादौ च प्रतिषेधार्थमनञ्पूर्वग्रहणं स्यात् । उच्यते । अपिग्रहणेन प्रत्ययग्रहणपरिभाषा समुच्चीयते न त्वन्यपूर्वम् । तत्र समास इति वचनात्केवलस्य क्त्वादेर्ग्रहणाभावादपिशब्दसमुच्चेतव्यस्याभावाद्गतिकारकपूर्वस्यैव समासस्य

---

उ०—त्वात्सिध्यति तथाऽपि तदधिकग्रहणाभावाय तद्विषयसत्तामात्रेणावकाशोक्तिरिति बोध्यम् । पर्यायादिबीजं विप्रतिषेधसूत्र उक्तम् । व्यक्तिपक्षाभिप्रायेण पर्यायः । जातिपक्षे स्वप्रवृत्तिः । कार्यकालमिति । कार्यकालपक्षेऽपि शास्त्रपाठकृतपरत्वानपगमाच्चिन्त्यमिदम् । सांकुटिने त्विति । अभिविधौ भाव इनुणः स्त्रीप्रत्ययत्वाभावादणिनुण इत्यत्र प्रत्ययग्रहणपरिभाषोपस्थाने कृदिकिञित्यस्य वृद्धिस्वरौ स्यातामिति परत्वात्कृद्ग्रहणपरिभाषैवात्राऽऽश्रयणीयेति भावः । न च कृद्ग्रहणपरिभाषायामपिशब्देन केवलस्यापि ग्रहणेन केवलादपि कथंचिल्ल्यप् स्यादिति वाच्यम् । गतिकारकसमभिव्याहारे तत्पूर्वस्य ग्रहणं तदसमभिव्याहारे तु प्रत्ययग्रहणपरिभाषासिद्धस्यापीत्येवापेरर्थात् । अत एव पुंयोगादिति सूत्रे सांकुटिनम् गतिकारकोपपदानामिति कृद्ग्रहण इति परिभाषाभ्यां सिद्धिरुक्ता भाष्ये । प्रत्ययग्रहण इतीयमेव भवति परत्वान्न्याय्याऽपि कृद्ग्रहणपरिभाषा न भवतीति कुत इति । एवं चेष्टासिद्ध्यभिप्रायेण तदयमिति भाष्यार्थः । केवलस्यापीति । गत्याद्यसमभिव्याहार इति भाष्यपाठ—अकृत्वेत्यादाविति । गत्यादिसमसप्रधानेऽपि तत्कस्मात्—अप्रकृत्वेत्यादाविति । केवलस्येति । अपिशब्दसमुच्चेतव्यस्य तत्रैवेति भावः । अयं भावः । क्त्वान्तस्य समासस्य ल्यब्विधावनुवृत्तेः । तत्र पूर्वपदापेक्षायां कृद्ग्रहणपरिभाषया गतिकारकपूर्वस्यैव ग्रहीष्यत इति परत्वमेवेदं न । अकृत्वेत्यत्राप्रकृत्वेत्यत्र च सिद्धम् । अकृत्वेत्यादौ च न प्रतिषेधार्थमनञ्पूर्वग्रहणं स्यादिति ।

प्रतिषेधात्तु जानीमस्तत्पूर्वं नेह गृह्यते ।
प्रत्ययग्रहणे यावत्तावद्भवितुमर्हति ॥ २ ॥

**सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥ ७ । १ । ३९ ॥**

सुपां च सुपो भवन्तीति वक्तव्यम् । 'युक्ता माताऽऽसीद्धुरि दक्षिणायाः'* । दक्षिणायामिति प्राप्ते । तिङां च तिङो भवन्तीति वक्तव्यम् । 'चषालं ये अश्वयूपाय तक्षति'÷ । तक्षन्तीति प्राप्ते ।

लुकि किमुदाहरणम् । आर्द्रे चर्मन् । लोहिते चर्मन् । नैतदस्ति । पूर्व-

प्र०-ग्रहणं भविष्यतीति किमनञ्पूर्व इत्यनेन । तत्क्रियमाणं कृद्ग्रहणपरिभाषाया अनुपस्थानं ज्ञापयति तदुपस्थाने तु तूष्णींभूय नानाभूय द्विधाभूयेत्यादौ ल्यन्न स्यात् । तदेवं कृद्ग्रहणपरिभाषानुपस्थाने नञ्सदृशादव्ययात्पदात्प्रत्यासत्तिन्यायात्समासावयवात्परस्य धात्वादेः क्त्वान्तस्य समासे क्त्वो ल्यब्विधीयमानः स्नात्वाकालकः परमकृत्वेत्यादौ न भवति । परमं कृत्वा परमकृत्वेति सन्महदिति समासः । परमत्वस्य क्रियाविशेषणत्वात्सामानाधिकरण्यात् । **तत्पूर्वमिति** । गतिकारकपूर्वमित्यर्थः । **प्रत्ययग्रहण इति** । प्रत्ययग्रहणपरिभाषया यावद्ग्राह्यं तावद्गृह्यते ।

**सुपां सुलुक्पूर्वसवर्ण०** । सुशब्द आदेश उच्यमानेऽन्ये सुपो न प्राप्नुवन्तीत्याह—**सुपां चेति** । एतच्च सर्वं व्यत्ययो बहुलमिति व्यत्ययेन सिध्यति । **पूर्वसवर्णेनापीति** । चर्मन् इ इति स्थित इकारस्य पूर्वसवर्णो नकारस्तस्मिन्पूर्वस्य नकारस्य स्वादिष्विति पदसंज्ञायां सत्यां लोपः । एवं च न ङिसंबुद्ध्योरित्यत्र ङिग्रहणमपि न कर्तव्यं भवति । प्राति-

उ०-अनुपस्थानं ज्ञापयतीति । तदनुपस्थितौ क्त्वान्तस्य समासस्येत्यर्थोऽशक्यः । प्रत्ययग्रहणपरिभाषया तस्य क्त्वान्तत्वाभावात् । तथा च समासे विद्यमानस्य क्त्वान्तस्येत्यर्थो वाच्यः । एवं चोक्तदोषवारणायानञ्पूर्व इत्यावश्यकमिति भावः । गतिकारकपूर्वक्त्वासमासस्येत्यर्थे लक्ष्यासिद्धिं दर्शयति—तूष्णीमिति । तूष्णीमि भुवः । नाधार्थप्रत्यये च्व्यर्थ इति क्त्वा । उपपदसमासः । एतानि च न गतिसंज्ञकानि नापि कारकाणीति । एतेनानञ्पूर्वग्रहणेन गत्यादिसमवधानेऽप्यपिना केवलं समुच्चीयत इत्यपास्तम् । अप्रकृत्येत्यत्राप्यनापत्तेश्च । गत्यादिपूर्वस्य क्त्वान्तस्य समासस्यानञ्पूर्वस्येत्यर्थापत्तेरिति सुधियो विभावयन्तु । सिद्धान्तार्थे परमकृत्वेत्यादावप्राप्त्युपायमाह—नञ्सदृशादव्ययादिति । स्नात्वाकालकादिव्यावृत्यर्थमिदम् । वस्तुतोऽव्ययादित्येव सिद्धे पदादित्युक्तिर्व्यर्थैव । सुन्दरः स्नात्वाकालक इत्यादिव्यावृत्तये समासावयवादिति । गतिकारकपूर्वमिति । तत्पूर्वमेवेत्यर्थः । भाष्ये प्रत्ययग्रहणे यावदिति । समासे विद्यमानस्य क्त्वान्तस्येत्यर्थादिति भावः ।

सुपां सुलुक्० । सुशब्द इति । लुक्साहचर्यादयं सुः सर्वादेशश्छान्दसत्वाद्वा शेशकारोच्चारणं तु 'शे' इत्यत्र विशेषणार्थम् । पूर्वसवर्णो नकार इति । घोषवत्त्वेन साम्यादि-

* ऋग्वेद १, १६४, ९ ÷ यजुर्वेद २५ । २९

सवर्णेनाप्येतत्सिद्धम्+ । इदं तर्हि । यत्स्थवीयस आव सतुत सप्तऋषयः सप्त साकम् । ननु चैतदपि पूर्वसवर्णेनैव सिद्धम् । न सिध्यति । यद्यत्र पूर्वसवर्णः स्यात्त्यदाद्यत्वं प्रसज्येत* । इदं चाप्युदाहरणम् । आर्द्रे चर्मन् । लोहिते चर्मन् । ननु चोक्तं पूर्वसवर्णेनाप्येतत्सिद्धमिति ? न सिध्यति । यद्यत्र पूर्वसवर्णः स्यादान्तर्यतो दकारः प्रसज्येत । अस्तु । संयोगान्तलोपेन सिद्धम्× ।

**इयाडियाजीकाराणामुपसंख्यानम् ॥ १ ॥**

इयाडियाजीकाराणामुपसंख्यानं कर्तव्यम् । इया । दार्विया परिज्मन् । इया ॥ डियाच्** । सुक्षेत्रिया सुगातुया । डियाच् ॥ ईकार । 'दृतिं न शुष्कं सरसी शयानम्'= ।

**आङ्याजयारां चोपसंख्यानं कर्तव्यम् ॥ २ ॥**

प्र०–पदिकान्तत्वाभावाद्विभक्तिनकारस्य नलोपाप्रसङ्गात् । पूर्वस्य च नकारस्य लोपस्येष्टत्वात् । यदिति । यच्छब्दात्परस्य सुपो लुक् । प्रत्ययलक्षणनिषेधात्त्यदाद्यत्वाभावः । येष्विति प्राप्ते । त्यदाद्यत्वमिति । सुशब्दस्य पूर्वसवर्णो भवन्नलोऽन्त्यस्येत्युकारस्य दकारः प्राप्नोति ततस्त्यदाद्यत्वे बहुवचने झल्येदित्येत्वे स्कोः संयोगाद्योरिति सकारलोपे च येदिति स्यात् । अथाप्येकवचनस्य स्थाने पूर्वसवर्णो दकारः क्रियते तथाऽपि स्थानिवद्भावात्स्मिन्भावः प्राप्नोति । आन्तर्यत इति । निरनुनासिकस्येकारस्य सदृशो दकारः । संयोगान्तलोपेनेति । न ङिसंबुद्ध्योरिति नलोपप्रतिषेधात्संयोगान्तलोपः । अन्यथा नलोपे कर्तव्ये संयोगान्तलोपोऽसिद्धः स्यात् । एवं च नलोपप्रतिषेधे ङिग्रहणं कर्तव्यमेवेति प्रक्रियालाघवाय चर्मन्नित्यत्र लुगेव विधेय इत्याहुः । दार्वियेति । दारुशब्दादियादेशः । सुक्षेत्रियेति । सुक्षेत्रेणेति प्राप्ते । सरसी इति । सरःशब्दात्परस्य ङिशब्दस्येकारः । प्रबाहवेति । प्रबाहुशब्दात्परस्य टाप्रत्ययस्याऽऽङादेशः । घेर्ङितीति गुणः । ननु 'ङित्त्वे विधावर्णनिर्देशमात्रं यर्ण यस्मात्तत्र विधात्तदादौ' इत्युक्तम् । ततश्च गुणो न प्राप्नोति । ङित्करणसामर्थ्याद्भविष्यतीत्यदोषः । अथवा घितीति बहुव्रीहिराश्रीयते । तत्र परिहारान्तरमाश्रयणीयम् । वर्णाश्रायं तेन ङित्त्वे न दोषो निर्देशोऽयं पूर्वसूत्रेण वा स्यादिति ।

उ०–त्यर्थः । उकारस्य दकार इति । निरनुनासिकत्वादित्यर्थः । येदिति स्यादिति । यद्वा पूर्वसवर्णेऽपीत्यनेनाऽऽपत्तिः । सदृशो दकार इति । घोषवत्त्वादल्पप्राणत्वाच्चेत्यर्थः । इत्याहुरिति । भाष्यकृता तु रूपसिद्धिमाश्रित्य निराकृतम् । वस्तुतस्तदप्युदाहरणमेवेति [illegible] । भाषितं चेदं न दृष्टं सूत्रे भाष्ये । दारुशब्दादिति । ततः परस्य सुप इत्यर्थः । डियाचो डित्त्वं टिलोपाय । चित्त्वं [illegible] । सरःशब्दादिति । [illegible] ।

\+ १. ४. १७; ८. २. ७. * ७. २. १०२; ७. १. १०२, ८. २. २३. × ८. २. २३.
** १. ४. १४१. = ऋग्वेद ७. १०३. २.

आङ्÷ । प्र वाहवा ॥ अयाच् । 'स्वप्नया सचसे जनम्'= । अयाच् ॥ अयार्÷ । 'स नः सिन्धुमिव नावया'†

**अमो मश् ॥ ७ । १ । ४० ॥**

किमर्थः शकारः ? शित्सर्वस्येति+ सर्वादेशो यथा स्यात् । अक्रियमाणे हि शकारेऽलोऽन्त्यस्य विधयो भवन्तीत्यन्त्यस्य प्रसज्येत* । अत उत्तरं पठति—

अमो मश् न मकारस्य

मकारस्य मकारवचने प्रयोजनं नास्तीति कृत्वा तत्रान्तरेण शकारं सर्वादेशो भविष्यति ।

वचनादन्यबाधनम् ।

अस्त्यन्यन्मकारस्य मकारवचने प्रयोजनम् । येऽन्ये मकारादेशाः प्राप्नुवन्ति तद्बाधनार्थम् । तद्यथा—मो राजि समः क्वौ [ ८. ३. २५ ] इति मकारस्य मकारवचनसामर्थ्यादनुस्वारादयो बाध्यन्ते । एवं तर्हि द्विमकारको निर्देशः करिष्यते× ।

द्विमकार ईडपृक्ते

यदि द्विमकारकोऽपृक्ताश्रय ईण्न प्राप्नोति** । 'वधीं वृत्रं मरुत इन्द्रियेण'÷

यकारादौ न दुष्यति ।

प्र०—स्वप्नयेति । अयाचोऽकारोच्चारणं सुपि चेति दीर्घनिवृत्त्यर्थम् । नावयेति । उपोत्तमं रितीति मध्योदात्तं पदं भवति ।

**अमो मश् । अमो मश् न मकारस्येति** । मकारस्य मकारः प्रयोजनभावान्न भविष्यतीति शकारो न वक्तव्यः इत्यर्थः । **वचनादिति** । वधीं वृत्रमित्यादौ मकारस्यानुस्वारनिवृत्त्यर्थो मकारः स्यादित्यर्थः । **द्विमकारक इति** । अमो म्मिति करिष्यते भिन्नजातीयवर्णद्वयोच्चारणे प्रयत्नस्य गौरवं भवति । समानजातीयवर्णद्वये तु लाघवं तत्रैकस्य मकारस्य संयोगान्तलोपः करिष्यते । **ईण्न प्राप्नोतीति** । ईटि कर्तव्ये संयोगान्तलोपस्यासिद्धत्वादपृक्तत्वाभावात् । **यकारादाविति** । अमो म्मिति सूत्रं कर्तव्यं तत्र यकारस्य लुप्त-

उ०—संप्रति वेदेऽन्तोदात्तं पठ्यते तत्तु सरसीशब्दान्ङेर्लुकि बोध्यम् । इदं चेदूतौ चेति सूत्रे भाष्ये स्पष्टम् । स्वरव्यत्ययो वा बोध्यः ।

अमो मश् । ननु मकारकरणेन शप्रत्याख्याने न फलमत आह—भिन्नजातीयेति । पृथक्स्थानकरणव्यापाराश्रयणादिति भावः । मकारोत्तराकारस्तूभयोच्चारणार्थ आवश्यकः । अनुनासिकत्वेनेत्सञ्ज्ञायां च तल्लोपः । संयोगान्तलोप इति । क्वचिदल्लोऽपि लोपाङ्गीकारादिति भावः । वधीमित्यत्र हनो वध लुङि मिपोऽम् तस्य मश् । अकार उच्चारणार्थ इत्यस्तिसिच

÷७. ३. १११. = अथर्ववेद ५. ७. ८ ÷६. १. २१७. † ऋग्वेद १. ९७. ८ + १. १. ५५.
* १. १. ५२. × ८. २. २३. ** ७. ३. ९६. ÷ ऋग्वेद १. १६५. ८.

किं यकारो न श्रूयते ? लुप्तनिर्दिष्टो यकारः ।

अमो मश् न मकारस्य वचनादन्यबाधनम् ।
द्विमकार ईडपृक्ते यकारादौ न दुष्यति ॥

## आज्जसेरसुक् ॥ ७ । १ । ५० ॥

इह 'ये पूर्वासो य उपरासः' * आज्जसेरसुगित्यसुकि कृते जसो ग्रहणेन ग्रहणाच्छीभावः प्राप्नोति× । एवं तर्हि जसि पूर्वान्तः करिष्यते । यदि पूर्वान्तः क्रियते का रूपसिद्धिः । 'ब्राह्मणासः पितरः सोम्यासः'= । सवर्णदीर्घत्वेन+ सिद्धम् । न सिध्यति । अतो गुणे [ ६. १. ९७ ] इति पररूपत्वं प्राप्नोति । अकारोच्चारणसामर्थ्यान्न भविष्यति । यदि तर्हि प्राप्नुवन्विधिरुच्चारणसामर्थ्याद्बाध्यते सवर्णदीर्घत्वमपि न प्राप्नोति ? नैष दोषः । यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते, यस्य तु विधेर्निमित्तं नासौ बाध्यते । पररूपं च प्रत्यकारोच्चारणमनर्थकं सवर्णदीर्घत्वस्य पुनर्निमित्तमेव । अथवाऽसुट् करिष्यते** । एवमपि 'ये पूर्वासो य उपरास',* इत्यसुटि कृते जसो ग्रहणेन ग्रहणाच्छीभावः प्राप्नोति । नैष दोषः । निर्दिश्यमानस्याऽऽदेशा भवन्तीत्येवमस्य न भविष्यति । यस्तर्हि निर्दिश्यते तस्य कस्मान्न भवति ? असुटा व्यवहितत्वात् । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं 'ये पूर्वासो य उपरासः' असुकि कृते जसो ग्रहणेन ग्रहणाच्छीभावः प्राप्नोतीति । नैष दोषः । इदमिह संप्रधार्यम्—शीभावः *क्रियतामसुगिति किमत्र कर्तव्यम् ? परत्वादसुक् ।*

प्र०-निर्दिष्टत्वादनेकाल्त्वात्सर्वादेशोऽयं मो भविष्यतीति प्रत्याख्यातं शित्त्वम् ।

आज्जसेरसुक् । जसो ग्रहणेनेति । तद्वृत्तस्तद्ग्रहणेन गृह्यत इति सागमकस्य शीभावप्रसङ्गः । पूर्वान्त इति । अस्य जस्यसुगिति सूत्रन्यासेन पूर्वान्तेऽसुक्यकारान्तात्परो जस् न भवतीति शीभावाप्रसङ्गः । अथवाऽसुडिति । असुट्यकारोच्चारणं दृष्यस्यतीत्याद्यर्थमिति पररूपं स्यादिति पक्षान्तरोपन्यासः । असुटि प्रथमयोः पूर्वसवर्ण इति दीर्घः सिध्यति । परत्वादिति । असुकोऽवकाशः ब्राह्मणास इति । शीभावस्य भाषाविषयोऽवकाशः ।

उ०-इतीट् । सिच इट् । इट ईटीति सिचो लोपः । सवर्णदीर्घः । लुप्तनिर्दिष्टेति । लोपो व्योर्वलीति लोपः । तस्य च नासिद्धत्वमित्यपृक्तग्रहणमप्येवेत्याहुः । इदं प्रत्याख्यानमेकदेशिन इति केचित् ।

आज्जसेरसुक् । सागमकस्येति । ग्रहणादिति शेषः । शीभावस्तु निर्दिश्यमानपरिभाषया प्रत्ययांश एवेति बोध्यम् । नन्वत्र न्यासे कथं पूर्वान्तः स्यादत आह—जसीति । नन्वसुटि पररूपं स्यादत आह—असुटीति ।

* ऋग्वेद १०.१५.२. × ७.१.१७. = ऋग्वेद ६.७५.१०. + ६.१.१०१. ** ६.१.१०१.

अथेदानीमसुकि कृते पुनःप्रसङ्गाविज्ञानाच्छीभावः कस्मान्न भवति ? सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ।

**अश्वक्षीरवृषलवणानामात्मप्रीतौ क्यचि ॥ ७ । १ । ५१ ॥**

**अश्ववृषयोर्मैथुनेच्छायाम् ॥ १ ॥**

अश्ववृषयोर्मैथुनेच्छायामिति वक्तव्यम् । अश्वस्यति वडवा । वृषस्यति गौः । मैथुनेच्छायामिति किमर्थम् ? अश्वीयति वृषीयति ।

**क्षीरलवणयोर्लालसायाम् ॥ २ ॥**

क्षीरलवणयोर्लालसायामिति वक्तव्यम् । क्षीरस्यति माणवकः । लवणस्यत्युष्ट्र इति ।

अपर आह—सर्वप्रातिपदिकेभ्यो लालसायामिति वक्तव्यं, दध्यस्यति मध्वस्यतीत्येवमर्थम् ।

अपर आह—सुक्वक्तव्यो दधिस्यति मधुस्यतीत्येवमर्थम् ।

**आमि सर्वनाम्नः सुट् ॥ ७ । १ । ५२ ॥**

**त्रेस्त्रयः ॥ ७ । १ । ५३ ॥**

**ह्रस्वनद्यापो नुट् ॥ ७ । १ । ५४ ॥**

इमे बहव आम्शब्दाः । कास्प्रत्ययादाममन्त्रे लिटि [ ३. १. ३५ ] । ङसोसाम् [ ४.१.२ ] । किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे [ ५. ४. ११. ] । ङेराम्नद्याम्नीभ्यः [ ७. ३. ११६ ] इति । कस्येदं ग्रहणम् ? षष्ठीबहुवचनस्य ग्रहणम् ।

प्र०— अश्वक्षीर० । अश्वस्यतीति । मैथुनेच्छाप्रतिपादनपरत्वाद्योगस्याश्ववृषोपादानमतन्त्रमिति मनुष्यादावपि कवयः प्रयुञ्जते । लालसाऽतिशयेनाभ्यवजिहीर्षा । यस्तु लवणमैश्वर्यार्थमिच्छति तत्र लवणीयतीत्येव भवति ।

आमि सर्वनाम्नः । कस्येदमिति । किमिदं सर्वेषामामां ग्रहणमथ कस्यचिदेवेति प्रश्नः ? ननु च सर्वनाम्न इत्युपादानाद्घादामो लिट्यामश्च ग्रहणशङ्कैव न युक्ता ।

उ०— अश्वक्षीर० । कवय इति । इति रामो वृषस्यन्तीमित्यादौ । भाष्यस्वरसस्त्वेषामसाधुत्वे । अत एव वडवेति गौरिति च कर्तृपदमुपात्तम् । वार्तिके पञ्चमी षष्ठ्यर्थे । दध्यस्यति मध्वस्यतीत्येवमर्थमिति भाष्यस्वरसाद् द्वावेवाऽऽगमिनौ । यदि वार्तिकस्थसर्वशब्दस्वारस्यादन्यत्रापीष्यते तदैवमर्थं इत्येवंशब्दः स्वार्थं न परिपुष्येदिति सुबधातुवृत्तौ माधवः । एवंशब्दः प्रकार इत्यन्ये ।

आमि सर्व० । ननु यदर्थस्येह ग्रहणं संभवति तदर्थस्योत्तरत्रानुवृत्तिः स्यादत आह—

अथास्य कस्मान्न भवति कास्प्रत्ययादाममन्त्रे लिटीति ? अननुबन्धकग्रहणे हि न सानुबन्धकस्येति । स तर्ह्यस्यैवमर्थोऽनुबन्धः कर्तव्य—इहास्य ग्रहणं मा भूदिति ? ननु चावश्यं मकारस्येत्संज्ञापरित्राणार्थोऽनुबन्धः कर्तव्यः । नार्थ इत्संज्ञापरित्राणार्थेन, इत्कार्याभावादत्रेत्संज्ञा न भविष्यति । इदमस्तीत्कार्यं मिदचोऽन्त्यात्परः [१. १. ४७] इत्यचामन्त्यात्परो यथा स्यात् । प्रत्ययान्तादयं विधीयते तत्र नास्ति विशेषो मिदचोऽन्त्यात्पर इति वा परत्वे, प्रत्ययः पर इति÷ वा । यस्तर्हि न प्रत्ययान्तादिजादेश्च गुरुमतोऽनृच्छः [३. १. ३६] इति । अत्राप्यास्कासोराम्वचनं× ज्ञापकं नायमचामन्त्यात्परो भवतीति । कथं कृत्वा ज्ञापकम् ? न ह्यस्ति विशेष आम्यचामन्त्यात्परे सत्यसति वा । अयमस्ति विशेषः । असत्यामि द्विर्वचनेन भवितव्यं सति न भवितव्यम् । सत्यपि भवितव्यम् । कथम् ? आमस्तन्मध्यपतितत्वाद्धातुग्रहणेन ग्रहणात् ।

प्र०—उच्यते । इह तयोरसंभवेऽपि ह्रस्वनद्यापो नुडित्यत्र ह्रस्वात्परयोः संभवाद्विचारः क्रियते । तत्रेह सामान्यग्रहणे सति यथासंभवं प्रकरणे कार्यप्रतिपत्तिः । अथवा पूर्वोपात्तसदृशशब्दान्तरानुमानपक्ष उत्तरसूत्रे तयोः संभवादिह विचारः । ननूत्तरसूत्रेऽपि यस्यैवाऽऽम्नदीभ्यां परस्य संभवः स एव ह्रस्वादपि परस्तत्साहचर्याद्ग्रहीष्यते । नैतदस्ति । व्याप्तिन्यायाश्रयेण सर्वस्य ग्रहणप्रसङ्गात् । प्रत्ययान्तादिति । ते चाजन्ताः । ननु हलन्तेभ्य आचारक्विबन्तेभ्य आमस्त्येव । नैतदस्ति । एकीयमतमेतत् । तत्रापि हलन्तेभ्योऽनभिधानादाचारक्विब्भावः । यस्तर्हीति । ईहेहेश्च मध्य आमि कृते यणादेशप्रसङ्गः । आस्कासोरिति । अन्त्यादचः पर आमि सवर्णदीर्घत्वे सति विशेषाभावः । सति न भवितव्यमिति । रूपान्तराद्धातुत्वाभावात् । आम इति । अकृत एकादेश

उ०—तत्रेहेति । उत्तरसूत्र इति । अत एव भाष्ये सूत्रद्वयग्रहणम् । यस्यैवेति । ङेरामः षष्ठीबहुवचनस्य चेत्यर्थः । एवं चेतरद्वयोपादानं व्यर्थमिति भावः । ङेरिति सूत्रे तु षष्ठीबहुवचनातिरिक्तस्यासंभव एवेति तात्पर्यम् । भाष्ये—अनुबन्ध इति । अनुनासिकत्वेनेत्संज्ञक इत्यर्थः । उच्चारणार्थानामप्यपगमार्थेत्त्वस्याऽऽवश्यकत्वादिति भावः । ते चाजन्ता इति । न च जागर्तेरामि तस्य मित्त्वादन्त्यादचः परत्वे तदवयवेन पौर्वापर्याभावाद्गुणो न स्यादिति वाच्यम् । अत्राधिकारे 'अयामन्त०' इति ण्यन्तस्याऽऽम्प्रविधानेन तस्यान्तावयव इत्यस्यापि संबन्ध इत्याशयात् । एकीयमतमेतदिति । सर्वप्रातिपदिकेभ्यः क्विबित्येतत् । तत्रापीति । एकीयमताश्रयणेऽपीत्यर्थः । क्विब्भाव इति । अत्र चेदमेव भाष्यं मानम् । न चापगल्भादिभ्यो हलन्तेभ्यः क्विबस्त्येव । तत्र ह्याचारस्यानुनासिकत्वेनेत्संज्ञकतया लोपादिति वाच्यम् । प्रकारान्तरसत्त्वेन तस्यैवानुबन्धत्वस्वीकारेणादोषादिति भावः । नन्वामादौ सवर्णदीर्घे रूपान्तराभावाद्द्वित्वसिद्धेः किं तन्मध्यपतितत्वाश्रयणेनेत्यत आह—अकृत इति ।

÷ १. १. २. × १. १. १७; १५.

तदेतत्कासासोराम्वचनं ज्ञापकमेव नायमचामन्त्यात्परो भवतीति । अथापि कथं-चिदित्कार्यं स्यादेवमपि न दोषः । क्रियते न्यास एव । 'आम अमन्त्रे' इति । यद्येवमामामन्त्र इति प्राप्नोति । शकन्धुन्यायेन+ निर्देशः । अथवाऽस्त्वस्य ग्रहणं को दोषः ? इह कारयांचकार हारयांचकार चिकीर्षांचकार जिहीर्षांचकार, ह्रस्वनद्यापो नुडिति नुट्प्रसज्येत । लोपा-यादेशयोः* कृतयोर्न भविष्यति । इदमिह संप्रधार्यम्—लोपायादेशौ क्रियेतां नुडिति, किमत्र कर्तव्यम् ? परत्वान्नुट् । नित्यौ लोपायादेशौ, कृतेऽपि नुटि प्राप्नुतोऽकृतेऽपि । तत्र नित्यत्वाल्लोपायादेशयोः कृतयोर्विहतनिमित्तत्वान्नुरन भविष्यति ।

अथास्य कस्मान्न भवति 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इति ? अननु-बन्धकग्रहणे हि न सानुबन्धकस्येति । स तर्ह्येवमर्थोऽनुबन्धः कर्तव्यः ? ननु चावश्यमुगित्कार्यार्थोऽनुबन्धः कर्तव्यः । नार्थ उगित्कार्यार्थेनानुबन्धेन लिङ्ग-विभक्तिप्रकरणे सर्वमुगित्कार्यं, न चाऽऽमो लिङ्गविभक्ती स्तः । अव्ययमेषः ।

प्र०—इदमुच्यते कृते त्वेकादेशे रूपान्तराभावः । अथापीति । प्रतिधातुभेदादामो यत्रे-त्कार्यं न संभवति तत्र मा भूदित्संज्ञा । आसिकासिचकासिषु प्रत्ययान्तेषु च धातुषु । ईहादौ त्विकार्यसंभवात्स्यादेवेत्संज्ञा । अथवाऽऽसादिषु विधानसामर्थ्यात्सवर्णदीर्घत्वं न स्यादित्संज्ञा तु स्यादेव । व्यञ्जनान्तेषु चाऽऽच रकिवन्तेष्वित्कार्यसंभवादित्संज्ञा प्राप्नोति । नहि व्यञ्जनान्तेभ्य आचारे क्विब् भवतीत्यत्र किंचित्प्रमाणमस्ति । कारयांचकारेति । नुटि कृतेऽयादेशप्रसङ्गः । अव्ययमेष इति । अव्ययत्वात्स्त्रीत्वेन योगाभावादुगितश्चेति ङीब्नास्ति । तदाभावादुगितश्चेति घादिषु ह्रस्वविकल्पोऽपि

उ०—वर्णादाङ्गमिति न्यायेन पूर्वं द्वित्वम् । द्वित्वं हि प्रत्ययनिमित्तत्वादाङ्गमिति भावः । भाष्ये—नायमचामन्त्यात्परो भवतीति । एवं च फलाभावान्मस्येत्संज्ञाप्रवृत्त्या तत्परित्राणार्थानु-बन्धस्यानावश्यकत्वेनास्याऽऽमोऽत्र ग्रहणं स्यादेवेति पूर्वपक्षिण इदं वाक्यम् । स एवाऽऽह—अथापि कथंचिदित्कार्यं स्यादिति । अस्यैवमपि सूत्रभेद इति शेषः । सिद्धान्त्याह—एवमपि न दोषः । क्रियते न्यास एवेति । किमेत्तिङुपक्रमेण प्रवृत्ते—अथापि कथंचिदि-त्कार्यं स्यादिति भाष्ये—एवमपि गौरवमिति शेषः । अपूर्वकरणे हि स दोष इत्युक्तेराशयः । प्रत्ययान्तेषु धातुष्वित्यन्तं पूर्वान्वयि । अथवेति । उपसंजातविरोधन्यायादिति भावः । विधिबाधापेक्षया परार्थेत्संज्ञाबाध एवोचित इत्याशयेन कथंचिदिति भाष्य उक्तम् । नहि व्यञ्जनान्तेभ्य इति । प्रत्ययान्तादयं विधीयते तत्र नास्ति विशेष इति भाष्यस्यात्रत्यापि-शब्दस्य कथंचिदित्यस्य च प्रमाणस्य सत्त्वाच्चिन्त्यमिदम् । अयादेशप्रसङ्ग इति । अयामन्ते-त्यनेन । इदमेवाभिप्रेत्यायादेशो नित्य इति भाष्य उक्तम् । न च मालाशब्दादाचारक्विपि

+ ६. १. ९४. * ६. ४. ४८; ५५.

मकारस्य तर्हीत्संज्ञापरित्राणार्थोऽनुबन्धः कर्तव्यः । इत्कार्याभावादत्रेत्संज्ञा न भविष्यति । इदमस्तीत्कार्यं मिदचोऽन्त्यात्पर [ १. १. ४७ ] इत्यचामन्त्यात्परो यथा स्यात् । नैतदस्ति । घान्तादयं विधीयते तत्र नास्ति विशेषो मिदचोऽन्त्यात्पर इति वा परत्वे, प्रत्ययः पर इति वा परत्वे । अथापि कथंचिदित्कार्यं स्यादेवमपि न दोषः । क्रियते न्यास एव । अथवाऽस्त्वस्य ग्रहणं को दोषः ? इह पचतितराम् जल्पतितराम् ह्रस्वनद्यापो नुडिति नुट् प्रसज्येत । लोपे* कृते न भविष्यति । इदमिह संप्रधार्यम्—लोपः क्रियतां नुडिति किमत्र कर्तव्यम् । परत्वान्नुट् । एवं तर्हि ह्रस्वनद्यापो नुडित्यत्र यस्येति लोपोऽनुवर्तिष्यते ।

अथास्य कस्मान्न भवति 'ङेराम्नद्याम्नीभ्यः' इति ? किंच स्यात् ? कुमार्याम् किशोर्याम् खट्वायाम् मालायाम् तस्याम् यस्यामिति ह्रस्वनद्यापो नुडिति नुट् प्रसज्येत । आड्याट्स्याटोऽत्र बाधका भविष्यन्ति× । इदमिह संप्रधार्यम्—आड्याट्स्याटः क्रियन्तां नुडिति किमत्र कर्तव्यम् ? परत्वाड्याट्स्याटः । अथेदानीमाड्याट्स्याट्सु कृतेषु पुनःप्रसङ्गान्नुट् कस्मान्न भवति ? सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति ।

---

प्र०—नास्ति । विभक्तेर्लुकि प्रत्ययलक्षणप्रतिषेधान्नुमागम उगित्कार्यं नास्ति । इत्संज्ञापरित्राणार्थ इति । इत्संज्ञायाः परित्राणमिति साधनं कृतेति पञ्चमीसमासः । समुदायविशेषणं च मकार इति सापेक्षत्वात्समासाभावो न चोदनीयः । परित्राणं वा प्रधानं मकारमपेक्षते । भवति च प्रधानस्य सापेक्षस्यापि समासः । अथापीति । मित्त्वमेव ज्ञापकं स्यात् । अन्यतोऽप्ययं भवतीति । ततश्च स्यादेवेत्संज्ञा । एवं तर्हीति । उभयोरनित्ययोः परत्वान्नुटि प्राप्ते ह्रस्वनद्यापो नुडित्यत्र यस्य लोपस्तद्धित इति चानुवर्तते । तेन तद्धित आमि ह्रस्वस्य लोपो भवति । पचतितरामिति । अन्यस्य त्वामो नुड् भवति वृक्षाणामिति ।

---

उ०—लोपाभावेन तत्राऽऽभ्यन्तरत्वान्नुट्प्राप्तिर्दुर्वारा भाष्यप्रामाण्येनाऽऽद्यन्तेभ्य आचारक्विपोऽनभिधानान् न दोषः । विभक्तेर्लुकीति । अव्ययादाप्सुप इत्यनेन । नन्वित्संज्ञाशब्दस्य मकारसापेक्षत्वात्कथं समासोऽत आह—समुदायेति । ततोऽर्थशब्देन चतुर्थीसमासः । न चार्थशब्दता-दर्थ्यं प्रति परित्राणस्यापि विशेषणतेति वाच्यम् । तस्य विभक्त्यर्थसमानार्थत्वेनादोषात् । लुप्तविभक्तेरेव सोऽर्थः । अर्थशब्दप्रयोगस्तु साधुत्वार्थव्याख्यानात् । उभयोरिति । लोपे कृते ह्रस्वा-भावान्नुडप्राप्तिः । नुटि कृते ह्रस्वाभावाल्लोपाप्राप्तिरिति भावः । ननु नुड्विधौ यस्येति चेत्यनुवृत्तौ वृक्षाणामित्यत्रापि लोपः स्यादत आह—तद्धित इति चेति । वस्तुतो [illegible] परस्य सुपाम एव ग्रहणमित्यत्र तात्पर्यम् । भाष्यं तु न्यायप्रदर्शनपरम् ।

---

* ६. ४. १४८. × ७. ३. ११३; ११४.

## श्रीग्रामण्योश्छन्दसि ॥ ७ । १ । ५६ ॥

अयं योगः शक्योऽवक्तुम्। कथं 'श्रीणामुदारो धरुणो रयीणाम्'× अपि तत्र सूतग्रामणीनाम्। इह तावच्छ्रीणामुदारो धरुणो रयीणाम् विभाषाऽऽमि नदीसंज्ञा* सा छन्दसि व्यवस्थितविभाषा भविष्यति। अपि तत्र सूतग्रामणीनामिति सूताश्च ग्रामण्यश्च सूतग्रामणि तत्र ह्रस्वनद्यापो नुडित्येव सिद्धम्।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥ ७ । १ । १ ॥

---

## इदितो नुम्धातोः ॥ ७ । १ । ५८ ॥

अथ धातोरिति किमर्थम्? अभैत्सीत् अच्छैत्सीत्+।

**नुम्विधावुपदेशिवद्वचनं प्रत्ययविध्यर्थम् ॥ १ ॥**

नुम्विधावुपदेशिवद्भावो वक्तव्यः। उपदेशावस्थायां नुम्भवतीति वक्तव्यम्।

---

प्र०— श्रीग्राम०। विभाषेति। वाऽऽमीत्यनेन। तत्र दृष्टानुविधिश्छन्दसीति श्रीणामित्येवं छन्दसि भविष्यति नतु श्रियामिति। सूताश्च ग्रामण्यश्च सूतग्रामणीति समाहारद्वंद्वं कृत्वैकशेषः क्रियत इति बोद्धव्यं न त्वेकशेषे कृते समाहारद्वंद्वः क्रियते। एवं हि बहुवचनं न स्यात्।

'भाष्ये त्वत्रोभयं कार्यमित्येतावत्प्रदर्शितम्।
क्रमस्तु स्वयमभ्यूह्य इष्टस्यार्थस्य सिद्धये' ॥ १ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपे सप्तमाध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥

---

इदितो नुम्धातोः। धातोरिति किमर्थमिति। किमधातुनिवृत्त्यर्थं धातुग्रहणमथ धातुसंज्ञाप्रवृत्त्यवस्थायामेव प्राक्प्रत्ययोत्पत्तेर्नुम्विधानार्थमिति प्रश्नः। आचार्यदेशीयस्त्वधातुनिवृत्त्यर्थं धातुग्रहणं मत्वाऽऽह—अभैत्सीदिति। सिच इदितो नुम्न भवति। उपदेशिवद्भाव इति। यथोन्दीत्यादीनामुपदेशावस्थायां नकारः प्रत्यय-

---

उ०— श्रीग्राम०। भाष्योक्तप्रयोगातिरिक्तप्रयोगस्तु वेदे नास्त्येवेति बोध्यम्।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते सप्तमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम्।

---

इदितो नुम् धातोः। इति प्रश्न इति। प्रयोजनद्वयसंभवेन संदेहात्प्रश्न इत्यर्थः। अस्य प्रयोजनस्याग्रे दूषयिष्यमाणत्वादाह—आचार्यदेशीय इति। उपदेशो यस्य नकारस्य स उपदेशी तद्वन्नुमिति वार्तिकार्थ इत्याह—यथेति। यत्किंचित्प्रत्ययस्य सर्वथा

---

× ऋग्वेद १०. ४५. ५. * १. ४. ५. + २. १. ४४.

किं प्रयोजनम् ? प्रत्ययविध्यर्थम् । उपदेशावस्थायां नुमि कृत इष्टः प्रत्ययविधिर्यथा स्यात् । कुण्डा हुण्डेति× ।

**इतरथा ह्यनकारे प्रत्ययः ॥ २ ॥**

अक्रियमाणे ह्युपदेशिवद्भावेऽनकारे यः प्रत्ययः प्राप्नोति स+ तावत्स्यात्तस्मिन्नवस्थिते नुम् । तत्र को दोषः ?

**तत्रायथेष्टप्रसङ्गः ॥ ३ ॥**

तत्रायथेष्टं प्रसज्येत । अनिष्टे प्रत्ययेऽवस्थिते नुम् । अनिष्टस्य प्रत्ययस्य श्रवणं प्रसज्येत ।

**धातुग्रहणसामर्थ्याद्वा तदुपदेशे नुम्विधानम् ॥ ४ ॥**

धातुग्रहणसामर्थ्याद्वा तदुपदेशे धातूपदेशे नुम्भविष्यति । ननु चान्यद्धातुग्रहणस्य प्रयोजनमुक्तम् ? किम् ? अभैत्सीत्, अच्छैत्सीदिति । नैतदस्ति प्रयोजनम् । प्रयोजनं नाम तद्वक्तव्यं यन्नियोगतः स्यात् । यच्चात्रेकारेण क्रियतेऽकारेणापि तच्छक्यं कर्तुम् ।

प्र०—विधिकाले संनिहितस्तथा नुमपीत्यर्थः । किं प्रयोजनमिति । नन्दिता नन्दक इत्यादि प्रत्यये परतो नुमि क्रियमाणेऽपि सिध्यतीति मत्वा प्रश्नः । प्रत्ययविध्यर्थमिति । इष्टप्रत्ययविध्यर्थमित्यर्थः । अनकार इति । असति नकारे यः प्रत्ययः प्राप्नोति स स्यादित्यर्थः । सांप्रतिकेषु शिक्षादिषु गुरुमत्सु संभवत्सु भाविगुरुमत्ताश्रयेण प्रत्ययविधानस्यायुक्तत्वात् । तत्र को दोष इति । नुमि कृतेऽपवादः प्रवर्तमान उत्सर्गं निवर्तयिष्यतीति भावः । तत्रायथेष्टप्रसङ्ग इति । उत्पन्न उत्सर्गे नुमि कृते सत्यामपि गुरुसंज्ञायामुत्सर्गेणैव प्रत्ययार्थस्य प्रत्ययोत्पत्तिनिमित्तस्याभिधानान्निमित्तवैकल्यादपवादाप्रवृत्तावुत्सर्गस्यैव श्रवणप्रसङ्गः । धातुग्रहणेति । अधातोरिदितोऽसंभवादधातुनिवृत्त्यर्थं धातुग्रहणं न भवतीति धातुसंज्ञाप्रवृत्त्यवस्थोपलक्षणार्थं विज्ञायते । तेन सत्यप्यङ्गाधिकारे भाव्यङ्गत्वाश्रयः पूर्वमेव नुम्भवति ततः प्रत्यय इत्यर्थः संपद्यते । प्रयोजनं नामेति । नियमेनावश्यंभावेन यदन्यथा साधयितुमशक्यं तत्प्रयोजनम् । सिचश्च नुमागमो धातुग्रहणमन्तरेणापि शक्यते निराकर्तुमित्यर्थः । यच्चात्रेति ।

उ०—प्राहेराह—इष्टेति । स स्यादिति । क्तिन् स्यादित्यर्थः । ननु भाविगुरुमत्तामाश्रित्य कुण्डेस्यादौ गुरोश्च हल इत्यप्रत्ययः सेत्स्यतीत्यत आह—सांप्रतिकेष्विति । निवर्तयिष्यतीति । लोपवज्जातनिवृत्तिः स्यादिति भावः । उत्पन्न इति । उत्सर्गापवादविषये जातनिवृत्तेरदर्शनेन प्रवृत्तस्य वचनशतेनापि बाधस्याशक्यत्वात्परदेशस्यावगन्तुत्वाच्चापवादाप्राप्तिरित्यपि बोध्यम् । नन्वेवमङ्गाधिकारो विरुध्येतेत्यत आह—तेन सत्यपीति । नियोगशब्दार्थमाह—निय-

× १. ३. १०३ + ३. ३. ९४.

## शे मुचादीनाम् ॥ ७ । १ । ५९ ॥

### शे तृम्पादीनाम् ॥ १ ॥

शे तृम्पादीनामुपसंख्यानं कर्तव्यम्। तृम्पति तृम्फति। किमर्थमिदम्? न नुमनुषक्ता एवैते पठ्यन्ते।

---

प्र०-सकारस्योच्चारणार्थ इकारः क्रियत इत्यकारेणापि सजित्येवं सकारः शक्य उच्चारयितुम्। तदेतदुक्तं भवति निरनुनासिक उच्चारणार्थः सिच इकार इतीदित्त्वाभावान्नुमभावः। अमंस्तेत्यादौ हनः सिजिति नलोपार्थात्कित्त्वविधानाज्ज्ञापकादसत्यपीदित्त्वे नलोपाप्रसङ्गः। नन्वन्यत्कित्त्वविधानस्य प्रयोजनमस्ति सिजाश्रयो नलोपो यथा स्यात्सार्वधातुकाश्रयो मा भूत्सिजाश्रयो हि नलोपोऽतोलोपेऽसिद्धः, न सार्वधातुकाश्रयः। समानाश्रयं ह्यसिद्धं नतु व्याश्रयम्। नैतदस्ति। असिद्धं बहिरङ्गमन्तरङ्ग इति सार्वधातुकाश्रयस्य नलोपस्य बहिरङ्गस्यान्तरङ्गेऽतोलोपे कर्तव्येऽसिद्धत्वादतोलोपाप्रसङ्गादुपदेशग्रहणानुवृत्त्याऽऽर्धधातुकोपदेशे यदकारान्तं तस्य लोपविधानाद्वा। तासेरपीकार उच्चारणार्थ इति नुमोऽप्रसङ्गः। मन्ताऽऽहन्तेत्यादावसिद्धवदत्राभादिति टिलोपस्यासिद्धत्वादनिदित्त्वेऽपि नलोपाप्रसङ्गः।

शे मुचादीनाम्। शे तृम्पादीनामिति। आदिशब्दः प्रकारे। तेन नोपधा गृह्यन्ते। तेषां नलोपे कृते नुमागमस्तस्य विधानसामर्थ्यादसिद्धवदत्राऽऽभादिति वा नलोपस्यासिद्धत्वादुपधात्वाभावाल्लोपाभावः। किमर्थमिति। य एवोपदेशे नकारः

---

उ०—मेनेति। तस्यापि व्याख्यानं यदन्यथेति। अकारेणापीति। प्रथमातिक्रमे कारणाभावादित्यर्थः। निरनुनासिक इत्यादि। इदं चिन्त्यम्। विधेयविषय उच्चारणार्थानामपीत्संज्ञाप्रवृत्तेः। तस्माद्भाष्योक्तमेव सम्यक्। नन्वमंस्तेत्यादावनिदितामिति नलोपस्याप्राप्त्या इदित्त्वं सार्थकमत आह—अमंस्तेति। सिजाश्रय इति। अहसातामित्यादावनुदात्तोपदेशेति विहितः। ननु सार्वधातुकाश्रय उपधालोपोऽप्याभीयत्वादसिद्धः स्यादेवेत्यत आह—समानाश्रयं हीति। बहिरङ्गस्येति। बहिर्भूततदपेक्षत्वात्। ननु तासेरिदित्त्वाभावे मन्तेत्यादौ टिलोपे तशब्दस्थानिकत्वेन ङितमाकारमाश्रित्य उपधानलोपः स्यादत आह—मन्तेत्यादाविति। लुटः प्रथमस्य डादेशः। वस्तुत उक्तरीत्या तासिरिदिदेव। सिचीव भाष्योक्तरीत्याऽत्र नुमभावः साध्यः। तदेवं धातुग्रहणं धातुपदेशावस्थायां नुमर्थमिति स्थितम्।

शे मुचादीनाम्। ननु तृम्पादयस्तुदादौ पठ्यन्ते तत्र व्यवस्थावाच्यादिशब्दाश्रयणे निरनुषङ्गानामपि नुम्स्यादत आह—प्रकारेति। प्रकारः सादृश्यम्। ननु तेषां नुमि परस्य मस्यानुस्वारपरसवर्णयोः पूर्वनस्य श्रवणप्रसङ्गोऽत आह—तेषां नलोप इति। अनिदितामित्यनेन। अस्य नुमोऽपि लोपः कुतो नेत्यत आह—तस्येति। विधानेति। अत एव मुचादिष्वपि लोपाभावः। असिद्धत्वादिति। चिणो लुङ्न्यायेन। भाष्ये तृपिव इति।

## लुप्तनकारत्वात् ॥ २ ॥

लुप्यतेऽत्र नकारोऽनिदितां हल उपधायाः क्ङिति [६. ४. २४] इति÷। यदि पुनरिम इदितः पठ्येरन्? नैवं शक्यम्। इह हि लोपो न स्यात्— तृपितः दृपित इति। यदि पुनरिमे मुचादिषु पठ्येरन्? न दोषः स्यात्। अथवा नैवं विज्ञायत इदितो नुम्धातोरिति। कथं तर्हि? इदितो नुम्। ततो धातोरिति।

## नेट्यलिटि रधेः ॥ ७ । १ । ६२ ॥

इमौ द्वौ प्रतिषेधावुच्येते। उभौ शक्याववक्तुम्। कथम्? एवं वक्ष्यामि

प्र०-पठ्यते तस्यैव श्रवणं भविष्यतीति प्रश्नः। नुमनुषक्ता इति। नुम्ग्रहणं नकारोपलक्षणार्थम्। यदीति। इदित्त्वे तु नुमः सिद्धिर्नच लोपः प्रसज्यते। यदि पुनरिति। नोपधानां मुचादिषु पाठे नुमः सिद्धिरित्यर्थः। अथवेति। मुचादिषु तावन्न पठिताः, गौरवप्रसङ्गश्च। नोपधानां मुचादिषु पाठेऽर्थनिर्देशः कर्तव्यः। अनोपधानामन्यत्र पाठेऽर्थो निर्देष्टव्य इति मत्वा परिहारान्तरोपन्यासः। इदितो नुमिति। नन्वेवं धातूपदेशावस्थायां नुन्न लभ्यते। नैष दोषः। धिन्विकृण्व्योर चेति ज्ञापकाद्धातूपदेशावस्थायां नुम् भविष्यति। अत्र ह्यागन्तुरिकार उच्चारणार्थ इत्यङ्गत्वाभावेऽपि नुमनुषक्तपाठस्येदमेव प्रयोजनम्। धातूपदेशावस्थायामेव नुम्यथा स्यादिति। यदि धातोरिति योगविभागः क्रियते तदा सर्वस्य सर्वत्र नुम्प्रसङ्गः। नैष दोषः। शे मुचादीनामिति शग्रहणस्य धातोरित्यत्र सिंहावलोकितन्यायेनापेक्षणाद्योगविभागस्येष्टसिद्ध्यर्थत्वाद्वा। अन्ये तु भाष्ये योगविभागदिक्प्रदर्शितेत्याहुः। तेन शे मुचादीनामित्यत्र श इति योगविभागः क्रियते। तत्र च धातोरिति वर्तते। ततो मुचादीनामिति पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थं तेनेष्टविषये नुमः सिद्धिः।

नेट्यलिटि रधेः। लिट्येवेति। इट्येव लिटीत्येवं तु नियमो न भवति। शास्त्र-

उ०-अनिट्कारिकासु श्यना निर्देशात्तौदादिकयोः सेट्त्वादिट्। इदित्पाठे हि सर्वत्र नुम्स्याल्लोपश्च न स्यादिति भावः। न पठिता इति। अनेन न्यासभेददोष उक्तः। दोषान्तरमाह— गौरवेति। द्विरर्थनिर्देशादिति भावः। अर्थो निर्देष्टव्य इति। अधुना तु तृप तृम्प तृप्सावित्यादिक्रमेण पठ्यन्ते। ननु धिन्वीतीका निर्देशादिव्प्रत्ययेऽङ्गस्य धातोर्नुमुपपन्न इति कथं ज्ञापकमत आह—अत्र हीति। अत्र चेदमेव भाष्यं मानम्। वस्तुतो विभक्तं धातोरिति सूत्रं पूर्वत्रापकृष्य तत्सामर्थ्यात्तदर्थलाभ इति बोध्यम्। ननु तर्हि शे सर्वधातोः प्रसङ्गोऽत आह—योगविभागस्येति। अत एवेदितो नुमिति चरितार्थम्। दिक्प्रदर्शितेति। अत्रारुचिबीजं तु भाष्यस्वारस्यभङ्गः। इष्टविषये। सनकारविषये।

नेट्यलिटि। इट्येवेति। एवं नियमे ररन्धेत्यत्र न स्याद्रधितेत्यत्र च स्यादिति

÷१. २. ४.

इटि लिटि रधेर्नुम्भवतीति । तन्नियमार्थं भविष्यति । लिट्येवेडादौ नास्यस्मिन्निडादाविति ।

आङो यि ॥ ७ । १ । ६५ ॥

इह कस्मान्न भवति ? आलभ्यते । अस्तु । अनिदितां हल उपधायाः क्ङिति [ ६. ४. २४ ] इति लोपो भविष्यति । इह तर्हि आलम्भ्या गौः पोरदुपधात् [ ३. १. ९८ ] इति यत्यवस्थिते नुम् । तत्र को दोषः ? आलम्भ्या एष स्वरः+ प्रसज्येत आलम्भ्या इति* चेष्यते । नैष दोषः । उक्तमेतद्धातुग्रहणसामर्थ्यादुपदेशे नुम्विधानमिति÷ ।

न सुदुर्भ्यां केवलाभ्याम् ॥ ७ । १ । ६८ ॥

अथ केवलग्रहणं किमर्थं न न सुदुर्भ्यामित्येवोच्येत ?

---

प्र०—स्येष्टसिद्ध्यर्थत्वात्कसौ रेधिवानिति भवति द्विर्वचने सत्येत्त्वाभ्यासलोपयोः कृतयोरिटि नुमागमस्तस्यौपदेशिककित्त्वाश्रयो लोपः । ये तु क्वसुं छान्दसमेव मन्यन्ते तेषां विचार एवायं नास्ति । छन्दसि दृष्टानुविधानात् ।

आङो यि । यत्यवस्थित इति । यकारादेः प्रत्ययस्य निमित्तत्वेनोपादानात्पूर्वमेव तेनोत्पत्तव्यमिति भावः । एष स्वर इति । कृदुत्तरपदप्रकृतिस्वरेण यतो नाव इत्याद्युदात्तत्वप्रसङ्गः । अन्तस्वरितत्वं चेष्यत इत्यर्थः । धातुग्रहणसामर्थ्यादिति । यीति विषयसप्तमी । तेन धातूपदेशावस्थायामेव यकारादौ प्रत्यये विषयभूते नुमागमस्ततोऽदुपधत्वस्य विघातात्ण्यत्प्रत्यये सतीष्टस्वरसिद्धिः ।

न सुदुर्भ्यां केवलाभ्याम् । उपसर्गात्खल्घञोरिति प्राप्तो नुम्प्रतिषिध्यते । केवलग्रहणमिति । इह केवलग्रहणेन समानजातीय उपसर्ग एव निवर्तयितव्य

---

उ०—मज्झयोपादानं सार्थकं स्यादिति भावः । ननु रेधिवानित्यत्र नुम्येत्त्वाभ्यासलोपौ न स्यातामत आह—कसाविति । एत्वाभ्यासलोपोत्तरं वस्वेकाजादितीट् । कृतद्वित्वानामेकाचां तत्र ग्रहात् । औपदेशिकेति । संयोगात्परत्वेनाऽऽतिदेशिककित्त्वाभावादिति भावः । ये त्विति । 'मघुष आगतं परिवद्भ्यमिति' विभाषा पूर्वाह्णेतिसूत्रस्थभाष्यप्रयोगविरोधोऽत्रार्थः । यत्तु भाष्येऽपि च्छान्दसः क्वसुरित्युच्यते तस्यायं क्वसुप्रयोगश्छान्दस इत्यर्थं इति न विरोधः ।

आङो यि । यकारादेरिति । यीत्यस्य परसप्तमीत्वात्पूर्वमदुपधत्वाद्यदेव स्यान्न तु ण्यदित्यर्थः । कृदुत्तरेति । यद्यपि ण्यत्यपि नुमा विहतनिमित्ततया वृद्धेरभावाद्रूपे न विशेषस्तथाऽपि स्वरे विशेष इत्यर्थः । अन्तस्वरितत्वमिति । कृदुत्तरपदप्रकृतिस्वरेणेत्यर्थः । ण्यति द्व्यनुबन्धकत्वाद्यतोऽनाव इत्यस्याप्रवृत्तेः । ननूपदेशे नुमि यीति सप्तम्यनुपपन्नेत्यत आह—विषयेति ।

न सुदुर्भ्याम् । अनेकस्य नुमः प्रकान्तत्वात्कस्यायं प्रतिषेध इत्यत्राऽऽह—उपसर्गादिति । अनन्तरत्वात्खल्घञोरित्यनुवर्तनाच्चेति भावः । समानजातीय इति । केवलशब्दस्य

---

+६. १. २१३; ६. २. १३९. * ३. १. १२४; ६. १. १८५; ६. २. १३९. ÷ ७. १. ५८.

सुदुरोः केवलग्रहणमन्योपसर्गप्रतिषेधार्थम् ॥ १ ॥

सुदुरोः केवलग्रहणं क्रियतेऽन्योपसृष्टान्मा भूदिति । प्रसुलम्भम् । नैषोऽस्ति प्रयोगः । इदं तर्हि । सुप्रलम्भम् । प्रेण व्यवहितत्वान्न भविष्यति । इदं तर्हि । अतिसुलम्भम् । कर्मप्रवचनीयसंज्ञाऽत्र बाधिका भविष्यति—सुः पूजायामतिरतिक्रमणे च [ १. ४. ९४; ९५ ] इति । यदा तर्हि नातिक्रमणं न पूजा ? इदं चाप्युदाहरणम् । सुप्रलम्भम् । ननु चोक्तं प्रेण व्यवहितत्वान्न भविष्य-

प्र०-इष्यते । स च सुदुर्भ्यां पूर्वो नास्त्यनभिधानात्प्रत्ययाभावात् । सुदुर्भ्यां परे तु तस्मिन्पञ्चमीनिर्देशादेव व्यवधाने प्रतिषेधो न भविष्यतीति प्रश्नः । नैषोऽस्ति प्रयोग इति । प्रयुक्तानामिदमन्वाख्यानं न त्वनेनापूर्वः शब्दोपजनः क्रियते । अपि च प्रारम्भादिविशिष्टायाः क्रियायाः सुकरत्वं दुष्करत्वं च प्रतिपाद्यमिति पूर्वं प्रेण धातोः संबन्धः पश्चात्तद्विशिष्टस्य सुदुर्भ्याम् । अतिसुलम्भमिति । सौकर्यादिविशिष्टधात्वर्थस्यातिर्विशेषणमिति पूर्वं सुदुर्भ्यां संबन्धः पश्चादतिना । इतरस्तु पूजाया अतिक्रमणस्य वा द्योतकोऽतिशब्द इति मत्वाऽऽह—कर्मप्रवचनीयसंज्ञेति । ततश्चोपसर्गत्वाभावादतः केवलावेवात्र सुदुराविति नुम्प्रतिषेधेन भाव्यम् । नहि विजातीयः केवलत्वं विहन्ति । यथा देवदत्तयज्ञदत्ताभ्यां केवलाभ्यां प्रवेष्टव्यमित्युक्ते पुरुषान्तरस्य प्रतिषिध्यते प्रवेशो नतु शुकादेरेवं सुदुरौ परस्परसहितौ विजातीयसहितावेकाकिनौ च केवलावेव भवतः । सुदुर्लभमतिसुलभं सुलभं दुर्लभमिति कृच्छ्राकृच्छ्रार्थौ च सुदुरौ क्रियाया विशेषकत्वादुपसर्गावेव खल्निमित्ततां प्रतिपद्येते । यदा तर्हीति । पूजातिक्रमणयोरतेः कर्मप्रवचनीयसंज्ञाविधानादन्यत्रोपसर्गत्वात्तत्सहितयोः सुदुरोः केव-

उ०—सजातीयान्तराभाववचनत्वात् । उपसर्ग इति । पूर्वसूत्रादुपसर्गपदानुवृत्तेः । अनभिधानादिति । तादृशस्थलेऽनभिधानेन खलादिप्रत्ययाभावादित्यर्थः । ननु शास्त्रेण प्रयोगः स्यादत आह—प्रयुक्तानामिति । अप्रयुक्ते शास्त्राप्रवृत्तेरिति भावः । अपि चेति । इदं चिन्त्यम् । सुकरत्वेन निर्णीतस्य प्रारम्भदर्शनात् । तस्मादनभिधानमेव युक्तम् । सदेव ध्वनयन्नाह—सौकर्यादिविशिष्टधात्वर्थस्येति । उपसर्गत्वाभावादिति । अत्रोपसर्गादित्यस्यानुवृत्तेरिति भावः । नन्वतिशब्दसत्त्वे कथं केवलत्वमत आह—नहीति । परस्परेति । सजातीयस्योभयान्यस्याभावात् । अत्र वदन्ति । किमत्र सुदुरोः परस्परसाहित्येन निमित्ततोत निरपेक्षतया । नाऽऽद्यः । सुलभमित्यसिद्ध्यापत्तेः । नान्त्यः । सुघटितवाक्ये केवलपदेनान्योपसर्गव्यावृत्तेरिवैतद्व्यावृत्तेरपि वक्तुं युक्तत्वादिति चिन्त्यमेतत् । केवलपदेन सूत्रोपस्थितातिरिक्तोपसर्गान्तरमेव व्यावृत्यते । अत एव सुलभमित्येवेति कैयटाशय इत्यन्ये । नन्वतिसुलम्भमित्यत्र नुम्कथम्, सोरपि कर्मप्रवचनीयत्वेनोपसर्गत्वाभावात् । अकृच्छ्रार्थे हि खल् । अकृच्छ्रत्वं पूजैव । अत एव भाष्ये सुः पूजायामित्यस्यापि ग्रहणमत आह—कृच्छ्राकृच्छ्रार्थौ चेति । एवं चोपसर्गत्वाभावात्खलेव न स्यात् । भाष्ये त्वनुवृत्तिप्रदर्शनार्थमेव तदुपादानम् ।

तीति ? नैष दोषः । सुदुर्भ्यामिति नैषा पञ्चमी । का तर्हि ? तृतीया । सुदुर्भ्यामुपसृष्टस्येति । व्यवहितश्चाप्युपसृष्टो भवति ।

**विभाषा चिण्णमुलोः ॥ ७ । १ । ६९ ॥**

**चिण्णमुलोरनुपसर्गस्य ॥ १ ॥**

चिण्णमुलोरनुपसर्गस्येति वक्तव्यम् । इह मा भूत् । प्रालम्भि । प्रलम्भंप्रलम्भम्* । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । इहोपसर्गादित्यपि प्रकृतं नेत्यपि+ तत्राभिसंबन्धमात्रं कर्तव्यम् । विभाषा चिण्णमुलोरुपसर्गान्नेति ।

**उगिदचां सर्वनामस्थानेऽधातोः ॥ ७ । १ । ७० ॥**

अधातोरिति किमर्थम् ? उखास्रत् पर्णध्वत् । अधातोरिति शक्यमवक्तुम् ।

---

प्र०—लत्वाभावान्नुम्भवत्येव । का तर्हीति । पञ्चमीपक्षेऽपि केवलग्रहणमविहुलम्भमित्येवमर्थं कर्तव्यमिति क्रमानुलङ्घनाय तृतीयैवाऽऽश्रयितव्येति भावः । वाक्यकारेण पठितं सुदुरोः प्रतिषेधो नुम्विधितत्वषत्वणत्वेष्वित्यत्तस्तन्मते नातिसुलभमिति सोहपसर्गत्वाभावान्नुम्न प्राप्नोति । भाष्यकारेण चात्र नुमागमोऽभ्युपगतस्तस्माद्वाक्यकारस्यापि केवलसुदुःशब्दविषय एव नुम्विधावुपसर्गसंज्ञानिषेधोऽभिमतः । षत्वेऽपि पूजायामेव । तथा च सुषिक्तं नाम किं तवात्रेति षत्वं च क्षेपे भवत्येव ।

विभाषा चिण्णमुलोः । लभेश्चेति नित्ये नुमि प्राप्ते विभाषाऽऽरभ्यते । चिण्णमुलोरिति । सोपसर्गस्य तु नित्यमेव नुम्भवति । उपसर्गान्नेति वाक्यभेदेन विकल्प एव प्रतिषिध्यत इति नित्यमेव नुम्भवति ।

उगिदचाम्० । अधातोरिति किमर्थमिति । अञ्चतिग्रहणान्नियमार्थाद्धातोर्निवृत्तिः

---

उ०—अकृच्छ्रत्वमात्रेण च न पूजेति भावः । एतेन सुदुरोरुपपदयोः खला घञो बाधात्सूत्रे घञ्ग्रहणं व्यर्थमित्यपि शङ्का समाहिता । कृच्छ्राकृच्छ्रातिरिक्तार्थयोस्तत्संभवात् । किंचास्मात्खल्कर्मण्येवेति भावेऽपि घञः संभवो बोध्यः । ननु सर्वथा केवलग्रहणस्य कर्तव्यत्वे भाष्ये तृतीयाश्रयणे को हेतुरत आह—क्रमेति । पञ्चमी हि परशब्दयोग उपपदविभक्तिः । तृतीया तु कारकविभक्तिरिति तृतीयैवोचितेति बोध्यम् । तस्मादिति । भाष्यकारेणात्र नुमभ्युपगमादित्यर्थः । प्रसङ्गादाह षत्वेऽपीति । इदं च प्रथमाध्यायशेषभाष्ये ध्वनितम् । षत्वं चेति । येन सुलम्भं नाम किं त्वायाऽत्रेत्यादौ क्षेपे नुमित्येके ।

विभाषा० । प्राप्तविभाषेयमित्याह—लभेश्चेति । नित्यमेवेति । अनुपसर्गस्येति विकल्पस्यैव प्रतिषेधादिति भावः । विकल्प एवेति । अनन्तरत्वादिति भावः ।

उगिदचाम्० । नियमार्थादिति । न पाचामिति लुप्तनकारनिर्देशेन नलोपिन एव यथा स्यात्तु पूजार्थस्येत्येतदर्थमचामित्यस्य चारितार्थ्यात्कथं त्वदुक्तनियमार्थत्वम् । भाष्य-

---

* ७. १. ६४. + ७. १. ६७; ६८.

कस्मान्न भवति उखास्रत् पर्णध्वदिति ?

उगित्यञ्चतिग्रहणात्सिद्धमधातोः ॥ १ ॥

उगित्यञ्चतिग्रहणादधातोः सिद्धम् । अञ्चतिग्रहणं नियमार्थं भविष्यति । अञ्चतेरेवोगितो धातोर्नान्यस्योगितो धातोरिति । इदं तर्हि प्रयोजनमधातुभूतपूर्वस्यापि यथा स्यात् । गोमन्तमिच्छति गोमत्यति गोमत्यतेरप्रत्ययो गोमानिति ।

नपुंसकस्य झलचः ॥ ७ । १ । ७२ ॥

झलचो नुम्विधावुगित्प्रतिषेधः ॥ १ ॥

झलचो नुम्विधावुगिल्लक्षणस्य+ प्रतिषेधो वक्तव्यः । गोमन्ति ब्राह्मणकुलानि, श्रेयांसि, भूयांसि । ननु च झलक्षण उगिल्लक्षणं बाधिष्यते । कथमन्य-

प्र०-सिद्धेति भावः । गोमानिति । क्विबन्ता धातुत्वं न जहतीति धातुरयमित्यञ्चतिग्रहणान्नियमार्थान्न स्यात् । अधातुग्रहणात्तु भवति । तस्य ह्येतत्प्रयोजनमवस्थान्तरेऽपि यस्याधातुत्वं दृष्टं तस्य संप्रतिधातुत्वेऽपि नुम्यथा स्यादिति । अथात्र कथं दीर्घत्वम् । यावताऽत्वसन्तस्य चाधातोरित्यधातोस्तद्विधीयते ? उच्यते । अधातोरिति तत्र योगविभागः क्रियते । तत्र चासन्तस्येत्यनुवृत्त्याऽत्वन्तस्य पर्युदासाभावः ।

नपुंसकस्य । गोमन्तीति । परत्वाज्झलक्षणे नुमि कृते पुनःप्रसङ्गविज्ञानादुगिल्लक्षणः प्राप्नोतीति तस्य प्रतिषेधो वक्तव्यः । ननु चोत । व्यक्तौ पदार्थे सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति भावः । इतर आकृतिपक्षमाश्रित्याऽऽह— कथमन्यस्येति । उभयोर्नुमोः प्रसङ्गे परस्य प्रतिबन्धादप्रतिपत्तौ प्राप्तायां विप्रतिषेधे परं कार्यमिति वचनेन परो नुम्विधीयमान उत्तरकालप्राप्तनिमित्तवन्तं पूर्वनुमं नैव

उ०-प्रामाण्येनाचामित्यस्याऽऽवृत्त्या तस्यापि सुलभत्वात् । अत एवास्य परनिपातः । अत एव च नलोपेन निर्देशोऽकारलोपाकरणं चेति बोध्यम् । ननु क्विबन्तस्य प्रातिपदिकत्वं न धातुत्वमत आह—क्विबन्ता इति । अत एवात्वसन्तस्येत्यत्राधातुग्रहणं चरितार्थम् । न चौपदेशिकस्योगितो धातोश्चेदञ्चतेरेवेति नियमेन सिद्धेऽधातुग्रहणं व्यर्थमेवेति वाच्यम् । सामान्यापेक्षनियमार्थत्वात् । तत्फलं नामधातूनामुगितश्चेति ङीबभाव इत्याहुः । तत्र चासन्तस्येति योगविभागसामर्थ्यादेकदेशानुवृत्तिः । तेन 'पिण्डग्रः' इत्यादौ दीर्घाभावः ।

नपुंसकस्य० । परत्वादिति । झलन्तलक्षणावकाशः-सर्पींषि । उगिल्लक्षणस्य गोमानिति । पुंसि यौगपद्यासंभवरूपो विरोधोऽत्र । उभयोरन्त्यादचः परत्वासंभवात् । सावकाशत्वेनापवादत्वासंभवादाह—व्यक्ताविति । इदमुपलक्षणम् । विप्रतिषेधसूत्रभाष्योक्तस्य तन्न्या-

+७. १. ७०.

स्योच्यमानमन्यस्य बाधकं स्यात् ? असति खल्वपि संभवे बाधनं भवत्यस्ति च संभवो यदुभयं स्यात् । किंच स्याद्यद्यत्रोगिल्लक्षणोऽपि स्यात् ? द्वयोर्नकारयोः श्रवणं प्रसज्येत । न व्यञ्जनपरस्यैकस्य वाऽनेकस्य वा श्रवणं प्रति विशेषोऽस्ति । ननु च प्रतिज्ञाभेदो भवति । श्रुतिभेदेऽसति किं प्रतिज्ञाभेदः करिष्यति । ननु च श्रुतिकृतोऽपि भेदोऽस्ति । इह तावच्छ्रेयांसि भूयांसीति परस्यानुस्वारे× कृते पूर्वस्य श्रवणं प्राप्नोति । तथा कुर्वन्ति

---

प्र०–शक्नोति बाधितुं तथा चोच्यते पुनःप्रसङ्गविज्ञानात्सिद्धमिति । अन्यस्येति । अनुमः । अन्यस्येति । सनुम इत्यर्थः । स्यादेतदन्यस्याप्युच्यमानं कार्यमन्यस्य बाधकं भवति । यथोक्तमग्रेरीत्त्वाद्वरुणस्य वृद्धिर्विप्रतिषेधेनेत्यत आह—असति खल्वपीति । क्रमेण च नुमो विधानादन्त्यादचः परत्वं संभवति । यथा पचतीति धात्वपेक्षं लट्शपोः । प्रतिज्ञाभेद इति । एकस्य प्रतिज्ञैको नकार इत्यपरस्य द्वौ नकाराविति । श्रुतिभेदेऽसतीति । कथं पुनः श्रुतिभेदाभावो यावताऽनेकहलुच्चारणेनाधिकः कालो व्याप्यत एकहलुच्चारणे त्वल्पः । उच्यते । अच्कालव्यतिरेकेण व्यञ्जनानि कालान्तरं नाऽऽक्षिपन्तीति दर्शनाश्रयेणैतदुक्तम् । यत्तु शास्त्रे व्यञ्जनानां कालः परिगण्यते तद्गुरुलाघवनिरूपणाय । अनेकोच्चारणे हि प्रयत्नस्य गौरवं भवति । लौकिके तु प्रयोगे गुरुलाघवानादराच्छ्रुत्यभेद उच्यते । अन्ये तु व्यञ्जनानां कालभेदमिच्छन्त्येव । परस्यानुस्वार इति । अयोगवाहनामट्सूपदेशाज्झल्त्वाभावात्पूर्वस्य नकारस्यानुस्वारो नास्ति । ननु च वर्णग्रहणे जातिग्रहणाद्द्वयोर्नकारयोरेकोऽनुस्वार आदेशो विधास्यते । नैतदस्ति । स्थानिभेदादनुस्वारादेशद्वयप्रसङ्गात् । न इति वा गुणत्वादेकत्वसंख्याया विवक्षितत्वादेकस्यैव नकारस्यानुस्वारः स्यान्नतु द्वयोः ।

---

उ०–यमूलभूतस्य दृष्टान्तस्याहि । नन्वङ्गस्यैकत्वादन्यस्येत्ययुक्तमत आह—अनुम इति । अग्नेरिति । तत्र वृद्धौ नास्ति संभव ईत्वस्य, इद्वृद्धावित्यनेन बाधादिति भावः । नन्वेकस्मादन्त्यादचः परत्वं द्वयोर्नुमोर्न संभवतीत्यस्ति च संभव इत्ययुक्तमत आह—क्रमेण चेति । यद्यपि प्रयोगे न संभवति विधानकाले तु संभवतीति भावः । भाष्ये—व्यञ्जनपरस्येति । व्यञ्जनं परमस्येति बहुव्रीहिः । अधिकः काल इति । द्वयोर्व्यञ्जनयोर्मात्रा कालः, एकस्य त्वर्धमात्रा काल इति भावः । दर्शनाश्रयेणेति । व्यञ्जनानामकालत्वमिति यच्छिक्षाकृतां मतं तन्मतेनेदमुक्तमिति भावः । यत्तु शास्त्र इति । 'ऐ औच्' 'हयवरट्' सूत्रादौ । गुरुलाघवनिरूपणायेति । प्रयत्नगौरवेण कल्पितकालभेदेनेत्यर्थः । अन्ये त्विति । अत एव हलो यमामित्यादि चरितार्थम् । ननु परस्यानुस्वारे कृते तमेव झलमाश्रित्य पूर्वस्यापि भवत्वित्यत आह—प्रयोगेति । लघु पाठमनाश्रित्येदम् । स्थानिभेदादिति । तस्योच्चारणप्रसङ्ग इत्यर्थेन जातेस्तत्प्रसङ्गाभावाज्जातिग्रहणमशक्यमिति भावः । न इति वेति । इदं चिन्त्यम् । अनु-

---

× ८. ३. २४.

कृषन्तीति परस्यानुस्वारपरसवर्णयोः÷ कृतयोः पूर्वस्य णत्वं× प्राप्नोति। अथैकस्मिन्नपि नुमि णत्वं कस्मान्न भवति? अनुस्वारीभूतो णत्वमतिक्रामति। कृते तर्हि परसवर्णे कस्मान्न भवति? असिद्धे च परसवर्णः।

**विप्रतिषेधात्सिद्धम्॥ २॥**

विप्रतिषेधात्सिद्धमेतत्। झलक्षणः क्रियतामुगिल्लक्षण इति झलक्षणो भविष्यति विप्रतिषेधेन। झलक्षणस्यावकाशः। सर्पींषि धनूंषि। उगिल्लक्षणस्यावकाशः। गोमान् यवमान्। इहोभयं प्राप्नोति—गोमन्ति ब्राह्मणकुलानि, यवमन्ति ब्राह्मणकुलानि, श्रेयांसि भूयांसीति। झलक्षणो भविष्यति विप्रतिषेधेन। ननु च पुनःप्रसङ्गविज्ञानादुगिल्लक्षणः प्राप्नोति।

**पुनःप्रसङ्ग इति चेदमादिभिस्तुल्यम्॥ ३॥**

पुनःप्रसङ्ग इति चेदमादिभिस्तुल्यमेतद्भवति+। तद्यथा—युष्मदस्मदोरमादिषु कृतेषु पुनःप्रसङ्गाच्छिशीलुङ्नुमो न भवन्ति। एवं झलक्षणे कृते पुनःप्रसङ्गादुगिल्लक्षणो न भविष्यति। यदप्युच्यतेऽसति खल्वपि संभवे बाधनं भवत्यस्ति च संभवो यदुभयं स्यादिति। सत्यपि संभवे बाधनं भवति। तद्यथा—दधि ब्राह्मणेभ्यो दीयतां तक्रं कौडिन्यायेति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति। एवमिहापि सत्यपि संभवे झलक्षण उगिल्लक्षणं बाधिष्यते। अथवाऽस्त्वत्रोगिल्लक्षणोऽपि। ननु चोक्तं द्वयोर्नकारयोः श्रवणं प्रसज्येतेति। परिहृतमेतन्न व्यञ्जनपरस्यैकस्य वाऽनेकस्य वा श्रवणं प्रति विशेषोऽस्ति। ननु चोक्तं प्रतिज्ञाभेदो भवतीति। श्रुतिभेदेऽसति प्रतिज्ञाभेदः किं करिष्यति। ननु च श्रुतिकृतोऽपि भेद उक्त इह तावच्छ्रेयांसि भूयांसीति परस्यानुस्वारे कृते पूर्वस्य श्रवणं प्रसज्येत। कुर्वन्ति कृषन्तीति परस्यानुस्वारपरसवर्णयोः

प्र०—णत्वमतिक्रामतीति। न प्राप्नोतीत्यर्थः। अनुस्वारे कर्तव्ये पूर्वत्रासिद्धमिति णत्वस्यासिद्धत्वादनुस्वारो नकारस्य भवति नतु णत्वम्। णत्वे च कर्तव्येऽसिद्ध एवानुस्वार इति णत्वाभावः। असिद्धे च परसवर्ण इति। असिद्धप्रकरणे परसवर्णस्य विधानाण्णत्वे कर्तव्ये तस्यासिद्धत्वाण्णत्वाभावः। विप्रतिषेधादिति। व्यक्तिपदार्थाश्रयसहितात्। तद्यथा दधीति। यद्यपि दृष्टान्ते सामान्यविशेषभावो बाधहेतुर्दार्ष्टान्तिके तु विप्रतिषेधे परमेवेति नियमस्तथाऽपि विनाऽपि विरोधेन दृष्टं बाधकत्वमिति प्रदर्शनाय दृष्टान्तोपन्यासः। परस्येति। अयोगवाहानामविरोधो-

उ०—भाष्ये संभवाद्वा अविप्रतिषेधात्। अन्यथा नकारान्तरं न स्यात्। ननु विप्रतिषेधाश्रयणं [illegible] तेनैव सिद्धत्वात्पुनः [illegible] आह—उदाहरति। [illegible]। विनाऽपि विरोधेनेति। असंभवकल्पनेत्यर्थः। भाष्ये—परस्यानुस्वारपरसवर्णयोः कृतयोरिति।

÷८. १. २४; ८. ४. ५८. ×८. ४. २. +७. १. २९.

कृतयोः पूर्वस्य णत्वं प्राप्नोतीति । नैष दोषः । अयोगवाहानामविशेषेणोपदेश-श्चोदितः+ । तत्रेह तावच्छ्रेयांसि भूयांसीति परस्यानुस्वारे कृते तस्य झल्ग्रह-णेन ग्रहणात्पूर्वस्यानुस्वारो भविष्यति । कुर्वन्ति कृषन्तीति परस्यानुस्वारपर-सवर्णयोः कृतयोस्तस्य झल्ग्रहणेन ग्रहणात्पूर्वस्यानुस्वारपरसवर्णौ भविष्यतः ।

नैव वा पुनरत्रोगिल्लक्षणः प्राप्नोति । किं कारणम् ? मिदचोऽन्त्यात्परः [ १. १. ४७ ] इत्युच्यते न च द्वयोर्मितोरचामन्त्यात्परत्वे संभवोऽस्ति । कथं तर्हीमौ द्वौ मितावचामन्त्यात्परौ स्तः बहूनड्वांहि* ब्राह्मणकुलानीति ? विनिमित्तावेतौ ।

**तत्र बहूर्जि प्रतिषेधः ॥ ४ ॥**

बहूर्जि प्रतिषेधो वक्तव्यः बहूर्जि ब्राह्मणकुलानीति ।

**अन्त्यात्पूर्वं नुममेके ॥ ५ ॥**

अन्त्यात्पूर्वं नुममेक इच्छन्ति । किमविशेषेणाऽऽहोस्विद्बहूर्जावेव ? किं-चातः ? यद्यविशेषेण काष्ठतक्षीति भवितव्यम् । अथ बहूर्जावेव काष्ठतङ्क्षीति भवितव्यम् । एवं तर्हि बहूर्जावेव । बहूर्ञ्जि ।

---

प्र०—पदेशाश्रयणादनुस्वारस्य झल्त्वात्पूर्वस्याप्यनुस्वारो भवति । ततो द्वयोरनुस्वारयोः श्रुतिं प्रति विशेषाभावः । कुर्वन्तीत्यत्रापि पूर्वस्य नकारस्यानुस्वारपरसवर्णयोः कृतयोः परसवर्णस्यासिद्धत्वाण्णत्वस्यातिक्रमः । न च द्वयोरिति । ननु च यद्यपि प्रयोगे पूर्वेण नुमा परस्य नुमोऽन्त्याजपेक्षमानन्तर्यं विहन्यते तथाऽपि क्रमेण विधाने द्वयोः संभव-त्येव परत्वमित्युक्तम् । नैष दोषः । प्रयोगाश्रयेणैतदुक्तम् । प्राधान्यात्प्रयोगस्यान्त्यादचः परो मित्प्रयोक्तव्य इत्यानन्तर्यमेवात्र संश्रितम् । न च द्वयोर्नुमोरेकाजपेक्षमानन्तर्यं संभवति । पचतीत्यत्र तु सार्वधातुके परतः शब्विधानाद्विकरणव्यवधानमाश्रितमेव । विनिमित्ताविति । भिन्नक्रमावित्यर्थः । उकारात्पर आमामः परो नुम् । तत्रेति । झलच इति द्वंद्वाश्रयणे दोषः । बहव ऊर्जो येषामिति बहुव्रीहिः । यद्यविशेषेणेति । काष्ठं तक्ष्णुवन्तीति क्विपि कृते जसः शिभावे च ककारष-

---

उ०—कृतयोरपीत्यर्थः । इदं पराभ्युपगमरीत्या । वस्तुतः परसवर्णस्यासिद्धत्वात्ततः पूर्वमेवानु-स्वारः । विनाऽपि विरोधेनेति । प्रयोगेऽसंभवरूपविरोधेन विनाऽपीत्यर्थः । विधानकाले यौगपद्यासंभवरूपो विरोधोऽस्त्येवेति बोध्यम् । णत्वस्यातिक्रम इति । अप्राप्तिरित्यर्थः । आनन्तर्यमेवेति । प्रयोगकालिकमेवाऽऽश्रितं नतु विधानकालिकमित्यर्थः उकारात्पर इति । आम्नुमोः प्राप्तयोः पूर्वं परत्वादुकारात्पर आम् ततः पुनःप्रसङ्गविज्ञानादामः परो नुमित्यर्थः । अचः परस्य झल इत्यर्थे दोषाभावादाह - द्वंद्वेति । ककारषकारयोरिति ।

---

\+ प्रत्याहारसूत्रम् ५ * ७. १. १८; ७२.

स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः । अच इत्येषा पञ्चमी । अच उत्तरो यो झलतदन्तस्य नपुंसकस्य नुमा भवितव्यं यश्चात्राच उत्तरो नासौ झलनापि तदन्तं नपुंसकं, यदन्तं च नपुंसकं नासावच उत्तरः । इहापि तर्हि न प्राप्नोति—काष्ठतङ्क्षीति । अत्र योऽच उत्तरो झल्न तदन्तं नपुंसकं, यदन्तं च नपुंसकं नासावच उत्तरः । नैतदस्ति । झल्जातिः प्रतिनिर्दिश्यते । अच उत्तरा या झल्जातिरिति । यदि पञ्चमी कुण्डानि वनानीत्यत्र न प्राप्नोति । एवं तर्हीकोऽचि विभक्तौ [ ७. १. ७३ ] इत्यत्राचः सर्वनामस्थान इत्येतदनुवर्तिष्यते । एवमपि षष्ठ्याभावान्न प्राप्नोति । सर्वनामस्थान इत्येषा सप्तम्यच इति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति तस्मिन्निति निर्दिष्टे पूर्वस्य [ १. १. ६६ ] इति ।

### इकोऽचि विभक्तौ ॥ ७ । १ । ७३ ॥

अज्ग्रहणं किमर्थम् ?

**इकोऽचि व्यञ्जने मा भूत् ।**

इकोऽचीत्युच्यते व्यञ्जनादौ मा भूत् । त्रपुभ्याम् त्रपुभिः ।

**अस्तु लोपः**

अस्त्वत्र नुम् । नलोपः प्रातिपदिकान्तस्य [ ८. २. ७ ] इति नलोपो भविष्यति ।

**स्वरः कथम् ।**

पञ्चत्रपुभ्याम् पञ्चत्रपुभ्यः । इगन्ते द्विगावित्येष स्वरो* न प्राप्नोति ।

**स्वरो वै श्रूयमाणेऽपि**

प्र०—कार्योर्मध्ये नुम्प्राप्नोति तस्य झल्परत्वादनुस्वारप्रसङ्गः । अच इत्येषेति । झलच इति न द्वंद्वः, किं तर्हि झलिति लुप्तषष्ठीकं पदमच इति तु पञ्चम्यन्तम् । कुण्डानीति । इगन्तस्योत्तरसूत्रेण सिध्यतीत्यकारान्तस्यैव नुमोऽप्राप्तिरुच्यते । एवं तर्हीति । वाक्यभेदेनाजन्तस्य सर्वनामस्थाने नुम्विधीयते । सर्वनामस्थान इत्येषेति । ननु पञ्चमीसप्तम्योर्द्वयोरपि सावकाशत्वात्परत्वात्पञ्चम्यैव प्रकल्पिकया भाव्यम् । एवं तर्हीष्टवाचित्वात्परशब्दस्य सप्तम्यपि क्वचित्प्रकल्पिका भवतीत्यदोषः ।

इकोऽचि विभक्तौ । अज्ग्रहणमिति । हलादौ नुमो लोपविधानात्तन्निवृत्त्यर्थमज्ग्रहणं नोपयुज्यत इति प्रश्नः । स्वरो न प्राप्नोतीति । नुमेगन्तताया विघातात् ।

उ०—ककारात्पूर्वस्येष्यत इति भावः । एवं तर्हीति । अनुवृत्तिसामर्थ्यादिक इति साहचर्याच्चेति भावः ।

इकोऽचि वि० । लुप्ते किं नेत्यनेन कैमुतिकन्यायः प्रदर्शित इत्याह—स्वर इति ।

* ६. २. २९.

श्रूयमाणेऽपि नुमि स्वरो भवति । पञ्चत्रपुणा पञ्चत्रपुण इति ।

लुप्ते किं न भविष्यति ।

लुप्त इदानीं किं न भविष्यति ? किं पुनः कारणं श्रूयमाणेऽपि नुमि स्वरो भवति ? संघातभक्तोऽसौ नोत्सहतेऽवयवस्येगन्ततां विहन्तुमिति कृत्वा ततः श्रूयमाणेऽपि नुमि स्वरो भवति । इदं तर्हि—अतिराभ्याम्, अतिराभिः । नुमि कृते रायो हलि [ ७. २. ८५ ] इत्यात्वं न प्राप्नोति । इदमिह संप्रधार्यम्—नुम्क्रियतामात्वमिति किमत्र कर्तव्यम् ? परत्वादात्वम् । इह तर्हि प्रियतिसृभ्याम्, प्रियतिसृभिः, नुमि कृते तिसृभावो+ न प्राप्नोति । इदमिह संप्रधार्यम्—नुम्क्रियतां तिसृभाव इति । किमत्र कर्तव्यम् ? परत्वात्तिसृभावः । अथेदानीं तिसृभावे कृते पुनःप्रसङ्गान्नुम्कस्मान्न भवति ? सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेवेति । अत उत्तरं पठति—

**इकोऽचि विभक्तावज्ग्रहणं नुम्नुटोर्विप्रतिषेधार्थम् ॥ १ ॥**

प्र०—लुप्ते किं नेति । स्वरे कर्तव्ये नलोपस्य शास्त्रेणैवासिद्धत्वं प्रतिपाद्यते नतु प्रयोगे नकारस्य सद्भावः । ततश्च नुमः सद्भावेऽपि यत्र स्वरो भवति तत्रासद्भावे कथं न स्यादित्यर्थः । संघातभक्त इति । अङ्गस्य विधानाद्बहिरङ्गत्वाच्च नुमोऽन्तरङ्गः स्वरः पूर्वमेव प्रवर्तते । अतिराभ्यामिति । अतिरिभ्यामिति स्थिते नुमि कृते तेन व्यवधानाद्रैशब्दस्याऽऽत्वं न प्राप्नोति । सुब्विधौ नलोपस्यासिद्धत्वाच्च । अथापि पदाङ्गाधिकारे तस्य च ग्रहणं भवति तदुत्तरपदस्य चेति रैशब्दान्तस्याङ्गस्याऽऽत्वं विधीयत इति नास्ति नुमाऽङ्गस्य व्यवधानम् । तथाऽपि नकारस्याऽऽत्वं प्राप्नोति तस्मिन्पूर्वस्य यणि सत्यतिर्याभ्यामिति प्राप्नोति । परत्वादात्वमिति । आत्वमनित्यं नुमि कृते तेन व्यवधानादप्रसङ्गादथवा शब्दान्तरप्राप्त्या नुमि कृते नकारस्य प्रसङ्गात् । अकृते त्विकारस्य नुमप्यनित्यः । कृत आत्वे प्राप्त्यभावात् । परत्वात्तिसृभाव इति । शब्दान्तरप्राप्त्या नुमनित्यः । तिसृभावस्तु नुमि कृते तेन व्यवधानान्न प्राप्नोतीत्यनित्यः । स हि यद्यपि त्रिशब्दान्तस्याङ्गस्य विधीयते तद्भक्तत्वाच्च नुमव्यवधायकस्तथाऽपि निर्दिश्यमानस्याऽऽदेशा भवन्तीति त्रेरेव तिसृभावेन भाव्यम् ।

उ०—हेत्वन्तरमप्याह—बहिरङ्गत्वाच्चेति । विभक्तिनिमित्तकत्वादिति भावः । विभक्तिविषये नुमिति भाष्याशय इत्यन्ये । तेन व्यवधानादिति । समुदायभक्तस्यावयवं प्रति व्यवधायकत्वादिति भावः । नलोपे कृतेऽपि दोष एवेत्याह—नलोपस्येति । तथाऽपि नकारस्येति । वस्तुतो नुमि कृते रैशब्दान्ताङ्गाभावादात्वं न स्यादित्येव वक्तुं युक्तम् । भाष्ये परत्वादात्वमिति । न चाऽऽकारस्य वृद्धितया वृद्ध्यौत्वेति पूर्वविप्रतिषेधान्नुमेव स्यात् । तत्र वृद्धिशब्दविहितवृद्धेरेव ग्रहणात् । अत्र चेदमेव भाष्यं मानम् । रैशब्दस्याऽऽत्वमिति पक्षेऽप्याह—अथवा शब्दान्तरेति ।

+ ७. २. ९९.

इकोऽचि विभक्तावज्ग्रहणं क्रियते नुमो नुड्विप्रतिषेधेन यथा स्यात्+—त्रपूणाम्, जतूनाम्।

**इतरथा हि नुमो नित्यनिमित्तत्वान्नुडभावः ॥ २ ॥**

अक्रियमाणे ह्यज्ग्रहणे नित्यनिमित्तो नुम्, कृतेऽपि नुटि प्राप्नोत्यकृतेऽपि। नित्यनिमित्तत्वान्नुमि कृते नुटोऽभावः स्यात्। एतदपि नास्ति प्रयोजनम्। क्रियमाणेऽपि वा अज्ग्रहणेऽवश्यमत्र नुडर्थो यत्नः कर्तव्यः पूर्वविप्रतिषेधो वक्तव्यः×। इदं तर्हि प्रयोजनं-नुटि कृते नुम्मा भूदिति। किं च स्यात्? त्रपूणाम्, जतूनाम्—नामि [ ६. ४. ३ ] इति दीर्घत्वं न स्यात्। मा भूदेवम्। नोपधायाः [ ६. ४. ७ ] इत्येवं भविष्यति। इह तर्हि—शुचीनाम् 'इन्हन्पूषार्यम्णां शौ', 'सौ च' [ ६. ४. १२, १३ ] इत्यस्मान्नियमान्न प्राप्नोति दीर्घत्वम्। अर्थवद्ग्रहणे नानर्थकस्येत्येवं न भविष्यति। नैषा परिभाषेह शक्या विज्ञातुम्। इह हि दोषः स्यात्—वाग्मीति। एवं तर्हि लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति।

प्र०—स च नुमा व्यवहित इति तिसृभावस्याप्राप्तिस्तदेवमुभयोरनित्ययोः परत्वात्तिसृभावः। त्रपूणामिति। सत्यज्ग्रहणे द्वयोरपि नुम्नुटोरनित्यत्वाद्विप्रतिषेधे सति नुमचिरतृज्वद्भावेभ्यो नुडिति पूर्वविप्रतिषेधान्नुड् भवति। तस्मिंश्च नामीति दीर्घत्वमसति त्वज्ग्रहणे कृताकृतप्रसङ्गित्वान्नित्यत्वान्नुमेव स्यात्। नुडर्थो यत्न इति। अज्ग्रहणं च कर्तव्यं पूर्वविप्रतिषेधश्च वक्तव्य इति यत्नद्वयमाश्रयणीयम्। तत्राज्ग्रहणमकृत्वैक एव नुडर्थो यत्नः कर्तव्य इत्यर्थः। नुटि कृत इति। यत्नान्तरेण नुटि कृते नुम्प्राप्नोतीत्यर्थः। किंच स्यादिति। नलोपे कृते दोषाभावं मन्यते। नामीति। नलोपस्य सुब्विधावसिद्धत्वादजन्तत्वाभावात्। इह तर्हीति। इन्हन्निति नियमः सर्वस्योपधालक्षणस्य दीर्घस्येति व्याख्यातम्। नैषेति। अनि-

उ०—इदमप्युक्तरीत्या चिन्त्यम्। स च नुमेति। विभक्तावित्यस्याङ्गविशेषणत्वमेव न्याय्यमितीदं चिन्त्यम्। त्रिशब्दान्ताङ्गाभावात्तिसृप्राप्तिरिति वक्तुं युक्तम्। विप्रतिषेधस्याज्ग्रहणसाध्यत्वं दर्शयति—सत्यज्ग्रहण इति। पूर्वविप्रतिषेधादिति। नुटोऽवकाशोऽग्नीनाम्। नुमोऽवकाशस्त्रपुणे। नुम्नुटोर्विशेषं दर्शयति—तस्मिंश्चेति। यत्नः कर्तव्य इति। नित्यमपि बाधित्वा पूर्वविप्रतिषेधवचनसामर्थ्यान्नुडित्यर्थः। यत्नान्तरेणेति। पूर्वविप्रतिषेधरूपेणेत्यर्थः। सकृद्गतिन्यायमनाश्रित्येदम्। ननु 'नलोपः प्रातिपदिकान्तस्ये'ति नलोपे कृते 'नामी'ति दीर्घः सिध्यतीत्यत आऽऽह—नलोपस्येति। ननु स नियमोऽनन्तरत्वात्सर्वनामस्थाने चेति दीर्घस्यैवेत्यत आह—सर्वस्येति। अत एवानुनासिकस्य क्वीति दीर्घ-

+ ७. १. ५४. × ७. १. ९५.

## उत्तरार्थं च ॥ ३ ॥

उत्तरार्थं तर्ह्यज्ग्रहणं कर्तव्यम्। अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः [ ७. १. ७५ ] अजादौ यथा स्यात्। इह मा भूत्—अस्थिभ्याम्, अस्थिभिरिति। यद्युत्तरार्थं स्यात्तत्रैवायमज्ग्रहणं कुर्वीत। इह क्रियमाणे यदि किंचित्प्रयोजनमस्ति तदुच्यताम्? इहापि क्रियमाणे प्रयोजनमस्ति। किम्? अजादौ यथा स्यात्, इह मा भूत्—त्रपु जतु। एतदपि नास्ति प्रयोजनम्। विभक्तावित्युच्यते न चात्र विभक्तिं पश्यामः*। प्रत्ययलक्षणेन×। न लुमताऽङ्गस्य [ १. १. ६३ ] इति प्रत्ययलक्षणस्य प्रतिषेधः। एवं तर्हि सिद्धे सति यदज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो भवतीह कश्चिदन्योऽपि प्रकारः प्रत्ययलक्षणं नामेति। किमेतस्य ज्ञापने प्रयोजनम्? हे त्रपु, हे त्रपो, अत्र गुणः÷ सिद्धो भवतीति।

इकोऽचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम्।
स्वरो वै श्रूयमाणोऽपि लुप्ते किं न भविष्यति ॥ १ ॥
रायात्वं तिसृभावश्च व्यवधानान्नुमा अपि।
नुड्वाच्य उत्तरार्थं तु इह किंचित्त्रपो इति ॥ २ ॥

---

प्र०—नस्मन्ग्रहणान्यर्थवता चानर्थकेनेति वचनात्। तथा च वाग्मिन इत्यादावपि नियमाद्दीर्घाभावः। तत्रैवायमिति। एवं हि स्वरितत्वं न प्रतिज्ञेयं भवति। प्रत्यक्षश्रुतिसंभवे चानुमानं नाऽऽश्रयितव्यं भवति। हे त्रपु हे त्रपो इति। हे त्रपु इति प्राप्ते हे त्रपो इति भवतीत्यर्थः। केचित्तु रूपद्वयमिष्यत इत्याहुः। क्वचित्प्रत्ययलक्षणं लुमता लुप्तायामपि संबुद्धौ भवतीत्येतदज्ग्रहणेन ज्ञाप्यते नतु सर्वत्रेति ते वदन्ति।

---

उ०—स्यापि नियमः। तत्रात्र वा करणे विशेषं दर्शयति—एवं हीति। अनुमानमिति। स्वरितत्वाद्ध्युत्तरत्र शब्दोऽनुमीयते। सूक्ष्मं शब्दोच्चारणमेवात्रानुमानम्। ननु प्रत्ययलक्षणप्रतिषेधाभावस्य ज्ञापितत्वाद्धे त्रप्वित्ययुक्तमत आह—इति प्राप्त इति। केचिरिवति। भस्य घेङ्हस्वादिति सूत्रस्थं भाष्यं मानम्। प्रकृतभाष्ये कश्चिदन्योऽपि प्रकार इत्यपिशब्दश्च। अपिर्हि प्रत्ययलक्षणाभावं समुच्चिनोति। तदुपपत्तिं दर्शयति—क्वचिदिति। प्रत्ययलक्षणप्रतिषेधस्यानित्यत्वमनेन ज्ञाप्यत इति तदाशयः। सर्वत्रेत्यस्य काल इति शेषः। भाष्यश्लोके—व्यवधानादिति। नुमा व्यवधानाद्रायात्वं तिसृभावश्च न प्राप्नुत इत्यपि न, परत्वात्सिद्धेरिति शेषः। संहिताया अविवक्षणान्नुमा—अपीति दीर्घाभावः। पूर्वविप्रतिषेधसिद्ध्यर्थमज्ग्रहणमित्यस्योत्तरं 'नुड् वाच्य' इति। तु इहेत्यत्रेकोऽसवर्ण इति प्रकृतिभावः। त्रपो इतीत्यत्र संबुद्धौ शाकल्यस्येति प्रगृह्यत्वम्।

---

* ७. १. २३. × १. १. ६२. ÷ ७. ३. १०८.

**तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य ॥ ७ । १ । ७४ ॥**

किमिह पुंवद्भावेनातिदिश्यते ? नुम्प्रतिषेधः । कथं पुनः पुंवदित्यनेन नुम्प्रतिषेधः शक्यो विज्ञातुम् ? वतिनिर्देशोऽयं, कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् । तद्यथा—'उशीनरवन्मद्रेषु यवाः' । सन्ति न सन्तीति । 'मातृवदस्याः कलाः' । सन्ति न सन्तीति । एवमिहापि पुंवद्भवति, पुंवन्न भवतीति वाक्यशेषं समर्थयिष्यामहे । यथा पुंसो न नुम्भवत्येवं तृतीयादिषु भाषितपुंस्कस्यापि न भवतीति । किमुच्यते नुम्प्रतिषेध इति न पुनरन्यदपि पुंसः प्रतिपदं कार्यमुच्यते यत्तृतीयादिषु विभक्तिष्वजादिषु भाषितपुंस्कस्यातिदिश्येत ? अनारम्भात्पुंसि । न हि किंचित्पुंसः प्रतिपदं कार्यमुच्यते यत्तृतीयादिष्वजादिषु भाषितपुंस्कस्यादितिश्येत । नुम्प्रकृतस्तत्र किमन्यच्छक्यं विज्ञातुमन्यदतो नुम्प्रतिषेधात् ।

**पुंवदिति नुम्प्रतिषेधश्चेद्गुणनाभावनुडौत्त्वप्रतिषेधः ॥ १ ॥**

---

प्र०— तृतीयादिषु० । किमिहेति । अन्यत्र पराश्रयाणि कार्याण्यतिदिश्यन्ते नतु स्वाश्रयकार्याभावः । इह तु विपर्ययो दृश्यत इति मत्वा प्रश्नः । कथं पुनरिति । पुंवदित्यनेन नुम्प्रतिषेधोऽशक्योऽतिदेष्टुम् । नहि पुंसि नुम्प्रतिषेधो विहितः । कामचारश्चेति । यत्र क्रिया शब्देन नोपात्ता तत्र कामचारः । नतु ब्राह्मणवत्क्षत्रिये वर्तितव्यमित्यादावुपात्तक्रियेऽतिदेशे । प्रतिपत्ता चोपमाने भावाभावयोरन्यतरमवगत्य वाक्यशेषं कल्पयति । तत्र पुंसि नुमभावदर्शनान्नपुंसके पुंवदतिदेशान्नुमभावः प्रतीयते । तत्रेह शास्त्रे यथालक्ष्यं क्वचिद्भवतीत्यस्याध्याहारः । क्वचिन्न भवतीत्यस्य । क्वचिदुभयस्य । यथा स्थानिवदतिदेशे । तथा च वाय्वोरित्यादौ स्वाश्रयलोपाभावः । नहि किंचिदिति । तस्माच्छसो नः पुंसीति नत्वातिदेशस्तृतीयादिषु पुंवद्भावातिदेशात्पूर्वसवर्णदीर्घाभावाच्चेह न संभवति । नुम्प्रकृत

---

उ०— तृतीयादिषु भा० । अन्यत्रेति । गोतो णिदित्यादौ । तत्र हि णिदाश्रयवृद्ध्याद्यतिदिश्यते । स्वाश्रयाभावस्तु नातिदिश्यते । नैवमिह । यतः स्वाश्रययोर्नुमह्रस्वयोरभावो दृश्यते । पुंस्त्वाश्रयनत्वादिकं तु न दृश्यत इत्यर्थः । नहि पुंसीति । पुंसि यद्विहितं तन्नपुंसकेऽपि भवतीति हि पुंवदित्यस्यार्थ इति भावः । ननु क्वचिन्नियमदर्शनात्कथं कामचारोक्तिरत आह—यत्र क्रियेति । कथं पुनः कदाचिद्भावस्य प्रतीतिः कदाचिदभावस्येति विभागोऽत आह—प्रतिपत्ता चेति । शास्त्रे च लक्ष्यानुसाराद्व्यवस्थेत्याह—यथालक्ष्यमिति । यथा स्थानिवदिति । अचः परस्मिन्नित्यत्र तन्त्रादिन्यायेन वाक्यभेदाश्रयणादिति भावः । न संभवतीति । पूर्वं च नत्वस्येह विषयेऽसंभवान्नहि

पुंवदिति नुम्प्रतिषेधश्चेद्गुणनाभावनुडौत्वानां* प्रतिषेधो वक्तव्यः । गुणः— ग्रामण्ये ब्राह्मणकुलाय । गुणः ॥ नाभावः—ग्रामण्या ब्राह्मणकुलेन । नाभावः ॥ नुट्—ग्रामण्यां ब्राह्मणकुलानाम् । नुट् ॥ औत्वम्—ग्रामण्यां ब्राह्मणकुले । ह्रस्वत्वमप्रतिषिद्धं ह्रस्वाश्रयाश्चैते विधयः प्राप्नुवन्ति ।

**ह्रस्वाभावार्थं च ॥ २ ॥**

किं च ? नुम्प्रतिषेधार्थं च । कथं पुनरत्राप्रकृतस्यासंशब्दितस्य ह्रस्वत्वस्य प्रतिषेधः शक्यो विज्ञातुम् ?

**अर्थातिदेशात्सिद्धम् ॥ ३ ॥**

नैवं विज्ञायते भाष्यते पुनाननेन शब्देन सोऽयं भाषितपुंस्कः, भाषितपुंस्कस्य शब्दस्य पुंशब्दो भवतीति । कथं तर्हि भाष्यते पुमानस्मिन्नर्थे सोऽयं भाषितपुंस्कः, भाषितपुंस्कस्यार्थस्य पुंवदर्थो भवतीति ।

---

प्र०—इति । अनेन प्रत्यासत्तिमाश्रयति । ह्रस्वत्वमप्रतिषिद्धमिति । तस्याप्रकृतत्वात् । अर्थातिदेशात्सिद्धमिति । यद्यपि प्रकरणमनपेक्ष्य व्याप्त्याश्रयेणापि ह्रस्वाभावः सिध्यति तथापि संभवात्परिहारान्तरमाश्रितम् । यदि कार्यातिदेशः स्यात्तदा प्रकृतत्वाप्रकृतत्वलक्षणो भेदः स्यादर्थे त्वतिदिश्यमाने नास्त्ययं भेदः । नैवं विज्ञायत इति । यदा शब्देऽन्यपदार्थे कार्यातिदेशः स्यात्तदा प्रकृतत्वात्तस्यैव नुमः प्रतिषेधः स्यान्न ह्रस्वस्य । भाष्यते पुमानस्मिन्नर्थ इति । अर्थोऽन्यपदार्थ आश्रीयते, स चार्थो नपुंसकलक्षणो विरोधान्नाऽऽश्रीयते । नहि नपुंसकेऽर्थे पुंसो भाषणमुपपद्यते । तस्माच्छब्दप्रवृत्तिनिमित्तलक्षणोऽर्थोऽन्यपदार्थत्वेनाऽऽश्रीयते । तद्योगाच्चाभिधेयं नपुंसकं तदपि भाषितपुंस्कमुच्यते । तस्यार्थस्य पुंस्त्वातिदेशाद्द्वावपि नुम्ह्रस्वौ न भवतः । पुंसि द्वयोरप्यभावात् । अर्थस्य चापौरुषेयत्वादतिदेशासंभवात्तद-

---

उ०—किंचिदित्युक्तमिति भावः । भाष्ये—ग्रामण्यां कुल इति । पुंवत्त्वाभावे तु नुमि ग्रामणिनीत्येव । संभवादिति । व्यापित्वाच्चेत्यपि द्रष्टव्यम् । भाष्ये पुंशब्दो भवतीत्यस्य पुंशब्दवत्कार्यं भवतीत्यर्थः । भाष्येऽस्मिन्नर्थे इति । यत्रार्थे प्रवृत्तिनिमित्तलक्षणे बुद्धिस्थे सतीत्यर्थः । नपुंसकलक्षण इति । व्यक्तिरूप इत्यर्थः । प्रवृत्तिनिमित्तेति । यथा ग्रामण्यादिशब्दानां ग्रामनयनादि । ननु प्रवृत्तिनिमित्तस्य पुंवत्त्वेऽपि तदाश्रयस्य क्लीबत्वसत्त्वेन नुमह्रस्वौ दुर्वारावत आह—तद्योगाच्चेति । यदप्यभिधेयं नपुंसकं तदपि भाषितपुंस्कमुच्यत इत्यन्वयः । तत्रापि पक्षे फलतः कार्यातिदेशः संपद्यत इत्याह—तस्यार्थस्येति । अभिधेयस्य क्लीबरूपार्थस्येत्यर्थः । नन्विदमसंगतम् । अर्थस्याजादितृतीयादिविभक्तिपरत्वासंभवात् । तदुक्तं स्त्रियाः पुंवदिति सूत्रे भाष्ये । न ह्यर्थेन पौर्वापर्यं संभवतीति चेन्न, न । अर्थातिदेशादित्यस्यार्थविशिष्टशब्दरूपातिदेशात्सिद्धमित्यर्थेनादोषात् । भाषितपुंस्कक्लीबत्व-

---

* ७. १. १११; १२०; ७. १. ५४; ७. १. ११९.

**तद्धितलुक्प्रतिषेधश्च ॥ ४ ॥**

तद्धितलुकश्च प्रतिषेधो वक्तव्यः पीलुर्वृक्षः । पीलु फलम्* । पीलुना पीलुन इति ।

**न वा समानायामाकृतौ भाषितपुंस्कविज्ञानात् ॥ ५ ॥**

न वा वक्तव्यम् । किं कारणम् ? समानायामाकृतौ भाषितपुंस्कविज्ञानात् । समानायामाकृतौ यद्भाषितपुंस्कम् । आकृत्यन्तरे चैतद्भाषितपुंस्कम् । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? एतदप्यर्थनिर्देशात्सिद्धम् ।

**ई च द्विवचने ॥ ७ । १ । ७७ ॥**

किमुदाहरणम् ? 'अक्षी ते इन्द्र पिङ्गले' । नैतदस्ति । पूर्वसवर्णेनाप्येतत्सिद्धम्× । इदं तर्हि—'अक्षीभ्यां ते नासिकाभ्याम्'† इदं चाप्युदाहरणम्—अक्षी

---

प्र०—तिदेशद्वारेणानेककार्यातिदेश एवायं संपद्यते । तत्र यद्यप्यन्तरङ्गो ह्रस्वस्तथाऽप्यपवादविषयं प्रकल्प्योत्सर्गाणां प्रवर्तनान्नात्र प्रवर्तते । ह्रस्वाभावाच्च गुणादीनां निमित्ताभावादप्रवृत्तिः सिद्धा । तद्धितलुगिति । अथातिदेशस्यैव प्रयोजनान्तरं चोद्यमुखेनोपन्यस्यते । फले लुगित्योरणो लुकि कृते पीलुशब्दो वृक्षाकृतौ पुंलिङ्गः । फलाकृतौ नपुंसकलिङ्ग इति पुंवद्भावानुमोऽप्रसङ्गः । नवेति । नन्वाकृतिरेवान्यपदार्थत्वेनाऽऽश्रिता भाषितपुंस्कशब्दस्य तु भाषितपुंस्कव्यपदेशो नैवाऽऽश्रितः । सत्यम् । साक्षाच्छब्दस्य भाषितपुंस्कव्यपदेशो नास्ति । अभिधेयद्वारकस्तु केन निवार्यते । तत्र पीलुशब्दो वृक्षाकृतौ पुंलिङ्गः, फलाकृतौ नपुंसकलिङ्ग इति पुंवद्भावाप्रसङ्गः ।

ई च द्विवचने । पूर्वसवर्णेनेति । अक्षि औ इति स्थिते छान्दसात्पुं-

---

उ०—विशिष्टार्थवाचकशब्दस्य पुंस्त्वविशिष्टार्थवाचकशब्दरूपातिदेशात्क्लीबत्वस्य निवृत्त्या तत्प्रयुक्तकार्याप्राप्तिरित्याशयात् । अर्थातिदेशद्वारा कार्यातिदेशाश्रयणे फलं दर्शयति—अनेककार्येति । असिद्धत्वातिदेश इति पुंस्त्वस्यायमाहार्यादेशस्तत्फलमनेककार्यातिदेश इत्यन्ये । प्रकल्प्येति । अपवादशास्त्रवैयर्थ्यमेतन्मूलम् । अत्राप्यर्थघटितातिदेशाश्रयणवैयर्थ्यम् । नन्वर्थस्यान्यपदार्थत्वात्तद्धितलुक्याकृतिभेदात्प्रतिषेधोऽनर्थक इत्यत आह—अर्थातिदेशस्यैवेति । वार्तिके तद्धितलुकः प्रतिषेध इति समासः । तद्धितलुगन्तस्येत्यर्थः । ननु समानायामाकृतौ भाषितपुंस्केत्युक्त्या शब्दस्यान्यपदार्थत्वं भाति तदयुक्तमिति शङ्कते—नन्विति । साक्षादिति । भाष्यं तु फलितार्थकथनपरमिति भावः । अनेन पूर्वभाष्यस्य मदुक्तरीत्या व्याख्यानं सूचितम् । वृक्षाकृतौ । वृक्षत्वव्याप्यजातौ एवं फलाकृतावित्यपि । पीलोः फलमिति व्युत्पत्तावपि फलत्वावान्तरजातिरेव प्रवृत्तिनिमित्तमिति भावः ।

ई च द्वि० । ननु परत्वान्नुमि तेन व्यवधानात्पूर्वं सवर्णदीर्घेण न भाव्यम् । न च पुंवद्भावः । अभाषितपुंस्कत्वादत आह—छान्दसादिति । ननु नुमः पूर्वं दीर्घोऽस्त्वत

---

* ४, ३ १६३. × ६. १. १०२. † ऋग्वेद १०, १६३, १. । अथर्व० २, ३३, १.

ते इन्द्र पिङ्गले । ननु चोक्तं पूर्वसवर्णेनाप्येतत्सिद्धमिति ? न सिध्यति । नुमा* व्यवहितत्वात्पूर्वसवर्णो न प्राप्नोति । छन्दसि नपुंसकस्य पुंवद्भावो वक्तव्यो 'मधोर्गृभ्णामि मधोस्तृप्ता इवाऽऽसत' इत्येवमर्थम् । पुंवद्भावेन नुमो निवृत्तिर्नुमि निवृत्ते पूर्वसवर्णेनैव सिद्धम् । स्वरार्थस्तर्हीकारो वक्तव्यः× । उदात्तस्वरो यथा स्यान्नपुंसकस्वरो मा भूदिति । ननु च पुंवद्भावातिदेशादेव स्वरो भविष्यति । अशक्यः पुंवद्भावातिदेशः स्वरे तन्त्रमाश्रयितुम् । इह हि दोषः स्यात् । मध्वस्मिन्नस्ति मधुर्मास इति+ । स तर्हि पुंवद्भावो वक्तव्यः ? न वक्तव्यः । प्रकृतं÷ पुंवदिति वर्तते ।

---

प्र०–वद्भावाच्छीभावे नुमि चासति प्रथमयोः पूर्वसवर्ण इत्यनेन । नुमा व्यवहितत्वादिति । प्रथमयोः पूर्वसवर्ण इत्यत्राक इति वर्तते । तेनाग्चोः स्थाने पूर्वसवर्णदीर्घ उच्यमानो नुम्व्यवधाने नास्तीत्यक्षिणी इति प्राप्नोति । परत्वाच्च नुम्प्राप्नोति । ईकारस्तु विधीयमानः परत्वान्नुमं बाधते । तेन शीभावे कृते पूर्वसवर्णेनाक्षी इति सिध्यति । नुमि निवृत्त इति । अप्रवृत्तिरेव निवृत्तिः । शीभावोऽपि पुंवद्भावान्न भवति । स्वरार्थ इति । उदात्तग्रहणानुवर्तनादीकार उदात्तः । नपुंसकस्वर इति । 'नब्विषयस्यानिसन्तस्ये'त्याद्युदात्तत्वम् । ननु चेति । अव्युत्पत्तिपक्षे चोद्यते । व्युत्पत्तिपक्षे त्वशेर्निदिति नित्त्वादाद्युदात्तत्वेन भाव्यम् । मधुर्मास इति । मित्वर्थे मासतन्वोर्मधोर्ञ चेति यत उत्पन्नस्य 'लुगकारेकाररेफाश्च वक्तव्या' इति लुकि कृते मासे पुंसि मधुशब्दो वर्तत इत्याद्युदात्तत्वं न स्यात् । तस्माद्यस्यान्यत्र नपुंसकत्वं दृष्टं तस्यासत्यपि नपुंसकत्व आद्युदात्तत्वमिष्यत इति पुंवद्भावेऽपि स्वरानिवर्तनात्स्वरार्थमीकारो विधेयः । स तर्हीति । मधोर्गृह्णातीत्येवमाद्यर्थः । प्रकृतमिति । वाक्य-

---

उ०–आह–परत्वाच्चेति । एतत्सूत्रसत्त्वे यथा सिध्यति तथा दर्शयति–ईकारस्त्विति । इतरः प्रकारान्तरेणैतत्सूत्रं विनाऽपि नुमो निवृत्तिं दर्शयति—छन्दसि नपुंसकस्येति । भाष्ये—मधोस्तृप्ता इत्यादौ क्षीरवाची नित्यनपुंसको मधुशब्दः । नन्वीकारविधावपि कथं तस्यान्तोदात्तत्वमत आह–उदात्तेति । नब्विषयस्येति । नपुंसकविषयस्येत्यर्थः । अव्युत्पत्तीति । अत्र पक्षे पुंवत्त्वेन नपुंसकत्वाभावान्नब्विषयस्येत्यस्याप्रवृत्तौ प्रातिपदिकस्वरेणान्तोदात्तत्वमिति भावः । व्युत्पत्तीति । अत्र पक्षे सत्यपि पुंवत्त्व आद्युदात्तत्वमेवेतीकारो न वक्तव्य एवेति भावः । तस्माद्यस्यान्यत्रेति । नब्विषयस्येत्यत्र विषयशब्दो न नित्यनपुंसकपरः । मध्वस्मिन्नित्यत्र मधुशब्दस्य माक्षिकमद्यमकरन्दान्यतमवाचकस्य शाश्वतकोशसंमतोभयलिङ्गस्य भाष्यसंमतस्वरानापत्तेः ।

"मकरन्दस्य मद्यस्य माक्षिकस्यापि वाचकः ।
अर्धर्चादिगणे पाठात्पुंनपुंसकयोर्मधुः" ॥

---

* ७. १. ७३. × ७. १. ७५. + ४. ४. १२८. ÷ ७. १. ७४.

नाभ्यस्ताच्छतुः ॥ ७ । १ । ७८ ॥

कस्यायं प्रतिषेधः ? नुम इत्याह । तन्नुमो ग्रहणं कर्तव्यम् ? न कर्तव्यम् प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'इदितो नुम्धातोः' [ ७. १. ५८ ] इति । तद्वा अनेकग्रहणेन व्यवच्छिन्नमशक्यमनुवर्तयितुम् । एवं तर्हि सर्वनामस्थान इति+ वर्तते, सर्वनामस्थाने यत्प्राप्नोति तस्य प्रतिषेधः । तद्वै बहुतरकेण ग्रहणेन व्यवच्छिन्नमशक्यमनुवर्तयितुम् । अथेदानीं व्यवहितमपि शक्यतेऽनुवर्तयितुं, नुमेवानुवर्त्यः, इहार्थमुत्तरार्थं च । इह चैव प्रतिषेधः सिद्धो भवतीह चाऽऽच्छी-नद्योर्नुम् [ ८० ] इति नुम्ग्रहणं न कर्तव्यं भवति ।

आच्छीनद्योर्नुम् ॥ ७ । १ । ८० ॥

इह कस्मान्न भवति ? अदती घ्नती लुनती पुनती । लोपे× कृतेऽवर्णा-

प्र०–भेदेन संबन्धः क्रियते । 'छन्दसि नपुंसकं पुंव'दित्येकं वाक्यम् । 'अस्थ्यादीनां छन्दसि द्विवचन ईकारो भवती'ति द्वितीयं वाक्यम् ।

नाभ्यस्ताच्छतुः । कस्यायमिति । आच्छीनद्योर्नुमिति नुम्ग्रहणाद्व्यवहितानुवृत्तिर्नाऽऽश्रिता । नचानन्तरः प्रतिषेधार्ह इति प्रश्नः । एवं तर्हीति । 'उगिदचां सर्वनामस्थानेऽधातो'रित्यतः सर्वनामस्थानं निषेध्यलक्षणार्थं विज्ञायते । सर्वनामस्थाने यत्प्राप्नोति तदभ्यस्ताच्छतुर्न भवतीति नुम एव प्रतिषेधः संबध्यते । बहुतरकेणेति । नुमागमश्चतुर्भिर्योगैर्विच्छिन्नः सर्वनामस्थानं तु पञ्चभिरिति प्रकर्षप्रत्ययनिर्देशः ।

आच्छीनद्योर्नुम् । इह कस्मादिति । सर्वत्रैवावर्णस्य निवृत्त्या भाव्यम् । कचिल्लुका, कचिच्छ्लुना, कचिदेकादेशेन, कचिच्छ्नाभ्यस्तयोरात इति लोपेन । तत्रावश्यं भूतपूर्वगतिराश्रयितव्या । अवर्णनिवृत्तिशास्त्रस्य वा नुमागमविधानात्पूर्वं विप्रतिषेधादप्रवृत्तिस्ततश्चात्रापि प्रसङ्ग इति भावः । लोपे कृत इति । नित्यवाद-

उ०– इति शाश्वतः । अत्र सूत्रेऽनुवृत्तावक्ष्यादीनामेव द्विवचन एव पुंवत्वं स्यान्नतु मधोरित्याशयवत आह–वाक्यभेदेनेति ।

नाभ्यस्ता० । नन्वनन्तरस्यायोग्यत्वाद्व्यवहितस्यैव प्रतिषेधो भविष्यतीति प्रश्नानुपपत्तिरत आह—आच्छीति । यद्यत्र नुमोऽनुवृत्तिस्तर्हि तत्र तदुपादानं व्यर्थमिति स्पष्टमेवेत्यर्थः । न चानन्तर इति । शत्रन्ताद्विधानाभावादित्यर्थः । निषेध्यलक्षणार्थमिति । निषेध्योपलक्षणार्थमित्यर्थः ।

आच्छीनद्यो:० । कचिदित्यादि । अदतीत्यादौ लुका, जुह्वतीत्यादौ श्लुना, तुदतीत्यादावेकादेशेन, लुनतीत्यादौ श्नाभ्यस्तयोरिति । तत्रावश्यमिति । सांप्रतिकावर्णान्तादुत्तरस्य शतुरसंभवात् । विप्रतिषेधादिति । परत्वान्नुम एव प्रवृत्त्या ततः पूर्वं लुगादीनामप्रवृत्तिरित्यभिमानः । क्वचित्तु पाठः प्रतियन्धादिति । नुम्विधेरनवकाशत्वप्रसङ्गेन प्रतियन्धात्पूर्वमप्रवृत्तिरित्यर्थः । अयमेव युक्तः पाठः । ननु

+७. १. ७०. ×२. ४. ७२; ६. ४. ११२.

ावात् । किं तर्ह्यस्मिन्योग उदाहरणम् ? याती यान्ती । अत्राप्येकादेशे+ कृते
प्रपवर्गाभावान्न प्राप्नोति । अन्तादिवद्भावेन व्यपवर्गः । उभयत आश्रये
ान्तादिवत् । नोभयत आश्रयः करिष्यते । नैवं विज्ञायतेऽवर्णान्ताच्छतुर्नु-
नवतीति । कथं तर्हि ? अवर्णान्नुम्भवति । तच्चेदवर्णं शतुरनन्तरमिति ?

## शप्श्यनोर्नित्यम् ॥ ७ । १ । ८१ ॥

नित्यग्रहणं किमर्थम् ? विभाषा मा भूदिति । नैतदस्ति प्रयोजनम् । सिद्धो-
त्र पूर्वेणैव× । तत्राऽऽरम्भसामर्थ्यान्नित्यो विधिर्भविष्यति । तदेतन्नित्यग्रहणं
ांन्यासिकं तिष्ठतु तावत् ।

## सावनडुहः ॥ ७ । १ । ८२ ॥

### अनडुहः सावाम्प्रतिषेधो नुमोऽनवकाशत्वात् ॥ १ ॥

अनडुहः सावाम्प्रतिषेधः प्राप्नोति । किं कारणम् ? नुमोऽनवकाशत्वात् ।
नवकाशो नुमामं* बाधते ।

### न वाऽवर्णोपधस्य नुम्वचनात् ॥ २ ॥

न वैष दोषः । किं कारणम् ? अवर्णोपधस्य नुम्वचनात् । अवर्णोपधस्य
मं वक्ष्यामि । तदवर्णग्रहणं कर्तव्यम् ? न कर्तव्यम् । प्रकृतमनुवर्तते । क्व

---

—न्तरङ्गत्वाच्च । पूर्वोक्तेनैवाभिप्रायेण चोदयति—किं तर्हीति । इतरः सांप्रतिकमवर्णा-
तं दर्शयितुमाह—यातीति । नैवं विज्ञायत इति । एवं हि विज्ञायमानेऽवर्णं शता
ोभयमाश्रितं स्यात् । अवर्णान्नुम्भवतीति । अवर्णात्परं इत्यर्थः । शत्रवयवव्यति-
िक्तश्चावर्णो गृह्यते, आदित्युपादानसामर्थ्यात् । तच्चेदवर्णमिति । शत्रवयवस्तकारः
ातृशब्देनोच्यते । नह्यन्यथैकादेशे कृते शतुरनन्तरमवर्णं भवति । 'उभयत आश्रये च
ान्तादिव'दित्युक्तम् । तस्माच्छत्रवयवस्तकारः शतृशब्देनोच्यते । शत्रवयवाकारव्यति-
िक्तं चावर्णमेकादेशात्मकमाश्रीयत इति न कश्चिद्दोषः ।

सावनडुहः । आमागमः सर्वनामस्थानमात्रे विधीयमानः सोरन्यत्र सावकाशो
ऽनवकाशेन नुमा बाध्येतेति मत्वाऽऽह—अनडुहः साविति । अवर्णोपधस्येति ।
च चाऽऽमा विनाऽवर्णोपधत्वसंभव इति निमित्तमेव नुम आमिति बाध्यबाधकभावा-

---

—विप्रतिषेधान्निरवकाशत्वाद्वा पूर्वं नुमो लोपलुकोरप्रवृत्तिरत आह—नित्यत्वादिति । पूर्वोक्ते-
ति । निरवकाशत्वरूपेणेत्यर्थः । व्यतिरिक्तश्चेति । तदवयवग्रहणे तु व्यभिचाराभाव इति
ावः । एकादेशेऽवर्णे शत्रनन्तरत्वं न संभवतीत्यत आह—शत्रवयव इति ।

शप्श्यनो० । [ भाष्ये ] सांन्यासिकमिति । पूर्वसूत्रे वाग्रहणानुवृत्तौ तात्पर्यग्रहणार्थं
दावश्यकमिति भावः । अन्यथा सामर्थ्येनात्रैव वैकल्पिकत्वं स्यादिति बोध्यम् ।

सावनडुहः । वार्तिके प्रतिषेधशब्देनाभाव उच्यते । निमित्तमेवेति । तथा चोपजी-

---

+ ६. १. १०१. × ७. १. ८०. * ७. १. ९८.

प्रकृतम् ? आच्छीनद्योर्नुम् [ ७. १. ८० ] इति । यदि तदनुवर्ततेऽनडुहि यावन्त्यवर्णानि सर्वेभ्यः परो नुम्प्राप्नोति । नैष दोषः । 'मिदचोऽन्त्यात्परः' [ १. १. ४७ ] इत्यनेन यत्सर्वान्त्यमवर्णं तस्मात्परो भविष्यति ।

**पुनःप्रसङ्गविज्ञानाद्वा सिद्धम् ॥ ३ ॥**

अथवा पुनःप्रसङ्गान्नुमि कृत आम्भविष्यति ।

**यथाऽऽत्त्वादिषु द्विर्वचनम् ॥ ४ ॥**

तद्यथा—जग्ले मम्ले ईजतुः ईजुरित्यात्त्वादिषु* कृतेषु पुनःप्रसङ्गाद्-द्विर्वचनं भवत्येवमत्रापि नुमि कृत आम्भविष्यति । नैष युक्तः परिहारः । विप्रतिषेधे पुनःप्रसङ्गो विप्रतिषेधश्च द्वयोः सावकाशयोर्भवति । इह पुनरनवकाशो नुमामं बाधते । एवं तर्हि वृत्तान्तादेष परिहारः प्रस्थितः । कस्माद्वृत्तान्तात् ? इदमयं चोद्यो भवत्यनडुहः सावाम्प्रतिषेधो नुमोऽनवकाशत्वादिति । तस्य परिहारो न वाऽवर्णोपधस्य नुम्वचनादिति । ततोऽयं चोद्यो भवति यत्र तद्वर्ण-प्रकरणं नास्ति तत्र त आमा नुमो बाधनं प्राप्नोति 'बह्वनड्वांहि÷ ब्राह्मण-कुलानी'ति । तत उत्तरकालमिदं पठितं पुनःप्रसङ्गविज्ञानाद्वा सिद्धमिति ।

प्र०—भावः । अनडुहि यावन्तीति । अनडुहोऽकारान्तत्वासंभवादनडुहाऽवर्णं विशेष्यते न त्ववर्णेनानडुच्छब्दस्ततः सर्वावर्णानां नुम्प्रसङ्गः । यद्येवं सत्यामप्यादित्यस्यानुवृत्तौ यदेव संनिहितमवर्णं तस्यैव नुम्स्यात्तथा च नुमाऽऽम् बाध्येत । नैष दोषः । आगमिभेदात् । आमनडुहो नुम्त्ववर्णस्य । तस्मात्सर्वावर्णान्नुम्प्रसङ्ग एव दोषः । मिदचोऽन्त्यादिति । मित्वलिङ्गाच्च मित्परिभाषोपतिष्ठते । तदुपस्थानादुकारात्परो नुम्प्रसक्त आदित्यधिकारादवर्णादन्त्यात्परः क्रियते । न चाऽऽम्य–कृतेऽवर्णोऽन्त्यो भवतीति सामर्थ्यादामि कृते नुम्विधीयते । अथवोकारात्पर एव विधीयते । तत्राऽऽदित्यधिकारादयमर्थो भवति यथाऽवर्णात्परो नुम्भवति तथा कर्तव्यम् । एवं चावर्णात्परो भवति यदि कृते नुम्याम्क्रियते । एवं च सत्यादित्यधिकारोऽनुगृहीतो भवति, परिभाषा च न त्यक्ता भवति । पुनःप्रसङ्गविज्ञा-

उ०—न्यविरोधान्न 'नुम्'बाधक इत्यर्थः । यद्येवमिति । तावतैवाऽऽदित्यनिवृत्तिः कृतार्थेति भावः । आगमिभेदादिति । तद्भेदेऽपि नुम्नुटोर्बाध्यबाधकभावस्य दृष्टत्वात्संभवेऽपि बाधाच्चेदं चिन्त्यम् । तस्मान्नुमाऽऽम्बाध्येतेति पूर्वपक्ष एव भाष्यतात्पर्यमुचितम्, नत्वाम्नुमोर्बाध्य-बाधकभावाभावे । ननु 'परिभाषाधिकारयोः परस्परप्रतिबन्धादुभयोरप्यप्रवृत्तिः स्यादत आह—मित्वलिङ्गेति । अथवेति । अत्र पक्षे वाक्यभेदः क्रियते—अनडुहोऽन्त्यादचः परो नुमित्येकम् । स चावर्णात्पर इत्यादि द्वितीयम् । तेनाऽऽमः प्रवृत्तिरनुज्ञाता भवति तदाह—एवं चेति । न त्यक्ता भवतीति । आमश्च बाधो न भवतीत्यपि बोध्यम् ।

* ६. १. ४५; १५;—८.÷७. १. ७२; ९८.

**दिव औत् ॥ ७ । १ । ८४ ॥**

**दिव औत्त्वे धातुप्रतिषेधः ॥ १ ॥**

दिव औत्त्वे धातोः प्रतिषेधो वक्तव्यः। अक्षद्यूरिति। अधात्वधिकारात्सिद्धम्। अधातोरिति वर्तते। क्व प्रकृतम्? 'उगिदचां सर्वनामस्थानेऽधातोः' [ ७. १. ७० ] इति।

**अधात्वधिकारात्सिद्धमिति चेन्नपुंसके दोषः ॥ २ ॥**

अधात्वधिकारात्सिद्धमिति चेन्नपुंसके दोषो भवति। काष्ठतङ्क्षि कूटतङ्क्षि 'नपुंसकस्य झलचः' [ ७२ ] अधातोरिति प्रतिषेधः प्राप्नोति।

**उक्तं वा ॥ ३ ॥**

किमुक्तम्? अननुबन्धकग्रहणे हि न सानुबन्धकस्येति×। अथवा संबन्धमनुवर्तिष्यते।

**इतोऽत्सर्वनामस्थाने ॥ ७ । १ । ८६ ॥**

**इतोऽद्वचनमनर्थकमाकारप्रकरणात् ॥ १ ॥**

प्र०–नाद्धेति। चार्थे वाशब्दः। बह्वनड्वांहीत्यत्र परत्वादामि कृते पुनःप्रसङ्गविज्ञान्नपुंसकस्य झलच इति नुम्क्रियत इति वाक्यार्थः। भाष्यकारस्तु न्यायव्युत्पादनार्थं विकल्पार्थं वाशब्दं व्याख्याय दूषयित्वा समुच्चयार्थमेव व्याचष्टे—वृत्तान्तादिति। प्रसङ्गो वृत्तान्तश्चोद्यप्रसङ्गादित्यर्थः। अथवा वृत्तोऽतिक्रान्तोऽयं प्रबन्धश्चोद्यसमाधानलक्षणस्तदन्ते व्यवस्थितं यच्चोद्यं तदुपचाराद्वृत्तान्तशब्दवाच्यं तस्मादित्यर्थः।

दिव औत्। दिव औत्व इति। विशेषानुपादानाद्धातोरपि प्राप्नोति। अक्षद्यूरिति। ऊठि कृत एकदेशविकृतस्यानन्यत्वादौत्वप्रसङ्गः। अननुबन्धकग्रहण इति। अव्युत्पन्नं दिविति प्रातिपदिकमननुबन्धकम्। व्युत्पत्तिपक्षेऽप्यवयवानां प्रत्ययादीनां सानुबन्धकत्वं न प्रातिपदिकस्य। संबन्धमिति। उगिदचामित्यनेन। दिव औदित्यत्र त्वधातोरिति वर्तत उगिदचामिति निवृत्तम्।

इतोऽत्सर्वनामस्थाने। इतोऽद्वचनमिति। क्वचिदेकादेशविधानात्क्वचिद्दीर्घविधा-

उ०–चार्थ इति। प्रकृतदोषस्य नेदं परिहारान्तरं किंतु दोषान्तरस्यैव परिहार इत्यर्थः। परत्वादिति। आमनड्वानित्यत्र सावकाशो नुम् श्रेयांसीत्यादौ। न्यायेति। प्रकृतदोषपरिहारत्वासंभवरूपेत्यर्थः। तदन्त इति। प्रकृतचोद्यपरिहारे कृते बह्वनड्वांहीत्यत्र कथमिति यच्चोद्यं तस्माद्धेतोरयं परिहार इत्यर्थः।

दिव औत्। ननूठि दिव्रूपाभावोऽत आह—ऊठीति। व्युत्पत्तीति। दिवेर्डिविरितीति भावः। दिव आचारक्विबन्तस्यैवेति न तत्र पक्षयोः फलभेदः।

इतोत्स०। क्वचित्पन्था इत्यादौ। क्वचित्पन्थानामित्यादौ।

× ४. १. १५.

इतोऽद्वचनमनर्थकम् । किं कारणम् ? आकारप्रकरणात् । आदितिर्+ वर्तते ।

षपूर्वार्थं तु ॥ २ ॥

षपूर्वार्थं तर्ह्यद्वक्तव्यः । ऋभुक्षाणमिन्द्रम् । 'ऋभुक्षणमिन्द्र'म्* † ।

पुंसोऽसुङ् ॥ ७ । १ । ८९ ॥

असुङ्युपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वात् ॥ १ ॥

असुङ्युपदेशिवद्भावो वक्तव्यः । उपदेशावस्थायामेवासुङ् भवतीति वक्तव्यम् । किं प्रयोजनम् ? स्वरसिद्ध्यर्थम् । उपदेशावस्थायामसुङि कृत इष्टः स्वरो यथा स्यात् । परमपुमानिति । अक्रियमाणे ह्युपदेशिवद्भावे समासान्तोदात्तत्वे×ऽसुङान्तर्यतोऽस्वरकस्यास्वरकः स्यात् । किं पुनः कारणं समासान्तोदात्तत्वं तावद्भवति न पुनरसुङ् ? न परत्वादसुङा भवितव्यम् ? बहिरङ्गलक्षणत्वात् । बहिरङ्गलक्षणोऽसुङ् । अन्तरङ्गः स्वरः । असिद्धं बहिरङ्गमन्त-

प्र०—नाच ह्रस्वस्य श्रवणेन न भाव्यमित्याकार एव प्रकृत इतो विधेय इत्यर्थः । षपूर्वार्थमिति । वा षपूर्वस्य निगम इति दीर्घविकल्पेन रूपद्वयसिद्धिराकारविधौ त्वेकमेव रूपं स्याद्दीर्घविकल्पस्तु तक्षणं तक्षाण मित्याद्यर्थं स्यात् ।

पुंसोऽसुङ् । असुङीति । पातेर्डुम्सुनित्याद्युदात्तस्य पुंसः सकारस्याविद्यमानोदात्तत्वादनुदात्तस्य स्थानेऽसुङि क्रियमाण आन्तरतम्यादनुदात्तं पदमेकवर्जमिति वचनाद्वाऽनुदात्त एव भवतीति पुमानित्यादौ दोषाभावः । परमपुमानित्यत्र त्वन्तरङ्गत्वात्समासान्तोदात्तत्वे कृते सर्वनामस्थान उत्पन्नेऽसुङ् क्रियमाणोऽनुदात्तः प्राप्नोति, उदात्तश्चेष्यते । ननु चोकारस्य कृतमपि समासान्तोदात्तत्वमसुङि कृतेऽनन्त्यत्वान्न व्यवतिष्ठते । नैतदस्ति । अन्तरङ्गे स्वरे कर्तव्ये बहिरङ्गस्यासुङोऽसिद्धत्वान्निर्वृत्तस्य स्वानिवर्तनादुपदेशिवद्वचनात्तु पूर्वमसुङ् भवति, पश्चात्समासान्तोदात्तत्वम् । अस्वरकः स्यादिति । प्रवृत्तिकाले स्वरविशेषस्यानुपादानादनभिमतानुदात्तत्वप्रसङ्गाच्चास्वरक इत्युच्यते । न ह्यस्वरकस्याच उच्चारणं संभवति । अथवोदात्तत्वाभावाद-

उ०— पुंसोऽसुङ् । समस्तोदाहरणदाने बीजमाह—पातेरिति । डुम्सुन उगित्त्वं बहुपुंसीत्यादौ ङीबर्थम् । सूतेः सस्य षोऽन्त्यस्य ह्रस्वो डुम्सुन्प्रत्यय इति श्रियामितिसूत्रे भाष्ये स्पष्टम् । दोषाभाव इति । सर्वथाऽप्यनुदात्तस्यैवेष्टत्वादिति भावः । अन्तरङ्गत्वादिति । विभक्त्यनपेक्षत्वेनेति भावः । अनन्त्यत्वादिति । असुङस्त्वन्त्यत्वात्प्रवर्तयिष्यत इत्यर्थः । अनभिमतेति । एवं चास्वरक इत्यस्यानभिमतस्वरक इत्यर्थ इति भावः । अन्तरङ्ग इति । अकृतव्यूहपरिभाषा तु नास्त्येवेति भावः । अथवेति । अत्र पक्ष इष्टमुदात्तत्वं स्वरशब्देन विवक्षितमिति भावः । उभयं कर्तव्यमिति भाष्यार्थो न. प्राप्त

+ ७. १. ८५. * ६. ४. ९. † ऋग्वेद १. १११. ४; × ६. १. २२३.

रङ्गे। स तर्ह्युपदेशिवद्भावो वक्तव्यः ? न वक्तव्यः। आद्युदात्तनिपातनं करिष्यते। स निपातनस्वरः समासस्वरस्य बाधको भविष्यति। एवमप्युपदेशिवद्भावो वक्तव्यः। स यथैव हि निपातनस्वरः समासस्वरं बाधत एवं प्रकृतस्वरमपि बाधेत—पुमान्। तस्मात्सुष्ठूच्यतेऽसुङ्य् उपदेशिवद्वचनं स्वरसिद्ध्यर्थं बहिरङ्गलक्षणत्वादिति।

## गोतो णित् ॥ ७ । १ । ९० ॥

किमिदं गोतः परस्य सर्वनामस्थानस्य णित्त्वमुच्यत आहोस्वित्सर्वनामस्थाने परतो णित्कार्यमतिदिश्यते ? कश्चात्र विशेषः ?

---

प्र०—स्वरक इत्युच्यते। एवमपीति। यस्मादुदात्तनिपातने दोषस्तस्मात्तत्परित्यागेनेत्यर्थः। प्रकृतिस्वरमिति। पुमानित्यादावाद्युदात्तत्वमित्यर्थः। प्रकृतिस्वरस्य कोऽवकाश इति चेत्पर्यायः स्यात्।

गोतो णित्। गाङ्कुटादिसूत्रे यावन्तः पक्षा उक्तास्ते सर्वे इह संभवन्ति। तत्र णकारस्येतः सर्वनामस्थानेऽभावाद्भावे वा तदनुवादे प्रयोजनाभावाण्णित्त्वव्यपदेशाभावः। संज्ञाकरणेऽपि ञ्णिद्ग्रहणे संज्ञिनोऽसंप्रत्ययः, शब्दभेदाद्भावनापक्षे णकार आदेशः प्राप्नोति। ण्वुलादि वा प्रसिद्धणित्त्वं प्राप्नोति तद्वदतिदेशस्तु निर्दोषत्वादाश्रीयते। भाष्ये तु भावना पक्ष एवाऽऽशङ्क्य निराकृतः परस्तात्स्थापितश्च। किमिदमिति। ण् इद्यस्य तण्णित्तस्य भावो णित्त्वम्। तेनायमर्थः—अणितः सर्वनामस्थानस्य स्थाने णित्सर्वनाम-

---

उ०—इत्याह—यस्मादिति। प्रकृतिस्वरस्य—नित्त्वप्रयुक्ताद्युदात्तत्वस्य। पर्याय इति। कदाचिदाद्युदात्तत्वं कदाचिदन्तोदात्तत्वमित्यर्थः। यस्तूपदेशिवद्वचनेन सर्वनामस्थान इति विषयसप्तमी व्याख्येयेति बोध्यत इति, तन्न। एवमप्यन्तरङ्गत्वेन पूर्वं स्वरस्य दुर्वारत्वात्।

गोतो णित्। यावन्त इति। ङित्त्वादिसंबन्धप्रतिपादनम्, भावनम्, संज्ञाकरणम्, अतिदेशश्चेति चत्वार इत्यर्थः। तत्राऽऽद्यः संभवन्नपि दोषसत्त्वान्नाऽऽश्रित इत्याऽऽह—तत्र णकारस्येति। अत्र पक्षे गोतः परं सर्वनामस्थानमित्संज्ञकणकारसंबन्धवदित्यर्थः। तत्रासतः संबन्धप्रतिपादनं न युक्तम्। सत्त्वेऽपि दोष एवेत्याह—भावे वेति। तृतीयोऽपि नेत्याह—संज्ञाकरणेऽपीति। शब्दभेदादिति। णिदिति हि संज्ञा नतु ञ्णिदितीति भावः। कृत्रिमाकृत्रिमन्यायेनाणादीनां ग्रहणं न स्यादिति तु तत्त्वदूषणम्। द्वितीये भाष्याभिसंहितं दोषमाह—भावनेति। अत्र पक्षे गोतः परस्य सर्वनामस्थानस्य णिदित्यर्थः। तत्र कर्मधारयाश्रयण आह—णकार इति। बहुव्रीहावाह—ण्वुलादि वेति। सूत्रे णिच्छब्देन णित्त्वयुक्तसर्वनामस्थानं लक्ष्यत इत्याशयेनाऽऽह—तेनायमिति। णित्सर्वनामस्थानमिति। अर्थात् आन्तर्यादिति भावः।

**गोतः सर्वनामस्थाने णित्कार्यातिदेशः ॥ १ ॥**

गोतः सर्वनामस्थाने णित्कार्यमतिदिश्यते ।

**सर्वनामस्थाने णित्ववचने ह्यसंप्रत्ययः षष्ठ्यनिर्देशात् ॥ २ ॥**

सर्वनामस्थानस्य णिद्वचने ह्यसंप्रत्ययः स्यात् । किं कारणम् ? षष्ठ्यभावात् । षष्ठीनिर्दिष्टस्याऽऽदेशा उच्यन्ते* न चात्र षष्ठीं पश्यामः । एवं तर्हि वतिनिर्देशोऽयम् । गोतो णिद्वद्भवतीति । स तर्हि वतिनिर्देशः कर्तव्यो न ह्यन्तरेण वतिमतिदेशो गम्यते । अन्तरेणापि वतिमतिदेशो गम्यते । तद्यथा—एष ब्रह्मदत्तः । अब्रह्मदत्तं ब्रह्मदत्त इत्याह ते मन्यामहे ब्रह्मदत्तवदयं भवतीति । एवमिहाप्यणितं णिदित्याह, णिद्वदिति गम्यते । अथवा पुनरस्तु गोतः परस्य सर्वनामस्थानस्य णित्वम् । ननु चोक्तं सर्वनामस्थाने णित्ववचने ह्यसंप्रत्ययः षष्ठ्यनिर्देशादिति ? नैष दोषः । गोत इत्येषा पञ्चमी सर्वनामस्थान इति सप्तम्याः षष्ठीं प्रकल्पयिष्यति—'तस्मादित्युत्तरस्य' [ १. १. ६७ ] इति ।

अथ तपरकरणं किमर्थम् ? इह मा भूत्—चित्रगुः शबलगुरिति । नैतदस्ति । ह्रस्वत्वे÷ कृते न भविष्यति । स्थानिवद्भावात्प्राप्नोति । अत उत्तरं पठति—

**तपरकरणमनर्थकं स्थानिवत्प्रतिषेधात् ॥ ३ ॥**

तपरकरणमनर्थकम् । किं कारणम् ? स्थानिवत्प्रतिषेधात् । प्रतिषिध्यतेऽत्र स्थानिवद्भावो गोः पूर्वणित्त्वात्वस्वरेषु स्थानिवद्भावो न भवतीति+ । स चावश्यं

प्र०—स्थानमादेशो भवति, ण्वुलादयस्तु तदर्थाभिधानेऽसमर्थत्वान्न भवन्ति । एतन्न्यायाश्रयेण गाङ्कुटादिसूत्रेऽपि भावनापक्षे न कश्चिद्दोषः । गोत इत्येषेति । भावनापक्षे गोत इति पञ्चमी तद्वदतिदेशपक्षे तु षष्ठी । तपरकरणमिति । स्थानिवत्त्वनिषेधादानर्थक्यमिति प्रश्नः । चित्रगुरिति । तपरस्तत्कालस्येत्यत्राणिति नानु-

उ०—भाष्ये—णित्वमित्यस्येत्संज्ञकणकारसंबन्धस्तद्वत्संबन्ध इति वाऽर्थः । भाष्ये—अन्त्ये विशेषमाह—गोत इति । कार्यातिदेश इत्येतावद्वक्तव्यमत्र पक्ष इत्यर्थः । आद्ये विशेषमाह—सर्वनामस्थाने णिद्वचने हीति । तथा च सर्वनामस्थानस्येति वक्तव्यमित्यर्थः । हिशब्दोऽप्यर्थे । तद्वदतिदेशपक्षे त्विति । गोशब्दस्य सर्वनामस्थाने णितीव कार्यं भवतीत्यर्थादिति भावः । ननु चित्रगुरित्यत्र ह्रस्वत्वेऽङ्गाधिकारे तदन्तविधिसत्त्वेन स्थानिवत्त्वाद्गोशब्दान्तत्वेन प्राप्तणिद्वत्त्वस्य निवृत्तये तपरत्वमावश्यकमत आह—स्थानिवत्त्वेति । गोः पूर्वणित्वात्वेत्यादिनेति भावः । ननु गोशब्दस्याणत्वात्कथं तत्कालग्रहणमत आह—तपर इति । व्युत्पत्तीति । तत्पक्षेऽपि तदपेक्ष-

* १ १. ४९. ÷ १ २. ४८. + १. १. ५९. ( सूत्रस्थवार्तिकेन );

प्रतिषेध आश्रयितव्यः ।

**इतरथा हि संबुद्धिजसोः प्रतिषेधः ॥ ४ ॥**

यो हि मन्यते तपरकरणसामर्थ्यादत्र न भविष्यतीति संबुद्धिजसोस्तेन प्रतिषेधो वक्तव्यः स्यात् । हे चित्रगो चित्रगव इति× । अथेदानीं सत्यपि स्थानिवद्भावप्रतिषेधे गुणे कृते कस्मादेवात्र न भवति ? लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । ननु चेदानीमसत्यपि स्थानिवद्भावप्रतिषेध एतया परिभाषया शक्यमुपस्थातुम् ? नेत्याह, न हीदानीं क्वचिदपि स्थानिवत्स्यात् ।

**तृज्वत्क्रोष्टुः ॥ ७ । १ । ९५ ॥**

**स्त्रियां च ॥ ७ । १ । ९६ ॥**

अथात्र विभक्तावित्यनुवर्तत उताहो न+ ? किं चातः ?

तृज्वत्स्त्रियां विभक्तौ चेत्क्रोष्ट्रीभक्तिर्न सिध्यति ।

प्र०-वर्तत इत्यनद्यतनेऽपि तत्कालस्य ग्रहणम् । इतरथा हीति । यदि स्थानिवत्त्वनिषेधो नाऽऽश्रीयते तदा सत्यपि तपरकरणे संबुद्धौ जसि च गुणे कृते स्थानिवत्त्वात्तत्कालत्वाच्च णित्त्वं स्यादित्यर्थः । प्रतिषिद्धे तु स्थानिवत्त्वे गुणे कृते गोरूपस्य लाक्षणिकत्वाण्णित्त्वाप्रसङ्गः । अव्युत्पत्तिपक्षाश्रयेणैतदुच्यते । व्युत्पत्तिपक्षे तु सर्व एव लाक्षणिकः । नहीदानीमिति । स्वाश्रया या प्राप्तिः सा लक्षणप्रतिपदोक्तपरिभाषावशान्मा भूत्स्थानिवत्त्वनिमित्तत्वात्तु स्यादेव प्राप्तिः । नहि सा पूर्वोक्तया परिभाषया निवार्यते । स्थानिवत्त्वस्य निर्विषयत्वप्रसङ्गात् ।

तृज्वत्क्रोष्टुः । अथात्र विभक्ताविति । 'तृज्वत्क्रोष्टु'रित्यत्र सर्वनामस्थानाधिकाराद्विभक्त्यधिकारस्य न दोषो न प्रयोजनम् । 'विभाषा तृतीयादिष्वची'त्यत्राप्यादिशब्दस्य व्यवस्थावाचित्वाद्विभक्तय एव गृह्यन्त इति तत्रापि न विचार इति 'स्त्रियां चे'त्यत्रैवायं विचारः क्रियते, इष्टतोऽधिकाराणां प्रवृत्तिनिवृत्तिभावात् । क्रोष्ट्रीभक्तिरिति । क्रोष्ट्री भक्तिरस्येति बहुव्रीहिः । भक्तिशब्दस्य प्रिया-

उ०-याऽस्य विलम्बोपस्थितिकत्वाच्चिन्त्यमिदम् । केचित्तु तपरकरणमोकारान्तोपलक्षणार्थम् । वर्णनिर्देशेषु तपरत्वस्य प्रसिद्धत्वात् । तेन द्यौर्द्यावाविति सिद्धम् । विहितविशेषणाच्च चित्रगवित्यादौ न दोषः । वर्णग्रहणेऽपि क्वचिल्लक्षणप्रतिपदोक्तपरिभाषाङ्गीकाराद्वेत्याहुः ।

तृज्वत्क्रोष्टुः । भाष्ये सूत्रद्वयोपादानात्सूत्रद्वयविषयोऽयं विचार इति भ्रमं निवर्तयति–तृज्वदिति । विभक्त्यधिकारस्येति । इकोऽचीत्यतः । न प्रयोजनमिति । सर्वनामस्थानस्य विभक्तित्वाव्यभिचारादिति भावः । तत्रापीति । अत एव तदत्र नोपात्तम् । यद्यपि बहुयोगव्यवच्छिन्नत्वादननुवृत्तिरेवोचिता तथाऽपि कृत्वा चिन्तयाऽयं विचार इत्याह—इष्टत इति । बहुव्रीहिरिति । क्रोष्ट्री सेव्याऽस्येत्यर्थः । प्रियादिष्विति । जाते-

× ७. ३. १०८; १०९; + ७. १. ७३.

तृज्वत्स्त्रियां विभक्तौ चेत्क्रोष्ट्रीभक्तिरिति+ न सिध्यति । एवं तर्हीकार एव तृज्वद्भावं वक्ष्यामि । तदीकारग्रहणं कर्तव्यम् ? न कर्तव्यम् । क्रियते न्यास एव । प्रश्लिष्टनिर्देशोऽयम् । स्त्री ई स्त्री स्त्रियामिति ।

ईकारे तन्निमित्तः सः

ईकारे चेत्तन्न । किं कारणम् ? तन्निमित्तः सः । तृज्वद्भावनिमित्तः स ईकारः । नाकृते तृज्वद्भाव ईकारः प्राप्नोति । किं कारणम् ? 'ऋन्नेभ्यो ङीप्' [ ४. १. ५ ] इत्युच्यत ईकारे च तृज्वद्भावः । तदिदमितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते । एवं तर्हि गौरादिषु* पाठादीकारो भविष्यति ।

गौरादिषु न पठ्यते ॥ १ ॥

न हि किंचित्तुनन्तं गौरादिषु पठ्यते । एवं तर्ह्येतज्ज्ञापयत्याचार्यो भवत्यत्रे-कार इति यदयमीकारे तृज्वद्भावं शास्ति ।

---

प्र०-दिषु पाठात्पुंवद्भावाभावः । अत्रा'न्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत' इति लुकि कृते विभक्त्यभावान्न लुमताऽङ्गस्येति प्रत्ययलक्षणप्रतिषेधाच्च तृज्वद्भावो न प्राप्नोति, तदभावादृकारान्तत्वनिमित्तो ङीबपि न प्राप्नोति । एवं तर्हीति । विभक्तिर्निमित्त-त्वेन नाऽऽश्रीयते किं तर्हीकारः । स्त्री ई स्त्रीति । स्त्रिया ई, स्त्रीत्वस्य द्योतक ईकार इत्यर्थः । षष्ठीसमासः । अर्थगतं च स्त्रीत्वमीकार आरोप्य नदी-संज्ञानिमित्तावामाटौ क्रियेते । गौरादिषु पाठादिति । पृथिवी क्रोष्टु पिप्पल्यादयश्चेति च्छेदाध्यायिनः पठन्ति । न हि किंचिदिति । संहिताध्यायिनो न पठन्ति । सर्वा-

---

उ०-श्लेष्यस्याप्युपलक्षणमिदम् । पूर्वनिपातप्रकरणानित्यत्वादाहिताग्न्यादित्वाद्राजदन्तादित्वाद्वा भक्तिशब्दस्य न पूर्वनिपातः । केचित्तु क्रोष्टुशब्दस्य तस्येयमिति पुंयोगात्स्त्रियां वृत्तिः । एतेन भक्तिशब्दस्य पूर्वनिपातापत्तिः । किंच जातिवाचकत्वाज्जातेश्चेत्येव निषेधः सिद्ध इत्यपास्तमिति, तन्न । दाम्पत्यरूपपुंयोग एव तत्प्रवृत्तेः । स्वुक्त-पुंयोगे तस्येदमित्यणापत्तेस्तत्रैव भाष्य उक्तत्वाच्च । ईकार एवेत्येवकारार्थं दर्शयति-विभक्तिरिति । स्त्रीशब्देन स्त्रीत्वमुच्यते । द्योतकत्वसंबन्धः षष्ठ्यर्थ इत्याह—स्त्रीत्व-स्येति । ननु स्याद्यन्तत्वाभावान्नदीत्वाभावे कथमामाटावत आह-अर्थगतं चेति । स्त्रीत्व-रूपार्थगतमित्यर्थः । तस्यापि स्त्रीशब्देनाभिधाने स्त्रीत्वात् । आचार्याणां मतभेदेन क्रोष्टुशब्दपाठापाठावुक्तावित्याह—छेदाध्यायिन इति । सर्वात्मना—अपाठमिति च्छेदः । गौरादिषु न पठ्यते । ईदृशं तुन्नन्तं न किंचिदिति भाष्याक्षरार्थ इति । भावः । सर्वथा पाठोऽप्रामाणिक इति तात्पर्यम् । ननु टीप्ङीपोरनुदात्तत्वोदात्त-

---

+२. ४. ७१; २. १. ६१. * ४. १. ४१.

तेनैव भावनं चेत्स्यादनिष्टोऽपि प्रसज्यते ॥ २ ॥

यद्यपि नास्ति विशेषो ङीपो* वा ङीषो वा ङीनपि तु प्राप्नोति× । इह च न प्राप्नोति । पञ्चभिः क्रोष्ट्रीभिः क्रीतैः रथैः पञ्चक्रोष्टृभी+ रथैरिति । एवं तर्हि—

न चापरं निमित्तं संज्ञा च प्रत्ययलक्षणेन ।

---

प्र०—स्वमनाऽपाठं प्रतिपादयितुमेतदुच्यते । ङीपो ङीषो वेति । उदात्तयणो हल्पूर्वादिति ङीप उदात्तविधानात् । ङीनपीति । ततश्चाऽऽद्युदात्तत्वप्रसङ्गः । नन्वीकारे तृज्वद्भावविधानात्सतिशिष्टश्चित्स्वरो नित्स्वरं बाधिष्यते । ततश्चोदात्तयणो हल्पूर्वादित्युदात्तविधानान्नास्ति विशेषः । नैतदस्ति । क्रोष्टुशब्द आद्युदात्त एव, तत्र ङीनि कृते प्रयोजनभावादकृते तृज्वद्भावे नित्स्वरो न प्रवर्तेत इति पूर्वं तृज्वद्भावः परत्वाद्वा, अत्र कृते नित्स्वरः सतिशिष्टश्चित्स्वरं बाधेत । यदि तु ज्ञापकेन पिप्पल्याद्यन्तर्भावः क्रोष्टुशब्दस्यानुमीयते तदा न कश्चिद्दोषः । अपूर्वस्य त्वीकारस्यानुमानमाश्रित्य श्लोकवार्तिककारेण दोषः उपात्तः । शार्ङ्गरवाद्यन्तर्भावानुमानमपि स्यादिति तस्याऽऽशयः । पंचभिरिति । तद्धितार्थेति । समासः आर्हादिति ठक् उत्पन्नस्याध्यर्धपूर्वेति लुक् 'लुक् तद्धितलुकी'ति स्त्रीप्रत्ययस्य लुकि कृते न लुमताऽङ्गस्येति प्रत्ययलक्षणप्रतिषेधादीकारनिमित्तस्तृज्वद्भावो न प्राप्नोति । अन्तरङ्गाणां च विधीनां लुका बाधनात्पूर्वमेव तृज्भावो न लभ्यते । तत्राऽऽद्येन सर्वनामस्थाने तृज्वद्भावोऽन्त्येन त्वजादिषु तृतीयादिषु विकल्पनेति हलादौ मध्यमेनाप्राप्तिरुच्यते । पंचक्रोष्टृभिरिति । केचिदाहुः—'भस्याढे' इति 'ठक्छसोश्चे'ति वा प्राप्तः पुंवद्भावो जातेश्चेति प्रतिषिध्यते । तदयुक्तम् । भत्वाभावाच्छस्सहचरितस्य ठको ग्रहणाच्चाप्राप्ति-

---

उ०—स्वकृतो विशेषोऽस्तीत्यत आह—उदात्तयण इति । आद्युदात्त एवेति । तुन्नन्तत्वादिति भावः । उक्तयुक्तेर्नहि प्रयोजनानुवर्तिप्रमाणमिति न्यायविरुद्धत्वादाह—परत्वादिति । तृज्वत्स्वनित्स्वरयोर्युगपत्प्राप्तावाद्युदात्तत्वान्तोदात्तत्वयोर्यौगपद्यासंभवेन परत्वात्तृज्वद्भावः । सतिशिष्ट इति । तृज्वदतिदेशेन स्वरविशिष्टस्यैव रूपस्यातिदेशान्नित्स्वरः पश्चात्प्रवर्तमानः सतिशिष्ट इति भावः । वस्तुतोऽस्त्येव दोष इत्याह—शार्ङ्गरवाद्यन्तरिति । भाष्ये दोषान्तरमाह—पञ्चभिरिति । बाधनादिति । अन्तरङ्गानपीति परिभाषणादिति भावः । नन्वत्र पुंवद्भावेन सिद्धान्तेऽपि तृज्वद्भावो दुर्लभोऽत आह—केचिदित्यादि । आद्याप्राप्तौ हेतुर्भत्वाभावादिति । लुकि प्रत्ययलक्षणाभावेनैकादेशात्पूर्वमेव ठको लुका च तच्चाभाव इति भावः । अन्त्याप्राप्तौ हेत्वन्तरमप्याह—छस्सहचरितस्येति । एवं तदुक्तपुंवद्भावप्राप्तिं दूषयित्वा तदुक्तस-

---

* ६. १. १७४. × ६. १. १९७. + २. १. ५१; ५. १. १९; २८; १. २. ४९; १. १.६३.

न चापरं निमित्तमाश्रीयते । अस्मिन्परतः क्रोष्टुस्तृज्वद्भवतीति । किं तर्हि ? अङ्गस्य क्रोष्टुस्तृज्वद्भवति । अङ्गसंज्ञा च भवति प्रत्ययलक्षणेन ।

किं पुनरयं शास्त्रातिदेशः । तृचो यच्छास्त्रं तदतिदिश्यते । आहोस्विद्रूपातिदेशः । तृचो यद्रूपं तदतिदिश्यत इति ? कश्चात्र विशेषः ?

**तृज्वदिति शास्त्रातिदेशश्चेद्यथा चिणि तद्वत् ॥ १ ॥**

तृज्वदिति शास्त्रातिदेशश्चेद्यथा चिणि तद्वत्प्राप्नोति । कथं च चिणि ? उक्तमङ्गस्येति तु प्रकरणादाङ्गशास्त्रातिदेशात्सिद्धमिति* । आङ्गं यत्कार्यं

प्र०-रेव पुंवद्भावस्य नास्ति । जातेश्चेति प्रतिषेध औपसंख्यानिकस्य पुंवद्भावस्य नास्त्येव । यथा हस्तिनीनां समूहो हास्तिकमिति । अङ्गसंज्ञा चेति । लब्धाङ्गसंज्ञकस्य यत्कार्यं प्रत्ययलक्षणं तन्न लुमताऽङ्गस्येत्यनेन निषिध्यते । न चाङ्गसंज्ञाऽङ्गस्य कार्यमिति प्रत्ययलक्षणेन भवत्येव । तत्र स्त्रियां वर्तमानस्य क्रोष्टुशब्दस्य लब्धाङ्गसंज्ञकस्य तृज्वद्भावे सति ङीप्प्रत्ययः कार्यः । कार्यकालत्वे तु संज्ञापरिभाषस्याङ्ग आश्रिते प्रत्ययोऽप्याश्रितो भवति । यथा वत्रश्चेति, तदाऽङ्गस्येत्येतदत्र नापेक्ष्यम् । किं पुनरिति । शास्त्रस्य शास्त्रं प्रत्यासन्नमिति प्रत्यासत्त्या शास्त्रातिदेशः प्राप्नोति । प्राधान्यात्तु रूपातिदेशप्रसङ्गः, रूपार्थत्वाच्छास्त्रप्रवृत्तेः । कार्यातिदेशस्तु शास्त्रातिदेशादभिन्नत्वात्पृथङ् नोपन्यस्तः । तृज्वदित्यादिरूपेऽतिदिश्यमाने सूत्रसंनिवेशस्यानपेक्षणात्प्रकरणकृतव्यवस्थाभावः । शास्त्रातिदेशे तु प्रत्यासत्त्याऽङ्गप्रकरणसंनिकृष्टस्यैव शास्त्रस्या-

उ०-प्राधानासंगतिमप्याह—जातेश्चेतीति । यथेति । यस्येति लोपे तु तस्य स्थानिवत्वात्तद्धित इति टिलोपानापत्तिरिति भावः । भाष्ये—न चापरमिति । विभक्तावित्यस्य विच्छिन्नत्वात्सर्वनामस्थान इत्यस्य लक्ष्यानुरोधाच्च नानुवृत्तिरिति भावः । प्रत्ययलक्षणं प्रत्ययनिमित्तम् । नन्वीकारे परतो विधानान्न चापरमित्यनुपपन्नमत आह—तत्र स्त्रियां वर्तमानस्येति । प्रत्ययलोपो नाऽऽश्रीयत इति भावः । इदं च यथोद्देशपक्षाश्रयणेनेत्याह—कार्यकाले त्विति । अत्रापि गतिमाह—तदाऽङ्गस्येति । अपेक्षालक्षणत्वादधिकारस्येत्यर्थः । वस्तुतस्तु कार्यकालपक्षेऽपि क्रोष्टुशब्दः प्रत्ययेऽङ्गसंज्ञो भवति । अङ्गसंज्ञकस्य च तृज्वद्भाव इत्यर्थात्तृज्वत्त्वमनैमित्तिकमेव । उशदित्यादौ तु लक्ष्यानुसारादावृत्त्याऽत्वं प्रति निमित्तत्वेनाप्यन्वयः । प्रकृते तु तत एव नेति बोध्यम् । निरूपितं चेदं ष्यङः इति सूत्रे । न लुमतेत्यस्य चानित्यत्वादङ्गसंज्ञाविषयेऽप्राप्तिः । अत एव न लुमता तस्मिन्निति न्यासे न दोष इति भाष्याशयः । अत एव गुणो यङ्लुकोरित्यादीनामङ्गाधिकारे पाठः संगच्छते । कार्यातिदेशस्त्विति । शास्त्रातिदेशस्य कार्यफलकत्वादिति भावः । रूपातिदेशे तु नायं दोष इत्याह—रूप इति ।

* ६. ४. १२.

तदतिदिश्यते । एवमिहाप्यनङ्गुणदीर्घत्वान्यतिदिष्टानि* रपरत्वमनतिदिष्टम्+ । तत्र को दोषः ?

**तत्र रपरवचनम् ॥ २ ॥**

तत्र रपरत्वं न सिध्यति, तद्वक्तव्यम् । नैष दोषः । गुणेऽतिदिष्टे रपरत्वमप्यतिदिष्टं भवति । कथम् ? 'कार्यकालं संज्ञापरिभाषं' यत्र कार्यं तत्र द्रष्टव्यम्, ऋतो ङिसर्वनामस्थानयोर्गुणो भवति×, उपस्थितमिदं भवत्युरण्रपरः [ १. १. ५१ ] इति ।

एवं तर्ह्ययमन्यो दोषो जायते । आहत्य तृचो यच्छास्त्रं तदतिदिश्येतानाहत्य वेति ? किंचातः ? यद्याहत्य दीर्घत्वमतिदिष्टमनङ्गुणरपरत्वान्यनतिदिष्टानि÷ । अथानाहत्यानङ्गुणरपरत्वान्यतिदिष्टानि, दीर्घत्वमनतिदिष्टम् । अस्त्वा-

प्र०-तिदेशः स्यान्न विप्रकृष्टस्य । यथा चिण्वद्भावेन वृद्ध्यादीन्येव भवन्ति न हनिणिङादेशाः । रपरत्वमिति । यथोद्देशपक्षे प्रकरणान्तरे संनिवेशादिति भावः । कार्यकालमिति । प्रधानदेशत्वाद्गुणानामङ्गाधिकार एव परिभाषायाः संनिधानादित्यर्थः । आहत्येति । उच्चार्योद्घोष्येत्यर्थः । शास्त्रशब्दे या शासनक्रिया शास्त्रकरणिका तदपेक्ष्य पौर्वकाल्याश्रयः क्त्वाप्रत्ययः । तत्र यदि तृच्छब्दवच्छास्त्रमतिदिश्यते तदाऽऽहत्य यच्छास्त्रमिति पक्षोऽथ तु ऋकार एव तृच्छब्दे विवक्ष्यते चकारः स्वरार्थस्तकारस्त्वप्रसिद्धशङ्कानिवृत्त्यर्थः । ऋज्वदित्युच्यमानेऽप्रसिद्धातिदेशः संभाव्येत । ऋच्छब्दनिबन्धनसमासान्तशास्त्रादेशविषयः संदेहो वा स्यात् । तस्मादृकारमात्रप्रतिबद्धशास्त्रातिदेशेऽनाहत्यैष पक्ष उद्भवति । अनङ्गुणरपरत्वानीति । 'ऋदुशनस्पुरुदंसोऽनेहसां च' इत्यनङ् । 'ऋतो ङिसर्वनामस्थानयो'रिति गुणः । 'उरण्रपरः' इति रपरत्वम् । दीर्घत्वमनतिदिष्टमिति । नहि तद्दृत इत्युच्यते । किं तर्ह्यप्तृन्तृजिति तृच्छब्दो-

उ०-शास्त्रातिदेशे तस्याष्टाध्यायीस्थत्वात्सूत्रसंनिवेशरूपतदपेक्षणेन प्रत्यासत्तिन्यायावसर इति भावः । प्रधानदेशत्वादिति । उरण् रपर इति परिभाषा कार्यकालपक्ष एवं च युज्यत इति भावः । तत्तद्विध्येकवाक्यतापन्न आङ्गत्वबुद्धिरप्यस्तीति तात्पर्यम् । नन्वमूर्तशब्दरूपशास्त्रस्याऽऽहननमयुक्तमत आह—उच्चार्येति । तृच्शब्दमुच्चार्येति भावः । ननूत्तरकालक्रियाया अश्रवणात्क्त्वानुपपत्तिरत आह—शास्त्रशब्द इति । शास्यतेऽनेनेति शास्त्रमिति व्युत्पादनादिति भावः । शासनमत्र विधानम् । भाष्ये तृच इति शेषषष्ठी बोध्या । अप्रसिद्धाशङ्केति । अप्रसिद्धत्वाशङ्केत्यर्थः । ऋज्वदिति । कुत्वं तु सौत्रत्वान्न । अप्रसिद्धातिदेश इति । ऋच्छब्दयुक्तशास्त्रादर्शनात्किमात्रातिदिश्यत इत्यप्रतिपत्तिः स्यादित्यर्थः । समासान्तशास्त्रेति । ऋक्पूरब्धूरितीत्यर्थः । संदेह

* ७. १. ९४; ७. ३. ११०; ६. ४. ११. + १. १. ५१. × ७. ३. ११०. ÷ ६. ४. ११; ७. १. ९४; ७. ३. ११०; १. १. ५१.

हत्य। ननु चोक्तं दीर्घत्वमतिदिष्टमनङ्गुणपरत्वान्यनतिदिष्टानीति ? नैष दोषः। दीर्घत्वेऽतिदिष्टेऽनङ्गुणपरत्वान्यप्यतिदिष्टानि भवन्ति। कथम् ? उपधाया इति वर्तते* न चाकृतेष्वेतेषु दीर्घभाविन्युपधा भवति। कुतो नु खल्वेतदेतेषु विधिषु कृतेषु योपधा तस्या दीर्घत्वं भविष्यति न पुनः क्रोष्टोर्योऽन्तरतमो गुणस्तस्मिन्कृते+ऽवादेशे च योपधा तस्या दीर्घत्वं भविष्यति। नैकमुदाहरणं योगारम्भं प्रयोजयतीति। तत्र तृज्वद्वचनसामर्थ्यादेतेषु विधिषु कृतेषु योपधा तस्या दीर्घत्वं भविष्यति। अथवा किं न एतेनाहत्यानाहत्य वेति। आहत्यानाहत्य च तृचो यच्छास्त्रं तदतिदिश्यते।

---

प्र०-चारणेन। न चावयवसमुदाययोर्युगपद्विवक्षा यतस्तृच्प्रतिबद्धं ऋकारप्रतिबद्धं च शास्त्रमतिदिश्येत। न चाकृतेष्विति। अचो दीर्घेण भाव्यं न च क्रोष्टुशब्दस्योकारान्तस्याजुपधा संभवति। तत्र क्रोष्टेत्यत्रानङि कृतेऽजुपधा भवति, क्रोष्टाराविल्यादौ तु गुणरपरत्वयोः कृतयोः। न पुनरिति। क्रोष्टुशब्दस्य जसि चेत्युकारस्य गुणोऽस्त्येव तस्यावादेशे कृतेऽकारस्य दीर्घः स्यात्। ततश्च 'क्रोष्टाव' इति स्यात्। नैकमिति। अन्यथा दीर्घविधावेव क्रोष्टुशब्दं निर्दिशेत्। ननु दीर्घविधौ क्रोष्टुशब्द उपादीयमाने स्त्रियां च 'विभाषा तृतीयादिष्वचि'त्येवमर्थं 'तृज्वत्क्रोष्टु'रिति वक्तव्यमिति गौरवं स्यात्। नैष दोषः। 'अचि र ऋत' इति रादेशे प्रकृते क्रोष्टोः स्त्रियां च विभाषा तृतीयादिष्वचीत्येवं रादेशविधानाद्गौरवाभावात्। ननु रादेशे क्रोष्टुः क्रोष्टरीति न सिध्यति, नाम्युदात्तयणो हल्पूर्वादिति स्वरः। एवं तर्हि द्विः क्रोष्टुग्रहणं योगविभागाल्लघु। तदुक्तम्—'अक्षराधिक्यादपि योगविभागो गरीया'निति। तदेवं तृज्वद्भावविधानसामर्थ्याद्यादृशी तृच उपधा यादृशान्यनिमित्ता तादृश्या एव वादृशान्यनिमित्तायाः क्रोष्टुशब्दस्योपधाया दीर्घो भवतीत्यनङ्गुणरपरत्वेषु कृतेषु दीर्घो भवति। अस्मिन्परिहारे पूर्वोक्तगौरवप्रसङ्गादसमाश्वसन्परिहारान्तरमाह—अथवेति।

---

उ०-इति। तथा, ऋकारमात्रप्रतिबद्धं शास्त्रं वेति संदेहः स्यादित्यर्थः। ननु तृज्वदिति समुदायनिबन्धनशास्त्रस्याप्यतिदेशोऽस्त्वत आह—न चेति। वाक्यभेदप्रसङ्गादिति भावः। नन्वेकोदाहरणफलकमपि मुद्गादणित्यादि शास्त्रं दृश्यतेऽत आह—अन्यथेति। यदि 'क्रोष्टाव' इत्येव फलं स्यात्तर्ह्यप्तृन्नित्यत्रैव क्रोष्टुग्रहणं कुर्यात्। अतोऽतिदेशसामर्थ्यात्कृतेष्वनङादिषु योपधा तस्या दीर्घत्वमिति भावः। मिति गौरवमिति। तत्र तु सामर्थ्याद्रूपातिदेश एवेति भावः। नापीति। क्रोष्ट्रेत्यादौ। क्रोष्टुशब्दस्य तुन्नन्तत्वेनाऽऽद्युदात्तत्वात्। तृज्वत्त्वे तु चित्वादन्तोदात्तत्वेन स्वरसिद्धिरिति भावः। गौरवप्रसङ्गादिति। योगविभागादक्षराधिक्यं गुर्वेवेति भावः। कथं पुनरेकेन वाक्येन

---

*१. ४. ७; ११. +७. १. १०९.

अथवा पुनरस्तु रूपातिदेशः । अथैतस्मिन्रूपातिदेशे सति किं प्रागादेशेभ्यो यद्रूपं तदतिदिश्यत आहोस्वित्कृतेष्वादेशेषु ? किं चातः ? यदि प्रागादेशेभ्यो यद्रूपं तदतिदिश्यते, ऋकार एकोऽतिदिष्टोऽनङ्गुणरपरत्वदीर्घत्वान्यनति-

---

प्र०–तृज्वदिति समुदाय एवाऽऽश्रीयते। तत्र व्याप्तिन्यायाश्रयाद्यत्किंचित्तृचो दृष्टं शास्त्रं तत्सर्वमतिदिश्यते। एवं भूयो लक्ष्यं लक्षणं चानुगृहीतं भवति। नन्वङ्गप्रकरणोपात्त एव शास्त्रेऽतिदिश्यमाने क्रोष्ट्रीति यणादेशशास्त्रस्यानाङ्गत्वादतिदेशो न स्यात्। एवं तर्हि स्त्रियामाङ्गशास्त्रातिदेशासंभवादनाङ्गस्याप्यतिदेशः। 'विभाषा तृतीयादिष्वचि' इत्यत्र तर्हि क्रोष्टुरित्यत्र गुणविधावतिदेशस्य चरितार्थत्वात्क्रोष्ट्रा क्रोष्ट्रोरिति यणादेशाप्रसङ्गः। क्रोष्टुरित्यत्र 'ऋत उत्' इति शास्त्रं च न प्रवर्तेत। तत्रापि तृतीयादिग्रहणसामर्थ्यादनाङ्गस्याप्यतिदेशोऽन्यथा विभाषाऽचीत्येव ब्रूयात्। स्यादेतदभावातिदेशार्थं तृतीयादिग्रहणं स्यात्। ततश्च विलक्षणौ गुणनाभावौ न स्याताम्। क्रोष्टवे क्रोष्टुनेति। तत्र वक्त्रधीने वाक्यशेषेऽभावातिदेशस्यैवाऽऽश्रयणात्। एवं तर्हि क्रोष्ट्रीति स्त्रियामीकारो न प्राप्नोति। अनाङ्गमपीकारशास्त्रमतिदेशसामर्थ्यादतिदेक्ष्यत इत्येषोऽप्यदोषः। अथवोत्तरयोर्योगयोरारम्भसामर्थ्याद्रूपातिदेश एवाऽऽश्रीयते। पूर्वसूत्रे तु पक्षभेदविचारः। अथवेति। सूत्रत्रय एकरसप्रवृत्तिर्भवति सर्वरूपसंग्रहश्चेति भावः। प्रागादेशेभ्य इति। क्रोष्टृ इत्येतदृकारान्तम्। कृतेष्विति। क्रोष्टाराविति रेफाद्यन्तम्। तत्र प्रागादेशेभ्यो यद्रूपं तत्प्रत्यक्षम्, तृज्वदित्युच्चारणात्, व्यापकं लघु च। तस्मिन्नतिदिष्टे तन्निमित्तानामनङादीनां सर्वेषां स्वशास्त्रेण प्रवर्तनात्कृतेषु चाऽऽदेशेषु यद्रूपं लौकिकं तत्प्रधानं तदर्थत्वादितरस्य। प्रक्रियालाघवं च भवतीति पक्षद्वयसंभवः। ऋकार एक इति।

---

उ०–पक्षद्वयलाभोऽत आह—समुदाय एवेति। भूय इति। अनङ्गुणयणादिसंबन्धि भूयो लक्षणं तद्विषयं भूयो लक्ष्यं चेत्यर्थः। आङ्गशास्त्रातिदेशासंभवादिति। न च पञ्चभिः कर्त्रीभिः क्रीतो रथः पञ्चकर्ता रथः। हे पञ्चकर्तः, पञ्चकर्तरीति स्त्रीलिङ्गदृष्टस्य ङिसंबुद्ध्योर्गुणस्यातिदेशेन तच्चरितार्थम्। स्त्रियामित्युक्त्या प्रत्यासत्तिन्यायेन स्त्रीत्वनिमित्तकस्य तन्निमित्तनिमित्तकस्य वाऽतिदेशेन तादृशस्याऽऽङ्गस्यासंभवादिति भावः। न स्यातामिति। तृजन्ते तयोरभावदर्शनेन तुन्नन्तेऽप्यभावातिदेशादित्यर्थः। रूपातिदेश एवेति। अत एव पञ्चक्रोष्टुभिरिति सिध्यति। तदेव ध्वनयन्नाह–भाष्येऽथवेति। उत्तरसाहचर्यादिति भावः। तत्राऽऽद्य उपपत्तिमाह—तत्रेति। प्रत्यक्षत्वे हेतुस्तृज्वदित्युच्चारणादिति। व्यापकत्वलघुत्वयोर्हेतुमाह—तस्मिन्निति। द्वितीयपक्ष उपपत्तिमाह—कृतेषु चेति। प्राधान्ये हेतुमाह—तदर्थत्वादितरस्येति। आदेशाद्यप्रागुपस्थितेरित्यर्थः। प्रक्रियालाघवं चेति। पक्षान्तरे त्वनेन 'क्रोष्टृ' इति रूपम्। ततोऽनङादिप्रवृत्तिरिति प्रक्रियागौरवमित्यर्थः। ननु रूपातिदेशो तदन्तरार्थेरेव तेषां

दिष्टानि । अथ कृतेष्वादेशेष्वृकारोऽनतिदिष्टोऽनङ्गुणरपरत्वदीर्घत्वान्यतिदिष्टानि । उभयथा च स्वरोऽनतिदिष्टो न हि स्वरो रूपवान् । अस्तु प्रागादेशेभ्यो यद्रूपं तदतिदिश्यते । ननु चोक्तमृकारोऽतिदिष्टोऽनङ्गुणपरत्वदीर्घत्वान्य-

प्र०–तदतिदेशसामर्थ्याच्च कार्यान्तराणामप्रसङ्गः स्यादिति मन्यते । ऋकारोऽनतिदिष्ट इति । किं पुनर्ऋकारातिदेशस्य प्रयोजनम्, प्रयोगसमवायिरूपातिदेशेन गतत्वात् । अत्र केचिदाहुः—यत्र ऋकारस्य विकाराभावः पञ्चक्रोष्टृभी रथैरिति तत्र ऋकारोऽनतिदिष्टः स्यादिति । तदयुक्तम् । नहीदं वचनं कृतेष्वादेशेष्विति, लौकिकप्रयोगरूपोपलक्षणं त्वेतद्यथा च कचित्कृतेष्वादेशेषु लौकिकं रूपं तथा क्वचिदकृतेष्विति नास्ति विशेषः । अत्रोच्यते—यदि ऋकारमनतिदिश्य कृतेष्वादेशेषु यद्रूपं तदतिदिश्यते तदा क्रोष्ट्रेत्यादावुदात्तयणो हल्पूर्वादिति स्वरो न स्यात्, उदात्त-यणोऽभावात् । सति तु ऋकारातिदेशे तत्स्थानिकस्य यण उदात्तत्वात्स्वरः सिध्यति । ननु स्वरदोषमनन्तरमेव वक्ष्यति तत्किमर्थमत्राभिधीयते । अत्रैकतरपक्षा-श्रयेण स्वरदोष उच्यते । परस्तात्तु पक्षद्वयेऽपि वक्ष्यते । नहि स्वरो रूपवानिति । ननु शब्दस्य श्रोत्रेन्द्रियग्राह्यस्वभावो रूपम् । स्वरोऽपि श्रोत्रेन्द्रियग्राह्यत्वाद्रूपमेव । अथास्य व्यतिरिक्तं रूपं नास्तीति नहि स्वरो रूपवानित्युच्यते । तदा तृज्रूपस्यापि रूपं नास्तीति तदपि न रूपवदिति नातिदिश्येत । रूपातिदेशश्च प्रक्रान्तो न रूपवदतिदेशः । अत्रोच्यते—'प्रागादेशेभ्यो यद्रूप'मित्यत्र तावत्पक्षे स्वरोऽशक्योऽतिदेष्टुम्, तद्धि रूपं शास्त्रीयम्; न च स्वरो रूपत्वेनाऽऽश्रितः शास्त्रे ण्वुल्तृचावित्यस्मिन्नुच्चारणे स्वरस्य भेदहेतुत्वेनानाश्रयणात् । 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यादावुदात्तादिग्रहणात् । याऽपि चितोऽन्त उदात्त इति स्वरप्रतिपत्तिरसावप्यनुमानान्नतूच्चारणात् । 'कृतेष्वादेशे'-ष्वित्यत्र तु पक्षे यद्यप्युच्चारण उदात्तादिगुणानामभेदकत्वं ज्ञापितं तथाऽपि

उ०–सिद्धेस्तान्यनतिदिष्टानीत्ययुक्तमत आह—तदतिदेशेति । पञ्चकोष्टृभिरिति । पञ्चभिः क्रोष्ट्रीभिः क्रीतै रथैरित्यर्थः । यण उदात्तत्वादिति । उदात्तस्थानिकत्वात्तृज्वद्भावे चित्स्वरेण ऋकारस्योदात्तत्वादित्यर्थः । एकतरेति । लौकिकरूपातिदेशे स्वरदोषः पर्यवस्यतीतीहोच्यते । उत्तरत्र पक्षद्वयसाधारणं स्वरदोषं वक्ष्यतीत्यपौनरुक्त्यमिति भावः । ननु शब्दस्येति । यत्तु पृथिव्यादिवृत्ति गुणभूतं रूपं तस्य शब्देऽसंभवः । अन्यादृशो रूपवद्व्यवहारस्तु । स्वरेऽपि समान इत्यर्थः । अथास्येति । मतुप उपादानादिति भावः । अयुक्तश्च भाष्ये मतुप्प्रयोग इत्याह—रूपातिदेशश्चेति । अत्र भगवतो गूढाभिप्रायमाह—प्रागादेशेभ्य इति । रूपत्वेनेति । शास्त्रीयस्य तृजा-देर्भेदकत्वेनेत्यर्थः । अस्मिन्नुच्चारण इति । उच्चारणविषय इत्यर्थः । भेदहेतुत्वे-नानाश्रयणे हेतुर्लुङ्लङिति । अनुमानादिति । उदात्तगुणबोधकशास्त्ररूपादित्यर्थः । एवं

नतिदिष्टानीति ? नैष दोषः । ऋकारेऽतिदिष्टे स्वाश्रया अत्रैते विधयो भविष्यन्ति । यदप्युच्यत उभयथा च स्वरोऽनतिदिष्टो न हि स्वरो रूपवानिति सचकारग्रहणसामर्थ्यात्स्वरो भविष्यति+ ।

**रूपातिदेश इति चेत्सर्वादेशप्रसङ्गः ॥ ३ ॥**

रूपातिदेश इति चेत्सर्वादेशः प्राप्नोति । सर्वस्य तुनन्तस्य तृशब्द आदेशः प्राप्नोति÷ ।

---

प्र०–यथाऽऽन्तरतम्यात्स्वर आश्रीयमाणो भेदकस्तथाऽतिदेशादपि, किंतूदात्तयण्व्यपदेशाभावात्स्वरासिद्धिः । यद्येवं रूपवानिति किमुच्यते, रूपमिति हि वक्तव्यम् । तत्र केचिदाहुः—भाष्यकारवचनात्स्वार्थिको मतुबथवा स्वरवानेव स्वरः । अर्शआदित्वादच् । नहि स्वरवानृकार उदात्तादिना रूपेण रूपवाञ्शास्त्र आश्रीयते, तस्याभेदकत्वात् । ऋकारेऽतिदिष्ट इति । तदर्थत्वादृकारातिदेशस्येति भावः । स्वाश्रया इति । स्वं निमित्तं शास्त्रं वाऽऽश्रयो येषामिति समासः । स चकारेति । अन्यथा तृचवदिति ब्रूयात् । न च तृंस्तृज्भ्यामन्योऽर्थवांस्तृशब्दोऽस्ति यस्य ग्रहणे दोषः स्यात्तस्मादनुमेयोऽपि स्वर उच्चारणेऽनाश्रीयमाणोऽपि चकारोच्चारणाद्भवति । सर्वादेशप्रसङ्ग इति । रूपातिदेशशब्दात्स्थान्यादेशभावोऽभ्युपगतो भवतीत्यनेकाल्त्वात्सर्वादेशस्तृशब्दः प्राप्नोति ।

---

उ०–चातिदेशकाले स्वराप्रतिपत्तेस्तदतिदेशोऽशक्यक्रिय इत्यस्वरकस्यैव ऋकारस्यातिदेशात्तत्स्थानिकयण उदात्तस्थानिकत्वाभावात्क्रोष्ट्रेत्यादौ स्वरासिद्धिः । क्रोष्टा क्रोष्टारावित्यादौ च स्वरासिद्धिरिति भावः । तत्राऽऽद्य पक्ष एव नहि स्वरो रूपवानिति हेतुर्भाष्य उक्तः । अन्त्ये तु स्फुट एव हेतुरिति नोक्तः । भेदक इति । तेन क्रोष्टेत्यादौ स्वरसिद्धिरिति भावः । क्रोष्ट्रेत्यादौ तु तदसिद्धिरित्याह—किंत्विति । परे तु तृजन्तरूपस्यातिदेशः, रूपशब्देन वर्णरूपावयवसंस्थानं तद्वदेव च शब्दस्य रूपमित्युच्यते । स्वरस्तु न तद्वानिति शब्दत्वादिवन्न शब्दस्य रूपम् । तदुक्तम्–न हि स्वरो रूपवानिति यथाश्रुतमेव भाष्यं योजयन्ति । तदर्थत्वादिति । यस्य तु विधेर्निमित्तमेव नासौ बाध्यत इति न्यायादिति भावः । अप्रधानत्वादृकारस्य स्वशब्देन परामर्शासंभवो दीर्घस्य ऋकारानाश्रयत्वं चात आह—स्वं निमित्तमिति । ऋकारान्तस्यानङादिविधानादिति भावः । बुद्धिस्थपरामर्शकः स इति तात्पर्यम् । शास्त्रं वेति । ऋकारेऽतिदिष्टे स्वशास्त्रमाश्रित्यैते विधयः कार्याणि भविष्यन्तीत्यर्थः । ननु तृचवदित्युक्ते पितृशब्दस्थतृशब्दस्याप्यतिदेशः स्यादिति दीर्घो न स्यादत आह—न चेति । अर्थवत्परिभाषयाऽर्थवतस्तृरूपस्यातिदेश इत्यर्थः । उणादीनामव्युत्पन्नत्वात्तत्रत्यतृशब्दोऽनर्थकः । व्युत्पत्तिपक्षेऽप्यनान्तर्यात्क्रोष्टुशब्दस्थाने पितृरूपानतिदेश इति बोध्यम् । अनुमेयोऽपि । अतिदेशकालेऽप्रतीतोऽपि । तदेवाऽऽह–उच्चारणेऽनाश्रीयमाण इति । नन्वतिदेशे कथं सर्वादेशप्रसङ्गोऽत आह—रूपेति । रूपातिदेशद्वारेणाऽऽदेश एव फलतो विधीयत इत्यर्थः ।

---

+६. १. १६१. ÷१. १. ५५.

**सिद्धं तु रूपातिदेशात् ॥ ४ ॥**

सिद्धमेतत् । कथम् ? रूपातिदेशात् । रूपातिदेशोऽयम् । ननु चैवमेव कृत्वा चोद्यते रूपातिदेश इति चेत्सर्वादेशप्रसङ्ग इति ।

**सिद्धं तु प्रत्ययग्रहणे यस्मात्स तदादितदन्तविज्ञानात् ॥ ५ ॥**

सिद्धमेतत् । कथम् ? प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य च ग्रहणं भवतीत्येवं तुनन्तस्य तृजन्त आदेशो भविष्यति । एवमपि किंचिदेव तृजन्तं प्राप्नोति । इदमपि प्राप्नोति पक्तेति ।

**आन्तरतम्याच्च सिद्धम् ॥ ६ ॥**

क्रोष्टोर्यदन्तरतमं तद्भविष्यति । किं पुनस्तत् । क्रुशेर्यस्तृज्विहितस्तदन्तम् ।

**तृज्वद्वचनमनर्थकं तृज्विषये तृचो मृगवाचित्वात् ॥ ७ ॥**

तृज्विषय एतत्तृजन्तं मृगवाचि । तुनो निवृत्त्यर्थं तर्हीदं वक्तव्यम् । तुनः सर्वनामस्थाने निवृत्तिर्यथा स्यात् ।

**तुनो निवृत्त्यर्थमिति चेत्सिद्धं यथाऽन्यत्रापि ॥ ८ ॥**

तुनो निवृत्त्यर्थमिति चेत्तदन्तरेण वचनं सिद्धं यथाऽन्यत्राप्यविशेषविहिताः शब्दा नियतविषया दृश्यन्ते । क्वान्यत्र ? तद्यथा—घरतिरस्मा अविशेषेणोपदिष्टः स घृतम् घृणा घर्म इत्येवंविषयः । रशिरस्मा अविशेषेणोपदिष्टः स राशिः रश्मिः रशनेत्येवंविषयः । लुशिरस्मा अविशेषेणोपदिष्टः स लोष्ट इत्येवंविषयः । इदं तर्हि प्रयोजनं विभाषां वक्ष्यामीति । विभाषा तृतीयादिष्वचि [ ७. १. ९७ ] इति ।

प्र०—सिद्धमिति । तृजन्तरूपातिदेशादित्यर्थः । आन्तरतम्यादिति । अर्थेन स्वरूपेण चेत्यर्थः । तृज्विषय इति । तृज्वद्भावविषय इत्यर्थः । घरतिरिति । 'घृ सेचने' इति भौवादिकः । जिघर्तीत्येतत्तु 'घृ क्षरणदीप्त्यो'रित्यस्य बहुलं छन्दसीत्यभ्यासस्येत्त्वे कृते रूपम् । 'रशिलुशी' अपठितावपि भाष्यकारवचनाद्धातू बोद्धव्यौ । प्रयुक्तानामिदमन्वाख्यानं नत्वस्मादपूर्वशब्दप्रतिपत्तिरिति नियतविषयत्वमुच्यते । अनेनैव न्यायेनास्तेर्भूरित्यादीन्यपि प्रत्याख्येयानि । अबुधबोधनार्थं तु किंचिद्वचनेन प्रति-

उ०—एवं च क्रोष्टुशब्दस्थाने तृशब्द आदेशः प्राप्नोतीत्याशयः । ननु रूपातिदेश एवाऽऽपादिते दोषे कथं स एव हेतुरत आह—तृजन्तेति । तृज्वद्भावविषय इति । वार्तिके तृज्ग्रहणेन तदन्तातिदेशो लक्ष्यत इति भावः । धातू बोद्धव्याविति । धातुपाठे पठितावभावेऽपीति बोद्धव्यावित्यर्थः । प्रत्याख्येयानीति । भाष्ये सार्वधातुकमात्रविषयत्वादिति भावः । अबुधबोधनाय सूत्राणि, न्यायव्युत्पादनाय [illegible] भाष्यम्

**वावचनानर्थक्यं च स्वभावसिद्धत्वात् ॥ ९ ॥**

वावचनं चानर्थकम् । किं कारणम् ? स्वभावसिद्धत्वात् । स्वभावत एव तृतीयादिष्वजादिषु विभक्तिषु तृजन्तं च तुनन्तं च मृगवाचीति ।

**गुणवृद्ध्यौत्त्वतृज्वद्भावेभ्यो नुम्पूर्वविप्रतिषिद्धम् ॥ १० ॥**

गुणवृद्ध्यौत्त्वतृज्वद्भावेभ्यो नुम्भवति पूर्वविप्रतिषेधेन* । तत्र गुणस्यावकाशः—अग्नये वायवे । नुमोऽवकाशः—त्रपुणी जतुनी । इहोभयं प्राप्नोति—त्रपुणे जतुने । वृद्धेरवकाशः—सखायौ सखायः । नुमः स एव । इहोभयं प्राप्नोति—अतिसखीनि ब्राह्मणकुलानीति । औत्त्वस्यावकाशः—अग्नौ वायौ । नुमः स एव । इहोभयं प्राप्नोति—त्रपुणि जतुनीति । तृज्वद्भावस्यावकाशः—क्रोष्टा क्रोष्टुना । नुमः स एव । इहोभयं प्राप्नोति—कृशक्रोष्टुनेऽरण्याय । हितक्रोष्टुने वृषलकुलाय । नुम्भवति पूर्वविप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ? न वक्तव्यः । इष्टवाची परशब्दः+ । विप्रतिषेधे परं यदिष्टं तद्भवतीति ।

**नुमचिरतृज्वद्भावेभ्यो नुट् ॥ ११ ॥**

नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन वक्तव्यः× । नुमोवकाशः—त्रपूणि, जतूनि । नुटोऽवकाशः—अग्नीनाम्, वायूनाम् । इहोभयं प्राप्नोति—त्रपूणाम्, जतूनाम् । अचि रादेशस्यावकाशः—तिस्रस्तिष्ठन्ति, चतस्रस्तिष्ठन्ति । नुटः स एव । इहोभयं प्राप्नोति—तिसृणाम्, चतसृणाम् । तृज्वद्भावस्यावकाशः—क्रोष्टा क्रोष्टुना । नुटः स एव । इहोभयं प्राप्नोति—क्रोष्टूनाम् । नुड्भवति पूर्वविप्रतिषेधेन । स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ?

---

प्र०—पाद्यते । न्यायव्युत्पादनार्थं चाऽऽचार्यः किंचित्प्रत्याचष्टे । न ह्यत्रैकः पन्थाः समाश्रीयते । अतिसखीनीति । अतिक्रान्तः सखा यैरिति बहुव्रीहिः । कृशक्रोष्टुन इति । क्रोष्टुशब्दः स्त्रीपुंसलिङ्ग इत्यन्यपदार्थस्य नपुंसकत्वं प्रदर्श्यते । क्रोष्टूनामिति । तृज्वद्भावः कृते नुट्यनजादित्वान्न प्राप्नोतीत्यनित्यो नुडागमोऽपि

---

उ०—प्रत्याख्यानमिति तात्पर्यम् । किंच सूत्रेषु कृतेष्वप्यनभिधानमावश्यकमिति ध्वनयन् वार्तिकमाह—गुणेति । तत्पुरुषे टचः प्रसङ्गादाह—बहुव्रीहिरिति । समासोदाहरणस्योपयोगमाह—क्रोष्टुशब्द इति । अन्यथा पुंवद्भावपक्षे कृशक्रोष्ट्रे इत्यपि स्यादिति भाष्याशयः । ननु कृशक्रोष्टु ङे इत्यस्यामवस्थायां नुमृज्वत्वयोः प्राप्तयोः परत्वात्तृज्वत्त्वे सकृद्गतिन्यायेन नुमभावे कृशक्रोष्ट्रे इत्येव रूपं तच्चेष्टमेव पुंवत्त्वपक्ष इति पूर्वविप्रतिषेधो व्यर्थः । कृशक्रोष्टुन इति तृज्वत्त्वाभावपक्षे साधु । नच पुनःप्रसङ्गविज्ञानपक्षे तत्प्राप्त्या चारितार्थ्यम् । तत्पक्षाश्रयेण वचनकरणापेक्षया सकृद्गतिन्याया-

---

* ७. ३. १११; ७. १. ६२ (७. २. ११५); ७. ३. ११९; ७. १. ९७; ७.१. ७३.
+ १. ४. २; × ७. १. ७२; ७. २. १००; ७. १. ९७; ७. १. ५४.

**न वा नुड्विषये रप्रतिषेधात् ॥ १२ ॥**

न वैतद्विप्रतिषेधेनापि सिध्यति तिसृणाम्, चतसृणामिति । कथं तर्हि सिध्यति ? नुड्विषये रप्रतिषेधात् । नुड्विषये रप्रतिषेधो वक्तव्यः ।

**इतरथा हि सर्वापवादः ॥ १३ ॥**

इतरथा हि सर्वापवादो रादेशः । स यथैव गुणपूर्वसवर्णौ* बाधत एवं नुटमपि बाधेत ।

**तस्मान्नुड्विषये रप्रतिषेधः ॥ १४ ॥**

तस्मान्नुड्विषये रादेशस्य प्रतिषेधो वक्तव्यः । न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति न रादेशो नुटं बाधत इति यदयं न तिसृचतसृ [ ६. ४. ४ ] इति प्रतिषेधं शास्ति नामि दीर्घत्वस्य ।

**चतुरनडुहोरामुदात्तः ॥ ७ । १ । ९८ ॥**

**आमनडुहः स्त्रियां वा ॥ १ ॥**

आमनडुहः स्त्रियां वेति वक्तव्यम् । अनडुही अनड्वाही ।

---

प्र०—कृते तृज्वद्भावे संनिहितपरिभाषया न प्राप्नोतीत्यनित्यः । नवेति । नुड्रेफयोर्यो विप्रतिषेध उक्तः स नेत्यर्थः । स यथैवेति । मध्येऽपवादा इत्येतदनाश्रित्यैतदुक्तम् । तत्र ह्याश्रीयमाणे गुणं न बाधेत । गुणपूर्वसवर्णग्रहणमुपलक्षणमृत उदित्युत्वस्यापि बाधनात्त्रियतिसः स्वमित्यादौ । यदयमिति । नहि रादेशे कृते दीर्घस्य प्राप्तिः, अनजन्तत्वान्नुडभावाच्च । एवं च विप्रतिषेधोऽपि न वक्तव्यः । ज्ञापकादेव नुडभावात् ।

चतुरनडुहोरामुदात्तः । गौरादिष्वनडुही अनड्वाहीति पाठोऽपौराणिकः । अनडुह्शब्द एव ङीपर्थः पठित इति मत्वा वार्तिकमारब्धम् । अनडुहः स्त्रियां वेति ।

---

उ०—श्रवणेन वचनानारम्भे लाघवादिति चेन्न । एतद्भाष्यप्रामाण्यात्पुंवत्त्वविषयेऽनभिधानेन तृज्वत्त्वाप्रवृत्तेः । तेन क्रुष्टाक्रोष्ट्र इत्याद्यसाध्वेवेति सुधियो विभावयन्तु । संनिपातपरिभाषयेति । अजादिप्रत्ययसंनिपातलक्षणत्वात्तृज्वद्भावस्येत्यर्थः । भाष्ये विप्रतिषेधशब्दस्य न सामान्यपरत्वमित्याह—नुड्रेफयोरिति । अत्रायं नुड्रेफयोर्बाध्यबाधकभावपरभाष्यविरोधान्नुड्रोरिति सूत्रस्थो भिन्नफलकस्याबाधकत्वपरः कैयटग्रन्थः । गुणमिति । जसि चेति गुणस्य रादेशात्परत्वादिति भावः । तस्मादादेशो बाध्यसामान्यचिन्तया सर्वबाधक इत्ययदयमुपेयमिति तात्पर्यम् । अनजन्तत्वादिति । मध्यमणिन्यायेनोभयान्वयि ।

चतुरन० । अपौराणिक इति । विनयादित्वाट्ठक् । अपुराणो नवीन इत्यर्थः ।

---

* ७. ३. ११०; ६. १. १०२;

**ऋत इद्धातोः ॥ ७ । १ । १०० ॥**

**उपधायाश्च ॥ ७ । १ । १०१ ॥**

**उदोष्ठ्यपूर्वस्य ॥ ७ । १ । १०२ ॥**

इत्त्वोत्त्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन । इत्त्वोत्त्वयोरवकाशः—आस्तीर्णम्, निपूर्ताः पिण्डाः । गुणवृद्ध्योरवकाशः×—चयनम्, चायकः । लवनम्, लावकः । इहोभयं प्राप्नोति—आस्तरणम्, आस्तारकः । निपरणम्, निपारकः । गुणवृद्धी भवतो विप्रतिषेधेन । अयुक्तोऽयं विप्रतिषेधो योऽयं गुणस्येत्त्वोत्त्वयोश्च । कथम्? नित्यो गुणः ।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् । पादश्च समाप्तः ।

---

प्र०- ऋत इद्धातोः । नित्यो गुण इति । कृताकृतप्रसङ्गित्वाल्लक्षणान्तरेण प्राप्नुवन्विधिरनित्य इत्यनाश्रित्य कार्यप्राप्तिमात्रमङ्गीकृत्येदमुक्तम् । लक्षणभेदापेक्षायां तु लक्षणान्तरस्य प्रवृत्तावपि विप्रतिषेधविषयस्य लक्षणस्याप्रवृत्त्याऽनित्यत्वमेव ।

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे सप्तमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् । पादश्च प्रथमः ।

---

उ०- ऋत इद्धातोः । नन्वकृते सार्वधातुक इति गुणः, कृते पुगन्तेति कथं नित्यत्वं लक्षणभेदादत आह—लक्षणान्तरेणेति । गुणाख्यकार्यस्य कृताकृतप्रसङ्गित्वमात्रमाश्रित्येदमुक्तमित्यर्थः । अनित्यत्वमेवेति । तथा चात्रत्यविप्रतिषेधखण्डनमेकदेशिन इति भावः ।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते सप्तमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकं पादश्च ।

---

× ७. ३. ८४; ७. २. ११५.

## अथ द्वितीयः पादः

### सिचि वृद्धिः परस्मैपदेषु ॥ ७ । २ । १ ॥

**सिचि वृद्धावोकारप्रतिषेधः ॥ १ ॥**

सिचि वृद्धावोकारस्य प्रतिषेधो वक्तव्यः* । उदवोढाम्, उदवोढम्, उदवोढेति । स तर्हि प्रतिषेधो वक्तव्यः । न वक्तव्यः । ओकाराद्वृद्धिर्विप्रतिषेधेन । ओत्वं क्रियतां वृद्धिरिति वृद्धिर्भविष्यति विप्रतिषेधेन ।

**ओकाराद्वृद्धिर्विप्रतिषेधेनेति चेदोत्वाभावः ॥ २ ॥**

ओकाराद्वृद्धिर्विप्रतिषेधेनेति चेदोत्वस्याभावः । उदवोढाम् उदवोढम् उद

---

प्र०– सिचि वृद्धिः परस्मैपदेषु । सिचि वृद्धाविति । इहानिर्दिष्टस्थानिकत्वादिक्परिभाषोपस्थानादोकारस्य नास्ति प्राप्तिः । वदव्रजेत्यत्र त्वच इति स्थानिनिर्देशादिक्परिभाषानुपस्थानादोकारस्य वृद्धिप्रसङ्गे वचनम् । तत्र सिचि वृद्धावित्यनेन प्रकरणं प्रदर्श्यते । अथवा सिचि या वृद्धिर्वदव्रजेत्यनेन तस्यामित्यर्थः । ननु च वृद्धौ कर्तव्यायां पूर्वत्रासिद्धमिति सिज्लोपादीनामसिद्धत्वात्पूर्वं वृद्ध्या भाव्यं ततः सिज्लोपेन ततो ढत्वधत्वष्टुत्वढलोपेषु कृतेष्वोत्वेनेति वृद्धिविधानकाल ओकारस्याभावान्नार्थः प्रतिषेधेन । उच्यते । वृद्धिरङ्गापेक्षित्वात्प्रत्ययविशेषापेक्षित्वाच्च बहिरङ्गा सिज्लोपादयस्तु वर्णनिमित्तत्वादन्तरङ्गा इत्यसिद्धं बहिरङ्गमन्तरङ्ग इति वृद्धेरसिद्धत्वात्पूर्वत्रेति निर्दिष्टस्यासिद्धविषयस्याभावात्सलोपादीनामसिद्धत्वं नास्ति । पूर्वत्रासिद्धमित्यनेन सलोपादीनामसिद्धत्वादन्तरङ्गलक्षणस्य विषयस्याभावस्तदपेक्षबहिरङ्गत्वस्यापि बहिरङ्गस्याभावादसिद्धं बहिरङ्गमन्तरङ्ग इत्येषा परिभाषा न प्रवर्तते । तदेवं परस्परप्रतिबद्धस्य परिभाषाद्वयस्याप्रवृत्तौ परत्वात्सलोपादीन्कृत्वाऽन्तरङ्गत्वात्पूर्वमोत्वप्रवृत्तिमभ्युपगम्य चोदयति । वदव्रजेत्यत्र चान्तरेणान्तग्रहणं तदन्तविधौ सिद्धेऽन्तग्रहणमौपदेशिकहलन्तप्रतिपत्त्यर्थं मन्यते । प्रत्ययलक्षणेन च सिच्परत्वम् । ओकारादिति । न चान्तरङ्ग ओकारः । बह्वपेक्षत्वात् । उक्तं तत्रेति । ओदन्तस्येत्युच्यमाने तादपि

---

उ०– सिचि वृद्धिः० । ओकारं प्रकृतसूत्राप्राप्तिमाह—इहेति । उच्यत इति । केचित्तु तत्र ढलोप इति विषयसप्तमीति वार्तिकाशयमाहुः । प्रत्ययविशेषेति । परस्मैपदपरसिजपेक्षेत्यर्थः । अन्तरङ्गत्वादिति । वृद्धेर्बह्वपेक्षत्वाद्बहिरङ्गत्वं मन्यते । नन्वसिद्धत्वात्प्रवृत्ताय[illegible] [illegible]भावात्कथं वृद्धिप्राप्तिरत आह—वदव्रजेत्यत्रेति । बह्वपेक्षत्वादिति । ढलोप इत्यस्य बहिर्[illegible]परसप्तम्या[illegible]भिमानः । बहिर्भूतपरस्मैपदापेक्षत्वेन वृद्धेरोत्वस्यान्तरङ्गत्वमेवेति चिन्त्यमिदम् । यदि [illegible] [illegible] ढलोप इत्यस्य [illegible] [illegible] [illegible] [illegible] इत्याहुः । अप्रवृत्त्यापेक्षेति । [illegible] [illegible]

---

* ७. २. ३; ६. १. ११२.

वोढेति । नैष दोषः । उक्तं तत्र+ वर्णग्रहणस्य प्रयोजनं वृद्धावपि कृतायामोत्त्वं यथा स्यात् ।

**पुनःप्रसङ्गविज्ञानाद्वा सिद्धम् ॥ ३ ॥**

अथवा पुनःप्रसङ्गादत्र वृद्धौ कृतायामोत्त्वं भविष्यति ।

**यथा प्रसारणादिषु द्विर्वचनम् ॥ ४ ॥**

तद्यथा—जग्ले मम्ले, ईजतुः ईजुरिति प्रसारणादिषु पुनःप्रसङ्गविज्ञानाद्द्विर्वचनं भवति* । इहापि तर्हि पुनःप्रसङ्गविज्ञानादोत्त्वं स्यात्—सौढामित्रिरिति ।

**सौढामित्रौ बहिरङ्गलक्षणत्वात्सिद्धम् ॥ ५ ॥**

बहिरङ्गलक्षणा वृद्धिः× । अन्तरङ्गमोत्त्वम् । असिद्धं बहिरङ्गमन्तरङ्गे ।

**अतो लान्तस्य ॥ ७ । २ । २ ॥**

अन्तग्रहणं किमर्थं नातो लं इत्येवोच्येत ? केनेदानीं तदन्तस्य भविष्यति ? तदन्तविधिना+ । इदं तर्हि प्रयोजनम्—अयमन्तशब्दोऽस्त्येवावयववाची । तद्यथा—वस्त्रान्तो वसनान्तः । अस्ति सामीप्ये वर्तते । तद्यथा—उदकान्तं

---

प्र०—परस्तपर इत्यकारस्य तपरत्वाद्भिन्नकालस्य ग्रहणं न स्यादिति तस्यापि ग्रहणार्थं वर्णग्रहणं कृतमिति तत्सामर्थ्यात्कृतायामपि वृद्धावोत्त्वं प्रवर्तते । प्रवृत्तत्वाच्च लक्षणस्य पुनर्वृद्धेः प्रवृत्तिर्न भवति । सौढामित्रिरिति । सोढा अमित्रा येनेति बहुव्रीहिः । विभज्यान्वाख्याने 'सढ अमित्र इ' इति स्थिते परत्वाद्वृद्धिं मन्यते । बहिरङ्गलक्षणत्वादिति । यत्र विप्रतिषेधस्तत्र पुनःप्रसङ्गविज्ञानमिह तु वृद्धिनिमित्ते तद्धितेऽनुपजात एवान्तरङ्गमोत्त्वं प्रवर्तते । ततोऽर्थान्तराश्रयतद्धितनिमित्ता वृद्धिः ।

अतो० । अन्तग्रहणमिति । अवयववचनोऽन्तशब्दस्तदन्तविधिनैव च तदर्थो लब्ध इति मत्वा प्रश्नः । तद्यः सामीप्य इति । अन्तशब्दोपादानादेव सामीप्यार्थस्य ग्रहणम् । अङ्गान्तावि.ति । रश्च लश्च र्लम् । ततः षष्ठ्या सुपां सुलुगिति लुक् । तत्र र्लेणाङ्गस्य विशेषणात्तदन्तविधौ र्लान्तस्याङ्गस्य योऽकारस्तस्य वृद्धिर्भवति । ततोऽन्तस्येत्यकारो विशेष्यते । संनिधानाच्च र्लापेक्षं सामीप्यमकारस्य विज्ञायत इति सामर्थ्यादङ्गान्तरे-

---

उ०—लक्ष्यैवयम् । नन्विह युगपत्प्राप्त्यभावात्कथं विप्रतिषेधोऽत आह—विभज्येति । वृद्धिं मन्यत इति । पुनस्तु न वृद्धिः कृतत्वादिति भावः । अनुपजात एवेति । कुत्सित इति सूत्रभाष्योक्तरीत्या क्रमेणान्वाख्यानमेवोचितमिति भावः । विभज्यान्वाख्यानेऽपि बहिर्भूतनिमित्तकवृद्धेरसिद्धत्वादन्तरङ्गनिमित्तमोत्त्वमिति बोध्यम् । एवमेव भाष्यव्याख्योचिता ।

अतो र्लान्तस्य । तदन्तविधिनैवेति । सूत्रे च र्लान्तस्येति बहुव्रीहिरङ्गमन्यपदार्थः । स चार्थोऽन्तग्रहणं विनाऽपि सिद्ध इत्यर्थः । अप्रसिद्धार्थोपादाने बीजमाह—अन्तशब्देति । अङ्गान्तावित्यर्थलाभः कथमत आह—रश्च लश्चेति । फलि-

---

+६. १. ११२. * ६. १. १५; ४५;—८. × ४. १.-९५; ७. २. ११७. + १. १. ७२.

गतः । उदकसमीपं गत इति गम्यते । तद्यः सामीप्ये वर्तते तस्येदं ग्रहणं यथा विज्ञायेत । अङ्गान्तौ यौ रेफलकारौ तयोः समीपे योऽकारस्तस्य यथा स्यात् । इह मा भूत्—अश्वलीत् अवभ्रीत् ।

**वदव्रजहलन्तस्याचः ॥ ७ । २ । ३ ॥**

हल्ग्रहणं किमर्थम् ? समुच्चयो यथा विज्ञायेत—'वदिव्रज्योश्च हलन्तस्य चाच' इति । नैतदस्ति प्रयोजनम् । अज्ग्रहणादेवात्र समुच्चयो भविष्यति । वदिव्रज्योश्चाचश्चेति । अस्त्यन्यदज्ग्रहणे प्रयोजनं वदिव्रजिविशेषणं यथा विज्ञायेत—वदिव्रज्योरच इति । यद्येतावत्प्रयोजनं स्याद्वदिव्रज्योरत इत्येवं ब्रूयात् । अथवैतदपि न ब्रूयात् । अत इति* वर्तते । इदं तर्हि प्रयोजनं—हलन्तस्य यथा स्यादजन्तस्य मा भूत् । कस्य पुनरजन्तस्य प्राप्नोति ? अकारस्य । अचिकीर्षीत्, अजिहीर्षीत् । लोपो+ऽत्र बाधको भविष्यति । आकारस्य तर्हि प्राप्नोति—अयासीत्, अवासीत् । नास्त्यत्र विशेषः—सत्यां वा वृद्धावसत्यां वा । संध्यक्षरस्य तर्हि प्राप्नोति । न वै संध्यक्षरमन्त्यमस्ति । ननु चेदमस्ति ढलोपे कृते

प्र०—फलकारसमीपस्याकारस्य वृद्धिरित्यर्थः संपद्यते । अश्वल्लीत् अवभ्रीदिति । अत्राङ्गान्त्ययो रेफलकारयोः समीपेऽकारो नेत्यनेन वृद्धिर्न भवति । हलन्तलक्षणा नेटीति प्रतिषिद्धा ।

वदव्रज० । हल्ग्रहणं किमर्थमिति । अज्ग्रहणादेव हलन्तस्य सिद्धा वृद्धिरिति प्रश्नः । अङ्गेन चाचो विशेषणाद्यत्र तत्र स्थितस्याचो वृद्धिर्विधीयमाना हलन्तस्य प्रवर्तते । अजन्तस्य मा भूदिति । असति हल्ग्रहणेऽचाऽङ्गस्य तदन्तविधिर्विज्ञायेत । ततश्चाल्लोपादीन्बाधित्वा वृद्धिः स्यात् । लोपोऽत्रेति । विशेषणविशेष्यभावे कामचारादङ्गेनाज्विशेष्यते । तत्रापाक्षीदित्यादौ सावकाशा वृद्धिरतो लोपेन पूर्वविप्रतिषेधेन बाध्यते । णयल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्य इति । अचा त्वङ्गे विशेष्यमाणे वृद्धिरनवकाशाऽतो लोपं बाधेत । आकार-

उ०—सार्थकथनं तदिति भावः । अत्रैतत्कैयटपाठस्वरसादङ्गान्तौ रेफलकाराविति भाष्यस्वरसाच्च 'अतो ल्रान्तस्य' इति पाठ इति लभ्यते । अत्राङ्गान्त्ययोरिति । लक्ष्यानुरोधाद्व्यक्तिपक्ष एवाऽऽश्रीयते, जातेरङ्गावयवत्वासंभवाच्च नाचलीदित्यत्रापि दोषः । सामीप्यं चाव्यवहित एवेति भावः । न च सिचीत्यकारविशेषणेन येन नाव्यवधानन्यायेन चाऽचलीदिति व्यावृत्तावन्तग्रहणं व्यर्थम् । अङ्गस्य प्रत्ययेन दर्शितावाऽऽश्रयेण तद्विशेषणताया एव न्याय्यत्वात् ।

वदव्रज० । कथमज्ग्रहणाद्धलन्तस्य वृद्धिरत आह—अङ्गेन चेति । हल्ग्रहणाकरणानुरोधादेवं विशेषणमत्राश्रीयत इत्यर्थः । अज्ग्रहणसामर्थ्यादेव इत्यापत्तेः । [illegible] हलादेरित्येव [illegible] संबन्धोऽङ्गावयवस्याच इत्यर्थ इति भावः । वृद्धि-

* ७, २, २. + ६, ४' ४८.

उदवोढाम्, उदवोढम्, उदवोढेति* । असिद्धो ढलोपस्तस्यासिद्धत्वान्नैतदन्त्यं भवति । अत उत्तरं पठति—

**हल्ग्रहणमिटि प्रतिषेधार्थम् ॥ १ ॥**

हल्ग्रहणं क्रियत इटि प्रतिषेधार्थम् । नेटि [ ७. २. ४ ] इति प्रतिषेधं वक्ष्यति स हलन्तस्य यथा स्यादजन्तस्य मा भूत्—अलावीत्, अपावीत्÷ ।

**न वाऽनन्तरप्रतिषेधात् ॥ २ ॥**

न वैतत्प्रयोजनमस्ति । किं कारणम् ? अनन्तरस्य प्रतिषेधात् । अनन्तरं यद्वृद्धिविधानं तत्प्रतिषिध्यते । कुत एतत् ? अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ।

**तच्चानन्त्यार्थम् ॥ ३ ॥**

तच्चानन्तरं वृद्धिविधानमनन्त्यार्थं विज्ञायते । कथं पुनरनन्तरं वृद्धिविधानमनन्त्यार्थं शक्यं विज्ञातुम् ?

**अन्त्यस्य वचनानर्थक्यात् ॥ ४ ॥**

प्र०—स्य तर्हीति । स्थानेऽन्तरतमपरिभाषाया अत्राप्रवृत्तिं मन्यते । तत्प्रवृत्तौ हि प्रधानं वृद्धिविधानं विफलत्वादुपरुध्येत । नास्त्यत्र विशेष इति । विशिष्टविषयव्यवस्थापनं प्रधानस्य गुणेन कर्तव्यमिति प्रवृत्त्यप्रवृत्त्योर्वृद्धेर्विशेषभावेऽपि नास्ति प्रधानोपरोध इति प्रवर्तत एवान्तरतमपरिभाषेति भावः । संध्यक्षरस्येति । औकार ओकारस्य प्राप्नोतीत्यस्ति विशेषः । तस्यासिद्धत्वान्नैतदन्त्यमिति । ननु मा भूदन्त्यमनन्त्यस्याप्यविशेषविधानात्प्राप्नोति । एवं तर्हि पराभ्युपगमनिवृत्तिपरमेतत् । परेण संध्यक्षरस्यान्त्यत्वमभ्युगतं निवार्यते । अनन्त्यत्वे त्वोकारस्य यथा वृद्धिर्न भवति तथाऽऽद्यसूत्रे प्रतिपादितम् । हल्ग्रहणमिति । असतीह हल्ग्रहणे नेटीत्यत्राज्ग्रहणानुवृत्तावपि या काचिदचो वृद्धिः प्रतिषिध्येत । यदि त्वज्ग्रहणानुवृत्तिसामर्थ्यादच इत्येवं विहिता या वृद्धिस्तस्याः प्रतिषेधो विज्ञायेत तदा न स्याद्दोषः । परिहारान्तरसद्भावात्तु नेदमुक्तं तदाह—नवेति । अन्त्यस्य वचनार्थक्यादिति । कश्चिदन्त्यो विधिभाङ् न संभ-

उ०—रनवकाशेति । अल्लोपादिषु नाप्राप्तेषु वृद्धेरारम्भादिति भावः । स्थानेऽन्तरेति । ततश्चौकारादिर्वृद्धिः स्यादित्यर्थः । अप्रवृत्तौ बीजमाह—तत्प्रवृत्तौ हीति । न हि प्रधानोपरोधिना गुणेन भाव्यमिति भावः । नास्ति प्रधानोपरोध इति । सर्वथाऽप्रवृत्तावेवोपरोधो नतु विशेषाभावेऽपीति भावः । न वै संध्यक्षरमित्येतद्भाष्यप्रामाण्यात्संध्यक्षरान्तेभ्य आचारक्विब्नभिधानान्नेत्याहुः । इको गुणेतिसूत्रस्थोऽग्रिम एतत्सूत्रस्थश्च कैयटस्तु चिन्त्य इति बोध्यम् । अविशेषविधानादिति । अङ्गेनाचो विशेषणादिति भावः । अनन्त्यस्य वृद्धिरिति सिद्धान्ते दोषः स्यादेवेत्यत आह—अनन्त्यत्वे त्विति । आद्यसूत्रे । लिचिरित्यत्र । प्रतिपादितमिति । लक्ष्ये लक्षणस्येति न्यायेनेति भावः । या काचिदिति । इडादौ

* ८ ३. १३; ६. ३. ११२. ÷ ७. २. १.

अन्त्यस्य वृद्धिविधाने प्रयोजनं नास्तीति कृत्वाऽनन्तरं वृद्धिविधानमनन्त्यार्थं विज्ञायते।

अतो विभाषार्थं तर्हीदं वक्तव्यम्। अतो हलादेर्लघोः [ ७. २. ७ ] इति विभाषा वृद्धिं वक्ष्यति सा हलन्तस्य यथा स्यादजन्तस्य मा भूत्—अचिकीर्षीत्, अजिहीर्षीत्।

**अतो विभाषार्थमिति चेत्सिद्धं वृद्धेर्लोपबलीयस्त्वात्॥ ५॥**

अतो विभाषार्थमिति चेत्तदन्तरेणापि हल्ग्रहणं सिद्धम्। कथम्? वृद्धेर्लोपबलीयस्त्वात्। वृद्धेर्लोपो* बलीयान्भवतीति। इदमिह संप्रधार्यम्—वृद्धिः क्रियतां लोप इति किमत्र कर्तव्यम्? परत्वाद्वृद्धिः। नित्यो लोपः। कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि+। अनित्यो लोपो न हि कृतायां वृद्धौ प्राप्नोति। परत्वात्सगिड्भ्यां भवितव्यम्×। नात्र सगिटौ प्राप्नुतः। किं कारणम्?

प्र०—वति। अयासीदित्यादौ तु विशेषाभावः। तदेवमिहार्थो हल्ग्रहणस्य नास्तीति मत्वाऽऽह—अतो विभाषार्थमिति। असति हल्ग्रहणेऽकार्णीदकार्णीदित्यादौ सावकाशा वृद्धिरचिकीर्षीदित्यादौ परत्वाल्लोपं बाधेत। अथवाऽताऽङ्गस्य विशेषणात्तदन्तस्यैव स्यान्न त्वकार्णीदित्यादौ। कृतायामपीति। आतो लोप इति चेत्यनेनेति भावः। अत्र शब्दान्तरप्राप्तिर्लक्षणान्तरप्राप्तिश्च नाऽऽश्रिता। कृताकृतप्रसङ्गित्वात्तु लोपाख्यस्य कार्यस्यानाश्रितोपाधिभेदस्य नित्यत्वमाश्रितम्। परत्वादिति। यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यमिति नाऽऽश्रितम्। लोपेनात्र वृद्धौ कृतायां न भाव्यमिति तस्यानित्यत्वमित्येतावदाश्रित्योच्यते। वृद्धिरेवापवादनिमित्ततामुपयान्ती लोपं विहन्तीति तदपेक्षया भवत्येव लोपस्यानित्यत्वम्। एकाचस्तौ बलीति। एकीयमतमेतत्। तथा च या चाद्यतन्यामिति यदाऽऽकारलोपो दरिद्रातेनास्ति तदाऽदरिद्रासीदिति सगिटावुदाहृतावेव। सिद्धश्चेति। आर्धधातुके विषय-

उ०—परस्मैपदपरे सिचि परेऽङ्गस्याचो न वृद्धिरित्यर्थेनागार्धीदित्यादौ सिचि वृद्धेरपि स निषेधः स्यादित्यर्थः। अनुवृत्तिसामर्थ्यादिति। इमादौ सिच्यङ्गस्य वृद्धिर्नेत्येव सिद्धेरिति भावः। परिहारान्तरेति। अज्ग्रहणासंबन्धेऽप्यनन्तरस्येति न्यायेन तदर्थसिद्धिरूपपरिहारान्तरेत्यर्थः। नन्वनन्तरा वृद्धिर्हलन्तस्य यथा स्यादजन्तस्य मा भूदित्यर्थं तत्स्यादिति शङ्कायामुक्तयुक्तिं स्मारयति-भाष्ये तत्रानन्त्यार्थमिति। करिष्यतीति। अचिकीर्षीदित्यादौ लोपेनापहारादिति भावः। विशेषाभाव इति। यद्यप्यत्र परत्वेऽपि सगिड्भ्यां परत्वादपवादत्वाच्च वृद्धिं बाधित्वा भाव्यं तयोश्च कृतयोरातोऽपगमं न भवति तथाऽपि तदनुपगमेऽप्यदोष इत्यर्थः। व्याख्यातारस्तु पूर्वविप्रतिषेधमत्राह—अथवेति। कृतायां वृद्धावपि लोप इत्यस्याशङ्काह—आतो लोप इति। उपाधिभेदस्येति। उपाधिभेदः स्थानिभेदो लक्ष्यभेदोऽर्थः। न भाव्यमिति। बाधकमस्त्यविशिष्टेति भावः। [illegible]ति।

* ६. ४. ४८. + ६. ४. ६४; ४८. × ७. २. ७३.

## एकाचस्तौ वलीति वा ॥ ६ ॥

एकाचः सगिटावुच्येते÷ । अथवा वलीति तत्रानुवर्तते* । किं पुनः कारणमेकाचस्तौ वलीति वा ? दरिद्रातेर्मा भूदिति । दरिद्रातेर्न सगिड्भ्यां भवितव्यम् । उक्तमेतद्दरिद्रातेरार्धधातुके लोपः सिद्धश्च प्रत्ययविधाविति× । यश्चेदानीं प्रत्ययविधौ सिद्धः, सिद्धोऽसौ सगिड्विधौ । एवमर्थमेव तर्ह्येकाज्ग्रहणमनुवर्त्यमत्र सगिटौ मा भूतामिति । स एष नित्यो लोपो वृद्धिं बाधिष्यते ।

कं पुनर्भवान्वृद्धेरवकाशं मत्वाऽऽह नित्यो लोप इति ? अनवकाशा वृद्धिर्लोपं बाधिष्यते । सावकाशा वृद्धिः । कोऽवकाशः ? अनन्त्यः । अकणीत्, अकाणीत् । कथं पुनः सत्यन्त्येऽनन्त्यस्य वृद्धिः स्यात् ? भवेद्योऽताऽङ्गं विशेषयेत्तस्यानन्त्यस्य न स्यात् । वयं तु खल्वङ्गेनाकारं विशेषयिष्यामः । तत्रानन्त्यो वृद्धेरवकाशोऽन्त्यस्य लोपो बाधको भविष्यति । एवं वृद्धेर्लोपबलीयस्त्वात् ।

प्र०—भूत एव लोपविज्ञानात् । एवमर्थमिति । अचिकीर्षीदित्यादौ वृद्धौ कृतायां सगिटौ मा भूतामतो लोपस्य नित्यत्वं यथा स्यादित्येवमर्थम् । तत्र नित्यत्वाल्लोपे कृते पारिशेष्याद्धलन्त एव वृद्धेरवस्थानान्नार्थो हल्ग्रहणेन । अताऽङ्गस्य तदन्तविधिं मत्वाऽऽह—कं पुनरीति । नित्यादप्यनवकाशं बलवदिति लोपं बाधित्वा वृद्धिः स्यादित्यजन्तनिवृत्त्यर्थं हल्ग्रहणं कर्तव्यम् । इतरस्त्विष्टसिद्धये विशेषणविशेष्यभावे कामचाराल्लघुग्रहणसामर्थ्याच्चाङ्गेनाज्विशेष्यत इति प्रतिपादयितुमाह—भवेदिति । अदरिद्रासीदित्यादिसिद्धये सगिड्विधावेकाच इति यदा नानुवर्त्यते तदोभयोरनित्ययोः पूर्वविप्रतिषेधेन लोपे कृते हलन्त एव वृद्धिरवतिष्ठते । अथवा लक्षणभेदाच्छब्दान्तरप्राप्त्या वा लोपस्यानित्यभावं यो मन्यते तं प्रत्युच्यते । अथवाऽऽरभ्यत इति । अपिपठिषीदिति । अल्लोपस्य स्थानिवद्भावादजन्तमेतदङ्गम् । तत्र पशब्दाकारस्य वृद्धिः प्राप्नोति हल्ग्रहणान्न भवति । अचकासीदिति । चकाराद्धल आदेः परोऽकारो भव॰

उ०—एकाच इत्येतदित्यर्थः । वलीत्येतत्तु रुदादिभ्य इत्यत्र संबन्धावश्यकत्वेन मध्येऽपि संबध्यत एवेति बोध्यम् । अद्यतनीति लुङः पूर्वाचार्यसंज्ञा । विपर्येति । अत एव दरिद्रालीति दरिद्र इत्यत्राजेव न त्वादन्तलक्षणो णः । भाष्ये–सिद्धोऽसौ सगिड्विधाविति । तयोः प्रत्ययोत्पत्त्यनन्तरभावित्वादिति भावः । एवमर्थमेव तर्हीति । वलीति संबन्धेनापि सगिटोर्वारणादुपलक्षणमिदम् । लघुग्रहणसामर्थ्याच्चेति । आकारान्ते विशेषाभावेन सगिड्भ्यां बाधाच्चात इति तपरकरणाच्च न तद्व्यावृत्त्यर्थं लघुग्रहणमिति भावः । ननु नित्येन कथं पूर्वविप्रतिषेधोऽत आह—अदरिद्रासीदिति । एकाच इत्यस्याननुवृत्तावपि वलीत्यस्यानुवृत्तिसत्त्वात्सगिटोरप्राप्तौ लोपो नित्योऽत आह–अथवेति । भाष्ये—सा तर्ह्येषेति । अतो हलादेरित्येपेत्यर्थः । अत्र पूर्वविप्रतिषेधेनाल्लोपे कथमजन्तत्वमत आह–अल्लोपस्येति । हल्ग्रहणान्न भवतीति । हल्ग्रहणसामर्थ्यात्सिजुत्पत्तिवेलायां हलन्तो गृह्यत इति भावः ।

÷७.२.१०. * ७.२.३५; ७३. × ६.४.११४.

अथवाऽऽरभ्यते पूर्वविप्रतिषेधो ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घत्वेभ्यः पूर्वविप्रतिषिद्धम्× । सा तर्ह्येषाऽनन्त्यार्था वृद्धिर्हलन्तस्य यथा स्यादजन्तस्य मा भूत्— अपिपठिषीत् । एतदपि नास्ति प्रयोजनम् । कथम् ? हलादेरिति नैषा बहुव्रीहेः षष्ठी । हलादिर्यस्य सोऽयं हलादिः, हलादेरिति । का तर्हि ? कर्मधारयात्पञ्चमी । हलादिर्हलादिः, हलादेः परस्येति । यदि कर्मधारयात्पञ्चमी–अचकासीत्, अत्र प्राप्नोति । सिचाऽऽनन्तर्यं विशेषयिष्यामः । हलादेः परस्य सिच्यन्तरस्येति । यदि सिचाऽऽनन्तर्यं विशेष्यते--अकणीत्, अकाणीत्, अत्र न प्राप्नोति । वचनाद्भविष्यति । इहापि तर्हि वचनात्प्राप्नोति—अचकासीत् । येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् । केन च नाव्यवधानम् । वर्णेनैकेन । संघातेन पुनर्व्यवधानं भवति, न च भवति । यदि सिचाऽऽनन्तर्यं विशेष्यतेऽस्तु बहुव्रीहेः षष्ठी । कस्मान्न भवति—अपिपठिषीत् ? व्यवहितत्वात् ।

प्र०–तीति वृद्धिप्रसङ्गः । बहुव्रीहावप्ययं दोषः । ननु चाटि कृते हल आदित्वं नास्ति । नैष दोषः । सिजन्तस्याङ्गस्याडागमः क्रियमाणस्तस्यैव हलादित्वं निवर्तयति नतु सिचि यदङ्गं तस्य । येन नाव्यवधानमिति । ननु वचनादतो लोपो बाध्येत सिचा ह्यानन्तर्ये आश्रितेऽनन्त्यो नैव वृद्धेरवकाशः स्यात् । नैतदस्ति । लघुग्रहणमेवमनर्थकं स्याद्व्यवच्छेद्याभावात् । ततश्चानन्त्यस्य वृद्ध्यवकाशत्वादन्त्यस्य नित्यत्वपूर्वविप्रतिषेधाभ्यां लोपाद्व्यवधान एव वृद्ध्या भाव्यमिति निर्दिष्टग्रहणादधिकव्यवधाननिवृत्त्यर्थो येन नाव्यवधानमित्याश्रीयते। तदेवमुत्तरार्थं हल्ग्रहणं न कर्तव्यमिति स्थित इदमुच्यते । एवं तर्हीति । प्रसक्तानुप्रसक्त्या प्रयोजनकथनप्रसङ्गेन हल्ग्रहणमतिसृतं दूरमपगतमित्यर्थः । क्वचिदनुसृतमिति पाठः । तत्रायमर्थो दूरं यातं सदनुसृतं न परित्यक्तम् । एतदुक्तं भवति । अत्रैव सूत्रे हल्ग्रहणस्य प्रयोजनमस्ति । तद्दर्शयति—हल्ग्रहणमनन्त्यार्थमिति । केचिदाहुः । सति हल्ग्रहणे भवत्यगवीदिति । केचित्तु इह्वातोरित्यतो धातुग्रहणानुवृत्त्याऽगवीदित्यत्रातो हलादेर्लघोरिति वृद्धिर्न भवतीत्याहुः । सिचा धातावाक्षिप्ते पुनर्धातुग्रहणाद्यस्य नित्यं धातुत्वं स गृह्यते ।

उ०–सिजन्तस्येति । अन्तरङ्गत्वादादौ विकरणास्ततोऽडागमस्ततो वृद्धिरिति भावः । नन्विति । एवं च येन नाव्यवधानन्यायस्यायमविषय उपसंजातविरोधन्यायेन च न परिभाषाबाधः किंतु लोपस्यैव बाधः स्यादिति भावः । ण्यल्लोपाविति पूर्वविप्रतिषेधादिपरन्यमिदम् । दूरमपगतमिति । यद्यपीत्यादिः । तथाऽपीति शेषः । यद्यप्यतिदूरं गतं निष्फलतया तथाऽपि प्रकृतसूत्र एवानन्त्यार्थमनन्तरहल्लोऽपि ग्रहणार्थमिति भाष्यार्थः । तेनाराद्‌क्षीदित्यादिसिद्धिः । परे तु केचिद्धल्ग्रहणस्य प्रयोजनान्तरमुक्तं तद्दूषयितुमनुवदति—केचिदिति । अगवीदित्यत्र हलन्त्यस्याभावात्तत्रैवान्तरङ्गत्वाभावाच्च न पूर्वेण वृद्धिरिति तदाशयः । तद्दूषयति—केचिदिति । अतो हलादेरित्यस्याभावाय तद्वाधकत्वापत्त्या नैवावश्यं अपि व्याख्यानमित्याशयः ।

× ६..४. ४८.

एवं तर्ह्यतिदूरमेवेदं हल्ग्रहणमनुसृतम् । हल्ग्रहणमनन्त्यार्थम् । अज्ग्रहणमनिगर्थम् ।

**ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥ ७ । २ । ५ ॥**

किमर्थं जागर्तेर्वृद्धिप्रतिषेध उच्यते ? सिचि वृद्धिर्मा भूदिति+ । नैतदस्ति प्रयोजनम् । जागर्तेर्गुण उच्यते* वृद्धिविषये प्रतिषेधविषये च स बाधको भविष्यति । गुणे तर्हि कृते रपरत्वे च हलन्तलक्षणा वृद्धिः÷ प्राप्नोति । नेटि

प्र०—तस्मादयमर्थो येन नाव्यवधानमित्येकेन हला व्यवधाने सिजचोर्वृद्धिः स्यान्न तु संयोगेनाराङ्क्षीदमाङ्क्षीदित्यादौ । हल्ग्रहणे तु सति वर्णग्रहणे जातिग्रहणात्संयोगान्तस्यापि हल्ग्रहणसामर्थ्याद्भवति । अनन्त्यार्थमित्यस्यायमर्थोऽनन्त्योऽपि हल्कथं नाम गृह्येत । अन्तग्रहणं तु विस्पष्टार्थम् । तदन्तरेणापि तदन्तविधिलाभात् । किंतु हलोऽच इत्युच्यमानेऽजन्तस्याङ्गस्य हल्स्थाने वृद्धिरित्ययमप्यर्थ आशङ्क्येत । अज्ग्रहणमनिगर्थमिति । अन्यथेक्परिभाषोपस्थानादभैत्सीदित्यादावेव स्यान्नत्वपाक्षीदित्यादौ ।

ह्म्यन्तक्षण० । किमर्थमिति । गुणेन बाधिता वृद्धिर्न प्राप्नोतीति मन्यते । सिचि वृद्धिर्मा भूदिति । अतो लान्तस्येत्यनेनेति भावः । इतरस्तु सिचि वृद्धिरिति प्राप्तिरनेनोक्ता सा चायुक्तेति मत्वाऽऽह—नैतदिति । वृद्धिप्रतिषेधविषयादन्यत्र सामान्यलक्षणेन गुणस्य सिद्धत्वाज्जाग्रोऽविचिण्णल्ङित्स्विति गुणविधानं वृद्धिप्रतिषेधविषयार्थं संपद्यते । गुणे तर्हीति । अङ्गवृत्त इत्येतत्तु निष्ठितत्वस्य दुर्ज्ञानत्वादनाश्रितम् । यदि तर्हि गुणे रपरत्वे च कृते लक्षणान्तरेण वृद्धिर्भवति तदा जागरक इत्यादावजन्तलक्षणां वृद्धिं बाधित्वा गुणे प्रवृत्ते रपरत्वे चात उपधाया इति वृद्धिः प्राप्नोति । नैष दोषः । चिण्णलोर्गुणप्रतिषेधाल्लिङ्गादुपधालक्षणा वृद्धिर्न भवतीत्यवसीयते । अन्यथा चिण्णलोर्गुणरपरत्वयोः कृतयोरुपधालक्षणया वृद्ध्या सिध्यति रूपमिति प्रतिषेधं न विदध्यात् । यदि च कृते गुणे वृद्धिमात्राप्रवृत्तेर्लिङ्गं

उ०—धातुग्रहणानुवृत्त्या कथमगवीदित्यत्र वृद्ध्यभावोऽत आह—सिचा धाताविति । धातुपाठपठितानामेव नित्यं धातुत्वमिति भावः । आहुरित्यरुचिबीजं न वै संध्यक्षरमन्त्यमस्तीति भाष्यप्रामाण्यात्संध्यक्षरान्तेभ्य आचारक्विभाव इति । अराङ्क्षीदिति । न च सिचाऽङ्गस्य विशेषणात्सिद्धिः । अस्मादेव ज्ञापकादेतत्प्रकरण इत आरभ्य वृद्धिभाज एव सिच्परत्वेन विशेषणात् । अत एव लावस्थायामडागम इति पक्षेऽट्यो न वृद्धिरचकासीदित्यादौ च न वृद्धिरिति भावः । जातिग्रहणादिति । तज्जात्याश्रयानेकग्रहणादित्यर्थः । तत्रैकस्य गौणमन्त्यत्वं बोध्यम् । स्पष्टार्थत्वमेवोपपादयति—किंतु हल इति ।

ह्म्यन्त० । गुणेनेति । जाग्रोऽवीत्यनेनेति भावः । गुणस्य सिचि वृद्धिरित्येतद्बाधकत्वादाह—अतो लेति । इयं हि गुणोत्तरकालप्राप्तेति भावः । सामान्यलक्षणेन—सार्वधातुकार्धधातुकयोरित्यनेन । दुर्ज्ञानत्वादिति । अगतिकगतिरियमिति भावः । अत उपधाया इति । गुणस्तु जागरित इत्यादौ सावकाश इति भावः । वृद्धिमात्रेति । गुणोत्तरभाविवृद्धिमात्रेत्यर्थः । इदं चिन्त्यम् । अत उपधाया वृद्धि-

+ ७. २. १. * ७. ३. ८५. ÷ ७. २. ३.

[ ७. २. ४ ] इति तस्याः प्रतिषेधो भविष्यति। इयं तर्हि--प्रतिषेधोत्तरकाला वृद्धिरारभ्यतेऽतो ल्रान्तस्य [ ७. २. २ ] इति।

अपर आह—कक्ष्यया कक्ष्या निमातव्या। सिचि वृद्धिश्च प्राप्नोति गुणश्च+। गुणो भवति। गुणे कृते रपरत्वे च हलन्तलक्षणा वृद्धिः* प्राप्नोति, नेटि [ ४ ] इति च तस्याः प्रतिषेधो भवति। प्रतिषेधोत्तरकालमतो हलादेर्लघोः [ ७ ] इति विभाषा वृद्धिः प्राप्नोति, न च किंचित्। अतो ल्रान्तस्य [ २ ] इति च वृद्धिः प्राप्नोति, न च किंचित्।

प्र०-चिण्णलोः प्रतिषेध आश्रीयते तदा जागृग्रहणं शक्यमकर्तुम्। इयं तर्हीति। आर्थोऽयमुत्सर्गापवादयोः क्रमः। नेटीति प्रतिषेधे प्राप्तेऽतो ल्रान्तस्येति वृद्धेरारम्भात्प्रतिषेधोत्तरकालेत्युच्यते। पाठक्रमेण पूर्वकालाऽपि। अपर आहेति। पूर्वोक्त एवार्थो वाचोयुक्त्यन्तरेणोच्यते। कक्ष्ययेति। कक्ष्यां विशिष्टदेशस्थं तुलासूत्रं वणिजो व्यवहरन्ति। अत्र तु कक्ष्येव कक्ष्या यथा कक्ष्या द्रव्याणां गुरुत्वं परिच्छिनत्ति तथा शास्त्रं कार्याणां सामान्यविशेषावस्थाभावेन बलाबलं व्यवस्थापयति हर्म्यावस्थावचनो वा कक्ष्याशब्द उपचारादिहावस्थावचनः। तत्र किं कार्यं सामान्यावस्थं किं विशेषावस्थमित्येवं कक्ष्यया कक्ष्या निमातव्येत्यर्थः। बलं वा कक्ष्या यथा तुल्यकक्ष्याविति। तत्र 'जागृ इ स् ईत्' इति स्थिते वार्णादाङ्गं विधिर्बलीयानिति यणादेशं बाधित्वा सार्वधातुकार्धधातुकयोरिति गुणः प्राप्तस्तमपवादत्वाद्बाधित्वा सिचि वृद्धिरिति वृद्धिः प्राप्ता तामपवादत्वाद्बाधित्वा जाग्र इति गुणः प्राप्नोति। भाष्यकारस्तु दुर्बलत्वादुत्सर्गं परिहृत्य वृद्धेरारभ्य गणयति—न च किंचिदिति। तस्याः पाक्षिक्या वृद्धेरपवादभूतं न किंचिद्गुणविधानमस्ति यतो जागृग्रहणमकर्तव्यं स्यात्।

उ०-बाधनेन तस्य चारितार्थ्याज्जागरक इत्यस्य सिद्धेश्चानेकशास्त्रबाधे मानाभाव इति भाष्याशयात्। जागृग्रहणमेव च ज्ञापकं ज्ञापकानां सजातीयापेक्षत्वमुचितमिति सूचयति। ननु प्रतिषेधात्पूर्वं पाठादुत्तरकालेत्ययुक्तमत आह—आर्थोऽयमिति। पाठक्रमादार्थः क्रमो बलीयानिति भावः। पौनरुक्त्यं परिहरति—पूर्वोक्तेति। पूर्वं प्रतिज्ञामात्रमिदानीं हेतुप्रदर्शनमिति भेदः। तथा शास्त्रमिति। बलवता बाधकेन दुर्बलं बाध्यत्वात्परिच्छेत्तव्यमिति भाष्यार्थ इति भावः। हर्म्यावस्थेति। द्वितीयां तृतीयां च कक्ष्यां प्रविष्ट इति व्यवहारादिति भावः। विशेषाश्रिनः सामान्यपरत्वं लक्षणयेत्याह—उपचारादिति। बलं वेति। कस्यचिद्बलेनान्यस्य बलं निमातव्यं दुर्बलमित्यमिति ज्ञातव्यमिति भाष्यार्थ इति भावः। दुर्बलत्वादिति। अगत्या-

+ ७. २. १; ७. ३. ८५. * ७. २. ३५.

## नेड्वशि कृते ॥ ७ । २ । ८ ॥

किमर्थं पुरस्तात्प्रतिषेध उच्यते न विध्युत्तरकालः प्रतिषेधः क्रियते ? तद्यथा—अन्यत्रापि विध्युत्तरकालाः प्रतिषेधा भवन्ति । क्वान्यत्र ? कर्तरि कर्मव्यतिहारे, न गतिहिंसार्थेभ्यः [ १. ३. १४; १५ ] इति । देवताद्वंद्वे च, नेन्द्रस्य परस्य [ ७. ३. २१; २२ ] तत्रायमप्यर्थो द्विरिड्ग्रहणं न कर्तव्यं भवति, प्रकृतमनुवर्तते*, नैवं शक्यम् । इडर्थं सार्वधातुकग्रहणं लिङः सलोपे संनिहितं तद्विच्छिद्येत ।

यदि पुनर्न वृद्भ्यश्चतुर्भ्यः [ ७. २. ५९ ] इत्यत्रैवोच्येत ? किं कृतं भवति ? विध्युत्तरकालश्चैव प्रतिषेधः कृतो भवति, द्विश्चेड्ग्रहणं न कर्तव्यमिडर्थं च सार्वधातुकग्रहणं लिङः सलोपे संनिहितं भवति । तत्रायमप्यर्थो द्विः प्रतिषेधो न कर्तव्यो भवति । नैवं शक्यम् । इह हि तुष्टोथ दुद्रोथेति, ऋतो भारद्वाजस्य

प्र०—गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम् ।
पुनर्वृद्धिर्निषेधश्च यण्पूर्वाः प्राप्तयोनव ॥ इति संग्रहश्लोकः ॥

नेड्वशि० । प्राप्तिपूर्वकत्वात्प्रतिषेधस्यार्थात्पूर्वं विधिप्रकरणं पठितव्यं पश्चात्प्रतिषेधप्रकरणं क्रमव्यतिक्रमे प्रयोजनाभावादिति मत्वा पृच्छति—किमर्थमिति । तत्रायमप्यर्थ इति । न्याय्यक्रमाश्रयणादुपचयोऽप्यस्तीत्यर्थः । इडर्थमिति । रुदादिभ्यः सार्वधातुक इत्यत्र यत्सार्वधातुकग्रहणमिड्विधावुपात्तं तदानन्तर्याल्लिङः सलोपोऽनन्त्यस्येत्यत्र शक्यतेऽनुवर्तयितुम् । यदि त्विड्विधेः परस्तादीडजनोर्ध्वे चेत्यस्यानन्तरं नेड् वशि कृतीत्यादि प्रतिषेधप्रकरणं क्रियते तदा तेन विच्छिन्नत्वात्सार्वधातुकग्रहणं सलोपविधौ नानुवर्तेत । तुष्टोथेति । यथा पपिथ ययिथेत्यादावार्धधातुकस्येतीट् प्राप्त एकाच इति प्रतिषिद्धः क्रादिनियमात्पुनः प्राप्तोऽचस्तास्वत्थलीति परिषिद्धस्तत्र 'ऋत एव भारद्वाजस्य प्रतिषेधो नान्येभ्य' इति नियमात्पक्ष इड् भवति । एवं स्तुद्रुस्रुश्रुभ्योऽपि प्राप्नोतीत्यर्थः । तथा हि—क्रादिनियमस्य बाधकमचस्तास्वदिति प्रतिषेधमृतो भारद्वाजस्येति नियमो बाधते । स कथं क्रादिप्रतिषेधं न बाधेत । ननु च मध्येऽ-

उ०—सामान्यत्वेनेत्यर्थः । प्राप्तय इति । प्राप्यन्त इति व्युत्पत्त्या कार्याणीत्यर्थः ।

नेड्वशि० । न्यायविरोधमुक्त्वा गौरवमप्यत्र पाठ इत्याह—भाष्ये तत्रायमप्यर्थ इति । प्राङ्निषेधपाठ आर्धधातुकस्येडित्यत्र निषेधासंबन्धाय पुनरिड्ग्रहणं कार्यमित्यर्थः । नियमात्पक्ष इति । नान्येभ्य इत्यत्रापि भारद्वाजस्येत्यस्य संबन्धादिति भावः । ननु भारद्वाजनियमोऽनन्तरत्वादुपदेशेऽत्वतोऽचस्तास्वदिति निषेधस्यैव बाधक इति कथं क्रादिप्रतिषेधबाधस्तेनेत्यत आह—तथा हीति । न बाधेतेति । बाध्यबाध्यस्य सुतरां बाध्यत्वादिति भावः । ननु चेति । भारद्वाजनियमात्परं क्रादिसूत्रपाठमाश्रित्येदम् ।

* ७, २, ७६; ७९.

[ ७. २. ६३ ] इत्येतस्मान्नियमादिट् प्रसज्येत । कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि [ १३ ] इत्येष योगः प्रतिषेधार्थो भविष्यति । यद्येष योगः प्रतिषेधार्थो य एतस्माद्योगादिट् परिप्राप्यते नियमात्स न सिध्यति—पेचिव पेचिम । शेकिव शेकिम । एवं तर्हि 'कृसृभृ'इत्येतेषां ग्रहणं नियमार्थं भविष्यति, स्तुद्रुस्रुश्रुवां प्रतिषेधार्थं, वृङ्वृञोर्ज्ञापकार्थम् । एवमपि सामान्यविहितस्यैवेटः+ प्रतिषेधो विज्ञायेत विशेषविहितश्चायं* थलीति ।

---

प्रं०–पवादा इति न्यायाद्भारद्वाजनियमोऽचस्तास्वदिति प्रतिषेधं बाधिष्यते, नतु क्रादिप्रतिषेधम् । नैतदस्ति । पाक्षिक एष परिहारो भेदेन लक्षणापेक्षायाम् । कार्यमात्रे तु बाध्यत्वेनापेक्षिते नैष परिहारः । किं च 'न वृद्भ्यश्चतुर्भ्यः' इत्यस्मादूर्ध्वमिदं प्रकरणं पठितव्यमिति प्रक्रान्तं न तु ऋतो भारद्वाजस्येत्यस्मात्परमिति । ततो भारद्वाजनियमात्पूर्वमिदं नतु परमिति कुतो मध्येऽपवादा इति न्यायावतारः । व्याप्तिन्यायाश्रये च सर्वप्रतिषेधबाधेन भाव्यम् । यद्येष इति । थलि भारद्वाजनियमादिटः प्राप्तस्य प्रतिषेधे विधेये संभवति सति नियमार्थत्वानुपपत्तिः । एवं तर्हीति । योगैकदेशः पूर्वं योगशब्देनोक्तश्चोदकेन तु समस्त एव योगः प्रतिषेधार्थोऽनेनोक्त इति मत्वा चोदितम्—यद्येष इति । तत्र क्रादीनामृकारान्तत्वान्नास्ति भारद्वाजनियमादिट्प्राप्तिरिति तेषां नियमार्थं ग्रहणम् । स्तुद्रुस्रुश्रुवां तु भारद्वाजनियमात्क्रादिनियमाच्च प्राप्तस्येटः प्रतिषेधार्थम् । वृङ्वृञोरिति । एकयोगस्था अपि नावश्यमेकधर्माणः । तत्र प्रत्ययाश्रयोऽपीट्प्रतिषेधो नियम्यत इति वृङ्वृञ्ग्रहणेन ज्ञाप्यते । एवमपीति । स्तुद्रुस्रुश्रुभ्यः प्रतिषेधो येन नाप्राप्तिन्यायेन क्रादिनियमप्राप्तमेवेटं निवर्तयेत्, नतु भारद्वाजनियमप्राप्तमित्यर्थः । स

---

उ०–नतु क्रादिप्रतिषेधमिति । भारद्वाजनियमेनाचस्तास्वदिति प्रतिषेधनिवृत्तावप्राप्ताचस्तास्वदित्यनेन न क्रादिनियमस्य बाधो नापि भारद्वाजनियमेनोत्तरत्वादिति भावः । मध्येऽपवादन्यायाभावेऽप्यनन्तरस्येति न्यायो दुर्वारोऽत आह—व्याप्तीति । भाष्ये-प्रतिषेधार्थो भविष्यतीति । स्तुद्र्वादिग्रहणसामर्थ्याद्भारद्वाजनियमप्रापितस्य निषेध इत्यर्थः । ननु कृसृ इत्यस्य प्रतिषेधनियमोभयार्थत्वान्न दोष इति चेत्तदसंभवमाह—थलि भारद्वाजेति । भाष्ये-नियमात्स इति । नियमार्थाद्योगाद्य इट् प्रतिप्राप्यते स न सिध्यतीत्यन्वयः । ननु कृत्स्नसूत्रस्य प्रतिषेधार्थत्वमुक्त्वेदानीमेकदेशस्य तदर्थत्वकथनं पूर्वापरविरुद्धमत आह—योगैकदेश इति । भारद्वाजनियमात् थल्यन्यत्र क्रादिनियमादिति विवेकः । नचैकसूत्रोपात्तानामेकरूपतैव युक्तेत्यत आह—एकयोगस्था अपीति । यथा तद्धितार्थेत्यादावेकाऽपि सप्तमी विषयभेदाद्भिद्यत इति भावः । ज्ञाप्यत इति । एतच्चोत्तरत्र स्फुटी भविष्यति । नन्वविशेषात्सर्वस्यैवेटः

---

+ ७. २. १२. * ७. २. ११.

पुरस्तात्पुनः प्रतिषेधे सत्यनारभ्यापवादोऽयं भवति, तेन यावानिण्नाम तस्य सर्वस्यैव प्रतिषेधः सिद्धो भवति। यदि खल्वप्येषोऽभिप्रायस्तन्न क्रियत इति पुनस्तादपि प्रतिषेधे सति तन्न करिष्यते। कथम्? इदमस्ति नेड्वशि कृतीति। ततो वक्ष्यामि×—आर्धधातुकस्य वलादेरिति। इडित्यनुवर्तते, नेति निवृत्तम्।

अथ कृद्ग्रहणं किमर्थम्? इह मा भूत्—बिभिदिव बिभिदिमेति। नैतदस्ति प्रयोजनम्। कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि [ १३ ] इत्येतस्मान्नियमादत्रेड् भविष्यति। नात्र तेन परिप्रापणं प्राप्नोति। किं कारणम्? प्रकृतिलक्षणस्य* प्रतिषेधस्य स प्रत्यारम्भः, प्रत्ययलक्षणश्चायं प्रतिषेधः। उभयोः स प्रत्यारम्भः। कथं ज्ञायते? वृङ्वृञोर्ग्रहणात्। कथं कृत्वा ज्ञापकम्? इमौ वृङ्वृ-

प्र०—हि थल्येव प्राप्तस्ततश्चासौ स्यादेव। पुरस्तादिति। इण्मात्रमनाश्रितविषयविशेषमनारभ्याधीतेन प्रतिषेधेन बाध्यत इत्यर्थः। यदि तु भारद्वाजनियमात्परः प्रतिषेधः क्रियेत मध्येऽपवादा इति चाऽऽश्रीयेत तदा विप्रतिषेधेन सिध्येदेव प्रतिषेधः। अथ कृद्ग्रहणमिति। अकृति क्रादिनियमादिड् भविष्यतीति मत्वा प्रश्नः। नात्रेति। भिन्नजातीयत्वादिति भावः। क्रादिनियमो हि प्रकृत्याश्रयप्रतिषेधविषयमेवेटं प्रापयेद् बिभेदिथेति। नेड्वशीति तु प्रत्ययाश्रयः प्रतिषेधः। तद्विषये क्रादिनियमाभावादिण्न भवेत्। बिभिदिवेति। कृद्ग्रहणमकृति प्रतिषेधनिवृत्त्यर्थम्। वृङ्वृञ्ग्रहणादिति। सामान्यग्रहणं विशेषनिष्ठं संपद्यत इति प्रदर्शनार्थं वृङ्वृञोरिति भेदेनोपादानम्। वृग्रहणस्य प्रयोजनं ववृमह इत्यादाविण्मा भूदिति। यदि च क्रादिनियमः प्रकृत्याश्रयमेव प्रतिषेधं बाधेत न प्रत्ययाश्रयं तदा नेड्वशि श्रुकः कितीति योगद्वयेन यथायोगं सिद्धत्वात्प्रतिषेधस्य नार्थो वृग्रहणेन। तत्क्रियमाणं प्रत्ययाश्रयस्यापि प्रति-

उ०—प्रतिषेधेन भाष्यमत आह—पुरस्तादिति। भाष्ये सामान्यविहितस्येत्यस्य सामान्यनियमप्राप्तस्येत्यर्थः। अनारभ्याधीतेनेति। हेतुगर्भविशेषणम्। सिध्येदेवेति। तुष्टोथेत्यादौ भारद्वाजनियमप्रापितेटः कृसृभृ इति निषेधः सिध्यतीत्यर्थः। अस्य तु न भारद्वाजनियमो निवर्तकः, मध्येऽपवादन्यायादिति भावः। किंतु न्यासभेदस्यान्याय्यत्वाद्भगवतैवं नाऽऽश्रितम्। फलान्तराण्यपि स्वरतिसूतीत्यादौ पुरस्तात्प्रतिषेधारम्भस्य भविष्यन्तीति दिक्। भाष्ये—तन्न क्रियत इति। आर्धधातुकस्येति सूत्र इड्ग्रहणमित्यर्थः। अत्रत्यभाष्यविरोधाद्दीधीवेवीटामितिसूत्रस्थभाष्यमेकदेश्युक्तिः। अत्रेड्ग्रहणं कृत्वा गुरुतरयत्नमाश्रित्य तत्रेड्ग्रहणप्रत्याख्यानस्यानौचित्यादित्याहुः। भिन्नजातीयत्वादिति। सजातीयस्य हि नियमेन भाव्यमिति भावः। प्रकृत्याश्रयेति। एकाच उपदेश इतीत्यर्थः। अयं हि वशि कृतीत्युपादानात्प्रत्ययाश्रय इति भावः। ननु वृग्रहणादिति वक्तुमुचितमत आह—सामान्यग्रहणमिति। प्रदर्शनार्थमिति। सर्वत्रायं न्यायो द्रष्टव्य इति निदर्शनार्थमित्यर्थः। यथायोगमिति। ववृष इत्यादौ श्रुक इति ववृवहे इत्यादौ नेड्वशीत्यस्यापि प्राप्तिसत्त्वात्तु-

× ७. २. ३५. * ७. २. १०.

त्रावुदात्तौ तयोः प्रकृतिलक्षणः प्रतिषेधो न प्राप्नोति । पश्यति त्वाचार्य उभयोः सं प्रत्यारम्भ इति ततो वृङ्वृञोर्ग्रहणं करोति । न खल्वपि कश्चिदुभयवान्प्रतिषेधः प्रकृतिलक्षणः प्रत्ययलक्षणश्च । ततः किम् ? तुल्यजातीयेऽसति यथैव प्रकृतिलक्षणस्य नियामको भवत्येवं प्रत्ययलक्षणस्यापि नियामको भविष्यति । इदं तर्हि प्रयोजनम्, इह मा भूत्—रुदिवः रुदिमः× । एतदपि नास्ति प्रयोजनम् । उपरिष्टाद्योगविभागः करिष्यते* । आर्धधातुकस्य यदेतदनुक्रान्तमेतदार्धधातुकस्य द्रष्टव्यम् । तत इड्वलादेरिति । तत्र त्वेतावद्द्रष्टव्यं यदि किंचित्तत्रान्यदप्यार्धधातुकग्रहणस्य प्रयोजनमस्ति । अथ न किंचिदिह वा कृद्ग्रहणं क्रियेत तत्र वाऽऽर्धधातुकग्रहणं को न्वत्र विशेषः ।

## नेड्वशि कृति ॥ १ ॥

वशादौ कृतीट्प्रतिषेधं प्रयोजयति । ईशिता, ईशितुम्, ईश्वरः । व ॥

प्र०–षेधस्य निवृत्तिं ज्ञापयति । ननु थलर्थं वृग्रहणं स्यात्तस्य ह्यकित्त्वादवशादित्वाच्चेट्प्रतिषेधाप्राप्तिः । नैतदस्ति । ववर्थेति निगम इति निपातनं क्रियमाणं भाषायां ववरिथेतीटमभ्यनुजानाति । स्यादेतत्तुल्यजातीय एव प्रतिषेधो नियमेन बाध्यताम् । एकैकाश्रयस्तु कथं बाध्येत इत्याशङ्क्याऽऽह—न खल्वपीति । कृसृभृभ्यो लिटि प्रकृत्याश्रय एवैकाच उपदेशेऽनुदात्तादितीट्प्रतिषेधः प्राप्नोति । केवलायाः प्रकृतेः शब्देनोपादानात् । अथोच्येत चकृप इत्यादौ श्र्युकः कितीतीट्प्रतिषेधः प्राप्नोति, स चोभयवान्प्रकृतिप्रत्ययविशेषाश्रयणादिति । तन्न । अत्राप्यन्तरङ्गत्वात्प्रकृत्याश्रय एव प्रतिषेधः । तस्यैव नियमे विज्ञायमाने वृग्रहणमनर्थकं स्यात् । तस्मात्प्रत्ययाश्रयोऽपि प्रतिषेधो नियम्यत इत्यत्र वृग्रहणं लिङ्गम् । प्रकृतकृसृभ्रपेक्षया च न खल्वपीत्युच्यते नतूभयवान्नास्ति प्रतिषेधः । रुदिवः, रुदिम इति । असति कृद्ग्रहणे रुदादिभ्यः सार्वधातुक इत्येस्येटोऽत्र प्रतिषेधः स्यात्तस्य त्ववशादिरवकाशो रोदितीत्यादौ । यदेतदिति । प्रतिषेधप्रकरणमित्यर्थः । ततः सार्वधातुक इट्प्रतिषेधाभावः । यद्यन्यार्थमार्धधातुकग्रहणं कर्तव्यं तदा योगविभागेनेष्टं साध्यते । यदा त्वस्यान्यप्रयोजनाभावस्तदा लाघवार्थं

उ०–त्किः । ननु थलर्थमिति । तत्र विध्यर्थमित्यर्थः । निपातनमिति । अन्यथाऽनेन निषेधेन सिद्धेस्तद्वैयर्थ्यं स्यात्तथा च तत्सामर्थ्यादत्र वृग्रहणं नियमार्थं सज्ज्ञापनार्थमेवेति भावः । अत्रान्तरङ्गत्वादिति । प्रकृतिमात्राश्रयत्वादिति भावः । नन्वेवं श्र्युकः कितीत्यस्योभयवतः सत्त्वेन न खल्वपीति ग्रन्थोऽयुक्तमत आह—प्रकृतेति । कृसृभृविषये न कश्चिदुभयवानस्तीति भाष्यार्थः । यदि किंचित्तत्रेत्यादिभाष्यस्याऽऽशयमाह—यद्यन्यार्थमिति । तदा योगविभागेनेष्टं साध्यत इति शेषो भाष्ये पूरणीय इत्याशयः । भाष्ये–अथ न किंचिदिति । यदा

× ७. २. ७६. * ७. २. १५.

र—दीपिता, दीपितुम्, दीप्रः । र ॥ म—भसिता, भसितुम्, भस्म । म ॥ न—यतिता, यतितुम्, यत्नः । अथान्ये ये वशादयस्तत्र कथम् ? उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।

**तितुत्रतथसिसुसरकसेषु च ॥ ७ । २ । ९ ॥**

**तितुत्रेष्वग्रहादीनाम् ॥ १ ॥**

तितुत्रेष्वग्रहादीनामिति वक्तव्यम् । इह मा भूत्—निगृहीतिः, उपस्निहितिः, निकुचितिः, निपठितिरिति ।

**एकाच उपदेशेऽनुदात्तात् ॥ ७ । २ । १० ॥**

एकाज्ग्रहणं किमर्थम् ?

**एकाज्ग्रहणं जागर्त्यर्थम् ॥ १ ॥**

एकाज्ग्रहणं क्रियते, जागर्तेरिट्प्रतिषेधो मा भूदिति । जागरिता, जागरितुम् । नैतदस्ति प्रयोजनम् । उपदेशेऽनुदात्तादित्युच्यते जगर्तिश्चोपदेश उदात्तः । न ब्रूम इहार्थं जागर्त्यर्थमेकाज्ग्रहणं कर्तव्यमिति । किं तर्हि ? उत्तरार्थम् । श्र्युकः किति [ ११ ] इतीट्प्रतिषेधं वक्ष्यति स जागर्तेर्मा भूदिति । जागरितः, जागरितवानिति । एतदपि नास्ति प्रयोजनम् । जागर्तेर्गुण उच्यते+ वृद्धिविषये प्रतिषेधविषये स च बाधको भविष्यति । तत्र गुणे कृते रपरत्वे च कृतेऽनु-

प्र०-कृद्ग्रहणमेव कर्तव्यम् । प्रत्याख्यास्यते च तत्राऽऽर्धधातुकग्रहणम् । भस्मेति । नन्वत्रैव वक्ष्यत्युणादय इति । ततश्चाव्युत्पत्त्याश्रयणादेवेण्न भविष्यति । अन्येभ्योऽपि दृश्यत इत्यनेनात्र मनिन्प्रत्यय इत्यदोषः ।

तितु० । निकुचितिरिति । कुञ्चेः क्तिन्नावादिभ्य इति क्तिन् । 'कुच शब्दे तारे' इत्यस्माद्वा स्त्रियां क्तिन् ।

एकाच० । एकाज्ग्रणमिति । एकाचामेवानुदात्तत्वप्रतिज्ञानादनुदात्तग्रहणेनैवातिप्रसङ्गनिवारणात्प्रश्नः । इतर उत्तरार्थत्वमभिप्रेत्याऽऽह—एकाज्ग्रहणं जागर्त्यर्थमिति । स जागर्तेर्मा भूदिति । जागर्तेरेवोगन्तोऽनेकाच् संभवतीति तन्निवृत्त्यर्थमेकाज्ग्रहणम् । ऊर्णोतेस्तु नुवद्भावात्प्रतिषेधो भवत्येव । चोदकः प्रतिषेधाप्राप्तिकारणमन्यद्दर्शयति—

उ०-यदि प्रमाणमितिवदसंदेहे संदेहोक्तिः । कोन्वत्र विशेष इत्यनेन न साम्यं विवक्षितं किंतु कृद्ग्रहणकर्तव्यत्वमेव तदाह—लाघवार्थमिति । भाष्ये—अथान्य इति । मल्लादिषु ।

तितुत्रतथ० । ननु कुञ्चेः क्तिनं बाधित्वा गुरोश्च हल इत्यकारप्रत्ययः स्यादत आह—कुञ्चेरिति ।

एकाच० । ननु जागर्तेर्गुणस्य वृद्धिप्रतिषेधबाधकत्वेऽपि प्रकृते किमायातमत आह—इट्प्रतिषेधस्येत्यर्थ इति । परत्वाद्गुणे रपरत्वे चेट्प्रतिषेधाप्राप्तेरित्यर्थः । अन्यार्थमिति ।

+७. ३. ८५.

गन्तत्वादिट्प्रतिषेधो न भविष्यति। ननु चोपदेशाधिकारात्प्राप्नोति। उपदेश-ग्रहणं निवर्तयिष्यते। यदि निवर्त्यते-स्तीर्त्वा पूर्त्वा, इत्त्वोत्त्वयोः* कृतयो रपरत्वे चानुगन्तत्वादिट्प्रतिषेधो न प्राप्नोति। नैष दोषः। आनुपूर्व्या सिद्धमेतत्। नात्राकृत इट्प्रतिषेध इत्त्वोत्त्वे प्राप्नुतः। किं कारणम्? न क्त्वा सेट् [ १. २. १८. ] इति कित्त्वप्रतिषेधात्। इदं तर्हि—आतिस्तीर्षति, निपुपूर्षति×।

---

प्र०—एतदपीति। स बाधक इति। इट्प्रतिषेधस्येत्यर्थः। उपदेशाधिकारादिति। अन्यार्थमुपदेशग्रहणमनुवर्त्यम्। उपदेशे च जागर्तिरुगन्तो भवतीति प्रतिषेधप्रसङ्गः। इतर उपदेशाधिकारस्य प्रयोजनान्तरमपश्यन्नाह—उपदेशग्रहणं निवर्तयिष्यत इति। स्तीर्त्वा पूर्त्वेति। इत्त्वादिषु कृतेष्वनुगन्तत्वात्, लूत्वेत्यादौ च सांप्रतिकोगन्तसंभवे भूतपूर्वगत्याश्रयणस्यायुक्तत्वादिट्प्रतिषेधो न स्यात्। उपदेशाधिकारात्तूपदेश उगन्तत्वात्संप्रत्यनुगन्तत्वेऽपि प्रतिषेधः प्रवर्तते। आनुपूर्व्येति। स्तॄ त्वा इति स्थिते कित्त्वनिषेधाश्रय इट् इडाश्रयश्च कित्त्वनिषेध इति प्रागेव संनिहितं कित्त्वमाश्रित्येट्प्रतिषेधः प्रवर्तते तत इत्त्वादीनीत्यर्थः। अत्र चोद्यते कृतेष्वित्त्वादिषु प्रतिषेधनिमित्तोगन्तत्वोपगमात्पुनरिट् प्राप्नोति। तस्मिंश्च सति न क्त्वा सेडिति कित्त्वप्रतिषेधाद्गुणे सति स्तरित्वेति प्राप्नोति। नैष दोषः। पूर्वमेव प्रसक्तस्येट उग्लक्षणप्रतिषेधेन बाधितत्वाल्लक्ष्यस्य संस्कृतत्वाद्भ्रष्टावसरत्वात्पुनः प्रवृत्त्यभावात्। आतिस्तीर्षतीति। श्युकः कितीत्यत्र विशिष्टानुबन्धोपलक्षित प्रत्यय आश्रितः। सनि ग्रहगुहोश्चेत्यत्र तु सात्वादिति विशेषमाश्रित्यास्योपन्यासः। अत्रेत्त्व-रपरत्वयोः कृतयोरनुगन्तत्वादिट्प्रतिषेधो न स्यात्। उपदेशाधिकारात्त्वनुगन्तत्वावस्थायामपि भवति। सनि ग्रहगुहोश्चेत्यत्र चशब्देनोगनुकृष्यते। श्युकः कितीत्यनेन त्वत्र

---

उ०—स्तीर्णमित्याद्यर्थमिति भावः। इत्त्वादिषु कृतेष्विति। अन्तरङ्गत्वादिति भावः। कित्त्वनिषेधाश्रय इति। असति कित्त्वनिषेधे प्रतिषेधप्राप्तेरिति भावः। कित्त्वनिषेधो न क्त्वा सेडिति। तत इत्त्वेति। सतीत्यकित्त्वेन बाधकगुणप्रवृत्तेरिति भावः। बाधकविषयपरिहारेण च बाध्यस्य प्रवृत्तिरिति तात्पर्यम्। गुणे सतीति। दीर्घस्यासिद्धत्वेन लघूपधत्वात्। लक्ष्यस्य संस्कृतत्वादिति। लक्षणबाधेनैव संस्कृतत्वादित्यर्थः। अयं चेदृशे विषये भ्रष्टावसरन्यायाश्रयणे हेतुः। वस्तुतो निमित्तापायपरिभाषाया भाष्येऽनाश्रयणादुगन्तत्वापगमेऽपि प्रतिषेधापगमाभावेन न पुनरिट्प्राप्तिरिति चिन्त्यमिदम्। भ्रष्टावसरन्यायस्यात्र भाष्येऽनाश्रयणस्यैको गुणवृद्धीति सूत्रे भाष्ये ध्वनितत्वाच्च। नन्वातिस्तीर्षतीत्यत्रापि दृष्टान्तेऽपि समः क्लिष्टादिदमप्यानुपूर्व्या सिद्धमित्याशङ्क्य लक्षणान्तरं तद्गतं च कंचिद्विशेषमाश्रित्य परिहारान्तरकल्पनायोदाहारीत्याह—श्युक इति। सनि ग्रहेत्यनेनाप्रेट्प्रतिषेध इति भावः। नन्वत्रापि पूर्ववदेव सिद्धमिति विगुणगुणकरणार्थेन चेन्नेष्यत आह—श्युकः कितीत्यनेन

---

* ७. १. १००; १०२. × १. १. ९.

इत्वोत्वयोः कृतयो रपरत्वे चानुगन्तत्वादिट्प्रतिषेधो न प्राप्नोति । मा भूदेवं श्र्युकः किति [ ११ ] इति । इट् सनि वा [ ४१ ] इत्येवं भविष्यति । इदं तर्हि—आस्तीर्णम्, निपूर्ताः पिण्डाः । इत्वोत्वयोः कृतयो रपरत्वे चानुगन्तत्वादिट्प्रतिषेधो न प्राप्नोति । मा भूदेवम् । इट् सनि वेति सनि विभाषा, यस्य विभाषा [ १५ ] इति प्रतिषेधो भविष्यति ।

---

प्र०-प्रतिषेधो नास्ति । इट्प्रतिषेधाश्रयत्वाज्झलादित्वस्य, झलादित्वाश्रयत्वात्कित्त्वस्य, कित्त्वाश्रयत्वादिट्प्रतिषेधस्येतीतरेतराश्रयप्रसङ्गात् । इट् सनि वेति । स्तॄ स इति स्थित ऋकारान्तावस्थायामेव पक्ष इडभावः । तथा हीड्विकल्पस्य निरवकाशत्वात्सांप्रतिकाभावे भूतपूर्वगत्याश्रयणान्नित्यत्वाद्वा न तावद्गुणस्य प्रवृत्तिः । तत्रेट्पक्षे वृतो वेति दीर्घविकल्पे रूपद्वयमातिस्तरिषति आतिस्तरीषतीति । इडभावपक्षे त्वातिस्तीर्षतीति । अत्रोच्यते—इडभावपक्षे कित्त्वाद्गुणे निषिद्ध इत्वरपरत्वयोः कृतयो पुनरिट् प्राप्नोति । न चेट् सनि वेति विकल्पविधानमनर्थकम् । ऋकारान्तावस्थायां पक्ष इडभावे कित्त्वे सतीत्त्वरपरत्वयोः कृतयोरिटि सति गुणे च सत्यातिस्तेरिषतीति रूपसंपादनार्थत्वाद्विकल्पस्य । अत्र समाधिः—नित्यमिटि प्राप्ते विकल्पविधानाद्भ्रष्टावसरत्वाल्लक्ष्यस्य सिद्धत्वात्पुनरिड्लक्षणं न प्रवर्तते । आस्तीर्णमिति । कृतेऽकृते चेटि किदेव निष्ठेत्यनेन विशेषेणास्योपन्यासः । यस्य विभाषेति । ननु ऋकारान्तस्य सनि विकल्पविधानान्नित्यत्वादित्वोत्वयोः कृतयोरनृकारान्तत्वाद्यस्य विभाषेति प्रतिषेधाप्रसङ्गः । नैष दोषः ।

---

उ०-त्विति । सनि ग्रहेत्यत्र तु कितीत्यनपेक्षणान्न दोष इति भावः । भाष्ये श्र्युकः कितीत्यस्येत 'उक' इति वर्तमाने सनि ग्रहेत्यनेनेत्यर्थः । ननु ऋकारान्तावस्थायामेवेट्प्रतिषेधो न पुनरीत्वोत्वे इति कथं लभ्यतेऽत आह—तथा हीति । ऋदन्ते सनि ग्रहेति प्रतिषेधे प्राप्त इट् सनि वेति विधीयमानो विकल्प इत्वोत्वयोः कृतयोर्ऋत इति निमित्तस्य विहतत्वान्न स्यादिति पूर्वमेव प्रवर्तते । एवं गुणादपि । अथापि भूतपूर्वगत्याश्रयणं तदा नित्यत्वं तस्य । इत्वोत्वे त्विटि कृतेऽकित्वाद्गुणेन बाधिते इत्यनित्ये इति भावः । न तावद्गुणस्येति । उपलक्षणमिदमित्वोत्वयोरपि । इट्पक्षे गुणः । तदभावे सनः कित्वात्तदभाव इत्वोत्वे । पुनरिट् प्राप्नोतीति । अनुगन्तत्वेन निषेधाप्राप्तेरिति भावः । नित्यमिटीति । अस्य तद्बाधकनिषेधे प्राप्त इति शेषः । भ्रष्टावसरन्यायाश्रयणे हेतुः—लक्ष्यस्य सिद्धत्वादिति । संस्कृतत्वादित्यर्थः । एवं च लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तिरिति तत्त्वम् । इदमप्युक्तरीत्या चिन्त्यम् । अनेन विशेषेणेति । एवं चात्राऽऽनुपूर्व्या न सिद्धिर्नापि निषेधान्तरप्राप्तिरिति भावः । प्रतिषेधाप्रसङ्ग इति । आदितश्चेति योगविभागेन ज्ञापकेन यदुपाधेर्विभाषा तदुपाधेर्निषेध—

इहार्थमेव तर्हि वध्यर्थमेकाज्ग्रहणं कर्तव्यम् । वध इट्प्रतिषेधो मा भूदिति । वधिषीष्टेति+ । एतदपि नास्ति प्रयोजनम् । क्रियमाणेऽपि वा एकाज्ग्रहणे वध इट्प्रतिषेधः प्राप्नोति । वधिषीष्टेति । किं कारणम् ?

**वध इट्प्रतिषेधः संनिपात एकाच्त्वात्प्रकृतेश्चानुदात्तत्वात् ॥ २ ॥**

संनिपाते चैव हि वधिरेकाच्छ्रूयते प्रकृतिश्चास्यानुदात्ता ।

किं पुनः कारणमेवं विज्ञायत उपदेशेऽनुदात्तादेकाचः श्रूयमाणादिति ? यङ्लोपार्थम् यङ्लोपे मा भूदिति । बेभिदिता, बेभिदितुम् । चेच्छिदिता चेच्छिदितुम् ।

---

प्र०—सनि विकल्पविधान ऋकारान्तत्वस्यापेक्षणेऽपि यस्य विभाषेत्यत्र यस्य कचिदिड्विकल्पो दृष्टः स धातुराश्रीयते न तु विकल्पकारणमृकारान्तत्वम् । भवति चेत्त्वोत्त्वयोः कृतयोरपि स एव धातुरिति प्रवर्तते प्रतिषेधः । तदेवमुपदेशग्रहणस्योत्तरत्रानुपयोगादननुवर्तनाज्जागरित इत्यत्र गुणरपरत्वयोः कृतयोरनुगन्तत्वाच्छ्युकः कितीति प्रतिषेधाभावादुत्तरार्थमेकाज्ग्रहणं न कर्तव्यम् । वध्यर्थमिति । वधशब्दोऽकारान्तोऽनेकाजादेशः । इतर उपदेशग्रहणमनुदात्तस्यैव विशेषणं न त्वेकाच इति मन्यमान आह—एतदपीति । वधिषीष्टेति । आशिषि लिङ् । कर्मण्यात्मनेपदम् । अतो लोप इत्यकारलोपे कृते वधिरेकाच् । अकारोच्चारणं त्ववधीदित्यादौ हलन्तलक्षण वृद्धिनिवृत्त्यर्थं स्यात् । प्रकृतेश्चानुदात्तत्वादिति । यस्मात्प्रकृतिर्हन्तिरनुदात्ता तस्याश्चोपदेशावस्था गृह्यते । सैव चानेन रूपेणावस्थितेति संप्रत्ययः । ततः प्रतिषेधः प्राप्नोति । ततश्च कृतमप्येकाज्ग्रहणमनर्थकम् । किं पुनरिति । उभयविशेषणमुपदेशग्रहणमस्तु । ततो वधेरुपदेशेऽनेकाच्त्वात्प्रतिषेधाप्रसङ्गः । बेभिदितेति । द्विः प्रयोगे

---

उ०—इति वक्ष्यमाणत्वादिति भावः । प्रवर्तते प्रतिषेध इति । यदुपाधेरिति माऽऽश्रीयत इत्यभिमानः । वस्तुतस्तु दरिद्रित इत्यत्र यस्य विभाषेत्यस्य वारणायोत्तरत्रानुवृत्तिरावश्यक्येव । भ्रष्टावसरन्यायस्यात्र शास्त्रेऽनाश्रयणात् । इह किंचित्प्रयो इति न्यायेनेहापि फलमावश्यकमित्याशयेनानादराद्भगवता तथा नोक्तम् । अकारान्त इति । अन्यथाऽवधीदित्यत्रातो हलादेरिति वृद्धिः स्यात् । अदन्तत्वे त्वल्लोपस्य स्थानिवत्त्वान्न दोषः । एकाज्ग्रहणे कृते तु वध्युपदेशेऽनेकाच्त्वादिट्प्रतिषेधाप्रसङ्गः इति भावः । हन्तेः परस्मैपदित्वादात्मनेपदाभावात्पाऽऽह—कर्मणीति । हलन्तलक्षणेति । अतो हलादेरिति विकल्पनिवृत्त्यर्थमित्यर्थः । अल्लोपस्य स्थानिवत्त्वेन सिच्पराकाराभावादिति भावः । प्रकृतिर्हन्तिरिति । प्रकृतिशब्देन स्थान्युच्यत इति भावः । तस्याश्चेति । हन्तेरेव साक्षादुपदेशो वधेस्तु तद्विकारत्वेन प्रत्ययाश्रयः गौण उपदेश इत्यर्थः । तदाह—सैव चेति । भाष्ये संनिपात इत्यस्य प्रतिषेधप्रवृत्तिकाल इत्यर्थः । उपदेशेऽनेकाच्त्वादिति । द्वयो

---

.+ २. ४. ४२.

**एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्क्रूञादिभ्यो लिटि नियमानुपपत्तिरप्राप्तत्वात्प्रतिषेधस्य ॥ ३ ॥**

एकाच उपदेशेऽनुदात्तादित्युपदेशवचनमनुदात्तविशेषणं चेत्क्रूञादिभ्यो लिटि* नियमस्यानुपपत्तिः । किं कारणम् ? अप्राप्तत्वात्प्रतिषेधस्य द्विर्वचने कृत उपदेशेऽनुदात्तादेकाचः श्रूयमाणादितीट्प्रतिषेधो न प्राप्नोति । असतीट्प्रतिषेधे नियमो नोपपद्यते । असति नियमे को दोषः ?

**तत्र पचादिभ्य इड्वचनम् ॥ ४ ॥**

तत्र पचादिभ्य इड् वक्तव्यः—पेचिम, शेकिम ।

**सनश्चेट्प्रतिषेधः ॥ ५ ॥**

सनश्चेट्प्रतिषेधो वक्तव्यः—बिभित्सति, चिच्छित्सति । द्विर्वचने कृत उपदेशेऽनुदात्तादेकाचः श्रूयमाणादितीट्प्रतिषेधो न प्राप्नोति ।

इह च नीत्तः तत्वे कृते+ऽनच्कत्वादिट्प्रतिषेधो न प्राप्नोति ।

---

प्र०–द्विर्वचने भवति भिदिरुपदेशेऽनुदात्त, उपदेश एकाजित्यतोऽलोपे कृते संप्रत्यनेकाच्त्वेऽपि प्रतिषेधप्रसङ्गः । श्रूयमाणे त्वेकाच्याश्रीयमाण आवृत्तिसंख्ययैकत्वसंख्याया बाधनात्प्रतिषेधाभावः । समुदायस्य चैकाऽङ्गसंज्ञा नतु प्रत्येकमित्येकाचोऽङ्गादित्याश्रयणात्परभिद्रूपाश्रयोऽपि प्रतिषेधो न भवति । अनुदात्तविशेषणं चेदिति । उभयविशेषणेऽप्यनुदात्तविशेषणं भवतीति सामर्थ्यादनुदात्तस्यैव यदि विशेषणमित्यवधारणं द्रष्टव्यम् । असति नियम इति । क्रादिसूत्रं प्रतिषेधार्थमस्तु । एवमपि चकृष इत्यादि सिध्यति । बिभिदिवेत्यादौ चैकाच्त्वाभावात्प्रतिषेधाभावादिट् सिध्यतीति भावः । पेचिवेति । एत्वाभ्यासलोपयोः कृतयोरेकाचः श्रूयमाणादितीट्प्रतिषेधप्रसङ्गः । नीत्त इति । ददातेः क्तप्रत्ययेऽच उपसर्गात्त इति तत्वे कृतेऽनच्कत्वादेकाच्त्वाभावादिट्प्रतिषेधाप्रसङ्गः । तत्वस्य द्विपदाश्रयत्वाद्बहिरङ्गत्वादन्तरङ्ग इट्प्रतिषेधेऽसिद्धत्वादिति परिहारः

---

उ०–वधेत्यपि स्वरूपज्ञापनाय मुख्य उपदेश इति भावः । ननु स्थाने द्विर्वचन उपदेश एकाजनुदात्तरूपस्य नष्टत्वात्कथं यङ्लोप इट्प्रतिषेधः । न च स्थानिवत्त्वमल्विधित्वादित्यत आह—द्विःप्रयोग इति । ननु यङा व्यवधानात्कथमत्र निषेधप्रसङ्गोऽत आह—अतोऽलोपेकृत इति । यलोपस्याप्युपलक्षणमिदम् । अनेन यङ्लुग्विषयत्वमस्य भाष्यस्य नेति दर्शयति । अत एवाग्रे स्थानिवत्त्वेन समाधानपरं भाष्यं संगच्छते । ननु परस्य भिद्रूपस्य संप्रत्येकाच्त्वात्तदाश्रयः प्रतिषेधः स्यादत आह—समुदायस्य चेति । यथा चैतत्तथैकाचो द्वे इत्यत्र व्युत्पादितं भाष्ये । तत्वे कृत इति । परत्वादिति भावः । द्विपदेति । उपसर्गक्तान्तदारूपेत्यर्थः । उत्तरपदाधिकारे बहिरङ्ग-

---

*७. २. १३. + ७. ४. ४७.

नैष दोषः। आनुपूर्व्या सिद्धमेतत्। नान्नाकृत इट्प्रतिषेधे तत्वं प्राप्नोति। किं कारणम्? ति कितीत्युच्यते। यदप्युच्यत एकाच उपदेशेऽनुदात्तादित्युपदेश-वचनमनुदात्तविशेषणं चेत्क्रादिभ्यो लिटि नियमानुपपत्तिरप्राप्तत्वात्प्रतिषेध-स्येति मा भून्नियमः। ननु चोक्तं तत्र पचादिभ्य इड्वचनमिति। नैष दोषः। उक्तं तत्र *थल्ग्रहणस्य प्रयोजनं समुच्चयो यथा विज्ञायेत थलि च सेटि, क्ङिति च सेटीति। यदप्युच्यते सनश्चेट्प्रतिषेध इति।

**उभयविशेषणत्वात्सिद्धम् ॥ ६ ॥**

उभयमुपदेशग्रहणेन विशेषयिष्यामः। उपदेशेऽनुदात्तादुपदेश एकाच इति। यङ्लोपे कथम्?

**यङ्लोपे च तदन्ताद्द्विर्वचनात् ॥ ७ ॥**

सन्यङन्तस्य स्थाने द्विर्वचनं+ तत्र संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य नष्टः स भवति यः स एकाजुपदेशेऽनुदात्तः। अथापि द्विःप्रयोगो द्विर्वचनमेवमपि न दोषः। न ह्यस्य भिद्युपदेश उपदेशः। किं तर्हि? बेभिद्युपदेश उपदेशः। अथापि

प्र०-परिहारान्तरस्य सद्भावान्नाऽऽश्रितः। तदेव दर्शयति—आनुपूर्व्या सिद्धमिति। थल्ग्रहणस्येति। आरम्भसामर्थ्यादत एकहल्मध्येऽनादेशादेर्लिटीत्यनुवर्तनाच्चान्तरेणापि थल्ग्रहणं थल्येव सेट्येत्त्वाभ्यासलोपयोः सिद्धत्वात्थल्ग्रहणं क्ङिता समुच्चयार्थम्। तत-श्चेटि कृत एत्त्वाभ्यासलोपयोर्विधाने पेचिवेत्यादीनि रूपाणि सिध्यन्तीति नार्थः क्रादि-नियमेन। उभयविशेषणत्वादिति। एवं सत्युभयं विशेषणत्वेन संस्पर्शादनुगृहीतं भवति। एतदर्थं चोपदेश इति मध्ये पठितम्। उभयविशेषणे च क्रादिनियमात्प-चादिभ्य इटः सिद्धत्वात्थलि च सेटीत्यत्र थल्ग्रहणं विस्पष्टार्थम्। सन्यङन्तस्येति। सन्यङोरिति षष्ठी। तत्र भिन्नशब्दस्य प्रकृतिप्रत्ययसमुदायस्य सर्वे सर्वपदादेशा इति शब्दान्तर आदेशे कृतेऽयं धातुरयं प्रत्यय इति विभागाभावादिट्प्रतिषेधाभावः। नन्वेवं बिभित्सतीत्यत्रापि प्रतिषेधाप्रसङ्गः। इडप्यस्मिन्पक्षे न प्राप्नोतीत्यदोषः। अथवाऽत्रासमाश्वासात्पक्षान्तराश्रयेणाऽऽह—अथापीति। नह्यस्येति। आचार्यस्य भिद्युपदेशाश्रये ह्येकाच्त्वादनुदात्तत्वाच्चेट्प्रतिषेधः स्यात्। यङन्तस्य तूपदेशे गृह्यमाणे

उ०-परिभाषया अप्रवृत्तेरुक्त्याश्चिन्त्यमिदम्। थल्येवेति। अजित्त्वः सेट्लिटस्थल एव संभवादित्यर्थः। क्ङितेति। सेटीत्युभयविशेषणम्। तत्र सेड्ग्रहणं कालावधारणार्थं थलीत्येव थलि पूर्वेण च क्ङितीति निर्देशस्तदाह—इटि कृत इति। विस्पष्टार्थमिति। प्रतिपत्तिलाघवार्थमित्यर्थः। अत्रासमाश्वासादिति। द्विःप्रयोगपक्षस्यैव युक्तत्वादिति भावः। दृढीकरणार्थमाह—आचार्यस्येति। अनुदात्तत्वाचेति। मध्यमस्वरेणानोदात्तता-

* ६. ४. १२१. + ६. १. ९.

भिद्युपदेश उपदेश एवमपि न दोषः । अकारेण व्यवहितत्वान्न भविष्यति । ननु च लोपे कृते* नास्ति व्यवधानम् । स्थानिवद्भावाद्व्यवधानमेव । न सिध्यति । पूर्वविधौ स्थानिवद्भावो+ न चायं पूर्वविधिः । एवं तर्हि पूर्वस्मादपि विधिः पूर्वविधिः । कः पुनरुपदेशो न्याय्यः । यः कृत्स्नः । कश्च कृत्स्नः । य उभयोः ।

प्र०-तस्यानेकाच्त्वादुदात्तत्वाच्च प्रतिषेधाप्रसङ्गः । ननु च प्रत्यक्षमाख्यानमुपदेश इत्युक्तं यङादीनां च प्रत्ययानामुपदेशोऽस्ति नतु तदन्तानां शब्दानामनुमेयरूपाणाम् । नैष दोषः । संकीर्णावुद्देशोपदेशावित्यपि तत्रोक्तम् । अत एव चेत्संज्ञायां करणसाधन उपदेशशब्दः शास्त्रवाच्याश्रितः । इह तु भावसाधन आश्रीयते । तेन प्रतिपादनमात्रं गुणैर्वा प्रत्यक्षेण वोपदेश उच्यते । यङ्विधानद्वारेण च बेभिद्य इत्यस्य समुदायस्य क्रियाविशेषवचनस्याद्य प्रतिपत्तिरस्तीति बेभिद्युपदेश इत्युक्तम् । बेभिद्यशब्दादक्-श्तिपावितीक्प्रत्ययेऽल्लोपयलोपयोर्बेभिदीति भवति । अथवेत्संज्ञाविधावुच्चारणवचन उप-दिशिर्गृह्यते । तदुक्तमुद्देशश्च प्रातिपदिकानां नोपदेश इति । इह तु प्रतिपादनवचन इति विरोधाभावः । अथापि भिद्युपदेश इति । उच्चारणवचनेऽप्युपदिशौ गृह्यमाणे प्रत्यक्ष-माख्यानवचने वा न दोष इत्यर्थः । द्विःप्रकार उपदेश उक्ते पृच्छति-कः पुनरिति । किं भिद्यु-पदेशोऽथ बेभिद्युपदेश इत्यर्थः । यः कृत्स्न इति । कृत्स्नकारित्वात्कृत्स्नः स च भिद्युपदेश एव । स हि सर्वसाधारणो भेत्ता बेभिद्यत इत्येवमादीनां प्रतिपत्तिहेतुत्वात् । उभयोरिति । केवलस्य भिदेर्बेभिद्यादेश तदवयवसमुदायस्य धातोर्ग्राहक इत्यर्थः । एतदुक्तं भवति-भिदादीनामेवोपदेशोऽस्ति नतु सनाद्यन्तानामवयवसमुदायानामुपदेशशब्दस्य साक्षात्प्र-

उ०-दित्यर्थः । इत्युक्तमिति । उपदेशेऽजनुनासिक इत्यत्र । गुणैः—प्रकृतिप्रत्ययादिभिः । नन्वनिर्ज्ञातस्य स्वरूपज्ञानमुपदेश इति भिदेरेव स इति कथं बेभिद्युपदेश इत्य-त आऽऽह—यङ्विधानद्वारेण चेति । अथवेत्यादि प्रौढ्या, तत्रत्यभाष्यविरोधात् । इह त्विति । धातूनामनेकार्थत्वादिति भावः । वस्तुतस्तस्योपदेशत्वमेव नेति मनसि निधा-याऽऽह—अथापि भिद्युपदेश इति भाष्ये । भाष्ये—पूर्वस्मादपीति । तदभावेऽपि विहित-विशेषणान्न आगुक्तः कोऽपि दोषः । स्पष्टं चेदमेकाचो द्वे इत्यत्र भाष्य इति बोध्यम् । कारणे कार्यवाचिशब्द उपचारप्रयुक्त इत्याह—कृत्स्नकारित्वादिति । अस्य कृत्स्न-कारित्वं दर्शयति—स हीति । अत्रार्थं उभयोरिति भाष्यं योजयति—केवलस्येति । तदवयवेति बहुव्रीहिः । अवयवसमुदायानामिति षष्ठीतत्पुरुषः । तत्र हेतुमाह—उपदेश-

* ६. ४. ४८; ४९. + १. १. ५७.

यदि तर्हि य उभयोः स कृत्स्नः, स च न्याय्यो वध इट्प्रतिषेधः प्राप्नोति—आवधिषीष्टेति । नैष दोषः । आद्युदात्तनिपातनं करिष्यते, स निपातनस्वरः प्रकृतिस्वरस्य बाधको भविष्यति । एवमप्युपदेशिवद्भावो वक्तव्यः । यथैव हि स निपातनस्वरः प्रकृतिस्वरं बाधत एवं प्रत्ययस्वरमपि बाधेत—आवधिषीष्टेति । नैष दोषः । आर्धधातुकीयाः सामान्येन भवन्त्यनवस्थितेषु प्रत्ययेषु । तत्राऽऽर्धधातुकसामान्ये वधिभावे कृते सति शिष्टत्वात्प्रत्ययस्वरो भविष्यति ।

अथ के पुनरनुदात्ताः ? आदन्ता अदरिद्राः । इवर्णान्ताश्श्विश्रिडीशीदीधीवेवीङः । उवर्णान्ता युरुणुक्षुक्ष्णुस्नूर्णु वर्जम् । ऋदन्ताश्चाजागृवृङ्वृञः । शकिः कवर्गान्तानाम् । पचिवचिसिचिमुचिरिचिविचिप्रच्छियजिभजिसृजित्यजिभुजिभ्रस्जिभञ्जिरुजियुजिणिजिविजिसञ्जिस्वञ्जयश्चवर्गान्तानाम् । सदिशदिहदिच्छिदितुदिस्विदिभिदिस्कन्दिक्षुदिखिद्यतिविन्दिविद्यतिराधियुधिबुधिशुधिक्रुधिरुधिसाधिव्यधिवन्धिसिध्यतिहनिमन्यतयस्तवर्गान्तानाम् । तपितिपिवपिशपिचुपिलुपिलिपिस्वप्यापिक्षिपिसृपितृपिदृपियभिरभिलभियमिरमिनमिगमयः पवर्गान्तानाम् । रुशिरिशिदिशिविशिलिशिस्पृशिदशिक्रुशिमृशिदंशित्विषिमृषिकृषिश्लिषि-

---

प्र०–तिपत्तिहेतुशास्त्रवाचिन आश्रयणात् । वध इट्प्रतिषेध इति । भिद्युपदेशस्थानीयो हन्त्युपदेशः । तत्र हन्तिरेकाजनुदात्तश्चेति सत्यपि वधेरुपदेशेऽनेकाच्त्वे हन्त्युपदेशधर्माश्रयेट्प्रतिषेधप्रसङ्गः । न चाकारलोपस्य यङन्त इवात्रापि स्थानिवद्भावेन व्यवधानम् । सत्यपि स्थानिवत्त्वे प्रकृतिप्रत्यययोरानन्तर्याद्यङन्ते तु स्थानिवत्त्वादकारेण भिदिप्रत्यययोरानन्तर्यविच्छेदात् । आद्युदात्तनिपातनमिति । तत्सामर्थ्यादुपदेशविषयानुदात्तत्वाश्रय इट्प्रतिषेधो न भवति नह्येतदाद्युदात्तत्वं प्रयोगसमवायि, प्रत्ययस्वरेण तस्य बाधनात् । आर्धधातुकीया इति । आर्धधातुके भवा इति वृद्धाच्छः । यदि तर्ह्यार्धधातुकविशेषनिमित्ता अप्यनवस्थितेषु प्रत्ययेषु भवन्ति तदा यदुक्तं वधिभावा-

---

उ०–शब्दस्येति । शास्त्रवाचिन इति । करणव्युत्पत्त्येति भावः । यथा शास्त्रपदेनोच्चारणमेवं ज्ञापयन एव स इति बोध्यम् । यद्यप्येवंव्याख्याने वध इट्प्रतिषेध इत्युत्तरभाष्यानुपस्थितिः । वधेः साक्षात्प्रतिपत्तिहेतुशास्त्रस्य तादृशोच्चारणस्य च सत्त्वात् । अवच्छेदकावच्छेदेनान्वयस्यौत्सर्गिकत्वेन लक्ष्यानुरोधेन चोपदेशत्वावच्छेदेनैकाच इत्यर्थात् । तथाऽप्येतदभिप्रायमजानानस्योभयोः स्थान्यादेशयोर्यस्तस्यैव ग्रहणमित्यर्थं मन्वानस्य सा शङ्का तथैव च सिद्धान्त्येकदेशिन उत्तरम्—उपदेशविषयेति । हन्त्युपदेशविषयेत्यर्थः । अनवस्थितेषु प्रत्ययेष्विति । आर्धधातुके इत्यादेर्विषयसप्तमीत्वाश्रयणादिति भावः । तद्विरुध्यत इति । बाधनित्य एव तत्र विप्रतिषेध इति निरूपितमस्माभिः प्राक् । वस्तुतोऽत्रावच्छेदकावच्छेदे-

विपिपिपितुपिदुपिद्विपिपिसिवसिदहिदिहिवहिदुहिनहिरुहिलिहिमिहयश्चोष्मान्तानाम् । वसिः प्रसारणी ।

**कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ ७ । २ । १३ ॥**

**कृञोऽसुटः ॥ १ ॥**

कृञोऽसुट इति वक्तव्यम् । इह मा भूत्—संचस्करिव संचस्करिम । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । गुणे* कृते रपरत्वे चानुगन्तत्वादिट्प्रतिषेधो+ न भविष्यति । एवमप्युपदेशाधिकारात्प्राप्नोति× । तस्मादसुट इति वक्तव्यम् ।

**श्वीदितो निष्ठायाम् ॥ ७ । २ । १४ ॥**

श्विग्रहणं किमर्थं, न प्रसारणे कृते प्रसारणपूर्वत्वे चोगन्तादित्येव सिद्धम्÷ ? अत उत्तरं पठति—

प्र०—स्तीयुटि चिण्वद्भावो विप्रतिषेधेनेति तद्विरुध्येत । अन्तरङ्गत्वाच्चिण्वद्भावस्य विप्रतिषेधायोगादिति चिन्त्योऽत्र समाधिः ।

कृसृ० । कृञोऽसुट इति । कृतेऽपि सुटि करोतिर्भवत्येवेति प्रतिषेधप्रसङ्गः । गुणे कृत इति । ऋतश्च संयोगादेर्गुण इत्यत्र संगादेर्गुणविधाने संयोगोपधग्रहणं कर्तव्यमिति वचनेन । अनुगन्तत्वादिति । श्र्युकः कितीत्यत उग्ग्रहणमिहानुवर्तत इति मन्यते । एवमपीति । यद्यपि संप्रति नोगन्तस्तथाऽप्युपदेश उगन्त इति स्यात्प्रतिषेधः । किमर्थमुपदेश इत्यनुवर्तत इति चेत्, तुष्टोथेत्यादौ कृतेऽपि गुण इट्प्रतिषेधार्थं, यद्येवमुक इत्यपि नानुवर्त्यम् । एवं तर्ह्येतदनेनोक्तं भवति—सत्यसति वोगधिकारे कृञोऽसुट इत्यवश्यं वाच्यमिति नार्थ उगधिकारेण ।

श्वीदितः० । स्तीर्त्वा स्तीर्णमित्यादीनामुपदेशग्रहणानुवृत्तिमन्तरेण सिद्धेरभिधानादुपदेशाधिकारोऽत्र नास्तीति मत्वाऽऽह—श्विग्रहणं किमर्थमिति । ननु च 'श्वि त' इति स्थिते संप्रसारणात्परत्वादिट्प्राप्नोति नित्यत्वात्संप्रसारणं भविष्यतीति मन्यते । यस्य लक्षणान्तरेणेति क्वचिन्नाऽऽश्रीयत इति पूर्वमेवोक्तम् । संप्रसारणनिमित्तत्वादि-

उ०—नान्वयरूपोऽस्मदुक्तः समाधिर्बोध्यः । भाष्ये—उवर्णान्ता इति । थवादिपर्युदासाद्ह्रस्वोवर्णान्ता इत्यर्थः । अत एव बभूथाततन्थेति संगच्छते ।

कृसृभृ० । कृते सुटि शब्दान्तरत्वादप्राप्तेराह—कृतेऽपीति । यदागमा इति न्यायादिति भावः । नन्वत्रोक इत्यस्याभावेनानुगन्तत्वादित्ययुक्तमत आह—श्र्युक इति । वार्तिके वक्तव्यमित्यावश्यके कृत्य इति दर्शयति—अवश्यवाच्यमिति ।

श्वीदितो० । ननु श्र्युक इत्यत्रोपदेश इत्यनुवृत्त्या श्वेरुपदेशेऽनुगन्तत्वात्प्रश्नोऽयमयुक्तोऽत आह—स्तीर्त्वेत्यादि । इटोऽनित्यत्वोपपादनायाऽऽह—यस्य लक्षणान्तरेणेत्यादि ।

* ७. ४. १०. + ७. २. ११. × ७. ४. १०. ÷ ६. १. १५, १०८; ७. २. ११.

## श्विग्रहणमिदन्तत्वादुपदेशस्य ॥ १ ॥

श्विग्रहणं क्रियत इदन्तत्वादुपदेशस्य । उपदेश उगन्तादित्युच्यते, श्वयति-श्चोपदेश इदन्तः ।

---

प्र०–ङभावस्य तस्मिन्कृत इटोऽप्रवर्तनादनित्यत्वम् । संप्रसारणस्य तु कृताकृतप्रसङ्गित्वान्नित्यत्वम् । श्विग्रहणमिदन्तत्वादिति । एकाज्ग्रहणोत्तरार्थप्रत्याख्यानाथाऽऽनुपूर्व्या सिद्धमित्यादि तत्रोक्तम् । तत्त्वेकाज्ग्रहमन्यार्थं स्थितं सदुत्तरत्रापि प्रतिपत्तिगौरवपरिहारायानुवर्त्यम् । ततश्च जागरित इत्यत्र श्र्युकः कितीतीट्प्रतिषेधो न भवति । ननु वध्यर्थमप्येकाज्ग्रहणं प्रत्याख्यातमेवाऽद्युदात्तनिपातनाश्रयेण हन्त्युपदेशे गृह्यमाणे तदुक्तम् । वध्युपदेशे त्वाश्रीयमाण एकाज्ग्रहणेनैव वधेरिट् साध्यते । आद्युदात्तनिपातने त्वाश्रीयमाणे वधिषीष्टेत्याद्युदात्तत्वप्रसङ्गनिवारणाय लिङीति विषयसप्तम्याश्रयणीया । तथा च घानिषीष्टेति विप्रतिषेधाच्चिण्वद्भावानुपपत्तिरन्तरङ्गत्वाद्वधिभावप्रसङ्गात् । यङ्लुङ्निवृत्त्यर्थं चैकाज्ग्रहणं कर्तव्यम् । तस्मिन्हि क्रियमाणे यत्रैकाज्ग्रहणं किंचित्पश्चैतानि न लङ्लुकीति वचनाद्बेभेदितेत्यादावपीट् सिध्यति । उपदेशग्रहणमपि श्र्युकः कितीत्यत्रानुवर्त्यम् । अन्यथा स्तीर्तेत्यादिसिद्धयेऽनन्तप्रकारपरिहाराश्रयणे प्रतिपत्तिगौरवानुषङ्गः । इदमेव श्विग्रहणमुपदेशाधिकारस्य तत्र ज्ञापकम् । अन्ये त्विह श्विग्रहणं सर्वविधिभ्य इड्विधिर्बलवानित्यस्यज्ञापकमाहुः ।

---

उ०–नन्वेकाच इति सूत्र उपदेशग्रहणस्योत्तरत्र फलाभाव उक्तः । इह च तदाश्रयणमिति विरोधं परिहरति—एकाज्ग्रहणेति । ततश्च जागरित इति । एवं च स्तीर्णमिति यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इत्याश्रयणेऽपि सिद्धम् । तच्चावश्याश्रयणीयमित्युत्तरसूत्रे भाष्य एव स्फुटम् । वध्युपदेशे त्विति । उपदेशमात्रावच्छेदेन य एकाजित्यर्थेनेत्यर्थः । हन्तेर्विनाशोन्मुखत्वेन तत्र धातोरित्यस्याप्रवृत्त्या तत्स्थानिको वधिरप्यान्तरतम्यादुपदेशेऽनुदात्त एवोच्चारितः स्यान्यनुरूप इति भावः । तथा चेत्यादि तु चिन्त्यमित्युक्तमेव । इति वचनादिति । परे त्विण्निषेधविषये यङ्लुगन्तानामनभिधानमेव । अत एव पूर्वसूत्रे भाष्य इहार्थमेव तर्हि वध्यर्थमेकाज्ग्रहणमित्येवोक्तं न तु यङ्लुगर्थमित्यपि । एषा परिभाषा च न स्पष्टा । यत्त्वजर्घा घेमिर्दीर्तीत्यादौ दधनुश्नमोरकरणात् श्तिपा शपेति परिभाषा भाष्यसंमतेति तन्न । चर्करीतं धात्वादौ विनिश्च पाठेन तेषां शब्गणप्रयुक्तकार्याप्रवृत्तेस्तस्मादियं परिभाषा भाष्यासंमतैव । वधेराद्युदात्तनिपातनादेव सिद्धः एकाज्ग्रहणमत्र प्रत्याख्येयमेव । यदन्तवारणं तूपदेशेऽनुदात्ता-दितिसूत्रस्यैवैतेति प्राहुः । आहुरिति । अत्रारुचिबीजं तूपदेशपदानुवृत्तिज्ञानमात्रेणैव चारितार्थ्ये सति विशिष्टपरज्ञापकता न युक्ता, भाष्यविरोधश्चेति ।

## यस्य विभाषा ॥ ७ । २ । १५ ॥

### यस्य विभाषाऽविदेः ॥ १ ॥

यस्य विभाषाऽविदेरिति वक्तव्यम् । इह मा भूत्—विदितः, विदितवानिति। तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः । शविकरणस्य विभाषा× लुग्विकरणश्चायम् ।

## आदितश्च ॥ ७ । २ । १६ ॥

## विभाषा भावादिकर्मणोः ॥ ७ । २ । १७ ॥

किमर्थो योगविभागो नाऽऽदितो विभाषा भावादिकर्मणोरित्येवोच्येत ? केनेदानीं कर्तरि प्रतिषेधो भविष्यति ? यस्य विभाषा [ ७. २. १५ ] इत्यनेन । एवं तर्हि सिद्धे सति यद्योगविभागं करोति तज्ज्ञापयत्याचार्यो यदुपाधेर्विभाषा

---

प्र०— यस्य विभाषा । विभाषा गमहनविदविशामिति कसौ विकल्पविधानाद्वेत्तेर्निष्ठायां प्रतिषेधः प्राप्नोतीति मत्वाऽऽह—यस्य विभाषाऽविदेरिति । वेत्तिरत्र विवक्षितः । विद्लृ लाभ इत्यस्य तु प्रतिषेधो भवत्येव । विन्न इति विद्यतिविनत्त्योस्त्वनुदात्तत्वादिट्प्रतिषेधः । यदुपाधेरिति । उपाधिरभिधेयादिर्भेदकः । शविकरणस्य विभाषेति । विशिना तौदादिकेन साहचर्यात्तौदादिकस्यैव लाभार्थस्य विभाषेति ज्ञानार्थस्य सत्यपि विदिरूपत्वेऽर्थस्य भेदकत्वेन रूपवदाश्रयणात्प्रतिषेधाभावः । यद्यपि हन्तिना साहचर्यं विदेरस्ति तथाऽपि शब्दपरविप्रतिषेधाद्विशिर्व्यवस्थाहेतुर्न हन्तिः ।

आदितश्च । एवं तर्हीति । रूपाभेदेऽपि यद्युपाधीनां भेदकत्वं न स्याद्योगविभागोऽनर्थकः स्यात् । भेदकत्वे तु तेषां भावादिकर्मणोर्विकल्पविधानात्कर्तरि

---

उ०— यस्य विभाषा । विन्न इति । अभोगप्रत्यययोरिदम् । तयोस्तु वित्त इति । विद्यतिविनत्त्योस्त्विति । परे तु तुदादेरप्यनुदात्तत्वादेव निषेधः । विन्दिविद्यतीति ह्यनुदात्तगणने भाष्य उक्तम् । तत्रैका भिर्देशे नुम इव श्नमोऽप्यप्राप्तिरिति । अदादिव्यावृत्तयेऽनुस्वारोच्चारणम् । तत्र भाष्यप्रामाण्याद्विकरण इति चेन्नुमोऽपि संभव इति विनिगमनाविरहादुभयोरपि ग्रहणम् । विन्दतिविन्दिविद्यतीति पाठे तु स्पष्टमेव तद्ग्रहणमिति चिन्त्योऽयं कैयट इत्याहुः । अभिधेयादिर्भेदक इति । अभिधेयमर्थः । विशेषणमात्रमत्रोपाधिशब्देन नत्वर्थविशेष उपाधिरिति लक्षित इत्यर्थः । शब्दपरविप्रतिषेधादिति । लुग्विकरणपरिभाषानुग्रहाय परसाहचर्यस्यात्राऽऽश्रयणमिति तत्त्वम् ।

आदितश्च । भाष्ये—कर्तरीति । उपलक्षणमेतत् । कर्मणीत्यपि बोध्यम् । ननु यत्रार्थे

---

× ७. २. ६८.

तदुपाधेः प्रतिषेध इति । किमेतस्य ज्ञापने प्रयोजनम् ? यस्य विभाषाऽविदेरि-त्युक्तं* तन्न वक्तव्यं भवति ।

**क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमः-सक्ताविस्पष्टस्वरानायासभृशेषु ॥ ७ । २ ॥ १८ ॥**

**क्षुब्धं मन्थाभिधाने ॥ १ ॥**

क्षुब्धं मन्थाभिधान इति वक्तव्यम् । क्षुभितं मन्थेनेत्येवान्यत्र । क्षुब्ध ॥

स्वान्त—

**स्वान्तं मनोभिधाने ॥ २ ॥**

स्वान्तं मनोभिधान इति वक्तव्यम् । स्वनितं मनसेत्येवान्यत्र । स्वान्त ॥

ध्वान्त—

**ध्वान्तं तमोभिधाने ॥ ३ ॥**

ध्वान्तं तमोभिधान इति वक्तव्यम् । ध्वनितं तमसेत्येवान्यत्र । ध्वान्त ॥

लग्न—

**लग्नं सक्ताभिधाने ॥ ४ ॥**

लग्नं सक्ताभिधान इति वक्तव्यम् । लगितं सक्तेनेत्येवान्यत्र । लग्न ॥

---

प्र०–निष्ठायां प्रतिषेधो न स्याद्भावादिकर्मणोरपि विकल्पप्रतिषेधयोर्विरोधात्प्रतिषेधो न स्यादिति कर्तृकर्मनिष्ठार्थो योगविभागः । यदि तर्ह्युपाधिर्भेदकस्तत उदितो वेति क्त्वाप्रत्यये भाववाचिनि विकल्पविधानाद्भाववाचिन्यामेव निष्ठायां प्रतिषेधः स्यान्न कर्तृकर्मवाचि-न्याम् । नैष दोषः । 'तेन निर्वृत्तं' 'निर्वृत्तेऽक्षद्यूतादिभ्य' इति लिङ्गात्प्रत्ययार्थो भेदकत्वेन नाऽऽश्रीयते ।

क्षुब्ध० । क्षुब्धमिति । यदि धात्वर्थोपाधित्वेन मन्थादय आश्रीयेरन्मन्थादि-साधने धात्वर्थे क्षुब्धादयो निपात्यन्त इति तदा क्षुभितं मन्थेनेत्यत्रापि भावे क्तस्येट्-

---

उ०–विकल्प इष्टस्तत्रैव प्रतिषेधस्तर्हि कुतो नेत्यत्राऽऽह–भावादिकर्मणोरपीति । तथा च सूत्रवैयर्थ्यं स्यादिति भावः । प्रत्ययार्थो भेदकत्वेनेति । शब्देनाऽऽश्रीयमाण उपाधिरेव भेदक इत्यनेन ज्ञाप्यते । साहचर्यलभ्योऽपि शब्दोपात्त एव । अन्यो भावव्यापकत्वं तु न शब्देनाऽऽश्रितमिति भावः ।

क्षुब्धस्वान्त० । ननु मन्थादयोऽर्थाः सूत्र एव क्रमेणोपात्ता इति मन्थाभिधान इत्यादि व्यर्थमत आह– वर्तीनि । द्रवद्रव्येति । तथा च दधिमन्थान्मधुमन्थाच्चेति प्रयुज्यते । केचित्तु

---

* ७. २. १५।

म्लिष्ट—

**म्लिष्टम विस्पष्टाभिधाने ॥ ५ ॥**

म्लिष्टम विस्पष्टाभिधान इति वक्तव्यम् । म्लेच्छितं विस्पष्टं नेत्येवान्यत्र । म्लिष्ट ॥

विरिब्ध—

**विरिब्धं स्वराभिधाने ॥ ६ ॥**

विरिब्धं स्वराभिधान इति वक्तव्यम् । विरेभितं स्वरेणेत्येवान्यत्र । विरिब्ध ॥

फाण्ट—

**फाण्टमनायासाभिधाने ॥ ७ ॥**

फाण्टमनायासाभिधान इति वक्तव्यम् । फणितमेवान्यत्र । फाण्ट ॥

बाढ—

**बाढं भृशाभिधाने ॥ ८ ॥**

बाढं भृशाभिधान इति वक्तव्यम् । बाहितमेवान्यत्र ।

**धृषिशसी वैयात्ये ॥ ७ । २ । १९ ॥**

किमिदं वैयात्य इति ? वियातभावो वैयात्यम् ।

**दृढः स्थूलबलयोः ॥ ७ । २ । २० ॥**

दृढनिपातनं किमर्थं न दृहेर्नेड् भवतीत्येवोच्येत ।

---

प्र०—प्रतिषेधः स्यादिति समुदायानामभिधेयभावेन मन्थादय इहोपात्ता इति प्रदर्श्यते । द्रवद्रव्यसंपृक्ताः सक्तवो मन्थः । क्षुब्धां गिरिनदीमित्येत्यादयस्तु प्रयोगा असाधव इत्याहुः । अन्ये तूपमानमाश्रित्य समर्थयन्ते । स्वान्तशब्देन बाह्येषु विषयेष्वविक्षिप्तमनाकुलं मन उच्यते ।

धृषिशसी० । वियातभाव इति । विरूपं यातं गमनं चेष्टनं यस्य स वियातोऽविनीतः ।

दृढ० । न दृहेरिति । दृह दृहि बृह बृहि वृद्धाविति धातुषु पठ्यते । तत्र दृहः स्थूलबलयोरितीट एव प्रतिषेधो विधेय इति मत्वा प्रश्नः । दृढनिपातनमिति । दादेर्धातोर्घ इति घत्वस्य प्रतिषेधो वक्तव्यः स्यात् । अनिड्वचने हीति । यदीटो

---

उ०—मथ्यतेऽनेनेति मन्थनदण्डो मन्थ इत्याहुः । मन्थादिषु क्षोभणादिक्रियायोगो यथाकथंचिद्द्रष्टव्यः । उपमानमिति । सादृश्यं च यथासंभवं द्रष्टव्यम् । सूत्रे मनःशब्देन विशिष्टं मन उच्यते तत्रैव स्वान्तप्रयोगादित्याह—बाह्येष्विति ।

दृढः स्थूल० । प्रकृतकार्यात्कार्यान्तरासिद्ध्यर्थं हि निपातनं तत्नेह पश्याम इत्याशयेनाऽऽह—दृहेति । दादेर्धातोरित्यस्यान्यथेत्यादिः । भाष्येऽनिड्वचन इत्युपलक्षणमित्याह—यदीट इति । लघुसंज्ञाहेत्विति बहुव्रीहिः । कार्याप्रसङ्गश्चेति । घत्वप्रतिषेधारम्भगौरवं

**दृढनिपातनं नकारहकारलोपार्थं परस्य च ढत्वार्थम् ॥ १ ॥**

दृढनिपातनं क्रियते नकारहकारलोपार्थम् । नकारहकारलोपो यथा स्यात् । परस्य च ढत्वार्थम् । परस्य च ढत्वं यथा स्यात् ।

**अनिङ्वचने हि रभावाप्रसिद्धिरलघुत्वात् ॥ २ ॥**

अनिड्वचने हि रभावस्याप्रसिद्धिः—द्रढीयान् । किं कारणम् ? अलघुत्वात्+ ।

**नलोपवचनं च ॥ ३ ॥**

नलोपश्च वक्तव्यः । इह च परिद्रढय्य गतः—ल्यपि लघुपूर्वस्य [ ६. ४. ५६ ] इत्ययादेशो न स्यात् । इह च पारिदृढी× कन्येति—गुरूपोत्तमलक्षणः ष्यङ् प्रसज्येत÷ ।

**प्रभौ परिवृढः ॥ ७ । २ । २१ ॥**

परिवृढ इति किमर्थं निपात्यते, न परिपूर्वाद्वृहेर्नेड् भवतीत्येवोच्येत ।

**परिवृढनिपातनं च ॥ १ ॥**

प्र०–घत्वस्य च प्रतिषेधो विधीयेत ततो ढत्वधत्वष्टुत्वढलोपेषु यद्यपि दृढ इति रूपं सिध्यति तथाऽपि पूर्वत्रासिद्धमिति ढलोपस्यासिद्धत्वात्संयोगे गुर्विति गुरुसंज्ञायां सत्यां तन्निबन्धनकार्यप्रसङ्गो लघुसंज्ञाहेतुकार्याप्रसङ्गश्च । द्रढीयानिति । रविधौ पृथु मृदु इत्यादिपरिगणनमनपेक्ष्योच्यते । परिगणने हि विशेषणानां प्रत्याख्यानाद्रभावः सिध्यति । नलोपवचनं चेति । दृंहेरिदित्वान्नलोपो न प्राप्नोति । दृहेस्तु स्थूलबलयोरपि दृहितमितीष्यते । दृहि वृहि वृद्धाविति द्वावेव धातू पठ्येते इति वार्तिककाराभिप्रायं केचिदाहुः । तथा च वृंहेरच्यनिटीति नलोपमुक्तवान् । भाष्यकारस्त्वेतद्वचनप्रत्याख्यानाद्धातुचतुष्टयमियेष । पारिदृढीति । इतो मनुष्यजातेरिति ङीप् ।

प्रभौ० । परिव्रढय्येति । कथं पुनरत्र ल्यबादेशो यावता परिवृढमाचष्ट इति णिचि कृते क्त्वाप्रत्यये च क्त्वान्तस्य कृदन्तत्वात्तत्रैव परेरन्तर्भावात्पुनः समासाभावः । नैष दोषः । संग्रामयतेरेव सोपसर्गात्प्रत्ययोत्पत्तिर्नान्यस्मादिति नियमात्परिशब्दं

उ०–षोऽप्यपि योज्यम् । दृंहेस्त्विति । दृंहनिपातनाश्रयणादित्यर्थः । एतद्वचनेति । वृंहेरच्यनिटीत्यादिरर्थः । इतो मनुष्येति । परिदृढस्यापत्यमित्यत इञ् ।

प्रभौ० । परेरन्तर्भावादिति । परिवृढशब्दाण्णिचि तदन्तसमुदायस्य धातुत्वात्तत एव क्त्वेति क्त्वान्तेन समासाभाव इत्यर्थः ।

+६. १. ११; ८. २. १; १. ४. ११. ×४. १. ६५; ६५. ÷४. १. ७८.

किम् ? नकारहकारलोपार्थं परस्य च ढत्वार्थमनिड्वचने हि रभावाप्रसिद्धि-रलघुत्वान्नलोपवचनं चेत्येव+ । परिव्रढीयानिति 'र ऋतो हलादेर्लघोः' [ ६. ४. १६१ ] इति रभावो न स्यात् । इह च परिव्रढय्य गत इति 'ल्यपि लघुपूर्वस्य' [ ६. ४. ५६ ] इत्ययादेशो न स्यात् । इह च पारिवृढी* कन्येति गुरूपोत्तमलक्षणः ष्यङ् प्रसज्येत× ।

घुषिरविशब्दने ॥ ७ । २ । २३ ॥

किमर्थमविशब्दन इत्युच्यते, न विशब्दने चुरादिणिचा भवितव्यम् । एवं तर्हि सिद्धे सति यदयमविशब्दन इत्याह तज्ज्ञापयत्याचार्यो विशब्दने घुषेर्विभाषा णिज्भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ?

"महीपालवचः श्रुत्वा जुघुषुः पुष्यमाणवाः"

एष प्रयोग उपपन्नो भवति ।

प्र०–पृथक्कृत्वा वृढशब्दादेव णिच् क्रियते ततो वृद्धिशब्दस्य धातुत्वात् क्त्वाप्रत्यये कृते परैः क्त्वान्तेन समास इति सिद्धो ल्यबादेशः । णाविष्ठवद्भावाद्रभावः ।

घुषिर० । किमर्थमिति । घुषिरविशब्दार्थ इति भ्वादौ पठ्यते । स विशब्दने नैव वर्तते । यस्तु घुषिर्विशब्दन इति चुरादौ पठ्यते तस्माण्णिचा भवितव्यम् । केवलश्चेह घुषिरुपात्त इति नार्थो विशब्दनप्रतिषेधेन । विशब्दनं स्वाभिप्रायस्य शब्देन प्रकाशनमुच्यते । एवं तर्हीति । अविशब्दन एवेडभावे सिद्ध इत्यर्थः । किमेतस्येति । किं निष्ठायामेव घुषितं घोषितमिति रूपद्वयसिद्धिः प्रयोजनमथान्यदपीति प्रश्नः । जुघुषुरिति । घोषयांचक्रुरित्यपि भवति । अन्ये त्वनित्यण्यन्ताश्चुरादय इति सामान्येन ज्ञाप्यत इत्याहुः । केचिच्चिति स्मृत्यामितीदित्त्वं चुरादिणिचोऽनित्यत्वस्य ज्ञापकमाहुः । इदित्त्वेन नुम्विधाने प्रयोजनं चिन्तित इत्यादौ नलोपाभावः । यदि च चुरादिणिच् नित्यः स्यात्तदा चिन्त स्मृत्यामित्येवं पठ्येत । णिचि सति नलोपाप्रसङ्गात् ।

उ०– घुषिर० । केवलश्चेति । ण्यन्तनिर्देशे तु घोषिरिति स्यादिति भावः । नार्थ इति । अविशब्दन एव घुषेर्वृत्तेरित्यर्थः । नलोपाप्रसङ्गादिति । न च ण्यन्तात्क्विपि नलोपाभावाय तत्स्थानिवत्त्वं तु क्वौ लुप्ते क्वौ विधौ च निषिद्धमिति वाच्यम् । असिद्धवदत्रेति णिलोपस्यासिद्धत्वात् । अत्रान्ये त्वित्यादिमतद्वयेऽप्यरुचिबीजं तु गणेर्नित्यण्यन्तत्वपरणेरणाविति सूत्रस्थभाष्यविरोधः । घुषेर्विभाषेति प्रकृतसूत्रस्थभाष्यविरोधश्च । इरित्त्वेनैवेदित्त्वेनेव विकल्पस्य सिद्धत्वादेतज्ज्ञापकोपन्यासस्यायुक्तत्वापत्तिश्च । कुठ्यादीनामिदित्त्ववदेतदिदित्त्वस्यापि सत्त्वं च । इरित्त्वमपि धात्वन्तरत्वाभावबोधनाय । तस्माच्चिन्तितीत्यादेः साधुत्वं चिन्त्यमेव ।

+७. २. २०. *४. १. ९५; ६५. ×४. १. ७८.

## णेरध्ययने वृत्तम् ॥ ७ । २ । २६ ॥

किमिदमध्ययनाभिधायिकायां निष्ठायां निपातनं क्रियते, आहोस्विदध्ययने चेद्वृतिर्वर्तत इति ? किंचातः ? यद्यध्ययनाभिधायिकायां निष्ठायां निपातनं क्रियते, सिद्धं वृत्तो गुणः, वृत्तं पारायणम्, वृत्तं गुणस्य, वृत्तं परायणस्येति न सिध्यति । अथ विज्ञायतेऽध्ययने चेद्वृतिर्वर्तत इति न दोषो भवति । यथा न दोषस्तथाऽस्तु । अध्ययने चेद्वृतिर्वर्तत इत्यपि वै विज्ञायमाने न सिध्यति । किं कारणम् ? वृतिरयमकर्मकः । अकर्मकाश्चापि ण्यन्ताः सकर्मका भवन्ति । अकर्मकश्चात्र वृतिः । कथं पुनर्ज्ञायतेऽकर्मकोऽत्र वृतिरिति । अकर्मकाणां भावे क्तो भवतीत्येवमत्र भावे क्तो भवति+ । तत्रोदितः क्त्वि विभाषा× यस्य विभाषा [ ७. २. १५ ] इतीट्प्रतिषेधो भविष्यति ।

प्र०– णेरध्ययने० । किमिदमिति । किमभिधेयत्वेन क्तान्तस्याध्ययनमाश्रीयतेऽथ धात्वर्थसाधनत्वेनेति प्रश्नः । अध्ययने चेदिति । अध्ययनविषये धात्वर्थ इत्यर्थः । वृत्तो गुण इति । अध्ययनसामान्यं वृत्तशब्दस्याभिधेयं नतु तद्विशेष इति विशेषवाचिशब्दप्रयोगाविरोधः । गुणः पदक्रमसंहितारूपोऽध्ययनविशेषो वृत्तो निष्पादित इत्यर्थः । वृत्तं गुणस्येति । भावे निष्ठा । तस्या अध्ययनं नाभिधेयमिति वृत्तशब्दप्रयोगाप्रसङ्गः । न सिध्यतीति । ण्यन्तस्येति भावः । एवं तस्य सकर्मकत्वाद्वृत्तं गुणस्येति भावे निष्ठाया अप्रसङ्गात्तयोरेव कृत्यक्तखलर्था इत्यत्र भावेऽकर्मकेभ्य इत्यनुवर्तनात् । वृतिरयमिति । केवलस्य सकर्मकत्वाशङ्कां निराकृत्य ण्यन्तस्य सकर्मत्वं प्रतिपादयति । प्रयोज्यमन्तरेण णिचोऽभावात्तेनास्य सकर्मकत्वम् । तत्रैतस्याद्भवतु सकर्मकत्वं, कर्मण्येवात्र निष्ठा भवत्वित्याह—अकर्मकश्चात्रेति । वृत्तं गुणस्येत्यादावित्यर्थः । अकर्मकाणामिति । भावे क्तविधानादकर्मत्वं प्रतीयत इत्यर्थः । कर्मणि क्ते वृत्तो गुण इति सामानाधिकरण्येन भाव्यम् । भावे तु क्ते शेषविवक्षायां षष्ठी भवति । तस्मान्नैतण्ण्यन्तस्य वृते रूपमपि तु केवलस्य । तस्य च यस्य विभाषेतीट्प्रतिषेधोऽस्त्येव । एवं चाध्ययनमभिधेयं भवतु विषयो वेति न

उ०– णेरध्ययने० । किमभिधेयत्वेनेति । अध्ययनशब्दो बाहुलकात्कर्मल्युडन्तो ग्रन्थवाचीति भावः । अत एव च वक्ष्यति—संहितारूपोऽध्ययनविशेष इति । नन्वेवमध्ययने चेद्वृतिर्वर्तत इति भाष्यमनुपपन्नमत आह—अध्ययनविषय इति । भावे निष्ठेति । वृत्तं गुणस्येति नपुंसके भावे क्तस्य योग उपसंख्यानमिति षष्ठी, शेषलक्षणा वा । ण्यन्तस्येतीति । णेरित्युक्त्या ण्यन्तस्येदं निपातनमिति लभ्यत इत्यर्थः । वृतिरयमित्यादेर्वैयर्थ्यं परिहरति—केवलस्येति । अकर्मकाणां भावे क्तो भवतीत्यादेरकर्मकत्वे हेतुत्वमुपपादयति—भावे क्तेति । एवं चेति । वृत्तं गुणस्येत्यस्य सिद्धत्वादिति भावः । वृत्तं गुणस्येत्यत्र निष्ठेति क्तः प्रत्ययः किं न स्यादत आह–वृत्तं गुणस्येत्यत्रेति । प्रसज्येत-प्राप्तं

+ ३. ४. ७०. × ७. २. ५६.

अथ णिग्रहणं किमर्थम् ?

**वृत्तनिपातने णिग्रहणमण्यन्तस्यावधारणप्रतिषेधार्थम् ॥ १ ॥**

वृत्तनिपातने णिग्रहणं क्रियतेऽण्यन्तस्यावधारणं मा भूदिति । कैमर्थक्यान्नियमो भवति ? विधेयं नास्तीति कृत्वा । इह चास्ति विधेयम् । किम् ? ण्यधिकाद्वृतेरिट्प्रतिषेधो विधेयः । तत्रापूर्वो विधिरस्तु नियमोऽस्त्वित्यपूर्व एव विधिर्भविष्यति न नियमः । कुतो नु खल्वेतदधिकार्थ आरम्भे सति ण्यधिकस्य भविष्यति न पुनः सनधिकस्य वा स्याद्यङधिकस्य वेति । तस्माण्णिग्रहणं कर्तव्यम् । अथ किमर्थं निपातनं क्रियते ?

**निपातनं णिलोपेड्गुणप्रतिषेधार्थम् ॥ २ ॥**

निपातनं क्रियते णिलोपार्थमिड्गुणप्रतिषेधार्थं च ।

---

प्र०—कश्चिद्दोषः । अत्राऽऽहुः—वृत्तं गुणस्येति सकर्मकादपि ण्यन्तान्नपुंसके भावे क्त इति भावे क्तोऽस्त्येव । यस्तु निष्ठेति भूते क्तः स एवाकर्मकेभ्यो भावे भवति । वृत्तं गुणस्येत्यत्र च वर्तमानत्वं प्रतीयते न भूतत्वम् । अत्रोच्यते—नपुंसके भावे क्त इत्ययमपि क्तः सकर्मकेभ्यो न भवति । तयोरेव कृत्यक्तखलर्था इत्यत्र क्तमात्रस्य ग्रहणात्तत्र च भावे चाकर्मकेभ्य इत्यनुवर्तनादवश्यं चैतद्बोद्धव्यम् । अन्यथा नपुंसके भाव उपसंख्यानमित्यस्मिञ्छेषविज्ञानात्सिद्धमिति प्रत्याख्याते सकर्मकाद्भावे क्ते विधीयमाने कर्मणो द्वितीया प्रसज्येत ग्रामं गतमोदनं भुक्तमिति । अथ णिग्रहणमिति । केवलस्य यस्य विभाषेति प्रतिषेधस्य सिद्धत्वात्सामर्थ्याण्ण्यन्तस्य निपातनं ज्ञास्यते । वृत्तनिपातन इति । असति णिग्रहणे ण्यन्तस्यैवेदं निपातनं न तु सन्नन्तस्य यङन्तस्य चेति निश्चयाभावाद्विधिरशक्योऽभ्युपगन्तुमिति नियमो विज्ञायेत । णिलोपार्थमिति । निष्ठायां सेटीति वचनादनिटि निष्ठायां णिलोपो न प्राप्नोति । णेरनिटीत्यनेनापि तक्रकौण्डिन्यन्यायेन सेटि निष्ठायां विधीयमानेन णिलोपेनानिटि निष्ठायां णिलोपस्य बाधनात्प्रत्ययलक्षणेन प्राप्तस्य गुणस्येटश्चाभावो निपात्यते ।

---

उ०—गतमिति । अत्र गत्यर्थाकर्मकेति क्ते, क्तोऽधिकरणे चेति च क्तेऽयं प्रयोगो दुर्वार एव । अत एव भ्रान्तं देशमित्यादिसिद्धिरिति चिन्त्यमिदमिति केचित् । ननु केवलस्य निपातनाभावाय णिग्रहणं स्यादत आह—केवलस्येति । विधिरशक्य इति । ण्यन्तस्यैव वृत्तेर्ग्रहणे हि तस्य निष्ठायां णिलोपेट्प्रतिषेधयोर्लक्षणान्तरेणाप्राप्त्या तद्विध्यर्थमिदं स्यान्नान्यथेत्यर्थः । नियम इति । अध्ययन एवेत्येवमित्यर्थः । भाष्ये णिलोपार्थमिति । वस्तुतो णिलुगेव निपात्यः । एवं हि गुणप्रतिषेधो न निपात्यः । यद्यपि वृत्तो गुण इति प्रयोगोऽन्तर्भावितण्यर्थमादाय सिद्धस्तथाऽपि ण्यन्तस्यानिष्टप्रयोगनिवृत्त्यर्थं सूत्रमिति तत्त्वम् । तक्रकौण्डिन्येति । येन नाप्राप्त्यभावादिदं चिन्त्यम् । निष्ठायां सेटीत्यत्र सेटीति योगविभागेन सेट्येव निष्ठायामिति नियमात्केति यत्तु युक्तम् । अत एव तत्र सूत्रे भाष्ये टक्—सेड्ग्रहणमनिटि प्रतिषेधार्थं संज्ञपितः पशुरिति ।

**वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ ७ । २ । २७ ॥**

अथ दान्तशान्तयोः किं निपात्यते ?

**दान्तशान्तयोरुपधादीर्घत्वं च ॥ १ ॥**

किंच ? णिलोपेट्प्रतिषेधौ च+ । उपधादीर्घत्वमनिपात्यम् । वृद्ध्या सिद्धम् । न सिध्यति । मितां ह्रस्वः [ ६. ४. ९२ ] इति ह्रस्वत्वेन भवितव्यम् । एवं तर्ह्यनुनासिकस्य क्विझलोः क्ङिति [ ६. ४. १५ ] इत्येवमत्र दीर्घत्वं भविष्यति । न सिध्यति । किं कारणम् ? णिचा व्यवहितत्वात् । णिलोपे कृते नास्ति व्यवधानम् । स्थानिवद्भावादव्यवधानमेव । प्रतिषिध्यतेऽत्र स्थानिवद्भावो दीर्घविधिं प्रति न स्थानिवदिति* ।

अथ स्पष्टच्छन्नयोः किं निपात्यते ?

**स्पष्टच्छन्नयोरुपधाह्रस्वत्वं च ॥ २ ॥**

किंच ? णिलोपेट्प्रतिषेधौ च× ।

**रुष्यमत्वरसंघुषास्वनाम् ॥ ७ । २ । २८ ॥**

**घुषिस्वनोर्वावचनमिट्प्रतिषेधाद्विप्रतिषेधेन ॥ १ ॥**

घुषिस्वनोर्वावचनमिट्प्रतिषेधाद्भवति विप्रतिषेधेन** । घुषेरिट्प्रतिषेधस्यावकाशोऽसंपूर्वादविशब्दनम्—घुष्टा रज्जुः, घुष्टो मार्गः । वावचनस्यावकाशः संपूर्वाद्विशब्दनम्—संघुष्टं वाक्यम्, संघुषितं वाक्यम् । संपूर्वादविशब्दन उभयं प्राप्नोति—संघुष्टा रज्जुः, संघुषिता रज्जुः । वावचनं भवति विप्रतिषेधेन । स्वन इट्प्रतिषेधस्यावकाशोऽनाङ्पूर्वान्मनोभिधानम्—स्वान्तं मनः । वावचनस्यावकाशः—आङ्पूर्वादमनोभिधानम्—आस्वान्तो देवदत्तः, आस्वनितो देवदत्तः । आङ्पूर्वान्मनोभिधान उभयं प्राप्नोति—आस्वान्तं मनः, आस्वनितं मनः । वावचनं भवति विप्रतिषेधेन ।

---

प्र०— वा दान्त० । उपधादीर्घत्वमिति पूर्वत्रासिद्धे न स्थानिवदिति वक्तव्यम् । तस्मिंश्चोच्यमाने द्विर्वचनादीनि वरेयलोपस्वरपदान्तवर्जं न वक्तव्यानीति दीर्घविधौ स्थानिवत्त्वनिषेधाभावादनुनासिकस्य क्विझलोः क्ङितीति दीर्घत्वाप्रसङ्गः । सूत्रारम्भाश्रयेण तु दीर्घत्वसिद्धिं भाष्यकृन्मन्यते ।

उ०— वा दान्त० । द्विर्वचनादीनि वरेयलोपस्वरवर्जं नेति पाठः । सूत्रारम्भाश्रयेणेति । न पदान्तेति सूत्रे दीर्घग्रहणारम्भेत्यर्थः । भाष्यकृन्मन्यत इति । वस्तुत एतद्भाष्याद्वरेयलोपस्वरवर्जमित्यत्र दीर्घग्रहणमप्युपलक्ष्यत इति परे ।

---

+ ७. २. २९. * १. १. ५८ × ७. २. २९. ** ७. २, १८; २३.

## हृषेर्लोमसु ॥ ७ । २ । २९ ॥

हृषेर्लोमकेशकर्तृकस्येति वक्तव्यम् । हृष्टानि लोमानि, हृषितानि लोमानि । हृष्टं लोमभिः, हृषितं लोमभिः । हृष्टाः केशाः, हृषिताः केशाः । हृष्टं केशैः, हृषितं केशैः ।

विस्मितप्रतिघातयोरिति वक्तव्यम् । हृष्टो देवदत्तः, हृषितो देवदत्तः । हृष्टा दन्ताः, हृषिता दन्ताः ।

## अपचितश्च ॥ ७ । २ । ३० ॥

अपचित इति किं निपात्यते । चायश्चिभावो निपात्यते । अपचितः । क्तिनि नित्यमिति वक्तव्यम् । अपचितिः ।

## आर्धधातुकस्येड्वलादेः ॥ ७ । २ । ३५ ॥

आर्धधातुकग्रहणं किमर्थम् ? वलादिग्रहणमार्धधातुकविशेषणं यथा विज्ञायेत—वलादेरार्धधातुकस्येति । अथाक्रियमाण आर्धधातुकग्रहणे कस्य वलादिग्रहणं विशेषणं स्यात् ? अङ्गस्येति× वर्तते, अङ्गविशेषणम् । तत्र को दोषः । अङ्गस्य वलादेरादित इट्प्रसज्येताडाड्वत्+ । तद्यथाऽडाटावङ्गस्यादितो भवतस्तद्वत् । क्रियमाणेऽप्यार्धधातुकग्रहणेऽनिष्टं शक्यं विज्ञातुम् । वलादेरार्ध-

प्र०— हृषेः० । सूत्रकारो लोमशब्दं सामान्यशब्दं मत्वा केशग्रहणं न कृतवांस्तथा च लोमनखं स्पृष्ट्वा शौचं कर्तव्यमित्युक्ते केशस्पर्शेऽपि शौचं क्रियते । वार्तिककारस्तु मूर्द्धजाः केशाः, अङ्गान्तरजानि लोमानीति भेदं मत्वाऽऽह—हृषेर्लोमकेशकर्तृकस्येति ।

अपचितश्च । चिभाव इति । एतच्चोपलक्षणमिट्प्रतिषेधस्यापि निपातनात् । क्तिनीति । क्तिन्नावादिभ्य इति क्तिन्प्रत्ययोऽयमन्यथा गुरोश्च हल इत्यकारः स्यात् ।

आर्ध० । रुदादिभ्य एवेति । सार्वधातुक एवेति नियमो रुदविदेति क्त्वासनोः कित्त्वविधानान्न भविष्यतीत्यनिटः सनो रुदादेर्हलन्ताच्चेति कित्त्वस्य सिद्धत्वात्क्त्वोऽप्यनिट औपदेशिककित्त्वसद्भावात् । लूभ्यामिति । 'क्विबन्ता धातुत्वं न जहति रूपार्थावैकल्यात् ।' विहितविशेषणमिति । यद्यपि ऋत इद्धातोरित्यत्र धातुशब्दोऽर्थपदार्थकस्तथाऽपि सदृशशब्दान्तरानुमानादिह धातोरित्येतत्स्वरूपपदार्थकमाश्रीयतं धातोरित्येवं विहितस्येति । पञ्चमीनिर्दिष्टेनेति । पञ्चम्यन्तानुकरणे धातोरित्यस्मिन्धातोरित्येवंविहितस्येति लभ्यते नान्यथा । अथेदानीमिति । धातुशब्दोऽत्र धातुशब्दस्या-

उ०— हृषे० । भेदं मत्वेति । तथा च प्रयोगोऽपि केशश्मश्रुलोमनखान्युद्वपस्थानि कुर्वीति ।

आर्धधातुकस्य० । रूपार्थेति । तत्र रूपावैकल्यं स्पष्टमेव । अर्थो यद्यपि कर्तृत्वबोधकस्तथाऽपि धातुत्वप्रयोजकक्रियारूपस्यार्थवैकल्यमस्त्येवेति भावः । यद्यपि तस्या उपसर्जनत्वं तथाऽप्यत्वसन्तस्येति सूत्रेऽधातोरिति निषेधेन भूवादिसूत्र उपसर्जनभूताया अपि ग्रहणज्ञापनात्

× ६. ४. १. + ६. ४. ७१; ७२.

धातुकस्य यदङ्गमिति । अक्रियमाणे चेष्टम् । अङ्गस्य यो वलादिरिति । किंचाङ्गस्य वलादिः ? निमित्तम् । यस्मिन्नङ्गमित्येतद्भवति । कस्मिंश्चैतद्भवति ? प्रत्यये । यावता क्रियमाणे चानिष्टं विज्ञायतेऽक्रियमाणे चेष्टं तत्राक्रियमाण एवेष्टं विज्ञास्यामः । इदं तर्हि प्रयोजनम् । इह मा भूत्—आस्ते, शेते । एतदपि नास्ति प्रयोजनम् । रुदादिभ्यः सार्वधातुके [ ७. २. ७६ ] इत्येतन्नियमार्थं भविष्यति । रुदादिभ्य एव सार्वधातुक इड् भवति नान्येभ्य इति । एवमपि वृक्षत्वम्, वृक्षता-अत्र प्राप्नोति । नैष दोषः । धातोरिति वर्तते । एवमपि लूभ्याम्, पूभ्याम्-अत्र प्राप्नोति । एवं तर्हि विहितविशेषणं धातुग्रहणम् । धातोर्यो विहितः । ननु धातोरेवायं विहितः । न चायं धातोरित्येवं विहितः । क्व पुनर्धातुग्रहणं प्रकृतम् । ऊत इद्धातोः [ ७. १. १०० ] इति ? तद्वै षष्ठीनिर्दिष्टं पञ्चमीनिर्दिष्टेन चेह विहितः शक्यते विशेषयितुम् । अथेदानीं षष्ठीनिर्दिष्टेन चापि विहितः शक्यते विशेषयितुं, शक्यमार्धधातुकग्रहणमकर्तुमिति ।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥

---

प्र०—नुकरणम् । तेन धातुशब्दस्य यः संबन्धी प्रत्ययस्तस्येड् भवति । यश्च धातुशब्दव्यापारोत्पन्नः स तत्संबन्धी भवति ।

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे सप्तमस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ।

---

उ०—दोषः । सदृशशब्दान्तरेति । शब्दाधिकारपक्ष आश्रीयत इत्यर्थः । पञ्चम्यन्तानुकरण इति । प्रत्ययविधौ पञ्चम्यन्तस्य धातोरित्यस्याधिकारादिति भावः ।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते सप्तमस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ।

---

## स्नुक्रमोरनात्मनेपदनिमित्ते ॥ ७ । २ । ३६ ॥

### स्नुक्रमोरनात्मनेपदनिमित्ते चेत्कृत्युपसंख्यानम् ॥ १ ॥

स्नुक्रमोरनात्मनेपदनिमित्ते चेत्कृत्युपसंख्यानं कर्तव्यम् । प्रस्नविता प्रस्नवितुम् प्रस्नवितव्यम् । प्रक्रमिता प्रक्रमितुम् प्रक्रमितव्यम् । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । अविशेषेण स्नुक्रमोरिडागममुक्त्वाऽऽत्मनेपदपरे नेति वक्ष्यामि ।

---

प्र०— स्नुक्रमोरनात्मनेपदनिमित्ते । स्नुक्रमोरुदात्तत्वादिटि सिद्धे नियमार्थं वचनम् । अनात्मनेपदनिमित्तत्वं एवेड् यथा स्यात् । आत्मनेपदनिमित्तत्वे मा भूत् । किति सनि च प्रस्नुतः प्रसुस्नूषतीति क्रमेश्च निष्ठायां क्रान्त इति, श्र्युकः किति सनि ग्रहगुहोश्च यस्य विभाषेति प्रतिषेध एव भवति । पुरस्तात्प्रतिषेधस्य ह्येतदेव प्रयोजनम् । इण्मात्रस्य प्रतिषेधो यथा स्यादिति । तेन प्रतिषेधबाधनार्थमेतन्न भवति । अथवाऽऽर्धधातुकस्येड्वलादेरित्यस्यानुवर्तनादयमर्थो भवति—यत्र पूर्वेणेड्विहितस्तत्रैवानेन भवति । पूर्वसूत्रेण च प्रतिषेधविषयपरिहारेणेड्विधानात्तत्रैवायं विधिः प्रवर्तमानो नियमाय संपद्यते । अथवाऽऽत्मनेपदनिमित्तत्वे न भवतीति प्रसज्यप्रतिषेध आश्रीयत इति किदादौ न दोषः । प्रस्नवितेति । य एवाऽऽत्मनेपदविषयः स्नौतिः स एवात्रापि योग्यताश्रयणेन निमित्तव्यवहारदर्शनादात्मनेपदनिमित्तं भवतीतीण्न प्राप्नोतीति वचनम् । कर्मकर्तृविषयश्चात्र स्नौतिरिति कर्मकर्तर्यात्मनेपददर्शनाद्भवति तद्योग्यः । एवं प्रस्नवितुं प्रस्नवितव्यमिति भावकर्मविषयत्वाद्भावकर्मणोरात्मनेपदोपलम्भादात्मनेपदनिमित्तं स्नौतिः । प्रक्रमितेति । आदिकर्मणोऽन्यत्र प्रशब्दो विज्ञेयः । आकिर्मणि तु कर्तरि

---

उ०— स्नुक्रमो० । आत्मनेपदेति । प्रस्नोषीष्ट प्रक्रंसीष्टेत्यादौ । ननु कित्सनोः श्र्युक इत्यादिनिषेधे प्राप्ते विध्यर्थमेवेदं स्यादत आह—किति सनि चेति । श्र्युक इत्यादिबाधनार्थत्वं तु नास्त्येवेत्याह—पुरस्तादिति । निषेधाविषये पूर्वेण सिद्धया निषेधविषये चास्याप्राप्तावस्याचरितार्थत्वादनेन विधिरेव स्यादत आह—अथवेति । अन्यथा निषेधबाधकतया विधित्वमेव स्यान्न नियमत्वं विधिनियमसंभवे विधेर्ज्यायस्त्वादिति भावः । अनुवर्तनादिति । तदनुवृत्तिश्च विषयनिर्देशार्था । तत्फलितमाह—यत्रेत्यादि । अनुवृत्तावेवं व्याख्याने च गौरवादाह—अथवेति । प्रसज्यप्रतिषेध इति । एवं च प्रतिषेधार्थमेव सूत्रं न विध्यर्थं नापि नियमार्थमिति किदादौ न दोष इति भावः । एवं हि पूर्वसूत्रात्पूर्वमेव पठेदिति चिन्त्यम् । योग्यताश्रयणेनेति । न तु कुर्वद्रूपताश्रयणेनैवेत्यर्थः । कुसूलस्थेष्वपि बीजेष्वङ्कुरनिमित्तानीति व्यवहारात् । ननु कर्तरि तृचो विधानेन भावकर्मविषयत्वाभावात्कथमात्मनेपदयोग्यता स्नौतेरत आह—कर्मकर्तृविषयश्चेति । अत्र—प्रस्नवितेत्यत्र । भावेत्यादि । तुमुन्तव्ययोर्भावादौ विधानादिति भावः । आदिकर्मणि त्विति । वार्तिके कर्तरीति कृतो विशेषणम् । आदि-

## आत्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषु प्रतिषेधः ॥ २ ॥

आत्मनेपदपरप्रतिषेधे च तत्परपरसीयुडेकादेशेषु प्रतिषेधो वक्तव्यः । तत्परपरे तावत्—प्रसुस्नूषिष्यते प्रचिक्रंसिष्यते* । सीयुटि—प्रस्नोषीष्ट प्रक्रंसीष्ट । एकादेशे—प्रस्नोष्यन्ते प्रक्रंस्यन्ते । एकादशे कृते व्यपवर्गाभावान्न प्राप्नोति ।

---

प्र०—चाऽऽत्मनेपदविषयात्कृतीति प्रतिषेधेन भाव्यम् । प्रक्रमितुं प्रक्रमितव्यमिति । भावकर्मविषयत्वात्प्रारम्भविषयत्वाद्वाऽऽत्मनेपदनिमित्तत्वम् । प्रसुस्नूषिष्यत इति । आत्मनेपदपरः स्यस्तत्परः सन्निति स्येन व्यवधानात्सन इट्प्रतिषेधो न प्राप्नोति । ननु व्यवहितेऽपि परशब्दस्य वर्तनात्प्रतिषेधो भविष्यति । नैतदस्ति । आत्मनेपदपरे नेति न सूत्रन्यासः किं तर्ह्यर्थप्रदर्शनपरमेतत् । स्नुक्रमोर्नाऽऽत्मनेपद इति तु सूत्रन्यासः । तत्र तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानाद्व्यवहितस्य प्रतिषेधाप्रसङ्गः । ननु च सनि ग्रहगुहोश्चेति प्रतिषेधो भविष्यति । न ह्ययमिड्विधिः पूर्वप्रतिषेधविषय इति प्रागेवोक्तम् । यदप्युक्तमविशेषेणेति, तस्यायमर्थः—पूर्वसूत्रेण यः स्नुक्रमोरविशेषेणेडुक्तस्तमनूद्याऽऽत्मनेपदपरे प्रतिषेधो विधेयः । एवं तर्हि प्रचिक्रंसिष्यत इत्येतदेवात्रोदाहरणम् । स्नौतिस्तु साहचर्यादुदाहृतः । प्रस्नोषीष्टेति । आत्मनेपदमेवात्र सीयुडाद्यार्धधातुकं सीयुटस्तद्भक्तत्वं न त्वात्मनेपदपरत्वमिति प्रतिषेधाप्रसङ्गः । प्रस्नोष्यन्त इति । अत्रान्तरङ्गत्वान्नित्यत्वाच्च पूर्वमेकादेशेन भाव्यमिट्प्रतिषेधस्तु बहिरङ्गोऽनित्यश्च 'वार्णा-

---

उ०—कर्मणि प्रारम्भविषयत्वादात्मनेपदविषयत्वं बोध्यम् । नन्वादिकर्मणोऽन्यत्र प्रशब्देऽपि नेदमुदाहरणं युक्तम् । अनात्मनेपदनिमित्तत्वएवेट् नाऽऽत्मनेपदनिमित्तत्व इत्यर्थे ह्यात्मनेपदनिमित्तत्वादिडागमाप्राप्तौ कृत्युपसंख्यानं कर्तव्यमिति प्रक्रान्तम् । एवं चास्य कथमात्मनेपदनिमित्तत्वं वृत्त्याद्यादायाऽऽत्मनेपदनिमित्तत्वे तु वक्ष्यमाणवार्तिकेन निषेधो दुर्वार इति चेन्न । दृष्टान्तार्थं तत्सत्त्वात् प्रक्रमितेतिवत् प्रक्रमितुमित्यादीष्यते तन्न सिध्येदिति कृतीति वक्तव्यमित्याशयात् । वस्तुतस्तदपरामर्शेनेदं भाष्यमिति बोध्यम् । प्रारम्भविषयत्वाद्वेति । तत्र हि प्रोपाभ्यां समर्थाभ्यामित्यात्मनेपदं कर्तृकृतोऽभावान्निषेधविषयाभाव इति बोध्यम् । अविशेषेणेति । स्नुक्रमोरात्मनेपदे परे नेति न्यासे तात्पर्यम् । तत्परपरेति वार्तिकस्याऽऽत्मनेपदं परमस्मात्तत्परं यस्य तस्य प्रतिषेधो वक्तव्य इत्यर्थः । तदाह—आत्मनेपदपर इति । ननु चेति । आत्मनेपदे परे नेति न्यासे परशब्दोपादानसामर्थ्येन तस्मिन्निति परिभाषानुपस्थानादिति भावः । नन्वस्य किरसनादिप्रतिषेधविषय आरम्भात्कथमेतद्विषये प्रतिषेधप्राप्तिरत आह—नह्ययमिति । नानेनेड्विधीयते किं तर्हि निषेध एव । विधिस्तु पूर्वेणैवेति तस्य प्रतिषेधः स्यादेवेति भावः । अस्मार्थे भाष्यं योजयति—यदपीति । स्नुक्रमोर्वलाद्यार्धधातुकस्याऽऽत्मनेपदे परत इण्नेति

---

* १. २. ११

अन्तादिवद्भावेन व्यपवर्गः । उभयत आश्रये नान्तादिवत् । एवं तर्ह्येकादेशः पूर्वविधिं प्रति स्थानिवद्भवति÷ स्थानिवद्भावाद्व्यपवर्गः । तत्परपरसीयुटोस्तर्हि प्रतिषेधो वक्तव्यः ।

**सिद्धं तु स्नोरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात् ॥ ३ ॥**

सिद्धमेतत् । कथम् ? स्नोरात्मपदेन समानपदस्थस्य नेड् भवतीति वक्तव्यम् । यदि स्नोरात्मनेपदेन समानपदस्थस्येण्न भवतीत्युच्यते प्रस्नवितेवाऽऽचरति प्रस्नवित्रीयते-अत्र न प्राप्नोति । बहिरङ्गत्वाच्च । बहिरङ्गलक्षणमत्राऽऽत्मनेपदम्* ।

**क्रमेश्च ॥ ४ ॥**

क्रमेश्चाऽऽत्मनेपदेन समानपदस्थस्येण्न भवतीति वक्तव्यम् । अथ किमर्थं

प्र०–दाङ्गं वलीय' इत्यनेन त्वेकनिमित्ता प्रवृत्तिर्वार्णस्य प्रतिषिध्यते न तु भिन्ननिमित्तेति स्यादेवेडागमः । अत एवेत्यपि कर्तव्ये वार्णादाङ्गमित्यस्यानुपस्थानम् । एकादेशः पूर्वविधिमिति । ननु चाऽऽर्धधातुकस्येट्प्रतिषेध उच्यते न चाऽऽर्धधातुकमेकादेशात्पूर्वं व्यपवर्गाभावात् । अत्राऽऽहुः—पूर्वस्मादपि विधिः पूर्वविधिरिति समासाश्रयणाददोषः । प्रस्नवित्रीयत इति । तृजन्तात्क्यङ् रीङ् ऋत इति रीङादेशः । बहिरङ्गलक्षणमिति । तृजन्तादाचारलक्षणे क्रियान्तरे क्यङ् तत्राऽऽत्मनेपदमिडागमस्तु पूर्वमेव तृजन्तावस्थायामुत्पन्नो न शक्यो निवर्तयितुमित्यर्थः । यद्येवं प्रचिक्रंसिष्यत इत्यत्राऽऽत्मनेपदस्य बहिरङ्गत्वात्प्रतिषेधो न प्राप्नोति । नैष दोषः । समानपदस्थस्येति वचनादिडागमेन पदावस्थाऽपेक्षणीया तत्र तृचि विभक्तावुत्पन्नायां लब्धेऽपि पदत्व आत्मनेपदस्यासंनिधानादिडागमः प्रवर्तते । प्रचिक्रंसिष्यत इत्यत्र तु पदावस्थाया-

उ०–वाक्यार्थं इति भावः । एकनिमित्तेति । यथा कारक इत्यत्र यणवृद्ध्योः । अत्र तु प्रत्ययस्येट् तदवयवस्यैकादेश इति भिन्नाश्रयत्वमिति भावः । निमित्तशब्दः षष्ठीनिर्दिष्टपरः । ननु चाऽऽर्धधातुकस्येति । आदेशावस्थायां व्यपवर्गाभावादचः पूर्वत्वमार्धधातुकस्य न संभवति स्थान्यवस्थायामपि न, द्वयोः स्थानित्वादिति चोद्याशयः । पूर्वस्मादपीति । व्यवहितेऽपि पूर्वशब्दस्य वृत्तेः, एकादेशात्तत्स्थानिनो वा पूर्वस्माद्धातोः परस्य विधिरस्तीति न दोषः । वस्तुतः षष्ठीसमासेऽपि किंचित्स्थानिनः पूर्वत्वमस्त्येवेति न दोष इति भाष्याशयः । स्थानिभूतत्वावच्छिन्नात्पूर्वग्रहणे तु न मानम् । ध्वनितं चेदं कृदतिङ्सूत्रे भाष्ये । स्नोरात्मनेपदेनेति । स्नुघटितसमुदायघटकमात्मनेपदमादाय यावतः पदसंज्ञा तत्स्थस्य स्नोः परस्य वलाद्यार्धधातुकस्य नेडित्यर्थः । अत्र न प्राप्नोतीति । इडित्यर्थः । बहिरङ्गलक्षणत्वाच्चेत्यस्य 'अयं न दोषः' इति शेषः । चस्त्वर्थे । न शक्य इति । उत्पन्ननिवृत्तेरशक्यत्वादित्यर्थः ।

÷ १. १. ५७. * १. १. ११; १. ३. १२.

क्रमेः पृथग्ग्रहणं क्रियते न स्नुक्रमिभ्यामित्येवोच्येत ? कर्तरि चाऽऽत्मनेपदविषयात्कृति नेति वक्ष्यति तत्क्रमेरेव यथा स्यात्स्नोर्मा भूत्—व्यतिप्रस्नविता रौ व्यतिप्रस्नविस्तारः÷ ।

## कर्तरि चाऽऽत्मनेपदविषयात्कृति ॥ ५ ॥

कर्तरि चाऽऽत्मनेपदविषयात्कृति प्रतिषेधो वक्तव्यः । प्रक्रन्ता उपक्रन्ता * ।

तत्तर्हीदं बहु वक्तव्यम् । स्नोरात्मनेपदेन समानपदस्थस्येण्न भवतीति वक्तव्यम् । क्रमेश्चेति वक्तव्यम् । कर्तरि चाऽऽत्मनेपदविषयात्कृतीति वक्तव्यम् । सूत्रं च भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं स्नुक्रमोरनात्मनेपदनिमित्ते चेत्कृत्युपसंख्यानमिति ? नैष दोषः । स्नुक्रमी एवाऽऽत्मनेपदनिमित्तत्वेन विशेषयिष्यामः—न चेत्स्नुक्रमी आत्मनेपदस्य निमित्ते इति । कथं पुनर्धातुर्नामाऽऽत्मनेपदस्य निमित्तं स्यात् ? धातुरेव निमित्तम् । आह हि भगवाननुदात्तङित आत्मनेपदं शेषात्कर्तरि परस्मैपदम् [ १. ३. १२; ७८ ] इति । यत्र तर्हि धातुर्नाऽऽश्रीयते—भावकर्मणोः [ १. ३. १३ ] इति । अत्रापि धातुरेवाऽऽश्रीयते । भावकर्मवृत्ताद्धा-

प्र०–मेवाऽऽत्मनेपदसंनिधानात्प्रतिषेधप्रवृत्तिः । आत्मनेपदविषयादिति । तद्योग्यादित्यर्थः । प्रक्रन्तेति । आरम्भविषयत्वात्क्रमः प्रोपाभ्यां समर्थाभ्यामित्यात्मनेपदविषयत्वम् । स्नुक्रमी एवेति । अनात्मनेपदनिमित्ते इति प्रथमाद्विवचनं न सप्तमी । सप्तम्यां हि भावादेरात्मनेपदनिमित्तस्याऽऽश्रयणात्प्रस्नवितव्यमित्यादावपि निषेधः स्यात् । कथं पुनरिति । वृत्त्यादिरर्थे आत्मनेपदस्य निमित्तं न धातुरिति भावः । धातुरेवेति । वृत्त्याद्यर्थविशिष्टः । भावकर्मवृत्तादिति । भावकर्मणी धातोरेव विषय

उ०-प्रतिषेधप्रवृत्तिरिति । वार्तिके प्रत्यासत्तिन्यायेन स्नुक्रमिनिमित्तकात्मनेपदेन समानपदस्थस्येत्यर्थः । कार्य इति भावः । बहिरङ्गव्यटादिनिमित्तमत्राऽऽत्मनेपदमिति भाष्यार्थः । प्रचिक्रंसिष्यत इत्यत्र पूर्ववत्सन इत्यनेनाऽऽत्मनेपदं स्नुक्रमिनिमित्तमेवेति भावः । एवं च 'प्रचिक्रमिषयते' इत्यत्र णिच आत्मनेपदनिमित्तत्व इड् भवत्येव । एवं सन्नन्तात्भावे कर्मणि वाऽऽत्मनेपदे प्रचिक्रमिषिष्यत इत्येव । पूर्ववत्सन इत्यस्य तु न तत्र प्रवृत्तिः । कर्तरीत्यनुवृत्तेश्च । अत एव वक्ष्यमाण प्रत्याख्याने न फलभेदः । सप्तम्यन्तस्यान्वयायोग्यत्वादाह—प्रथमाद्विवचनमिति । स्नुक्रमोर्यलादेरिट् यदि ते स्नुक्रमी अनात्मनेपदनिमित्ते भवत इति सूत्रार्थ इति भावः । वस्तुतो भावप्रधानः सौत्रो निर्देशः प्रसज्यप्रतिषेधश्च । स्नुक्रमोरात्मनेपदनिमित्त्वाभावे सत्येव प्रत्यासत्त्या ताभ्यां परस्य वलादेरिडित्यर्थः । तत्फलितं भाष्य

÷१. २. १४. * १. १. ४२.

तोरिति । कथं प्रक्रमितव्यम् ? सत्यात्मनेपदे निमित्तशब्दो वर्तते । कथं प्रक्रान्ता उपक्रान्ता । तस्मादसत्यपि । कथं प्रक्रमितव्यम् । तस्मात्सत्येव । कथं प्रक्रान्ता उपक्रान्ता । वक्तव्यमेवैतत्कर्तरि चाऽऽत्मनेपदविषयात्कृतीति । अथवा कृतीति* वर्तते ।

## ग्रहोऽलिटि दीर्घः ॥ ७ । २ । ३७ ॥

## ग्रहेर्दीर्घत्व इड्ग्रहणम् ॥ १ ॥

ग्रहेर्दीर्घत्व इड्ग्रहणं कर्तव्यम् । इटो दीर्घ इति वक्तव्यम् । न वक्तव्यम् ।

---

प्र०—भावेन विशेषणे इत्यर्थः सत्यात्मनेपद इति । न योग्यतामात्राश्रयमिह निमित्तत्वमाश्रीयते, किंतु कार्यं कुर्वतः । यद्येवमर्थेऽपि निमित्तत्वेनाऽऽश्रीयमाणे दोषाभावात्कस्मात्स्नुक्रमी एवेत्युक्तम् । उच्यते, अर्थे निमित्तत्वेनाऽऽश्रीयमाणेऽनुपसर्गाद्वेत्यात्मनेपदमर्थनिरपेक्षत्वादसंगृहीतं स्यादिति धातुरेव निमित्तत्वेनाऽऽश्रितः । यदि सति कार्ये निमित्तमाश्रीयते तदा निमित्तग्रहणं न कर्तव्यम् । आत्मनेपद इति सत्सप्तम्याऽऽश्रयणात् । नैतदस्ति । तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषायां सत्यां सत्सप्तम्याश्रयणस्याशक्यत्वात् । अथवा कृतीति वर्तत इति । तच्च कृद्ग्रहणं वाक्यभेदेन क्रमिणैव संबध्यते, न स्नौतिना । अनात्मनेपदनिमित्त इति च प्रसज्यप्रतिषेधः, तेनायमर्थो यदाऽप्यात्मनेपदयोग्यः क्रमिस्तदा ततः परस्य कृत इण्न भवति ।

ग्रहो० । इड्ग्रहणमिति । आदेशस्य स्थानिनिर्देशार्थं षष्ठ्यन्तमिड्ग्रहणं कर्त-

---

उ०—उक्तम्—न चेत्स्नुक्रमी इति । ननु कर्मणि धातोर्वृत्त्यभावेन कर्मवृत्तादित्यसंगतमत आह—भावकर्मणी इत्यादि । विषयसप्तमी भावकर्मविषयाद्धातोरित्यर्थः । ते अपि प्रत्ययद्योत्ये इति भावः । पञ्चकस्य प्रातिपदिकार्थत्ववत्सर्वस्य धात्वर्थत्वमिति तत्त्वम् । शत्रादिविषयत्वस्य तु सत्त्वप्रधानानि नामानीत्युक्तेर्वाच्या एव भावादय इति बोध्यम् । एतदर्थमेव विषयभावेनेति कैयटेन व्याख्यातम् । तद्विषयत्वं च धातोस्तेषां स्वप्रकृतिकप्रत्ययार्थतया स्वस्य तत्तद्विशिष्टक्रियावाचकत्वेन वेत्यन्यत् । यद्येवमिति । आत्मनेपदनिमित्तार्थविषयभिन्नस्नुक्रमिभ्यां परस्य वलादेरिडित्यर्थं आश्रयणीय इति भावः । सत्सप्तमीति । आत्मनेपदेऽसतीत्यर्थः । अशक्यत्वादिति । आन्नलोप इत्यत्र तु लक्ष्यानुरोधान्नैषा परसप्तमी । का तर्हि सत्सप्तमीत्युक्तमिति न तद्विरोधः । सतीति पदाध्याहारस्य दुर्ज्ञेयतया स्पष्टप्रतिपत्तये निमित्तग्रहणं कृतमिति तात्पर्यम् । तच्चेति । अनुवृत्तं चाऽऽवृत्त्या कर्तृपरं कृत्संज्ञकपरं चेति प्रक्रमितुमित्यादौ न दोषः ।

ग्रहोऽलिटि० । कर्तव्यमिति । अनुवर्तमानं तु प्रथमान्तत्वादन्वयायोग्यमिति

---

* ७. २. ८.

प्रकृतमनुवर्तते । क्व प्रकृतम् ? आर्धधातुकस्येड्वलादेः [ ७. २. ३५ ] इति । एवमपि कर्तव्यमेव ।

**अग्रहणे ह्यसंप्रत्ययः षष्ठ्यभावात् ॥ २ ॥**

अक्रियमाणे हीड्ग्रहणेऽसंप्रत्ययः स्यात् । किं कारणम् ? षष्ठ्यभावात् । षष्ठीनिर्दिष्टस्याऽऽदेशा उच्यन्ते÷ न चात्र षष्ठीं पश्यामः । क्रियमाणे चापीड्ग्रहणे—

**चिण्वदिटः प्रतिषेधः ॥ ३ ॥**

चिण्वदिटः* प्रतिषेधो वक्तव्यः । ग्राहिष्यते ।

**यङ्लोपे च ॥ ४ ॥**

यङ्लोपे च प्रतिषेधो वक्तव्यः । जरीगृहिता जरीगृहितुम् । जरीगृहितव्यम् ।

यदि पुनरिड्दीर्घ आगमान्तरं विज्ञायेत ?

---

प्र०—व्यम् । एवमपीति । सत्येव प्रथमान्त इड्ग्रहणे षष्ठ्यन्तमन्यत्कर्तव्यमित्यर्थः । अक्रियमाणे हीति । प्रथमान्तमिड्ग्रहणमयोग्यत्वान्न संबध्यते । अच्परिभाषोपस्थानाच्चाज्मात्रस्य ग्रहेः परस्य दीर्घप्रसङ्गः । असंप्रत्यय इति । ग्रहेः परस्येटो दीर्घ इत्ययमिष्टः संप्रत्ययो न स्यात् । क्रियमाण इति । प्राकरणिकमिटमनपेक्ष्येट इत्युच्यमाने सर्वस्येटो विशेषाभावाद्दीर्घप्रसङ्गाच्चिण्वदिटो दीर्घः प्रतिषेध्यः । जरीगृहितेति । जरीगृह्यशब्दात्तृच् इट् अल्लोपयलोपयोः कृतयोर्द्विप्रयोगे द्विर्वचने स एव ग्रहिरितीटो दीर्घप्रसङ्गः । दीर्घविधौ स्थानिवत्त्वनिषेधादकारेण व्यवधानाभावः । यदि पुनरिति । इडिति वर्तते, दीर्घ इति च निर्दिश्यते । तत्र दीर्घ इड् भवतीति सामर्थ्याद्व्यक्तिपरित्यागेनेकारजातिराश्रीयते । दीर्घग्रहणाच्च दीर्घव्यक्तिसमवेता सा विधीयते । टकारो देशविध्यर्थ इति सामर्थ्यादीडागमविधिः । एवं च षष्ठी-

---

उ०—भावः । नन्विड्ग्रहणाभावे किमनिष्टमत आह—अच्परिभाषेति । अज्मात्रस्येति । ग्राहक इत्यादावपीत्यर्थः । नन्वेवमसंप्रत्ययोऽनुपपन्नोऽत आह—ग्रहेः परस्येति । नन्वत्र करणेनेतरप्रकरणस्थेड्ग्रहणं भविष्यतीत्यत आह—प्राकरणिकमिति । प्राकरणिकेड्ग्रहणे हि 'पूर्वप्रथमान्तमेव विभक्तिविपरिणामेन संबध्येतेत्यपूर्वप्रकरणात्प्रकरणानादर इति भावः । विशेषाभावादिति । इट्त्वस्य समानत्वादिति भावः । स एव ग्रहिरिति । उत्तरखण्डभूत इत्यर्थः । स्थानिवत्त्वनिषेधादिति । पूर्वस्य विध्यभावाच्चेत्यपि बोध्यम् । पञ्चमीसमासस्तु प्रामादिक इति तदनाश्रयेणेदं भाष्यमिति तत्त्वम् । नन्विड् दीर्घ इति सामानाधिकरण्यमसंगतमत—आह—सामर्थ्यादिति । इच्चासावागमान्तो दीर्घ इत्यर्थ इति भावः । अपवाद इति ।

---

÷ १. १. ४९. * ६. ४. ६२.

## इड्दीर्घ इति चेद्विप्रतिषिद्धम् ॥ ५ ॥

इड्दीर्घ इति चेद्विप्रतिषिद्धं भवति । यदि इण्न दीर्घः । अथ दीर्घो न इट् । इड्दीर्घश्चेति विप्रतिषिद्धम् ।

## प्रतिषिद्धस्य च पुनर्विधाने दीर्घत्वाभावः ॥ ६ ॥

प्रतिषिद्धस्य च पुनर्विधाने दीर्घत्वस्याभावः । वुवूर्षते विवरिषते विवरीषते+ । अत्रापि* इड्दीर्घ इत्यनुवर्तिष्यते । यत्तर्हि विदेशस्थं प्रतिषिध्य पुनर्विधानं तन्न सिध्यति । जॄव्रश्च्योः क्त्वि [ ७. २. ५५ ] श्र्युकः किति [ ११ ] इत्यनेन प्रतिषिद्धे× दीर्घत्वं न प्राप्नोति । जरित्वा जरीत्वा ।

प्र०- निर्दिष्टमिड्ग्रहणं न कर्तव्यम् । चिण्वदिट् चास्यापवाद इति तत्र दोषाभावः । न च कस्यचित्स्थानिनो दीर्घत्वं विधीयत इति स्थानिवत्त्वानिषेधात्पूर्वस्मादपि विधौ स्थानिवत्त्वादकारेण व्यवधानाच्च यङ्लोप ईटोऽप्रसङ्गः । अथ त्वागमान्तरेऽपि दीर्घत्वमस्तीत्येवायं दीर्घविधिस्तदा यङ्लोपे दोषो न परिहृतः । इतरो व्यक्तिपदार्थाश्रयेणाऽऽह—इड्दीर्घ इति चेदिति । विवरीषत इति । सनीटि प्राप्ते वृतो वेत्यनेन पक्ष ईटि च प्रसक्ते सनि ग्रहगुहोश्चेत्यनेनोभयस्मिन्नपि प्रतिषिद्ध इट्सनि वेति पक्ष इट् विधीयते, ततः पुनरीटो विधानाभावाद्दीर्घ ईकारः पक्षे न श्रूयेत । इटस्तु पक्षे दीर्घविधौ दोषाभावः । अत्रापीति । इट्सनि वेत्यत्र दीर्घ इति वृत इति चानुवर्तत इति सिद्धं त्रैरूप्यम् । विदेशस्थमिति । दीर्घग्रहणानुवृत्तेरत्रासंभवः । जरीत्वेति । उदात्तत्वादिट् प्राप्तो वृतो वेत्यनेन पक्ष ईट् च श्र्युकः कितीति प्रतिषिद्धः । इकारजात्याश्रयणादीटोऽपि प्रतिषेधः प्रवर्तते । ततो जॄव्रश्च्योः क्त्वीत्यनेनेटि विधीयमाने पक्षे दीर्घो न स्यात् ।

उ०—साप्तमिकस्येड्जातीयस्य नित्यत्वाद्बाधक इत्यर्थः । यङ्लोपे दोषाभावमत्र पक्ष उपपादयति—न च कस्यचिदिति । दोषो न परिहृत इति । तस्मादेवं दीर्घविधिग्रहणमनुचितमिति भावः । वस्तुतोऽयं दोषः पक्षद्वयेऽपीति सूत्रशेषे भाष्यकृद्वक्ष्यतीत्याद्यदोषपरिहारफलक एवायं पक्ष इति तत्त्वम् । यङ्लुगन्तात्तृजादौ त्विटो दीर्घ इष्ट एव । स्थाने द्विवचनपक्षेऽप्यन्तरङ्गानपीति न्यायेन लुगुत्तरमेव द्वित्वप्रवृत्तेः स्थानिवद्भावेन अहित्वाद्वलयेव दीर्घः । यदि यङ्लुगस्तीति तात्पर्यम् । प्रतिषिद्धस्य पुनर्विधानमुपपादयति—सनीटीति । उभयस्मिन्नपीति । पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्याज्जातिपक्षाश्रयणाच्चेति भावः । सिद्धं त्रैरूप्यमिति । वाक्यभेदेनेटोऽपि विधानादिति भावः । विदेशस्थमित्यस्य हेतुगर्भविशेषणत्वमुपपादयति—दीर्घेति । भाष्ये—न सिध्यतीति । तद्विषये न सिध्यति दीर्घ इत्यर्थः । मन्विटो निषेधः कथमीटः स्यादत आह—जातीति । नत्वीट इति । एवं च जरीत्वा

+ ७. २. ३५; ३८; १२; ४१. * ७. २. ४१. × ७. २. ३५; ३८.

ईटो विधिरिटः प्रतिषेधः+। यथाप्राप्त इड्दीर्घो भविष्यति। यदि तर्हि-इटो ग्रहण ईटो ग्रहणं न भवति जरीत्वा न क्त्वा सेट् [ १. २. १८ ] इति कित्त्वप्रतिषेधो न प्राप्नोति। इह च अग्रहीदिति इट ईटि [ ८. २. २८ ] इति सिज्लोपो न प्राप्नोति। इह च-अग्रहीत् नेटि [ ७. २. ४ ] इति वृद्धिप्रतिषेधो न प्राप्नोति। मा भूदेवम्। ह्म्यन्तानामित्येवं× भविष्यति। अत्रापि नेटीत्येवानुवर्तते। तच्चावश्यमिड्ग्रहणमनुवर्त्यमधाक्षीदित्येवमर्थम्। तथा अग्रहीध्वम्, अग्रहीढ्वम् विभाषेटः [ ८. ३. ७९ ] इति मूर्धन्यो न प्राप्नोति। तस्मान्नैवं शक्यं वक्तुमिटो ग्रहण ईटो ग्रहणं न भवतीति। भवति चेत्प्रतिषिद्धस्य च पुनर्विधाने दीर्घाभाव इत्येव। तस्मादशक्य इड्दीर्घ आगमान्तरं विज्ञातुम्। न चेद्विज्ञायत इटो ग्रहणं कर्तव्यम्। न कर्तव्यम्। आर्धधातुकस्येति÷ वर्तते। ग्रहः परस्याऽऽर्धधातुकस्य दीर्घत्वं वक्ष्यामि। इहापि तर्हि प्राप्नोति—ग्रहणम् ग्रहणीयम्। वलादेरिति* वर्तते। एवमपि 'ग्रहीता ग्रहीतुम्' अत्र न प्राप्नोति। भूतपूर्वगत्या भविष्यति। एवमपि 'ग्राहकः' अत्र प्राप्नोति। किंचेट्प्रतीघातेन खल्वपि दीर्घत्वमुच्यमानमिटं बाधते। तस्मादिटो ग्रहणं कर्तव्यम्।

---

प्र०-एतत्परिहरति—ईटो विधिरिटः प्रतिषेध इति। वृतो वेत्यनेन पक्ष ईडागमो विधीयते। श्र्युकः कितीत्यनेन तु नेडित्यधिकाराद्व्यक्तिपक्षाश्रयणाच्च निषेध इटो न त्वीटः। पाठान्तरं तु प्रकृतेऽर्थे दुर्योजत्वादस्माभिर्नोपन्यस्तम्। सन्मार्गसंभवे को हि विमार्गं मतिमान्भजेत्। यदि तर्हीति। इट्प्रतिषेध ईटो यथा न भवत्येवं कार्यान्तरस्याप्यप्रसङ्गः। तस्मान्नैतदिति। इड्ग्रहणे इकाराकृतिराश्रयणीया नतु व्यक्तिः। भवति चेदिति। जॄव्रश्च्योः क्त्वीतीड्विधौ दोष एवेत्यर्थः। नन्वनुवाद इव विधावपीकाराकृत्याश्रयणाज्जरीत्वा जरीत्वेति रूपद्वयं भविष्यति। नैतदस्ति। विधौ जात्याश्रयेलविलतेरथावपि दीर्घः स्यात्तस्माद्विहितस्य दीर्घस्येड्ग्रहणेन ग्रहणं नतु विधेयस्य। ग्रह इति। इडागमे कृते तदादेरार्धधातुकस्याऽऽदेः परस्येतीट एव दीर्घः। वलादेरिति। वलादि यद्दृष्टमित्याश्रीयते। इतरः सांप्रतिकं वलादित्वमाश्रितमिति मत्वाऽऽह—एवमपीति। भूतपूर्वगत्येति। सांप्रतिकाभावादलिटीति निषेधाश्च। इट्प्रतिघातेनेति। येन नाप्राप्तिन्यायेनेटं बाधित्वाऽकृतेट्कस्यैवाऽऽर्धधातुकस्य दीर्घत्वमच्परिभाषोप-

---

उ०-विपर्यय इति विपर्ययमिति भावः। तस्माद्विहितस्येति। अनुवाद एव जातेर्ग्रहणं विधौ तु व्यक्तेरेवेति भावः। अन्यथा धातुकस्य दीर्घविधाने कथमिटस्तथात्वमित्यत आह—इडागम इति। विधिधानुत्पाद्यमानाविद्यमानपरिभाषया अविषय इति भावः। भाष्ये-इट्प्रतिघातेनेति।

---

+ ७. २. १२; ११. × ७. २. ५. ÷ ७. २. ३५. * ७. २. १०.

न कर्तव्यम् । प्रकृतमनुवर्तते । क्व प्रकृतम् ? आर्धधातुकस्येड्वलादेरिति । ननु चोक्तमेवमपि कर्तव्यमेवाग्रहणे ह्यसंप्रत्ययः षष्ठ्यनिर्देशादिति ? नैष दोषः । ग्रह इत्येषा पञ्चमीडिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्य [ १. १. ६७ ] इति । एवं च कृत्वा सोऽप्यदोषो भवति यदुक्तं चिरावदिटः प्रतिषेध इति । कथम् ? प्रकृतस्येट इदं दीर्घत्वं न च चिरावदिट् प्रकृतः । यङ्लोपे कथम् ? यङ्लोपे चोक्तमिटि सर्वत्र । क्व सर्वत्र ? यद्येव प्रकृतस्येटो दीर्घत्वमथापि इड्दीर्घ आगमान्तरं विज्ञायेत ।

यङ्लोपे चोक्तम् ॥ ७ ॥

किमुक्तम् ? तदन्तद्विर्वचनादिति* ।

---

प्र०-स्थानाद्यत्र तत्र स्थितस्याचः स्यात् । न चेति । जॄव्रश्च्योः क्त्वीत्यनेन तु वलादिलक्षण एवेट्प्रतिप्रसूयत इत्यप्राकरणिकत्वाभावाद्दीर्घः सिध्यति । यङ्लोपे चेति । सन्यङन्तस्य स्थाने द्विर्वचनमित्यत्र पक्षे प्रकृतिप्रत्ययसंमोहान्नष्टः स ग्रहिः । ननु च द्विःप्रयोगो द्विर्वचनमिति पक्षस्तत्र स्थितः । तत्कथमस्थितपक्षाश्रयेण परिहारः । अत्राऽऽहुः—यङ्लोपे चोक्तमिति । अत्राप्ययमभिप्रायो वार्तिककारस्य द्विःप्रयोगे द्विर्वचने पूर्वस्मादपि विधावल्लोपस्य स्थानिवत्त्वादकारेण व्यवधानाद्दीर्घाभावः । न पदान्तेत्यत्र 'पूर्वत्रासिद्धे न स्थानिवदि'त्युक्तं तस्मिन्नुच्यमाने पदान्तवरेयलोपस्वरवर्जं द्विर्वचनादीनि न वक्तव्यानीति साप्तमिके दीर्घविधौ स्थानिवत्त्वं भवत्येव । सूत्रकारमतेऽपि ग्रहेर्विहितस्येत्येवं विहितविशेषणाश्रयणाद्यङ्लोपे दीर्घाभावसिद्धिः । भाष्यकारेण त्वस्थितमपि पक्षमाश्रित्य तदन्तद्विर्वचनादिति विवृतम् । अन्यत्रास्य दोषस्य सम्यक्परिहाराभिधानादनादरात् ।

---

उ०-येन नाप्राप्तिन्यायाच्च तत्प्रतिघातेनास्य विधानं बोध्यम् । ननु प्राकरणिकस्यैव दीर्घे जॄव्रश्च्योरित्यस्योत्तरत्र विधानादप्राकरणिकत्वाज्जरित्वेत्यत्र पक्षे दीर्घो न स्यादत आह—जॄव्रश्च्योरिति । प्रतिप्रसूयत इति । श्रयुक इति प्रतिषिद्धः प्रतिप्रसूयत इत्यर्थः । साप्तमिक इति । वस्तुतो वर्ज्यकोटौ दीर्घस्याप्युपलक्षणताया: कर्मणिणिटिच्यादिसूत्रस्थभाष्यसंमतत्वयेदं चिन्त्यम् । ननु वार्तिकमतेऽस्त्वयं परिहारः सूत्रमते तु कथमत आह—सूत्रकारेति । इदं भाष्यकृतोऽप्युपलक्षणम् । अपिना पञ्चमीसमासाभाव इत्यपि बोध्यम् । अन्यत्रेति । एकाचो द्वे इत्यत्र । तत्र हि ग्रहेरङ्गादिति भाष्यम् । तृचो हि जरीगृहीत्यादृशं ननु ग्रहिः । न चाल्लोपयलोपयोरेकदेशविकृतन्यायेन जरीगृहित्यादृशम्, तस्य च ग्रहिरूपत्वमपि द्विःप्रयोगत्वाद्द्विर्वचनस्येति वाच्यम् । विशेषणसामर्थ्याद्धि यथाश्रुतरूपाश्रयणमिति न दोष इति कैयटेन

---

* ७. २. १०.

**स्वरतिसूतिसूयतिधूञूदितो वा ॥ ७ । २ । ४४ ॥**

अथ वेति+ वर्तमाने पुनर्वावचनं किमर्थम् ।

**पुनर्वावचनं लिङ्सिचोर्निवृत्त्यर्थं ॥ १ ॥**

पुनर्वावचनं क्रियते लिङ्सिचोर्निवृत्त्यर्थम् ।

अथ किमर्थं सूतिसूयत्योः पृथग्ग्रहणं क्रियते ? सुवतेर्मा भूत् । अथ किमर्थं

---

प्र०— स्व०* । अथेति । इट्सनि वेत्यतः । लिङ्सिचोर्निवृत्त्यर्थमिति । ननु स्वरतिग्रहणाल्लिङ्सिचोरनुवृत्तिर्न भविष्यति अतश्च संयोगादेरितीड्विकल्पस्य सिद्धत्वात् । नैतदस्ति । नित्यार्थं स्वरतिग्रहणमित्यज्ञापकम्, लिङ्सिज्निवृत्तेः । अथ किमर्थमिति । सूग्रहणमेव क्रियतामिति भावः । सुवतेरिति । 'अननुबन्धकग्रहणे न सानुबन्धकस्येति' सुवतेरेव ग्रहणं स्यात् । सूङ्ग्रहणेऽपि क्रियमाणे 'लुग्विकरणालुग्विकरणोरलुग्विकरस्यैव ग्रहणमि'ति सूयतेरेव ग्रहणं स्यात् । अस्याश्च परिभाषायाः सूङ्ग्रहणे कर्तव्ये सूतिसूयतीति

---

उ०—व्याख्यातत्वात् । किंच समुदायस्य द्विःप्रयोगेऽपि न ग्रहित्वमुत्तरखण्डस्य तु कैयटरीत्या न तत्त्वम् । न चात्र पक्षे यङ्लुगन्तात्तृच इटि दीर्घो न स्यात्ततो यङ्लुक्सत्त्वे इतरमानाभावादनैमित्तिकलुकः पूर्वमेव प्रवृत्तत्वेन द्विःप्रयोगद्विर्वचनेन च ग्रहेरेवाङ्गत्वेनाक्षतेश्च । यङ्लोपे तु जरीगृह्यशब्दात्तृचि विशिष्टस्याङ्गत्वेऽल्लोपयलोपयोरेकदेशविकृतन्यायेन जरीगृहित्यस्यैवाङ्गत्वं न तु ग्रहेः । नच द्विःप्रयोगत्वाद्ग्रहिरेव सः । अङ्गसंज्ञाप्रवृत्तिकाले ग्रहिरूपत्वाभावात् । यङ्लुगन्ते तु तत्कालेऽपि तथैव । यत्तु हरदत्तेनैकाज्ग्रहणानुवृत्त्या यङ्लोपे दोषपरिहार उक्तः स तु यङ्लुक्यतिव्यापकत्वान्मानाभावाच्च हेय एव । यत्रेडार्धधातुकनिरूपिताङ्गसंज्ञाप्रवृत्तिवेलायां स्वतः स्थानिवद्भावेन वा ग्रहिरूपत्वं तत्र ग्रहेः परस्येटो दीर्घ इति यथाश्रुतरूपाश्रयणमिति कैयटस्यार्थः । अत एव गृहीतमित्यादिसिद्धिः । अन्यथाऽत्रेडपेक्षया नित्यत्वात्संप्रसारणे यथाश्रुतरूपाभावः स्पष्ट एवेति दिक् । वस्तुतस्तदन्तद्विर्वचनादिति भाष्यं तत्रोक्तसकलपरिहारोपलक्षणं बोध्यम् ।

स्वरतिसूति० । भाष्ये–लिङ्सिचोरिति । तत्सूत्रपरं तत्सूत्रानुवृत्तेर्निवृत्त्यर्थमित्यर्थः । अन्यथा परस्मैपदे सिचि विकल्पस्य चारितार्थ्येन अतश्च संयोगादेरितीड्विकल्पस्य सिद्धत्वादिति कैयटासंगतिः । नित्यार्थमिति । अत्र लिङ्सिच्सहितवाग्रहणानुवृत्तावपि लिङ्सिचोर्विकल्पे प्राप्ते स्वृग्रहणं संस्वृषीष्टेत्यादौ सामर्थ्यान्नित्यार्थमित्यादिग्रन्थः । वस्तुतस्त्वेवं सति सूत्रस्य वैरूप्यापत्तिस्तस्माल्लिङ्सिचोः परतः क्वचित्स्ये संस्वृषीष्टेत्यादौ पूर्वसूत्रस्य व्यवस्थितविभाषात्वबोधनद्वारेटो निवृत्त्यर्थं वाग्रहणमेवं च लिङ्सिचोरित्यस्य क्वचिद्विषये निवृत्त्यर्थमिति भाष्याक्षरार्थमाहुः । सुवतेरिति । षू प्रेरण इति हि निरनुबन्धः । षूङ् प्राणिगर्भविमोचन इत्यदादिः

---

+ ७. २. ४१. * ७. २. ४२

धूञः सानुबन्धकस्य ग्रहणं क्रियते ? धुवतेर्मा भूदिति ।

किं पुनरियं प्राप्ते विभाषाऽऽहोस्विदप्राप्ते ? कथं च प्राप्ते, कथं वाऽप्राप्ते ? यदि स्वरतिरुदात्तस्ततः प्राप्ते, अथानुदात्तस्ततोऽप्राप्ते ।

**स्वरतिरुदात्तः ॥ २ ॥**

स्वरतिरुदात्तः पठ्यते । किमर्थं तर्हि वावचनम् ?

**वावचनं निवृत्त्यर्थम् ॥ ३ ॥**

वावचनं क्रियते, निवृत्त्यर्थम् ।

**अनुदात्ते हि किति वाप्रसङ्गः प्रतिषिध्य पुनर्विधानात् ॥ ४ ॥**

अनुदात्ते हि सति किति विभाषा प्रसज्येत । स्वृत्वा । किं कारणम् ? प्रतिषिध्य पुनर्विधानात् । प्रतिषिध्य+ किलायं पुनर्विधीयते । स यथैवैकाज्लक्षणं× प्रतिषेधं बाधत एवं श्र्युकः किति [ ७. २. ११ ] इत्येतमपि बाधेत । यदि

प्र०–भेदेनोपादनमेव ज्ञापकम् । धूञ इति । 'धूञ् कम्पने' इति स्वादिषु क्र्यादिषु च पठ्यत इति द्वयोरपि सामान्येन ग्रहणम् । 'धू विधूनने' इत्यस्मात्तु नित्यमिड् भवति । किं पुनरिति । स्वरत्युद्देशेनायं विचारोऽन्येषां तूदात्तत्वात्प्राप्तविभाषाया निश्चयात्, दोषाभावाच्च । स्वरतेस्तूदात्तानुदात्तप्रतिज्ञाने दोषदर्शनाद्विचारः । ऋतां च वृङ्वृञा-विति परिगणनादस्योदात्तत्वं न प्रतिज्ञातम् । तत्र किमुदात्तत्वप्रतिज्ञानेन दोषः परि-ह्रियते, अथानुदात्तत्वप्रतिज्ञाने न्यायेनेति प्रश्नः । यदि स्वरतिरुदात्त इति । ननु किति प्रत्यये श्र्युकः कितीति प्रतिषेधात्तत्राप्राप्तविभाषेयं स्यात् । नैतदस्ति अल्पविषयत्वप्रसङ्गा-त्स्वरतेः प्राप्तविभाषायां तु महाविषयत्वं भवति । किमर्थमिति । यदि पक्ष इण्निवृत्त्यर्थं तदा ऋद्धनोः स्य इतीममपीटं पक्षे निवर्तयेदिति प्रश्नः । निवृत्त्यर्थमिति । निवृत्तिः कंचिदेव विधिं बाधते न सर्वमिति भावः । स विधिरिति । ऋद्धनोः स्य इत्येषः । अयं

उ०–पूङ् प्राणिप्रसव इति च दिवादिः सानुबन्धकौ । ज्ञापकमिति । न च साहचर्याल्लुग्-विकरणस्यैव भविष्यतीति वाच्यम् । तदनित्यत्वस्यापि ज्ञापनादिति भावः । न च लुग्विकरण-स्यैवेत्येव कुतो न ज्ञाप्यते । ज्ञापितेऽप्यस्य वैयर्थ्यापत्तेः । परिभाषाद्वयेनोभयोरपि ग्रहणस्य वक्तुं शक्यत्वात् । धू विधूनन इति कुटादिः । किमुदात्तत्वप्रतिज्ञानेन दोष इति । स्वृत्वेत्यादौ विकल्पप्रसङ्गरूप इत्यर्थः । न्यायेनेति । येन नाप्राप्तिन्यायेन पुरस्तात्प्रतिषेधकाण्डारम्भन्यायेन चेत्यर्थः । तत्राप्राप्तेति । भावतात्पर्यकतालोभेनेति भावः । महाविषयत्वमिति । व्याप्ति-न्यायानुग्रहाय साहचर्यानुग्रहाय च प्राप्तविभाषैव युक्तेत्यर्थः । वावचनस्य विकल्पार्थत्वाभिप्रा-यमाह—यदीति । कंचिदेवेति । वक्ष्यमाणेन न्यायेनेति भावः । नन्वस्य विकल्पत्वाप्रति-

+ ७. २. ११; × ७. २. १०.

तर्ह्युदात्तः स्वरतिः, पठिष्यति—विप्रतिषेधं स्वरतेर्वेड्त्वाद्धतः स्ये विप्रतिषेधेनेति× स विप्रतिषेधो नोपपद्यते। किं कारणम्? स विधिरयं प्रतिषेधो विधिप्रतिषेधयोश्चायुक्तो विप्रतिषेधः। सोऽपि विधिर्न मृदूनामिव कार्पासानां कृतः प्रतिषेधविषय आरभ्यते। स यथैवैकाज्लक्षणं प्रतिषेधं बाधत एवमिममपि बाधिष्यते। अथवा येन नाप्राप्ते तस्य बाधनं भवति न चाप्राप्ते वलादिलक्षण+ इयं विभाषाऽऽरभ्यते, स्वलक्षणे पुनः प्राप्ते चाप्राप्ते च। अथवा मध्येऽपवादाः पूर्वान्विधीन्बाधन्त इत्येवमियं विभाषा वलादिलक्षणमिटं बाधिष्यते, स्वलक्षणं न बाधिष्यते।

अथवा पुनरस्त्वनुदात्तः। ननु चोक्तमनुदात्ते हि किति वा प्रसङ्गः प्रतिषिध्य पुनर्विधानादिति? नैष दोषः। येन नाप्राप्ते तस्य बाधनं भवति न

---

प्र०—प्रतिषेध इति। प्राप्तविभाषापत्ते यथा वलादिलक्षण इट् प्रतिषिध्यते तथा स्वलक्षणोऽपि प्रतिषिध्येत। अनुदात्तप्रतिज्ञाने तु द्वयोरपि विधित्वाद्विप्रतिषेधोपपत्तिः। सोऽपीति। वैधर्म्येण दृष्टान्तो यथा मृदुकार्पासकृतो रज्ज्वादिर्दुर्बलो नैवम्। 'ऋद्धनोः स्ये' इत्ययं विधिः। स यथैवेति। करिष्यतीत्यादौ। एवमिममपीति। न च स्वरतेरुदात्तत्वे येन नाप्राप्तिन्यायोऽस्ति येनैकाज्लक्षणमेव प्रतिषेधं बाधेत न स्वरतिलक्षणम्। यद्येवं विप्रतिषेधानुपपत्तिः, स्वलक्षणस्य विधेरपवादत्वात्। अन्यथाऽपीष्टस्य सिद्धत्वान्नोपपादि विप्रतिषेधः। अथवा स विधिरयं प्रतिषेध इति विधेर्दुर्बलत्वं यदुक्तं तदनेन निराकृतम्। तत्र द्वयोस्तुल्यबलत्वादुपपद्यते विप्रतिषेधः। अथवेति। परिभाषाश्रयणादुत्सर्गापवादभावेऽपनीते द्वयोर्विप्रतिषेधोपपत्तौ परत्वेन व्यवस्था। उदात्तत्वे दोषं प्रतिविधायानुदात्तत्वे प्रतिविधत्ते। अथवेति। न चाप्राप्त एकाज्लक्षण इति। अयमेव

---

उ०—षेधोक्तिरसंगतेत्यत आह—प्राप्तविभाषेति। प्रतिषिध्येतेति। निषेधाश्च बलीयांस इति न्यायादिति भावः। कार्पासकृत इति। भाष्ये षष्ठी तु करणस्य शेषत्वविवक्षया बोध्या। न्यायोऽस्तीति। स्वरतावुदात्तत्वपक्ष एकाज्लक्षणनिषेधाप्राप्तेरिति भावः। स्वलक्षणस्येति। एवं चोत्सर्गापवादयोरयुक्तो विप्रतिषेध इत्यर्थः। एवं च "स्वरतेर्वेड्त्वाद्धतः स्ये विप्रतिषेधेनेत्युक्तविप्रतिषेधासंगतिरिति भावः। अन्यथाऽपीति। इष्टसिद्धिरेव प्रार्थनीया सा स्वपवादत्वादेव सिद्धेति किं विप्रतिषेधेनेत्यर्थः। एवं हि विप्रतिषेधवार्तिकं विरुध्येतेत्यत आह—अथवेति। तदनेनेति। न स्वपवादत्वमुक्तमिति भावः। स्वलक्षणापवादाः करिष्यतीति। एतदपवादाः स्मर्ता स्वरितेति। एवं चेममपि बाधिष्यत इत्यत्र परत्वादिति शेषः। परिभाषाश्रयणादिति। येन नाप्राप्त इति, मध्येऽपवादा इति चेत्यर्थः। बलादिमात्रेति।

---

× ७. २. ७०. + ७. २. ४५.

चाप्राप्त एकाज्लक्षणे प्रतिषेध इयं विभाषाऽऽरम्यते श्र्युकः कितीत्येतस्मिन्पुनः प्राप्ते चाप्राप्ते च । अथवा श्र्युकः कितीत्येष योग उदात्तार्थश्च, येभ्यश्चानुदात्तेभ्य इट् प्राप्यते तद्बाधनार्थश्च । अथवा श्र्युकः कितीतीहानुवर्तिष्यते । अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति नेयं विभाषोग्लक्षणस्य प्रतिषेधस्य विषये भवतीति यदयं सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् [७.२.४९] इति स्वृग्रहणं करोति* ।

**इण्निष्ठायाम् ॥ ७ । २ । ४७ ॥**

इडिति× वर्तमाने पुनरिड्ग्रहणं किमर्थम् ?

**इड्ग्रहणं नित्यार्थम् ॥ १ ॥**

नित्यार्थोऽयमारम्भः । नैतदस्ति प्रयोजनम् ? सिद्धाऽत्र विभाषा पूर्वेणैव+ तत्राऽऽरम्भसामर्थ्यान्नित्यो विधिर्भविष्यति । नात्र पूर्वेण विभाषा प्राप्नोति । किं कारणम् ? यस्य विभाषा [ ७. २. १५ ] इति प्रतिषेधात् । तत्राऽऽरम्भसामर्थ्याद्विभाषा लभ्येत, पुनरिड्ग्रहणादिडेव भवति ।

**तीषसहलुभरुषरिषः ॥ ७ । २ । ४८ ॥**

---

प्र०–पाठो युक्तः । केचित्तु वलादिलक्षण इति पठन्ति । वलादिमात्रविषयत्वाद्वलादिलक्षणमिति व्याचक्षते । श्र्युकः कितीत्येतस्मिन्निति । तत्र स्नुत्वेत्यत्रोभयप्रसङ्गे पूर्वविप्रतिषेधो भवतीति वक्तव्यम् । येभ्यश्चानुदात्तेभ्य इति । प्रतिषेधकाण्डस्य पुरस्तात्करणस्य सर्वेट्प्रतिषेधार्थत्वात् । यदयमिति । यद्युग्लक्षणं प्रतिषेधमयं विकल्पो बाधेत ततः सनि ग्रहगुहोश्चेत्यस्य प्रतिषेधस्याभावादनेनैव सनि विकल्पस्य सिद्धत्वात्पुनस्तन्न विदध्यात् ।

इण्नि० । सिद्धेति । निरः कुष इत्यनेन ।

तीष० । इषु इच्छायामिति केचित्तौदादिकमुदितमधीयते । अन्ये तूदित्वस्य

---

उ०–अयं तु कित्वलक्षणोऽपीति भावः । वलादिमात्रविषयत्वेन वलादिलक्षणशब्दस्यैकाजलक्षणेलक्षणापरत्याऽयं पाठो न युक्तः । पूर्वविप्रतिषेध इति । एवं च पूर्वविप्रतिषेधेन निषेधो भवतीति भाष्यं वाक्यशेषाध्याहारेण व्याख्येयमिति भावः । अत्र पक्षे पूर्वविप्रतिषेधाश्रयणे गौरवात्समाध्यन्तरमेवाऽऽह—अथवेति । इदमेव मुख्यं समाधानम् ।

इण्निष्ठायाम् । भाष्ये—आरम्भसामर्थ्याद्विभाषा लभ्येत इति । विप्रतिषेधबाधनद्वारेति भावः । नन्वेवं निरः कुषोऽनिष्ठायामित्येव सूत्रमस्तु । यस्य विभाषेत्यस्य प्राप्त्या निष्ठायां विकल्पप्राप्तेरनिष्ठायामित्यस्य वैयर्थ्यापत्तेः । सामर्थ्येनाऽऽनुमानिकवचनकल्पने तु न किंचिल्लाघवम् । पर्युदासेन कृत्येव विकल्प इति शङ्कावारणार्थं तदित्याहुः ।

तीषसह० । केचिदिति । वामनादयः । अपश्यन्त इति । न च 'उदितो वा' इति

---

* ७. २. १२. × ७. २. ४१. + ७. २. ४९.

**इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः ॥ १ ॥**

इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधो वक्तव्यः । इह मा भूत्—प्रेषिता प्रेषितुम् प्रेषितव्यम् ।

**वसतिक्षुधोरिट् ॥ ७ । २ । ५२ ॥**

इडिति+ वर्तमाने पुनरिड्ग्रहणं किमर्थम् ?

**पुनरिड्ग्रहणं नित्यार्थम् ॥ १ ॥**

इडिति वर्तमाने पुनरिड्ग्रहणं क्रियते, नित्यार्थम् । नित्यार्थोऽयमारम्भः ।

**गमेरिट्परस्मैपदेषु ॥ ७ । २ । ५८ ॥**

**गमेरिट्परस्मैपदेषु चेत्कृत्युपसंख्यानम् ॥ १ ॥**

गमेरिट्परस्मैपदेषु चेत्कृत्युपसंख्यानं कर्तव्यम् । जिगमिषिता जिगमिषितुम् जिगमिषितव्यम् । तत्तर्ह्युपसंख्यानं कर्तव्यम् ? न कर्तव्यम् । अविशेषेण गमेरिडागममुक्त्वाऽऽत्मनेपदपरे नेति वक्ष्यामि ।

**आत्मनेपदपरप्रतिषेध उक्तम् ॥ २ ॥**

किमुक्तम् ? आत्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषु प्रतिषेध इति× । इहाप्यात्मनेपदपरप्रतिषेधे तत्परपरसीयुडेकादेशेषु प्रतिषेधो वक्तव्यः । तत्परपरे तावत्—संजिगंसिष्यते । सीयुटि—संगंसीष्ट । एकादेशे—संगंस्यन्ते । एकादेशे कृते व्यपवर्गाभावान्न प्राप्नोति ।

**सिद्धं तु गमेरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात् ॥ ३ ॥**

---

प्र०—प्रयोजनमपश्यन्त इष इच्छायामिति पठन्ति । ये त्विह तीषुसहेति पठन्ति तन्मतेनेह विशेषणार्थ उकारः । तत्र वार्तिककारमतेन त्रयोऽपीषयोऽननुबन्धका इह न तीषसहेति पाठस्तदाह—इषेरिति । 'इष आभीक्ष्ण्ये' इत्यस्य क्रैयादिकस्य तु विकल्पमिच्छति वार्तिककारः । तौदादिकस्य तूदित्त्वेऽभ्युपगम्यमाने तीषसहेति पाठेऽननुबन्धकपरिभाषया क्रैयादिकस्यैव ग्रहणं स्यात् । इह मा भूदिति । विकल्पः । तेनेष गतावित्यस्मात्तकारादौ नित्यमिड् भवति ।

गमे० । सिद्धं त्विति । इह तु जिगमिषितवाऽऽचरति जिगमिषित्रीयत इति

---

उ०—त्यम् । अस्य इड्विकल्पस्यानेनैव सिद्धत्वादिति भावः । तन्मतेनेति । यथादेर्विकल्पामिष्ट्याऽयं पाठो न युक्तः । क्रैयादिकस्यैवेति । न तु तौदादिकस्येत्यर्थः । तस्मात्तौदादिकस्योदित्पाठो न युक्तः ।

गमेरिट्० । सिद्धं त्विति । सूत्रस्थपरस्मैपदग्रहणं फलोपहितात्मनेपदनिमित्तत्वाभावोपलक्षणम् । तेन संजिगमिषितेत्यादौ तृजन्त इट् सिद्धिरिति बोध्यम् । बहिरङ्गत्वादिति ।

---

+ ७. २. ४७. × ७. २. १६.

सिद्धमेतत् । कथम् ? गमेरात्मनेपदेन समानपदस्थस्येण्न भवतीति वक्तव्यम् ।

**न वृद्भ्यश्चतुर्भ्यः ॥ ७ । २ । ५९ ॥**

**वृतादिप्रतिषेधे च ॥ १ ॥**

किम् ? कृत्युपसंख्यानं कर्तव्यम् । विवृत्सिता विवृत्सितुम् विवृत्सितव्यम् । तत्तर्ह्युपसंख्यानं कर्तव्यम् ? न कर्तव्यम् । अविशेषेण वृतादिभ्य इट्प्रतिषेधमुक्त्वाऽऽत्मनेपदपर इड् भवतीति वक्ष्यामि ।

**आत्मनेपदपर इड्वचने तत्परपरसीयुडेकादेशेष्विड्वचनम् ॥२॥**

आत्मनेपदपर इड्वचने तत्परपरसीयुडेकादेशेष्विड् वक्तव्यः । तत्परपरे तावत्--विवर्तिषिष्यते । सीयुटि--वर्तिषीष्ट । एकादेशे--वर्तिष्यन्ते वर्धिष्यन्ते ।

**सिद्धं तु वृतादीनामात्मनेपदेन समानपदस्थस्येड्वचनात् ॥ ३ ॥**

सिद्धमेतत् । कथम् ? वृतादीनामात्मनेपदेन समानपदस्थस्येड् भवतीति वक्तव्यम् ।

**चतुस्तासिक्लृपिग्रहणानर्थक्यं च ॥ ४ ॥**

चतुर्ग्रहणं चानर्थकं, सर्वेभ्यो हि वृतादिभ्यः प्रतिषेध इष्यते । तासिग्रहणं* चानर्थकम् । किं कारणम् ?

---

प्र०-बहिरङ्गत्वादात्मनेपदस्य प्रतिषेधाभावः । केचित्तु योगविभागेनेष्टसिद्धिमाहुः । गमेः सकारादाविड् भवतीत्येको योगः । ततः परस्मैपदेष्विति द्वितीयो योगो नियमार्थः । तुल्यजातीयापेक्षत्वाच्च नियमस्याऽऽत्मनेपदविषय एवेण्निवर्त्यत इति कृति परस्मैपदलुकि चेड् भवत्येव जिगमिषितुम् । जिगमिषितव्यम् । जिगमिषत्वमिति ।

न वृद्भ्यश्चतुर्भ्यः । सिद्धं त्विति । तेन परस्मैपदलुक्यपि प्रतिषेधो भवति--विवृत्सत्वमिति । अन्यथा न लुमताऽङ्गस्येति प्रत्ययलक्षणप्रतिषेधः स्यात् । विवृत्सिष्यत इत्यत्र तु पूर्वपदात्मनेपदस्य बहिरङ्गत्वादिडभावः । चतुर्ग्रहणं चेति । क्लृपू

---

उ०-वार्तिकेऽन्तरङ्गत्वाद्गमिनिमित्तात्मनेपदस्यैव ग्रहणमिति भावः । नियमार्थ इति । परस्मैपद एवेति नियमार्थ इति भावः । तदाह--तुल्येति । परस्मैपदलुकि चेति । परस्मैपदे पर इत्यर्थे न लुमतेति निषेधेन तत्परत्वाभावान्न स्यादिडिति भावः । यद्यप्यङ्गस्येत्यस्यानुवृत्तस्याऽऽर्धधातुकस्येत्यादावङ्गनिमित्तस्येत्यर्थस्य क्लृप्ततया गमेः परस्याङ्गनिमित्तस्य सादेरार्धधातुकस्येत्यर्थादिण्निरूपिताङ्गस्यात्रोद्देश्यकोटौ प्रवेशाभावेन न लुमतेत्यस्य न प्राप्तिस्तथाऽपि परस्मैपदस्य प्रत्ययतया तदाक्षिप्ताङ्ग एव तत्प्रवृत्त्या प्रत्यये परतः पूर्वकार्यसत्त्वेन न स्यादेव निषेध इति भावः । भाष्ये--कृतीत्युपलक्षणं बोध्यम् ।

न वृद्भ्यः० । सिद्धं त्विति । अत्रापि परस्मैपदग्रहणं फलोपहितात्मनेपदनिमित्तत्वा-

---

* ७. २. ६०.

**निवृत्तत्वात्सकारस्य ॥ ५ ॥**

निवृत्तं सकारादाविति÷। तास्ग्रहणे चेदानीमक्रियमाणे क्लृपिग्रहणेनापि* नार्थः। एषोऽपि हि वृतादिः पञ्चमः। भवेत्क्लृपिग्रहणं न कर्तव्यं तास्ग्रहणं तु कर्तव्यम्। यद्धि तत्सकारादाविति न तच्छक्यं निवर्तयितुं तृच्यपि हि प्रसज्येत—वर्तिता वर्धिता। तास्ग्रहणे चेदानीं क्रियमाणे क्लृपिग्रहणमपि कर्तव्यमन्येभ्योऽपि वृतादिभ्यस्तासौ मा भूदिति। भवेत्तास्ग्रहणं कर्तव्यं क्लृपिग्रहणं तु नैव कर्तव्यम्। अन्येभ्योऽपि वृतादिभ्यस्तासौ कस्मान्न भवति? परस्मैपदेष्विति* वर्तते, क्लृपेरेव च तासरस्मैपदपरो नान्येभ्यो वृतादिभ्यः। यद्येवं तास्ग्रहणेनापि नार्थः। तृचि कस्मान्न भवति? परस्मैपदेष्विति वर्तते।

प्र०—सामर्थ्ये इत्यस्यानन्तरं वृत्करणं पठ्यते तद् द्युतादीनां वृतादीनां च समाप्त्यर्थं भविष्यति। एकस्यानेकप्रयोजनाविरोधात्। सर्वेभ्य इति। संकल्प्स्यतीत्यादौ क्लृपेरपीत्यर्थः। भवेत्तास्ग्रहणमिति। क्लृपिग्रहणाकरणपरमेतन्नतु तासिग्रहणपरम्। तथा चास्यापि प्रत्याख्यानं करिष्यते। परस्मैपदेष्विति वर्तते इति। वृतादीनामनुदात्तेत्त्वात्स्यसनौ विहाय क्लृपेस्तासिं चाऽऽर्धधातुकं वलादिपरस्मैपदपरं नास्ति।

उ०—भावलक्षकमित्यादि प्राग्वत्। समाप्त्यर्थमिति। एवं चेह चतुर्ग्रहणमुत्तरसूत्रं च न कर्तव्यमित्यर्थः। संकल्प्स्यतीति। तासि चेति चेन सादेरप्यनुकर्षणादिति भावः। एवं च चतुर्ग्रहणाभावे तासि चेति चोऽपि व्यर्थ इति तात्पर्यम्। भाष्ये—निवृत्तं सकारादाविति। न वृद्भ्य इति सूत्र एवेत्यर्थः। अत एव वक्ष्यति तन्निवृत्तौ वर्तितेत्यादावपि प्राप्नोतीति। परस्मैपदेष्वित्यनुवर्तमाने कथमन्येभ्यस्तासि निवृत्तिस्तत्राह—वृतादीनामिति। तासिं चाऽऽर्धधातुकमित्यत्र विहायेति शेषः। वृद्भ्यः स्यसनोर्लुटि च क्लृप इति परस्मैपदं स्यादिविषये विकल्पेन विधीयत इति तत्रनेटः प्रतिषेध इति परस्मैपदग्रहणानुवृत्तौ चतुर्ग्रहणं तासि च क्लृप इति सूत्रं च न कार्यमिति भावः। न च स्यन्स्यतीत्यादावुदिल्लक्षणविकल्पबाधनार्थं चतुर्ग्रहणम्। तत्र हि सति तत्सामर्थ्यात्पुनर्विधानकल्पनद्वारा प्रत्येकं निषेधव्यापारबोधनद्वारा वा तस्यापि निषेध इति वाच्यम्। न वृद्भ्य इत्यनेन परत्वात्तद्बाधसिद्धेः। निषेधाश्च बलीयांस इति न्यायाच्च। न चैवमपि विवृत्सितेत्यनुरोधेन परस्मैपदस्य फलोपहितात्मनेपदनिमित्तत्वाभावोपलक्षणत्वावश्यकत्वेन वर्तितेत्यादावतिव्याप्तिवारणाय तत्र सादेरित्यनुवृत्त्यावश्यकतया तासि चेत्यावश्यकमिति वाच्यम्। इष्टापत्तेः। अत एव पूर्वं भवेत्तास्ग्रहणं कर्तव्यं क्लृपिग्रहणं तु नैव कर्तव्यमिति भाष्य उक्तम्। यद्येवं तास्ग्रहणेनार्थ इति भाष्यं तृचीत्याद्येकदेश्युक्तिरिति

÷ ७. १. ५७. ७. २. ६०. * ७. २. ५८.

## उपदेशेऽत्वतः ॥ ७ । २ । ६२ ॥

**तासावत्वत्प्रतिषेधे घसेः प्रतिषेधप्रसङ्गोऽकारवत्त्वात् ॥ १ ॥**

तासावत्वत्प्रतिषेधे घसेः प्रतिषेधः प्राप्नोति—जघसिथ+। किं कारणम् ? अकारवत्त्वात् । सोऽपि ह्यकारवान् ।

**सिद्धं तु हलादिग्रहणात् ॥ २ ॥**

सिद्धमेतत् । कथम् ? हलादिग्रहणं कर्तव्यम् । तच्चावश्यं कर्तव्यम् । अत्यशी प्रयोजयतः । अत्यशी तावन्न प्रयोजयतः । किं कारणम् ? तासावनिट इत्युच्यते, सेटौ चेमौ तासौ । अञ्ज्वशू तर्हि प्रयोजयतः । अञ्ज्वशू चापि न प्रयोजयतः । किं कारणम् ? तासौ नित्यानिट इत्युच्यते विभाषितेटौ चैतौ* । आदिस्तर्हि प्रयोजयति—आदिथ । क्रियमाणेऽपि वै हलादिग्रहणेऽत्र प्राप्नोति—जघसिथ । एषोऽपि हलादिः ।

**तस्य चाभावात्तासौ ॥ ३ ॥**

---

प्र०-एतच्च यथान्यासाश्रयेणोच्यते। यदा त्वात्मनेपदेन समानपदस्थस्येड् भवतीत्युच्यते तदा परस्मैपदेष्विति नानुवर्त्यमिति । स इत्येतदनुवर्त्यम् । तस्मिन्ननुवर्तमाने तासि चेत्यपि कर्तव्यम्। क्लृप इत्येतत्तु न कर्तव्यम्। क्लृपेरन्येभ्यो वृतादिभ्यस्तासेरात्मनेपदपरत्वादिटोऽभावात्।

उपदेशे० । तासावति । तासाविडभावे सत्यत्वतस्थलि प्रतिषेधे विधीयमान इत्यर्थः । सिद्धं त्विति । उपदेशग्रहणेन द्वयं संबध्यत—उपदेशे योऽत्वान् हलादिश्चेति । नच घसिराद्युपदेशे हलादिः । अञ्ज्वशू तर्हीति । अशू व्याप्तावित्यस्यानुदात्तेत्त्वात्थलभावादुपन्यासोऽयुक्तः । क्रियमाणेऽपीति । यद्यपि स्थान्युपदेशे घसिर्हलादिर्न भवति तथाऽपि स्वोपदेशे हलादिरेव । तस्य चाभावादिति । उपमाने दृष्टानां

---

उ०-बोध्यम् । तद्ध्वनयन्नाह—एतच्चेति । स इत्येतदिति । परस्मैपदग्रहणस्योक्तार्थोपलक्षणत्वाभावे चेत्येतदपि द्रष्टव्यम् ।

उपदेशेऽत्वतः । ननु हलादिग्रहणेऽपि घसेः प्रतिषेधः प्राप्नोत्येवेत्यत आह—उपदेशग्रहणेनेति । न च घसिरिति । उपदेशत्वावच्छेदेन यो हलादिरित्यर्थः । आद्युपदेश इति । आद्य उपदेश इत्यर्थः । आदिश्चासावुपदेशश्चेति विग्रहः । अद्युपदेश इति पाठस्तु सुगम एव । अनुदात्तेत्त्वादिति । वस्तुतस्तु भाष्यप्रामाण्येनास्याप्यनुदात्तेत्त्वाभावसम्पाश्रित्य परस्मैपदं थलस्त्येवेति बोध्यम् । भाष्ये—आदिथेति । केचित्त्विडत्यर्तिव्ययतीनामिति नित्यमेव सिद्धेऽत्र

तासावनिट इत्युच्यते न च घसिस्तासावस्ति । ननु च यस्तासौ नास्त्यनिडप्यसौ तासौ भवति । नैवं विज्ञायते-यस्तासावनिडिति । कथं तर्हि ? यस्तासावस्त्यनिट् चेति । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? सप्तम्यर्थेऽपि वै वतिर्भवति । तद्यथा—मथुरायामिव मथुरावत् । पाटलिपुत्र इव पाटलिपुत्रवत् । एवं तासाविव तास्वत् ।

प्र०–धर्माणामुपमेये भूतानां भाविनां वा संप्रत्ययः । तत्र तास्वत्थलि नेड् भवतीत्युच्यमाने यदि घसिस्तासौ स्यात्ततस्थलि प्रतिषेधोऽतिदिश्येत । यतस्तु तासौ नास्ति ततोऽस्य तासावनिट्त्वमशक्यं प्रतिपत्तुमिति थल्यतिदेशो न प्रवर्तते । अनिडप्यसाविति । असत्त्वादेवेडभावात् । सप्तम्यर्थं इति । तासाविव तास्वदित्यौपश्लेषिकमधिकरणमाश्रीयते, तासौ परतः पूर्वस्य यथेण्न भवति तथा थल्यपीत्यर्थः । ननु चास्य स्थान्यदिस्तासावस्ति स चानिट् चेति तदादेशस्यापि स्थानिवद्भावात्सत्त्वानिट्त्वे स्याताम् । नैतदस्ति । स्थानिवद्भावः शास्त्रीयेष्वेव कार्येषु प्रवर्तते । नच तासौ सत्त्वं शास्त्रीयं कार्यम् । अत एव वयेस्थल्युवयिथेति प्रतिषेधाभावः । क्रमेरपि चक्रमिथेति भाष्यम् । नहि तासौ नित्यानिट् क्रमिः । आत्मनेपद इडभावात्परस्मैपदे सेट्त्वात् ।

उ०–हलादेरित्यस्य प्रयोजनं चिन्त्यमित्याहुः । तत्रादग्रहणं न कार्यमिति भाष्याशयमन्ये । तथाऽपि स्वोपदेश इति । अस्योपदेशग्रहणस्याचस्तास्वदित्यत्राप्यपकर्षणेन तत्र चक्षिङः ख्याञादेशोऽजेर्व्यादेशो च चख्याथ विवेथेत्यादिसिद्धय उपदेशत्वसामानाधिकरण्येनैवान्वयाय-[illegible]स्यापकर्षेणात्रापि तथैवान्वय उचितः । स्वोपदेश एव च मुख्य इति स एवाऽऽश्रीयते न स्थान्युपदेश इति भावः । ननु घसेस्तासावभावेऽप्यसत्त्वादेव तस्य तत्रेडभावोऽप्यस्तीत्यत आह—उपमान इति । यथोशीनरवन्मद्रेषु यवाः संपन्नाः संपत्स्यन्त इति । । । । : । सर्वधोपमाने दर्शनमवश्याश्रयणीयमिति भावः । अशक्यं प्रतिपत्तुमिति । स्थानिवत्त्वं तु न । अशास्त्रीयत्वादिति भावः । एतदभिप्रायमजानतः । प्रश्नो भाष्ये—ननु च यस्तासाविति । तासौ परतः पूर्वस्येति । तास्परधातोः परस्य वलाद्यार्धधातुकस्यार्थात्तासरूपस्यैव यथेण् न भवति तथेत्यर्थः । तासौ परतः पूर्वस्य धातोर्यथेट् इडनिमित्तत्वं न भवति तथेत्यक्षरार्थः । शास्त्रीयेष्विति । अभ्यासचेः । न चेति । लौकिकत्वात् । वयेरिति । वेञो वयिरिति लिटि वयादेशः । प्रतिषेधाभावाच्च क्रादिनियमान्नित्यमिड् भवति । नहि तासाविति । अनिट इत्यत्रापि अभ्यासस्य तासावित्यस्याप्यपेक्षत इति बोध्यम् । अजन्तस्य धातोः प्रयोगमात्रा-[illegible] [illegible] अनिडित्यभावाद्दोषोदयात् । एवं चाजेरित्यस्यापि स्नुक्रमोरिति नियमेन पक्षभेदेन विभाषितेट्त्वेन नित्यानिट्त्वाभावान्न प्रतिषेध इति भावः ।

## ऋतो भारद्वाजस्य ॥ ७ । २ । ६३ ॥

किमर्थमिदमुच्यते नाचस्तास्वत्थल्यनिटो नित्यम् [ ७. २. ६१ ] इत्येव सिद्धम् ? एवं तर्हि नियमार्थोऽयमारम्भः । ऋत एव भारद्वाजस्य नान्यतो भारद्वाजस्येति । क्व मा भूत् ? ययिथ ववियेति ।

**ऋतो भारद्वाजस्येति नियमानुपपत्तिरप्राप्तत्वात्प्रतिषेधस्य ॥ १ ॥**

ऋतो भारद्वाजस्येति नियमानुपपत्तिः । किं कारणम् ? अप्राप्तत्वात्प्रतिषेधस्य । गुणे कृते रपरत्वे चानजन्तत्वात्प्रतिषेधो न प्राप्नोति । असति नियमे को दोषः ?

**तत्र पचादिभ्य इड्वचनम् ॥ २ ॥**

तत्र पचादिभ्य इड् वक्तव्यः—पेचिथ शेकिथेति । यदि पुनरयं भारद्वाजः पुरस्तादपकृष्येत—अचस्तास्वत्थल्यनिटो नित्यं भारद्वाजस्य । उपदेशेऽत्वतो भारद्वाजस्य । तत ऋतः । भारद्वाजस्येति निवृत्तम् । सिध्यत्येवमयं तु भारद्वाजः स्वस्मान्मतात्प्रच्यावितो भवति । एवं तर्हि—

---

प्र०- ऋतो० । गुणे कृत इति । जहर्थेत्यादौ नह्ययमजन्तो नाप्युपदेशेऽत्वान् । असति नियम इति । जहर्थेत्यादाविट्प्रतिषेधार्थ एव योगोऽस्त्विति भावः । तत्र पचादिभ्य इति । पूर्वयोगाभ्यां पचादिभ्यस्थलि नित्ये प्रतिषेधे प्राप्ते पक्ष इड्विधेयः । जहर्थेत्यादौ च नित्यः प्रतिषेध इष्यते । तत्र भारद्वाजस्येति वचनात्स्मृत्यन्तरानुसंधानाद्विकल्पः प्राप्नोति । नियमफलमन्यथोपपादयितुमाह—यदि पुनरिति । पूर्वयोगे भारद्वाजग्रहणं कृत्वा तदेव द्वितीये योगेऽनुवर्त्यते । स्वस्मान्मतादिति । भारद्वाजस्य मतम्—पेचिथ पपिथेतीट् भवत्येव । अन्येषां तु मतं पपक्थ पपाथेतीडभावः । न्यास-

---

उ०- ऋतो भार० । भाष्ये—नाचस्तास्वदिति । न च ऋकारान्ते विकल्पेन निषेधार्थमिदं सूत्रमिति वाच्यम् । भारद्वाजातिरिक्तैरप्यचस्तास्वदिति सामान्यसूत्रप्रणयनेन निषेधस्यैवाङ्गीकृतत्वेन स्मृत्यन्तरानुसंधानद्वारेण विकल्पस्य वक्तुमशक्यत्वादिति भावः । भाष्ये पेचिथेत्युपलक्षणं पपिथेत्यादेरपि तदाह—पूर्वयोगाभ्यामिति । नियमपक्षे हि तास्वत्थल्यनिटो नित्यमित्यनुवर्त्यं योऽयं तासौ नित्यानिटस्थलीण्निषेधः स भारद्वाजमते ऋकारान्तस्यैव नान्यस्य भारद्वाजमत इत्यर्थात् । उभयोरपि नियमाङ्गीकारादिति भावः । इदं चाचस्तास्वदिति सिद्धे नियम इत्युपक्रम उक्तेस्तत्र पचादिभ्य इड्वचनमित्युक्तेश्च विज्ञायते । एतेन सजातीयत्वादृकारान्ते तस्यैव प्राप्तेश्चाचस्तास्वदित्यस्यैव नियम इत्यपास्तम् । स्वयं दोषान्तरमप्याह—जहर्थेत्यादौ चेति । अचस्तास्वदित्यस्याप्राप्त्या पूर्वोक्तयुक्त्या विकल्पासंभवस्य वक्तुमशक्यत्वादिति भावः । अत्रत्यं भारद्वाजग्रहणं कथं व्यवहितपूर्वयोगेऽपकर्षेण संबध्येतेत्यत आह—पूर्वयोग इति । मतविपर्यय इति । भारद्वाजस्येडभावोऽन्यस्येडित्याकारः । ननु चेति ।

**योगविभागात्सिद्धम् ॥ ३ ॥**

योगविभागः करिष्यते+ । अचस्तास्वत्थल्यनिटो नित्यमुपदेशे । ततोऽत्वतः । अत्वतश्चोपदेश इति ।

**बभूथाऽऽततन्थ जगृभ्म ववर्थेति निगमे ॥ ७ । २ । ६४ ॥**

वृग्रहणं किमर्थं न कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि [ ७. २. १३ ] इत्येव सिद्धम् । एवं तर्हि नियमार्थोऽयमारम्भः । निगम एव यथा स्यात् । क मा भूत् ? ववरिथ ।

प्र०–विपर्यये तु मतविपर्ययः प्रदर्शितः स्यात् । ननु च नित्येषु शब्देषु विकल्पिते विधौ विकल्पमात्रं प्रदर्शयितव्यम् । तत्र कस्य किं मतं यत्प्रख्यापितं स्यात् । उच्यते—विकल्पप्रतिपादनाय वाग्रहण एव कर्तव्ये पूजार्थमाचार्या उपादीयन्ते । सा चैवं पूजा भवति—यदि येनाऽऽचार्येण यः शब्दः स्मृतः स तेनैव स्मृतत्वेनोपदिश्यते । एवं हि तस्य स्मर्तृत्वेन प्रमाणत्वेन स्तुतिः कृता भवत्येवं चाङ्गार्ग्यगालवयोरित्यादावनेकाचार्योपादानमर्थवद्भवति । विकल्पस्यैकाचार्योपादानेनापि सिद्धत्वात् । योगविभाग इति । ततश्च ह्रस्वादीनां गुणरपरत्वयोरनजन्तत्वेऽप्युपदेशेऽजन्तत्वात्सिद्धे प्रतिषेधेऽस्य नियमार्थत्वोपपत्तिः । आदेशोपदेशोऽप्याश्रीयते न तु स्थान्युपदेश एवेत्यजत्यादेशस्य वीशब्दस्य चक्षिङादेशस्य च ख्यो विकल्पस्थलि भवति—विवेथ विवयिथ । आचख्याथ, आचख्यिथ ।

बभूथाऽऽततन्थ० । वृग्रहणमिति । एकदेशाक्षेपद्वारेण ववर्थशब्दसमुदाय एवाऽऽक्षिप्यते ।

उ०–विकल्पप्रतिपादनमात्रफलत्वादाचार्यग्रहणस्येति भावः । ततश्चेति । योगविभागद्वारा चोपदेशग्रहणापकर्षः कार्य इति बोध्यते । अत एव सूत्रेऽज्ग्रहणं चरितार्थम् । नन्वेजन्तानामात्वविधानात्तेषामसंभवेनाग्रहणमेव कार्यं तत्राकारमात्रग्रहणे कार्ये प्रत्याहारग्रहणसामर्थ्यादिकारार्थदो भूतपूर्वगतिराश्रयिष्यत इति सूत्रस्याच्पदमुपदेशग्रहणापकर्षश्च वृथेति चेन्न । प्रत्याहारग्रहणेनोपदेशपदापकर्षणस्यापि वक्तुं शक्यत्वेन भूतपूर्वगत्याश्रयणे दृढतरमानाभाव इत्याशयात् । तदपकर्षे च धेटो दधिथेत्यादिसिद्ध्येऽच्ग्रहणमप्यावश्यकमेवेति दिक् । ननु स्थान्युपदेश एवेति । यस्य यो मुख्य उपदेशस्तस्य स एवाऽऽश्रीयते तदभावे तु गौणोऽपीत्यर्थः । यद्यपि स्थान्युपदेशग्रहणेऽप्युपदेशेऽच्त्वमस्ति तथापि तदुपदेशे तासौ नित्यानिट्त्वाभावः प्रत्यासत्त्या यदुपदेशेऽजन्तस्तदुपदेशविशिष्टस्यैव तासौ नित्यानिट्त्वग्रहणमुचितमिति भावः । गुणोऽर्तीत्यादौ [illegible] पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादस्यापि क्रादिनियमेन निषेध इति नेष्यतीत्यत्र भाष्य उक्तम् ।

बभूथाऽऽत० । भाष्ये–वृग्रहणं किमर्थमिति । भूविषये तु न दर्शितम् । उकारान्तानां

+ ७. २. ११.

## वस्वेकाजाद्घसाम् ॥ ७ । २ । ६७ ॥

किमर्थमिदमुच्यते ?

**वस्वेकाजाद्घसां वचनं नियमार्थम् ॥ १ ॥**

नियमार्थोऽयमारम्भः । वसावेकाजाद्घसामेव । क मा भूत् ? बिभिद्वान् । किमुच्यते नियमार्थमिति न पुनर्विध्यर्थोऽपि स्यात् । प्रतिषेधोऽपि ह्यत्र प्राप्नोति नेड् वशि कृति [ ७. २. ८ ] इति । कृच्चैव ह्ययं वशादिश्च । एवं तर्हि कृसभृवृस्तुद्रुस्रुश्रुवो लिटि [ ७. २. १३ ] इत्येतस्मान्नियमादत्रेड् भविष्यति । नात्र तेन परिप्रापणं प्राप्नोति । किं कारणम् ? प्रकृतिलक्षणस्य* प्रतिषेधस्य स प्रत्यारम्भः प्रत्ययलक्षणश्चायं प्रतिषेधः । उभयोः स प्रत्यारम्भः । कथं ज्ञायते ? वृङ्वृञोर्ग्रहणात् । कथं कृत्वा ज्ञापकम् ? इमौ वृङ्वृञावुदात्तौ तयोः प्रकृतिलक्षणः प्रतिषेधो न प्राप्नोति । पश्यति त्वाचार्य उभयोः स प्रत्यारम्भ इति ततो वृङ्वृञोर्ग्रहणं करोति । न खल्वपि कश्चिदुभयवान्प्रतिषेधः प्रकृतिलक्षणः प्रत्ययलक्षणश्च । तुल्यजातीयेऽसति यथैव प्रकृतिलक्षणस्य नियामको भवत्येवं प्रत्ययलक्षणस्यापि नियामको भविष्यति । अथ यावता वसावेकाजाद्घसिभ्य इटा भवितव्यं कोन्वत्र विशेषो नियमार्थे वा सति विध्यर्थे वा । न खलु कश्चिद्विशेषः । आहोपुरुषिकामात्रं तु, भवानाह विध्यर्थमिति, वयं तु ब्रूमो नियमार्थमिति ।

---

प्र०– वस्वेका० । किमर्थमिति । यदि क्रादिनियमः प्रकृत्याश्रयस्य प्रत्ययाश्रयस्य च प्रतिषेधस्य निवर्तकस्तत इदं नियमार्थम् । अथ प्रकृत्याश्रयस्यैव ततो नेड् वशि कृतीति प्रतिषेधे प्राप्ते विध्यर्थमित्युभयसंभवात्प्रश्नः । न खलु कश्चिदिति । उभयथैकाजाद्घसिभ्य इटा वसोर्भाव्यम् । नान्येभ्यो बिभिद्वानित्यादावित्यर्थः । आहोपुरुषिकामात्रमिति । अहो अहं पुरुष इति यस्याभिमानः सोऽहोपुरुष उच्यते । यथा यर्वाणस्तर्वाणो नामर्षयो बभूवुरित्युक्तम्, तस्य भावो मनोज्ञादित्वाद्वुञ् । कस्त्वभिप्रायेणैतदुच्यते । न खलु कश्चिद्विशेष इति । अन्यत्र विशेषोऽस्त्येव । यदि क्रादिनियमः

---

उ०–सेट्त्वात् । यथा चैतत्तथैकाच उपदेश इत्यत्र निरूपितम् । भस्य [illegible] कृसभृ इति निषेधाल्लिट्यनिट्त्वं बोध्यम् ।

वस्वेकाजाद्घसाम् । विधिनियमयोर्विशेषाभावं दर्शयति—उभयथेति । कथं तदभिमानवांस्तच्छब्दवाच्यो भवतीत्यत्राऽऽह—यथा यर्वाण इति । यथा तत्प्रयुञ्जानाः साहचर्यात्ताभ्यां शब्दाभ्यामभिधीयन्ते तथाऽहो अहं पुरुष इत्यभिमानवांस्तेन शब्देनाभिधीयत इत्यर्थः । तस्य भाव इति । स चाभिमान एव । क्रादिनियमस्योभयप्रत्यारम्भत्वं नैतस्य नियमार्थत्वायैव किंत्वन्यार्थमपीत्याह—अन्यत्र विशेषोऽस्त्येवेति । नियमार्थत्वमेवेति । अत

---

* ७. २. १०.

अथैकाज्ग्रहणं किमर्थम् ? इह मा भूत् । बिभिद्वान् चिच्छिद्वानिति । क्रियमाणेऽपि वा एकाज्ग्रहणेऽत्र प्राप्नोति । एषोऽपि ह्येकाच् । एवं तर्हि कृते द्विर्वचने य एकाच् । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? एकाज्ग्रहणसामर्थ्यात् । न हि कश्चिदकृते द्विर्वचनेऽनेकाजस्ति यदर्थमेकाज्ग्रहणं क्रियते । ननु चायमस्ति जागर्तिः—जागृवांसो अनुग्मन्+ । यत्तर्ह्याकार-ग्रहणं करोति । न हि कश्चिदकृते द्विर्वचन आकारान्तोऽनेकाजस्ति । ननु चाय-मस्ति दरिद्रातिः । न दरिद्रातेरिटा भवितव्यम् । किं कारणम् ? उक्तमेतद्दरि-

प्र०—प्रकृत्याश्रयस्य प्रतिषेधस्य स्यात्ततो युयुविवेत्यादौ श्र्युकः कितीति प्रतिषेधः स्यात् । घुग्रहणं च क्रादिसूत्रेऽनर्थकं स्यादिति प्रत्ययाश्रयोऽपि प्रतिषेधः क्रादिनियमेन निवर्त्यत इति सूत्रमिदं नियमार्थमेव । अथैकाज्ग्रहणमिति । क्रियमाणमप्येकाज्ग्रहणमनिष्ट-निवृत्तये नालमिति मत्वा प्रश्नः । बिभिद्वानिति । कृतद्विर्वचनानामनेकाचां निवृत्त्यर्थ-मित्यभिप्रायः । एकाज्ग्रहणसामर्थ्यादिति । यद्यपि नित्यत्वाद्द्विर्वचने कृतेऽनेका-च्त्वादिण्न भवतीति परिहारोऽस्ति तथाऽपि परिहारान्तरसद्भावान्नोक्तः । तथा हि द्विर्वचनस्यावकाशः—पपाचेति । इटोऽवकाशो यत्र कृते द्विर्वचन एकाच्त्वं—पेचि-वानादिवानिति । बिभिद्वानित्यादौ तु नित्यत्वाद्द्विर्वचनं पूर्वम् । जागर्तेरिति । उपविदजागृभ्योऽन्यतरस्यामिति विकल्पितत्वादामो जागर्तेः परः क्वसुः । चिरिजिरि-चंकास्त्यादिभ्यस्तु कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमित्यामा भाव्यमिति क्वसोः परस्या-संभवः । जागृवांस इति । द्विर्वचनप्रकरणे छन्दसि वेति वक्तव्यमिति द्विर्वचनाभावः । न दरिद्रातेरिति । दरिद्रातेरनित्य आमित्यात औ णल इत्यौकारे विधातव्य औकार-विधानेन ज्ञापितमौकारस्य प्रश्लिष्टावर्णत्वादुच्चारणे लाघवं भवत्यौकारस्य तु

उ०—एवं भाष्ये उक्तम्—इदं तु ब्रूमो नियमार्थमिति । न्यायसिद्धत्वादित्यर्थः । पपिवानित्या-दावालोपसिद्धिस्तु संनिपातपरिभाषाया अनित्यत्वादिति बोध्यम् । अनिष्टनिवृत्तये नालमिति । बिभिद्वानित्यस्यामवस्थायामेकाच्त्वान्नियमस्यापूर्वविषयाभावादनर्थकं तदित्यर्थः । इड्द्विर्वचन-योरन्यतरस्य निरवकाशत्वे तदेव स्यान्न तु नियमत उभयोरवकाशं दर्शयति—तथा हीति । विषयभेदात्फलभेदाच्च नापवादत्वमित्याशयः । नित्यत्वाद्द्विर्वचनमिति । इट् तु कृते द्विर्वचनेऽनेकाच्त्वादप्राप्तेरनित्यः । शब्दान्तरात्प्राप्नुवत इव शब्दान्तरेऽपि प्राप्नुवतोऽनित्य-त्वादयं नित्यः परिहार इति परिहारान्तराश्रयणमिति तत्त्वम् । चिरीत्यादि । मन्त्रे त्वेषां क्वस्वन्तानां प्रयोग एव नास्तीति भावः । जागृवांस इत्यत्र लिटि धातोरिति द्विर्वचनं स्यादत आह—द्विर्वचनप्रकरण इति । ननु दरिद्रातेः क्वसौ कास्यनेकाज्ग्रहणमित्यामा भाव्यमिति

+ ऋग्वेद १. १. १.

द्रातेरार्धधातुके लोपः सिद्धश्च प्रत्ययविधाविति× । यश्चेदानीं प्रत्ययविधौ सिद्धः सिद्धोऽसाविड्विधौ । एवमपि भूतपूर्वगतिर्विज्ञायेत । आकारान्तो यो भूतपूर्व इति । एकाज्ग्रहणमेव तर्हि ज्ञापकम् । ननु चोक्तं जागर्त्यर्थमेतत्स्यात् । नैकमुदाहरणमेकाज्ग्रहणं प्रयोजयति । यद्येतावत्प्रयोजनं स्यांज्जागर्तेर्नेत्येव ब्रूयात् ।

प्र०-विश्लिष्टावयवत्वादोकाराद्विवृततरत्वाच्च गौरवमित्योकार एव विधेयः । तत्र वृद्धिरेचीति वृद्धौ कृतायां ययावित्यादि सिध्यति । ददरिद्राविति त्वाकारलोपे न सिध्यति । तदर्थमौकारविधानमनित्यत्वमस्मादामो ज्ञापयति । सिद्धोऽसाविड्विधाविति । क्वचित्तु सिद्धसिद्ध इति पाठः । सिद्धश्चासौ सिद्ध इति विशेषणसमासोऽत्यन्तसिद्ध इत्यर्थः । एकेन सिद्धशब्देन सामान्यसिद्धिः प्रतिपाद्यते द्वितीयेन तु विशेषसिद्धिः । एवमपीति । सांप्रतिकस्याकृतद्विर्वचनस्यानेकाच आकारान्तस्याभावाद्दरिद्राग्रहणे कर्तव्ये लाघवार्थमाद्ग्रहणं स्यादिति नैकमुदाहरणमाद्ग्रहणं प्रयोजयतीति नोक्तम् । नैकमुदाहरणमिति । ऊर्णोतेर्णुवद्भावादेकाच्त्वादेकाज्ग्रहणेनानिवृत्तिः । जागर्तेर्नेति । सूत्रमिदं नियमार्थम् । तत्र यद्यस्य जागर्तिरेव निवर्त्यः स्यात्तस्यैव साक्षात्प्रतिषेधं कुर्यात् । लघीयसी हि साक्षात्प्रतिपत्तिः । न च दरिद्रातिर्द्वितीयोऽनिवर्त्योऽस्यां ह्यवस्थायामाद्ग्रहणस्याकृतद्विर्वचनानेकाजाकारान्तार्थत्वाद्भूतपूर्वाकारान्ताश्रयात्स्यादेव तत इडागमः । यदा त्वेकाज्ग्रहणेन कृतद्विर्वचना एकाचो गृह्यन्ते तदाऽऽद्ग्रहणं कृतद्विर्वचनानेकाजाकारान्तार्थ—पपिवानिति । सांप्रतिकाकारान्तसद्भावे भूतपूर्वगतिरयुक्ताऽऽश्रयितुम् ।

उ०-कथमिडुपक्षिप्तोऽत आह—दरिद्रातेरिति । आकारलोप इति । न च परत्वादौत्वे संनिपातपरिभाषया लोपो दुर्लभः । आर्धधातुके विवक्षिते तद्विधानेन लोपस्यान्तरङ्गत्वात् । न चैवमादन्तत्वाभावादौत्वस्याप्राप्तिः । औविधानसामर्थ्यादेव भूतपूर्वगत्याऽऽकारान्तत्वमाश्रित्य णल आदेशप्रवृत्तेः । अनित्यत्वमिति । अत एव कास्प्रत्ययादिति सूत्रे दरिद्रांचकारेति भाष्यप्रयोगः संगच्छत इति बोध्यम् । सिद्धोऽसाविति । एवं चाऽऽदन्तत्वाभावान्नास्य तत्र प्रवृत्तिरिति भावः । एकस्य सिद्धशब्दस्य पौनरुक्त्यपरिहारायाऽऽह—अत्यन्तसिद्ध इति । कथमेतदर्थलाभस्तत्राऽऽह—एकेनेति । एवं सिद्धिद्वयप्रतिपादनेऽत्यन्तसिद्धिरुक्ता भवतीत्यर्थः । आकारान्तस्याभावादिति । एकाच्पदस्य कृतद्विर्वचनैकाच्परत्वेन लक्षणायां तात्पर्यग्राहकत्वापेक्षया भूतपूर्वाश्रयणं लघीय इति भावः । ननूर्णोतेः सत्त्वान्नैकमित्ययुक्तमत आह—ऊर्णोतेरिति । प्रतिषेधमिति । वसोरजागुरिति न्यासः कार्य इति भावः । ननु तदपेक्षयैकाज्ग्रहणं नियमपरं लभ्यत आह—लघीयसी हीति । अस्यां ह्यवस्थायामिति । एकाज्ग्रहणेन कृतद्विर्वचनैकाचामग्रहणे इत्यर्थः । अकृतेति । आद्ग्रहणस्य तज्ज्ञापकत्वापेक्षया भूतपूर्वानेकाजाकारान्तार्थत्वं युक्तमिति भावः । सांप्रतिकेति । तत्र हीडागमं विनाऽऽकारलोपो

अथ घसिग्रहणं किमर्थं नैकाजित्येव सिद्धम् ?

**घसिग्रहणमनच्कत्वात् ॥ २ ॥**

घसिग्रहणं क्रियते लोपे कृतेऽनच्कत्वादिण्न प्राप्नोति । इदमिह संप्रधार्यम्—इट् क्रियतां लोप इति, किमत्र कर्तव्यम् ? परत्वादिडागमः । नित्यो लोपः । कृतेऽपीटि प्राप्नोत्यकृतेऽपि+ । इडपि नित्यः । कृतेऽपि लोपे प्राप्नोत्यकृतेऽपि । अनित्य इण्न हि कृते लोपे प्राप्नोति । किं कारणम् ? अनच्कत्वात् । एवं तर्हि द्विर्वचने कृतेऽभ्यासे योऽकारस्तदाश्रय इड् भविष्यति । न सिध्यति । किं कारणम् ? द्वित्वाल्लोपस्य परत्वात् । द्विर्वचनं× क्रियतां लोप इति किमत्र कर्तव्यम् । परत्वाल्लोपः । लोपे कृतेऽनच्कत्वाद्द्विर्वचनं न प्राप्नोति । घसिग्रहणे

प्र०-अथ घसिग्रहणमिति । द्विर्वचनेऽचीति स्थानिवद्भावः पूर्वप्रतिषेधाश्रयेण प्रत्याख्यायते । द्विर्वचनं यणयवायावादेशाल्लोपोपधालोपणिलोपकिकिनोरुत्वेभ्य इति । तत्र घस् घस् इति स्थिते घसिभसोर्हलि चेति परमप्युपधालोपं पूर्वविप्रतिषेधेन बाधित्वा द्विर्वचनं भवति । तत्र कृते पुनःप्रसङ्गविज्ञानादुपधालोपः । ततः कृतद्विर्वचन एकाज्भवतीति सिद्ध इडागम इति मत्वा प्रश्नः । इतरस्तु स्थानिवद्भावारम्भात्पूर्वविप्रतिषेधो नाऽऽश्रितः । ततः परत्वान्नित्यत्वाद्वोपधालोपे कृत एकाच्त्वाभावान्न द्विर्वचनं स्यान्नापीडागम इति मत्वाऽऽह—घसिग्रहणमनच्कत्वादिति । नित्यो लोप इति । हल्यचि च विधानात् । इट् तु लोपे कृतेऽनच्कत्वान्न प्राप्नोतीत्यनित्यः । पूर्वविप्रतिषेधवाद्याह—इडपि नित्य इति । कृते द्विर्वचन उपधालोपे चाभ्यासाकाराश्रयेणैकाच्त्वात् । स्थानिवद्भाववाद्याह—अनित्य इडिति । पूर्वविप्रतिषेधवाद्याह—एवं तर्हीति । पूर्वस्मादपि विधौ स्थानिवदिति सर्वत्र नाऽऽश्रीयत इति स्थानिवद्भावादनेकाच्त्वमिति न चोदनीयम् । स्थानिवद्भाववाद्याह—न सिध्यतीति । परत्वादिति । नित्यत्वादित्यपि बोद्धव्यम् । वचनादिति । अपवादत्वादिति न बोद्धव्यम् । सत्यपि संभवे बाधनं भवतीति लोपद्विर्वचनयोरिटा बाधप्रसङ्गात् किन्तु क्रमः प्रदर्श्यते—घसिग्रहणे क्रियमाणे कृताकृतप्रसङ्गित्वादिडागमो

उ०-दुर्लभ इति भावः । एवं च दरिद्रातेर्ददरिद्वानित्येव । प्रत्याख्यायत इति । स्थानिवत्त्वं तु न । द्वित्वनिमित्ताजनिमित्तादेशाभावादिति भावः । स्थानिवद्भावादिति । अचः परस्मिन्नित्यनेन । सावकाशयोरेव नित्यत्वेन व्यवस्थेत्यत इटः सावकाशत्वं दर्शयति—कृतयोरपीति । इदं चिन्त्यम् । तत्प्राप्तिकालेऽवश्यं तयोः प्राप्तेः । तस्माद्घसि लोपं बाधित्वाऽपवादत्वादिटि पश्चादपि लोपः । तत आतिदेशिकं द्विर्वचनम् । औपदेशिकस्य बाधेऽपीति भाष्यार्थमन्ये । न

+ १. ४. ९८; १००. × १. १. ८.

पुनः क्रियमाणे न दोषो भवति । कथम् ? वचनादिड् भविष्यति । इटि कृते द्विर्वचनं क्रियतां लोप इति यद्यपि परत्वाल्लोपः स्थानिवद्भावाद्द्विर्वचनं भविष्यति* ।

**विभाषा गमहनविदविशाम् ॥ ७ । २ । ६८ ॥**

दृशेश्चेति वक्तव्यम् । ददृश्वान् ददृशिवान् । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । दृशेरिति× वर्तते ।

**ऋद्धनोः स्ये ॥ ७ । २ । ७० ॥**

**स्वरतेर्वेडृत्वाद्धतः स्ये विप्रतिषेधेन ॥ १ ॥**

स्वरतिलक्षणाद्वावचनादृतः स्य इत्येतद्भवति विप्रतिषेधेन+ । स्वरतिलक्षणस्य वावचनस्यावकाशः—स्वर्ता, स्वरिता । ऋतः स्य इत्यस्यावकाशः—करिष्यते, हरिष्यते । इहोभयं प्राप्नोति—स्वरिष्यति, अस्वरिष्यत् । ऋतः स्य इत्येतद्भवति विप्रतिषेधेन ।

**यमरमनमातां सक् च ॥ ७ । २ । ७३ ॥**

किमुदाहरणम् ? अयंसीत्, व्यरंसीत्, अनंसीत्, अयासीत्, अवासीत् । नैतदस्ति । नास्त्यत्र विशेषः सति वेट्यसति वा । इदं तर्हि—अयंसिष्टाम्,

---

प्र०—नित्यः, कृतयोरपि लोपद्विर्वचनयोः प्रवर्तनात्सावकाशश्च लोपोऽपि नित्यः । तत्र परत्वादिडागमः । ततो लोपः । ततो द्विर्वचनमिति सिद्धं जघ्निवानिति ।

विभाषा गमहन० । दृशेरिति वर्तत इति । विभाषा सृजिदृशोरित्यतः । इडत्त्यर्तिव्ययतीनामिति योगं प्रयोजनाभावादुल्लङ्घ्य वस्वेकाजाद्घसामित्यत्र विभाषाग्रहणसंबद्धं दृशिग्रहणमनुवर्तते ।

यमरम० । किमुदाहरणमिति । वृत्तिकारैरेकवचनान्तान्युदाहरणान्युपन्यस्तानि । तत्र विशेषं सगिटोरबुद्ध्वा पृच्छति । इतरस्तु वृद्ध्यभावं स्वरे च विशेषं मत्वैकवचनमेवोदाहरति—अयंसीदिति । अयंसिष्टामिति । न केवलमत्र वृद्ध्यभावो विशेषो

---

उ०—तिस्रिति ज्ञापकाद्भिन्नफलत्वे विषयभेदे वाऽनवकाशस्याप्यबाधकत्वम् । ज्ञापकाच्च दोष इति युक्तं वक्तुम् । ततो द्विर्वचनमिति । द्विर्वचनेऽचीति रूपस्थानिवत्त्वात् ।

विभाषा गम० । अनुवर्तत इति । एकदेशे स्वरितत्वप्रतिज्ञानान्मध्ये फलाभावाच्च मण्डूकप्लुत्या दृशिग्रहणमात्रमनुवर्तत इति भावः । विभाषाग्रहणसंबद्धमित्यनेन मध्ये प्रयोजनाभावो दर्शितः । केवलस्यानुवृत्तौ हि नित्यविधानार्थं तत्रापि संबन्धः स्यात् । थलि विकल्पस्तु पूर्वसूत्रेणैव सिद्ध इति भावः ।

यमरमनम० । तत्रविशेषमिति । सिजीड्भ्यां रूपस्य सिद्धत्वादिति भावः । वृद्ध्यभावमिति । अयंसीदित्यत्र हलन्तलक्षणाया नेटीति प्रतिषेधेन । स्वरविशेषस्त्वत्र

---

* १. १. ५९. × ७. २. ६५. + ७. १. ४४.

अयंसिषुः । व्यरंसिष्टाम्, व्यरंसिषुः । अनंसिष्टाम्, अनंसिषुः । अयासिष्टाम्, अयासिषुः । अवासिष्टाम्, अवासिषुः । इदं चाप्युदाहरणम्—अयंसीत्, व्यरंसीत्, अनंसीत्, अयासीत्, अवासीत् । ननु चोक्तं नास्त्यत्र विशेषः सति वेट्यसति वेति ? अयमस्ति विशेषः । यद्यत्रेण स्याद्वृद्धिः प्रसज्येत× । इटि पुनः सति नेटि [ ७. २. ४ ] इति प्रतिषेधः सिद्धो भवति । मा भूदेवं ह्म्यन्तानामित्येवं÷ भविष्यति । अत्रापि नेटीत्यनुवर्तते । तन्नावश्यमिड्ग्रहणमनुवर्त्यमधाक्षीदित्येवमर्थम् । अकारान्ताश्चापि पदपूर्वा एकवचन उदाहरणम्—मा हि+ यासीत्* । यद्यत्रेण स्यादनुदात्तस्य ईटः श्रवणं प्रसज्येत । इटि पुनः सत्युक्तमेतदर्थवत्तु सिचश्चित्करणसामर्थ्याद्धीट उदात्तत्वमिति× तत्रैकादेश उदात्तेनोदात्तः [ ८. २. ५ ] इत्युदात्तत्वं सिद्धं भवति ।

ईशः से ॥ ७ । २ । ७७ ॥

ईड्जनोर्ध्वे च ॥ ७ । २ । ७८ ॥

किमर्थो योगविभागो नेशीड्जनां स्ध्व इत्येवोच्येत । ईशो ध्वे मा भूदिति । इष्यत एव—ईशिध्व इति । ईड्जनोस्तर्हि से मा भूदिति । इष्यत एव—

प्र०—यावत्सगिटोः श्रवणमपि । मा हि यासीदिति । अयासीदित्यत्राट्स्वरो भवतीति तन्निवृत्त्यर्थो माङ्प्रयोगः । हिशब्दप्रयोगो 'हि चे'ति निघातप्रतिषेधार्थः । इट्यसत्याद्युदात्तं पदं स्यात् । सति तु तस्य सिज्भक्तत्वादुदात्तत्वादेकादेश उदात्तेनोदात्त इत्यन्तोदात्तं पदं भवति । तत्राऽऽदिः सिचोऽन्यतरस्यामिति पक्ष आद्युदात्तं पदं पक्षेऽन्तोदात्तम् । एतच्चानिटः पित उपसंख्यानमित्युपसंख्यानमनपेक्ष्य प्रयोजनमुक्तम् । तेन यथा मा हि कार्षमित्यत्र पर्यायेणाऽऽद्यन्तयोरुदात्तत्वं भवत्येवं मा हि यासीदित्यत्रासत्यपीटि भविष्यतीतीटो भावाभावयोः स्वरे भेदाभावः ।

ईशः से । इष्यत ईशिध्व इति । एतदर्थमेव चकारेणेशिरनुकृष्यते । ईड्जनोस्तर्हीति । कथं पुनरीड्जनोर्ध्वे चेति सूत्रपाठे योगविभागेनेड्जनोः सेशब्द उत्कृष्यते निवर्तयितुम् । उच्यते । चकारेणेशेरनुकर्षणात्सकारादौ सेशब्द इतीटि

उ०—स्फुटीभविष्यति । आदन्तोदाहरण उपपदपूर्वस्यास्य फलं दर्शयति—अयासीदित्यत्रेति । तत्राऽऽदिरिति । अन्तोदात्ते प्राप्त इदमारभ्यते । अनिटः पित इति । अनिटः सिचः परस्य पित उदात्तत्वं भवतीति तदर्थः । एवं च यथास्थितसूत्रमनेऽयं दोष इति भावः ।

ईशः० । अथेड्जनोर्ध्वे चेति पाठे भाष्यम् । तत्र सादेः सार्वधातुकस्य सूत्र पाठोपादानाच्चकारेणेशिरनुकृष्यत इत्याह—एतदर्थमित्यादि । अत एवाऽऽह—कथं पुनरिति । अत्र पाठे विपरीतं प्राप्नोत्येवेति भावः । चकारेणेशेरनुकर्षणादिति ।

× ७. २. १. ÷ ७. २. ५. + ८. १. ३४. * ६. १. १८७. × ६. १. ४४.

ईडिषे जनिष इति । ईशस्तर्हि स्वे मा भूदिति । इष्यत एव—ईशिष्वेति । से तर्हि यः स्वशब्दस्तत्र+ यथा स्यात्क्रियासमभिहारे यः स्वशब्दस्तत्र* मा भूदिति । अत्रापीष्यते—स भवानीशिष्वेत्येवायमीष्ट इति । आतश्चेष्यते, एवं ह्याह-सिद्धं तु लोण्मध्यमपुरुषैकवचनस्य क्रियासमभिहारे द्विर्वचनादिति× ।

अतो येयः ॥ ७ । २ । ८० ॥

प्र०-सिद्ध ईशः स इति नियमार्थं विज्ञायते । ईशेरेव सेशब्द इण्न त्वीड्जनोरिति । स इति । थासः स इत्यस्यानुकरणं सुपां सुलुगिति सप्तमीलुका निर्दिष्टम् । इष्यत इति । न चानिष्टार्थो योगविभागः । जनिष इति । व्यत्ययेन शप् तस्य बहुलं छन्दसीति लुक् छान्दसत्वादुपधालोपाभावः । 'जायसे' इत्यत्र तु नित्यत्वाद्विकरणे कृते तेन व्यवधानादिडभावः । ईशेस्तर्हि स्वे मा भूदिति चकारेणेशेरनुकर्षणात्सकारादौ ध्वशब्दे चेटः सिद्धेः, ईशः स इति नियमः क्रियते—ईशेः सेशब्द एव सकारादाविण्नान्यास्मिन्सकारादाविति । यद्यप्येकदेशविकृतमनन्यवदिति स्वशब्दः सेशब्द एव भवति तथाऽप्यन्यस्य सकारादेर्व्यावर्त्यस्याभावादन्यत्वमाश्रित्य स्वशब्दो व्यावर्त्यते । से तर्हीति । ईड्जनोर्ध्वे चेत्यनेन सर्वसकारादेरिटि विहित 'ईशः से' इत्यनेन नियमः क्रियते—सेशब्द एव सकारादाविति । तेनेशिष इत्यत्र भवतीशिष्वेत्यत्रापि स्थानिवद्भावात् । यस्तु लोट एव स्थाने स्वशब्दो नासौ सेशब्द इति व्यावर्त्यते । अत्रापीति । लोड्धर्माणौ हिस्वौ लोटो भवत इत्युक्तं तेन यथाऽन्यलोडादेशस्य स्वशब्दस्य सेग्रहणेन ग्रहणादिड् भवत्येवं क्रियासमभिहारे समुच्चये च लोडादेशस्य स्वस्य । अत्रैवार्थे वार्तिककारवचनं साक्षित्वेनाऽऽह—आतश्चेष्यत इति । तदेवं दोषवान्गुरुश्च योगविभाग इत्येक एव योगः कर्तव्यः । ईडीशिजनां सेध्वयोरिति ।

अतो० । केषांचिदतो या इय इति सकारान्तानुकरणत्वात्पाठोऽन्येषां तु सौत्रत्वा-

उ०-एकयोगेनेति वक्तुमुचितम् । ननु से इत्यस्यानुकरणे सप्तमीति युक्तमत आह-सुपां सुलुगिति । जनेर्दैवादिकत्वादाह-व्यत्ययेनेत्यादि । लुगिति । अत एव जादेशो न । नन्वेवं सेशब्दे ङिति परतो जनसनखनामिति लोपः स्यादत आह-छान्दसत्वादिति । अन्यत्वमाश्रित्येति । नियमविधानसामर्थ्याद्रूपभेदमात्रेणान्यत्वमाश्रीयत इत्यर्थः । नन्वस्य सेशब्दविकारत्वाभावात्कथमिष्यतेऽत आह—लोड्धर्माणाविति । योगविभागेन तत्रायमर्थः साधितः । आतश्चेति । लोण्मध्यमपुरुषस्येत्युक्त्या लोड्धर्मत्वं तयोरुक्तमिति भावः ।

अतो येयः । सकारान्तेति । अनुकार्येणार्थवत्त्वात्षष्ठ्या जातायाः सुपां सुलुगिति लुकि रुत्वयत्वयलोपेषु तस्यासिद्धत्वाद्गुणाभावेऽतो या इति रूपम् । अन्येषां त्विति । अत्र

+ १. ४. ११. * १. ४. २. × १. ४. २.

किं सार्वधातुकग्रहणमनुवर्तत* उताहो न ? किंचार्थोऽनुवृत्त्या ? बाढमर्थो यद्यकारात्परो याशब्द आर्धधातुकमस्ति । ननु चायमस्ति—चिकीर्ष्यात्, जिहीर्ष्यात्+ । लोपोऽत्र बाधको भविष्यति× । किं तर्ह्यस्मिन्योग उदाहरणम् ? पचेत्, यजेत् । अत्राप्यतो दीर्घो यञि [ ७. ३. १०१ ] इति दीर्घत्वं प्राप्नोति । स यथैवेयादेशो दीर्घत्वं बाधत एवं लोपमपि बाधेत । तस्मात्सार्वधातुकग्रहणमनुवर्त्यम् ।

---

प्र०—निर्देशस्य यलोपस्यासिद्धत्वानाश्रयणादतो येय इति । किंचार्थ इति । आचार्यदेशीय आह—प्रयोजनाधीनाधिकारानुवृत्तिरिति मन्यते । आचार्य आह—बाढमर्थ इति । चोदक आह—यद्यकारादिति । किंतु नास्तीति भावः । चिकीर्ष्यादिति । लिङाशिषीत्यार्धधातुकसंज्ञा । लोपोऽत्रेति । कृताकृतप्रसङ्गित्वान्नित्यो लोपः । इयादेशस्तु लोपे कृतेऽनकारान्तत्वान्न प्राप्नोतीत्यनित्यः । इतरस्त्वियादेशस्य सावकाशत्वे लोपस्य नित्यत्वं वक्तुं शक्यं नान्यथेति मत्वाऽऽह—किं तर्ह्यस्मिन्निति । स यथैवेति । न च येन नाप्राप्तिन्यायेन दीर्घस्यैव बाधक इति शक्यं वक्तुम् । यस्मात्स दीर्घः सार्वधातुके विधीयत इति सिद्धान्तः । तथा च ज्ञाजनोर्जा इत्यत्र वक्ष्यते—जानातीत्यत्राप्यतो दीर्घो यञीत्येव दीर्घो भविष्यतीति यदि तिङि दीर्घो विधीयते कथं जानातीत्यत्र स्यात् । यत्तु वक्ष्यते तिङीत्येवं तदिति नासौ सिद्धान्तः । मध्येपवादा इत्यनाश्रित्यैतदुक्तं तस्मिन्नाश्रीयमाणे लोपमेवेयादेशो बाधेत, न दीर्घम् । दीर्घस्तु परत्वात्स्यादिति सर्वथा सार्वधातुकानुवृत्तिः सप्रयोजना ।

---

उ०—पाठ आकारान्तानुकरणं ततः षष्ठ्याम् 'आतः' इति योगविभागादाल्लोपे ततो यत्वादिषु सौत्रत्वाद्गुण इत्यन्ये । या इत्याकारान्तानुकरणेऽविभक्तिको निर्देश इति परे । एतदेवाभिप्रेत्य याशब्द आर्धधातुकमिति निर्विसर्गः पाठो भाष्ये । क्वचित्तु सविसर्गः पाठः । नायं प्रश्नश्चोदकस्य नापि सिद्धान्तिनः । तेनानुवृत्तेरस्वीकारादत आह—आचार्यदेशीय इति । बाढमर्थ इति वदतो यदिगर्भं वाक्यमयुक्तमत आह—चोदक इति । ननु पर इयादेश इति कथं लोपस्य बाधकत्वमत आह—कृताकृतेति । ननु प्रत्युदाहरणप्रश्ने प्रकृत उदाहरणप्रश्नो न युक्तोऽत आह—इतरस्त्विति । न चेति । तिङीत्येवं तद्विधानात्सर्वत्र प्राप्त इति मन्यते । उत्तरयति—यस्मात्स इति । अनाश्रयणे हेतुः सार्वधातुकानुवृत्तेरावश्यकतेत्याह—सर्वथेति । तदभावे पचेदित्यत्रेष्टस्येयोऽनापत्तिः । चिकीर्ष्यादित्यत्रानिष्टस्य तस्याऽऽपत्तिः । तदनुवृत्तौ तु दीर्घस्य बाधः । अत्र विषयभेदेऽप्यानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति दीर्घादेर्बाधः । बाधकत्वसामान्यात्त्वपवादत्वव्यवहार इति सर्वेष्टसिद्धिः ।

---

* ७. ३. ७९. + १. ४. ११६. × ६. ४. ४८.

## आने मुक् ॥ ७ । २ । ८२ ॥

### मुकि स्वरे दोषः ॥ १ ॥

मुकि सति स्वरे दोषो भवति । पचमानः, यजमानः । मुका व्यवहितत्वादनुदात्तत्वं* न प्राप्नोति । ननु चायं मुगदुपदेशभक्तोऽदुपदेशग्रहणेन ग्राहिष्यते । न सिध्यति । अङ्गस्य मुगुच्यते विकरणान्तं चाङ्गं सोऽयं संघातभक्तोऽशक्योऽदुपदेशग्रहणेन ग्रहीतुम् । एवं तर्ह्यभक्तः करिष्यते ।

प्र०- आने । मुकीति । पूर्वान्तकरणे दोष इत्यर्थः । अदुपदेशादिति स्वरो न सिध्यति । अभिचित्वानित्यादौ ह्रस्वनुड्भ्यां मतुबित्यानुदात्तत्वं प्राप्नोतीति स्वरविधौ व्यञ्जनमविद्यमानवदिति दूषयित्वा हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदिति परिभाषा भाष्यकारेण व्यवस्थापितेति व्यवधातैव मुगागमः । ननु चायमिति । अकार उपदेश इत्याश्रीयते न त्वकारान्त उपदेश इति । मुक् चाकारमात्रभक्त इति व्यवधानाभावः । अङ्गस्येति । अङ्गाधिकारादङ्गस्य मुग्विधीयमानोऽङ्गमेव न व्यवदधात्यवयवान्तरं तु व्यवदधात्येव । एवं तर्हीति । ककारमनुबन्धमकृत्वा विकरणवदकारान्तादङ्गात्पर

उ०- आने मुक् । ननु स्वरविधौ व्यञ्जनस्याविद्यमानत्वान्न दोषोऽत आह—ह्रस्वनुड्भ्यामिति । दूषयित्वेति । स्वरानुद्देश्यकस्वरविधिविषय इत्यर्थः । पचमानादौ चित्स्वरं बाधित्वा परत्वात्तास्यनुदात्तेदित्यनुदात्तत्वमिष्यते । अकार उपदेश इति । विशेषणत्वेऽप्युपदेशशब्दस्य सौत्रत्वात्परनिपात इत्यभिमानः । मुक् चाकारेति । अङ्गावयवस्यातो मुगित्यर्थ इति भावः । यद्यपि वर्णग्रहणे यदागमा इति नास्ति । अत एव प्रकृते सवर्णदीर्घो न । तथाऽप्यकारान्तोपदेश इत्यर्थस्य स्वरविधौ सिद्धान्तितत्वेन तत्र वर्णग्रहणाभावान्न दोष इति भावः । अकार उपदेश इत्याश्रीयते नत्वकारान्त उपदेश इति कैयटोक्तं चिन्त्यमेव । तथाऽऽश्रयणेऽपि व्यपदेशिवद्भावेनाकारस्यैव तदन्तोपदेशत्वमादाय दोषाभावात् । तदनाश्रयणे हतो हथ इत्यादावप्यनुदात्तत्वापत्तेश्च । एवं च विशेष्यत्वादुपदेशशब्दस्य परनिपातोऽपि युक्त एव । यक्ष्यत इत्यादावव्याप्तेश्च । यक्ष्यमाण इत्यादावप्यवयवावयवस्य समुदायावयवत्वेन स्यस्यापि न मुग्व्यवधायक इति न दोषः । अनित्यत्वेन क्वचिदेव वर्णग्रहणेऽप्रवृत्तिर्न सर्वत्रेति तत्त्वम् । अङ्गाधिकारादिति । समानाधिकरण्यानुरोधेन तस्य विशेष्यतैवेति तदन्तविधिरिति भावः । अङ्गमेव न व्यवदधातीति । कुतश्चित्पूर्वस्याङ्गस्य कार्यं वाऽङ्गात्परस्य कार्यं वेति भावः । अवयवं त्विति । ततः परस्य कार्यं कर्तव्य इत्यर्थः । अवयवान्तरमिति पाठस्तु चिन्त्यार्थः ।

* ६. १. १८६.

## अभक्ते च ॥ २ ॥

किम् ? स्वरे दोषो भवति । पचमानः, यजमानः । मुका व्यवहितत्वाद-नुदात्तत्वं न प्राप्नोति । एवं तर्हि परादिः करिष्यते ।

## परादौ दीर्घप्रसङ्गः ॥ ३ ॥

यदि परादिः क्रियतेऽतो दीर्घो यञि [ ७. ३. १०१ ] इति दीर्घत्वं प्राप्नोति । नैष दोषः । तिङीत्येवं तत्* । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं मुकि स्वरे दोष इति । परिहृतमेतदद्रुपदेश-भक्तोऽदुपदेशग्रहणेन ग्राहिष्यते । ननु चोक्तमङ्गस्य मुगुच्यते विकरणान्तं चाङ्गं सोऽयं संघातभक्तोऽशक्योऽदुपदेशग्रहणेन ग्रहीतुमिति ।

अथायमङ्गभक्तः स्याद्गृह्येतादुपदेशग्रहणेन । बाढं गृह्येत । अङ्गभक्तस्तर्हि भविष्यति । तत्कथम् ? अतो या इयः [ ७. २. ८० ] इत्यत्राकारग्रहणं पञ्चमीनिर्दिष्टमङ्गस्येति+ च षष्ठीनिर्दिष्टं तत्राशक्यं विविभक्तित्वादत इति पञ्चम्याऽङ्गं विशेषयितुम् । तत्प्रकृतमिहानुवर्तिष्यते । एवमपि षष्ठ्यभावान्न प्राप्नोति । आन इत्येषा सप्तम्यत इति पञ्चम्याः षष्ठीं प्रकल्पयिष्यति तस्मिन्निति निर्दिष्टे पूर्वस्य [ १. १. ६६ ] इति ।

प्र०—आने परतो मध्ये मः करिष्यते । मुकेति । यथान्यासाश्रयेणोक्तमभक्तत्वात्तु मकारे-णेति युक्तं वक्तुम् । एवं तर्हीति । आनस्य मुडिति सूत्रन्यासेन । तिङीत्येवं तदिति । मुटि क्रियमाणे सार्वधातुकमननुवर्त्य तिङीत्यनुवर्त्यमेवेति भावः । पञ्चमीनिर्दिष्टमिति । पूर्वसूत्र एवात इत्यनेनाङ्गं न विशेषितमिति तदन्तविध्यभाव इत्युक्तं भवति । तेनाङ्गस्य योऽकारस्तस्मात्परस्य यास इत्यङ्गं यथा पूर्वसूत्रे विशेषणं तथेहापीत्यङ्गावयवस्याकार-स्याऽऽने मुग्भवति । तत्प्रकृतमिति । विशेष्यं सत्प्रधानमेवेत्यर्थः । आन इत्येषेति । अकृतार्था सप्तमी पूर्वत्र कृतार्थायाः पञ्चम्याः षष्ठीं प्रकल्पयति न तु पञ्चमी सप्तम्याः ।

उ०—कस्यचिदवयवस्य मध्ये हि यथा वक्तुं युक्तम् । न चात्र तथा । अङ्गस्यावयविन एव पूर्वं प्रसक्तत्वात् । अकारान्तादिति । अत इति पञ्चम्यन्तानुवृत्तेस्तदनुरोधेनाङ्गस्येत्यपि पञ्चम्या विपरिणंस्यत इति भावः । अभक्तत्वपक्षे मुकोऽभावादाह—यथा न्यासेति । मुगिति मकारोपलक्षणमिति भावः । तिङीत्यनुवर्त्यमिति । भूसुवोस्तिङीत्यतः । इदं न युक्तमित्युक्तम् । पूर्वसूत्र एवेति । एवं चाधिकारानुरोधादिहाप्यङ्गेनाकारो विशेष्यत इति भावः । तत्प्रकृतमित्यस्य यद्धर्मकं प्रकृतं तद्धर्मकमेवेहानुकृष्यत इत्यर्थं इत्याह—विशेष्यं सदिति । ननु विपरीतं किं न स्यादत आह—अकृतार्थेति । उपदेशग्रहणादिति । वस्तुतस्तत्परसूत्रस्य

* ७. ३. ८८. + ६. ४. १.

अष्टन आ विभक्तौ ॥ ७।२।८४ ॥

अष्टन्नादिपथिमथ्यात्वेष्वान्तरतम्यादनुनासिकप्रसङ्गः ॥ १ ॥

अष्टन्नादिपथिमथ्यात्वेष्वान्तरतम्यादनुनासिकः प्राप्नोति* । अष्टाभिः, अष्टाभ्यः । जातः, जातवान् । पन्थाः, मन्थाः ।

सिद्धमनण्त्वात् ॥ २ ॥

प्र०—यद्येवमङ्गस्यात इति समानविभक्तित्वात्तदन्तविधिप्रसङ्गः । नैष दोषः । विशेषणविशेष्यभावे कामचारादङ्गेनातो विशेषणात्ततो मुगकारमात्रभक्तत्वान्न व्यवधायकः । यद्यपि मुकि कृतेऽध्यर्धमात्रोऽकारस्तथाऽप्युपदेशग्रहणादुपदेशे मात्रिकत्वाश्रयः स्वरः प्रवर्तते । यथा च पचाव इत्यादौ दीर्घेऽपि कृते भवति, पचमान इत्यादौ त्वातो ङित इति इयादेशाभावोऽत इति तपरकरणात् ।

अष्टन० । सौत्रत्वान्निर्देशस्याल्लोपोऽन इत्यकारलोपो न कृतः । समानविचारत्वात्प्रकरणान्तरविहितमप्यनुनासिकस्थानिकमाकारमिहैवोपन्यस्यति—अष्टन्निति । यत्र तपरत्वमस्ति तत्र तपरस्तत्कालस्येति वचनाद्गुणान्तरयुक्तस्य तत्कालस्य ग्रहणात्स्थानेऽन्तरतम इति वचनाच्चानुनासिकस्थानेऽनुनासिक एवाऽऽकारः प्राप्नोति । यत्रापि तपरत्वाभावस्तत्राप्याकृतिनिर्देशाद्दीर्घोच्चारणसामर्थ्याच्च ह्रस्वप्लुताग्रहणात्सर्वदीर्घव्यक्तिप्रसङ्गेऽन्तरतमपरिभाषोपस्थानादनुनासिकप्रसङ्गः । सिद्धमनण्त्वादिति । अणुदित्सवर्ण-

उ०—विध्यर्थत्वपक्षे तपरस्तत्कालस्य सवर्णस्य ग्राहक इत्यर्थो न त्वन्यनिवर्तकमेतदिति कोऽत्र दोषः । नियमपक्षेऽतत्कालसवर्णमेव व्यावर्तयेत् । ननु यदागमा इत्येतल्लब्धमिति चिन्त्यमिदम् । नचैवं पचमान इत्यत्राऽऽतो ङित इति दुर्वारम् । अनित्यत्वेन क्वचिद्वर्णग्रहणे यदागमा इत्यस्याप्रवृत्तेरदोषात् । तपरकरणादिति । उपदेशग्रहणस्यात्राभावादिति भावः ।

अष्टन आ० । ननु पथ्यादीनामप्रकृतत्वादुपन्यासोऽसंगतोऽत आह—समानेति । यत्रेति । जनादिविषये विड्वनोरित्यत आदित्यनुवृत्तेः पथ्यादिसूत्र आदित्युच्चारणाच्चेति भावः । गुणान्तरेति । तपरसूत्रेऽणिति नानुवर्तते विध्यर्थं च सूत्रमिति भावः । यत्रापीति । यथा प्रकृतसूत्रे । मन्वाकृतिनिर्देशे ह्रस्वप्लुतयोरपि ग्रहणं स्यादत आह—दीर्घेति । अन्यथा ह्रस्वमेवोच्चारयेदिति भावः । दीर्घोच्चारणं दीर्घव्यक्तिसमवेतजातिग्रहणायेति तत्त्वम् । व्यक्तिपक्षाश्रयणेन समाधत्ते भाष्ये—सिद्धमेतदिति । अयं भावः—अष्टन इत्यादिसूत्र आदिति व्यक्तिर्गृह्यते । व्यक्तिपक्षे च ग्रहणकशास्त्रारम्भात्तेनैव सानुनासिकग्रहणं वाच्यम् । तच्चानण्त्वान्न प्रवर्तत इति । तत्रानण्त्वं व्युत्पादयति—अणुदिदिति । इदं च प्रकृतसूत्राभिप्रायेण । न च प्रत्याहार इति । चतुर्दशसूत्र्यामित्यर्थः । स्वात्मनीति । अत्रानभिनिर्वृत्तिमूलक एव

* ६.४.४२; ७.१.८५; १.१.५०.

सिद्धमेतत् । कथम् ? अनण्त्वात् । कथमनण्त्वम् ? अणसवर्णान्गृह्णाती-त्युच्यते+ । न चाऽऽकारोऽण् ।

उच्चारणसामर्थ्याद्वा ॥ १ ॥

अथवा शुद्धोच्चारणसामर्थ्यान्न भविष्यति । नैतौ स्तः परिहारौ । यत्ताव-दुच्यतेऽनण्त्वादिति न ब्रूमोऽणसवर्णान्गृह्णातीति । कथं तर्हि ? तपरस्तत्कालस्य [ १. १. ७० ] इति । यदप्युच्यत उच्चारणसामर्थ्याद्वेत्यस्त्यन्यदुच्चारणे प्रयोजनम् । किम् ? उत्तरार्थम् । रायो हलि [ ७. २. ८५ ] इति । एवं तर्हि नेमौ पृथक्परिहारौ । एकपरिहारोऽयम् । सिद्धमनण्त्वादुच्चारण-

प्र०—स्येत्यत्राणग्रहणेन प्रत्याहारसंनिविष्टा अकारादयो गृह्यन्ते न त्वाकारादयोऽसंनिविष्ट-त्वान्न च प्रत्याहारेऽकारादिभिराकारादयो गृह्यन्ते । नाप्यणुदित्सूत्रेऽङ्गेषु स्वात्मनि च ग्रहणकशास्त्रस्यानभिनिर्वर्तनात्स्वात्मनि क्रियाविरोधाच्च ग्रहणकशास्त्रान्तराभावाच्च । कथमनण्त्वमिति । अकारेण गृह्यमाण आकारोऽण् भवतीति मत्वा प्रश्नः । पूर्वोक्ते-नाभिप्रायेणाऽऽह—अण् सवर्णानिति । अनण्त्वादेव भाव्यमानोऽणसवर्णान्न गृह्णातीति परिहारो नोक्तः । ग्राह्यासद्भावाच्चान्तरतमपरिभाषा नोपतिष्ठते । उच्चारणसामर्थ्याद्वेति । यद्यनुनासिकोऽभविष्यत्स एवोदचारयिष्यतेति निरनुनासिक एवोच्चारणसामर्थ्यात्प्र-वर्तते । तत्र पूर्वः परिहारोऽष्टन्शब्दाकाराभिप्रायेणोक्तः । उत्तरस्तु जनाद्याकाराभि-प्रायेण । चोदकस्तु विषयविभागबुद्ध्वाऽऽह—नैतौ स्त इति । कथं तर्हीति । अणिति न तत्रानुवर्तते । उत्तरार्थमिति । इहानुनासिक उच्चार्यमाणेऽननुनासिक उत्तरत्र कर्तव्य इति लाघवायाननुनासिकोच्चारणं स्यादित्यर्थः । इतरः स्वाभिप्रायमाह—एवं तर्हीति । अष्टन आत्वे न द्वौ परिहारौ नापि जनाद्यात्वे किंतु विषयविभागेन । एक इति । यद्यपि द्वावेतौ परिहारौ वाशब्दस्य समुच्चयार्थत्वात्तथाऽपि समुदायापेक्षया

उ०—स्वात्मनि क्रियाविरोधो द्रष्टव्यः । चस्तु वाक्यालंकारे । ग्राह्यासद्भावाच्चेति । यदि सानुनासिकस्याप्यत्र ग्रहणमभविष्यत्तदा तस्यैव प्रवृत्त्यर्थमन्तरतमपरिभाषा प्रावर्त्स्यत् । तदभावात्तु न प्रवर्तत इत्यर्थः । स एवेति । ॐ इत्यादाविव प्रतिपत्तिलाघवायानुनासिक एवोच्चारणीये शुद्धोच्चारसामर्थ्येनान्तरतमयाप्ति इति भावः । ननु वाशब्दस्य विकल्पार्थत्वेन प्रसिद्धत्वात्प्रतिज्ञातेऽर्थे पर्यायेण परिहारद्वयमिति भाति । तत्तु न विरोधात् । विषयभेदे [illegible] पृथक्परिहारत्वनेवेति नेमौ पृथगित्ययुक्तमत आह—अष्टन आत्व इति । एकैकत्र विषये पृथक्परिहारौ नेति भाष्यार्थः । एवं च वाशब्दः समुच्चयार्थ इति भावः । नन्वेवं तर्ह्येक-परिहारोऽयमित्यसंगतमत आह—यद्यपीति । तथाऽपीति । समुदाय एकः, स च यथासंभवं प्रतिज्ञातेऽर्थे प्रवर्तत इति भावः । स एवेति । परिहारमन्यथोपपत्त्वादिति भावः । एव मन्यत्वे

+ १. १. ६९.

सामर्थ्याद्वेति । इह तावदष्टाभिः, अष्टाभ्य इत्यनणत्वात्सिद्धम् । जातः, जातवान्, पन्थाः, मन्थाः–उच्चारणसामर्थ्यात्सिद्धम् । यद्येवं पृथक्परिहारयोरपि न दोषः । यो यत्र परिहारः स तत्र भविष्यति ।

**युष्मदस्मदोरनादेशे ॥ ७ । २ । ८६ ॥**

अनादेशग्रहणं शक्यमकर्तुम् । कथम् ? हलीत्यनुवर्तते+ न चाऽऽदेशो हलादिरस्ति । तदेतदनादेशग्रहणं तिष्ठतु तावत्सांन्यासिकम् ।

**योऽचि ॥ ७ । २ । ८९ ॥**

अज्ग्रहणं शक्यमकर्तुम् । कथम् ? अविशेषेण यत्वमुत्सर्गस्तस्य हलादावात्वमपवादः* ॥

प्र०–संभवापेक्षया चैवमुक्तम् । अथवैकोऽसहायः कश्चित्कचिदन्यनिरपेक्षः परिहार इत्यर्थः । स एवाऽऽह—यद्येवमिति । यदि भवान्संमन्यते परिहारसमुदाये यथासंभवमवयवौ परिहारत्वेन तदा समुदायकल्पनया नार्थः पृथगेवैतौ परिहारौ यथाविषयमवतिष्ठेते ।

युष्म० । हलीत्यनुवर्तत इति । रायो हलीत्यतः । न चाऽऽदशा हलादिरिति । भ्यसोऽभ्यमित्यभ्यमादेशो नतु भ्यमिति भावः । तदेतदिति । उत्तरत्रोपयुज्यते । योऽचीति यत्वमादेशेऽजादौ मा भूत्त्वमहामित्यादौ । शेषे लोप इति शेषव्यवस्थार्थं च ।

योऽचि० । यत्वमुत्सर्ग इति । अनादिष्टायां विभक्तौ विधीयमानं यत्वमुत्सर्गो

उ०–योजनाप्रकारमाह—यदि भवानिति । पूर्वं समुदायरूपत्वमुक्त्वा तत्र समुदायस्यावयवद्वारेण यथासंभवं प्रतिज्ञाते प्रवृत्तिरित्यर्थे परस्य संमतिं दृष्ट्वा पृथक्परिहारत्वेऽपि तथैव न दोष इति प्रतिपाद्यत इत्यर्थः । नन्वनडुदात्तग्रहणेन स्वरूपोच्चारितगुणस्याविवक्षाज्ञापनात्पथ्यादिविषये शुद्धोच्चारणेऽप्यान्तरतम्यादनुनासिक एवोच्चारणीये शुद्धोच्चारणसामर्थ्येन तस्य बाध इत्याशयात् ।

युष्मद० । अभ्यमादेश इति । पक्षभेदेन लक्ष्यभेदस्यानिष्टतयाऽभ्यमित्येव तत्र पदच्छेदः कार्य इत्यर्थः । भ्यसोम्यमिति सूत्रस्थं यथेच्छसि तथाऽस्त्विति भाष्यं तु केवलयुष्मच्छब्दे रूपाविशेषमात्रपरं नतु तन्त्राश्रयेणोभयादेशप्रतिपादनपरम् । यथेच्छसीत्युक्त्योभयत्र तात्पर्यालाभात् । तत्र भ्यम् भ्यस इत्यकरणेनाभ्यमिति च्छेद एव युक्तः । यत्र भ्यमभ्यमोः फले विशेषस्तस्यानभिधानमेव बोध्यम् । उत्तरत्र । योऽचीत्यत्र । शेषे लोप इति । आदेशविभक्तिर्हि तत्र शेषो यथा प्रकल्प्येतेति भावः ।

योऽचि । अनादेशग्रहणं तु सर्वथाऽऽवश्यकमित्यज्ग्रहणमाश्रित्य तत्र प्रत्याख्यातमित्याह—अज्ग्रहण इति ।

+ ७, २, ८५. * ७, २, ८९.

## शेषे लोपः ॥ ७ । २ । ९० ॥

शेषग्रहणं शक्यमकर्तुम् । कथम् ? अविशेषेण लोप+ उत्सर्गस्तस्याजादौ यत्वमपवादो हलादावात्वम्* ।

## मपर्यन्तस्य ॥ ७ । २ । ९१ ॥

परिग्रहणं शक्यमकर्तुम् । मान्तस्येत्येव सिद्धम् । न सिध्यति । किं कारणम् ? अन्तशब्दस्योभयार्थत्वात् । कथम् ? अयमन्तशब्दोऽस्त्येव सह तेन वर्तते । तद्यथा—मर्यादान्तं देवदत्तस्य क्षेत्रम् । सह मर्यादयेति गम्यते । अस्ति प्राक्तस्माद्वर्तते । तद्यथा—नद्यन्तं देवदत्तस्य क्षेत्रमिति । प्राङ्नद्या इति गम्यते । तद्यः सह तेन वर्तते तस्येदं ग्रहणं यथा विज्ञायेत । नैतदस्ति प्रयोजनम् ।

---

प्र०-हलादौ त्वात्वमपवाद आदेशे तु लोप इत्यसंकरेणाऽऽत्वयत्वलोपाः सिध्यन्ति । अज्ग्रहणे क्रियमाणेऽप्यनादेशग्रहणं यत्वलोपयोर्विषयविभागार्थं कर्तव्यमित्यनादेशग्रहणाश्रयेणाज्ग्रहणमुत्तरत्र च शेषग्रहणं प्रत्याख्यातम् ।

शेषे० । अविशेषेणेति । विभक्तावित्यधिकाराद्विभक्तिमात्रे लोपो विधीयमान उत्सर्गो भवति । तस्यानादेशे विभक्तौ यत्वमपवादो यत्वस्यापि हलादावात्वमिति शेषग्रहणं पूर्वत्र चाज्ग्रहणमन्तरेण विषयविभागेन कार्यत्रयसिद्धिः । तस्याजादाविति । हलादावात्वविधानात्सामर्थ्यलभ्यमेतत् ।

मप० । अयमन्त शब्द इति । अन्यपदार्थविषयस्यान्तशब्दस्येदं व्याख्यानम् । क्वचिदन्तर्भूतान्तार्थोऽन्यपदार्थो बहुव्रीहेरभिधेयः । क्वचिदनन्तर्भूतान्तार्थ इत्यर्थः । मर्यादान्तमिति । मर्यादायाः क्षेत्रावयवत्वात्क्षेत्रेऽन्यपदार्थेऽनुप्रवेशः । नद्यन्तमिति । नद्याः क्षेत्रानवयवत्वादन्यपदार्थेऽनुप्रवेशाभावः । पर्यन्तशब्दस्त्वन्यपदार्थविषयः सह

---

उ०- शेषे० । भाष्ये तस्याजादौ यत्वमित्युक्तेरचीत्यस्य कर्तव्यत्वमाभाति तदपनयायाऽऽह—तस्यानादेश इति । हलादाविति च । शेषस्य लोप इत्येतदर्थमपि न । संनिपातपरिभाषया टाबभावसिद्ध्या फलाभावादिति तात्पर्यम् । एतत्सूत्रत्रयोक्त एव सिद्धान्तो भाष्यकृदुक्तत्वात् । स्यसोम्यम् शेषे लोपस्यदादीनामिति सूत्रेषु स्वैकदेशयुक्तिर्वार्तिककारोक्तिव्याख्यानमात्रमित्याहुः ।

मपर्यन्तस्य । नन्वाङिव नान्तशब्दोऽभिविधिमर्यादयोस्तस्यावयववाचित्वादतो भाष्याशयमाह—अन्यपदार्थेति । मर्यादाया इति । अवयवावयविनोः समवायः संबन्ध इत्युपलक्षणस्याप्यवयवस्य कार्ययोग इत्यर्थः । सामीप्यादिनोपलक्षणस्य तु कार्ययोगाभावमाह—नद्या इति । तद्य इत्यादि भाष्यं व्याचष्टे—पर्यन्तशब्दस्त्विति । शब्दशक्तिस्वभावादिति भावः । अन्यपदार्थविषय इति । बहुव्रीहिभूत इत्यर्थः । एवं च परि-

---

+ ७. २. ८४. * ७. २. ८१; ८९.

सर्वत्रैवान्तशब्दः सह तेन वर्तते। अथ कथं नद्यन्तं देवदत्तस्य क्षेत्रमिति। नद्याः क्षेत्रत्वे संभवो नास्तीति कृत्वा प्राङ्नद्या इति गम्यते। अवधिद्योतनार्थं तर्हि परिग्रहणं कर्तव्यम्। मान्तस्येतीयत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी

---

प्र०—तेन वर्तत इति परिग्रहणं कृतम्। तेन युष्म् अस्म् इत्येतयोरादेशा भवन्ति, न युष् अस् इत्येतयोः। सर्वत्रेति। अन्तशब्दोऽवयववाचीत्यवयवेन विग्रहः। समुदायः समासार्थ इत्यवयवस्यावश्यमन्यपदार्थेऽन्तर्भावः। नद्यन्तं क्षेत्रमित्यत्र त्वन्तशब्दः समीपवाचीत्यन्यपदार्थे नद्या अनन्तर्भावः। यत्तूच्यते सर्वत्रैवान्तशब्दः सह तेन वर्तत इति तत्संभवापेक्षं यस्यावयवत्वं सामीप्यं च संभवति तस्यावयवत्वमेवाऽऽश्रीयते। अन्तशब्दस्यावयववाचित्वेन प्रसिद्धतरत्वात्। यस्य त्ववयवत्वासंभवस्तस्य सामीप्यमेवान्तशब्देन प्रतिपाद्यते, यथा नद्यन्तं क्षेत्रमिति। अन्ये त्वाहुः—सर्वत्रैवान्तशब्दोऽवयववाची कस्यचिन्मुख्यमवयवत्वं कस्यचित्सामीप्यादुपचरितमित्यभिप्रायेणेदं भाष्यम्। ततश्चान्तशब्दस्यावयववाचित्वान्सपर्यन्तस्याऽऽदेशलाभार्थः परिग्रहणेन। अवधिद्योतनार्थमिति। यदि युष्मदस्मदी मान्तेऽथाप्यमान्ते सर्वथाऽऽदेशा यथा स्युरेवमर्थं परिग्रहणम्। यत्रैवेति। सामानाधिकरण्येन विशेषणविशेष्यभावः स्यात्। अथापि वैयधिकरण्यमाश्रीयते युष्मदस्मदोरवयवस्य मान्तस्येति तथाऽपि यत्र मान्ते युष्मदस्मदी तत्र भेदाभावादादेशा न स्युः। न च व्यपदेशिवद्भावोऽस्त्यप्रातिपदिकेनेति निषेधात्परिग्रहणे तु तदुपादानसामर्थ्याद्युष्मदस्मदवयवेऽपि युष्मदस्मच्छब्दौ वर्तेते इति सर्वत्रैवाऽऽदेशसिद्धिर्वैयधिकरण्येन वा संबन्धे परिग्रहणोपादानसामर्थ्यादप्रातिपदिकेनेति प्रतिषेधाप्रवृत्त्या मान्तयोरपि युष्मदस्मदोरादेशसिद्धिः। युष्मयतेरिति।

---

उ०—शब्दाभावेऽर्थसंदेहः स्यात्पर्यन्तशब्दस्तु सह तेनेत्यर्थं बोधयत्यसंदिग्ध इति तात्पर्यम्। तत्फलं दर्शयति—तेनेति। सर्वत्रैवेति नियममुपपादयति—अन्तशब्द इति। तर्हि नद्यन्तमित्यत्रापि नद्याः कार्ययोगः स्यादत आह—नद्यन्तमिति। तर्हि नियमोक्तिरयुक्तेत्यत आह—यत्त्विति। यस्यावयवत्वमिति। यथा मर्यादान्तमित्यादौ मर्यादायाः। तस्यावयवत्वमिति। अवयवत्वमेवेत्यर्थः। यस्य त्विति। यथा नद्यन्तमित्यादौ नद्यादेः। अन्ये त्वाहुरिति। एवं लोकशक्तिकल्पनालाघवं भवति। अतो मान्तस्येति सूत्रे सामीप्ये वर्तत इत्यस्य सामीप्योपचरितावयव इत्यर्थः। अवयवे वर्तत इत्यस्य मुख्यावयवे वर्तत इत्यर्थ इति भावः। अवधिद्योतनार्थमित्यस्यायमर्थः—परिशब्दसमभिव्याहृतोऽन्तशब्दोऽवधिबोधक इति तस्यावधिवाचकस्य द्योतकत्वार्थमित्यर्थः। एवं च तस्य सावधेरित्यर्थः। एवमपि सामानाधिकरण्येनान्वय इष्टसिद्धिरत आह—यदि युष्मदिति। परिग्रहणसामर्थ्याद्वैयधिकरण्यान्वय इति भावः। अथापि वैयधिकरण्यमिति। इदं प्रौढ्या। संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्। निषेधादिति। इदमपि प्रौढ्या। निषेधस्य प्रत्ययविधिविषय-

तत्रैवाऽऽदेशाः स्युः । क्व च मान्ते युष्मदस्मदी ? युष्मानाचष्टे, अस्मानाचष्ट इति युष्मयतेरस्मयतेश्चाप्रत्ययः * ।

प्र०–प्रत्ययोत्तरपदयोश्चेत्यत्रैकवचनाधिकारात्त्वमौ न भवतः । इष्ठवद्भावाट्टिलोपः । क्विपि णिलोपः । क्वौ लुप्तं न स्थानिवदिति मान्ते युष्मदस्मदी ततः कृदन्तत्वात्स्वादयः । एकदेशविकृतस्यानन्यत्वाद्युष्मदस्मदाश्रयकार्यप्रवृत्तिस्तत्र सौ त्वमहमिति भवति, द्विवचने–प्रथमायाश्च द्विवचने भाषायामिति मकारस्याऽऽत्वे प्राप्ते परत्वाद्युवावयोः कृतयोः पुनः प्रसङ्गविज्ञानादात्वे कृते युवामावामिति भवति । तृतीयाद्विवचने–युवाभ्यामावाभ्यामिति । भिसि–युषाभिरसाभिरिति । ङेप्रत्यये–तुभ्यं मह्यम् । भ्यसि–युषभ्यमसभ्यमिति । शेषे लोप इति लोपः । पञ्चमीभ्यसि–युषदसदिति । मपर्यन्तापेक्षे तु शेष आश्रीयमाणे मात्परस्यात्राभावाल्लोपाभावाद्युष्मदस्मदिति भवति । इह त्वामाचष्टे मामाचष्ट इति णिचि प्रत्ययोत्तरपदयोरिति त्वमयोः प्रकृत्यैकाजिति प्रकृतिभावादसति टिलोपेऽत उपधाया इति वृद्ध्या भाव्यम् । अथ त्वङ्गवृत्त इत्याश्रीयते तदा वृद्ध्यभावः । तत्र 'त्वद् सु' 'मद् सु' इति स्थिते मपर्यन्ताभावात्त्वाहौ सावित्यस्याप्रवर्तनात् । वृद्धिपक्षे त्वादम् मादमिति भवति । तदभावे त्वदं मदमिति । केचित्तु मान्तयोर्युष्मदस्मदोरादेशा–

उ०–त्वात् । तस्मात्सामानाधिकरण्येनान्वय इत्येव भाष्यतात्पर्यम् । अवधिबोधकपर्यन्तशब्दोपादाने तु वैयधिकरण्येनैव संबन्धः । एवं च युष्मदस्मदोर्मावधेरादेश इत्यर्थ इति भावः । एकवचनाधिकारादिति । एकार्थवाचिनोरेव तावादेशौ न त्वनेकार्थवाचिनोरिति भावः । ननु लोपस्य स्थानिवद्भावान्मान्तत्वमनयोरसिद्धमत आह—क्वौ लुप्तमिति । युवावयोः कृतयोरिति । आख्यानकर्तृद्वित्वे वर्तमानयोरपि युष्मदस्मदोर्द्व्यर्थवर्तिताऽस्त्येवेति भावः । युषभ्यमसभ्यमिति । भ्यम् तु युष्मदस्मदोरनादेश इतिसूत्रस्थभाष्यप्रामाण्यान्नास्त्येव । मुख्ययुष्मदादिविषय एव वा । यथेच्छसीत्यनेन भाष्येण तयोः फलभेदभावबोधनादिति भावः । वस्तुतो यथेच्छसीति भाष्यप्रमाणेनास्य चतुर्थीबहुवचने प्रयोगाभाव एवेति तत्त्वम् । युस्मदस्मदिति । एवं चतुर्थीबहुवचनेऽपि युष्मभ्यमस्मभ्यमिति । वस्तुतः शेषे लोप इति सूत्रस्थशेषग्रहणप्रत्याख्यानपरभाष्यप्रामाण्याच्छेषस्य लोप इति नास्त्येवेति पञ्चमीबहुवचनेऽस्य प्रयोगाभाव एवानभिधानादिति तत्त्वम् । षष्ठीबहुवचने युषाकमसाकम् । प्रत्ययोत्तरपदयोरिति सूत्रेऽतित्वाकमतिमाकमिति भाष्योदाहरणेन गौणेऽप्याकम्प्रवृत्तेः । इह त्वामाचष्ट इत्यादि । वस्तुतस्तु सावेकाच इतिसूत्रस्थभाष्यप्रामाण्येनैकवचनान्तप्रकृतिकण्यन्तप्रकृतिकक्विबन्तानामनभिधानस्य तत्रैव सूत्रेऽस्माभिरुक्तत्वेनेदं चिन्त्यम् । केचित्त्विति । परिग्रहणाभावे तत्रैवाऽऽदेशा इत्यस्य तत्रैवानिष्ट आदेशा इत्यर्थः । तत्सत्त्वे तु तत्र नैवाऽऽदेशा इत्येतन्मते भाष्याक्षरार्थः ।

* ६. ४. १५५; ५१; १. १. ५८.

## प्रत्ययोत्तरपदयोश्च ॥ ७ । २ । ९८ ॥

किमर्थमिदमुच्यते न त्वमावेकवचने [ ७. २. ९७ ] इत्येव सिद्धम् ? न सिध्यति । किं कारणम् ? एकवचनाभावात् । एकवचन इत्युच्यते न चात्रैकवचनं पश्यामः+ । प्रत्ययलक्षणेन* । न लुमताऽङ्गस्य [ १. १. ६३ ] इति प्रत्ययलक्षणस्य प्रतिषेधः । एवं तर्हीदमिह संप्रधार्यम्—लुक्क्रियतामादेशाविति किमत्र कर्तव्यम् ? परत्वादादेशौ । नित्यो लुक् । कृतयोरप्यादेशयोः प्राप्नोत्यकृतयोरपि । अन्तरङ्गावादेशौ । एवं तर्हि सिद्धे सति यत्प्रत्ययोत्तरपदयोस्त्वमौ शास्ति तज्ज्ञापयत्याचार्योऽन्तरङ्गानपि विधीन्बाधित्वा बहिरङ्गो लुग्भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? गोमान्प्रियोऽस्य गोमत्प्रियः, यवम-

---

प्र०—न्नेच्छन्ति । मपर्यन्तग्रहणं हि यत्र परिशिष्टसद्भावस्तत्राऽऽदेशार्थमिति । परिशिष्टाभावे न भाव्यमादेशैरिति ब्रुवन्ति ।

प्रत्ययो० । अन्तरङ्गा इति । नित्यादप्यन्तरङ्गो बलीयांस्तथा चोक्तं परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसंनिपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति । गोमत्प्रिय इति । अत्रान्तरङ्गा एकपदाश्रयत्वात्सुलोपादयः स्युः पदद्वयाश्रयत्वाद्बहिरङ्गो लुगिति गोमान्प्रिय इति स्यात् । अस्मिंस्तु ज्ञापके सत्यन्तरङ्गाण्यपि कार्याणि बाधित्वा लुग्

---

उ०—अत एवावधिद्योतनार्थमित्युपक्रम उक्तम् । अग्रेऽपि देशस्य कालस्य वा सत्त्वे हि तयोरवधित्वव्यवहारो लोकप्रसिद्धः । किंच पूर्वव्याख्यायां परिग्रहणसामर्थ्यान्मणिमन्त्रादिन्यायेन वैयधिकरण्यान्वयो नतु वाच्यवृत्त्या । मम तु परिग्रहणसत्त्वेऽसंभवान्न सामानाधिकरण्येनान्वयः किंतु वैयधिकरण्येनेति । एवमेव व्याख्यानं भाष्यसंमतम् । अत एवाग्रे भगवता रूपाणि न दर्शितानि । न चावध्यर्थत्वे मपर्यन्त इति बहुव्रीहेरतद्गुणत्वापत्तिः, अवयवस्य तत्त्वे तद्गुणताङ्गीकारात् । अतएव द्विपर्यन्तानामित्यादौ न दोष इति तेषामाशयः । अङ्गुष्ठपर्यन्तं कुष्टमित्याद्यसाध्वेव । अङ्गुष्ठान्तमित्येव तूचितम् ।

प्रत्ययोत्तरपदयोश्च । भाष्ये—एकवचन इत्येव सिद्धमिति । यद्यपीदमर्थग्रहणमित्युत्तरत्रैव भाष्ये स्फुटं तथाऽपि विभक्तावित्यधिकारात्सिद्धमित्याशयः । एकवचनाभावादिति । एकवचनग्रहणं प्रत्ययोपलक्षणम् । एकार्थयोर्युष्मदस्मदोर्विभक्तेरेकवचनस्यैव संभवेन भाष्य एकवचनमित्युक्तम् । विभक्तावित्यधिकारफलं तु त्वं डित्थः पुत्रो यस्य स युष्मड्डित्थपुत्र इति त्रिपदबहुव्रीहावादेशाभाव इति दिक् । अन्तरङ्गा इति प्रतीकपाठः । ननु नित्यान्तरङ्गयोर्बाध्यबाधकत्वे विनिगमनाविरहोऽत आह—नित्यादपीति । विरुद्धयोर्द्वयोः शास्त्रयोः संनिपात एकलक्ष्ये प्रवृत्तौ यत्पराद्यन्यतमत्तद्भवति । तेषां परनित्यादीनां मध्ये

---

\+ २. ४. ७१. * १. १. ६२.

त्प्रियः। गोमानिवाचरति गोमत्यते, यवमत्यते। अन्तरङ्गानपि नुमादीन्बहिरङ्गो लुग्बाधत इति×। नैतदस्ति ज्ञापकम्। अस्त्यन्यदेतस्य वचने प्रयोजनम्। किम्? येऽन्य एकवचनादेशाः प्राप्नुवन्ति तद्बाधनार्थमेतत्स्यात्। तद्यथा— तव पुत्रस्त्वत्पुत्रः, मम पुत्रो मत्पुत्रः। तुभ्यं हितं त्वद्धितम्, मह्यं हितं मद्धितमिति*। यत्तर्हि मपर्यन्तग्रहणमनुवर्तयति+। यद्यत्रान्य एकवचनादेशाः स्युर्मपर्यन्तानुवृत्तिरनर्थिका स्यात्।

प्र०-भवति। ततो न लुमताऽङ्गस्येति प्रत्ययलक्षणप्रतिषेधान्नुम्दीर्घाभावे गोमत्प्रिय इति सिध्यति। सुपो धातुप्रातिपदिकयोरित्यस्यैव बाधकत्वमनेन ज्ञाप्यते, तस्यैवेह संभवात्। केचित्तु सामान्यापेक्षया ज्ञापकत्वाश्रयाल्लुङ्मात्रस्य बलवत्त्वाश्रयेण व्यवहारदर्शनाल्लुङ्मात्रं बाधकं ज्ञाप्यत इत्याहुः। येऽन्य इति। एकवचनाधिकारादेकवचननिमित्तानामादेशान्तराणां त्वमौ बाधकौ स्यातां नतु ज्ञापकावित्यर्थः। यत्तर्हीति। केचिद् व्याचक्षते—यद्यादेशान्तराणां त्वमौ बाधकौ स्यातां तदा मपर्यन्तग्रहणानुवृत्तिमन्तरेणोत्सर्गसमानदेशत्वादपवादानां मपर्यन्तस्य त्वमौ सिद्धाविति किं तदनुवृत्त्या। अनुवृत्त्या तु ज्ञाप्यते प्रागेव लुकि कृते विभक्त्यभावादसत्स्वादेशान्तरेषु त्वमौ विधीयेते इति। एतच्चायुक्तम्। नायं नियोग उत्सर्गसमानदेशोऽपवाद इति। भ्यम्बहुजकजां भिन्नदेशानामप्यपवादत्वदर्शनात्। ततश्चासत्यां मपर्यन्तानुवृत्तावादेशान्तराणामपि बाधकौ त्वमौ सर्वादेशौ स्याताम्। अनेकाल्त्वात्। इति सप्रयोजना मपर्यन्तानुवृत्तिः।

उ०-मिथः परनित्याद्योर्युगपत्प्रसङ्ग उपात्तक्रमेण यत्परं तद्बलवदिति तदर्थः। विरोधिसंनिपात इत्यनेन भिन्नविषयागमादेशयोर्नापवादत्वमिति सूचितमिति केचित्। तन्न। नुम्लुकोर्बाध्यबाधकत्वानापत्तेः। व्यवहारदर्शनादिति। एङ्ह्रस्वात्संबुद्धेरित्यादौ भाष्यकृत इत्यादिः। अत एव सनीस्रंस इत्यादौ नलोपाभावः। पञ्चखट्व इत्यादौ चैकादेशात्प्रागेव टापो लुक्। अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यात्। नच प्रत्ययग्रहणस्य प्रातिपदिकप्रकृतिकाचारक्विपि चारितार्थ्यात्कथं संपूर्णसूत्रस्य ज्ञापकत्वमुच्यते। एतद्भाष्याप्रामाण्येन लुङ्विधायकभाष्यप्रामाण्येन चैताभ्यामाचारक्विपोऽभावात्। एतद्भाष्यप्रामाण्यादेव चैकार्थयोः प्रातिपदिकप्रकृतिकणिचोऽप्यनभिधानं बोध्यम्। इतोऽपि त्वाद्यं मादमित्यादिरूपकल्पना प्रत्युक्ता। एकवचनाधिकारादेकवचननिमित्तानामिति। एकवचनरूपविभक्तिनिमित्तानामित्यर्थः। इदं व्यर्थम्। अधिकृतस्यार्थपरत्वादसंगतं च। भ्यम्बहुजकचामिति। वस्तुतस्तेषु मित्त्वपुरस्ताद्ग्रहणप्राक्टेर्ग्रहणैस्तस्य बाधेऽप्यन्यत्र तत्त्यागे किं मानमिति चिन्त्यम्। यद्यप्यसंभव एव बाधकत्वमिति वार्तिकमत उत्सर्गसमानदेशा अपवादा इति न्यायो भाष्यमते तु सत्यपि संभवे बाधकत्वस्वीकारस्तथाऽपि भाष्यमते वाचनिकयैवैषा ज्ञापकोपन्यासस्तु वार्तिककरीत्येति बोध्यम्। ज्ञापिते त्वस्मिन्नेतद्विषये तवादीनामप्राप्त्या तदपवादत्वाभावेन

× ७. २. ७०; २. ४. ७१. * ७. २. ९६; ९५. + ७. २. ९१.

## त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणम् ॥ १ ॥

त्रिचतुर्युष्मदस्मद्ग्रहणेष्वर्थग्रहणं शब्दविशेषणं द्रष्टव्यम्। त्रिचतुरोः स्त्रियां तिसृचतसृ [ ७. २. ९९ ]। यद्यपि समासः पुंसि नपुंसके वा वर्तते त्रिचतुरौ च स्त्रियां वर्तेते, भवत्येव तिसृचतसृभावः। प्रियास्तिस्रो ब्राह्मण्योऽस्य ब्राह्मणस्य प्रियतिसा प्रियतिस्रौ प्रियतिस्रः। प्रियचतसा प्रियचतस्रौ प्रियचतस्रः। प्रियास्तिस्रो ब्राह्मण्योऽस्य ब्राह्मणकुलस्य प्रियतिसृ प्रियतिसृणी प्रियति-

---

प्र०-तस्मादन्यथा व्याख्यायते। तवममादय आदेशाः स्थानिप्रक्लृप्त्यर्थमिहानुवर्तन्ते। तत्र तवादीनां प्रसङ्गे सिद्धयोस्त्वमयोर्मपर्यन्तानुवृत्तिस्त्वया कृतं त्वत्कृतमित्याद्यर्था भवन्ती लुको बाधकत्वं ज्ञापयति। ततश्च तवाद्यनुवृत्तिसहिता मपर्यन्तानुवृत्तिर्ज्ञापनाय भवति। केवला हि मपर्यन्तानुवृत्तिर्लाघवाय स्यात्। गरीयसी हि तवाद्यनुवृत्त्या स्थानिप्रतीतिः। ततो ज्ञापनाय न प्रभवेत्तस्मात्तवाद्यनुवृत्तिसहिता मपर्यन्तानुवृत्तिर्यथोक्तप्रकारेण यथोक्तार्थज्ञापनायालम्। त्रिचतुरिति। स्त्रियां द्विवचन एकवचन इति येऽर्था निर्दिष्टास्ते श्रूयमाणानामेव शब्दानां विशेषणं न त्वङ्गस्येत्यर्थः। प्राप्तविशेषणसंबन्धैस्त्रिचतुर्युष्मदस्मद्भिरङ्गं विशेष्यते। तत्र पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च ग्रहणं भवतीति केवलानां तदन्तस्य चाऽऽदेशप्रवृत्तिः। द्विवचनैकवचने च पारिभाषिके न गृह्येते, किं तर्हि द्वयोर्वचनमभिधानं द्विवचनमेकस्य वचनमेकवचनमित्यर्थनिर्देशः। प्रियतिसेति। अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इत्यकृत एव तिसृभावे लुकि कृते समासाद्या विभक्तिस्तस्यां तिसृभावः। स च निर्दिश्यमानस्याऽऽदेशा भवन्तीति त्रिशब्दस्यैव भवति। प्रियतिस्राविति। अचि र ऋत इति रादेशः। प्रियतिसृ इति। कथं पुनरत्र तिसृभावो यावता नित्यत्वात्स्वमोर्नपुंसकादिति लुकि कृते

---

उ०-मपर्यन्तस्यैवाऽऽदेशार्थं तदनुवृत्तिश्चरितार्था। अनेन च न्यायेनान्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकसमासादीनां च प्राबल्यं बोध्यत इति दिक्। भाष्ये—यद्यत्रान्य इत्यादि स्युरित्यस्य प्राप्नुयुरित्यर्थः। तद्बाधनार्थं चैतव्स्यात्तदेति शेषः। तस्मादन्यथेत्यादि। इदं चिन्त्यमेव। अतिगुरुत्वात्। ज्ञापितेऽपि तवाद्यनुवृत्तेः सार्थक्यस्योपपादयितुमशक्यत्वाच्च। श्रूयमाणानामेवेति। भाष्ये शब्दशब्देन श्रूयमाणशब्दो लक्ष्यत इति भावः। प्राप्तेति। गुणः कृतात्मसंस्कार इति न्यायादिति भावः। नन्वेकवचन इत्येव सिद्ध इत्युपक्रमस्थभाष्यादेकवचनादिशब्दानां प्रत्ययपरत्वप्रतीतेर्युष्मदादिष्वर्थग्रहणमप्रसिद्धमत आह—द्विवचनैकेत्यादि। उपक्रमस्थभाष्यं सूत्रलक्षणपरतया व्याख्यातमेव। ननु प्रियतिसेत्यादावन्तर्वर्तिनीं विभक्तिमाश्रित्य तिसृभाव इति तन्निरूपितमङ्गं स्त्रियामेवेत्यङ्गविशेषणत्वेऽपि क्षत्यभावोऽत आह—अन्तरङ्गानपीति। समुदायस्य सर्वस्य तिस्रादेशः प्राप्नोतीत्यत आह—स चेति। रादेश इति। गुणं बाधित्वेति शेषः। नित्यत्वादिति। अन्तरङ्गानपीति न्यायाच्चेत्यपि बोध्यम्।

सृणि । प्रियचतसृ प्रियचतसृणी प्रियचतसृणि । यदा हि समासः स्त्रियां वर्तते त्रिचतुरौ च पुंसि नपुंसके वा तदा मा भूतामिति । प्रियास्त्रयो ब्राह्मणा अस्या ब्राह्मण्याः प्रियत्रिः प्रियत्री प्रियत्रयः । प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः । प्रियाणि त्रीणि ब्राह्मणकुलान्यस्या ब्राह्मण्या प्रियत्रिः प्रियत्री प्रियत्रयः । प्रियचत्वाः प्रियचत्वारौ प्रियचत्वारः ।

युवावौ द्विवचने [ ७. २. ९२ ] । यद्यपि समास एकार्थो वा भवति बह्वर्थो वा भवति, द्व्यर्थे च युष्मदस्मदी, भवत एव युवावौ । किमविशेषेण ? नेत्याह । 'यूयवयौ जसि' 'त्वाहौ सौ' 'तुभ्यमह्यौ ङयि' 'तवममौ ङसि' [ ७. २. ९३–९६ ] इत्येतान्विधीन्वर्जयित्वा । अतिक्रान्तो युवामतित्वम्, अत्यहम् । अतिक्रान्तौ युवामतियुवाम्, अत्यावाम् । अतिक्रान्ता युवामतियूयम्, अतिवयम् । अतिक्रान्तं युवामतियुवाम्, अत्यावाम् । अतिक्रान्तौ युवामतियुवाम्, अत्यावाम् । अतिक्रान्तान्युवामतियुवान्, अत्यावान् । अतियुवया, अत्यावया । अतियुवाभ्याम्, अत्यावाभ्याम् । अतियुवाभिः, अत्यावाभिः । अतितुभ्यम्, अतिमह्यम् । अतियुवाभ्याम्, अत्यावाभ्याम् । अतियुवभ्यम्, अत्यावभ्यम् । अतियुवत्, अत्यावत् । अतियुवाभ्याम्, अत्यावाभ्याम् । अतियुवत्, अत्यावत् । अतितव, अतिमम । अतियुवयोः, अत्यावयोः । अतियुवाकम्, अत्यावाकम् । अतियुवयि, अत्यावयि । अतियुवयोः, अत्यावयोः । अतियुवासु, अत्यावासु ।

त्वमावेकवचने [ ७. २. ९७ ] । यद्यपि समासो द्व्यर्थो भवति बह्वर्थो वा, एकार्थे च युष्मदस्मदी, भवत एव त्वमौ । किमविशेषेण ? नेत्याह । तानेव विधीन्वर्जयित्वा । अतिक्रान्तस्त्वामतित्वम्, अत्यहम् । अतिक्रान्तौ त्वामतित्वाम्, अतिमाम् । अतिक्रान्तास्त्वामतियूयम्, अतिवयम् । अतिक्रान्तं त्वामतित्वाम्, अतिमाम् । अतिक्रान्तौ त्वामतित्वाम्, अतिमाम् । अतिक्रान्तांस्त्वामति-

---

प्र०—न लुमताऽङ्गस्येति प्रत्ययलक्षणप्रतिषेधेन भाव्यम् । उच्यते । इकोऽचि विभक्तावित्यत्राजूग्रहणं ज्ञापकं कचिल्लुमता लुप्तेऽपि प्रत्ययलक्षणस्य । तथा च हे त्रपो इति संबुद्धिगुणो भवति । क्वचित्प्रियत्रीति पाठः । स प्रत्ययलक्षणप्रतिषेधाश्रयः । इतीति ।

---

उ०—भाष्ये–प्रियतिसृणीति । अत्र परत्वात्तिस्रादेशे प्रकृतिविशेषापेक्षरादेशापेक्षयाऽन्तरङ्गत्वेन पुनःप्रसङ्गविज्ञानान्नुम् । न तिसृचतसृ इति निषेधेनाऽऽगमविषये रादेशो नेति सामान्यतो ज्ञाप्यते भाष्योदाहरणादिति बोध्यम् । एतद्वर्जनं च न वचनेन किंतु युक्त्यैवेत्याह—एते विधय इति । त्वाहादीनामवकाशो बह्वर्थे युष्मदस्मदी । युवावयोरवकाशो युवामावामिति । अतियुवाकमति-

त्वान्, अतिमान्। अतित्वया, अतिमया। अतित्वाभ्याम्, अतिमाभ्याम्। अतित्वाभिः, अतिमाभिः। अतितुभ्यम्, अतिमह्यम्। अतित्वाभ्याम्, अतिमाभ्याम्। अतित्वभ्यम्, अतिमभ्यम्। अतित्वत्, अतिमत्। अतित्वाभ्याम्, अतिमाभ्याम्। अतित्वत्, अतिमत्। अतितव, अतिमम। अतित्वयोः, अतिमयोः। अतित्वाकम्, अतिमाकम्। अतित्वयि, अतिमयि। अतित्वयोः, अतिमयोः। अतित्वासु, अतिमासु।

यद्येवं 'यूयवयौ जसि' 'त्वाहौ सौ' 'तुभ्यमह्यौ ङयि' 'तवममौ ङसी'-त्येतेभ्यो विधिभ्यः परत्वात्त्वमावेकवचन इति प्राप्नोति सावकाशा ह्येते विधय इदानीं भवन्ति। कोऽवकाशः? अनेकार्थे युष्मदस्मदी। त्वमावेकवचन इत्यस्यावकाशः—अन्यानि वचनानि। एकार्थयोर्युष्मदस्मदोरेतेषु वचनेषूभयं प्राप्नोति। परत्वात्त्वमावेकवचन इति प्राप्नोति। नैष दोषः। शेष इति* वर्तते। कश्च शेषः? जसादिभिरव्याप्तं यदेकवचनं तस्मिञ्शेषे। अशेषत्वान्न भविष्यति। अथवा त्वमावेकवचन इत्यत्र 'यूयवयौ जसि' 'त्वाहौ सौ' 'तुभ्यमह्यौ ङयि' 'तवममौ ङसी'त्येतदनुवर्तिष्यते।

## त्रिचतुरोः स्त्रियां तिसृचतसृ॥ ७। २। ९९॥

## तिसृभावे संज्ञायां कन्नुपसंख्यानम्॥ १॥

---

प्र०-एते विधयः परत्वाद्युवावयोर्बाधकाः। शेष इति वर्तत इति। अन्यथाऽतिक्रान्तो युष्मानतित्वमत्यहम्। अतिक्रान्ताय युष्मानतितुभ्यमतिमह्यम्। अतिक्रान्तस्य युष्मानतितवातिमम। इत्यनेकार्थत्वे युष्मदस्मदोः समासे सावकाशास्त्वाहादयोऽसमासे समासेऽपि युष्मदस्मदोरेकार्थत्वे परत्वात्त्वमाभ्यां बाधनान्न प्राप्नुवन्ति—त्वमहं तुभ्यं मह्यं तव ममेति। शेषग्रहणानुवृत्तौ तु यत्र यूयादयो न भवितारस्तत्र त्वमौ भवतो नतु यूयादिविषये। तच्च शेषग्रहणं लोपग्रहणसंबन्धानुवृत्त्या यूयादिभिर्न संबध्यते। त्वमावेकवचन इत्यत्र तु लोपग्रहणं निवृत्तं शेषग्रहणमनुवर्तत इति न कश्चिद्दोषः। अथवेति। वाक्यभेदेन त्वमयोर्विषये यूयादयो विधीयन्ते।

---

उ०-त्वाकमित्यादावत एव भाष्यप्रयोगात्सुट इव नुटोऽप्याकमा निवृत्तिर्यथा भवति तथोक्तमाकम्सूत्रे। ननु शेषपदानुवृत्तौ यूयवयौ जसीत्यादावपि तत्संबन्धः स्यादत आह—तच्चेति। भाष्ये—जसादिभिरव्याप्तं यदेकवचनमिति। जसादिनिमित्तादौ शेरव्याप्तो य एकार्थो युष्मदादिरित्यर्थः। यद्वैकार्थयुष्मदादिप्रकृतिकविभक्तिरित्यर्थः। शेषग्रहणस्य मध्ये विच्छिन्नत्वादाह—अथवेति। नन्वेकवाक्यतायां जसादिविषय एवोभयं स्यादत आह—वाक्यभेदेनेति। पुनर्विधानाच्च तद्विषये त्वमयोर्बाधः। वस्तुतः पूर्वविप्रतिषेधः कल्प्य इत्येतद्भाष्यतात्पर्यम्।

---

* ७. २. ९०.

तिसृभावे संज्ञायां कन्युपसंख्यानं कर्तव्यम् । तिसृका नाम ग्रामः ।

**चतसर्याद्युदात्तनिपातनं च ॥ २ ॥**

चतसर्याद्युदात्तनिपातनं कर्तव्यम् । त्रिचतुरोः स्त्रियां तिसृचतसृ । किं प्रयोजनम् ? चतस्रः पश्य, शसि स्वरो* मा भूदिति । किंचान्यत् ?

**उपदेशिवद्वचनं च ॥ ३ ॥**

उपदेशिवद्भावश्च वक्तव्यः । किं प्रयोजनम् ?

**स्वरसिद्ध्यर्थम् ॥ ४ ॥**

उपदेशावस्थायामेवाद्युदात्तनिपातने कृते विभक्तिस्वरेण+ बाधनं यथा स्यात्—चतसृणामिति । स तर्ह्युपदेशिवद्भावो वक्तव्यः ? न वक्तव्य ।

**उक्तं वा ॥ ५ ॥**

---

प्र०— त्रिच० । तिसृकेति । तिस्र एव तिसृका । स्वार्थे कन्प्रत्ययः । ह्रस्वत्वे कुत्सितत्वे वा विवक्षिते संज्ञायां कनिति वा । तत्र विभक्तेर्लुकि कृते विभक्तौ विधीयमानस्तिसृभावो न प्राप्नोतीति वचनम् । तत्र केचिद्बहुवचनान्तस्तिसृकाशब्दः संज्ञेत्याहुः । अपरे त्वेकवचनान्त इति । ग्रामस्य ह्येकस्य तिसृकेति संज्ञेति नास्ति बहुवचनप्रसङ्गः । चतस्र इति । चतुरः शसीत्यनेन स्थानिवद्भावादन्तोदात्तत्वं प्राप्नोति । तत उदात्तयणो हल्पूर्वादिति शस उदात्तत्वप्रसङ्गः । चतसृणामिति । उपदेशावस्थायामाद्युदात्ते चतस्रादेशे कृते षट्त्रिचतुर्भ्यो हलादिरिति सतिशिष्टस्वरः प्रवर्तते । यद्येवं चतस्रः पश्येत्यत्रापि चतुरः शसीति सतिशिष्टत्वात्प्राप्नोति । नैष दोषः । आन्तरतम्यादाद्युदात्तत्वे सिद्धे पुनराद्युदात्तत्वं निपात्यमानं चतुरः शसीत्यनेन विधीयमानं स्थानिवद्भावात्प्राप्तमन्तोदात्तत्वं बाधते । तत्र बाधितत्वात्पुनःप्रसङ्गाभावात्कुतः सतिशिष्टत्वम् । उक्तमिति । चतुरः शसीत्यत्र । हलादिग्रहणं चतस्रः पश्येत्येतद्व्यावृत्त्यर्थमेव क्रियते । यदि च निपातनस्वरेण विभक्तिस्वरो बाध्येत तदा हलादिग्रहमन्तरेणापि विभक्तेः स्वरो न भविष्यतीति किं हलादिग्रहणेन । तत्क्रियमाणं निपातनस्वरस्य विभक्तिस्वरो बाधक इति ज्ञापयति ।

---

उ०— त्रिचतुरोः० । विभक्तेर्लुकीति । अन्तरङ्गानपीति न्यायादिति भावः । शस उदात्तत्वेति । आद्युदात्तं च पदमिष्यते । आन्तरतम्यादिति । चतेरुरन्नन्तत्वेन चतुःशब्दस्याऽऽद्युदात्तत्वादिति भावः । पुनःप्रसङ्गाभावादिति । आद्युदात्तनिपातनसामर्थ्यात्स्वाश्रये प्राप्तान्तोदात्तत्वबाधाद्विभक्तिस्वरस्तु बाधक एवेत्याद्युदात्तनिपातनोपदेशिवद्भाववचनाभ्यां कल्प्यत इति तत्त्वम् । क्वोक्तं तदाह—चतुरः शसीत्यत्रेति । षट्त्रीतिसूत्रस्थहलादिग्रहणसामर्थ्यमुपपादयति—हलादिग्रहणमिति । निपातनमेव न कर्तव्यमिति पाठः । इयमेव व्याख्या 'आद्युदात्तनिपातने हि' इति भाष्य-

---

* ६. १. १६७. + ६. १. १७९.

किमुक्तम् ? विभक्तिस्वरभावश्च हलादिग्रहणादाद्युदात्तनिपातने हि हलादिग्रहणानर्थक्यमिति× ।

**अचि र ऋतः ॥ ७ । २ । १०० ॥**

**अचि रादेशे जस्युपसंख्यानं गुणपरत्वात् ॥ १ ॥**

अचि रादेशे जस्युपसंख्यानं कर्तव्यम् । तिस्रस्तिष्ठन्ति, चतस्रस्तिष्ठन्ति । किं पुनः कारणं न सिध्यति ? गुणपरत्वात् । परत्वाद् गुणः प्राप्नोति+ । तत्तर्हि वक्तव्यम् ?

**न वाऽनवकाशत्वाद्रस्य ॥ २ ॥**

न वा वक्तव्यम् । किं कारणम् ? अनवकाशत्वाद्रस्य । अनवकाशो रादेशो गुणं बाधिष्यते । सावकाशो रादेशः । कोऽवकाशः ? तिस्रः पश्य, चतस्रः पश्य । नैषोऽस्त्यवकाशः । अत्रापि पूर्वसवर्णदीर्घः प्राप्नोति† । स यथैव पूर्वसवर्णं बाधत एवं गुणमपि बाधिष्यते । गुणोऽप्यनवकाशः । सावकाशो

---

प्र०—अथवा हलादिग्रहणेनाऽऽद्युदात्तनिपातनमेव न कर्तव्यमिति प्रतिपाद्यते । यदि चतस्रः पश्येत्यत्र चतुरः शसीत्यनेनान्तोदात्तत्वं स्यात्तत उदात्तयणो हल्पूर्वादिति स्यादेव विभक्तेराद्युदात्तत्वमिति तद्व्यावृत्तये हलादिग्रहणमनर्थकं स्यात्तस्माद्धलादिग्रहणाच्चतस्रः पश्येत्यत्र चतुरः शसीत्यस्याप्रवृत्तिरध्यवसीयते । ततश्चाऽऽद्युदात्तस्य चतुःशब्दस्याऽऽद्युदात्त एवाऽऽन्तर्याच्चतस्रादेशो भवति । चतुःशब्दो न्रः संख्याया इति वा चतेरुरन्निति नित्वाद्वाऽऽद्युदात्तः । चतसृणामित्यत्र तु षट्त्रिचतुर्भ्य इति विभक्तेरुदात्तत्वं भवति ।

अचि० । अचि रादेश इति । मध्येऽपवादा इति पूर्वसवर्णदीर्घस्य ऋत उदित्युत्वस्य च बाधः प्राप्नोति, न तु जसि च ऋतो ङिसर्वनामस्थानयोरिति गुणस्येति भावः । नवेति । मध्येऽपवादा इति परिभाषानाश्रयेणोच्यते विध्यन्तरपूर्वकत्वादस्य सर्वापवादत्वमित्यर्थः । गुणोऽप्यनवकाश इति । सोऽपि विध्यन्तरपूर्वकः । कर्तारा-

---

उ०—स्वरसासिद्धेति बोध्यम् । हलादिग्रहणादिति । वस्तुतः परत्वाद्रादेशे तस्य स्थानिवत्त्वात्तकाराकारस्य न चतुरः शसीत्यनेनोदात्तत्वम् । स्वविधौ स्थानिवत्त्वाभावाच्च न ऋकारस्येति व्यर्थमेवाऽऽद्युदात्तनिपातनमिति पूर्वमुक्तम् । विभक्तेरुदात्तत्वमिति । स्थानिवद्भावेन सति शिष्टत्वादिति भावः ।

अचिर० । ननु विध्यन्तरानाक्रान्तविषयाभावात्सर्वापवादोऽयमिति किं वचनेनेत्यत आह—मध्य इति । वार्तिके जसीत्युपलक्षणं प्रियतिस्रावित्याद्यर्थमप्युपसंख्यानावश्यकत्वात् । ततश्च पूर्ववाक्येन सावकाशं रादेशं सर्वनामस्थानगुणो जसि गुणश्च परत्वाद्बाधेतेत्युपसंख्यानं कर्तव्यमित्यर्थः । सर्वापवादत्वमिति । बाध्यसामान्यचिन्ताश्रयणादिति

---

× ६. १. १६७. + ७. ३. १०९; ११०. † ६. १. १०२.

गुणः। कोऽवकाशः ? हे कर्तः । नैष सर्वनामस्थाने गुणः । कस्तर्हि ? संबुद्धिगुणः* । अयं तर्हि—हे मातः । एषोऽपि संबुद्धिगुण एव । नात्र संबुद्धिगुणः प्राप्नोति । किं कारणम् ? अम्बार्थनद्योर्ह्रस्वः [ ७. ३. १०७ ] इति ह्रस्वत्वेन भवितव्यम् । भवेद्दीर्घाणां ह्रस्ववचनसामर्थ्यान्न स्याद्ध्रस्वानां तु खलु ह्रस्वत्वं क्रियतां संबुद्धिगुण इति परत्वात्संबुद्धिगुणेन भवितव्यम् । अथापि

प्र०—वित्यत्र पूर्वसवर्णदीर्घः प्राप्नोति । कर्तार इत्यत्र जसि चेति गुणः सिद्धः । कर्तारमित्यत्राप्यमि पूर्व इति प्राप्नोति । तत्र द्वयोर्विध्यन्तरापवादयोरपवादविप्रतिषेधात्परत्वाद्गुणप्रसङ्गः । इतरोऽन्यविधिपूर्वकत्वाभावं गुणस्य दर्शयति—सावकाश इति । हे कर्तरिति । संबुद्धौ ह्रस्वस्य गुण इति गुणं परत्वादृतो ङीति गुणो बाधत इति मन्यते । तत्र 'कर्तारावित्यादौ यद्यपि परत्वात्पूर्वसवर्णादिकं बाधित्वा गुणो भवति तथाऽपि विध्यन्तरपूर्वकेण रादेशेन बलीयसा न स्पर्धत इति भावः । नैष इति । एतदर्थो गुणस्य नाऽऽरम्भो लक्षणान्तरेण सिद्धत्वादित्यर्थः । हे मातरिति । संबुद्धिनिमित्तो गुणोऽत्र नास्ति । अम्बार्थनद्योर्ह्रस्व इति ह्रस्वेन बाधनात् । एषोऽपीति । गुणो ह्रस्वत्वं परत्वाद्बाधत इति भावः । अम्बार्थेति । अस्मिंश्च सति ऋतो ङीति गुणः प्रवर्तते । भवेद्दीर्घाणामिति । ननु दीर्घाणां ह्रस्वविधानं ह्रस्वस्य गुण इति गुणविधानार्थमेव स्यात् । ह्रस्वानां तु ह्रस्वविधानं गुणबाधनार्थं स्यात् । नैतदस्ति । एवं हि दीर्घाणामेव गुणं विदध्यात् । नदीह्रस्वयोर्गुण इति प्रक्रियागौरवमेवं परिहृतं भवति । परत्वात्संबुद्धिगुणेनेति । गुणस्यावकाशः—अग्ने, वायो । ह्रस्वस्यावकाशः—

उ०—भावः । इदमेवाऽऽचार्योक्तं समाधानम् । ध्वनितं चेदं तृज्वत्क्रोष्टुरिति सूत्रे भाष्ये । चोदक आह—गुणोऽपीति । तदाशयमाह—सोऽपि । सर्वनामस्थानगुणोऽपि । द्वयोः—रादेशसर्वनामस्थानगुणयोः । इतर इति । सिद्धान्त्येकदेशीत्यर्थः । ननु हे कर्तरित्यत्र संबुद्धिगुण एव प्राप्नोति न सर्वनामस्थानगुणोऽत आह—संबुद्धाविति । विध्यन्तरपूर्वकेणेति । उदाहरणमात्रे विध्यन्तरपूर्वकेणेत्यर्थः । गुणस्तु हे कर्तरित्यत्र न विध्यन्तरपूर्वक इति भावः । एतदर्थ इति । यदर्थो यस्याऽऽरम्भः स एव तस्यावकाशो युक्त इति भावः । संबुद्धिनिमित्त इति । एवं च सर्वनामस्थानगुण एवात्र प्राप्नोतीत्ययं तस्यावकाश इति भावः । ननु हे मातरित्यत्र ह्रस्वप्राप्तेः कथं संबुद्धिगुणोऽत आह—गुणो ह्रस्वत्वमिति । अस्मिंश्च सतीति । ह्रस्वश्च येन नाप्राप्तिन्यायेन संबुद्धिगुणस्यैव बाधको नास्येति भावः । गुणबाधनार्थमिति । प्रयोजनान्तराभावादिति भावः । एवं हीति । यदि ह्रस्वे कृते दीर्घान्तेषु गुणः स्यात्तर्हि नद्या एव गुणं विदध्यादिति

* ७. ३. १०८.

कथंचित्सावकाशो: गुणः स्यादेवमपि न दोषः । पुरस्तादपवादा अनन्तरान्विधीन्बाधन्त इत्येवमयं रादेशो जसि गुणं* बाधते सर्वनामस्थानगुणं+ न बाधिष्यते । तस्मात्सुष्ठूच्यतेऽचि रादेशो जस्युपसंख्यानं गुणपरत्वादिति ।

प्र०-अम्ब, अक्क । हे मातरिति परत्वाद् गुणः । एवं च सर्वनामस्थानगुणः पूर्वसवर्णापवाद एवेति । अपवादविप्रतिषेधात्तिस्रस्तिष्ठन्तीति परत्वाद् गुणप्रसङ्गः । स च न जसि चेत्यनेन किं तर्हि ऋतो ङीत्यनेन जसि चेत्यस्मात्परत्वात् । अथापीति । ह्रस्वस्य गुण इति यदि योगविभागः क्रियतेऽम्बार्थस्य ह्रस्वान्तस्य ह्रस्वो भवति ततो गुण इति । ततश्च हे मातरित्यत्र ह्रस्वे कृते सर्वनामस्थानगुणः क्रियते । एतच्चाभ्युपगम्योच्यते ननु योगविभागस्य किंचिदस्ति प्रयोजनम् । सर्वनामस्थानगुणमिति । यद्यप्यबाधिते सर्वनामस्थानगुणे जसि गुणः फलतो न बाधितस्तथाऽपि लक्षणव्यवस्थानुसारेणैतदुच्यते । नह्ययं रादेशोऽनवकाशो यत ऋतो ङिसर्वनामस्थानयोरित्येतं गुणं बाधेत जसि चेति गुणबाधनेन, ऋत उदित्युत्वबाधनेन, शसि पूर्वसवर्णबाधनेन च सावकाशत्वात् । तस्मादिति । जसिग्रहणं ङिसर्वनामस्थानोपलक्षणमित्याहुः । तथा च प्रियतिस्राविति रादेशो भाष्य उदाहृतः । तेन प्रियतिस्रि निधेहीत्यत्रापि रादेशो भवति । केचित्त्वाहुः-चतसर्याद्युदात्तनिपातनमित्यत्र वार्तिके रादेशस्य ज्ञापकरणाज्जसोऽन्यत्र गुणविषये रादेशं वार्तिककारो नेच्छतीति नोपलक्षणं जस्ग्रहणम् ।

उ०-दीर्घाणां ह्रस्वविधानं गुणबाधनार्थमिति भावः । ननु जसि चेति गुणः प्राप्नोतीति ऋतो ङीत्यस्यानवकाशत्वविचारो निष्फलोऽत आह—स च नेति । परस्परं गुणाभ्यां स्थानिरूपनिमित्तविघाताद्विरोधोऽस्तीति भावः । योगविभाग इति । तत्र ह्रस्वस्येत्येको योगः । तत्राम्बार्थग्रहणं ह्रस्व इति चानुवर्तते तदयमर्थः—अम्बार्थानां ह्रस्वस्य ह्रस्वो भवतीति । एतच्च परत्वात्प्राप्तस्य ह्रस्वीयसंबुद्धिगुणस्य संबुद्धौ बाधनार्थमेवेति भावः । एवं च सर्वनामस्थानगुणो विध्यन्तराबाधेन प्रवृत्त्या सावकाश इति तात्पर्यम् । न त्विति । योगविभागेऽप्युपसंख्यानस्य वक्ष्यमाणरीत्याऽवश्यकर्तव्यादिति भावः । फलतो न बाधित इति । सर्वथा गुणस्य प्राप्तत्वात् । वस्तुतोऽथापि कथंचिदिति भाष्यस्यायमर्थः । येन नाप्राप्तिन्यायेन सर्वनामस्थानगुणः पूर्वसवर्णदीर्घमेव बाधते न रादेशमित्यर्थः । एवं च बाध्यविशेषचिन्ताश्रयणेऽत्रापि तथैव दोषः । तस्माज्जस्युपसंख्यानं कर्तव्यमिति चोद्यान्तमेवेदमेकदेशयुक्तिरूपं भाष्यम् । समाधितत्त्वं तु लक्ष्यानुरोधादृतो ङीत्यत्र बाध्यविशेषचिन्ताश्रयणमत्र तु बाध्यसामान्यचिन्ताश्रयणमिति न वाऽनवकाशत्वादस्येत्यनेनोक्तमेवेति सुधियो विभावयन्तु । केचित्त्वाहुरिति । अत्रारुचिबीजं तु तत्र शब्दपरत्वाद्रादेशाप्राप्तिरिति ।

* ७. २. १०१। + ७. ३. ११०।

**जराया जरसन्यतरस्याम् ॥ ७ । २ । १०१ ॥**

नुमोऽनङ्जरसौ भवतो विप्रतिषेधेन । नुमोऽवकाशः*—त्रपुणी जतुनी तुम्बुरुणी । अनङोऽवकाशः+—प्रियसक्थ्ना ब्राह्मणेन । इहोभयं प्राप्नोति—दध्ना सक्थ्ना । जरसोऽवकाशः—जरसा जरसे । नुमोऽवकाशः×—कुण्डानि वनानि । इहोभयं प्राप्नोति—अतिजरांसि ब्राह्मणकुलानि । अनङ्जरसौ नुमो भवतो विप्रतिषेधेन ।

अथेह लुक्कस्मान्न भवति÷—अतिजरसं पश्येति । किं पुनः कारणं द्वितीयैकवचनमेवोदाह्रियते न पुनः प्रथमैकवचनमपि—अतिजरसं तिष्ठतीति । अस्त्यत्र विशेषः । नात्राकृतेऽम्भावे† जरस्भावः प्राप्नोति । किं कारणम्? अचीत्युच्यते । यदा च जरस्भावः कृतस्तदा लुग्न भविष्यति संनिपातलक्षणो

प्र०— जराया:० । प्रियसक्थ्नेति । नपुंसकेनाङ्गस्य विशेषणान्नुमोऽत्राप्राप्तिरनङ्विधौ त्वस्थ्यादीनां विशेषणं नपुंसकमित्यनङ् भवति । अतिजरांसीति । अतिजर अस् इति स्थिते यदि पूर्वं नुमागमः स्यात्, स च पूर्वाङ्गभक्तोऽङ्गमेव न व्यवदध्यात् । अवयवस्य तु जराशब्दस्य व्यवधायक इति निर्दिश्यमानस्याऽऽदेशो विधीयमानो न प्राप्नोति । अथापि स्यात्तथाऽपि सकारात्परस्य नुमः श्रवणं स्यात्तस्मात्परत्वापूर्वं जरस्भाव एष्टव्यः । तत्र कृते झलन्तलक्षणो नुमागमः । अतिजरसं पश्येति । अतिजर अम् इति स्थित एकदेशविकृतस्यानन्यत्वाज्जरशब्दस्य जरसि कृते स्वमोर्नपुंसकादिति स्वमोर्लुक्प्राप्नोति । ननु चातिजरशब्दस्यादन्तत्वादतोऽमित्यम्भावेन लुग् बाधितः कथं प्राप्नोति । नैतदस्ति । नात्राम्भावः प्रवृत्तः परत्वान्नित्यत्वाद्वा जरसादेशेन बाधितत्वाज्जरसादेशे कृतेऽनकारान्तत्वादम्भावाप्रसङ्गाल्लुक्प्राप्तिश्चोद्यते । न पुनरिति । सोरपि लुङ् नेष्यते । यदा च जरस्भाव इति । या पूर्वं लुक्प्राप्तिः

उ०— जराया जरस्० । ननु प्रियसक्थ्नेत्यत्रापि सक्थिशब्दस्य नपुंसकत्वान्नुमः प्राप्त्या कथमनङोऽवकाशोऽत आह—नपुंसकेनेति । नुम्जरसोर्विप्रतिषेधस्य फलं दर्शयति—अतिजर अस् इति स्थित इति । याडसीति सूत्रोक्तरीत्या जरसादेशापेक्षया पूर्वविप्रतिषेधेन विभक्त्यादेशशिभावे कृत इति शेषः । अन्यथा सर्वनामस्थानपरत्वाभावेन नुमोऽप्राप्तिरेव स्यात् । स चाङ्गभक्त इति पाठ उचितः । अथापि स्यादित्यभ्युपगमवादः स्वमोर्लुगिति । न चास्यामवस्थायाममूप्रसङ्गः, अनदन्तत्वात् । ननु पूर्वममा बाधितस्य लुकः कथं पुनः प्रवृत्तिर्भ्रष्टावसरत्वादिति शङ्कते—ननु चेति । भ्रष्टावसरन्यायोऽत्र शास्त्रे नाऽऽश्रीयत इत्युत्तराशयः । परत्वान्नित्यत्वाद्वेति । चिन्त्यमेतत् । अपरनिमित्तकत्वेन प्रकृतिसामान्यापेक्षत्वेन विभक्त्यादेशस्यान्तरङ्गत्वात् । अत एव नुम्जरसोर्विप्रतिषेध उक्तः संगच्छते । किंचान्तरङ्गानपीति न्यायेन लुको बलवत्त्वात्तद्बाधेनामादेशप्रवृत्तिं विना जरसोऽप्रवृत्तेः ।

* ७. १. ७१. + ७. १. ७५. × ७. १. ७२ ÷ ७. १. २१. † ७. १. २४.

विधिरनिमित्तं तद्विघातस्येति । यद्येवमतिजरसम्, अतिजरसैरित्यत्र* न प्राप्नोति× अतिजरम्, अतिजरैरिति भवितव्यम्। गोनर्दीय आह—इष्टमेवैतत्संगृहीतं भवति। अतिजरम्, अतिजरैरिति भवितव्यं सत्यामेतस्यां परिभाषायां संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति।

---

प्र०—साऽपवादेन बाध्यते। कृते तु जरस्भावे संनिपातपरिभाषयाऽजादिसंनिपातेन जरस्भावो निष्पन्नो नोत्सहतेऽजाद्यानन्तर्यं विहन्तुम्। यद्येवमिति। सोर्भिसश्चाकारान्तसंनिपातेनाजादिरादेशोऽकारान्तविघातिनं जरसादेशं प्रत्यनिमित्तं स्यात्। इष्टमिति। संनिपातपरिभाषावशात्। अतिजरसं पश्येत्यत्र तु नकारान्तसंनिपातकृत-

---

उ०—पुनर्लुगापादानं तु भिन्ननिमित्तकत्वान्न दोषायेति बोध्यम्। साऽपवादेनेति। अम्भावेनेत्यर्थः। संनिपातपरिभाषयेति। बाध्यत इत्यनुषङ्गः। तदुपपादयति—अजादीति। अनिमित्तं स्यादिति। इत्यत्र न प्राप्नोतीति भाष्यस्थ जरसादेश इति शेषः। नचानयैव परिभाषया द्वितीयान्तेऽपि जरस्भावो न स्यादत आह—अतिजरसं पश्येति। नाकारान्तसंनिपातकृतमिति। किंतु तदभावेऽप्यजादित्वमस्तीति भावः। एवं च संनिपातलक्षणविधिं विनाऽपि यस्य प्रवृत्तियोग्यता तत्र नायं न्याय इति तात्पर्यम्। केचित्त्वमि कृते संनिपातलक्षणविधिनिमित्त एव जरसादेश इति न भवत्येव द्वितीयैकवचनेऽपि जरस्। कैयटोक्तार्थे तु न मानम्। अमः पूर्वं तु सर्वतो बलवल्लुक्प्राप्त्या न जरस्। शिभाववदुक्तयुक्तेश्च। अत एव साधारण्येनैवातिजरमिति भवितव्यमिति भगवतोक्तम्। अत एव टाङसीति सूत्रेऽतिजरेणेत्येव रूपं संनिपातपरिभाषया कैयटेनोक्तमित्याहुः। एवं च तत्र लुक्प्राप्तिचोद्यमप्यर्थात्परिहृतमेवेति भगवता साक्षान्नोक्तः परिहारः। परे त्वतिजरसं पश्येत्यत्र लुक् कस्मान्न भवतीति पूर्वपक्षे परेणातिजरसं तिष्ठतीति कुतो नोदाह्रियत इति प्रश्ने पूर्वपक्षिणा क्रियमाणे विशेषोपपादने मात्राकृतेऽम्भावे जरस्प्राप्नोति कृते च जरसि न लुकः प्राप्तिः संनिपातपरिभाषयेत्युक्तिरनुचिता। तथा सति स्वपूर्वपक्षस्याप्यपगमेनास्त्यत्र विशेष इति प्रतिज्ञाहानेः। तस्मादेवं पाठ उचितोऽस्त्यत्र विशेषो नाकृतेऽम्भावे जरस् प्राप्नोति किं कारणमचीत्युच्यते यदा चाम्भावः कृतस्तदा जरस् न प्राप्नोति संनिपातेत्यादि। दृश्यते चातिचिरंतनपुस्तकेषु तथा पाठः। एवं च प्रथमैकवचन इदं रूपमेव दुर्लभमिति भावः। एवं तर्हि द्वितीयैकवचनेऽपि जरस् प्राप्नोतीति शङ्कते—यद्येवमतिजरसमित्यादि। इत्यक आशयः। सिद्धान्ती इष्टापत्त्या परिहरति—इष्टमेवैतदित्यादिना। एवं च द्वितीयैकवचने लुगापत्तिः समाहिता। किंच द्वितीयैकवचने लुक् कृतो

---

## त्यदादीनामः ॥ ७ । २ । १०२ ॥

## त्यदादीनां द्विपर्यन्तानामकारवचनम् ॥ १ ॥

त्यदादीनां द्विपर्यन्तानामत्वं वक्तव्यम् । किं प्रयोजनम् ? युष्मदस्मदन्तानां भवदन्तानां वा मा भूदिति+ । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।

त्यदादीनामकारेण सिद्धत्वाद्युष्मदस्मदोः ।
शेषे लोपस्य लोपेन ज्ञायते प्राक्ततोऽदिति ॥ १ ॥

---

प्र०—मजादित्वं भवतीति भवत्येव जरसादेशः । स त्वजादिसंनिपातनिमित्तत्वादजादेर्लुकं प्रत्यनिमित्तमिति लुगभावः ।

त्यदा० । युष्मदस्मदन्तानामिति । युष्मद्भवतु अस्मद् इति येषां गणपाठस्तदपेक्षयैतदुक्तम् । यद्यप्यस्मच्छब्द एवान्तस्तथाऽप्यत्यन्तसाहचर्याच्छास्त्रे युष्मदस्मदोर्युष्मच्छब्दो निर्दिष्टः । भवदन्तानां वेति । युष्मद् अस्मद्भवत्विति पाठापेक्षमेतत् । किंशब्दस्य तु कादेशेन भवितव्यमिति त्यदादीनामन्तेऽपि किमः पाठे किमन्तानामिति नोक्तम् । केचित्तु द्विशब्दात्पूर्वं किंशब्दमधीयते । तेन किंसर्वनामबहुभ्योऽद्व्यादिभ्य इति किमो भेदेन ग्रहणं न कर्तव्यं भवति । तत्र भवच्छब्दस्यात्वापत्तिर्दोषो युष्मदस्मदोस्त्वात्वयत्वलोपैरत्वं बाध्यत इति दोषाभावः । शेषे लोपस्य लोपेनेति । यः शेषे लोपः प्रसिद्धस्तत्संबन्धिना लोपशास्त्रेणेत्यर्थः । क्वचित्तु शेषे रूपस्य लोपेनेति पाठः । तत्रायमर्थः । शेषे विषये रूपस्य लोपो विधीयते येन तेन । ततोऽदिति । वृत्तपूरणार्थस्तपरनिर्देशः । सूत्रे त्वतपर एवाकारो

---

उ०—नेति प्रश्ने परेण प्रथमैकवचनमपि कुतो नोदाह्रियत इति शङ्किते पूर्वपक्षिणा तत्र विशेष उपपादिते यद्येवमिति ग्रन्थः परस्य पूर्वपक्षिणं प्रतीति स्वरसतः प्रतीयते । अतस्तस्य त्वदुदाहृतद्वितीयैकवचनविषयतैवोचितेति मदुक्तपाठ एवोचित इत्याहुः ।

त्यदादीनामः । नन्वत्र पाठेऽस्मदन्तानामित्येव वक्तुमुचितमत आह—यद्यपीति । केचित्तु भवतु युष्मदस्मदिति पाठाश्रयेण भाष्यमित्याहुः । अत्यन्तेति । युष्मदस्मभ्यामित्यादौ । नन्वन्ते किमः पाठात् किमन्तानामिति वक्तुमुचितमत आह—किंशब्दस्य त्विति । नन्वेवमपि भवदन्तानामित्ययुक्तम् । अग्रे कस्याप्यभाव एवान्तशब्दप्रयोगात् । अत्र च किंशब्दोऽग्रेऽस्ति भवत्पर्यन्तानामिति वक्तुं युक्तम् । अत एव वार्तिके परिशब्दोच्चारणमत आह—केचित्त्विति । तन्मतानुसारेण तथोक्तमिति भावः । वार्तिकानारम्भे दोषं दर्शयति—तत्रेति । ननु लोपस्य लोपेनेत्ययुक्तम् । लोपस्य लोपान्तराभावादत आह—यः शेष इति । लोपशब्देन तद्विधायि शास्त्रं लक्ष्यत इत्यर्थः । लोप इति करणे घञिति भावः । वृत्तपूरणार्थे

---

+ १. १. २७; ग॰.

यदयं त्यदादीनामत्वेन सिद्धे युष्मदस्मदोः शेषे लोपं शास्ति× तज्ज्ञापयत्याचार्यः प्राक्तोऽत्वं भवतीति । न सर्वेषामिति ।

अपि वोपसमस्तार्थमत्वाभावात्कृतं भवेत् ।

नैतदस्ति ज्ञापकम् । उपसमस्तार्थमेतत्स्यात्—अतियूयम्, अतिवयम् । उपसमस्तानां हि त्यदादीनामत्वं नेष्यते—अतितत्, अतितदौ, अतितदः ।

टिलोपष्टाबभावार्थः कर्तव्य इति तत्स्मृतम् ॥ २ ॥

यस्तु शेषे लोपष्टिलोपः स वक्तव्यः । किं प्रयोजनम्? टाप्प्रतिषेधार्थम् । टाब्मा भूदिति । स तर्हि टिलोपो वक्तव्यः? न वक्तव्यः ।

प्र०–निर्दिष्टः । अपि वेति । ज्ञापकत्वं विघटयति । उपसर्जनानां त्यदाद्यत्वाभावादुपसर्जनयुष्मदस्मदर्थो लोपः स्यात् । अतियूयमिति । त्वामतिक्रान्ता इति प्रादिसमासः । टिलोप इति । अत्वे सति टाप्प्रसङ्गात्तदभावार्थः शेषे लोपष्टिलोपः सति प्रयोजने न ज्ञापकम् । अलिङ्गे युष्मदस्मदी इत्यनभ्युपगम्यैतदुच्यते । एकपदवाच्यस्याप्यर्थस्य शब्दान्तराभिव्यङ्ग्यत्वं दृश्यते । अश्वस्त्वं ग्राममिति लिङ्गवत्त्वं कैश्चित्तयोरभ्युपगतम् । अत एव नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा इति विप्रतिषेधः पठितो न षट्स्वस्रादिभ्य इति च स्त्रीप्रत्ययनिषेधः षड्भ्यः कृतः । स तर्हीति । नन्वनेन सिद्धत्वाद्वचनाट्टिलोपो भविष्यति । नैतदस्ति । सर्वादेशः स्यादुपसर्जनस्य

उ०–इति । चिन्त्यमेतत् । ततोऽहतीति पाठेऽपि वृत्तपूरणात् । मुखसुखार्थं इति वक्तुमुचितम् । सूत्रे त्वतपर एवेति । ननु वार्तिकदर्शनेन सूत्रे तपरपाठ इति भ्रमितव्यमित्यर्थः । भाष्यमात्रस्य सवर्णग्राहकत्वेन तपरत्वे फलाभावादिति तात्पर्यम् । अपि वेति दर्शनादुक्तेऽर्थे हेत्वन्तरत्वभ्रमं वारयति—विघटयतीति । अपि वेति पादपूरणार्थमिति भावः । उपसर्जनानामिति । तेषां पाठादेव पर्युदासादिति भावः । भाष्ये प्रयोजनान्तरमाह—टिलोप इति । मपर्यन्ताच्छेपविज्ञानं शेष इति च स्थानिनोऽधिकरणत्वविवक्षया सप्तमीति भावः । नन्वहं ब्राह्मण इत्यादौ पदान्तरसमभिव्याहारादेव लिङ्गप्रतीत्युपपत्तौ किमर्थं तेषां लिङ्गवत्त्वाभ्युपगमः पदान्तरसमभिव्याहारं विनाऽप्रतीतेरयुक्तश्चेत्यत आह—एकपदेति । अश्वस्त्वमिति । त्वं ग्रामं गतवानित्यर्थः । श्वयतेर्लुङि मध्यमपुरुषैकवचनम् । यद्यप्यश्व इत्येतदेव क्रियावाचि तथाऽपि तस्य जातिविशेषे रूढत्वात्पदान्तरसमभिव्याहारादेव तत्त्वव्यक्तिः । एवं सत्त्वभूतस्यार्थस्य लिङ्गवत्त्वाव्यभिचारादेतावेव लिङ्गाभिधायिनौ किंतु शब्दान्तरप्रयोग एव तदभिव्यक्तिर्नान्यथा । रूपस्य साधारणत्वादिति भावः । न पठितेति दृष्टान्तार्थम् । भाष्ये—स तर्हि वक्तव्य इति । टिग्रहणं कर्तव्यमित्यर्थः । तत्र तद्विनाऽपि सामर्थ्यात्तल्लोपो भविष्यतीति

× ७. २. ९०.

अथवा शेषसप्तम्या शेषे लोपो विधीयते ।

इह युष्मदस्मदोर्लोप इतीयताऽन्त्यस्य लोपः सिद्धः । सोऽयमेवं सिद्धे सति यच्छेषग्रहणं करोति तस्यैतत्प्रयोजनमवशिष्टस्य लोपो यथा स्यादिति ।

लुप्तशिष्टे हि तस्याऽऽहुः कार्यसिद्धिं मनीषिणः ॥ ३ ॥

---

उ०–चात्वासिद्धिरुक्ता । अथवेति । उक्तमेतल्लोपमुत्सर्गं विधायानादेशे हलादावात्वमजादौ तु यत्वमपवादो विधास्यत इति शेषग्रहणं विभक्तिविशेषणार्थमनर्थकम् । तत्क्रियते लोपस्य विषयार्थं मपर्यन्ताद्योऽन्यः स शेषः स च टिरेव तस्य लोपस्य स्थानी विषयसप्तम्या निर्दिष्टः । नन्वेवं तव ममेत्यादावादेशेषु मपर्यन्तभावात्तदपेक्षयाऽच्छब्दस्य शेषव्यपदेशाभावाल्लोपाभावप्रसङ्गः । नैष दोषः । प्रागादेशविधानादच्छब्दः शेषत्वेन परिच्छिन्न इति परिच्छेदायोपादानादतन्त्रत्वं मपर्यन्तस्य । लुप्तशिष्टे हीति । लुप्ते यः शिष्टस्तस्मिन् कार्यस्य टावभावस्य सिद्धिः । तवममादिषु चाऽऽदेशेष्वकार उच्चारणार्थो हलन्ता एव त्वादेशा इति न कचि-

---

उ०–शङ्कते,—नन्विति । न वक्तव्य इत्यत्र भाष्ये हेतुः—अथवेति । यत इत्यर्थः । निपातानामनेकार्थत्वात् । वार्तिकस्थशेषसप्तम्येत्यस्य शेषार्थपर्यवसायिन्या सप्तम्येत्यर्थः । तदाह—विषयसप्तम्येति । आदेशेष्विति । परत्वादिति भावः । प्रागादेशेति । सांप्रतिकाभावे भूतपूर्वगतिराश्रीयत इत्यर्थः । यद्यपि युष्मभ्यमित्यत्राभ्यम्पक्षे सांप्रतिकसंभवस्तथा नैकमुदाहरणं योगारम्भं प्रयोजतीति भावः । लुप्तशिष्टे हीति भाष्येण पूर्वोक्तार्थस्यैव समर्थनं तदाह—लुप्ते य इति । 'मनीषिण आचार्या यत्तस्य शेषग्रहणस्य फलमाहु'रित्यन्वयः । कार्यशब्देन प्रकृतत्वाट्टावभाव एवोच्यत इत्याह—टाबभावस्येति । नन्वेवं तवाद्यादेशे परत्वादाङ्गत्वाच्च पररूपात्पूर्वं टिलोपे टावापत्तिरस्त्येवेत्यत आह—तवममादिषु चेति । त्वाहौ साविति गुरुनिर्देशस्तु श्वेतह्नोक्यशसितिवन्नार्थसाधक इति भावः । नन्वेवं ण्यन्तात्क्विपि युष्म इति प्रातिपदिकस्य तवाद्यादेशे शेषे लोपस्यान्त्यलोपत्वे वकारादिलोपे त्वं तवेत्यादि मपर्यन्तसूत्रकैयटोक्तरूपासिद्धिः । तं तेत्याद्यापत्तिश्चेति वाच्यम् । मपर्यन्तसूत्रशेषकैयटोक्तकेषांचिन्मते दोषाभावादन्त्यकैयटात्तदेव ग्रन्थकृतोऽभिमतमिति लक्ष्यते । वस्तुतः संनिपातपरिभाषयाऽपि टाब्वारयितुं शक्यः । न च 'न यासयो'रिति लिङ्गाट्टाब्विषये न सेति वाच्यम् । त्यदाद्यत्वविषयेऽनित्यत्वमात्रकल्पनेऽपि टाब्विषये सर्वथाऽप्रवृत्तिकल्पने मानाभावात् । अत एव मुद्राविरयादौ टाब्व्यावृत्तिः संनिपातपरिभाषया भाष्ये कृन्मेजन्तसूत्र उक्ता । इदमेवाऽऽहुरित्यत्र भाष्येऽस्वरसबीजमित्याहुः । अस्मादेव कैयटग्रन्थात्तदेव मतं कैयटाभिप्रेतमिति लक्ष्यत इति । ननु

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति न सर्वेषां त्यदादीनामत्वं भवतीति यदयं किमः कः [ ७. २. १०३ ] इति कादेशं शास्ति । इतरथा हि किमोऽद्भवतीत्येव ब्रूयात् । सिद्धे विधिरारभ्यमाणो ज्ञापकार्थो भवति, न च किमोऽत्वेन सिध्यति । अत्वे हि सत्यन्त्यस्य प्रसज्येत । सिद्धमन्त्यस्य पूर्वेणैव, तत्राऽऽरम्भसामर्थ्यादिकारस्य भविष्यति । कुतो नु खल्वेतदनन्त्यार्थ आरम्भे सतीकारस्य भविष्यति न पुनः ककारस्य स्यात् ? यत्तर्हि किमो ग्रहणं करोति । इतरथा हि कादद्भवतीत्येव ब्रूयात् । एवमपि ककारमात्रात्परस्य प्राप्नोति । त्यदादीनामिति वर्तते, न चान्यत्किमस्त्यदादिषु ककारवदस्ति । एवमप्यनैकान्तिकं ज्ञापकम् । एतावत्तु ज्ञाप्यते न सर्वेषां त्यदादीनामत्वं भवतीति तत्र कुत एतद्द्विपर्यन्तानां भविष्यति, न पुनर्युष्मदस्मदन्तानां वा स्याद्भवदन्तानां वा । किंचावश्यं खल्वप्युत्तरार्थं किमो ग्रहणं कर्तव्यम् । 'कु तिहोः' 'क्वाति' [ १०४; १०५ ] इति । कादेशः खल्वप्यवश्यं साकच्कार्थो वक्तव्यः-कः कौ क इत्येवमर्थम् । तस्माद्द्विपर्यन्तानामत्वं वक्तव्यम् ।

---

प्र०–द्व्यप्रसङ्गः । यदयमिति । किंसर्वनामबहुभ्य इति किंशब्दस्य भेदेनोपादानाद्द्विशब्दात्परः किंशब्दो गणे पठ्यत इति निर्णयः । यदि च द्विशब्दात्परेषामत्वं स्यात्किमः कं न विदध्यात् । किम इत्येव ब्रूयात् । पूर्वसूत्रादकारस्यानुवृत्त्या पूर्वेणान्त्यस्यात्वे कृत इकारस्य तु किम इत्यनेन द्वयोरकारयोः पररूपेण क इत्यादेः सिद्धत्वात् । न पुनः ककारस्येति । अनन्त्यस्य विकारेऽन्त्यसदेशस्येति तु परिभाषा प्रयोजनाभावात्प्रत्याख्याता । काददृवतीति । ककारेऽकार उच्चारणार्थः । कादित्येतावत्सूत्रं क्रियतेऽकारस्तु पूर्वसूत्रादनुवर्त्तते, स चाऽऽदेः परस्येतीकारस्य भवति मकारस्य तु पूर्वेण । ककारमात्रादिति । कृकवाकुरित्यादावपि । न चान्यदिति । यद्यपि सर्वाणि त्यदादीन्यकचा ककारवन्ति तथाऽपि तेषां कात्परोऽकार एवेति नास्ति विशेषः । द्विकिंशब्दस्य तु त्यदाद्यत्वं भवत्येव । एवमपीति । विशेषस्य निश्चेतुमशक्यत्वात्प्रमाणाभावात् । साकच्कार्थं इति । सर्वस्य साकच्कस्य कादेशो यथा स्यादित्येवमर्थं किमः क इति

---

उ०–केषांचिन्मते द्वेः पूर्वं किमः पाठात्कथं ज्ञापकत्वमत आह—किंसर्वनामेति । अन्यथाऽद्व्यादिभ्य इति पर्युदासाभावात्किंशब्दो न सूत्रे पठनीयः स्यादिति भावः । किम इत्येवेति । भाष्ये तु किमोऽदित्यधिकारसिद्धोऽर्थो दर्शितः । किम इत्यनेनेति । अत्वे कृत इत्यनुषङ्गः । प्रयोजनाभावादिति । यद्यप्यदमुयङित्यादिप्रयोजनानि सन्त्येव तथाऽपि तदनाश्रित्येयमेकदेश्युक्तिः । प्रकारान्तरेणास्य ज्ञापकस्य खण्डनाच्च सिद्धान्तिनोऽपि तदनादर । भाष्ये—यत्तर्हि किम इति । पूर्वं किम इत्येव सूत्रं कार्यं विशिष्टादेशविधानं ज्ञापकमित्युक्तम् । इदानीं तु किम इत्यंशोऽपि ज्ञापकमित्युच्यत इति विशेषः । ननु किंशब्दे कशब्दोऽप्रसिद्धोऽत आह—ककारेऽकार इति । क इत्येवेति । प्रकरणादिवशाच्चार्थविशेषावगतिरिति भावः ।

त्यदादीनामकारेण सिद्धत्वाद्युष्मदस्मदोः ।
शेषे लोपस्य लोपेन ज्ञायते प्राक्ततोऽदिति ॥ १ ॥
अपि वोपसमस्तार्थमत्वाभावात्कृतं भवेत् ।
टिलोपष्टाचभावार्थः कर्तव्य इति तत्स्मृतम् ॥ २ ॥
अथवा शेषसप्तम्या शेषे लोपो विधीयते ।
लुप्तशिष्टे हि तस्याऽऽहुः कार्यसिद्धिं मनीषिणः ॥ ३ ॥

**क्वाति ॥ ७ । २ । १०५ ॥**

किमर्थं क्वादेश उच्यते न कुतिहास्त्वित्येवोच्येत* ? का रूपसिद्धिः ? क्व । यणादेशेन सिद्धम् । न सिध्यति । ओर्गुणः प्रसज्येत+ ।

**तदोः सः सावनन्त्ययोः ॥ ७ । २ । १०६ ॥**

*किमर्थमनन्त्ययोरित्युच्यते ? अन्त्ययोर्मा भूदिति । नैतदस्ति प्रयोजनम् ।*

---

प्र०—कर्तव्यम् । तेनाज्ञातार्थविवक्षायां क इत्येव भवति, न तु कक इति भवति । ननु निर्दिश्यमानस्याऽऽदेशा भवन्तीति साकच्कस्य कादेशो न प्राप्नोति । नच शक्यं वक्तुं किमः क इति वचनसामर्थ्याद्भवतीति । किम इति स्थानिनिर्देशस्योत्तरार्थत्वात् । एवं तर्हि तन्त्राश्रयणात्साकच्कस्यापि भवतीत्यदोषः ।

क्वाति । किमर्थमिति । कुभावे कृतेऽङ्गवृत्त इति वचनादोर्गुणो न भवति । यणादेशस्त्वनाङ्गत्वाद्भविष्यतीति भावः । न सिध्यतीति । निष्ठितत्वस्य दुर्ज्ञानत्वात् ।

तदोः० । किमर्थमिति । विशेषणविशेष्यभावे कामचारात्त्यदादीनां च द्विपर्य-

---

उ०—तन्त्राश्रयणादिति । केचित्त्विम इत्येव सूत्रं कार्यं त्यदादीनामित्यनुवर्तनाच्च नातिप्रसङ्गः । सामर्थ्याच्च द्विपर्यन्तानामित्यस्यात्र त्यागः । नानर्थक इति निषेधान्नालोऽन्त्यविधिः । अकारप्रश्लेषेणानेकाल्त्वाद्वा सर्वादेशः । इमावित्यादौ तु नाङ्गकार्यं इति निषेधात् । कु तिहोः क्वातीत्यत्रापि 'उ तिहोः', 'अती'त्येव पाठ्यम् । अङ्गवृत्तपरिभाषया क्वेत्यत्र गुणो न । एवं सिद्धे 'किमः क' इति सूत्रकरणान्निर्दिश्यमानपरिभाषाबाध इति तत्र उ तिहोरित्याद्युकारस्यान्त्यादेशत्वापत्तेः । तदर्थं नानर्थक इति वचनारम्भे तु विपरीतं गौरवम् । अङ्गवृत्तपरिभाषाया लक्ष्यसिद्ध्यर्थत्वाभावाच्च । तस्मात्कैयटोक्तमेव सम्यक् । अनित्यत्वेन वा तत्परिभाषाऽप्रवृत्तिर्बोध्या ।

क्वाति । ननु वार्णादाङ्गपरिभाषया यणं बाधित्वौर्गुणः स्यादत आह—कुभाव इति ।

तदोः सः सौ० । नन्वन्त्यव्यावृत्त्यर्थमनन्त्ययोरिति स्यादत आह—विशेषणेति ।

---

* ७. २. १०४. + ६. ४. १४९.

अत्वमन्त्ययोर्बाधकं भविष्यति×। अनवकाशा विधयो बाधका भवन्ति साव-काशं चात्वम्। कोऽवकाशः? द्विशब्दः। सत्वमपि सावकाशम्। कोऽवकाशः? अनन्त्यः। कथं पुनः सत्यन्त्येऽनन्त्यस्य सत्वं स्यात्? भवेद्यस्तकारदकारा-भ्यामङ्गं विशेषयेत्तस्यानन्त्ययोर्न स्याद्वयं तु खल्वङ्गेन तकारदकारौ विशेषयि-ष्यामः। एवमप्युभयोः सावकाशयोः परत्वात्सत्वं प्राप्नोति। किंच स्याद्यद-न्त्ययोः सत्वं स्यात्? इह हे स इत्येङ्ह्रस्वादिति÷ संबुद्धिलोपो न स्यात्।

प्र०—त्वानां मध्ये तकारान्तस्य कस्यचिदसंभवात्त्यदादिभिर्विशेषितयोस्तदोः सत्वं विधीय-मानमनन्त्योः सावकाशमन्त्ययोरत्वेन बाधिष्यत इति प्रश्नः। अन्त्ययोरिति। परत्वात्प्राप्नोति तकारस्यान्त्यस्यासंभवेऽपि सूत्रे द्वयोरुपादानादन्त्ययोरित्युक्तम्। नैतदस्तीति। पूर्वविप्रतिषेधमाश्रित्य चोदयति—द्विशब्द इति। उदाहरणमात्रमेतत्। अन्यत्र सोः सर्व एव त्यदादयोऽवकाशः। सत्वमपीति। उभयोः सावकाशयोः परत्वात्सत्वप्रसङ्गः। कथं पुनरिति। आचार्यदेशीयः शिष्यबुद्धिपरिज्ञानाय पृच्छति। समुदायावयवसंनिधावुभयोरनुग्रहायावयवेन समुदायो विशेष्यते। एवं हि समुदाय-स्यापि कार्येण संबन्धः प्रतिपादितो भवति। अलोऽन्त्यस्येति वचनादवयवस्यापि। भवेदिति। व्याप्तिन्यायाश्रयणात्तकारान्तासंभवाच्च त्यदादिभिस्तदौ विशेष्येते। एवमपीति। सिद्धान्तवादी। अथवा सत्वमपीति चोदकस्य ग्रन्थः स च पूर्वविप्रतिषेधं मन्यते। कथं पुनरीति। चोदकमाचार्यो बुद्धिपरीक्षार्थं पर्यनुयुङ्क्ते। भवेदिति चोदकः। एवमपीत्याचार्यः। अथवा कथं पुनरित्यस्यायमर्थः—अनन्त्यस्यैव कथं सत्वं लभ्यते यावताऽन्त्यस्यापि परत्वात्प्राप्नोति। चोदकस्त्वगृहीताभिप्राय आह—भवेदिति। आचार्यः स्वाभिप्रायमाह—एवमपीति। किंच स्यादिति। अन्त्यस्यापि दस्य सत्वे हल्ङ्यादिलोपेन स इत्यादीनि सिध्यन्तीति मत्वा प्रश्नः। लोपो न स्यादिति। सत्वे सति ह्रस्वान्तत्वाभावात्। ननु त्यदाद्यत्वेऽपि कृते संनिपातपरिभाषया संबुद्धिलोपा-

उ०-हेरवन्तरमाह—त्यदादीनां चेति। बाधिष्यत इति। पूर्वविप्रतिषेधाश्रयेणेति भावः। परत्वात्सत्वप्रसङ्ग इति। पूर्वविप्रतिषेधाश्रयणं तु गुर्विति भावः। ननु तदोरित्येतदङ्गविशेषण-मिति पूर्वपक्षिसिद्धान्तिनोर्द्वयोरप्यसंमतमिति कस्येदं वाक्यमत आह—आचार्यदेशीय इति। तदोरित्यस्याङ्गविशेषणत्वमेव युक्तमिति तदाशयमाह—समुदायावयवेति। चोदकीय—'भवेद्य' इत्यादेराशयमाह—व्याप्तिन्यायेति। अथवेत्यादिपक्षद्वयेऽपि कथं पुनरित्यादिग्रन्थः सिद्धान्तिन एवेति विशेषः। तृतीये वक्ष्यमाणमाशयं हृदि निधाय सिद्धान्ती पर्यनुयुङ्क्त इति द्वितीयाद्विशेषः। अन्त्यस्यापि। अपिनाऽनन्त्यस्यापि। संनिपातेति। प्रत्ययलक्षणेन तु न संनिपातः। तस्याशास्त्रीयत्वादिति भावः। अनेकार्थ इति। अत्र विषये

× ७. २. १०२. ÷ ६. १. ६९.

इह च या सा 'अत' इति* टाप्न स्यात्। तस्मादनन्त्ययोरिति वक्तव्यम्। न वक्तव्यम्। एवं वक्ष्यामि—तदोः सः सौ। ततोऽदसः×। अदसश्च दकारस्य सो भवतीति। इदमिदानीं किमर्थम्? नियमार्थम्। अदस एव दकारस्य नान्यस्य दकारस्येति। यदि नियमः क्रियते-द्वीयतेरप्रत्ययो द्व इति प्राप्नोति, स्व इति चेष्यते। यथालक्षणमप्रयुक्ते।

## अदस औ सुलोपश्च ॥ ७ । २ । १०७ ॥

अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते।

अदस एव सोर्भवेदौत्वं+ किमर्थं सुलोपो विधीयते।

ह्रस्वाल्लुप्येत संबुद्धिः

इह हेऽसावित्येङ्ह्रस्वात्संबुद्धेः [ ६. १. ६९ ] इति लोपः प्रसज्येत।

न हलः

हलो लोपः संबुद्धिलोपः। तद्धल्ग्रहणं कर्तव्यम्? न कर्तव्यम्।

प्रकृतं हि तत् ॥ १ ॥

---

प्र०–प्रसङ्गः। अनित्यत्वादस्याः परिभाषाया नायं दोषः। इह चेति। न यासयोरिति लिङ्ग आश्रीयमाणेऽनेकार्थः कल्पनीयः स्यात्। ततोऽदस इति। तत्र तदोः सः साविति वर्तते। तकारोऽसंभवात्त्यज्यते। द्वीयतेरिति। द्वाविच्छतीति द्वीयति। ततः क्विप्। अकारयकारापृक्तलोपाः। ततः सावीकारस्य त्यदाद्यत्वे सति स इति भवति। तदभावे तु द्व इति प्राप्नोति। यथालक्षणमिति। उपसर्जनत्वान्नात्र त्यदादिकार्येण भाव्यमिति द्वीरित्येव भवति। अथवा प्रयुक्तानामन्वाख्यानारम्भाद्द्विशब्दस्य च क्यजन्तस्य क्विपि प्रयोगाभावान्न केनचिल्लक्षणेन प्रवर्तितव्यम्।

अदसः०। अदस इति। अदसः परस्य सोरेवौत्वं विधीयतां तत्र त्यदाद्यत्वे वृद्धिरेचीति वृद्धौ चासाविति सिध्यति। ह्रस्वादिति। यदि त्यदाद्यत्वं क्रियते तदा ह्रस्वान्तत्वात्संबुद्धिलोपप्रसङ्गः। तस्मादौत्वसुलोपौ विधीयेते। न हल इति। नायं दोषो

---

उ०–सत्यं बाधित्वाऽयं संनिपातपरिभाषाया अनित्यत्वं चेत्यर्थः। उपसर्जनत्वादिति। स्व इति चेष्यत इत्युक्तिः पूर्वपक्ष्येकदेशिन इति न तद्बलेनोपसर्जनेऽप्यत्वादिप्रवृत्तिरिति भ्रमः कार्यः। सर्वादिसूत्रस्थत्यदादीनाम इति सूत्रस्थभाष्यविरोधादिति भावः। अथवेति। अप्रयुक्ते प्रवृत्तप्रयोगो हि लक्षणव्यापार इति भावः।

अदस औ०। सोरेवेति। अदस औ इत्येव सूत्रं कार्यं पूर्वतोऽनुवृत्तस्य

---

* ४. १. ४. × ७. २. १०६. + ७. २. १०२; ६. १. ६९.

प्रकृतं हल्ग्रहणम्। क्व प्रकृतम्? हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल् [ ६. १. ६८ ] इति। तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः। ह्रस्वादित्येषा पञ्चमी हलिति प्रथमायाः षष्ठीं प्रकल्पयिष्यति तस्मादित्युत्तरस्य [ १. १. ६७ ] इति।

आप एत्वं भवेत्तस्मिन्

इह हेऽसौ ब्राह्मणि 'आङि चापः' 'संबुद्धौ च' [७. ३. १०५; १०६] इत्येत्वं प्रसज्येत।

न झलीत्यनुवर्तनात्।

झलीति तत्रानुवर्तते। क्व प्रकृतम्? 'सुपि च' 'बहुवचने झल्येत्' [ ७. ३. १०२; १०३ ] इति।

प्रत्ययस्थाच्च कादित्वम्

इह च असकौ ब्राह्मणीति प्रत्ययस्थात्कात्पूर्वस्य [ ७. ३. ४४ ] इतीत्वं प्रसज्येत। नैष दोषः। प्रश्लिष्टनिर्देशोऽयम्—आ आप् आविति। इहापि तर्हि न प्राप्नोति—कारिके हारिके इति।

शीभावश्च प्रसज्यते ॥ २ ॥

---

प्र०—यस्मादसौ हलो लोपो विधीयते तेनौकारस्य न भविष्यति। हे असाविति। अत्वे टापि च सति वार्णादाङ्गं बलीय इति वृद्धिरेचीति वृद्धिरेकादेशं बाधित्वाऽऽङि चाऽऽप इत्येत्त्वं प्राप्नोति। प्रश्लिष्टनिर्देशोऽयमिति। आकाररूपो यः श्रूयत आप्तत्रेत्त्वं भवतीह तु वृद्धौ कृतायामौकाररूपम्। कारिके इति। ओङ आप इति शीभाव आद्गुणे च कृत एकारः श्रूयत इतीत्त्वं न प्राप्नोति। संबुद्धौ वा कारिके इति रूपम्। ननु चात्रान्तरङ्गत्वात्प्राक्सुबुत्पत्तेरित्त्वं भविष्यति। असकावित्यत्र तु प्राक्सुबुत्पत्तेष्टाब्नास्ति। एवं तर्हि टापि कृत एकादेशात्पूर्वं वार्णादाङ्गं बलीय इतीत्त्वं प्राप्नोतीत्याकाररूप एवाऽऽविति किं प्रश्लेषनिर्देशेन। तस्मात्सामर्थ्याद्यथा वार्णादाङ्गमिति बाधित्वैकादेशो भवत्येवं कारिके इत्यत्राप्यन्तरङ्गत्वात्पूर्वं विभक्तितन्निमित्तकार्यप्रसङ्गः। शीभावश्चेति।

---

उ०—साविस्यस्मादस इति पञ्चम्या षष्ठी कल्प्येति भावः। आङि चाप इत्येत्त्वमिति। तत्रानुवर्तमाने संबुद्धौ चेत्येत्त्वमित्यर्थः। इति रूपमिति। एवं च प्रश्लेषो वक्तुमशक्य इति भावः। नन्विति। एवं च कारिके इत्यादावित्त्वाप्रसिद्दोषो न प्रश्लेषेऽपीति भावः। तस्मात्सामर्थ्यादिति। प्रश्लिष्टनिर्देशसामर्थ्यादित्यर्थः। अन्तरङ्गत्वात्पूर्वमिति पाठः।-अन्तरङ्गादपीत्त्वात्पूर्वमित्यर्थः। तस्माद्दोषवान्प्रश्लेष इति भावः। किंचैवं प्रासजीविक

इह च शीभावश्च प्राप्नोति—असौ ब्राह्मणी । आप उत्तरस्यौङः शी भवतीति* शीभावः प्राप्नोति । तस्मात्सोर्लोपो वक्तव्यः ।

**सावौत्वप्रतिषेधः साकच्काद्वा सादुत्वं च ॥ १ ॥**

सावौत्वप्रतिषेधः साकच्काद्वा वक्तव्यः । सा परस्योत्वं वक्तव्यम्—असकौ असुकः ।

**उत्तरपदभूतानामादेश उपदेशिवद्वचनम् ॥ २ ॥**

उत्तरपदभूतानां त्यदादीनामादेश उपदेशिवद्भावो वक्तव्यः—परमाहम्, परमायम्, परमानेन । किं प्रयोजनम् ?

**अनादिष्टार्थम् ॥ ३ ॥**

अकृत एकादेश आदेशा यथा स्युरिति । किं पुनः कारणमेकादेशस्तावद्भवति न पुनरादेशाः, न परत्वादादेशैर्भवितव्यम् ?

**बहिरङ्गलक्षणत्वात् ॥ ४ ॥**

बहिरङ्गा आदेशाः । अन्तरङ्ग एकादेशः । असिद्धं बहिरङ्गमन्तरङ्गे ।

स तर्ह्युपदेशिवद्भावो वक्तव्यः ? न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेश इति यदयं नेन्द्रस्य परस्य [७.३.२२] इति प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् ? इन्द्रे द्वावचौ । तत्रैको यस्येति+ लोपेनापह्रियतेऽपर एकादेशेन । अनच्क इन्द्रः संवृत्तः । तत्र को वृद्धेः प्रसङ्गः ? पश्यति त्वाचार्यः पूर्वपदोत्तरपदयोस्तावत्कार्यं भवति नैकादेश इति ततो नेन्द्रस्य परस्येति प्रतिषेधं शास्ति ।

अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते ।
ह्रस्वाल्लुप्येत संबुद्धिर्न हलः प्रकृतं हि तत् ॥ १ ॥

प्र०—औङ इति वचनादौकारस्य यदा ङिदादेशानुमानं वर्णमात्रनिर्देशो वा ङकारस्तूच्चारणार्थस्तदा शीभावप्रसङ्गः । यदा पूर्वसूत्रेण निर्देशस्तदा प्रथमाद्वितीयाद्विवचनयोरेव शीभावेन भाव्यमिति दोषाभावः । इत्त्वमपि प्रश्लेषनिर्देशेन शक्यं परिहर्तुम् । न च कारिके इत्यत्र दोषः, समानकालप्राप्तिकमेव ह्येकादेशमित्त्वं प्रबाधते ननु भिन्नकालप्राप्तिकम् । साप्‌अकादिति । साकच्काशः सुविहितस्तस्मिन्नित्यर्थः । प्रतिषेधसंनियोगेन सात्परस्याकारस्यौत्वं भवति । बहिरङ्गा आदेशा इति । समासाश्रया विभक्तिरुत्पन्नेति

उ०—रूपसिद्ध्याऽपि अत्र प्रश्नेऽयो वक्ष्यमाणः । भाष्ये—इह च शीभाव इति । चकारार्थे । यदा शीभावेति । औत्वं तु पुंसि चरितार्थम् । ह्रस्वमर्यादाद्यप्यन्यथा सिद्ध्यः, इत्यपुरुः ।

* ७. १. १८. + ६. ४. १४८.

आप एवं भवेत्तस्मिन्न झलीत्यनुवर्तनात् ।
प्रत्ययस्थाच्च कादित्त्वं शीभावश्च प्रसज्यते ॥ २ ॥

**मृजेर्वृद्धिः ॥ ७ । २ । ११४ ॥**

**मृजेर्वृद्धिविधौ क्विप्रतिषेधः ॥ १ ॥**

मृजेर्वृद्धिविधौ क्वयन्तस्य प्रतिषेधो वक्तव्यः । कंसपरिमृड्भ्याम् कंसपरिमृड्भिः ।

**धातोः स्वरूपग्रहणे वा तत्प्रत्ययविज्ञानात्सिद्धम् ॥ २ ॥**

अथवा धातोः स्वरूपग्रहणे तत्प्रत्यये-कार्यविज्ञानात्सिद्धम् । धातुप्रत्यये कार्यं भवतीत्येषा परिभाषा कर्तव्या । कान्येतस्याः परिभाषायाः प्रयोजनानि ?

**प्रयोजनं सृजिदृशिमस्जिनशिहन्तिगिरत्यर्थम् ॥ ३ ॥**

सृजि—रज्जुसृड्भ्याम्, रज्जुसृड्भिः× । सृजि । दृशि—देवदृग्भ्याम्, देवदृग्भिः× । दृशि । मस्जि—उदकमग्भ्याम्, उदकमग्भिः+ । मस्जि । नशि—प्रनड्भ्याम्, प्रनड्भिः+ । नशि । हन्ति—वार्त्रघ्नः, भ्रौणघ्नः* । हन्ति । गिरति—देवगिरौ, देवगिरः÷ ।

यदि स्वरूपग्रहण इत्युच्यते प्रसृग्भ्याम् प्रसृग्भिः, अनुदात्तस्य चर्दुपधस्यान्यतरस्याम् [ ६. १. ५९ ] इत्यम्प्राप्नोति । एवं तर्हीयं परिभाषा कर्तव्या—

प्र०-तदपेक्षत्वात्ततोऽन्तरङ्गत्वादेकादेशे कृते तस्याऽऽदिवद्भावादादेशेषु क्रियमाणेषु परमहं परमयमित्यादिरनिष्टप्रसङ्गः ।

मृजेः० । कंसपरिमृड्भ्यामिति । विभक्तिमाश्रित्य वृद्धिः प्राप्नोति क्ङिति चेति प्रतिषेधः क्ङिन्निमित्ताया एव वृद्धेरित्यत्र न प्रवर्तते । रज्जुसृड्भ्यामिति । भ्याम्प्रत्ययो झलादिरकिद्भवतीत्यमागमप्रसङ्गः । प्रणड्भ्यामिति । नशेर्वेति कुत्वमप्यत्र न भवतीति केचिदाहुः । तदयुक्तम् । पदत्वनिबन्धनत्वादस्य प्रत्ययानपेक्षणात् । मस्जिनशोर्झलीति नुमागमस्तु प्रत्ययापेक्षत्वादधातुप्रत्यये न भवति । वार्त्रघ्न इति । हनस्तोऽचिण्णलोरिति तत्वं न भवति । कुमति चेति णत्वं कुव्यवाये हादेशेषु प्रतिषेध इति न भवति । देवगिराविति । अचि विभाषेति लत्वं न भवति । अम्प्राप्नोतीति । तद्विधौ धातोः स्वरूपेणानुपादानात् ।

उ०- मृजेर्वृद्धिः । नन्वत्र प्रत्ययलक्षणेन क्वित्परत्वान्निषेधः स्यादत आह—विभक्तिमाश्रित्येति । प्रत्ययानपेक्षणादिति । इयं च परिभाषा धर्मिग्राहकमानेन सप्तम्यन्तपदेन यत्र प्रत्ययस्य निमित्तत्वं तत्रानियमप्रसक्तौ नियमार्थेवेति भावः । अत एवाप्रणानिति निषेधः सार्थक इति दिक् । अत एव भाष्ये क्वचित्कुत्वसहितः पाठो दृश्यते । प्रत्ययापेक्षत्वादिति । साक्षत्वादिति भावः ।

× ६. १. ५८. + ७. १. ६०. * ७. २. १२. ÷ ८. २. २१.

धातोः कार्यमुच्यमानं तत्प्रत्यये भवतीति। सा तर्ह्येषा परिभाषा कर्तव्या ? न कर्तव्या। आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयं औणहत्ये तत्वं शास्ति*।

## अचो ञ्णिति ॥ ७। २। ११५ ॥

अज्ग्रहणं किमर्थम्+ ?

### वृद्धावज्ग्रहणं गोर्थम् ॥ १ ॥

वृद्धावज्ग्रहणं क्रियते गोतो वृद्धिर्यथा स्यात्—गौरिति। नैतदस्ति प्रयोजनम्, णित्करणसामर्थ्यादेवात्र वृद्धिर्भविष्यति×। अथ योगविभागः किमर्थो न ञ्णित्यत उपधाया इत्येवोच्येत÷ ? का रूपसिद्धिः ? चायकः, लावकः; कारकः, हारकः, गुणे+ कृतेऽयवो रपरत्वे चात उपधाया इत्येव सिद्धम्।

### योगविभागः सख्यव्यञ्जनाद्यर्थः ॥ २ ॥

योगविभागः क्रियते, सख्यर्थो व्यञ्जनाद्यर्थश्च। सख्यर्थस्तावत्†—सखायौ

---

प्र०— अचो०। अज्ग्रणमिति। अन्तरेणाज्ग्रहणमिक्परिभाषोपस्थानादिगन्तस्य वृद्धिः सिध्यति। अकारस्य तु चिकीर्षक इत्यादावतो लोप इति लोपेन भाव्यम्। आकारस्य तु विशेषो नास्ति। संध्यक्षराणामात्वेन भाव्यमिति प्रश्नः। गोर्थमिति। असत्यज्ग्रहण इक्परिभाषोपस्थानाद्गौरित्यत्र वृद्धिर्न स्यात्। अथ योगविभाग इति। यद्यपि गौरित्युक्तेनोदाहरणेन योगविभागस्य प्रयोजनं ज्ञाप्यते तथाऽप्यनेकप्रयोजनोपन्यासाय प्रश्नप्रतिवचने। सखायाविति। सखि औ इति स्थिते वृद्धेरप्रसङ्गः। णित्त्वं तु सखाय इत्यत्र जसि गुणेऽयादेशे च कृतेऽत उपधाया वृद्ध्यर्थं स्यात्। सखाय इत्येतत्तु प्रसङ्गेनोदाहृतम्। णित्त्वावकाशदर्शनार्थं

---

उ०— अचो ञ्णिति। ननु स्थानिनिर्देशार्थमकारादिसंग्रहार्थं चाज्ग्रहणं स्यादत आह—अन्तरेणेति। लोपेनेति। ण्यल्लोपाविति वचनादिति भावः। भाष्ये—गोर्थमिति। प्रापयतीति टेरितिसूत्रस्थभाष्यप्रामाण्यादित्थं भाष्यं दोषोपलक्षणं बोध्यमित्याहुः। असतीति। अजग्रहणे तु निर्दिष्टस्थानिकत्वादिक्परिभाषानुपस्थितिरिति न दोषः। ननु णित्त्वसामर्थ्यादनुपधाया अपि वृद्धिः स्यादत आह—णित्त्वं त्विति। हनस्त इति। अङ्गवैकल्येऽपि शास्त्रप्रवृत्तौ तत्वमपि स्यादिति तदभावायाज्ग्रहणम्। ननु हनस्त इत्यत्राचिण्णलोरिति पर्युदासेन धातोः स्वरूपग्रहण इति परिभाषया च धातुविहितप्रत्यय एव तत्वमित्यङ्गविकलं तत्वं वृद्धिस्त्वेकाङ्गविकलेति णित्त्वसामर्थ्याद्वृद्धिरेव भविष्यति न तत्वमिति चेत्। यत्तु सोर्णित्करणमित्यादिग्रन्थस्य पूर्वपक्ष्येकदेशिसिद्धान्त्येकदेशिनोरुक्तिप्रत्युक्तिपरत्वेनादोषात्सो-

---

* ६. ४. १७४. + १. १. ३. × ७. १. ९०. ÷ ७. २. ११६. + ७. १. ८४. † ७. १. ९२.

सखायः। व्यञ्जनाद्यर्थः—जैत्रम् यौत्रम् च्यौत्रम्। योगविभागे चेदानीं सखिव्यञ्जनाद्यर्थे क्रियमाणेऽज्ग्रहणमपि कर्तव्यं भवति। किं प्रयोजनम्? गोर्थम्। ननु चोक्तं णित्करणसामर्थ्यादेवात्र वृद्धिर्भविष्यतीति। अस्त्यन्यण्णित्करणस्य प्रयोजनम्। किं? गावौ गावः। अवादेशे कृतेऽत उपधाया इति वृद्धिर्यथा स्यात्। यत्तु सौ णित्करणं तदनवकाशं तस्यानवकाशत्वादेव वृद्धिर्भविष्यति। यथैव खल्वपि णित्करणसामर्थ्यादनिकोऽपि वृद्धिः प्रार्थ्यत एवं तत्वमपि प्राप्नोति। तत्वमपि हि ञ्णितीत्युच्यते*। तस्मादज्ग्रहणं कर्तव्यम्।

## तद्धितेष्वचामादेः॥ ७। २। ११७॥

अज्ग्रहणं कर्तव्यम्। ननु च क्रियत एव। द्वितीयं कर्तव्यं, यथाऽचामादिग्रहणमज्विशेषणं विज्ञायेत—अचामादेरच इति। अथाक्रियमाणेऽज्ग्रहणे कस्याचामादिग्रहणं विशेषणं स्यात्? इग्विशेषणमित्याह। अचामादेरिक इति×। तत्र को दोषः? इहैव स्यात्—ऐतिकायनः, औपगवः। इह न स्यात्—गार्ग्यः, वात्स्य इति। तत्तर्ह्यज्ग्रहणं कर्तव्यम्? न कर्तव्यम्। प्रकृतमनुवर्तते। क्व प्रकृतम्? अचो ञ्णिति [ ११५ ] इति। यदि तदनुवर्ततेऽत उपधायाः

---

प्र०–वा। व्यञ्जनाद्यर्थ इति। व्यञ्जनादिर्यः प्रत्ययस्तत्र वृद्ध्यर्थः। जैत्रमिति। जियुभ्यामौणादिकः ष्ट्रण्। च्यौत्रमिति। जनिदाच्युस्रिति त्रण्। तत्वमिति। हनस्तोऽचिण्णलोरिति हन्तेरुच्यमानं गोरपि स्यात्। नैष दोषः प्रापदित्यज्ग्रहणं क्रियते।

तद्धिते०। अज्ग्रहणं कर्तव्यमिति। अचामिति निर्धारणषष्ठ्यन्तेन सामानाधिकरण्येनाऽऽदेर्विशेषयितुमशक्यत्वादिक्परिभाषोपस्थानादिक एवाचो वृद्धिप्रसङ्गः। अथाक्रियमाण इति। निर्धारणं तुल्यजातीयस्य भवति। यथा कृष्णा गवां संपन्नक्षीरतमेत्युक्ते गौरेव प्रतीयते। तथा चाचामादिरजेव प्रत्येष्यत इति भावः। इग्विशेषणमिति। तुल्यजातीयनिर्धारणेऽपीक इत्यस्योपस्थानं न वार्यते। अज्ग्रहणे तु क्रियमाणे

---

उ०–णित्वस्य विशेषविधाने हि मानं न पश्यामः। ध्वनितं चेदं सर्वं यद्यपि गौरित्युक्तेनोदाहरणेनेत्यादिकैयटग्रन्थेनेति दिक्।

तद्धितेष्व०। अचां मध्य आदेरिको वृद्धिरित्यर्थः स्यादित्याह—अचामिति। बहुवचनान्निर्धारणषष्ठीत्वनिर्णयः। सामानाधिकरण्येनेति। अज्रूपस्याऽऽदेरितीत्यर्थः। इक इति। निर्धारणस्य तुल्यजातीयत्वादेवाच इत्यस्य लाभेऽपि तदुपस्थानं न वार्यते। इक

---

* ७. ३. ३२. × १. १. ३.

[ ११६ ] अचश्चेत्यज्मात्रस्योपधाया वृद्धिः प्रसज्येत—भेदकः, छेदक इति । अकारेण तपरेणाचं विशेषयिष्यामः—अचोऽत इति । इहेदानीमच इत्येवानुवर्ततेऽत इति निवृत्तम् । अथवा मण्डूकगतयोऽधिकाराः । यथा मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति तद्वदधिकाराः । अथवैकयोगः करिष्यते, अचो ञ्णित्यत उपाधायाः । ततस्तद्धितेष्वचामादेरिति न चैकयोगेऽनुवृत्तिर्भवति ।

**तद्धितेष्वचामादिवृद्धावन्त्योपधलक्षणप्रतिषेधः ॥ १ ॥**

तद्धितेष्वचामादिवृद्धावन्त्योपधलक्षणाया वृद्धेः* प्रतिषेधो वक्तव्यः । क्रौष्टः, जागत इति । ननु चाचामादिवृद्धिरन्त्योपधलक्षणां वृद्धिं बाधिष्यते । कथ-

प्र०–निर्दिष्टस्थानिकत्वादिकूपरिभाषानुपस्थानम् । यथाऽचो ञ्णितीत्यत्र । अज्मात्रस्येति । नन्वद्ग्रहणसामर्थ्यादज्मात्रस्य न भविष्यति । तत्सामर्थ्यात्तर्हि निवृत्तिरेवाज्ग्रहणस्य स्यान्नियमार्थं वाऽद्ग्रहणं स्यात् । अकारस्यैव ह्रस्वस्य नान्यस्येति । दीर्घस्य त्वीहक इत्यादावुपधायाः स्यादेव । अकारेणेति । विशेषणस्याजन्तरनिवृत्तिः प्रयोजनम् । अथवैकयोग इति । एको भवतिरध्याह्रियते तेन तुल्यकालत्वाद्विधानस्य स्वकार्ये व्यापारादन्यत्रोपस्थानाभावः । क्रौष्ट्र इति । क्रोष्टृशब्दात्तृजन्तात्तस्येदमित्यण् । जागत इति । जगच्छब्दादण् । ननु चाचामादिवृद्धिरिति । अङ्गं कार्यि मन्यते तत्र तक्रकौण्डिन्यन्यायावतारः । इतरस्तु स्थानिभेदं मत्वाऽऽह—कथमन्यस्येति । आमलकीज

उ०–इत्यनेनाचो विशेषणसंभवादिति भावः । नन्वेवमज्ग्रहणेऽपीकपरिभाषोपस्थानं स्यादत आह—अज्ग्रहणे त्विति । विशेषणस्येति । नतु नियमार्थत्वम् । विधिनियमसंभव इति न्यायादित्यर्थः । नन्वर्थस्यानेकत्वाद्वाक्यभेद एव युक्तोऽत आह—एको भवतिरिति । प्रतिपत्तिवाक्यमेकं प्रक्रियावाक्यं तु भिद्यत एवेत्यर्थः । एकवाक्यत्वे कथमनुवृत्त्यभावोऽत आह—तेनेति । यदाऽत इत्येतत्स्वकार्ये व्याप्रियते तदैवान्यशेषत्वमयुक्तमित्यर्थः । क्रौष्ट्र इतीति । नियतविषयत्वं घृ इत्यादीनामिवास्याप्याश्रित्य तृज्वत्क्रोष्टुरित्यादिसूत्रत्रयप्रत्याख्यानादत्र न दोषः । एतत्सिद्ध्यर्थमेव हि तत्प्रत्याख्यानम् । अन्ये तु क्रोष्ट्र्या अयमिति विग्रहः । पुंवत्त्वं तु न । संज्ञात्वेनाभाषितपुंस्कत्वात् । अस्य च या नामधेयस्येति वा वृद्धत्वात्क्रोष्ट्रीया इत्यपि पक्षे । अत्र च यस्येति लोपात्परत्वादृकारस्य वृद्धिप्राप्तिरित्याहुः । क्रोष्टृ इति तृजन्तमेव ऋषिनाम । वा नामधेयस्येति पक्षे वृद्धत्वात्क्रोष्ट्रीया इत्यपि बोध्यम् । आदिवृद्धेरवकाशमजानन्दाह्वते भाष्ये—ननु चाचामिति । ननु कार्यिभेदात्कथं बाध्यबाधकभावोऽत आह—अङ्गमिति । कार्यिभेदेऽपि नुम्नुटोरिव बाधकत्वसंभवाच्चिन्त्यमिदम् । स्थानिभेदमिति । अङ्गावयवानां कार्यित्वादिति भावः । अन्यस्यापि स्वर इवि ।

* ७. २. ११५; ११६.

मन्यस्योच्यमानाऽन्यस्य बाधिका स्यात्? असति खल्वपि संभवे बाधनं भवत्यस्ति च संभवो यदुभयं स्यात्।

**लोकविज्ञानात्सिद्धम् ॥ २ ॥**

सत्यपि संभवे बाधनं भवति। तद्यथा—ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेति सत्यपि संभवे दधिदानस्य तक्रदानं निवर्तकं भवति। एवमिहापि सत्यपि संभवेऽचामादिवृद्धिरन्त्योपधलक्षणां वृद्धिं बाधिष्यते। विषम उपन्यासः। नाप्राप्ते दधिदाने तक्रदानमारभ्यते, तत्प्राप्त आरभ्यमाणं बाधकं भविष्यति। इह पुनरप्राप्तायामन्त्योपधलक्षणायां वृद्धावचामादिवृद्धिरारभ्यते—सुश्रुत् सौश्रुत इति।

**पुष्करसद्ग्रहणाद्वा ॥ ३ ॥**

---

प्र०—इत्यादावन्यस्यापि स्वरो विधीयमानोऽन्यस्वरं बाधत एवेत्याशङ्कयाऽऽह—असति खल्वपीति। लोकविज्ञानादिति। अङ्गं कार्यि तदेवावयवद्वारेण संस्क्रियते ततश्चैकस्य कार्यद्वयं न प्रवर्तते कौण्डिन्य इव दधि तक्रं च। नाप्राप्त इति। सामान्यविशेषभावो बाधहेतुः स चेह नास्ति। पुष्करसद्ग्रहणाद्वेति। वाशब्दस्तर्ह्यर्थे। पूर्वस्य हेतोरनवस्थितत्वात्। ननु च ठगर्थः पुष्करसदः पाठः स्यात्। पुष्करसदा चरति पौष्करसादिक इति ञ्णित्यत उपधाया इति वृद्धेर्विधानाट्ठक्यप्रसङ्गात्। एवं तर्हि ठगतोऽनभिधानान्न भवति। यद्वा प्रतिपदविहित इत्येव पुष्करसद उभयपदवृद्धिर्नान्यत्र। केचिदाहुः—

---

उ०—'अन्त्यात्पूर्वं बह्वचः' इति 'दीर्घकाशतुषभ्राष्ट्रवटं जे' इतिपूर्वपदाद्युदात्तत्वं बाधत इत्यर्थः। शेषनिघातशास्त्रबलात्तत्रासंभवोऽस्तीत्युत्तराशयः। दृष्टान्त एकस्योद्देश्यत्वं दार्ष्टान्तिके तु भिन्नस्येति वैषम्यं परिहरति—अङ्गं कार्यीति। पूर्वस्य हेतोरिति। लोकविज्ञानादित्यस्य। परे तु नेदं वार्तिकं किंतु कस्यचिदेकदेशिनोऽवकाशमपश्यत उक्तिः। पुष्करसद्ग्रहणाद्वेति वार्तिके विप्रतिषेधो वक्तव्य इति वचनापेक्षो विकल्पार्थो वाशब्दः। अत एव भाष्येऽथवेत्येव व्याचष्ट इत्याहुः। परे तु ननु चेति। परत्वादिति भावः। एकस्य द्विकार्ययोगो वाऽसंभवो वा विप्रतिषेधो न चात्र तथेत्याशयेनेतर आह—कथमन्यस्येत्यादिना। परोऽपवादवद्विप्रतिषेधोऽपि संभवे कार्यभेदेऽपीत्याह—लोकविज्ञानादिति। अपवादविषय एव तथा ननु विप्रतिषेधविषयेऽपीति पर आह—विषम इति। कैयटरीत्या व्याख्याने तूभयोः सावकाशत्वेन बाधकत्वसंभावनाया एवासत्त्वेन संपूर्णभाष्यस्य भ्रान्तप्रलापत्वापत्तिरित्याहुः। यद्वा

अथवा यदयमनुशतिकादिषु× पुष्करसच्छब्दं पठति तज्ज्ञापयत्याचार्योऽ-चामादिवृद्धावन्त्योपधलक्षणा वृद्धिर्न भवतीति ।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमस्याध्यायस्य द्वितीये पादे द्वितीयामाह्निकम् । पादश्च समाप्तः ।

---

प्र०—लोकविज्ञानात्सिद्धमिति वार्तिककारस्य विप्रतिषेधो विवक्षितो यथा झलचोर्नुम्विधावुगित्प्रतिषेधात्सिद्धमिति । अन्त्योपधालक्षणाया वृद्धेरवकाशः—गौः पाचक इति । अस्यावकाशः—सौश्रुत इति । क्रौष्ट्रो जागत इत्यत्रोभयप्रसङ्गे परत्वादादिवृद्धिर्भवति सकृद्गत[ति]परिभाषाऽऽश्रीयते नतु पुनःप्रसङ्गविज्ञानम् । एवं च पुष्करसद्ग्रहणाद्वेति विकल्पार्थ एव वाशब्दो बाधकत्वसामान्याभिप्रायेण च शास्त्रविज्ञानमेव लौकिकविज्ञानमुक्तम् । अथ यत्राऽऽदिवृद्धिः प्रतिषिध्यते तत्रान्त्योपधालक्षणा कस्मान्न भवति । व्यसोर्भावो वैयसवमिति । इगन्ताच्चेत्यण् । व्यापदि भवं वैयापदमिति । अत्राप्यैचौ परत्वाद्बाधकाविति सर्वेष्टसिद्धिः ।

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे सप्तमाध्यायस्य द्वितीयपादे द्वितीयमाह्निकम्, पादश्च द्वितीयः ।

---

उ०—प्रतिपदेति । शाङ्खरादिषु पुष्करसच्छब्दः पठ्यते । तस्यैवानुशतिकादिषु ग्रहणं न्याय्यं स्यादिति प्रतीतेरिति भावः । इदं च ज्ञापकमचामादिवृद्धिविषयेऽन्त्योपधालक्षणा वृद्धिर्नेति । तेन वैयसवमित्यादौ न दोष इति बोध्यम् । यथा झलचोरिति । श्रेयांसीत्यादौ झल्लक्षणे नुमि कृते उगिल्लक्षणस्य प्राप्तस्य प्रतिषेधो वक्तव्य इति चोदिते विप्रतिषेधात्सिद्धमिति तत्रोक्तं तथेहापीत्यर्थः । नन्वेवं लोकविज्ञानात्सिद्धमित्यसमञ्जसमत आह—बाधकत्वसामान्येति । यथा तक्रदानं बाधकमेवं परत्वान्नमपीति सादृश्यादेवमुक्तमित्यर्थः । इदं न युक्तम् । एकस्य द्विकार्ययोगाभावादसंभवाभावात्तत्र तावेव हि विप्रतिषेधसूत्रप्रवृत्तौ बीजमितीको गुणेति सूत्रे भाष्ये स्पष्टम् । अङ्गकार्यीति तु चिन्त्यमेव । अत उपधाया अचामादेरित्युभयत्राप्यन्त्ये-त्यस्यावयवषष्ठीत्वात् । कस्मान्नेति । बाधकाभावे बाध्यप्रवृत्तेरुचितत्वादिति भावः । अत्रापीति । न केवलमादिवृद्धेः प्रतिषेध एव न य्वाभ्यामित्यनेन किं तर्ह्यैचोर्विधानमपि । तौ च परत्वाद्बाधकौ । वास्तवसमाधिस्तूक्त एवेतीष्टसिद्धिः ।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते सप्तमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकं पादश्च ।

---

× ७. १. १०, ग°.

# अथ तृतीयः पादः

## देविकाशिंशपादित्यवाड्दीर्घसत्त्रश्रेयसामात् ॥ ७ । ३ । १ ॥

### देविकादिषु तदादिग्रहणम् ॥ १ ॥

देविकादिषु तदादिग्रहणं कर्तव्यम् । देविकाद्यादीनामिति वक्तव्यम् । इहापि यथा स्यात्—दाविकाकूलाः शालयः, शांशपास्थला देवाः । किं पुनः कारणं न सिध्यति ।

### अन्यत्र तद्ग्रहणात्तदन्तग्रहणाद्वा ॥ २ ॥

अन्यत्र हि तस्य वा ग्रहणं भवति तदन्तस्य वा, न चेदं तत्रापि तदन्तम् ।

### आद्यज्विशेषणत्वात्सिद्धम् ॥ ३ ॥

आद्यज्विशेषणं देविकादयः । नैवं विज्ञायते--देविकादीनामङ्गानामचामादेराकारो भवतीति । कथं तर्हि ? ञ्णित्यङ्गस्याचामादेराकारो भवति स चेद्देविकादीनामाद्यज्भवतीति ।

### अन्तरतमनिवर्तकत्वाद्वा ॥ ४ ॥

अथवा नानेनानन्तरतमा वृद्धिर्निर्वर्त्यते । किं तर्हि ? अन्तरतमाऽनेन निवर्त्यते । सिद्धाऽत्र वृद्धिस्तद्धितेष्वचामादेः [ ७. २. ११७ ] इत्येव । तत्रा-

---

प्र०— देविका० । देविकादिष्विति । विशेषणविशेष्यभावे कामचाराद्यदाऽङ्गेन देविकादीनि विशेष्यन्ते तदा तेषामङ्गमन्ते न संभवतीति तदन्तविध्यभावादङ्गानि देविकादीन्याश्रीयन्ते । यदा तु देविकादिभिरङ्गं विशेष्यते तदा तदन्तविधिना देविकाद्यन्तमङ्गं गृह्यते नतु कथंचित्तदादिविधिसंभव इति तदादिग्रहणं कर्तव्यम् । तत्र केवलानां देविकादीनां तदादीनां चाऽऽकारो भवतीति वक्तव्यम् । अन्यथा केवलानां न स्यात्—दाविकमुदकं शांशपश्चमस इति । न च व्यपदेशिवद्भावोऽस्ति, अप्रातिपदिकेनेति प्रतिषेधात् । यदि तु प्रत्ययविधिविषय एवायं निषेधस्तदा केवलानां व्यपदेशिवद्भावात् सिध्यति । आद्यज्विशेषणमिति । अङ्गस्य देविकादिभिः संबन्धाभावः । अन्तरतमनिवर्तकत्वाद्वेति । ञ्णिति कितीति वर्तते । तत्र स्थानेऽन्तरतम इति वचनादैकारो वृद्धिसंज्ञः प्राप्त आदिति वचनेन निवर्त्यते नत्वपूर्व आकारो विधीयते । अनेन हि

---

उ०— देविकाशिंशपा० । अङ्गानीति । अङ्गरूपाणीत्यर्थः । यदि तु प्रत्ययेति । पूर्वादिनिः, सपूर्वाच्चेति ज्ञापकस्य तुल्यजातीयविषयत्वादिति भावः । तदा तदादिग्रहणमेव कर्तव्यम् । ननु पूर्वोक्तपक्षद्वयातिरिक्तः कोऽयं प्रकारोऽत्र आह—अङ्गस्येति । विशेष्यत्वेन विशेषणत्वेन च संबन्धाभाव इत्यर्थः । संबन्धप्रकारो भाष्ये—ञ्णित्यङ्गस्येति । भाष्ये—आन्तरतम्यनिवर्तकत्वाद्वेति प्रचुरः पाठः । तत्र स्वार्थे ष्यञित्याहुः । न त्वपूर्व इति । अपूर्वविध्यपेक्षया परिभाषात्वस्य लघुत्वादिति भावः । तदेव विशदयति—अनेन हीति । यत्र देविकादीनाम-

नेनान्तरतमा वृद्धिर्निवर्त्यते । परिहारान्तरमेवेदं मत्वा पठितं, कथं चेदं परिहारान्तरं स्यात् ? यदि नाऽऽद्यज्विशेषणं देविकादयः । अवश्यं चैतदेवं विज्ञेयमाद्यज्विशेषणं देविकादय इति । यदि नाऽऽद्यज्विशेषणं देविकादयः स्युरिहापि प्राप्नोति—सुदेविकायां भवः सौदेविक इति । अथात्राप्याद्यज्विशेषणत्वादित्येव सिद्धं परिहारान्तरं न भवति । न ब्रूमो यत्र क्रियमाणे दोषस्तत्र कर्तव्यमिति । किं तर्हि ? यत्र क्रियमाणे न दोषस्तत्र कर्तव्यम् । क्व च क्रियमाणे न दोषः ? संज्ञाविधौ* । वृद्धिरादैज्देविकादीनामाकार इति । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवास्तु । ननु चोक्तं देविकादिषु तदादिग्रहणमन्यत्र तद्ग्रहणात्तदन्तग्रहणाद्वेति । परिहृतमेतदाद्यज्विशेषणत्वात्सिद्धमिति ।

---

प्र०—स्थानेऽन्तरतम इति नियमं बाधित्वा नियमान्तरं क्रियते देविकादीनामाकारो वृद्धिर्नान्या । परिहारान्तरमिति । परिभाषेयम् । देविकादीनां वृद्धिर्विधीयमानाऽऽकार एव भवतीति केवलानां तदादीनां च वृद्धिर्देविकादीनां भवतीति तत्रैव परिभाषाप्रवृत्तिः । सुदेविकायां तु या वृद्धिर्न सा देविकादिशब्दस्य किंतु तदन्तस्येति परिभाषानुपस्थानादौकार एव भवति । यथोद्देशं च परिभाषाऽऽश्रीयतेन कार्यकाला । अन्यथाऽङ्गप्रकरणे देविकादीनामादित्यस्योपस्थानादव्याप्त्यतिव्याप्त्योः पूर्ववदन्यतरप्रसङ्गः स्यात् । इह तु प्रदेशे सूत्रे क्रियमाणे विधिरेवाऽऽकारस्य भवत्यथात्त्वैकारस्य निवृत्तिरिति नायं परिहार उपपद्यते । अन्तरतमनिवर्तकत्वाद्वेति । सूत्रं तर्हीति । अष्टाध्यायीलक्षणं सूत्रं संनिवेशान्तराश्रयणे भिद्यते । अथवाऽस्यैव सूत्रस्य स्थानभेदाद्भेदो भवति । आद्य-

---

उ०—चामादेर्वृद्धिप्रसङ्गस्तत्राऽऽकार एवेत्यर्थ इति भावः । ननु यथात्रैव पठ्यते तदाऽङ्गस्य विशेषणत्वे दाविकाकूलेऽव्याप्तिः । विशेष्यत्वे सौदेविकेऽतिव्याप्तिः । आद्यविशेषणत्वे कथं परिहारान्तरत्वमत आह—परिभाषेयमिति । परिभाषाप्रकरण इदं पाठ्यम् । तत्र चाङ्गासंनिधानान्न दोष इति भावः । तदाह—देविकादीनामिति । अर्थात्त्विति । एवं च निवृत्तेर्वाक्यार्थत्वाभावात्परिहारान्तरोक्तिरसंगतेति भावः । यदि नाऽऽद्यज्विशेषणमिति भाष्यस्यायमर्थः—नाऽऽद्यज्विशेषणं देविकादय इह च पाठ इत्यसंगतम् । यत इह पाठे न परिभाषात्वं विधिसादृश्येन विधित्वस्यैव युक्तत्वात् । तत्र चाऽऽद्यज्विशेषणत्वमेव युक्तमित्याह—अवश्यं चैतदिति । यदि नाऽऽद्यजिति । इह पाठ इति शेषः । ननु प्रकरणान्तरपाठेऽपि देविकेत्यादिसूत्रस्य न कश्चिद्दोषोऽत आह—अष्टाध्यायीति । अत्रेत्यर्थः । आद्यज्विशेषण-

---

* १. १. १.

## न्यग्रोधे च केवलग्रहणात् ॥ ५ ॥

न्यग्रोधे* च केवलग्रहणान्मन्यामहे--आद्यज्विशेषणं देविकादय इति। तस्य हि केवलग्रहणस्यैतत्प्रयोजनमिह मा भूत्---न्याग्रोधमूलाः शालय इति। यदि चाऽऽद्यज्विशेषणं देविकादयस्ततः केवलग्रहणमर्थवद्भवति। तदेतत्कथं कृत्वा ज्ञापकं भवति? यदि न्यग्रोधशब्दोऽव्युत्पन्नं प्रातिपदिकं भवति। अथ हि न्यग्रोहतीति न्यग्रोधस्ततो नियमार्थं पदान्त इति कृत्वा+ न ज्ञापकं भवति।

## वहीनरस्येद्वचनम् ॥ ६ ॥

वहीनरस्येत्वं वक्तव्यम्। वहीनरस्यापत्यं वैहीनरिः।

प्र०--ज्विशेषणत्वादिति। द्वितीयः परिहारो दूषितः पूर्वस्तु स्थित एव। अत्रैवार्थे लिङ्गदर्शनम्। न्यग्रोधे चेति। केवलग्रहणमिह प्रकरणे गृह्यमाणमाद्यज्विशेषणमिति ज्ञापयति, अन्यथा तदनर्थकं स्यात्। नच तदन्तविधिनिरासार्थमङ्गेन न्यग्रोधस्य विशेषणात्तदन्तविधेरप्रसङ्गात्। तदेतदिति। अव्युत्पत्तिपक्षे न्यग्रोधस्य च केवलस्येति वृद्धिनिषेधस्यैचश्च विधायकमिति केवलग्रहणं ज्ञापकार्थं भवति। व्युत्पत्तिपक्षे तु न य्वाभ्यामिति सिद्धे केवलस्यैव न्यग्रोधशब्दस्य यथा स्यात्। न्याग्रोधमूलाः शालय इत्यादौ मा भूदिति नियमार्थं केवलग्रहणं न ज्ञापकं भवति। नहि न्यग्रोधस्येत्येतावताऽभिमतनियमसिद्धिः। नन्वङ्गस्यैव न्यग्रोधस्य नाङ्गादेरित्येवमिष्टो नियमः सिध्यत्येव। नैतदस्ति। अनिष्टोऽपि नियमः स्यात्---न्यग्रोधस्यैव निशब्दात्परस्य वृद्धिप्रतिषेध इति। तथा च नैयायिको नैयासिक इत्यादौ न स्यात्तस्मात्केवलग्रहणमभिमतनियमसाधनाय। आदेरित्ययं तु निषेध उक्तार्थे ज्ञापको भवति। वहीनरस्येति। वहोऽस्यास्तीति वही स चासौ नरश्चेति कर्मधारयसमासोऽन्येषामपि दृश्यत इति दीर्घः। तस्यापत्यमत इञ्। तत्राऽऽदिवृद्धेरपवाद इकारो विधीयते। इकारस्य वृद्धिर्भवत्येव। नच तस्यां प्राप्तायामित्त्वं विधीयते यतः साऽपि बाध्येत। विहीनो नर इति। पृषोदरादित्वान्नलोपः।

उ०--स्वरूपेऽर्थे। यथास्थितपाठेऽप्यत्र वृद्धिरित्यनुवर्त्य वृद्धिशब्देनाऽऽकारविधानाद्दाविकीभार्य इत्यादौ पुंवत्त्वनिषेधो भवत्येवेति ध्येयम्। अङ्गेन न्यग्रोधस्येति। एवं च न्यग्रोधरूपाङ्गस्य विधीयमानस्तदादेर्नैव प्राप्नोति नापि तदन्त इति केवलग्रहणमनर्थकमस्यार्थस्य ज्ञापकम्। इष्टानुरोधाच्च तदन्तविधेर्न ज्ञापकमिति भावः। विधायकमिति। अपदान्तत्वान्न य्वाभ्यामित्यस्याप्राप्तेरिति भावः। विनाऽपि केवलग्रहणमिष्टनियममाशङ्कते---नन्वङ्गस्येत्यादिना। व्युत्पत्तिपक्षेऽपि लिङ्गं दर्शयति---आदेरिति। द्वारादिषु श्वन्शब्दपाठाद्द्वारादीनां चेत्यनेन प्राप्तस्य निषेधोऽयम्। श्वाभस्त्रिरित्युदाहरणम्। ननु वृद्धिबाधेनेत्वे कथं पुनर्वृद्धिः

* ७. ३. ५. + ७. ३. ३.

कुणरवाडवस्त्वाह—नैष वहीनरः। कस्तर्हि ? विहीनर एषः। विहीनो नरः कामभोगाभ्यां विहीनरः। विहीनरस्यापत्यं वैहीनरिः।

**न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्॥ ७। ३। ३॥**

य्वाभ्यां परस्यावृद्धित्वम्,

य्वाभ्यां परस्यावृद्धित्वं सिद्धम्। कुतः ?

अपवादौ वृद्धेर्हि तौ।

अपवादौ हि वृद्धेस्तावैचावुच्येते।

नित्यावैचौ तयोर्वृद्धिः,

अथवा नित्यावैचौ। कृतायामपि वृद्धौ प्राप्नुतोऽकृतायामपि। नित्यत्वादैचोः कृतयोर्यद्यपि वृद्धिस्तयोरेव।

---

प्र०— न य्वाभ्याम्०। य्वाभ्यां पदान्ताभ्यां पूर्वावैजित्येव सूत्रं कार्यं नार्थो वृद्धिनिषेधेन। अपवादाविति। एकस्मिन्नङ्गविशेषे विधीयमानावैचौ सामान्यविहिताया वृद्धेर्बाधकौ, सत्यपि संभवे सामान्यविशेषविषयत्वेन बाध्यबाधकभावदर्शनात्। इदानीं विषयभेदादसत्यप्यैज्वृद्ध्योर्बाध्यबाधकत्वे प्रतिविधातुमाह—यद्यपीति। अभ्युपगमवादेनोच्यते। नहि वृद्धौ सत्यां सर्वेष्टसिद्धिः, वैयाकरणभार्य इत्यत्र वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधप्रसङ्गात्। तस्माच्छब्दान्तरप्राप्त्या वृद्धिमनित्यां बाधित्वा

---

उ०—स्यादत आह—न च तस्यामिति। इकारस्थानिकवृद्धावित्यर्थः। अष्टावसरन्यायस्तु फलाभावादत्र शास्त्रे नाऽऽश्रीयत इति भावः। केचित्तु वहीनरस्यैत्वमिति वार्तिकं पठन्ति तेषां तु न किंचित्कष्टम्। विहीन इति। अत्र पक्षे वहीनरशब्दान्न प्रत्ययोऽनभिधानादिति बोध्यम्। वहीनरस्यैव वाऽनभिधानं बोध्यम्।

न य्वाभ्याम्०। ननु य्वाभ्यां परस्य वृद्धिस्ताभ्यां पूर्वावैचाविति विषयभेदात्कथं बाध्यबाधकभावोऽस्त आह—एकस्मिन्नङ्गेति। नन्वपवादत्वमुक्त्वा कथं नित्यत्वाश्रयबाधकत्वेन पक्षान्तरकथनमत आह—इदानीमिति। विषयभेदान्नापवादत्वम्। अङ्गं तु न कार्यि। तस्य कार्यिविशेषणविशेषणत्वादिति भावः। इदमप्यसंभव एव बाधकत्वमिति वार्तिकमते। अभ्युपगमेति। इदं च यद्यपीत्यादिसंदिग्धवचनेन भाष्यकृताऽपि ध्वनितम्। वैयाकरणभार्य इति। न चात्र पुंवत्त्वनिषेधाप्रवृत्तौ मानाभावः। तद्भावितानामेव वृद्धिसंज्ञेति पक्षेऽत्र पुंवत्त्वप्रतिषेधप्राप्तिरूपदोषानुपन्यासेन निषेधाप्रवृत्तेरिष्टत्वानुमानादित्याहुः। तस्मादिति। ऐज्विधानसामर्थ्याच्च न तयोर्वृद्धिः। अन्यथा प्रयत्नलाघवार्थं दायेव विदध्यादिति भावः। केचित्तादृग्जमात्रस्य वृद्धिसंज्ञेति पक्षे तावकीयं इव वैयाकरणभार्य पुंवत्त्वनिषेधानापादनेन निषेधप्रवृत्तिरिष्टेत्याहुः। अत्र सूत्रे पूर्वसूत्र आदेश इत्यंशोऽपि

किमर्थं नेति शिष्यते ॥ १ ॥

अथ किमर्थं प्रतिषेध उच्यते ?

**ऐचोर्विषयार्थं प्रतिषेधसंनियुक्तवचनम् ॥ १ ॥**

ऐचोर्विषयार्थं प्रतिषेधसंनियोगेनैचावुच्येते ।

यत्र य्वाभ्यां परा वृद्धिस्तत्राध्यश्वेर्यथा न तौ ।

यत्र य्वाभ्यां परस्यावृद्धित्वमुच्यते तत्रैचौ यथा स्याताम् । इह मा भूताम्—आध्यश्विः, दाध्यश्विः, माध्वश्विरिति । नैतदस्ति प्रयोजनम् ।

अचामादेर्य्वाभ्यां हि तौ,

अचामादीनाऽत्र य्वौ विशेषयिष्यामः—अचामादेर्यौ य्वाविति ।

कथं द्व्याशीतिके न तौ ॥ २ ॥

प्र०—नित्यावैचौ भविष्यतः । बाधितत्वाच्च पुनर्वृद्धिर्न भविष्यतीत्यभ्युपेयम् । ऐचोर्विषयार्थमिति । याभ्यां य्वाभ्यां परस्य वृद्धिः प्राप्ता निषिध्यते ताभ्यां पूर्वावैचौ यथा स्यातामन्याभ्यां मा भूतामित्येवमर्थं प्रतिषेधविधानम् । आध्यश्वेर्यथा न ताविति । स्यातामिति वाक्यशेषः । अध्यारूढोऽश्वमिति प्रादिसमासः । अत इञ् । असत्यपि निषेधविधाने दोषं परिहर्तुमाह—अचामादेरिति । अचामादेरचः स्थाने यौ य्वौ ताभ्यां पूर्वौ भवत इत्याश्रीयमाण आध्यश्विरित्यादावैचोरप्रसङ्गः । द्व्याशीतिक इति । द्वे अशीती भूत इति तद्धितार्थे समासः । ततष्ठञ् । अध्यर्धपूर्वद्विगोरित्यत्राऽऽर्हादित्यधिकाराल्लुङ् न भवति । अत्राचामादेरचो यकारस्य विधानात्ततः पूर्व ऐकारः प्राप्नोति । ताविति । द्विवचनं द्व्याशीतिकस्योपलक्षणत्वादुपात्तम् । यद्यपि य्वोरचामा-

उ०—वृद्धिपदसंबन्धेन तद्भावितानामेव संज्ञेति पक्षेऽपि निषेधप्रवृत्तिर्भवत्येवेति नोक्तभाष्यविरोधः । किंचैवं सति वृद्धिनिमित्तस्येति सूत्रे शब्दव्यापाराश्रयणस्याऽऽवश्यकत्वेन तावन्मात्रेण दोषवारणाय व्यधिकरणबहुव्रीहिपर्यन्तं भाष्यकृतो धावनमफलं स्यादित्याहुः । बाधितत्वाच्चेति । इदं चिन्त्यम् । असकृद्वसरन्यायस्य भाष्ये क्वाप्यनाश्रयणात् । उक्तरीत्योपपत्तेश्चाप्रापवादत्वमेव युक्तं विषयैक्य एवापवादत्वमिति तु न युक्तमचिरादेशस्य जुडपवादत्वशङ्कापरभाष्यविरोधात् । न तिसृति ज्ञापकेन जुड्विषये रादेशाभावकल्पनेन समाहितमित्येतत् । नित्यावैचावित्युक्तिस्त्वेकदेशिन इति बोध्यम् । असंभव एवापवादत्वमिति वार्तिकमतेन वा तदुक्तम् । अपवादविषये हि प्रकल्प्यापवादविषयमित्यादिना तथाऽभ्युपगमो नान्यत्रेति केचित् । भाष्ये—अथ किमर्थमिति । एवं सति किमर्थं प्रतिषेध इत्यर्थः । विषयार्थमिति । एचोर्विशिष्टविषयनिर्देशार्थमित्यर्थः । एतदुत्तरं नैतदस्ति प्रयोजनमित्यादिभाष्यमेकदेश्युक्तिरित्युत्तरसूत्रे कैयटे स्फुटम् । रचः स्थान इति । अनुवादे परिभाषाणामनुपस्थितिरितीको गुणेत्यादौ विधीयत इत्यध्याहारलब्धमिति भावः । द्व्याशीतिकस्योपलक्षणत्वादिति ।

द्व्याशीतिक इत्यत्र कस्मान्न तौ भवतः ?

यत्र वृद्धिरचामादेस्तत्रैचावत्र घोर्हि सा* ।

यत्राचामादेरित्येवं÷ वृद्धिस्तत्रैचावुच्येते। अत्र घोरित्येवं वृद्धिः । किमिदं घोरिति ? उत्तरपदस्येति+ । उत्तरपदाधिकारेऽप्यवश्यमैजागमोऽनुवर्त्यः । पूर्वेष्वलिन्दे भवः पूर्वैषुयलिन्द इत्येवमर्थम्× । नैष दोषः । उत्तरपदेनात्राचामादिं विशेषयिष्यामोऽचामादिना य्वौ—उत्तरपदस्याचामादेर्यौ य्वाविति ।

अथ कस्मात्पदान्ताभ्याम्,

अथ किमर्थं पदान्ताभ्यामित्युच्यते ?

**यथेणो न भवेद्यणः ॥ ३ ॥**

इणो यणादेशे मा भूत्—यतश्छात्रा याता इति ।

प्र०–दिना विशेषणाभावेऽप्यत्र दोषस्तथाऽपि विशेषणे सर्वं न सिध्यतीति प्रतिपादनायेदमुच्यते । एतत्परिहरति—यत्रेति । अचामादेरिति या वृद्धिः प्राप्नोति तदपवादावैचौ विधीयेते । अत्र तु संख्यायाः संवत्सरसंख्यस्येति वृद्धिर्विधीयते । अचामादेरिति वर्तते । तन्त्रेण च ते द्वे अचामादेरित्येतदाश्रीयते । तत्रैकं स्वरूपपरम् । तेनाचामादेरित्येवं या वृद्धिस्तस्यां प्राप्तायां तदपवादावचामादेः स्थाने य्वाभ्यां पूर्वावैचौ भवत इत्यर्थः संपद्यते । उत्तरपदाधिकारेऽपीति । तथा च द्व्याशीतिके दोषः । पूर्वैषुयलिन्द इति । प्राचां ग्रामनगराणामित्युत्तरपदवृद्धिः प्राप्ता प्रतिषिध्यते । नैष दोष इति । द्व्याशीतिक इत्यत्र । तदेवं नेति प्रत्याख्यातम् । याता इति । अचामादेरचः स्थाने भवत्ययं यकार

उ०–'स्वाङ्गकः' इत्यादौ स्वङ्गशब्दादवृद्धादपीति वुञि सुसर्वार्धाज्जनपदस्येत्युत्तरपदवृद्धौ दोष इति भावः । भाष्यश्चेदुपलक्षणत्वादिति पाठे तद्वदिदमप्युपलक्षणमिति कथंचिद्व्याख्येयम् । अत्र । द्व्याशीतिके । विशेषणे सर्वमिति । ननु पक्षान्तर इष्टं सिध्यतीति भावेनेत्यर्थः । कथं पुनरयमर्थः सूत्राक्षरैर्लभ्यतेऽत आह—तन्त्रेण च ते इति । निषेधसत्त्वे [illegible] येन नाप्राप्तिन्यायेन तद्धितेष्वचामादेरित्यस्यैव स निषेध इति तत्संनियोगशिष्ट ऐजागमोऽपि तत्रैवेति द्व्याशीतिके न दोषः । आवृत्तिश्च नाऽऽश्रयणीयेति बोध्यम् । पूर्वैषुयलिन्दार्थमुत्तरपदाधिकार ऐजाद्यनुवृत्तौ द्व्याशीतिके दोषस्तं परिहरति भाष्ये—नैष दोष इति । तदाह—द्व्याशीतिक इति । निषेधसत्त्वेऽपि प्राचां ग्रामनगराणामित्यत्रैतदनुवर्त्यं वाक्यभेदेन व्याख्यानात्पूर्वैषुयलिन्दे न दोषः । संख्यायाः संवत्सरेत्यादौ तु नानुवृत्तिर्मानाभावादिष्टानुरोधाच्च । केचित्तूत्तरपदसंबंधिय्वाभ्यां परस्य न वृद्धिरित्यर्थादनुवृत्तावपि न दोष इत्याहुः ।

÷ ७. ३. ११७–११८. + ७. ३. १५; १०. × ७. ३. १४.

* य्वोः, घोरिति पाठान्तरे । एवमष्टाध्याय्यां ( ७ । १ । २१ ) सूत्रेऽपि घुस्थाने घु पठ्यते । उभयत्रापि घुपाठः समीचीनतरः । भाष्ये—"किमिदमघाविति । अनुत्तरपद इति" ( ७ । १ । २१ ) । "किमिदं घोरिति । उत्तरपदस्येति ( ७ । ३ । ३ )" उभयत्राप्युत्तरपदस्यैव घुसंज्ञा प्रतीयते न तु घोश्च य्वोश्चेति ।

इह वैयाकरणः सौवश्व इति शाकलं प्राप्नोति× य्वोश्च स्थानिवद्भावादायावौ प्राप्नुतः+ ।

शाकलायावादेशेषु चोक्तम् ॥ २ ॥

किमुक्तम् ? शाकले तावदुक्तं—सिन्नित्यसमासयोः शाकलप्रतिषेध इति* । आयावोः किमुक्तम् ? अचः पूर्वविज्ञानादैचोः सिद्धमिति÷ ।

य्वाभ्यां परस्यावृद्धित्वमपवादौ वृद्धेर्हि तौ ।
नित्यावैचौ तयोर्वृद्धिः किमर्थं नेति शिष्यते ॥ १ ॥
यत्र य्वाभ्यां परा वृद्धिस्तत्राध्यश्वेर्यथा न तौ ।
अचामादेर्य्वाभ्यां हि तौ कथं द्व्याशीतिके न तौ ॥ २ ॥
यत्र वृद्धिरचामादेस्तत्रैचावत्र घोर्हि सा ।
अथ कस्मात्पदान्ताभ्यां यथेणो न भवेद्यणः ॥ ३ ॥

द्वारादीनां च ॥ ७ । ३ । ४ ॥

अथ परस्यावृद्धिरित्यनुवर्तत उताहो न ? किंचातः ? यद्यनुवर्तते शौवं

प्र०—इत्यैच्प्राप्नोति । ननु चान्तरङ्गत्वात्पूर्वमेव यणा भाव्यम् । इहापि व्याकरणं स्वश्च इति पूर्वमेव यण्भवति । ततो यथा भूतपूर्वगत्याऽत्राचामादेर्यणौ भवतस्तथा यणादेशो भवतीत्यदोषः । अचः पूर्वविज्ञानादिति । योऽनादिष्टादचः पूर्वस्तस्य विधौ स्थानिवद्भाव इत्यर्थः ।

द्वारा० । पूर्वसूत्रे वृद्धिनिषेधः प्रतिपत्तिलाघवार्थ कृतो नह्येकेनाचामादेरित्यनेनोभयं विशेषयितुं शक्यं नाप्यप्रतिषिध्यमाना वृद्धिरचामादेरित्यनेन शक्या विशेषयितुमिति यथान्यासं प्रतिषेधमाश्रित्य विचार्यते—परस्येति । यदीति । यत्रैव वृद्धि-

उ०—अत्र नेत्यस्य प्रत्याख्यानमेकदेशिनोऽतिगुरुयत्नसाध्यत्वादिति बोध्यम् । ननु चेति । एवं च ञ्णिदादिनिरूपिताङ्गस्याचामादेरचः स्थाने य्वौ न भवत इति भावः । अचामादेरिति । ञ्णिदादिनिरूपिताङ्गसंबन्ध्यचामादेरित्यर्थः । तथा यणादेश इति । तथा याता इत्यादावपि तन्निरूपिताङ्गसंबन्ध्यचामादेरचः स्थाने यणादेशो भवतीत्यर्थः । अत्र भूतपूर्वगत्येति चिन्त्यम् । यदि प्रत्ययोत्पत्त्यनन्तरं यणादेशः स्यात्तदा तत्स्थानिकः स्यादित्येवं काल्पनिकं तदिति वक्तुमुचितम् । भाष्ये—शाकलं प्राप्नोतीति । ततश्च नित्यं यण् दुर्लभ इति भावः ।

द्वारादीनां च । ननु पूर्वसूत्रे निषेधस्य प्रत्याख्यानात्तदनुवृत्त्यादिविचारोऽयुक्त इत्यत आह—पूर्वसूत्र इति । तन्त्राद्याश्रयणे च न मानमिति भावः । तन्त्राद्याश्रयणेऽपि न निर्वाह इत्याह—नापीति । अचामादेरित्येवं यत्र वृद्धिः प्राप्ता तत्र तदपवादावैचावित्यन्वयस्तु न

× ६. १. १२७. + ६. १. ७७; ७८. * ६. १. १२७. ÷ १. १. ५७.

मांसम्, टिलोपे* कृत ऐजागमो न प्राप्नोति । अथ निवृत्तं स्वाध्यायशब्दो द्वारादिषु पठ्यते तत्र यावन्तो यणः सर्वेभ्यः पूर्वं ऐजागमः प्राप्नोति । यथेच्छसि तथाऽस्तु । अस्तु तावदनुवर्तते । कथं शौवं मांसम्? आनुपूर्व्या सिद्धमेतत् । नात्राकृत ऐजागमे टिलोपः प्राप्नोति । किं कारणम्? प्रकृत्यैकाच् [ ६. ४. १६३ ] इति प्रकृतिभावेन भवितव्यम् । तदेतदानुपूर्व्या सिद्धं भवति । अथवा पुनरस्तु निवृत्तम् । ननु चोक्तं स्वाध्यायशब्दो द्वारादिषु पठ्यते तत्र यावन्तो यणः सर्वेभ्यः पूर्वं ऐजागमः प्राप्नोतीति । कः पुनरर्हति स्वाध्यायशब्दं द्वारादिषु पठितुम् । एवं किल पठ्येत—स्वमध्ययनं स्वाध्याय इति । तच्च न । सुष्ठु वाऽध्ययनं

प्र०–प्रतिषेधस्तत्रैवैज्भ्यां भाव्यं नान्यत्र । शौवमिति । शुनो विकार इति प्राणिरजतादिभ्योऽञित्यञ् । अन्शब्दस्य तु पाठस्तदाद्यर्थः स्याच्छौवहानमिति । यावन्तो यण इति । अपदान्तार्थत्वादस्य सर्वेभ्यो यण्भ्यः पूर्वावैचौ प्राप्नुतः । प्रतिषेधे तु विधीयमाने याभ्यां य्वाभ्यां परस्य वृद्धिप्रतिषेधस्ताभ्यां पूर्वावैचाविति नास्ति सर्वेभ्यः प्रसङ्गः । प्रकृत्यैकाजिति । इष्टेमेयःसु प्रकृतिभावः । तथा च ज्ञा देवताऽस्य ज्ञ इत्यत्र न भवति । इह त्वविशेषेण प्रकृतिभावमाश्रित्यैतदुक्तं परिहारदिक्प्रदर्शनार्थम् । अत्र हि परत्वाट्टिलोपं बाधित्वा वृद्धिः प्राप्ता प्रतिषिध्यत इति भवत्यैजागम इत्ययमत्र परिहारः । सुष्ठु वाऽध्ययनमिति । अन्येषामपि दृश्यत इति दीर्घः । आङ् वा मध्ये प्रक्षेप्तव्यः ।

उ०–लभ्यत इति भावः । ननु शुन इदमित्यणि प्रकृतिभावाट्टिलोपो दुर्लभोऽत आह—अञिति । नन्वेवं अन्शब्दपाठो व्यर्थोऽत आह—तदाद्यर्थ इति । परत्वादिति । टिलोपस्य शब्दान्तरप्राप्त्याऽनित्यत्वमित्याशयः । परे तु दुष्टपक्षेण समाधानं कुर्वता भाष्यकृताऽनुवृत्तिपक्षस्यासंगततैवोक्ता । कैयटोक्तं तु न युक्तं कृताकृतप्रसङ्गित्वेन टिलोपस्य नित्यत्वात् । किंच ज्ञो देवताऽस्येत्यत्रापि परत्वाद्वृद्धौ सकृद्गतिन्यायेन लोपाप्राप्त्या ज्ञ इत्यस्यासिद्धिः । किंच स्त्रीपुंसाभ्यामित्यत्राञ्प्रत्ययो नुगागमश्च कार्य इत्याशङ्क्य टिलोपः स्यात् । न च नुग्विधानसामर्थ्यम्, स्त्रैणे यं विधिं प्रतीति न्यायेन तद्विधानसामर्थ्यात्तदभावेऽपि पौंस्ने दोष इत्युक्तंतदसङ्गतिः । त्वदीरया स्त्रैणे नुक्येव टिलोपप्राप्तिः, अन्यथा वृद्ध्या बाधात्तदसंगतिः स्पष्टैव । किंच सोमाट्ट्यणित्येव सकृद्गतिन्यायेन सिद्धे कस्येदितीत्वविधानेन वृद्धेर्लोपस्य बलवत्त्वबोधनेन परत्वादित्यस्यासंगतेश्च णौ चङीति सूत्रे नाग्लोपीति सूत्रस्थप्रत्याहारग्रहणेन वृद्धेर्लोपो बलीयानिति सामान्यत एव ज्ञापकस्य वक्ष्यमाणत्वाच्च । एवं च श्रायं हविरित्यादि लोके भिन्नमेव । वृद्ध्यपवादत्वादैचोर्न वृद्धिनिषेधोपयोगोऽत्रेति बोध्यम् । भाष्ये—तच्च नेति । स्वशब्दस्य द्वारादिषु पाठादिति भावः । सुष्ठु वाऽध्ययनमिति । तत्र च न व्याम्यामिति

* ४. १. १५४; ६. ४. १४४.

स्वाध्यायः, शोभनं वाऽध्ययनं स्वाध्यायः* । अथापि स्वमध्ययनं स्वाध्याय एवमपि न दोषः । अचामादेरिति+ वर्तते ।

**श्वादेरिञि ॥ ७ । ३ । ८ ॥**

अयं श्वन्शब्दो द्वारादिषु× पठ्यते तत्र कः प्रसङ्गो यत्तदादेः स्यात् । नैव प्राप्नोति नार्थः प्रतिषेधेन । इह तस्य वा ग्रहणं भवति तदन्तस्य वा, न चेदं तत्, नापि तदन्तम् । तदादिविधिना प्राप्नोति । नैव तदादिविधिरस्ति । अत उत्तरं पठति—

**प्रतिषेधे श्वादिग्रहणं ज्ञापकमन्यत्र श्वन्ग्रहणे तदादिग्रहस्य शौवहानाद्यर्थम् ॥ १ ॥**

प्रतिषेधे श्वादिग्रहणं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यम् ? एतज्ज्ञापयत्याचार्योऽन्यत्र श्वन्ग्रहणे तदादिविधिर्भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? शौवहानाद्यर्थम् । शौवहानं* नाम नगरम् । शौवादंष्ट्रो+ मणिरिति ।

---

प्र०-अचामादेरिति वर्तत इति । तत्रैवं संबन्धोऽचामादेरनन्तरौ यौ य्वौ ताभ्यां पूर्वावैचौ भवत इति । तेन स्वाध्यायशब्दे वकारात्पूर्वमैज्भवति नतु यकाराभ्यामित्यर्थः । यद्यपि स्वोऽध्यायः स्वाध्याय इत्यस्यामपि व्युत्पत्तौ स्वाध्यायशब्दो न पठितव्यः स्वशब्दस्येह पाठात्तदादिविधेश्चेष्टत्वात्तथाऽपि पाठेऽपि दोषो नास्तीति प्रदर्शनाय भाष्यकारेण पाठमभ्युपगम्य परिहारोऽभिहितः ।

श्वादे:० । तदादिविधिनेति । आद्यज्विशेषणत्वाद्द्वारादीनां तदादिविधिरस्ति । इतरस्त्वगृहीताभिप्राय आह—न वै तदादिविधिरस्तीति । श्व ग्रहण इति । श्वन्ग्रहणस्योपलक्षणार्थत्वादेतत्प्रकरणनिर्दिष्टैर्देविकादिभिर्द्वारादिभिश्चाऽऽदेरचो विशेषणात्तदादिविधिर्भवतीति ज्ञाप्यते । शौवहानमिति । जिहतेऽस्मिन्निति ल्युट् । शुनां हानमिति षष्ठीसमासः । श्वहानमस्मिन्नस्तीति तदस्मिन्नस्तीति देशे तन्नाम्नीत्यण् । वृद्धिनिषेधः । ऐजागमश्च द्वारादित्वात् । शौवादंष्ट्र इति । शुनो दंष्ट्रा श्वादंष्ट्रा । शुनो दन्तदंष्ट्रेति

---

उ०-सिद्धमिति तात्पर्यम् । नन्वेवं स्वध्याय इति स्यादत आह—अन्येषामपीति । कथं पुनस्तदनुवृत्तौ दोषपरिहारोऽत आह—तत्रैवमिति । अनन्तरशब्दोऽव्यवहितसमीपवाची । तदादिविधेश्चेति । अत एव स्वग्रामे भवः सौवग्रामिक इति सिध्यति । पाठमभ्युपगम्येति । वस्तुतस्तु स्वग्रामस्वाध्याययोः पाठः स्वशब्दादेश्चेदेतयोरेवेति नियमार्थः । तेन स्वार्थिकाः स्वाभाविकं स्वाराज्यमित्यादिसिद्धमिति भाष्याशयः ।

श्वादे:० । आद्यजिति । अङ्गस्याचामादेर्न वृद्धिर्भवति स चेदाद्योऽज्द्वारादीनामवयव इत्यर्थ इति भावः । द्वारादीनां यकारवकारविशेषणत्वादपि सिध्यतीति बोध्यम् । संज्ञापूर्वक

---

* ७. ३. ३. + ७. २. ११७. × ७. ३. ४. * ४. २. ६७; ७. ३. ४. + ६. ३. १३७; ४. ३. ५३; ७. ३. ४.

**इकारादिग्रहणं च श्वागणिकाद्यर्थम् ॥ २ ॥**

इकारादिग्रहणं च कर्तव्यम् । किं प्रयोजनम् ? श्वागणिकाद्यर्थम् । श्वगणेन चरति श्वागणिकः* ।

**तदन्तस्य चान्यत्र प्रतिषेधः ॥ ३ ॥**

तदन्तस्य चान्यत्र प्रतिषेधो वक्तव्यः । श्वाभस्त्रेः स्वं श्वाभस्त्रम्+ ।

**उत्तरपदस्य ॥ ७ । ३ । १० ॥**

किमर्थमिदमुच्यते ? अवयवादृतोः [ ७. ३. ११ ] इति वक्ष्यति तदुत्तरपदस्य यथा स्यादचामादेर्मा भूत् । नैतदस्ति प्रयोजनम् । अवयवादिति पञ्चमी तत्रान्तरेणाप्युत्तरपदग्रहणमुत्तरपदस्यैव भविष्यति× । उत्तरार्थं तर्हि सुसर्वार्धाज्जनपदस्य [१२] इति सुसर्वार्धादिति पञ्चमी । दिशोऽमद्राणाम् [१३] । दिश इति पञ्चमी । प्राचां ग्रामनगराणाम् [ १४ ] । दिश इत्येव संख्यायाः संवत्सरसंख्यस्य च [१५] । संख्याया इति पञ्चमी । वर्षस्याभविष्यति [१६] । संख्याया इत्येव । परिमाणान्तस्यासंज्ञाशाणयोः [ १७ ] इति । संख्याया इत्येव । इदं तर्हि प्रयोजनं—जे प्रोष्ठपदानाम् [ १८ ] । उत्तरपदस्य

---

प्र०-दीर्घः । तत्र भव इत्यण् । संज्ञापूर्वको विधिरनित्य इति वृद्धाच्छो न भवति । इकारादिग्रहणमिति । श्वादेरितीति सूत्रं कर्तव्यम् । तत्र यस्मिन्विधिस्तदादावल्ग्रहण इति तदादिविधिर्भवति । श्वागणिक इति । श्वगणाट्ठञ् चेति ठञ् । तदन्तस्येति । इञन्तस्य । श्वाभस्त्रमिति । इञश्चेत्यण् । बाह्यतद्धितनिमित्तो वृद्धिप्रतिषेध ऐजागमश्च बहिरङ्गत्वादशक्य इञाश्रयेण निषेधेन निवारयितुमिति वचनारम्भः ।

उत्तरपदस्य । किमर्थमिति । तस्मादित्युत्तरस्येति वचनादुत्तरपदस्यैव वृद्धिर्भविष्यतीति प्रश्नः । आचार्यस्तु शिष्यबुद्धिपरीक्षार्थमाह—अवयवादृतोरिति । जे प्रोष्ठ-

---

उ०-इति । प्रत्ययसंज्ञाविशिष्टस्यैव च्छस्य विधानादिति भावः । यत्तु स्वं रूपमिति संज्ञापूर्वकत्वमिति । तन्न । अतिप्रसङ्गात् । ओरोदिति वक्तव्य ओर्गुण इत्यस्य ज्ञापकत्वोच्छेदापत्तेश्च । ज्ञापितेऽपि चारितार्थ्याभावादित्याहुः । अपरं तु शुनो दन्तेति भाष्ये न क्वापि दृश्यते । अन्येषामपि दृश्यत इत्यस्याभियुक्तोक्तः प्रपञ्चः सः । ततश्च श्वदंष्ट्राशब्दादेव प्रत्यये तदनन्तरं तेन दीर्घः । संज्ञापूर्वकस्यानित्यत्वं च न क्वापि भाष्य आश्रितमित्याहुः । बहिरङ्गत्वादिति । प्रत्यासत्तिन्यायानाश्रयणबोधकं वचनमिति बोध्यम् ।

उत्तरपदस्य । तस्मादितीति । अवयवादृतोरित्यादौ । भाष्ये—परिमाणान्तस्येत्यत्र संख्याया इत्येवेति । नन्वत्र संख्याया इत्यस्य संबन्धेऽसमासे निष्कादिभ्य इति सूत्रस्य-

---

* ४. ४. ११. + ४. २. ११२. × १. १. ६७.

यथा स्यात्पूर्वपदस्य मा भूत्—प्रोष्ठपदासु जातः प्रोष्ठपादो× ब्राह्मणः ।

**तद्धितेष्वचामादिवृद्धेरुत्तरपदवृद्धिर्विप्रतिषेधेन द्व्याशीतिकाद्यर्थम् ॥ १ ॥**

तद्धितेष्वचामादिवृद्धेरुत्तरपदवृद्धिर्भवति विप्रतिषेधेन । किं प्रयोजनम् ? द्व्याशीतिकाद्यर्थम् । अचामादिवृद्धेरवकाशः—ऐतिकायनः, औपगवः÷ । उत्तरपदवृद्धेरवकाशः—द्विपाष्टिकः, त्रिपाष्टिकः+ । इहोभयं प्राप्नोति—द्व्याशीतिकः, त्र्याशीतिकः । उत्तरपदवृद्धिर्भवति विप्रतिषेधेन । कः पुनरत्र विशेषोऽचामादिवृद्धौ वा सत्यामुत्तरपदवृद्धौ वा ? अयमस्ति विशेषः—यद्यत्राचामादिवृद्धिः स्यादैजागमः प्रसज्येत× ।

**प्राचां ग्रामनगराणाम् ॥ ७ । ३ । १४ ॥**

नगरग्रहणं किमर्थं न प्राचां ग्रामाणामित्येव सिद्धम् ? न सिध्यति । अन्यो

---

प्र०—पदानामिति । पञ्चमीनिर्देशाभावादुत्तरपदस्य न स्यात् । वचनं त्वनाद्यजर्थं विज्ञायमानं पूर्वपदस्यापि वृद्धिं विदध्यात् । नियमार्थं वा स्यात् । जातार्थ एव प्रोष्ठपदानां वृद्धिः । प्रोष्ठपदानामेव वा जातार्थ इति । प्रोष्ठपाद इति । प्रोष्ठपदाभिर्युक्तः काल इत्यणो लुबविशेष इति लुपि कृते संधिवेलादिसूत्रेण जातार्थेऽण् । अत्राङ्गस्याचामादेर्वृद्धिर्मा भूदित्येवमर्थ उत्तरपदाधिकारः । उत्तरपदवृद्धौ सर्वं चेत्यत्रोत्तरपदाधिकारविहितवृद्धिपरिग्रहार्थश्च । द्विपाष्टिक इति । नन्वत्राप्यचामादेर्वृद्धिः प्राप्नोतीति कथमयमवकाशः । अथात्र येन नाप्राप्तिन्यायेनाऽऽदिवृद्धिर्बाध्यते तदा द्व्याशीतिके विप्रतिषेधानुपपत्तिः । उत्सर्गापवादयोरतुल्यबलत्वादिति वार्तिककारस्य विप्रतिषेधोपन्यासो न युक्त इति चिन्त्यमेतत् । यद्यत्रेति । सा च प्रतिषिध्येत । ततस्तत्प्रतिषेधसंनियुक्त ऐजागमः स्यादित्यर्थः । उत्तरपदवृद्धेस्तु यथाऽत्र प्रतिषेधो न भवति तथा न य्वाभ्यामित्यत्र प्रतिपादितम् ।

प्राचाम्० । नगरग्रहणमिति । यद्यपि समुदायवचनोऽपि ग्रामशब्दोऽस्ति

---

उ०—परमनैष्किकमिति भाष्योदाहरणविरोध इति चेन्न । अनुवृत्तस्य वाक्यभेदेन संबन्धात्तेन परिमाणान्तस्येत्यस्यान्यत्र क्वाचित्कत्वे तेन परमनैष्किकसिद्धिरनतिप्रसङ्गश्चेत्यदोषात् । संख्यायाः इत्येतद्वाक्यसाहचर्याच्चास्याप्युत्तरपद एव प्रवृत्तिरित्याशयात् । ननु पूर्वपदस्य सामान्यसूत्रेण सिद्धत्वाद्वचनं व्यर्थं स्यादत आह—वचनं त्विति । स्वयं फलान्तरमप्याह—उत्तरपदवृद्धाविति । चिन्त्यमेतदिति । उत्तरपदवृद्धेरपवादत्वं न युक्तम्, विषयभेदात् । हृद्भगसिन्ध्वन्ते पूर्वपदस्य चेत्यादौ पूर्वपदस्येत्युक्तेरन्यत्रोत्तरपदवृद्धिविषये पूर्वपदे वृद्ध्यभावबोधनादस्यावकाशः । द्व्याशीतिक उत्तरपदसंबन्ध्यच एवोभयप्राप्तेर्विप्रतिषेधोपपत्तिः । फलविशेषपर्यवसायिनोर्द्वयोः संभवस्याभावाद्विप्रतिषेधमूलमसंभवोक्तिरत्राप्यस्तीत्यन्ये । प्रतिपादितमिति । अनन्तरत्वादचामादिवृद्धेरेव स निषेध इति तत्संनियोगशिष्ट ऐजागमः स्यादिति भावः ।

प्राचां ग्राम० । ननु ग्रामः समूहो नगरं देशविशेष इत्यर्थभेदात्तदावश्यक-

---

× ४. २. ३; ४; ४. ३. १६. ÷ ७. २. ११७; ११८. + ७. ३. १५. × ७. ३. ३.

ग्रामोऽन्यन्नगरम् । कथं ज्ञायते ? एवं हि कश्चित्कंचित्पृच्छति—कुतो भवानागच्छति ग्रामात् ? स आह—न ग्रामान्नगरादिति । ननु च भो य एव ग्रामस्तन्नगरम् । कथं ज्ञायते ? लोकतः । ये हि ग्रामे विधयो नेष्यन्ते साधीयस्ते नगरे न क्रियन्ते । तद्यथा—अभक्ष्यो ग्राम्यकुक्कुटोऽभक्ष्यो ग्राम्यशूकर इत्युक्ते सुतरां नागरोऽपि न भक्ष्यते । तथा ग्रामे नाध्येयमिति साधीयो नगरेपि नाधीयते । तस्माद्य एव ग्रामस्तन्नगरम् । कथं यदुक्तमेवं हि कश्चित्कंचित्पृच्छति—कुतो भवानागच्छति ग्रामात् ? स आह—न ग्रामान्नगरादिति । संस्त्यायविशेषमसावाचष्टे । संस्त्यायविशेषा ह्येते—ग्रामो घोषो नगरं संवाह इति । एवं तर्हि सिद्धे सति यद्ग्रामग्रहणे नगरग्रहणं करोति तज्ज्ञापयत्याचार्योऽन्यत्र ग्रामग्रहणे नगरग्रहणं न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? विशिष्टलिङ्गो नदी देशोऽग्रामाः [ २. ४. ७. ] इत्यत्र नगरप्रतिषेधश्चोदितः स न वक्तव्यो भवति । यद्येतज्ज्ञाप्यते—उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् [ ४. २. १०९ ] इत्यत्र नगरग्रहणं कर्तव्यम् । वाहीकग्रामेभ्यश्च [ ४. २. ११७ ] नगरग्रहणं कर्त-

---

प्र०–'भूतग्राम' 'इन्द्रियग्राम' इति तथाऽपि जननिकायनिवासार्थत्वेनातिप्रसिद्धः । अभक्ष्यो ग्राम्यकुक्कुटः । ग्रामे नाध्येयमिति तदर्थस्यैव ग्रहणमिति मत्वा प्रश्नः । अन्यो हि ग्राम इति । विशेषेण विशेषान्तरस्यासंग्रहणान्नगरग्रहणम् । साधीयस्त इति । नगरस्याशुचितरत्वात् । संस्त्यायविशेषमिति । सामान्यशब्दस्यापि प्रकरणवशाद्विशेषावस्थानं दृश्यते । संस्त्यायावगमने निर्ज्ञाते विशेषपरिज्ञानाय कुत आगच्छतीति प्रष्टव्ये ग्रामशब्दोच्चारणाद्विशेषवाची ग्रामशब्दोऽनेन प्रयुक्त इति प्रतीयते । संस्त्यायो निवासः । ब्राह्मणकर्षकपुरुषप्रधानो देशो ग्रामः । गोमहिष्यादियुक्तो घोषः । प्रकारपरिखान्वितं श्रेणीधर्मयुक्तं संस्थानं नगरम् । प्राकारपरिखायुक्तस्तु श्रेणिधर्मान्वितो देशः संवाहः । न च नगरशब्दसंनिधाने गोवलीवर्दन्यायेन विशिष्टग्रामग्रहणाय संवाहादिनिवृत्तये नगरग्रहणम्, संवाहादिनिवृत्तेरनिष्टत्वात् । उदीच्यग्रामाच्चेति । ग्रामनगरमित्यादावव्यर्थम् । वाहीकग्रामेभ्यश्चेति । शाकलिक इत्याद्यर्थम् । दिक्शब्दा इति । पूर्व-

---

उ०–मत आह—यद्यपीति । निकायः—समूहः । वस्तुतः समूहवचनस्य निवासवचनस्य च ग्रहणेऽपि नगरग्रहणवैयर्थ्यस्य दुर्वारत्वेन यद्यपीत्यादिग्रन्थो वस्तुतत्त्वनिरूपणपर एव । नत्वेतं विना प्रश्नानुपपत्तिरिति बोध्यम् । भाष्ये—आगत इति । ग्रामादिति । कुतो भवान् ग्रामादागत इति पृच्छतीत्यन्वयः । कुतो भवानागच्छति ग्रामादिति क्वचित्पाठः । सामान्यशब्दस्यापीति । एवं च ग्रामशब्दो जननिवाससामान्ये तद्विशेषे चेति भावः । अत एव भाष्ये य एव ग्रामस्तन्नगरमिति संस्त्यायविशेषा ह्येते ग्रामो घोषो नगरं संवाह इति चोक्तम् । श्रेणी संघविशेषः । तद्धर्मः—संभूयोपादानाऽऽदानम् । प्राकारेति । प्राकारपरिखाभ्यामयुक्त इत्यर्थः । शाकलिक इति । शाकलं नाम वाहिकेषु नगरम् ।

व्यम् । दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु [ ६. २. १०३ ] नगरग्रहणं कर्तव्यम् । इदं चतुर्थं ज्ञापकार्थम् । तत्रातिनिर्बन्धो न लाभः । तस्माद्यस्मिन्नेव ग्रामग्रहणे नगरग्रहणं नेष्यते तस्य प्रतिषेधो वक्तव्यः ।

**संख्यायाः संवत्सरसंख्यस्य च ॥ ७ । ३ । १५ ॥**

**संवत्सरग्रहणमनर्थकं परिमाणान्तस्येति कृतत्वात् ॥ १ ॥**

संवत्सरग्रहणमनर्थकम् । किं कारणम् ? परिमाणान्तस्येति कृतत्वात् । परिमाणान्तस्यासंज्ञाशाणयोः [ ७. ३. १७. ] इत्येव सिद्धम् ।

**ज्ञापकं तु कालपरिमाणानां वृद्धिप्रतिषेधस्य ॥ २ ॥**

एवं तर्हि ज्ञापयत्याचार्यः—कालपरिमाणानां वृद्धिर्न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? द्वैरात्रिकः, त्रैरात्रिकः, अत्र वृद्धिर्न भवति । नैतदस्ति प्रयोजनम् । नास्त्यत्र विशेषः सत्यां वोत्तरपदवृद्धावसत्यां वा । इदं तर्हि—द्वैसमिकः, त्रैसमिकः । इदं चापि प्रयोजनं-द्वैरात्रिकः, त्रैरात्रिकः । ननु चोक्तं नास्त्यत्र विशेषः सत्यां वोत्तरपदवृद्धावसत्यां वेति । अयमस्ति विशेषः—यद्यत्रोत्तरपदवृद्धिः स्यादचामादेर्वृद्धिर्न स्यात् ।

अपर आह । ज्ञापकं तु कालपरिमाणानां परिमाणग्रहणस्य । एवं तर्हि ज्ञापयत्याचार्यः कालपरिमाणानां परिमाणग्रहणेन ग्रहणं न भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि [ ४. १. २२ ] द्विवर्षा, त्रिवर्षा । परिमाणपर्युदासेन पर्युदासो न भवति ।

---

प्र०—पाटलिपुत्रमित्यादौ पूर्वपदान्तोदात्तार्थम् । अतिनिर्बन्ध इति । अतिगौरवम् । न लाभ इति । लाघवम् ।

संख्यायाः० । संवत्सरग्रहणमिति । कालः क्रियापरिच्छेदहेतुत्वात्परिमाणं तद्विशेषवाची संवत्सरशब्द इति भावः । द्वैरात्रिक इति । द्वे रात्री अधीष्ट इति तद्धितार्थे समासे रात्र्यहःसंवत्सराच्चेति वा खविधानात्पक्षे ठञ् । द्वैसमिक इति । अधीष्टादिषु समायाः खः, द्विगोर्वेति पक्षे ठञ् । अचामादेर्वृद्धिर्न स्यादिति । सत्यपि संभवे बाधनं भवतीति न्यायात् । अपर आहेति । पूर्वं विशेषविषयं ज्ञापनमाश्रितमिदानीं तु सामान्यविषयमिति भेदः । द्विवर्षेति । द्वे वर्षे भूता तमधीष्ट इति ठञ् । तस्य वर्षाल्लुक् चेति पक्षे लुक् । द्विगोरिति ङीप्प्राप्तोऽपरिमाणेति प्रतिषिद्धः ।

---

उ०—लाभपदार्थमाह—लाघवमिति । एवं चात्र नगरग्रहणं प्रत्याख्यातम् ।

संख्यायाः० । काल इति । परिमाणान्तस्येत्यत्र परिच्छेदकमात्रं परिमाणशब्देन गृह्यते न तु सर्वतो मानमेव शाणप्रतिषेधादिति भावः । सत्यपि संभव इति । हलगसिन्ध्वन्त इति पूर्वोक्तज्ञापकादिति वक्तुमुचितम् । इति भेद इति । असंख्यापूर्वपदे

## प्रवाहणस्य ढे ॥ ७ । ३ । २८ ॥

परस्य वृद्धिर्नेत्यनुवर्तत उताहो न+ । किंचातः ? यद्यनुवर्तते प्रवाहणेयी* भार्याऽस्येति प्रवाहणेयीभार्यः, वृद्धिनिमित्तस्येति× पुंवद्भावप्रतिषेधो न प्राप्नोति । अथ निवृत्तं न दोषो भवति । यथा न दोषस्तथाऽस्तु । अथवा पुनरस्त्वनुवर्तते । ननु चोक्तं प्रवाहणेयी भार्याऽस्य प्रवाहणेयीभार्यः, वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधो न प्राप्नोतीति । नैष दोषः । मा भूदेवम् । जातेरित्येवं÷ भविष्यति ।

## यथातथयथापुरयोः पर्यायेण ॥ ७ । ३ । ३१ ॥

अयं योगः शक्योऽवक्तुम् । कथमयाथातथ्यम्, आयथातथ्यम्, अयाथापुर्यम्, आयथापुर्यम् । यदा तावत्पूर्वपदस्य वृद्धिस्तदैवं विग्रहः करिष्यते—न

प्र०— प्रवाह० । "पूर्वस्य तु वेति" वर्तते । तत्र यदा पूर्वपदस्य वृद्धिर्नास्ति तदोत्तरपदस्य वृद्धिभावाभावयोः श्रुतौ विशेषाभावाद्विशेषान्तरजिज्ञासया प्रश्नः । परस्येति । प्रवाहणेयीति । शुभ्रादिभ्यश्चेति ढक् । ननु वृद्धेर्निमित्तं यस्मिन्ञ्णकारादिः स वृद्धिनिमित्त इत्याश्रितम् । ततोऽसत्यामपि वृद्धौ वृद्धिनिमित्तव्यपदेशसद्भावात्पुंवद्भावप्रतिषेधो भविष्यति । नैतदस्ति । ञ्णकानां वृद्धिमुत्पादयतामेव वृद्धिं प्रति निमित्तत्वं नान्यदा । यथा स्नुक्रमोरनात्मनेपदनिमित्त इत्यत्र सत्येवाऽऽत्मनेपदे स्नुक्रमोरात्मनेपदनिमित्तत्वादिडभावो नासति । जातेरिति । गोत्रं च चरणैः सहेति जातिवाचित्वात् । अनुवृत्तेरेवं प्रयोजनाभावः ।

यथा० । न यथातथेति । यथातथेत्ययं निपातोऽविपरीतार्थवृत्तिरिति केचिदाहुः ।

उ०—परिमाणान्तस्येत्यस्याप्यप्रवृत्तेः । संज्ञाविषये त्वनभिधानं बोध्यम् । अन्यथा तद्विषये संवत्सरग्रहणस्य चारितार्थ्येन ज्ञापकं भज्येत ।

प्रवाहणस्य ढे । भाष्ये—परस्य वृद्धिर्नेति । उत्तरपदाधिकारात्प्राप्तिः । वृद्धिमुत्पादयतामिति । फलोपहित एव निमित्तशब्दो मुख्य इति भावः । जातेरिति । अनन्तरापत्येऽपि गोत्रत्वारोपेण प्रत्ययाश्रयादर्णेर्या सर्वथा जातिरेवेति बोध्यम् । प्रयोजनाभाव इति । हरदत्तस्तु सम्बन्धाऽनभिधानियम्, तेनोपसंख्यानिकस्य न निषेध इत्याह ।

यथातथ० । एतौ पदार्थानतिवृत्त्यर्थकावव्ययौ । तथाभावमनतिक्रान्तं यथातथम्—सत्यम् । पुरा यथा भूतं वस्तु तद्यथापि तथाभावमनतिक्रान्तं यथापुरम् । अत एव सूत्रे

+ ७. ३. १७. * ४. १. १२३. × ६. ३. ३९. ÷ ६. ३. ४१.

यथातथा अयथातथा, अयथातथाभाव आयथातथ्यम्। यदोत्तरपदस्य वृद्धिस्तदैवं विग्रहः करिष्यते—यथातथाभावो याथातथ्यम्। न याथातथ्यमयाथातथ्यम्।

हनस्तोऽचिण्णलोः ॥ ७ । ३ । ३२ ॥

हन्तेस्तकारे तद्धिते प्रतिषेधः ॥ १ ॥

हन्तेस्तकारे तद्धिते प्रतिषेधो वक्तव्यः। वार्त्रघ्नम्, भ्रौणघ्नम्+।

उक्तं वा ॥ २ ॥

किमुक्तम्? धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्सिद्धमिति×।

आतो युक्चिण्कृतोः ॥ ७ । ३ । ३३ ॥

कृद्ग्रहणं किमर्थम्? इह मा भूत्—ददौ दधौ। नैतदस्ति प्रयोजनम्। अचिण्णलोरिति* वर्तते। यद्यचिण्णलोरिति वर्तते—अदायि, अधायीत्यत्र न प्राप्नोति। वचनाच्चिणि भविष्यति। अचिण्णलोरिति वर्तते। एवमपि चौडिः, बालाकिरित्यत्र÷प्राप्नोति। लोपो×ऽत्र बाधको भविष्यति। इदमिह संप्रधार्यम्—लोपः क्रियतां युगिति किमत्र कर्तव्यम्? परत्वाद्युक्। एवं तर्ह्याचा-

प्र०—अन्ये तु यथातथाशब्दयोः सुप्सुपेति समास एतदर्थ इत्याहुः। ततो नञिति समासे कृते ब्राह्मणादिषु दर्शनात्ष्यञ्। स्वरेऽपि नास्ति विशेषः। आयथातथ्यमित्यस्य ञित्त्वादाद्युदात्तत्वादयाथातथ्यमित्यस्याप्यव्ययपूर्वपदप्रकृतिस्वरत्वात्। प्रत्ययान्तरार्थं त्वेतन्न भवत्यनभिधानादेताभ्यां प्रत्ययान्तराभावात्।

आतो युक्०। ददाविति। उत्तमस्य णलो णित्त्वाभावपक्षे सावकाशमौत्त्वं णित्त्वे परत्वाद्युग्बाधेत। अदायीति। सूत्रे चिणो निमित्तत्वेनोपादानादचिण्णलोरित्यनुवर्तनाच्च विधिनिषेधयोः पर्यायः स्यात्। वचनादिति। आतो युक्चिणि चेति चिणः साक्षादुपादानान्निषेधो न भविष्यति। चिणि विधिः प्रत्यक्षशिष्टत्वादसंदिग्धो निषेधस्तु णलर्थ एवानुवर्तते। अथ चिणर्थोऽपीति संदिग्ध इत्यसंदिग्धो विधिरेव प्रवर्तते। अचामादेरिति वर्तत इति। नन्वेवं दरिद्रायके युङ् न प्राप्नोति। एवं तर्हि

उ०—ह्रस्वनिर्देश इति केचित्। एतच्च यथातथाभाव इति भाष्येण विरुध्यते। तस्मात्सूत्रेऽपि दीर्घपाठ एवोचित इति परे। अयं निपात इति। विशिष्टो निपात इत्यर्थः। अविपरीतार्थः सत्यरूपोऽर्थः। एतदर्थः। एतद्वृत्तिविषय इत्यर्थः। सत्यरूपार्थं इत्यर्थो वा।

आतो युक्०। ननु निरवकाशत्वाण्णल औत्वं बाधकं स्यादत आह—उत्तमस्येति। इदमुपलक्षणं भूतपूर्वगत्यौत्वस्य दरिद्रातेरालोपे प्रवृत्त्या चारितार्थ्यात्। विषयभेदेनापवादत्वाभाव इति तु नेत्युक्तम्। पर्यायः स्यादिति। एवं च न प्राप्नोतीति भाष्यस्य पक्षे न प्राप्नोतीत्यर्थं इति भावः। असंदिग्धो विधिरेवेति। तदुक्तं भाष्ये—वचनाच्चिणि

+ ४. ४. १३५. × ७. २. ११४. * ७. ३. ३२. ÷ ४. १. ९६. × ६. ४. १४८.

मादेरिति× वर्तते । यत्राचामादिराकारस्तत्र युगिति । एवमपि ज्ञा देवताऽस्य स्थालीपाकस्य ज्ञः÷ स्थालीपाकः, अत्र प्राप्नोति । तस्मात्कृद्ग्रहणं कर्तव्यम् ।

**नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥ ७ । ३ । ३४ ॥**

अत्यल्पमिदमुच्यतेऽनाचमेरिति । अवमिकमिचमीनामिति वक्तव्यम् । वामः, कामः, आचामः ।

**शाछासाह्वाव्यावेपां युक् ॥ ७ । ३ । ३७ ॥**

**णिच्प्रकरणे धूञ्प्रीञोर्नुग्वचनम् ॥ १ ॥**

णिच्प्रकरणे धूञ्प्रीञोर्नुग्वक्तव्यः । धूनयति, प्रीणयति ।

**पातेर्लुग्वचनम् ॥ २ ॥**

पालयति ।

**प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ॥ ७ । ३ । ४४ ॥**

स्थग्रहणं किमर्थम् ? इदं विचारयिष्यते—इत्त्वे कग्रहणं संघातग्रहणं वा

---

प्र०—दोषान्तरोपन्यासादयं दोषो नोक्तस्तदाह—एवमपीति । आदिवद्भावादत्र प्रसङ्गो यथा 'दाय' इत्यादौ ।

नोदात्तो० । काम इति । 'आयादय आर्धधातुके वे'ति यदा णिङ् नास्ति तदा घञि वृद्धिनिषेधस्य पर्युदासः । विश्रामशब्दस्त्वसाधुरेव । उपमोपरमौ 'संज्ञापूर्वको विधिरनित्य' इति वृद्ध्यभावात् ।

शाछा० । पातेर्लुगिति । यद्यपि पाल रक्षण इत्यस्य पालयतीति सिध्यति तथाऽपि पातेः पुङ्निवृत्तये लुगागमविधानम् । लुग्विकरणत्वात्तस्य युकोऽप्रसङ्गः ।

प्रत्यय० । स्थग्रहणमिति । कादिति वर्णग्रहणं न च वर्णमात्रं ककारः प्रत्ययोऽस्तीति सामर्थ्यात्प्रत्ययावयवे प्रत्ययशब्दो वर्तिष्यत इति प्रश्नः । इतरः पक्षान्तरे प्रयोजनमाख्यातुमाह—इदमिति । वक्ष्यमाणस्य बुद्ध्या प्रत्यक्षीकृत्य परामर्शः ।

---

उ०—भविष्यदपेक्षिण्योरिति वर्तत इति । इदं प्रत्यक्षं तदानुमानिकमित्यर्थः । आदिवद्भावादिति । आपन्नपदैकमित्रिप्यमेनाचामादिग्धमिति भावः ।

नोदात्तो० । ननु कमेर्णिङि वृद्धौ णिङोऽपि कामः सिद्धोऽत आह—आयादय इति । उपमोपरमेति । तयोरनुदात्तोपदेशत्वादिति भावः । वृद्ध्यभावादिति । चर्थे के साधुरित्यन्ये ।

शाछा० । पुङ्निवृत्तय इति । अनिष्टनिमित्तपुङ्निवृत्तय इत्यर्थः । ननु तेन प्राप्तपुङ्निवृत्तय इति चेत् पुकस्तत आह—लुग्विकरणत्वादिति ।

प्रत्ययस्थात्० । ननु वक्ष्यमाणस्याप्रत्यक्षत्वात्कथमिदमा परामर्शोऽत आह—वक्ष्य-

---

× ७. १. ११०. ÷ ४. ३. २४.

स्याद्वर्णग्रहणं वेति। यदा संघातग्रहणं तदा स्थग्रहणं कर्तव्यमिहापि यथा स्यात्-कारिका, हारिका। यदा हि वर्णग्रहणं तदा केवलः ककारः प्रत्ययो नास्तीति कृत्वा वचनाद्भविष्यति।

अथासुप इति कथमिदं विज्ञायते—असुब्वतोऽङ्गस्येति, आहोस्विन्न चेत्सुपः पर आबिति। किंचातः? यदि विज्ञायतेऽसुब्वतोऽङ्गस्येति-बहुचर्मिका अत्र न प्राप्नोति। अथ विज्ञायते-न चेत्सुपः पर आबिति न दोषो भवति। यथा न दोषस्तथाऽस्तु।

---

प्र०-इहापीति। अन्यथा दत्तिकेत्यादावेव स्यात्। अज्ञाताद्यर्थविवक्षायामत्र कप्रत्ययः। स्थग्रहणे तु क्रियमाणे सर्वत्र भवति। प्रत्ययस्यापि व्यपदेशिवद्भावेन प्रत्ययस्थत्वात्। असुब्वत इति। न सुब्वदसुब्वदिति नञ्समासोऽसुप इत्यस्य बहुव्रीहित्वप्रदर्शनाय। भाष्यकारेण लाघवं नाऽऽश्रितम्। तदाश्रयणे हि बहुव्रीहिरेव न्याय्यो नतु मतुबन्तः समासः। तत्रायं प्रश्नः—किमसुप इति बहुव्रीहिराश्रीयते—न विद्यते सुब्यस्मिंस्तद-सुबिति। अथ तत्पुरुषः प्रसज्यप्रतिषेधश्च—न चेत्सुपपर आबिति। प्रत्ययग्रहणेन तदन्तविधेः सुबन्तादिति बोद्धव्यम्। बहुचर्मिकेति। बहूनि चर्माण्यस्यामिति बहुव्रीहिः। प्रत्ययलक्षणेन सुब्वदेतदङ्गमितीत्वं न प्राप्नोति। न लुमताऽङ्गस्येति प्रतिषेधोऽत्र नास्ति। लुमता लुप्ते यदङ्गं तस्य कार्ये स प्रतिषेधः। इदं तु टाप्यङ्गम्। न दोषो भवतीति। चर्मशब्दः सुबन्तो न च तस्मात्पर आप्, व्यवधानात्। बहवः परिव्राजका अस्यां सा बहुपरिव्राजकेत्यत्र तु प्रत्ययलक्षणेन सुबन्तात्परिव्राजक-शब्दात्पर आबिति प्रतिषेधः प्रवर्तते। पर्युदासाश्रयणे समासादसुबन्तात्पर आबिति स्यादेवात्रेत्त्वम्। तथाऽसुप इत्यनर्थकं स्यादिति प्रसज्यप्रतिषेध आश्रीयते।

---

उ०-भाणस्येति। ननु स्थग्रहणे दत्तिकेत्यादौ प्रत्ययस्य कशब्दस्य प्रत्ययस्थत्वायोगोऽत आह—प्रत्ययस्यापीति। प्रसज्येति। एवं च सौत्रत्वादसमर्थसमास इति भावः। ननु सुब्लोपात्कथमेतत्सुब्वदङ्गमत आह—प्रत्ययलक्षणेनेति। टाप्यङ्गमिति। आपि परे यदङ्गमविद्यमानसुप्कं तदवयवाकारस्य प्रत्ययस्थकात्पूर्वस्येत्त्वमिति सूत्रार्थादिति भावः। चर्मशब्दः सुबन्त इति। गोस्त्रियोरित्यादिसूत्रस्थभाष्यप्रामाण्येन बहु जस् चर्मन् जसित्यवस्थायामुत्तरजसुत्तरं कपि समासान्ते पूर्वसुपोस्तद्धितान्तत्वात्प्रातिपदिकत्वेन लुक्यपि प्रत्ययलक्षणेन सुबन्तत्वात्कपः पूर्वभागस्य समाससंज्ञा। यद्वा कप्समाससंज्ञयोर्युगपत्प्राप्तिः। कपः समासावयवत्वं तु वाचनिकमेव। समासान्तविषये च सुबन्तात्तद्धितोत्पत्तिरित्यस्य त्यागः। प्रत्ययस्य निरर्थकत्वात्परिपूर्णं पदमित्यादिन्यायविषयाभावादिति भावः। एतेन कबन्तस्य प्रातिपदिकत्वेन ततः सुपि ततः समास इत्यपास्तम्। तावताऽप्यनेकसुबन्ताभावेन समासस्य दुरुपपादत्वादत्रेत्वासिद्धेश्चेति दिक्। असुप इत्यस्य प्रत्युदाहरणं दर्शयति—बहव इति।

इदं विचार्यते-इत्त्वे कग्रहणं संघातग्रहणं वा स्याद्वर्णग्रहणं वेति कश्चात्र विशेषः ?

**इत्त्वे कग्रहणं संघातग्रहणं चेदेतिकास्वप्राप्तिः ॥ १ ॥**

इत्त्वे कग्रहणं संघातग्रहणं चेदेतिकास्वप्राप्तिः । एतिकाश्चरन्ति+ । वचनाद्भविष्यति । अस्ति वचने प्रयोजनम् । किम् ? कारिका, हारिका । अस्तु तर्हि वर्णग्रहणम् ।

**वर्णग्रहणं चेद्व्यवहितत्वादप्रसिद्धिः ॥ २ ॥**

वर्णग्रहणं चेद्व्यवहितत्वान्न प्राप्नोति-कारिका, हारिका । अकारेण व्यवहितत्वान्न प्राप्नोति । एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव । एवं तर्ह्याहायं-प्रत्ययस्थात्का-

प्र०—इत्त्व इति । यद्यकारान्तस्य शब्दस्य कादिति निर्देशस्ततः संघातग्रहणम् । अथाऽऽगन्तुनाऽकारेणोच्चारणार्थेन निर्देशस्ततो वर्णग्रहणम् । ननु वर्णग्रहणे स्वग्रहणस्याऽऽनर्थक्यात्स्वग्रहणात्संघातग्रहणेन भाव्यम् । नैतदस्ति । कोऽत्र निर्दोषः पक्ष इति विचार्यते । यदि च संघातग्रहणपक्षो दोषवांस्तन्मा कारि स्वग्रहणमुपचयो भविष्यति । एतिका इति । एतदोऽकचि जसि त्यदाद्यत्वे टापीत्त्वे च रूपम् । अकचोऽकार उच्चारणार्थो न श्रवणार्थः । तेन धकिद्धिरकुदित्यादि सिध्यति । वचनादिति । यथैव कारिकेत्यादावेकादेशे कृतेऽनच्के ककारे संपन्ने भूतपूर्वगत्या भवत्येवमकच्विधिसूत्रेऽकशब्दः संघात उच्चारित इति तदाश्रयेत्त्वप्रवृत्तिः । अस्तीति । एकादेशस्य पूर्वविधौ स्थानिवद्भावात् । अथवा वचनादित्यस्यायमर्थः—न यासयोरिति ज्ञापकाद्भविष्यति । इतरस्त्वगृहीताभिप्राय आह—अस्तीति । ततश्चाभिप्रायमप्रकाश्य पक्षान्तरमाश्रयति—अस्तु तर्हीति । व्यवहितत्वादिति । ननु चाऽऽपीत्यनेन ककारो न विशेष्यते किं तर्ह्यकारः—आपि च परतोऽकारस्य कात्पूर्वस्येति व्यवहितस्यापि

उ०—उपचय इति । तदकरणाल्लाघवमित्यर्थः । नच वर्णग्रहणे स्वग्रहणाभावे कान्तात्प्रत्ययादित्यर्थः स्यादिति वाच्यम्, क्षिपकादीनामिति निषेधवैयर्थ्यापत्तेः । एवं च पूर्णग्रहणमपि माऽस्तु । प्रत्यये कीत्येव युक्तम् । कादापित्यर्थस्तु न यासयोरितिनिषेधसामर्थ्याल्लेति भावः । उच्चारणार्थ इति । एवं च प्रत्ययस्थकशब्दस्याभाव इति भावः । ननु वचनस्य कारिकादिरवकाशः स्यादत आह—यथैवेति । एकादेश इति । अन्तरङ्गत्वाद्गुणादावाद्गमिति तु विधिप्रत्यासत्तेरिति भावः । स्थानिवद्भावादिति । नचैवमकारस्य माऽस्त्वपरत्वं ककाराकाराभ्यां व्यवधानादिति वाच्यम्, सामर्थ्येनादोषात् । अत एव न यासयोरित्यादि चरितार्थम् । अत एतिकाशब्दे त्रिभिर्व्यवधानेऽपि न दोषः । भाष्ये—अकारेणेति । ककारेण व्यवधानं तु

+ ५. १. ७१.

त्पूर्वस्येति न क्वचिद्व्यवधानं, तत्र वचनाद्भविष्यति।

**वचनप्रामाण्यादिति चेद्रथकट्यादिष्वतिप्रसङ्गः ॥ ३ ॥**

वचनप्रामाण्यादिति चेद्रथकट्यादिषु दोषो भवति। रथकट्या+ गर्गकाम्या÷। नैष दोषः। येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्। केन च नाव्यवधानम्? वर्णेनैकेन। संघातेन पुनर्व्यवधानं भवति, न भवति च।

अथवा पुनरस्तु संघातग्रहणम्। ननु चोक्तमिर्वे कग्रहणं संघातग्रहणं चेदेतिकास्वप्राप्तिरिति। परिहृतमेतद्वचनाद्भविष्यतीति। ननु चोक्तमस्ति वचने प्रयोजनम्। किम्? कारिका, हारिकेति। अत्राप्येकादेशे कृते व्यपवर्गाभावान्न प्राप्नोति। अन्तादिवद्भावेन व्यपवर्गः। उभयत आश्रये नान्तादिवत्। एवं तर्ह्येकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यपवर्गः। एवं

प्र०—पूर्वत्वादित्वं प्रवर्तिष्यते। नैतदस्ति। रथकट्यादावप्येवं प्रसङ्गात्। किंच कात्पूर्वस्येति पूर्वग्रहणं कृतं न त्वापि पूर्वस्येति। ततश्च निर्दिष्टपरिभाषोपस्थानाद्व्यवधानेन न प्राप्नोति। तत्र वचनादिति। आनन्तर्यमसंभवान्नाऽऽश्रीयते। रथकट्येति। रथानां समूह इतीनित्रकट्यचश्चेति कट्यच्। गर्गकाम्येति। गर्गमिच्छत्यात्मन इति काम्यच्प्रत्ययान्तादप्रत्ययादित्यकारप्रत्ययः। येन नाव्यवधानमिति। नाऽऽनन्तर्यं परित्यज्यते किंतु यावत्संभवति तावदाश्रीयते। यद्येवमेतिका इत्यत्र द्वाभ्यामकाराभ्यां व्यवधानादित्वं न प्राप्नोति। एकस्तसंबन्ध्यकारो द्वितीयस्त्यदादीनाम इत्यकारः। नैष दोषः। द्वयोरकारयोरेकादेशे कृते टापा सहैकादेशस्य स्थानिवद्भावादेकेनैवाकारेण व्यवधानं न पुनः स्थानिवत्त्वप्रतिपत्तिर्यतो द्वावकारौ व्यवधायकौ स्याताम्। सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात्। व्यपवर्गाभावादिति। वार्णादाङ्गं बलीय इत्येतदनाश्रित्योक्तम्। उभयत इति। आपि यः कशब्द इत्येवमुभयमाश्रीयते। अथ त्वापि परतोऽकारस्य

उ०—वचनात्सोढव्यमेवेति भावः। व्यवहितस्यापीति। पूर्वग्रहणमुभयान्वयीत्यभिमानः। कात्पूर्वस्येतीति। तत्र पूर्वग्रहणं तु कटुकेत्यादौ परस्य कार्यित्वनिवृत्त्यर्थमावश्यकम्। तसंबन्धीति। तकारस्य संबन्धीत्यर्थः। एकादेशे कृत इति। अतो गुण इत्यनेन। टापा सहेति। टापा सहैकादेशस्य स्थानिवद्भावं विना पूर्वैकादेशस्य स्थानिवत्त्वं वक्तुमशक्यं, तस्य टाबेकादेशेनापहारेणादर्शनादिति भावः। न पुनरिति। अकारयोरेकादेशस्येति भावः। सकृत्प्रवृत्त्येति। न यासयोरिति निषेधोऽप्यत एव चरितार्थः। अनाश्रित्येति। भिन्नस्थानिकत्वादिति भावः। ननु युगपदुभयाश्रयण एव स लिषेध इति तत्प्रत्याख्यानपरास्तैकः

+ ४. २. ५१. ÷ ३. १. ९; ३. ३. १०२,

तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति – भवत्येवंजातीयकानामपीत्त्वमिति । यदयं न यासयोः [ ४५ ] इति प्रतिषेधं शास्ति ।

**मामकनरकयोरुपसंख्यानमप्रत्ययस्थत्वात् ॥ ४ ॥**

मामकनरकयोरुपसंख्यानं कर्तव्यम् । मामिका+ नरिका× । किं पुनः कारणं न सिध्यति ? अप्रत्ययस्थत्वात् ।

**त्यक्त्यपोश्च प्रतिषिद्धत्वात् ॥ ५ ॥**

त्यक्त्यपोश्चोपसंख्यानं कर्तव्यम् । दाक्षिणात्यिका÷, इहत्यिका * । किं पुनः कारणं न सिध्यति । प्रतिषिद्धत्वात् । उदीचामातः स्थाने यकपूर्वायाः [ ४६ ] इति प्रतिषिद्धत्वात् ।

**न यासयोः ॥ ७ । ३ । ४५ ॥**

न यत्तदोरिति वक्तव्यम् । इहापि यथा स्यात्—यकां यकामधीते । तकां तकां पचामह इति ।

**प्रतिषेधे त्यकन उपसंख्यानम् ॥ १ ॥**

प्रतिषेधे त्यकन उपसंख्यानं कर्तव्यम् । उपत्यका अधित्यका** । तत्तर्ह्युपसंख्यानं कर्तव्यम् ? न कर्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति नैवंजातीयकानामित्त्वं

---

प्र०–कात्पूर्वस्येत्याश्रयिष्यते तथाऽप्युभयमेवाऽऽश्रितं तुल्यकालं भवति । एवंजातीयकानामिति । प्रकारवचने जातीयर्प्रत्ययः । अकच्वतामित्यर्थः । मामिकेति । ममायं युष्मदस्मदोरन्यतरस्यां खञ्चेत्यन्यतरस्यां ग्रहणात्प्राग्दीव्यतोऽणित्यण् । 'तवकममकावेकवचने' इति ममकादेशः । केवलमामकेत्यनेन संज्ञाछन्दसोर्ङीपो नियमादन्यत्र टाप् । नरं कायतीति नरिका । दाक्षिणात्यिकेति । दक्षिणस्मिन्देशे दक्षिणादाच् तत्र भवा दक्षिणापश्चात्पुरसस्त्यगिति त्यक् । अज्ञाताद्यर्थविवक्षायां कः । इह भवेहत्यिका । अव्ययात्त्यप् । पूर्ववत्कः । उदीचामात इति पाक्षिकप्रतिषेधप्रसङ्गे वचनम् ।

न या० । या सेति प्रथमैकवचनान्तयोरुपादानाद्विभक्त्यन्तरे प्रतिषेधाप्रसङ्गादाह–यत्तदोरिति । उपत्यकेति । उपाधिभ्यां त्यकन्नासन्नारूढयोरिति त्यकन् । नैवंजातीयकानामिति । येऽनेकाचो व्यञ्जनादयः प्रत्ययाः संज्ञाविषयास्तेषामित्यर्थः ।

---

उ०–प्रेर्ष्योऽविरोधार्थी युगपदुभयोः परोतीति भाष्यालभ्यतेऽत आह—तुल्यकालमिति । तुल्यकालमेवोभयमाश्रितमित्यन्वयः आपकारश्च युगपदुकारविशेषणत्वेनाऽऽश्रिताविति भावः ।

न यासयोः । यत्तदोरिति । सूत्रे स्वरूपं न विवक्षितमिति तात्पर्यम् । संज्ञा-

---

+ ४. १. १. × ४. २. १. ÷ ४. २. ९८; ५. १. ७१. * ४. २. १०४; ५. २. ७२. ** ५. २. ३४.

---

† [illegible] (७।१।२) [illegible] (४।१।३०) सूत्रे पाणिनिनाऽपि 'मामक' इत्येव पठ्यते ।

भवतीति यदयं मृदस्तिकन् [ ५. ४. ३९ ] इतीत्त्वभूतं निर्देशं करोति।

पावकादीनां छन्दस्युपसंख्यानम् ॥ २ ॥

पावकादीनां छन्दस्युपसंख्यानं कर्तव्यम्। 'हिरण्यवर्णाः शुचयः पावकाः'*। अक्षकाः, अलोमकाः। छन्दसीति किमर्थम्? पाविका, अलोमिका।

आशिषि च ॥ ३ ॥

आशिषि चोपसंख्यानं कर्तव्यम्। जीवताज्जीवका। नन्दतान्नन्दका। भवताद्भवका+।

उत्तरपदलोपे च ॥ ४ ॥

उत्तरपदलोपे चोपसंख्यानं कर्तव्यम्। देवदत्तिका देवका। यज्ञदत्तिका यज्ञका×।

क्षिपकादीनां च ॥ ५ ॥

क्षिपकादीनां चोपसंख्यानं कर्तव्यम्। क्षिपका ध्रुवका धुवका।

---

प्र०—यदयमिति। ननु च तद्धितलुगर्थमिकारोच्चारणं स्यात्। अन्यथा पञ्चभिर्मृत्तिकाभिः क्रीत इत्याहार्दिति ठकोऽध्यर्धपूर्वेति लुकि कृते लुक्तद्धितलुकीति टापो लुकि निमित्ताभावादित्त्वं न स्यात्। पञ्चमृत्तिक इति। अन्तरङ्गांश्च विधीन्सर्वो लुग्बाधते न लुम्लुगेव। तथा च सनीस्रंस इत्यादौ नलोपो न भवति। पञ्चभिः खट्वाभिः क्रीतं पञ्चखट्वमित्यादौ टापा सहैकादेशो न भवति। अन्यथैकादेशस्याऽऽदिवद्भावाद्ग्रहणेन ग्रहणाल्लुकि कृतेऽकारस्य श्रवणं न स्यात्। तदेवं सति प्रयोजने न ज्ञापकमिकारोच्चारणमिति चिन्त्यमेतत्। त्यिकन्निति प्रक्रियालाघवाय स्त्रीविषयत्वाद्वक्तव्ये त्यकन्नित्यकारोच्चारणमित्त्वाभावस्य न ज्ञापकम्। पञ्चभिरुपत्यकाभिः क्रीतं पञ्चोपत्यकमित्यादौ तद्धितलुक्यकारश्रवणार्थत्वात्तस्य। पुनन्ति पावयन्तीति वा पावकाः। जीवकेति। आशिषि चेति वुन्। देवकेति। अनजादौ च विभाषा लोपो वक्तव्य इति दत्तशब्दस्य लोपः। क्षिपकेति। क्षिपेरिगुपधत्वात्के कृतेऽज्ञातादिषु कः। अथवा क्वुन्शिल्पिसंज्ञयोरिति क्वुन्। ध्रुवकेति। ध्रु गतिस्थैर्ययोः। धुवकेति। धू विधूनने। वर्णकेति। वर्णयति महत्त्वादिकं गुणमिति वर्णका प्रावरणविशेषः। तन्तूनां

---

उ०—विषया इत्यस्य प्रयोजनं चिन्त्यम्। ननु लुकः पूर्वमन्तरङ्गत्वादित्त्वमत आह—अन्तरङ्गांश्चेति। चिन्त्यमेतदिति। वस्तुतो भाष्यप्रामाण्यादेतद्विषयेऽन्तरङ्गानपीत्यस्य ज्ञापकसिद्धस्यासार्वत्रिकत्वेनानित्यत्वमङ्गीकार्यमस्यार्थाभिधानं चेत्याहुः। स्त्रीविषयत्वात्प्रक्रियालाघवाय त्यिकन्निति वक्तव्यमित्यन्वयः। पुनन्ति पावयन्तीति वेति। अर्थद्वयस्याप्युपलम्भादिति भावः। ध्रु गतीति। पचाद्यच् कुटादित्वाद्गुणाभावेऽज्ञातादिषु कः

---

* अथर्ववेद १. ३३. १. + ३. १. १५०. × ५. ३. ८३.

## तारका ज्योतिषि ॥ ६ ॥

तारका ज्योतिष्युपसंख्यानं कर्तव्यम्। तारका। ज्योतिषीति किमर्थम्? तारिका दासी।

## वर्णका तान्तवे ॥ ७ ॥

वर्णका तान्तव उपसंख्यानं कर्तव्यम्। वर्णका। तान्तव इति किमर्थम्? वर्णिका भागुरी लोकायतस्य।

## वर्तका शकुनौ प्राचाम् ॥ ८ ॥

वर्तका शकुनौ प्राचामुपसंख्यानं कर्तव्यम्। वर्तका शकुनिः। शकुनाविति किमर्थम्? वर्तिका भागुरी लोकायतस्य। प्राचामिति किमर्थम्? वर्तिका।

## अष्टका पितृदेवत्ये ॥ ९ ॥

अष्टका पितृदेवत्य उपसंख्यानं कर्तव्यम्। अष्टका। पितृदेवत्य इति किमर्थम्? अष्टिका* खारी।

## वा सूतकापुत्रकावृन्दारकाणाम् ॥ १० ॥

वा सूतकापुत्रकावृन्दारकाणामुपसंख्यानं कर्तव्यम्। सूतका सूतिका। पुत्रका पुत्रिका। वृन्दारका वृन्दारिका।

---

प्र०—विकारस्तान्तवम्। ओरञित्यञ्। वर्णिकेति। व्याख्यात्रीत्यर्थः। भागुरी टीकाविशेषः। अष्टकेति। इण्यशिभ्यां तकन्निति तकन्। पितरश्च देवताः पितृदेवताः। तदर्थं कर्म पितृदेवत्यम्। देवतान्तात्तादर्थ्ये यदिति यत्। अष्टिकेति। अष्टौ परिमाणमस्याः संख्याया अतिशदन्तायाः कन्निति कन्। सूतकेति। न सामिवचन इति प्रतिषेधाज्ज्ञापकात्स्वार्थे कन्। पुत्रिकेति। पुत्रशब्दाच्छार्ङ्गरवादित्वान्ङीन्प्रत्ययस्ततः स्वार्थे कन्। केऽण इति ह्रस्वस्तस्य पक्षेऽकारो विधीयते। वृन्दारिकेति। वृन्दमस्या अस्ति। शृङ्गवृन्दाभ्यामारकन्प्रत्ययो वक्तव्य इत्यारकन्।

---

उ०—प्युन्या। वर्णयतीति। स्वगतं गुणं प्रकाशयतीत्यर्थः। व्याख्यात्रीति। लोकायतशास्त्रस्य व्याख्यानरूपो ग्रन्थविशेष इत्यर्थः। वर्तिका भागुरीत्यत्रापि वर्तिकेत्यस्य व्याख्यात्रीत्यर्थः। इण्यशिभ्यामिति। अष्टौ मानानि अस्यामित्यर्थः। स्वार्थे कन्निति। सूतैव सूतकेत्यर्थः। पाठादित्यादित्यन्ये। पुत्रशब्दादिति। वार्तिके पुत्रकेत्यकारस्य पाठोऽपपाठः, कैयटविरोधात्। अकार इति। वा अ इति च्छेदेनेत्यर्थः। सूतकादौ विकल्पसाधनार्थ एव पक्षेऽकार इति बोध्यम्।

---

* ५. १. २२.

**उदीचामातः स्थाने यकपूर्वायाः ॥ ७ । ३ । ४६ ॥**

किमर्थं स्त्रीलिङ्गनिर्देशः क्रियते न यकपूर्वस्येत्येवोच्येत ? स्त्रीविषयो य आकारस्तस्य स्थाने योऽकारस्तस्य प्रतिषेधो यथा स्यात् । इह मा भूत्—शुभं यातीति शुभंयाः शुभंयिका+ । भद्रंयिका ।

**यकपूर्वे धात्वन्तप्रतिषेधः ॥ १ ॥**

यकपूर्वे धात्वन्तप्रतिषेधो वक्तव्यः । किं प्रयोजनम् ? सुनयिका, अशोकिका, अपाकिका ।

**भस्त्रैषाजाज्ञाद्वास्वानञ्पूर्वाणामपि ॥ ७ । ३ । ४७ ॥**

एषाद्वे नञ्पूर्वे अनुदाहरणे असुप इति× प्रतिषेधात्* ।

अथ भस्त्राग्रहणं किमर्थं नाभाषितपुंस्कादित्येव सिद्धम्÷ ?

**भस्त्राग्रहणमुपसर्जनार्थम् ॥ १ ॥**

उपसर्जनार्थोऽयमारम्भः । अभस्त्रिका, अभस्त्रका ।

---

प्र०— उदीचा० । स्त्रीविषय इति । अर्थगतं स्त्रीत्वं शब्द आरोप्य निर्देशः कृतः । शुभंयिकेति । शुभं याति भद्रं यातीति क्विप् । शुभंभद्रंशब्दौ निपातौ । अज्ञाताद्यर्थविवक्षायां कः । केऽण इति ह्रस्वः । यकपूर्व इति । धात्वन्ताभ्यां यकारककाराभ्यां परस्याऽऽतः स्थानेऽकारस्येत्त्वप्रतिषेधस्य प्रतिषेधस्तेनेत्त्वं भवत्येव शोभनो नयोऽस्याः सुनया । नास्ति शोकोऽस्या अशोका । पूर्ववत्कः ।

भस्त्रैषा० । पाक्षिकप्रतिषेधार्थ आरम्भः । एषाद्वे इति । न एषका न द्वके इति विगृह्यान्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इत्यकृतेषु त्यदाद्यत्वादिषु समासे कृते सुब्लुकि समासाद्या विभक्तिस्तस्यां त्यदाद्यत्वं ततष्टाप् । स च प्रत्ययलक्षणेन सुबन्ताभ्यां पर इत्यसुप इतीत्त्वप्रतिषेधस्य व्यापारादनेषका इत्येव भवति । तस्मादनञ्पूर्वयोरेवैतयोः पाक्षिकप्रतिषेधः । एषका एषिका । द्वके द्विके इति । एषेति प्रथमैकवचननिर्देशादन्यत्र नित्यमित्त्वमेतिकाश्चरन्तीति । अभस्त्रिकेति । नास्ति भस्त्रा अस्या इति बहुव्रीहावुपसर्जनह्रस्वत्वे कृते यष्टावुत्पद्यते स भाषितपुंस्कादभस्त्रशब्दात्पर इत्युत्तरसूत्रेण

---

उ०—उदीचा० । स्त्रीलिङ्गनिर्देशमात्रेण कथमाकारस्य स्त्रीविषयत्वं लभ्यतेऽत आह—अर्थगतमिति । धात्वन्तशब्देन तथाभूतौ यकारककारौ लक्ष्येते इत्याह—धात्वन्ताभ्यामिति ।

भस्त्रैषा० । नित्येत्त्वस्य प्रत्ययस्थादित्येव सिद्धेः सूत्रारम्भफलमाह—पाक्षिकेति । उदीचामित्यनुवर्तनादिति भावः । प्रत्ययलक्षणेनेति । अन्तर्वर्तिसुब्लुक इति शेषः । भाष्ये—नञ्पूर्वे इत्युपलक्षणम् । सपूर्वेऽनुदाहरणे इत्यस्यार्थस्य तुल्यन्यायात्तेन परमैषिकेत्येवेत्यादि बोध्यम् । प्रथमैकवचनेति । अत एवैषाद्वे नञ्पूर्वे अनुदाहरणे इति भाष्य एषेत्येवोक्तम् । अविवक्षितत्व एतद्द्वीत्येव वदेदिति बोध्यम् । नास्ति भस्त्रेति । एतेनानुप-

---

+ ५. ३ ७३; ७. ४. १३. × ७. ३. ४४. ÷ ७. ३. ४८.

---

* अतोऽग्रे "एषका एषिका । द्वके द्विके" इत्यादिभाष्यपाठो लुप्तः स्यादिति कैयटप्रतीकोद्धरणात् प्रतीयते ।

**नञ्पूर्वग्रहणानर्थक्यं चोत्तरपदमात्रस्येद्वचनात् ॥ २ ॥**

नञ्पूर्वग्रहणं चानर्थकम् । किं कारणम् ? उत्तरपदमात्रस्येद्वचनात् । उत्तरपदमात्रस्येत्वं वक्तव्यम् । निर्भस्त्रका, निर्भस्त्रिका । बहुभस्त्रका, बहुभस्त्रिका ।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

---

**ठस्येकः ॥ ७ । ३ । ५० ॥**

किमिदं ठादेशे वर्णग्रहणमाहोस्वित्संघातग्रहणम् ? कश्चात्र विशेषः ?

**ठादेशे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधः ॥ १ ॥**

ठादेशे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेधो वक्तव्यः । पठिता पठितुम् । अस्तु तर्हि संघातग्रहणम् ।

**संघातग्रहणं चेदुणादिमाथितिकादीनां प्रतिषेधः ॥ २ ॥**

संघातग्रहणं चेदुणादिमाथितिकादीनां प्रतिषेधो वक्तव्यः । उणादीनां तावत्—

---

प्र०—पाक्षिकप्रतिषेधाप्रसङ्गाद्भस्त्राग्रहणम् । नञ्पूर्वग्रहणानर्थक्यमिति । अपिग्रहणेन केवलानां समुच्चयादन्यपूर्वाणामप्रसङ्गान्न कर्तव्यं नञ्पूर्वग्रहणम् । तत्र पदाङ्गाधिकारे तस्य च तदुत्तरपदस्य च ग्रहणात्सर्वेष्टसिद्धिः ।

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे सप्तमस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ।

---

ठस्येकः । किमिदमिति । किं व्यञ्जनमात्रं प्रतिपिपादयिषितमागन्तुना तूच्चारणार्थेनाकारेण निर्देशोऽथ संघात एव स्थानी निर्दिष्ट इति प्रश्नः । धात्वन्तप्रतिषेध इति । संघातग्रहणे त्वेष न दोषः पठतीत्यत्रापि ठस्याऽऽनर्थक्यादर्थवद्ग्रहणपरिभाषयाऽर्थ-

---

उ०—सर्जनेऽप्यादापायाणामित्यात्वबाधनार्थं भस्त्राग्रहणमित्यपास्तम् । उपसर्जने चारितार्थ्येन बाधे मानाभावात् । नञ्पूर्वग्रहणाकरणे दोषमाह—अन्यपूर्वाणामप्रसङ्गादिति । अथापिग्रहणेन केवलानामन्यपूर्वाणां च संग्रहस्तथाऽपि न कार्यमेवेत्याह—तत्र पदाङ्गेति । भाष्ये—उत्तरपदमात्रस्येत्त्वं वक्तव्यमिति । उत्तरपदमात्रस्य यथेत्त्वं भवति तथा तद्व्याख्येयमित्यर्थः ।

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते सप्तमस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ।

---

ठस्येकः । ननु विशिष्टोच्चारणात्संशयोऽनुपपन्न आह—किं व्यञ्जनेति । एकारणेति भावः । ननु पठतीत्यत्र ठकारोऽस्त्येवेत्यत आह—आनर्थक्यादिति । ननु वर्णग्रहणेऽप्यानर्थक्यं तुल्यमत आह—वर्णग्रहणेति । ननु ठगादिषु संघातस्योपलम्भस्तेषामिहानु-

कएठः शएठः वएठः । इह च मथितं पएयमस्य माथितिक इत्यकारलोपे कृते तान्तादिति कादेशः प्राप्नोति+ । वर्णग्रहणे पुनः सत्यल्विधिरयं भवति÷ ।

**तस्माद्विशिष्टग्रहणम् ॥ ३ ॥**

तस्माद्विशिष्टस्य ठकारस्य ग्रहणं कर्तव्यम् । न कर्तव्यम् । अस्तु तावद्वर्णग्रहणम् । ननु चोक्तं ठादेशे वर्णग्रहणं चेद्धात्वन्तस्य प्रतिषेध इति । नैष दोषः । अङ्गादिति वर्तते । न वा अङ्गादिति पञ्चम्यस्ति । एवं तर्हि

---

प्र०-वत् सङ्घातग्रहणादप्रसङ्गः । वर्णग्रहणे त्वर्थवद्ग्रहणपरिभाषाया अव्यापारः । वर्णग्रहणपक्षे च ठगादिष्वकार उच्चारणार्थो वर्णमात्रं प्रत्ययः । कएठ इति । कणेष्ठः । शएठ इति । शमेर्जेनिदाच्युस्निति ठः । वएठ इति । वनोऽन्येभ्योऽपि दृश्यत इति ठः । वर्णपक्षेऽप्युणादीनां प्रसङ्गः । सत्यपि संघातस्य प्रत्ययत्व इह च संघातग्रहणे ठगादयः संघाता एव प्रत्ययाः प्रतिज्ञायन्ते । माथितिक इति । संनिपातलक्षणपरिभाषामनाश्रित्य चोद्यते । अन्यथाऽजादिसंनिपातेन तान्ततोपजाता कथमजादिविघातनिमित्तं स्यात् । वर्णग्रहणे त्वनल्विधाविति स्थानिवत्त्वनिषेधादिकस्य कादेशाप्रसङ्गः । ननु तान्तादङ्गात्परस्य ठस्य कादेशो विधीयते, नचैतत्तकारान्तमङ्गम्, तकारान्तात्प्रत्ययस्याविधानात् । नैतदस्ति । एकदेशविकृतस्यानन्यत्वादङ्गं भवति, तकारान्तं चेति कादेशः प्राप्नोत्येव । तस्माद्विशिष्टग्रहणमिति । तद्धितस्य ठादेरिक इति कर्तव्यम् । एवं च माथितिक इत्यत्र ठादेरिति वचनादल्विधित्वात्स्थानिवद्भावात्कादेशस्याप्रसङ्गः । अङ्गादिति वर्तत इति । अर्थवशाद्विभक्तिविपरिणाम इति भावः । एवं तर्हीति । सामर्थ्यात्षष्ठ्यन्तमूह्यते ।

---

उ०-कृतत्वाद्वर्णग्रहणपक्षानुपपत्तिरत आह—वर्णग्रहणपक्षे चेति । अत एवात्र पक्षेऽङ्गनिमित्तं यष्ठकार इति वक्ष्यमाणं भाष्यं संगच्छते । वर्णपक्षेऽप्युणादीनामिति । ठस्य सद्भावादिति भावः । ननु ठगादिषु वर्णमात्रस्य प्रत्ययत्वात्कथमत्र संघातग्रहमत आह—इह चेति । विशिष्टपदार्थमाह—तद्धितस्येत्यादि । वस्तुतः स्वरिताकारविशिष्टं पठनीयमित्यर्थः, विशिष्टस्य ठकारस्य ग्रहणमिति भाष्यात् । माथितिकस्तु ठक्छसोरिति वार्तिकस्थभाष्योक्तरीत्या संनिपातपरिभाषया सिद्ध इति भाष्यार्थ उचित इति भाति । यद्वोणादिविषयमेवैतत् । माथितिके त्वग्रे परिहरिष्यत इति भावः । अङ्गस्येत्यस्य प्रकृतत्वादङ्गादिति वर्तत इत्ययुक्तमत आह—अर्थवशादिति । धात्वन्तनिवृत्त्यर्थं पञ्चम्यन्तस्येहोपयोगादिति भावः । पञ्चम्यन्तस्य कथं षष्ठ्यन्तत्वमत आह—सामर्थ्यादिति । पञ्चम्यन्तस्यान्वयायोग्यत्वादिति भावः । अङ्गस्येति त्वङ्गावयवस्य प्रत्ययस्थस्य ठस्येत्यन्वययोग्यमेवेति तात्पर्यम् ।

---

+ ४. ४. ५१; ७. १. ५०; ६. ४. १४८; ७. ३. ५१. ÷ १. १. ५६.

प्रत्ययस्थस्येतिवर्तते । क्व प्रकृतम् ? प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः [ ७. ३. ४४ ] इति । तद्वै पञ्चमीनिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः । अर्थाद्विभक्तिविपरिणामो भविष्यति । तद्यथा—उच्चानि देवदत्तस्य गृहाणि । आमन्त्रयस्वैनम् । देवदत्तमिति गम्यते । देवदत्तस्य गावोऽश्वा हिरण्यम् । आढ्यो वैधवेयः । देवदत्त इति गम्यते । पुरस्तात्षष्ठीनिर्दिष्टं सदर्थात्प्रथमानिर्दिष्टं द्वितीयानिर्दिष्टं च भवति । एवमिहापि पुरस्तात्पञ्चमीनिर्दिष्टं सदर्थात्षष्ठीनिर्दिष्टं भविष्यति । एवमप्युणादीनां प्रतिषेधो वक्तव्यः । न वक्तव्यः । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।

एवमपि कर्मठ इत्यत्र÷ प्राप्नोति । एवं तर्ह्यङ्गस्येति× संबन्धषष्ठी विज्ञास्यते । अङ्गस्य यष्ठकारः । किंचाङ्गस्य ठकारः ? निमित्तम् । यस्मिन्नङ्गमित्येतद्भवति । कस्मिंश्चैतद्भवति ? प्रत्यये ।

अथवा पुनरस्तु संघातग्रहणम् । ननु चोक्तं संघातग्रहणं चेदुणादिमाथितिकादीनां प्रतिषेध इति । उणादीनां तावत्प्रतिषेधो न वक्तव्यः । परिहृतमेतदुणादयोऽव्युत्पन्नानि प्रातिपदिकानीति । यदप्युच्यत इह च मथितं पण्यमस्य माथितिक इत्यकारलोपे कृते तान्तादिति कादेशः प्राप्नोतीति । नैष दोषः । अकारलोपस्य स्थानिवद्भावान्न भविष्यति । न सिध्यति । पूर्वविधौ स्थानिवद्भावो+ न चायं पूर्वविधिः । अयमपि पूर्वविधिः । पूर्वस्मादपि विधिः पूर्वविधिरिति । अथाप्युणादयो व्युत्पाद्यन्ते

प्र०-इतरो न क्वचित्षष्ठ्यन्तं प्रकृतमिति मत्वाऽऽह—क्व प्रकृतमिति । अर्थादिति । ठस्येति षष्ठ्यन्तेन संबन्धात्षष्ठ्यन्तत्वेन विपरिणामः । कर्मणि घटते कर्मणि घटोऽठजित्यठच् । अङ्गस्येति संबन्धषष्ठीत्वेनोपादानाद्विशिष्टो निमित्तनिमित्तिभावलक्षणः संबन्धो विवक्षितः । तेनाङ्गावयवस्याप्रसङ्गः । अङ्गव्यपदेशनिमित्तप्रत्ययग्रहणात्कर्मठ इति प्रत्ययावयवस्य न भवति । ननु समुदायस्य निमित्तत्वेनावयवस्यापि निमित्तत्वमाश्रीयते, तथा च चक्रतुः चक्रुरित्यत्र द्विर्वचननिमित्तेऽच्यजादेशः स्थानिवद्भवति । एवं तर्हि साक्षान्निमित्तमिह गृह्यते । स्थानिवत्त्वे तु लक्ष्यवशाद्यथाकथंचिन्निमित्तमाश्रीयते । पूर्वस्मादपि विधिरिति । संबन्धसामान्यवचनषष्ठ्यन्तस्य पूर्वशब्दस्य विधिशब्देन समास आश्रीयते । अथवा वर्णग्रहणात्तदन्तत्वे लब्धे तान्तादित्यन्तग्रहणं प्रत्ययोपदेशकाले तान्तग्रहणार्थमिति माथितिके कादेशाप्रसङ्गः । अथापीति । सर्पिषा

उ०-तेनाङ्गावयवस्येति । षष्ठीव्याश्रयविपरीतार्थमुपपादयति—अङ्गव्यपदेशेति । अतोऽप्युणादावदोष इति भावः । साक्षादिति । समुदायस्यैव मुख्यं निमित्तत्वमित्यर्थः । अथवेति । इयमुणादिति भिन्नं तत्परत्वमस्य पदं, तान्तादिति भिन्नम् । तेन तकारेणैवाग-

÷ ५. २. ३५. × ६. ४. १. + १. १. ५७.

एवमपि न दोषः । क्रियते न्यास एव विशिष्टग्रहणं-ठस्येति ।

इसुसुक्तान्तात्कः ॥ ७ । ३ । ५१ ॥

इह कस्मान्न भवति—आशिषा× तरत्याशिषिकः+ । उषा* तरत्यौषिकः ? लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । अथेह कथं भवितव्यम्—दोर्भ्यां तरति ? दौष्क इति भवितव्यम् । कथम् ? यदि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते ।

हो हन्तेर्ञ्णिन्नेषु ॥ ७ । ३ । ५४ ॥

किमिदं ञ्णिन्नकारग्रहणं हन्तिविशेषणम्—ञ्णिन्नकारपरस्य हन्तेर्यो हकार-

प्र०—यजुषेत्यादौ षत्वाद्यर्थं व्युत्पत्तिपक्षोऽप्यङ्गीक्रियते । क्रियते न्यास एवेति । येषां ठशब्दानामिक इष्यते तेष्वकारः स्वरित उच्चारितस्तदनुकरणं स्वरितमेव ठस्येति । न चोणादिठस्याकारः स्वरित इत्यादेशाप्रसङ्गः ।

इसु० । आशिषेति । आङः शास्विच्छायामित्यस्मादाशासनमाशीरिति संपदादित्वाद्भावे क्विप् । आशासः क्वावुपसंख्यानमितीत्त्वम् । उषेति । वसेः क्विप् । वचिस्वपीति संप्रसारणम् । षत्वस्यासिद्धत्वादिसुसौ भवत इति कादेशप्रसङ्गः । लक्षणेत । लाक्षणिकमनुमेयरूपं प्रतिपदोक्तं तु प्रत्यक्षरूपम् । अथेति । दौष्क इति दृश्यते नच प्राप्नोतीति प्रश्नः । दौष्क इति । तरतीति ठक् । उपसंख्येयोऽत्र कादेश इति भावः । क्वचित्तु कथं यदि वर्णैकदेशा वर्णग्रहणेन गृह्यन्त इति पाठः । तत्र यदीति निपातो न संदेहार्थ उपात्तः किं तर्हि यदेत्यस्यार्थे वर्तते । ओकारे य उकारः स उकारग्रहणेन गृह्यते । यत्र च समुदायाश्रयं कार्यं नास्ति तत्रावयवाः स्वकार्यस्य प्रयोजका एव । तथा च नुड्विधिलादेशविनामा ऋकारावयवाश्रयाः प्रवर्तन्ते । अग्रहणपक्षे तु यथा नुड्विधिलादेशविनामेषु प्रतिविधीयते तथा दोष उपसंख्यानं कर्तव्यमिति संदेहार्थोऽपि यदिशब्दो व्याख्येयः ।

हो हन्तेः० । किमिदमिति । हन्तिरपीहोपात्तो हकारोऽपि तत्र किं हकारस्य प्राधान्याद्विशेषणसंबन्धोऽथ प्रधानोपकाराय गुणस्यापि हन्तेः । पक्षद्वयेऽपि दोषदर्शनात्प्रश्नः । द्वंद्वनिर्दिष्टास्तु ञ्णिन्ना एकयोगक्षेमा न्याय्या इति भिन्नेन संबन्धिना

उ०—पदसंबन्ध इति वायुदत्तशब्दाट्ठचि दत्तशब्दलोपे वायुक इत्यादौ न दोषः । नियमेन प्रत्ययोपदेशकाल इत्यर्थलाभः कथमितीदं चिन्त्यम् । संनिपातपरिभाषयाऽपि माथितिके दोषवारणं प्रागुक्तं कथं यथान्यासे वारणं तदाह—येषामिति ।

इसुसु० । षत्वस्येति । शासिवसिघसीनां चेत्यस्येत्यर्थः । ननु समुदाये गुणभूता अवयवाः कथं स्वकार्यं प्रवर्तयेयुरत आह—यत्र समुदायेति । संदेहार्थ इति । पक्षान्तरे परिहारस्यानुत्थानं दर्शयितुं संदेहार्थोऽपि यदिशब्दो व्याख्येय इत्यर्थः । वर्णैकदेशानां वर्णग्रहणेन ग्रहणेऽप्यनर्थकत्वादप्रत्ययत्वाच्च कथमस्य प्रवृत्तिरिति चिन्त्यम् । अत एवास्य क्वाचित्कपाठता कैयटेनोक्ता । 'दौष्के'इणः ष इति षत्वम् ।

हो हन्तेः० । प्राधान्यादिति । विशेष्यत्वात्कार्यान्वयित्वाच्चेत्यर्थः । प्रधानोपकारायेति । प्रधानस्य कुत्वस्य बहुविषयलाभरूपोपकारायेत्यर्थः । द्वंद्वनिर्दिष्टास्त्विति । सह-

× ६. ४. ३४. + ४. ४. ५. * ६. १. १५.

इति, आहोस्विद्धकारविशेषणम्—ञ्णिन्नकारपरस्य हकारस्य स चेद्धन्तेरिति ? कश्चात्र विशेषः ?

**हन्तेस्तत्परस्येति चेन्नकारेऽप्रसिद्धिः ॥ १ ॥**

हन्तेस्तत्परस्येति चेन्नकारेऽप्रसिद्धिः । घ्नन्ति, घ्नन्तु, अघ्नन् । अस्तु तर्हि हकारविशेषणम् ।

**हकारस्येति चेञ्ञ्णित्यप्राप्तिः ॥ २ ॥**

हकारस्येति चेञ्ञ्णित्यप्राप्तिः । घातयति घातकः । किं कारणम् ? नकारेण व्यवहितत्वान्न प्राप्नोति । वचनाद्भविष्यति । इहापि वचनात्प्राप्नोति— हननमिच्छति हननीयति हननीयतेर्ण्वुल् हननीयक इति ।

**स्थानिवद्भावाच्चाचो नकारेऽप्रसिद्धिः ॥ ३ ॥**

स्थानिवद्भावाच्चाचो नकारेऽप्रसिद्धिः । घ्नन्ति घ्नन्तु+ । वचनाद्भविष्यति ।

**वचनप्रामाण्यादिति चेदलोपे प्रतिषेधः ॥ ४ ॥**

वचनप्रामाण्यादिति चेदलोपे प्रतिषेधो वक्तव्यः । हन्ता हन्तुम् । नकारग्रहणसामर्थ्यादलोपे न भविष्यति । अस्त्यन्यन्नकारग्रहणस्य प्रयोजनम् । किम् ? श्रूयमाणविशेषणम् । यत्र नकारः श्रूयते तत्र यथा स्यात् । इह मा भूत्— हतः, हथ इति× ।

**सिद्धं तूपधालोप इति वचनात् ॥ ५ ॥**

प्र०—संबन्धं प्रतिपत्तुमनर्हाः—ञ्णीति हन्तेर्नकारे हकारस्येति । हन्तेरिति । स्वावयवेन पौर्वापर्यायोगात् । ञ्णित्यप्राप्तिरिति । तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानाद्धकारस्य च ञ्णिताऽऽनन्तर्यासंभवात् । वचनादिति । निर्दिष्टपरिभाषोपस्थानांशेन नाव्यवधानमिति शब्दान्तरव्यवायो निवर्त्यते । इतरस्तु व्यवधानसंभवान्निर्दिष्टाङ्गविकलपरिभाषोपस्थानं मत्वाऽऽह—इहापीति । स्थानिवद्भावाच्चाच इति । अचो य आदेशो लोपस्तस्येत्यर्थः । नकारग्रहणेति । सर्वत्र व्यवहितो नकारो हकारात्पर इति नकारग्रहणसामर्थ्याद्ञ्णिद्ग्रहणसामर्थ्याच्च अतिक्रतमानन्तर्यमाश्रयिष्यते । सिद्धं त्विति । नकारग्रहणमपनीयोपधालोपग्रहणं कर्तव्यम् । वचना-

उ०-विवक्षायां द्वंद्वेन तन्निर्दिष्टानां तुल्यतयैकत्र संबन्धस्य न्याय्यत्वादित्यर्थः। स्वावयवेनेति । भिन्नवस्तुविषयस्य पौर्वापर्यव्यवहारस्येत्यर्थः । ननु वचनसामर्थ्याद्व्यवधानेऽपि प्रवृत्तावतिप्रसङ्गः स्यादत आह—निर्दिष्टेति । नन्वजादेशस्य स्थानिवत्त्वं न स्वप इत्यत आह— अचो य इति । ञ्णिद्ग्रहणसामर्थ्याच्चेति । सर्वत्र नकारपरत्वादेव सिद्धेर्ञ्णिद्ग्रहणं व्यर्थमिति भावः । घातयतीत्यादावप्यनाकारग्रहणपूर्वं तुल्यं ततस्तत्त्वमिति तात्पर्यम् । ननु तथापि

+ ६. ४. ९८. × ६. ४. १०.

सिद्धमेतत्। कथम्? उपधालोपे चेति वक्तव्यम्। सिध्यति सूत्रं तर्हि भिद्यते।

यथान्यासमेवास्तु। ननु चोक्तं हन्तेस्तत्परस्येति चेन्नकारेऽप्रसिद्धिरिति? वचनाद्भविष्यति। अथवा पुनरस्तु हकारविशेषणम्। ननु चोक्तं हकारस्येति चेञ्ञ्णित्यप्राप्तिरिति। वचनाद्भविष्यति। ननु चोक्तमिहापि वचनात्प्राप्नोति—हननीयक इति। नैष दोषः। येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्। न च क्वचिद्धात्ववयवेनाव्यवधानमेतेन पुनः संघातेन व्यवधानं भवति, न च भवति। यदप्युच्यते स्थानिवद्भावाच्चाचो नकारेऽप्रसिद्धिरिति। वचनाद्भविष्यति। ननु चोक्तं वचनप्रामाण्यादिति चेदल्लोपे प्रतिषेध इति। नैष दोषः। आनन्तर्यमिहाऽऽश्रीयते—हकारस्य नकार इति। क्वचिच्च संनिपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यं, क्वचिच्च न संनिपातकृतं नापि शास्त्रकृतम्। लोपे संनिपातकृतमानन्तर्यमलोपे नैव संनिपातकृतं नापि शास्त्रकृतम्। यत्र कुतश्चिदेवाऽऽनन्तर्यं तदाश्रयिष्यामः।

## अभ्यासाच्च ॥ ७ । ३ । ५५ ॥

### अभ्यासात्कुत्वमसुपः ॥ १ ॥

प्र०—द्भविष्यतीति। एकग्रहणकवाक्यनिबन्धनानि बहूनि वाक्यानि लक्ष्यस्य संस्कारकाण्युपप्लवन्ते, ह्रो हन्तेर्ञ्णिति, ह्रो हन्तेर्णिति, ह्रो हन्तेर्न इति। सह विवक्षायां द्वन्द्वेऽपि यथासंभवं विशेषणविशेष्यभाव इति ञ्णिता णिता च हन्तिर्विशेष्यते नकारेण हकारः। येन नाव्यवधानमिति। तस्मिन्निति निर्दिष्ट इति परिभाषोपस्थानेन धात्ववयवेन नित्यव्यवायाच्छब्दान्तरेण व्यवधानं निवार्यते। वचनादिति। सत्यपि स्थानिवद्भावकृते व्यवधाने श्रुतिकृतानन्तर्याश्रयणात्। नापि शास्त्रकृतमिति। यथा—आमन्त्रितं पूर्वमविद्यमानवदित्युक्तं तथाऽकारस्य शास्त्रेणाव्यवधायकत्वं न क्वचित्प्रतिपादितमित्यर्थः। कुतश्चिदिति। निर्दिष्टपरिभाषोपस्थानात्।

अभ्या०। असुप इति। असुबन्तावयवस्य हन्तेरभ्यासात्परस्य कुत्वं नतु सुबन्तावयवस्येत्यर्थः। हन्तेरभ्यासादिति। अङ्गाधिकारेण चाभ्यासेन च प्रत्ययस्याऽऽक्षे-

उ०—वचने स्वावयवेन पौर्वापर्याभावदप्रतिपत्तिरत आह—एकग्रहणकेति। सहविवक्षायां द्वंद्वेऽपीति। ह्रो हन्तेरिति समुदायविषयान्वयेन स साधुरिति भावः। सौत्रो द्वद्वं इत्यन्ये। श्रुतिकृतेति। सामर्थ्यादिति भावः। भाष्ये न शास्त्रकृतमानन्तर्यमिति पाठः। क पुनः शास्त्रकृतमानन्तर्यमत आह—यथेति। अत्र ह्यविद्यमानवद्भावाच्छौतव्यवधानेऽपि शास्त्रकृतमव्यवधानं, न तथेह, तथा शास्त्राभावादित्यर्थः।

———अभ्यासाच्च। नन्वभ्यासस्य कापि सुबन्तत्वाभावादसुप इति व्यर्थमत आह—असुबन्तेति। जिहननीयिपतीत्यत्र सुबन्तात्क्यज्विधानेन सुबन्तावयवो हन्तिरित्यर्थः। आभा-

अभ्यासात्कुत्वमसुप इति वक्तव्यम्। इह मा भूत्—हननमिच्छति हननीयति हननीयतेः सन् जिहननीयिषतीति। तत्तर्हि वक्तव्यम्? न वक्तव्यम्। हन्तेरभ्यासादित्युच्यते न चैष हन्तेरभ्यासः। हन्तेरेषोऽभ्यासः। कथम्? एकाचो द्वे प्रथमस्य [ ६. १. १ ] इति। एवं तर्हि हन्तेरङ्गस्य योऽभ्यासस्तस्मादित्युच्यते। न चैष हन्तेरङ्गस्याभ्यासः। हन्तेरङ्गस्यैषोऽभ्यासः। कथम्? एकाचो द्वे प्रथमस्येति। एवं तर्हि यस्मिन्हन्तिरङ्गं तस्मिन्योऽभ्यासस्तस्मादित्युच्यते यस्मिंश्चात्र हन्तिरङ्गं× न तस्मिन्नभ्यासो यस्मिंश्चाभ्यासो+ न तस्मिन् हन्तिरङ्गं भवति।

---

प्र०—पादभ्यासनिमित्ते प्रत्यये हन्तेरङ्गस्य योऽभ्यासस्तस्मात्कुत्वमिति भावः। इतरस्त्वगृहीताभिप्राय आह—हन्तेरिति। पूर्वोक्तेनाभिप्रायेणाऽऽह—हन्तेरङ्गस्येति। तथा चोक्तं सिद्धं तु परस्परं प्रत्यङ्गप्रत्ययसंज्ञाभावादिति। न चैष हन्तेरङ्गस्येति। अभ्यासनिमित्ते प्रत्यये हन्तिरत्र नाङ्गमित्यर्थः। इतरोऽङ्गमात्रमाश्रित्याऽऽह—हन्तेरिति। आचार्यः स्वाभिप्रायं प्रकाशयति—एवं तर्हीति। यथा जघनिथेति थलि हन्तिरङ्गं तस्मिन्नेव चाभ्यासः।

---

उ०—रक्रियाख्यानण्यन्तेभ्यः सनादिकमनभिधानान्नास्त्येवेति भावः। तत्र कुत्व इष्टापत्तिस्तु न, वक्ष्यमाणप्रत्याख्यानविरोधात्। ननु हन्तेरेवायमभ्यासोऽत आह—अङ्गाधिकारेण चेति। अभ्यासनिमित्ते प्रत्यय इति। प्रत्यासत्त्येति भावः। अङ्गेन प्रत्ययाक्षेपे बीजमाह—तथा चोक्तमिति। अङ्गस्येत्यत्र। अत एवस्याङ्गाधिकारे पाठश्चरितार्थः। नन्वङ्गाधिकारपाठाभावेऽप्यभ्यासेन स्वघटितसमुदायस्य प्रत्ययान्तत्वाक्षेपे तत्र प्रत्ययस्य प्रकृत्याकाङ्क्षायां प्रत्यासत्त्योपस्थितत्वेन हन्तेरेव संबन्धेन जिहननीयिषतीत्यादौ नातिप्रसङ्गः। स्पष्टा चेयं रीतिर्ह्वः संप्रसारणमभ्यस्तस्येत्यत्र कैयट इति चेन्न। शब्दानुपस्थितप्रत्ययाक्षिप्तप्रकृतेः शाब्दबोधविषयत्वे मानाभावात्। अत एव ष्यङादीनामङ्गाधिकारपाठ एव ज्ञापकः। परे त्वत्र प्रत्ययाक्षेपस्य नोपयोगः। हन्तेरङ्गावयवस्य योऽभ्यास इत्यर्थेऽङ्गाभ्यासयोर्द्वयोरपि शास्त्रेण निमित्तत्वप्रदर्शनस्याङ्गसंज्ञानिमित्तनिमित्तकाभ्यासस्यैव ग्रहणमिति भाष्यार्थमाहुः। अङ्गसंज्ञायास्तु प्रत्ययपारार्थ्येन तद्विधायकप्रत्ययतया तन्निमित्तप्रत्ययस्य शब्दादुपस्थित्या प्रत्यासत्त्या च तयोरैक्य एव शास्त्रप्रवृत्त्या न दोषः। भाष्ये—यस्मिंश्चाभ्यास इति। यन्निमित्तकयोः पूर्वोऽभ्यास इत्यर्थः। लिडादेः सप्तम्यन्तपदेनैव द्वित्वं प्रति निमित्तत्वबोधनात्तदभिप्रायेण भाष्ये सप्तमीनिर्देशः। विषयसप्तमी वा।

---

× ६. ४. ११५. + ६. १. ७.

## हेरचङि ॥ ७ । ३ । ५६ ॥

अचङीति किमर्थम् ? प्राजीहयद् दूतम् ।

**हेश्चङि प्रतिषेधानर्थक्यमङ्गान्यत्वात् ॥ १॥**

हेश्चङि प्रतिषेधोऽनर्थकः । किं कारणम् ? अङ्गान्यत्वात् । ण्यन्तमेतदङ्गमन्यद्भवति । लोपे* कृते नाङ्गान्यत्वम् । स्थानिवद्भावादङ्गान्यत्वमेव ।

**ज्ञापकं त्वन्यत्र ण्यधिकस्य कुत्वविज्ञानार्थम् ॥ २ ॥**

एवं तर्हि ज्ञापयत्याचार्योऽन्यत्र ण्यधिकस्य कुत्वं भवतीति । किमेतस्य ज्ञापने प्रयोजनम् ? प्रजिघाययिषतीत्यत्र कुत्वं सिद्धं भवति ।

## सन्लिटोर्जेः ॥ ७ । ३ । ५७ ॥

**जिग्रहणे ज्यः प्रतिषेधः ॥ १ ॥**

जिग्रहणे ज्यः× प्रतिषेधो वक्तव्यः । जिज्यतुः जिज्युरिति । स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेत्येवमेतस्य न भविष्यति । सा तर्ह्येषा परिभाषा कर्तव्या ? अवश्यं कर्तव्या, अध्याप्य गत इत्येवमर्थम्÷ ।

## न क्वादेः ॥ ७ । ३ । ५९ ॥

**क्वाद्यजिव्रजियाचिरुचीनामप्रतिषेधो निष्ठायामनिटः कुत्ववचनात् ॥ १ ॥**

---

प्र०— हेर० । अचङीति किमर्थमिति । यस्मिन्हिनोतिरङ्गं तस्मिन्नभ्यासे विज्ञायमाने णौ हिनोतिरङ्गं चङ्यभ्यास इति कुत्वं न भविष्यतीति मत्वा प्रश्नः । अन्यत्रेति । सनादावित्यर्थः ।

सन्लिटो:० । जिज्यतुरिति । ज्या वयोहानौ । लिट्यतुसि ग्रहिज्यादिसूत्रेण संप्रसारणे कृते पूर्वैकादेशे च यद्यपि हल इति दीर्घत्वं क्रियते तथाऽप्येकदेशविकृतस्यानन्यत्वाद्यथा जयतेर्जिगीषतीत्यत्र कुत्वं भवत्येवं जिनातेः प्राप्नोति । अध्याप्येति । विभाषाऽऽप इत्ययादेश इङादेशात्पुगन्तात्परस्य णेर्न भवति ।

न क्वादेः । क्वाद्यजीति । चजोः कु घिण्ण्यतोर्निष्ठायामनिट इति वक्तव्यम् । तेनैव

---

उ०— हेरचङि । यस्मिन्हिनोतिरिति । पूर्वसूत्रोक्तरीत्येत्यर्थः । कुत्वविज्ञानार्थमित्यनेन भाष्येणास्य कुत्वमात्रविषयता नान्यविषयतेति ध्वन्यते । प्रजिघाययिषतीति । एवमुत्तरसूत्रविषये प्रजिगाययिषतीत्यपि बोध्यम् ।

सन्लिटोर्जेः । यद्यपीति । यद्यपि दीर्घात्परं कुत्वं तथाऽपि नित्यो दीर्घः प्रकृतिप्रत्ययसामान्यापेक्षत्वेनान्तरङ्गो वेति भावः । इङादेशादिति । इङः क्रीङ्जीनामित्यात्वे 'अर्तिह्री०' इति पुकि यदाप् इति रूपं तस्मादित्यर्थः ।

न क्वादेः । निष्ठायामनिट्त्वादिति । उदितो वेति क्त्वायां विकल्पाद्यस्य विभा-

---

* ६. ४. ५१. × ६. १. १६; १०८. ÷ ६. ४. ५७.

क्‍ाद्यजिव्रजियाचिरुचीनामप्रतिषेधः× । अनर्थकः प्रतिषेधोऽप्रतिषेधः । कुत्वं कस्मान्न भवति ? निष्ठायामनिटः कुत्ववचनात् । निष्ठायामनिटः कुत्वं वक्ष्यामि, सेटश्चैते निष्ठायाम् । यदि निष्ठायामनिटः कुत्वमुच्यते कथं शोकः समुद्ग इति ?

शुच्युब्ज्योर्घञि कुत्वम् ॥ २ ॥

शुच्युब्ज्योर्घञि कुत्वं वक्तव्यम् । कथमर्कः ?

अर्चेः कविधानात्सिद्धम् ॥ ३ ॥

नैतद्घञन्तम् । औणादिक एष कशब्दस्तस्मिन्नाष्टमिकं कुत्वम्* ।

प्र०-क्‍ाद्यजादीनां कुत्वनिवृत्तेः सिद्धत्वान्नार्थः प्रतिषेधेनेत्यर्थः । ननु ग्लुचुग्लुञ्चुकुजुखुजूनां निष्ठायामनिट्त्वाद्घिण्ण्यतोः कुत्वं वार्तिककारमते प्राप्नोति । सूत्रकारमते तु न कादेरिति प्रतिषेधप्रसङ्गः । तथाऽर्जिसर्जितर्जीनां निष्ठायां सेट्त्वात्कुत्वाप्रसङ्गः । उच्यते । वार्तिककारस्य सूत्रकारात्प्रमाणतरत्वात्तन्मतेन तु कुत्वस्य भावाभावाववगन्तव्यौ । नन्वसत्यजेः प्रतिषेधे वीत इति निष्ठायामनिट्त्वात्समाज इति कुत्वं प्राप्नोति । नैतदस्ति । व्यादेशो निष्ठायामनिण्न त्वजिः । न च स्थानिवद्भावः, 'अद्—निष्ठायाम'निडिति लौकिके व्यपदेशोऽस्ति, शास्त्रीयेष्वेव कार्येषु स्थानिवत्त्वात् । वलादावार्धधातुके विकल्प इष्यत इति वीभावाभावपक्षेऽजित इति निष्ठायामजिः सेडेव । कथमिति । शुच्युब्जी निष्ठायां सेटौ । 'ईशुचिर् पूतीभावे' इति यद्यपि निष्ठायामनिट् तथाऽप्यर्थभेदाश्रयः प्रश्नः । शुच्युब्जोर्घञीति । यथान्यासेऽपि घञ्येव यथा स्याण्ण्यति मा भूदिति नियमार्थं वाच्यम् । तदेव न्यासभेदे विध्यर्थमिति भावः । यद्यपि गमेर्दुर्न्युपसर्गाद्डप्रत्यये सति समुद्ग इति सिध्यति तथाऽप्युब्जेर्घञि जकारनिवृत्तये कुत्वमभ्युपयेम् । औणादिक इति । कृदाधारार्चिकलिभ्यः कः । घिण्ण्यतोस्त्वर्चोऽर्च्यमिति भवति ।

उ०-पेति निष्ठायामिण्निषेधादिति भावः । कुत्वाप्रसङ्ग इति । वार्तिककृन्मत इति शेषः । वार्तिककारस्येति । तस्य भाष्यकृता तदप्रत्याख्यानात् । भाष्यकारस्य वाज्ञानकल्पनापेक्षयैकस्य सूत्रकृतस्तत्कल्पना युक्तेति भावः । उक्तानुक्तदुरुक्तचिन्ताकरत्वं हि वार्तिककारत्वम् । स्थान्यादेशयोरभेदमाश्रित्य शङ्कते—नन्विति । समाज इति । समुदोरजः पशुष्विति पशुष्वपि सतोऽप्यत्र हलश्चेति घञ् । भेदेनोत्तरम् । न च स्थानिवद्भाव इति । इदं चिन्त्यम्, आदेशस्य तेन स्थानिवद्भावो न तु स्थानिन आदेशवद्भाव इति हेतोः । अतोऽत्रायमग्रन्थ इति बोध्यम् । निष्ठायामनिडिति । श्वीदितो निष्ठायामिति प्रतिषेधादिति भावः । अर्थभेदेति । 'शुच शोके' इत्यस्य न सिध्यतीत्यर्थः । ननु वचनेन परिहारे गौरवमत आह—यथान्यासेऽपीति । दुर्न्युपसर्गादिति । समुत्पूर्वादप्यस्मादपि दृश्यत इति डः ।

× ७. २ ६; ११. * ८. २. ६०.

## भुजन्युब्जौ पाण्युपतापयोः ॥ ७ । ३ । ६१ ॥

### भुजः पाणौ ॥ १ ॥

भुजः पाणाविति वक्तव्यम् । कथं न्युब्ज उपताप इति ?

### न्युब्जेः कर्तृत्वादप्रतिषेधः ॥ २ ॥

अनर्थकः प्रतिषेधोऽप्रतिषेधः । कुत्वं कस्मान्न भवति ? कर्तृत्वात् । नैतद्घञन्तम्+ । कर्तृप्रत्यय एषः× । न्युब्जतीति न्युब्जः । अधिकरणसाधनो वै लक्ष्यते घञ्—न्युब्जिताः शेरतेऽस्मिन्न्युब्ज उपताप इति । एषोऽपि हि कर्तृसाधन एव । कथम् ? न्युब्जयतीति न्युब्जः ।

## यजयाचरुचप्रवचर्चश्च ॥ ७ । ३ । ६६ ॥

### प्रवचिग्रहणमनर्थकं वचोऽशब्दसंज्ञाभावात् ॥ १ ॥

प्रवचिग्रहणमनर्थकम् । किं कारणम् ? वचोऽशब्दसंज्ञाभावात् । वचोऽशब्द-

---

प्र०— भुज० । भुजेस्तौदादिकस्य रौधादिकस्य वा घञि गुणकुत्वनिषेधौ निपात्येते । भुजः पाणाविति । न्युब्जोपतापग्रहणं न कर्तव्यमित्यर्थः । लोके बाहौ भुजशब्दो भुजावयवत्वात्प्रयुज्यते । कर्तृप्रत्यय इति । पचाद्यच् । न्युब्जतीति । न्युब्जत्यस्मिन्नित्यधिकरणं प्रदर्शनीयम् । भाष्ये तु वस्तुमात्रं कथितम् । एषोऽपीति । यस्मिन्व्याधौ न्युब्जिताश्चेष्टारहिताः शेरते स व्याधिस्तान्न्युब्जयतीत्यच् । न चात्र घञचोः स्वरे विशेषः । थाथादिसूत्रेणान्तोदात्तत्वविधानात् भुजशब्दस्तु घञ्याद्युदात्तो भवत्यचि त्वन्तोदात्तः स्यात् ।

यज० । अविवाक्यस्येति । यद्ययं नियमः क्रियते तदाऽविवाक्यमित्येव स्यान्न

---

उ०— भुजन्युब्जौ० । तौदादिकस्येति । कुटिली क्रियत इति तदर्थः । रौधादिकस्येति । अभ्यवह्रियतेऽनेनेति तदर्थः । सूत्र एव सत्वाद्वक्तव्यत्वानुपपत्तिरत आह—न्युब्जेति । लोके बाहाविति । मणिबन्धादधः पञ्चशाखप्रभेदः पाणिः । बाहुश्च तत ऊर्ध्वभाग इति तदनुपपत्तिरिति भावः । भुजावयवत्वादिति बहुव्रीहिः । सूत्रस्थपाणिपदस्य पाण्यवयवके लक्षणेति केचित् । भाष्ये तु वस्तुमात्रमिति । अन्तर्भावितण्यर्थतयेति भावः । इतर एतदजानान आह—अधिकरणेति । स्वाशयं प्रकटयति—एषोऽपीति । न्युब्जितेत्यस्य व्याख्यानं—चेष्टारहिता इति । ननु भुजेरप्यचि घञ्वदेव संज्ञापूर्वकविधेरनित्यत्वाद्गुणाभावे भुजस्य सिद्धत्वात्किं तत्रापि वचनेनेत्यत आह—भुजशब्दस्त्विति । अन्तोदात्तः स्यादिति । इगुपधलक्षणकेऽप्येवं स्यादिति भावः । वस्तुतः संज्ञापूर्वकविधेरनित्यत्वे मानाभावाद्गुणाभावार्थमपि तन्निपातनं बोध्यम् ।

यजयाच० । भाष्ये प्रपूर्वो वचिरशब्दसञ्ज्ञायामिति । तत्रैवेत्यर्थः । एतेन प्रवाच्यं

---

+ १. ३. १२१. × ३. १. १३४.

संज्ञायां प्रतिषेध उच्यते×, प्रपूर्वश्च वचिरशब्दसंज्ञायां वर्तते । उपसर्गनियमार्थं तर्हीदं वक्तव्यम् । प्रपूर्वस्यैव वचेरशब्दसंज्ञायां प्रतिषेधो यथा स्यात् । इह मा भूत्—अविवाक्यमिति ।

**उपसर्गपूर्वनियमार्थमिति चेदविवाक्यस्य विशेषवचनात्सिद्धम् ॥२॥**

विशेष एतद्वक्तव्यम्—अविवाक्यमहरिति । क्व मा भूत् । अविवाच्यमेवान्यदिति ।

**ण्यप्रतिषेधे त्यजेरुपसंख्यानम् ॥ ३ ॥**

ण्यप्रतिषेधे त्यजेरुपसंख्यानं कर्तव्यम् । त्याज्यम् ।

**भोज्यं भक्ष्ये ॥ ७ । ३ । ६९ ॥**

**भोज्यमभ्यवहार्ये ॥ १ ॥**

भोज्यमभ्यवहार्ये इति वक्तव्यम् । इहापि यथा स्यात्—भोज्यः सूपः, भोज्या यवागूरिति । किं पुनः कारणं न सिध्यति ? भक्षिरयं खरविशदे वर्तते, तेन द्रवे न प्राप्नोति । नावश्यं भक्षिः खरविशद एव वर्तते । किं तर्हि ? अन्यत्रापि वर्तते । तद्यथा—अब्भक्षः, वायुभक्ष इति ।

---

प्र०-त्वविवाच्यमिति । द्वयमप्येतद्विषयविभागेनेष्यत इति यत्नान्तरं कार्यं न त्वयं नियमः । अन्योपसर्गपूर्वस्य च प्रतिषेध इष्यत एव । दशरात्रस्य यज्ञविशेषस्य दशममहरविवाक्यमुच्यते । यस्मिन्याज्ञिका न विब्रुवते—न नानावाक्यन्युच्चारयन्तीत्यर्थः । तत्र पृषोदरादित्वात्कुत्वमन्यत्र प्रतिषेध इति प्रवचिग्रहणं प्रत्याख्यातम् । त्यजेरिति । पूज्यमिति तु ण्यन्तस्य पूजे रूपम् ।

भोज्यम्० । नावश्यमिति । भाष्यकारः सूत्रकारन्यासं समर्थयते—अब्भक्ष इति । नच शब्दान्तरसंनिधिगम्यं सामान्यवाचित्वमिति शक्यं वक्तुम् । नहि शब्दस्यानभिधेयं शब्दान्तरसंनिधानेनाभिधीयते नित्यत्वाच्छब्दार्थसंबन्धस्य भोज्यं भक्ष्यं लेह्यं पेयमित्यत्र गोबलीवर्दन्यायेन विशेषविषयत्वं भुजिभक्ष्योर्ज्ञेयम् ।

---

उ०-नाम ग्रन्थविशेष इति वृत्त्युक्तं चिन्त्यम् । अविवाक्यस्य विशेषवचनादित्यस्य नियमानुपपत्तौ हेतुद्वयमुपपादयति—द्वयमिति । यत्नान्तरं नियमाद्न्यत् । नन्वेवमन्योपसर्गपूर्वस्य न स्यादिति शङ्कायामिष्टापत्तिमाह—अन्योपसर्गेति । तथा च प्रयुज्यतेऽनिर्वाच्या विद्येति । न विब्रुवत इत्यस्य व्याख्यानं-न नानावाक्येत्यादि । बाहुलकादधिकरणे कृत्यः । पृषोदरादित्वादिति । पृषोदरादिष्वविवाक्यमहरिति पठनीयमिति भावः । पूज्यमिति त्विति । पूर्वं च पूजेर्घेति घृत्तिश्चिन्त्येति भावः ।

भोज्यम्० । ननु भक्षिः खरविशदविषय एव । अब्भक्ष इत्यादौ शब्दान्तरसंनिधानात्सामान्यवृत्तित्वमिति शङ्कते—न चेति । उत्तरयति—न हीति । अनेकार्थस्याभिधेयत्वे हि तस्य बोधनियामकत्वमात्रमिति भावः ।

---

× ७. १. १७.

## घोर्लोपो लेटि वा ॥ ७ । ३ । ७० ॥

वेति शक्यमवक्तुम्। कस्मान्न भवति—तदग्निरग्नये ददात्? अस्त्वत्र लोपः, आटः× श्रवणं भविष्यति। तेनोभयं सिध्यति—'दधद्रत्नानि दाशुषे'+। ददाद्रत्नानि दाशुषे।

## ओतः श्यनि ॥ ७ । ३ । ७१ ॥

### ओतः शिति ॥ १ ॥

ओतः शितीति वक्तव्यम्। किं प्रयोजनम्?

### उत्तरत्र शिद्ग्रहणाभावाय ॥ २ ॥

तत्रायमप्यर्थः ष्ठिवुक्लम्वुचमां शिति [ ७५ ] इति शिद्ग्रहणं न कर्तव्यं भवति। ननु च भोः श्यन्ग्रहणमपि तर्ह्युत्तरार्थं कर्तव्यम्। शमामष्टानां दीर्घः श्यनि [ ७४ ] इति श्यन्ग्रहणं न कर्तव्यं भवति। अत्राप्यस्तु—शितीत्येव। यदि शितीत्युच्यते 'अनु त्वेन्द्रो भ्रमतु* मदतु'—अत्रापि प्राप्नोति। शमादिभिरत्र शितं विशेषयिष्यामः। शमादीनां यः शिदिति। कश्च शमादीनां शित्? शमादिभ्यो यो विहितः। एवमपि तस्यति यस्यति—अत्र प्राप्नोति। अष्टाना-

---

प्र०–घोर्लो०। भाष्यकारेण वेति प्रत्याख्यातम्। केचित्त्वनित्यमागमशासनमित्यस्य ज्ञापकं वाग्रहणं वर्णयन्ति। अनित्यत्वात्तस्याऽऽट्यसति ददादिति न स्यादिति तत्सिद्धये वाग्रहणं क्रियमाणमेनां परिभाषां ज्ञापयति।

ओतः०। ओत इति। नहि श्यनोऽन्य ओतः शिदस्ति। तत्रायमप्यर्थ इति। न केवलं मात्रालाघवं यावदयमप्यर्थ इत्यर्थः। भ्रमत्विति। वा भ्राशेति वचनात्पक्षे शप्। मदत्विति। व्यत्ययेन शप्। शमादिभ्यो यो विहित इति। श्यन्नेव सर्वेभ्यः शमादिभ्यो विहित इति स एव गृह्यते। एवमपीति। शिद्विशेषणे शमादीनामुपयोगा-

---

उ०– घोर्लोपो०। केचित्त्वनित्यमिति। अस्यार्थस्य भाष्यकृताऽस्पृष्टत्वादिदमप्रामाणिकम्। जप्त्वेत्याद्यसाध्वेवेत्यन्ये।

ओतः श्यनि। नहीति। नच भवतीत्यस्ति, ओत इत्यस्य विहितविशेषणत्वाङ्गीकारात्। 'भवतेर'इत्यादिनिर्देशेन प्रतिपदोक्तौकारस्यैव ग्रहणाच्च। ओकारान्तप्रकृतिकाचारक्विबन्तात्तु न सन्त्येवानभिधानादिति भावः। न केवलमिति। क्सस्येति लुग्वेति च सूत्रओत इत्यतः प्रागेव पाठ्यं लुग्वेत्यत्रापि लोपपदसंबन्धे बाधकाभाव इति भावः। ननु शबपि शमादिभ्यो विहित एवेत्यत आह–श्यनेवेति। दिवादिभ्य इत्यादिग्रहणस्य व्यवस्थार्थंकतया

---

× ३. ४. ९४. + ऋग्वेद ४. १५. ३. * ३. १. ७०.

मिति वचनान्न भविष्यति ।

ष्ठिवुक्लमुचमां शिति ॥ ७ । ३ । ७५ ॥

दीर्घत्वमाङि चमः ॥ १ ॥

दीर्घत्वमाङि चम इति वक्तव्यम् । आचामति । इह मा भूत्—उच्चमति, विचमतीति ।

इषगमियमां छः ॥ ७ । ३ । ७७ ॥

इषेश्छत्वमहलि ॥ १ ॥

इषेश्छत्वमहलीति वक्तव्यम् । इह मा भूत्—इष्णाति, इष्यति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । अचीति× वर्तते । एवमपीषाणेत्यत्र÷ प्राप्नोति । अथाहलीत्युच्यमाने कस्मादेवात्र छत्वं न भवति । नैवं विज्ञायते—न हल् अहल् अहलीति । कथं तर्हि ? अविद्यमानो हलस्मिन्सोऽयमहल् अहलीति । यद्येवमचीत्यपि वर्तमाने न दोषः । न ह्यचा शिद्विशेष्यते—शिति भवति, कतरस्मिन् ? अचीति । कथं तर्हि ? शिताऽज्विशेष्यते—अचि भवति, कतरस्मिन् ? शितीति ।

---

प्र०–त्कार्यिनिर्देशाभावात् । अष्टानामिति । अष्टानामित्यनेन संख्येयाः कार्यिणो निर्दिश्यन्ते ते च संनिधानाच्छमादय एव विज्ञायन्ते ।

ष्ठिवु० । ष्ठिवुक्लमुचमां शितीति सूत्रपाठादाह—दीर्घत्वमाङि चम इतीति । अथवा सूत्रे तन्त्रमाङ् नतु यथोपेयिवानित्यत्रोपशब्दोऽतन्त्रमिति प्रदर्शनाय वार्तिकारम्भः ।

इष० । इषुगमीति पाठोऽनार्ष इत्याह—इषेश्छत्वमहलीति । इषाणेति । इष आभीक्ष्ण्य इत्यस्माद्धलः श्नः शानज्झाविति शानच् । स चाजादिरिति च्छत्वप्रसङ्गः । अथेति । अहलीति तत्पुरुषे शानजजादिरिति भावः । न ह्यचेति । विशेषणविशेष्यभावे कामचारात्तदादिविधिस्तदन्तविधिवद्विशेषणेन भवति, न विशेष्येण ।

---

उ०–दयन्तशमादिशब्दोच्चारणेन विहितो न तु शप् तथेति परे । कार्यिनिर्देशाभावादिति । शमादिविहितश्यनस्य दीर्घ इत्यर्थः स्यादिति भावः ।

ष्ठिवुक्लमु० । ननु सूत्र एवाऽऽचमामिति पाठाद्वार्तिकमनर्थकमत आह—ष्ठिव्विति । स पाठोऽनार्ष इति भावः । तमपि पाठं स्थापयति—अथवेति ।

इषगमि० । इषुगमीति पाठे तौदादिकस्यैवोदितः पाठादन्यस्य ग्रहणशङ्कैव नेत्यत आह—अनार्ष इति । गणेऽप्यनुदित एव पाठ इत्यर्थः । न विशेष्येणेति । एवं चाजूरूपे नितीत्ययोस्त दोष इति भावः । अत्राचीत्यस्य मण्डूकानुवृत्तिर्बोध्या । अत एव शमः परस्मैपदेष्विति दीर्घः श्यन्यपि भवति । अत एव भगवता तत्सूत्रं विहायाग्रेय विचारोऽकारीति बोध्यम् ।

---

× ७. १. ७२. ÷ १. १. ८१.

## पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठ-मनयच्छपश्यर्च्छधौशीयसीदाः ॥ ७ । ३ । ७८ ॥

### पिबेर्गुणप्रतिषेधः ॥ १ ॥

पिबेर्गुणप्रतिषेधो वक्तव्यः । पिबति । लघूपधगुणः प्राप्नोति× । स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः । गुणः कस्मान्न भवति ? पिबिरदन्तः ।

### अदन्त इति चेदुक्तम् ॥ २ ॥

किमुक्तम् ? धातोरन्त इति चेदनुदात्ते चपग्रहणमिति+ । अथवाऽप्रवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येत्येवं न भविष्यति ।

## ज्ञाजनोर्जा ॥ ७ । ३ । ७९ ॥

दीर्घोच्चारणं किमर्थं, न ज्ञाजनोर्ज इत्येवोच्येत ? का रूपसिद्धिः—जानाति जायते । अतो दीर्घो यञि [ ७. ३. १०१ ] इति दीर्घत्वं भविष्यति । एवं तर्हि सिद्धे सति यद्दीर्घोच्चारणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा—

---

प्र०— पाघ्रा० । धातोरन्त इति चेदिति । धातोरित्यत्र द्वौ पक्षावुक्तौ—अन्त इति वर्तते न वा, यद्यनुवर्तते तदाऽनुदात्ते चेति सूत्रं कर्तव्यं ददातीत्याद्युदात्तार्थं तथा पिबन्तीत्यादावाद्युदात्तत्वं मध्योदात्तनिवृत्त्यर्थं बान्तस्य धातोर्वक्तव्यमन्तग्रहणनिवृत्तौ तु क्रमप्राप्तत्वादादेरेवोदात्तत्वं सिध्यति । तत्रायं निर्णयः—अन्त इति वर्तते, कर्णो-त्याद्यर्थम् । अनुदात्ते चेति कृतमेव । पिबेति चाऽऽद्युदात्तनिपातनमिह कार्यम् । अथवेति । सत्यपि हलन्तत्वे गुणाभावः पिबादेशेनैवाङ्गस्य प्रयोगार्हत्वात् ।

ज्ञाजनो:० । अतो दीर्घो यञीति । अत्र सार्वधातुकग्रहणं तुरुस्तुसूत्रादनुवर्तते ।

---

उ०— पाघ्रा० । आदेरेवेति । इदं तत्रैवोपपादितम् । धातोरिति सूत्रस्थं पूर्वपक्षवार्तिकग्रहणं तत्रत्यसिद्धान्तवार्तिकस्याप्युपलक्षणमित्याशयेनाऽऽह—तत्रायमिति । कृतमेवेति । इदमेव ज्ञापकं धातोरित्यत्रान्ताधिकारस्येति भावः ।

ज्ञाजनोर्जा । ज्ञासाहचर्याच्छ्रूयमाणविकरण एवात्र जनिर्न जुहोत्यादिरित्याहुः । नन्वतो दीर्घ इत्यत्र तिङीत्यनुवृत्तेः कथं जानातीत्यत्र दीर्घोऽत आह—अतो दीर्घ इत्यादि । अत्रत्य-मेतज्ज्ञापनपरं ज्यादादीयस इति सूत्रस्थं च भाष्यमेकदेश्युक्तिः । अदन्तत्वेनैव गुणप्रतिषेधवा-र्तिकप्रत्याख्यानसंभवेनास्य यत्नस्य गुरुत्वात् । भ्यसोभ्यमितिसूत्रस्थं च भाष्यमत्रत्यतदेकदे-शिमतेनैवेति बोध्यम् । फलान्तरं तु नास्या उपलभ्यते । नन्वनेन दीर्घेऽजानां भो इत्यादा-वनन्त्यस्य प्लुतो न स्यात् । 'अत आत्' इत्येव सिद्धे तत्रत्यदीर्घग्रहणस्य प्लुतव्यावर्तकताया हरदत्तादिभिरुक्तत्वात् । अत एव पचामि भोरित्यादौ न प्लुतः । न चानन्त्यस्य पदस्य टेरिति तद्यथात्पचामीत्यादौ तत्प्राप्त्यभावेन किमर्थं दीर्घग्रहणेन तन्निराकरणमिति वाच्यम् । दीर्घ-

---

× ७. ३. ८६. + ६. १. १६२.

अङ्गवृत्ते पुनर्वृत्तावविधिरिति । किमेतस्य ज्ञापने प्रयोजनम्? पिबेर्गुणप्रतिषेध-श्चोदितः÷ स न वक्तव्यो भवति ।

## जुसि च ॥ ७ । ३ । ८३ ॥

## जुसि गुणे यासुट्प्रतिषेधः ॥ १ ॥

जुसि गुणे यासुडादौ प्रतिषेधो वक्तव्यः । चिनुयुः सुनुयुरिति । न वक्तव्यः । नैवं विज्ञायते—मिदेर्गुणः [ ८२ ] जुसि चेति । कथं तर्हि? मिदेर्गुणोऽजुसि चेति । किमिदमजुसीति? अजादावुस्यजुसीति । इहापि तर्हि प्राप्नोति—चक्रुः, जह्रुरिति । एवं तर्हि शितीति+ वर्तते । एवमपि अजुहवुः, अबिभयुरित्यत्र न प्राप्नोति । भूतपूर्वगत्या भविष्यति । न सिध्यति, न ह्युस्शिद्भूतपूर्वः । उस्शिद्भूतपूर्वो नास्तीति कृत्वोसि यः शिद्भूतपूर्वस्तस्मिन्भविष्यति । अथवा क्रियते न्यास एव—अविभक्तिको निर्देशः । नैवं विज्ञायते—मिदेर्गुणो जुसि चेति । कथं तर्हि? मिदेर्गुण उजुसीति । किमिदमुजुसीति? उकारादौ जुसि । अथवाऽचीति× वर्तते तेन जुसं विशेषयिष्यामः—अजादौ जुसीति ।

## जाग्रोऽविचिण्णल्ङित्सु ॥ ७ । ३ । ८५ ॥

इह जागरयति जागरक इति कृते रपरत्वे चात उपधायाः [७.२.११६]

---

प्र०-नन्विति । अत एवाऽऽने मुक्पूर्वान्तः कृतो न परादिर्दीर्घप्रसङ्गात् । अङ्गवृत्त इति । ज्यादादीयस इत्याकारविधानस्य ज्ञापकत्वे जा इति दीर्घोच्चारणं दीर्घश्रवणार्थम् । एतद् दीर्घोच्चारणे तु ज्ञापके तदाकारविधानमाकारश्रवणार्थम् ।

जुसि च । चिनुयुरिति । तद्ग्रहणेन गृह्यत इति गुणप्रसङ्गः । शितीति वर्तत इति । ष्ठिवुक्लमुचमां शितीत्यतः । न च लिटि शिदस्ति । एवमपीति । उसि शितीति सामानाधिकरण्यसंबन्धं मन्यते । इतर उसि यः शित्तस्मिन्निति संबन्धं मत्वाऽऽह—भूतपूर्वगत्येति । प्रत्ययलक्षणं तु नास्ति, न लुमताऽङ्गस्येति निषेधात् । उकारादावपि । यासुडादेरनुकारादित्वाद्ग्रहणाभावः । अनुबन्धनिर्देशाच्च लिडादेशस्योसो ग्रहणाभावः । अचीति वर्तत इति । अक्षस्याचीत्यतः ।

जाग्र० । इहेति । अङ्गवृत्त इत्यनाश्रित्योच्यते । गुणस्यावकाशः—जागरित

---

उ०-ग्रहणसामर्थ्याज्जागर्तिविषय एव टेरित्यस्य संबन्धादिति चेन्न, ज्ञापकपरभाष्यप्रामाण्येन तपरदीर्घग्रहणस्य स्पष्टार्थतया तदर्थकत्वाभावकल्पनात् ।

जुसि च । न च लिटीति । जुसि यः शित्तत्र परेऽङ्गस्य गुण इति सूत्रार्थः । ननु प्रत्ययलक्षणसत्त्वे किं भूतपूर्वगत्याऽत आह—प्रत्ययलक्षणं त्विति । भाष्ये गुण उ जुसीति । गुणेति लुप्तविभक्तिकमिति भावः ।

जाग्रो० । अनाश्रित्येति । अकृतनिवृत्त्यादिति भावः । तथा अनुवृत्त्यपेक्षत्वे ।

---

÷ ७. १. ७८. + ७. १. ७५. × ७. १. ७१.

इति वृद्धिः प्राप्नोति तस्याः प्रतिषेधो वक्तव्यः ।

**चिण्णलोः प्रतिषेधसामर्थ्यादन्यत्र गुणभूतस्य वृद्धिप्रतिषेधः ॥१॥**

यदयमचिण्णलोरिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो न गुणाभिनिर्वृत्तस्य वृद्धिर्भवतीति ।

किं पुनरयं पर्युदासः—यदन्यद्विचिण्णल्ङिद्भ्य इति, आहोस्वित्प्रसज्यायं प्रतिषेधः—विचिण्णल्ङित्सु नेति ? कश्चात्र विशेषः ?

**प्रसज्यप्रतिषेधे जुसिगुणप्रतिषेधप्रसङ्गः ॥ २ ॥**

प्रसज्यप्रतिषेधे जुसिगुणप्रतिषेधः प्राप्नोति । अजागरुः* ।

**उत्तमे च णलि ॥ ३ ॥**

उत्तमे च णलि प्रतिषेधः प्राप्नोति—अहं जजागर+ ।

**न वाऽनन्तरस्य प्रतिषेधात् ॥ ४ ॥**

न वैष दोषः । किं कारणम् ? अनन्तरस्य प्रतिषेधात् । अनन्तरं यद्गुणविधानं× तस्य प्रतिषेधः । कुत एतत् ? अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ।

**जुसि पूर्वेण गुणविधानम् ॥ ५ ॥**

जुसि पूर्वेण गुणो विधीयते 'जुसि च' [ ८३ ] इति ।

---

प्र०–इति । अचो ञ्णितीति वृद्धेरवकाशः—कारक इति । जागरयतीत्यादावुभयप्रसङ्गे परत्वाद्गुणे कृतेऽत उपधाया इति वृद्धिः प्राप्नोति । गुणभूतस्येति । गुणशब्दः स्वरूपपदार्थको गुणशब्देन भूतो निष्पन्नो गुणभूतः । एवं गुणशब्देनाभिनिर्वृत्तो गुणाभिनिर्वृत्तः । यद्यनेन गुणे कृतेऽत उपधाया इति वृद्धिः स्याच्चिण्णलोर्गुणप्रतिषेधोऽनर्थकः स्यात्कृते गुणे वृद्धया रूपस्य सिद्धत्वात् । तस्माच्चिण्णलोः प्रतिषेधोऽत उपधाया इति वृद्धयभावस्य ज्ञापको वृद्धिमात्राभावस्य तु न ज्ञापकः—तथा च ह्म्यन्तक्षणेत्यत्र जागृग्रहणमजागरीदित्यत्र वृद्धिनिषेधार्थं कृतम् । अन्यथा गुणे कृतेऽतो लान्तस्येत्यनेन वृद्धिर्न भविष्यतीति किं जागृग्रहणेन । अजागरुरिति । लङ् सिजभ्यस्तविदिभ्यश्चेति जुसादेशः । तस्य ङित्त्वाज्जुसि चेत्यनेनापि प्राप्तस्य गुणस्य निषेधप्रसङ्गः । पर्युदासपक्षे तु न दोषः । तत्र विच्चिण्णल्ङिद्भ्योऽन्यत्र गुणो विधीयते । न च तेषु निषिध्यत इति

---

उ०–ननु गुणात्पूर्वमचोऽञ्णितीति वृद्धिः किं न शङ्क्यतेऽत आह—गुणस्येति । अचिण्णलोरित्यनेन वृद्धिविषयेऽस्य गुणस्य विशिष्य विधानादपवादत्वादिति वक्तुं युक्तम् । निष्पन्न इति । भूधातुरुत्पत्त्यर्थ इति भावः । किं जागृग्रहणेनेति । तत्र तु सामान्यापेक्षज्ञापकत्वमाश्रित्य जागृग्रहणं प्रत्याख्यातमुपाध्यायैः । अत्रत्यभाष्यस्वरसोऽपि सामान्यापेक्षज्ञापकत्व एव दृश्यते । निषेधप्रसङ्ग इति । तत्र पक्षे विशेषाभावेन सर्वस्य गुणस्य निषेधः स्यादिति भावः ।

---

* ३. ४. १०९; १. २. ४; ७. ३. ८३. + ७. १. ९१; ७. ३. ८४. × ७. ३. ८५.

**णलि च ॥ ६ ॥**

किम् ? न वाऽनन्तरस्य प्रतिषेधादित्येव । णलि च पूर्वेण गुणो विधीयते—सार्वधातुकार्धधातुकयोः [ ८४ ] इति ।

अथवा पुनरस्तु पर्युदासः ।

**अतोऽन्यत्र विधाने वावगुणत्वम् ॥ ७ ॥**

अतोऽन्यत्र विधाने वावगुणत्वं वक्तव्यम् । जागृविः ।

**न वा पर्युदाससामर्थ्यात् ॥ ८ ॥**

न वा वक्तव्यम् । किं कारणम् ? पर्युदाससामर्थ्यादत्र गुणो न भविष्यति । अस्त्यन्यत्पर्युदासे प्रयोजनम् । किम् ? क्विनर्थं पर्युदासः स्यात् । शुद्धपरस्य विशब्दस्य प्रतिषेधे ग्रहणमनुनासिकपरश्च क्वौ विशब्दः । वस्वर्थं तर्हि पर्युदासः स्यात्—जागृवांसो अनुग्मन् । कथं पुनर्वेः पर्युदास उच्यमानो वस्वर्थः शक्यो विज्ञातुम् ? सामर्थ्याद्वस्वर्थमिति विज्ञास्यते ।

**वस्वर्थमिति चेन्न सार्वधातुकत्वात्सिद्धम् ॥ ९ ॥**

वस्वर्थमिति चेत्तन्न । किं कारणम् ? सार्वधातुकत्वात्सिद्धम् । कथं सार्व-

प्र०-लक्षणान्तरेण गुणः प्रवर्तत एव । जागृविरिति । घृद्दजागृभ्यो क्विन्निति सूत्रपाठाश्रयेण चोद्यते । यदा तु जॄशॄस्तृजागृभ्यः क्विन्निति पाठस्तदा कित्त्वादेवाऽऽर्धधातुकलक्षणगुणाप्रसङ्गः । यद्यपि प्रसज्यप्रतिषेधेऽप्ययं दोषोऽनन्तरस्य निषेधात्तथाऽपि पर्युदासो दोषवानिति प्रतिपादनायेदमुच्यते । न वेति । यदि जागृविरित्यत्र लक्षणान्तरेण गुणः स्याद्वेः पर्युदासोऽनर्थकः स्यात् । क्विन्नर्थमिति । नहि लक्षणान्तरेण गुणप्रसक्तो न चात्र तदनुबन्धकपरिभाषोपतिष्ठते । अनुबन्धस्यानिर्देशादिति विग्रहणेन क्विन्नपि गृह्यत इति भावः । शुद्धपरस्येति । विशब्द इकारो निरनुनासिक उच्चारित इति क्विपो ग्रहणं नास्ति । तस्य ह्रीकारोऽनुनासिकः । क्वस्वर्थमिति । विशब्दः सप्तम्यन्तो निर्दिश्यते निपातनाच्च सप्तम्या अलुक् । यथा वरेयलोपेति । अथवेकार उच्चारणार्थ इति यत्र वर्णादिविधिना क्वसोर्ग्रहणं भवतीति भावः । इतरस्तु यथोक्तमप्रतिपद्य वि इति समुदायो निर्दिष्ट इति मत्वाऽऽह—कथं पुनरिति । इतरः पूर्वोक्ताभिप्रायेणाऽऽह—सामर्थ्यादिति । औणादिको न पर्युदस्यते । लक्षणान्तरेण प्रसक्तादिति

उ०-भाष्ये—पूर्वेणेति । स्वपरिगणनेनेत्यर्थः । तथाऽपीति । [illegible] गुण इति प्रसज्यप्रतिषेधपक्षादिना प्रतिपादन इत्यर्थः । नहि तत्रेति । क्विप्त्वादिति भावः । ननु क्विपो ह्यनुबन्ध[illegible] भाह—न चात्र तदन्विति । तस्य ह्रीकार इति । विशेषविषय [illegible] । अन्यथा [illegible] दिति भावः । ननु [illegible] आह—विशब्द इति ।

**णलि च ॥ ६ ॥**

किम् ? न वाऽनन्तरस्य प्रतिषेधादित्येव । णलि च पूर्वेण गुणो विधीयते—सार्वधातुकार्धधातुकयोः [ ८४ ] इति ।

अथवा पुनरस्तु पर्युदासः ।

**अतोऽन्यत्र विधाने वावगुणत्वम् ॥ ७ ॥**

अतोऽन्यत्र विधाने वावगुणत्वं वक्तव्यम् । जागृविः ।

**न वा पर्युदाससामर्थ्यात् ॥ ८ ॥**

न वा वक्तव्यम् । किं कारणम् ? पर्युदाससामर्थ्यादत्र गुणो न भविष्यति । अस्त्यन्यत्पर्युदासे प्रयोजनम् । किम् ? क्विनर्थं पर्युदासः स्यात् । शुद्धपरस्य विशब्दस्य प्रतिषेधे ग्रहणमनुनासिकपरश्च क्वौ विशब्दः । क्वस्वर्थं तर्हि पर्युदासः स्यात्—जागृवांसो अनुग्मन् । कथं पुनर्वेः पर्युदास उच्यमानो क्वस्वर्थः शक्यो विज्ञातुम् ? सामर्थ्याद्क्वस्वर्थमिति विज्ञास्यते ।

**क्वस्वर्थमिति चेन्न सार्वधातुकत्वात्सिद्धम् ॥ ९ ॥**

क्वस्वर्थमिति चेत्तन्न । किं कारणम् ? सार्वधातुकत्वात्सिद्धम् । कथं सार्व-

---

प्र०–लक्षणान्तरेण गुणः प्रवर्तत एव । जागृविरिति । घृहजागृभ्यो क्विन्निति सूत्रपाठाश्रयेण चोद्यते । यदा तु जॄशॄस्तॄजागृभ्यः क्विन्निति पाठस्तदा कित्त्वादेवाऽऽर्धधातुकलक्षणगुणाप्रसङ्गः । यद्यपि प्रसज्यप्रतिषेधेऽप्ययं दोषोऽनन्तरस्य निषेधात्तथाऽपि पर्युदासो दोषवानिति प्रतिपादनायेदमुच्यते । न वेति । यदि जागृविरित्यत्र लक्षणान्तरेण गुणः स्याद्वेः पर्युदासोऽनर्थकः स्यात् । क्विनर्थमिति । नहि लक्षणान्तरेण गुणप्रसक्तो न चात्र तदनुबन्धकपरिभाषोपतिष्ठते । अनुबन्धस्यानिर्देशादिति विग्रहणेन क्विन्नपि गृह्यत इति भावः । शुद्धपरस्येति । विशब्द इकारो निरनुनासिक उच्चारित इति क्विपो ग्रहणं नास्ति । तस्य हीकारोऽनुनासिकः । क्वस्वर्थमिति । विशब्दः सप्तम्यन्तो निर्दिश्यते निपातनाच्च सप्तम्या अलुक् । यथा वरेयलोपेति । अथवेकार उच्चारणार्थ इति तत्र तदादिविधिना क्वसोर्ग्रहणं भवतीति भावः । इतरस्तु यथोक्तमप्रतिपद्य वि इति समुदायो निर्दिष्ट इति मत्वाऽऽह—कथं पुनरिति । इतरः पूर्वोक्तेनाभिप्रायेणाऽऽह—सामर्थ्यादिति । औणादिको न पर्युदस्यते । लक्षणान्तरेण प्रसक्तादिति

---

उ०–भाष्ये—पूर्वेणेति । अपवादितपूर्वेणेत्यर्थः । तथाऽपीति । स्वपक्षोऽपि गुण इति प्रसज्यप्रतिषेधपक्षादिना प्रतिपाद्यत इत्यर्थः । नहि तत्रेति । क्वित्त्वादिति भावः । ननु क्विपो ह्यनुबन्धकत्वाद्ग्रहणं नेष्यत आह—न चात्र तदन्विति । तस्य हीकार इति । विधेयविषय इच्चारणार्थमनयोर्गणमपीत्संज्ञालोपौ । अन्यथा तद्विनिर्दिष्टविधिसंभावनया तद्ग्रहणे मानाभावादिति भावः । ननु वसौ विशब्दाभावात्कथमत्र ग्रहणमातादृक्षेतेत्यत आह—विशब्द इति ।

णलि श्रासौ विहितः ।

किम् ? न वाऽनन्तरस्य कुण्डिर्न दुष्यति ॥ १ ॥

सार्वधातुकार्धधातुकयोः —अत्र कस्मान्न भवति ?

अथवा पुनरस्तु धातोर्नुमः

अनुम्विधावुक्तं, तत्र धातुग्रहणस्य प्रयोजनं धातूपदेशावस्थायामेव भवतीति× ।

कथं रञ्जेः

कथं रञ्जेरुपधालक्षणा वृद्धिः+ ? आश्चर्यो रागः । विचित्रो रागः* ।

स्यन्दिश्रन्थ्योर्निपातनात् ।

यदयं स्यन्दिश्रन्थ्योरवृद्ध्यर्थं निपातनं करोति÷ तज्ज्ञापयत्याचार्यो भवत्येवंजातीयकानां वृद्धिरिति ।

---

प्र०-विधीयेते, इत्युपपद्यते विधानविशेषणम् । ननु सांप्रतिकलघूपधसंभवे कथं विधानं विशेष्यते । व्याप्तिन्यायाश्रयादेवं हि हलादावजादौ च गुणः सिध्यति । कथं कुण्डिरिति । अङ्गाधिकारे नुमो विधानादकृत एव नुमि प्रत्ययो लघूपधाद्विधीयते तस्मिन्परतो नुमि गुणः प्राप्नोति । उक्तं तत्रेति । तेन कुण्डेति गुरोश्च हल इत्यकारः सिध्यत्यन्यथा क्तिन् स्यात् । कथं रञ्जेरिति । यदि षष्ठीनिर्देशेऽपि विधानं विशेष्यते तदाऽन्यत्रापि प्रसङ्गः । ततश्चाकारोपधाद्विहिते प्रत्यये वृद्धिर्विधीयमाना रञ्जेः प्रत्ययोत्पत्तेः पुरस्तान्नकारोपधत्वाद्वृद्धिर्न प्राप्नोति । राग इति । रञ्जेश्च घञि च भावकरणयोरिति नलोप । ननु चोपधाया अकारस्य वृद्धिरुच्यते, न च ततः प्रत्ययविधिसंभव इति विध्यपेक्षत्वं नाऽऽश्रयिष्यते । एवं मन्यते—अकारोपधाद्यो विधीयते सोऽवयवादप्यनुमानाद्विहितो भवति । स्यन्दिश्रन्थ्योरिति । नलोपार्थं वृद्ध्यभावार्थं निपातनम् । यदि वृद्धिविधौ विधानं विशेष्यते ततो वृद्धिप्रसङ्गाभावात्तदभावार्थं निपातनं न क्रियेत, नलोपसिद्धये

---

उ०-प्रत्यययोर्विधाननिमित्तसंबन्धस्याऽसंज्ञाशास्त्रे दृष्टत्वादिति भावः । भाष्ये लघोश्चासाविति लघूपधाच्चासाविरयर्थः । सांप्रतिकलघूपधसंभव इति । स्थानषष्ठीत्वसंभवेन प्रधानगुणविशेषणत्वे संभवतीत्यर्थः । अन्यथा क्तिन्स्यादिति । ततश्चात्र लघूपधाद्विधानाभावेन न गुण इत्यर्थः । भाष्ये धातोर्नुम इति हेतौ पञ्चमी यतस्तत्र धातोर्नुम् नाङ्गस्य तस्मादित्यर्थः । कथं रञ्जेरिति । कोऽस्य प्रकृते संगतिं दर्शयति-यदीति । अवयवादप्यनुमानादिति । अवयवाऽवयविनामभेदोपचारादिति भावः । ननु नलोपार्थमेव निपातनं स्यादत आह—नलोपसिद्धये

---

× ७. १. ५८; + ७. २. ११६. * ६. ४. २७. ÷ १. ४. २८; २९.

अनल्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः ॥ २ ॥

अनल्लोपः—दध्ना सक्थ्ना× । शिदीर्घत्वम्—कुण्डानि वनानि* । एवं तर्हि—

अभ्यस्तस्य यदाहाचि

यदयं नाभ्यस्तस्याचि पिति सार्वधातुके [ ८७ ] इत्यज्ग्रहणं करोति तज्ज्ञापयत्याचार्यो भवत्येवंजातीयकानां गुण इति ।

लङ्वर्थं तत्कृतं भवेत् ।

लङ्वर्थमेतत्स्यात्—अनेनेक् ।

क्नुसनोर्यत्कृतं कित्वं ज्ञापकं स्याल्लघोर्गुणे ॥ ३ ॥

यदयं त्रसिगृधिधृषिक्षिपेः क्नुः [ ३. २. १४० ] इको झल्हलन्ताच्च [ १. २. ९; १० ] इति क्नुसनौ कितौ करोति तज्ज्ञापयत्याचार्यो भवत्येवंजातीयकानां गुण इति ।

संयोगे गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति ।
विध्यपेक्षं लघोश्चासौ कथं कुण्डिर्न दुष्यति ॥ १ ॥

प्र०—विधिरेवाऽऽश्रीयेत । अनेकप्रयोजनसिद्धये निपातनाश्रयणम् । अनल्लोपेति । अल्लोपोऽन इत्यत्र षष्ठीनिर्देशेऽन्नन्ताद्विहिते प्रत्यये लोपो विधीयमानो राज्ञ इत्यादावेव स्यान्नास्थ्ना दध्नेत्यादौ । शिदीर्घत्वं च सामानीत्यादावेव स्यान्नतु कुण्डानीत्यादौ । तस्मात्षष्ठीनिर्देशे विधानविशेषणे दोषप्रसङ्गाद्गुणो भेत्तुर्न सिध्यति । अभ्यस्तस्येति । अज्ग्रहणस्य प्रयोजनं नेनेक्तीत्यादौ गुणप्रतिषेधो मा भूत् । यदि च हलादावलघूपधत्वाद्गुणो न स्यात्तदा गुणस्य प्राप्तिरेव नास्तीति किं तन्निषेधनिवारणार्थेनाज्ग्रहणेन । लङ्वर्थमिति । लुप्ते प्रत्यये गुणप्रतिषेधनिवारणायाज्ग्रहणं न ज्ञापकम् । अनेनेगिति । णिजिर् शौचपोषणयोरित्यस्माल्लङि तिप् शप् श्लुः । द्विर्वचनं निजां त्रयाणां गुणः श्लावित्यभ्यासस्य गुणः । हल्ङ्याब्भ्य इति तिलोपः । प्रत्ययलक्षणेन लघूपधगुणः । क्नुसनोरिति । ननु सनः कित्त्वममभावार्थं स्यात्सिसृक्षति दिदृक्षत इति कथं

उ०—इति । रञ्जेश्च घञि चेत्युत्तरमेव स्यान्दिश्रन्थी पठेदित्यर्थः । वार्तिकेऽनलोप इति पाठेऽनन्तस्य योऽलोपः सोऽनलोप इत्यर्थः । अनल्लोप इति पाठेऽनको लोपोऽर्थात्तत्संबन्ध्यकारस्येत्यर्थः । शिदीर्घत्वं सर्वनामस्थाने चासंबुद्धावित्यनेन तत्रापि नान्ताद्विहिते सर्वनामस्थान इत्यर्थः स्यादिति भावः । लुप्ते प्रत्यय इति । प्रत्ययलोपे संयोगाभावेन गुरुत्वाभावाल्लघूपधत्वमस्त्येवेत्यर्थः । क्नोरेवेति । संयोगात्परत्वे सति ह्रस्वस्वरूपलघुत्वशरीरघटकसंयोगस्य प्रत्यासन्नस्याऽङ्गावयवस्यैव ग्रहणम् । ईदृशार्थाश्रयणे च क्नोः कित्वं ज्ञापकम् । यद्वा भूतपूर्वलघुत्वमाश्रित्य गुण इति भावः । परे तु 'सृजिदृशोर्झल्यमकिति' 'इकोझल्' 'रभे'रिति लघुन्यासेन

× ७. १. ७५; ६. ४. १३४. * ७. १. ७२; ६. ४. ८.

धातोर्नुमः कथं रञ्जेः स्यन्दिश्रन्थ्योर्निपातनात् ।
अनङ्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः ॥ २ ॥
अभ्यस्तस्य यदाहाचि लङर्थं तत्कृतं भवेत् ।
क्नुसनोर्यत्कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुणे ॥ ३ ॥

**नाभ्यस्तस्याचि पिति सार्वधातुके ॥ ७ । ३ । ८७ ॥**

**अभ्यस्तानामुपधाह्रस्वत्वमचि पस्पशाते चाकशीमि वावशतीरिति दर्शनात् ॥ १ ॥**

अभ्यस्तानामुपधाह्रस्वत्वमचि वक्तव्यम् । किं प्रयोजनम् ? पस्पशाते चाकशीमि वावशतीरिति प्रयोगो दृश्यते । कपोतः शरदं पस्पशाते । अहं भुवनं चाकशीमि । वावशतीरुदाजदिति ।

**बहुलं छन्दस्यानुषग्जुजोषदिति दर्शनात् ॥ २ ॥**

बहुलं छन्दसि वक्तव्यमुपधाह्रस्वत्वम् । किं प्रयोजनम् ? आनुषग्जुजोषदिति दर्शनात् । यस्त आतिथ्यमानुषग्जुजोषत् ।

यद्युपधाह्रस्वत्वमुच्यते,

---

प्र०—ज्ञापकम् । उच्यते । यद्येतावत्प्रयोजनं स्यात्सृजिदृशोर्झल्यमकितिसनोरित्येव ब्रूयात्तस्माद्गुणप्रतिषेधार्थमपि कित्त्वं ज्ञापकमेव । किन्तु धिप्सति धीप्सतीत्यत्र नलोपार्थं सनः कित्त्वं स्यादिति क्नोरेव कित्त्वं ज्ञापकम् ।

नाभ्यस्त० । अभ्यस्तानामिति । गुणप्रतिषेधमविधाय ह्रस्वत्वमेव विधेयं सर्वेष्टसिद्ध्य इति भावः । किं प्रयोजनमिति । गुणनिषेधे ह्रस्वे चाविशेषं मत्वा प्रश्नः । पस्पशात इति । स्पशिर्वार्तिककारवचनादपठितो धातुस्तस्माल्लिङ्व्यत्ययेनाऽऽत्मनेपदं टेरेत्वं लेटोऽडाटावित्याट् शपो बहुलं छन्दसीति श्लुर्द्विर्वचनम् । चाकशीमीति । काशृ दीप्तौ यङ्लुक् लट् मिप् शप्लुक् । यङो वेतीडागमः । वावशतीरिति । वाशृ शब्दे यङ्लुक् लट् । शतृ ङीप् । जुजोषदिति । जुषी प्रीतिसेवनयोः । लेट् । व्यत्ययेन परस्मैपदं तिप् इतश्च लोपः परस्मैपदेष्वितीकारलोपो लेटोऽडाटावित्यड्, व्यत्ययेन शपः श्लुः । द्विर्वचनं, गुणे कृते ह्रस्वाभावः । यदि तर्हीति । यदि गुणनिषेधं प्रत्याख्यायोपधाह्रस्वो विधीयते तदा नन्र्तीति गुण-

---

उ०—सिद्ध इको झलन्ताच्चेति सामान्यतोऽतिदेशस्य गुणप्रतिषेधार्थत्वमिति भाष्याशयः । इको झल्हलन्ताच्चेति प्रकरणे रुदविदेति सूत्रेण विहितं सनः कित्त्वमपि ज्ञापकं बोध्यम् ।

नाभ्यास्तस्य० । गुणनिषेधविधौ सत्येवोपधाह्रस्वत्वं वक्तव्यमिति वार्तिकार्थभ्रमं निरस्यति—गुणप्रतिषेधमिति । गुणे सत्य ह्रस्वे कृते नेनिज्मीत्यादिसिद्धिरिति भावः । अविशेषमिति । नेनिज्मीत्यादावित्यर्थः । रूपभेदो नास्तीति । जातेऽपि ह्रस्वे रूपाविशेषे-

प्रियां मयूरः प्रतिनर्नृतीति
यद्वत्त्वं नरवर नर्नृतीषि हृष्टः

अत्र गुणः प्राप्नोति। तस्मान्नार्थ उपधाह्रस्वत्वेन। कस्मान्न भवति—पस्पशाते चाकशीमि वावशतीरिति। स्पशिकशिवशयः प्रकृत्यन्तराणि।

## भूसुवोस्तिङि ॥ ७ । ३ । ८८ ॥

### भूसुवोः प्रतिषेध एकाज्ग्रहणं बोभवीत्यर्थम् ॥ १ ॥

भूसुवोः प्रतिषेध एकाज्ग्रहणं कर्तव्यम्। किं प्रयोजनम्? बोभवीत्यर्थम्। इह मा भूत्—बोभवीति। यद्येकाज्ग्रहणं क्रियते—अभूत्, अत्र न प्राप्नोति। क्व तर्हि स्यात्? 'मा भूत्'। तस्मान्नार्थ एकाज्ग्रहणेन। कस्मान्न भवति—बोभवीतीति? बोभूत्वित्येतन्नियमार्थं भविष्यति*। अत्रैव यङ्लुगन्तस्य गुणो न भवति नान्यत्रेति। क्व मा भूत्—बोभवीतीति।

प्र०—रपरत्वयोः कृतयोर्ह्रस्वभाविन्युपधा नास्तीति रूपं न सिध्यतीति गुणनिषेध एव ज्यायान्। ननु परत्वाद्गुणं बाधित्वा ह्रस्वो भविष्यति। सकृद्गतौ विप्रतिषेध इति पुनर्गुणो न भविष्यति। एवं तर्हि पुनःप्रसङ्गविज्ञानाद्गुणः स्यात्। स्पशिकशिवशय इति। स्पश बाधनस्पर्शनयोः कश गतिशासनयोरिति केचित्पठन्ति। अन्ये तु कस गतिशासनयोरिति। तन्मतेन कशिः सौत्रो धातुः। कशेर्मुट् प्रतिष्कशश्च कशेरिति पाठात्। वश कान्तौ।

भूसु०। एकाज्ग्रहणमिति। द्विर्वचने कृतेऽनेकाच्त्वे गुणनिषेधनिवृत्त्यर्थम्। बोभवतीति। यङ्लुगन्ताल्लेट् तिप् लेटोऽडाटावित्यट्। मा भूदिति। न माङ्योग इत्यट्प्रतिषेधादेकाच्त्वम्। अत्रैवेति। सिद्धे गुणनिषेधे निपातनं नियमार्थम्। यद्येवं सोषवीतीति गुणनिषेधः प्राप्नोति। उच्यते। यथा भाष्यं तथा भवत्येव। योगापेक्षं ज्ञापकमिति वक्तव्ये नियमार्थमिति वचनादथवा नियमार्थेन निपातनेन द्वयोरपि भूसुवोर्यङ्लुकि गुणनिषेधो निवार्यते। यद्वा छान्दसो यङ्लुक्। न च सुवो

उ०—स्यपि बोध्यम्। ननु परत्वादिति। इदं चिन्त्यम्, गुणस्य नित्यत्वात्। सौत्रत्वमुपपादयति—कशेरिति।

भूसु०। द्विर्वचने कृत इति। उत्तरखण्डस्य भूत्वात्प्राप्तिः। भूशब्दान्तस्याङ्गस्येत्यर्थ इति भावः। ननु मा भूदित्यत्राप्यनेकाच्त्वाद् गुणः स्यादत आह—न माङिति। नियमार्थमिति। भवतेश्चेद्यङ्लुकि निषेधस्तर्हि बोभूत्वित्यत्रैवेति नियम इत्यर्थः। अथवेति। भूसुवोरिति यः प्रतिषेधः स यङ्लुकि चेद्बोभूत्वित्यत्रैवेति नियम इत्यर्थः। एकाज्ग्रहणं कर्तव्यमिति वार्तिकेन समानफलत्वाय द्विविधोऽत्र नियमश्छन्दस्येव लोकेऽपीति च। अत एव वार्तिकारम्भे भाषायां गुणापत्तिदूषणं नोन्नावितमित्येके। परे त्वाहुः—भाषायामस्य यङ्लुगन्तप्रयोगे दृढतरं न मानम्, बोभूत्वित्यस्य च्छान्दसेषु पाठस्तु यङ्लुकश्छान्दसत्वादेव तदाह—भाषायां त्विति।

* ७. ४. ६५.

**तृणह इम् ॥ ७ । ३ । ९२ ॥**

किमर्थं तृहिरागतश्नम्को गृह्यते न तृहेरिम्भवतीत्येवोच्येत ?

**तृणहिग्रहणं श्नमिमोर्व्यवस्थार्थम् ॥ १ ॥**

तृणहिग्रहणं क्रियते । किं प्रयोजनम् ? श्नमिमोर्व्यवस्थार्थम् । श्नमि कृत इम्यथा स्यात् ।

**तृहिग्रहणे हीम्विषये श्नमभावोऽनवकाशत्वात् ॥ २ ॥**

तृहिग्रहणे हि सतीम्विषये श्नमोऽभावः स्यात् । किं कारणम् ? अनवकाशत्वात् । अनवकाश इम्श्नमं बाधेत । इदमयुक्तं वर्तते । किमत्रायुक्तम् ? तृणहिग्रहणं श्नमिमोर्व्यवस्थार्थमित्युक्त्वा तत उच्यते—तृहिग्रहणे हीम्विषये श्नमभावोऽनवकाशत्वादिति । तत्र वक्तव्यं—तृणहिग्रहणं श्नमिमोर्भावाय, तृहिग्रहणे हीम्विषये श्नमभावोऽनवकाशत्वादिति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । व्यवस्थार्थमित्येव सिद्धं, न ह्यसतो व्यवस्थेति ।

**तुरुस्तुशम्यमः सार्वधातुके ॥ ७ । ३ । ९५ ॥**

सार्वधातुक इति+ वर्तमाने पुनः सार्वधातुकग्रहणं किमर्थम् ?

**पुनः सार्वधातुकग्रहणमपिदर्थम् ॥ १ ॥**

---

प्र०-यङ्लुगन्तस्य छन्दसि प्रयोगः । भाषायां तु क्वचिद्यङ्लुग् भवति न सर्वत्र ।

तृणह इम् । किमर्थमिति । तृहू इत्यस्य निवृत्त्यर्थो विकरणनिर्देशो न भवति ततः परस्य हलादेः पितः सार्वधातुकस्य विकरणेन व्यवधानादिति प्रश्नः । न ह्यसत इति । व्यवस्थार्थमित्येवं ब्रुवता पूर्वं श्नमोभावः पश्चादिमित्युक्तं भवति । श्नमोभावायेति तूच्यमाने क्रमो न प्रदर्शितः स्यात् ।

तुरु० । अपिदर्थमिति । नाभ्यस्तस्याचि पिति सार्वधातुक इति सार्वधातुकग्रहणं पिद्विशेषणसंबद्धमिति तदनुवृत्तौ पितोऽप्यनुवृत्तिः स्यादिति तन्निवृत्त्यर्थमन्यत्सार्वधातुकग्रहणमित्यपितोऽपीड् भवति । हल्ग्रहणमनुवर्तते, नहि तत्सार्वधातुकग्रहणेन

---

उ०— तृणह इम् । तृहू इत्यस्येति । न चास्यैव यङ्लुगन्तस्य व्यावृत्त्यर्थं स्यादिति वाच्यम् । सानुबन्धकस्यैनानुबन्धकग्रहणमित्यत्र तात्पर्यात्, यङ्लुक्सत्त्वे मानाभावाच्च । भाष्येऽनवकाशत्वादिति । न च श्नमि कृते तन्मध्यपतितन्यायेनेमोऽवकाशः । मिदचोऽन्त्यादित्येकवाक्यतया तृहोऽन्त्यादच ऋकारात्पर इमित्यर्थेन श्नमि ऋकारस्यान्त्यत्वाभावेन तदप्राप्तेः पुनर्वाक्यार्थे तु न मानम् । अनेनैव न्यायेनेमि श्नमोभावः । तदेव ध्वनयन्नाह—श्नमिमोभावायेति । न ह्यसतो व्यवस्थाऽस्तीति च । यद्वा तत्कालेऽप्यसंप्राप्तिसत्त्वेन तदप्राप्तिविषयेऽवकाशाभावेनानवकाशत्वमित्यर्थः । पूर्वमिति । व्यवस्थार्थमित्यनेन श्नमिमोभावः क्रमश्च दर्शित इति भावः ।
— तुरुस्तु० । नन्वेवं हल्ग्रहणस्यापि निवृत्तिः स्यादत आह—हल्ग्रहणमिति । तयो

+ ७. १. ८७.

अपिदर्थोऽयमारम्भः। अग्निगो शमीध्वं, सुशमि शमीध्वं, शमीध्वमग्निगो।

**बहुवचने झल्येत् ॥ ७ । ३ । १०३ ॥**

**अतो दीर्घाद्बहुवचन एत्त्वं विप्रतिषेधेन ॥ १ ॥**

अतो दीर्घाद्बहुवचन एत्त्वं भवति विप्रतिषेधेन। अतो दीर्घो यञि सुपि च [ १०१; १०२ ] इत्यस्यावकाशः—वृक्षाभ्याम् प्लक्षाभ्याम्। बहुवचने झल्येदित्यस्यावकाशः—वृक्षेषु प्लक्षेषु। इहोभयं प्राप्नोति—वृक्षेभ्यः प्लक्षेभ्यः। एत्त्वं भवति विप्रतिषेधेन।

**अम्बार्थनद्योर्ह्रस्वः ॥ ७ । ३ । १०७ ॥**

**डलकवतीनां प्रतिषेधः ॥ १ ॥**

डलकवतीनां प्रतिषेधो वक्तव्यः। अम्बाडे! अम्बाले! अम्बिके!

**तल्न ह्रस्वत्वं वा ङिसम्बुद्ध्योः ॥ २ ॥**

तल्ह्रस्वत्वं वा ङिसंबुद्ध्योरिति वक्तव्यम्। देवत देवते। देवतायाम् देवते।

स तर्हि प्रतिषेधो वक्तव्यः? न वक्तव्यः। स कथं न वक्तव्यो भवति?

**अम्बार्थं द्व्यक्षरं यदि ॥ ३ ॥**

यद्यम्बार्थं द्व्यक्षरं गृह्यते।

तत्तर्हि ह्रस्वत्वं वक्तव्यम्? अवश्यं छन्दसि ह्रस्वत्वं वक्तव्यम्। उपगायन्तु मां पत्नयो गर्भिणयो युवतय इत्येवमर्थम्।

---

प्र०—सह निर्दिष्टं यतस्तन्निवृत्तौ हलो निवृत्तिः स्यात्। शमीध्वमिति। शमेरन्तर्भावितण्यर्थात्प्रैषे लोट्। व्यत्ययेनाऽऽत्मनेपदम्। शप् तस्य बहुलं छन्दसीति लुक्।

अम्बा०। डलकवतीनामिति। अर्थगतेन स्त्रीत्वेनाम्बार्थाः शब्दा निर्दिष्टाः श्रुत्यपेक्षया वा स्त्रीत्वेन निर्देशः। असंयुक्तानां च डलकानां ग्रहणादकालेति ह्रस्वो भवत्येव। देवत इति। ङौ ह्रस्वे कृते ङ्यःप्ग्रहणेऽदीर्घ इति स्थानिवत्त्वनिषेधाद्याड्याडागमौ न भवतः। अम्बार्थमिति। द्व्यच एवाम्बार्थस्य ग्रहणाड्डलकवतामर्थादप्रतिषेधः कृतो भवति। अवश्यमिति। व्यत्ययो बहुलमिति दीर्घस्य ह्रस्वः।

---

उ०—वृद्धिरित्यतः। ननु शमिरकर्मकस्तत्कथं पशुविशसनप्रत्यायकतया सकर्मकोऽत आह—शमेरिति। शबिति। अत्रापि व्यत्ययेनेत्यपकृष्यते। श्यन्विकरणो हि शमिः परस्मैपदी च।

अम्बार्थ०। ननु शब्दस्य विशेष्यत्वात्स्त्रीलिङ्गनिर्देशोऽनुपपन्नोऽत आह—अर्थगतेनेति। अम्बा—माता। श्रुत्यपेक्षयेति। श्रुतिशब्द एव विशेष्योऽध्याहर्तव्य इत्यर्थः। असंयुक्तानामिति। अत एव प्रत्याख्यानेन फलैक्यम्। भाष्ये—द्व्यक्षरमिति। द्व्यजनसहितोऽत्राक्षरं द्व्यजम्बार्थेति सूत्रं पाठ्यम्। प्रतिषेधाच्चेदं लघ्विति भावः। तत्तर्हीति। तल्ह्रस्वत्वं वेत्येतत्। तलन्तस्य ह्रस्वत्वं वेति तदर्थः। पूर्ववदेवेति। अर्थगतं पूजाद्योतकं बहुत्वं

## मातॄणां मातच् पुत्रार्थमर्हते ॥ ४ ॥

मातॄणां मातजादेशो वक्तव्यः। किं प्रयोजनम्? पुत्रार्थमर्हते। गार्गीमात वात्सीमात।

## ह्रस्वस्य गुणः ॥ ७। ३। १०८ ॥

इह कस्मान्न भवति—नदि कुमारि किशोरि ब्राह्मणि ब्रह्मबन्धु? ह्रस्ववचनसामर्थ्यात्+। अस्त्यन्यद्ध्रस्ववचने प्रयोजनं पृथग्विभक्ति मोच्चीचरमिति। शक्यं पृथग्विभक्तिरनुच्चारयितुम्। कथम्? एवमयं ब्रूयात्—अम्बार्थानां ह्रस्वः नदीह्रस्वयोर्गुण इति। यद्येवमुच्यते जसि च [ १०९ ] इत्यत्र नद्या अपि गुणः प्राप्नोति। एवं तर्हि योगविभागः करिष्यते—अम्बार्थनद्योर्ह्रस्वः। ततो ह्रस्वस्य। ह्रस्वस्य च ह्रस्वो भवति। किमर्थमिदम्? गुणं वक्ष्यति तद्बाधनार्थम्। ततो गुणः। गुणश्च भवति ह्रस्वस्येति। अथवा ह्रस्वस्य गुण इत्यत्राम्बार्थनद्योर्ह्रस्व इत्येतदनुवर्तिष्यते।

---

प्र०—मातॄणामिति। पूर्वपदे बहवो मातृशब्दा इति बहुवचनं मातृशब्दस्य मातजादेशो वक्तव्यो यो मातृशब्दः पुत्रार्थे पुत्रमभिधातुमुपादीयते। बहुव्रीहौ च वर्तिपदैरन्यपदार्थोऽभिधीयत इति तत्रैवायं संबुद्धौ मातजादेशः। गार्गीमातेति। गार्गी माताऽस्येति बहुव्रीहौ नद्यृतश्चेति कप् येन नाप्राप्त इति मातचा बाध्यते। यः पुत्रः श्लाघ्यगुणत्वात्कुलसंभूतया मात्रा व्यपदेशमर्हति तत्र मातजादेशो नान्यत्र। गर्गवत्साभ्यां गर्गादिभ्यो यञ्, यञश्चेति ङीप्।

ह्रस्व०। इह कस्मादिति। ह्रस्वविधानं नद्या गुणविध्यर्थमेव स्यात्। पृथगिति। यद्यम्बार्थानां ह्रस्व इत्युक्त्वा नद्या गुणो ह्रस्वस्य चेत्युच्यते तदा पृथगुच्चारयितव्या भवति। एवमयं ब्रूयादिति। ह्रस्वं विधाय गुणे विधीयमाने प्रक्रियागौरवं भवतीति लाघवार्थं साक्षादेव गुणं विदध्यात्। नद्या अपीति। एकसमासनिर्देशाद्द्वयोरपि नदीह्रस्वयोरनुवृत्तिप्रसङ्गात्। ह्रस्वस्य चेति। ह्रस्वस्य चेत्यत्राम्बार्थनद्योरित्यनुवर्तते।

---

उ०—शब्दं आरोप्य बहुवचननिर्देश इत्यर्थः। पूर्वपदे बहव इति पाठे तु सति पूर्वपदे उत्तरपदभूतास्ते बहव इत्यर्थः। कथं मातृशब्दस्य पुत्रार्थाभिधानायोपादानमत आह—बहुव्रीहौ चेति। अर्हत इत्यस्योपयोगमाह—यः पुत्र इति। श्लाघ्यत्वादिति। एतदेवाह। प्रशंसायामिति प्रशंसायां विहितशब्दप्रयोगाल्लभ्यते। पुत्रार्थमर्हत इत्यत्र सापेक्षत्वेऽप्यत एव निपातनात्समासः। नान्यत्रेति। यत्र पितृसंबन्धिज्ञानेन मात्रा व्यपदेशस्तत्र न भवतीत्यर्थः।

ह्रस्वस्य०। ननु नद्यादौ ह्रस्वविधानाद्गुणो न भविष्यतीत्यत आह—ह्रस्वविधानमिति। पृथगिति। तथा च गौरवं स्यादित्यर्थः। एवं च तत्परिहारार्थमनुक्तमत इति सामर्थ्यसामर्थ्यादित्यर्थो गुणः स्यादेवेति भावः। नन्वेवं निर्देशस्य यथान्यासेन समासन्यासमपि भावेनैव सूत्रादिष्वपुनरुक्तत आह—ह्रस्वं विधायेति। साक्षादेवेति। तद्विधानाच्च

+ ७. ३. १०७.

## जसि च ॥ ७ । ३ । १०९ ॥

### जसादिषु च्छन्दसि वावचन प्राङ् णौ चङ्युपधायाः ॥ १ ॥

जसादिषु च्छन्दसि वेति वक्तव्यम् । किमविशेषेण ? नेत्याह । प्राङ् णौ चङ्युपधायाः÷ । किं प्रयोजनम् ?

### अम्बे दर्वि शतक्रत्वः पश्वे नृभ्यः किकिदीव्या ॥ २ ॥

अम्बे अम्ब । दर्वि दर्वे । शतक्रत्वः शतक्रतवः । पश्वे पशवे । किकिदीव्या किकिदीविना+ ।

## घेर्ङिति ॥ ७ । ३ । १११ ॥

### घेर्ङिति गुणविधाने ङीसार्वधातुके प्रतिषेधः ॥ १ ॥

घेर्ङिति गुणविधाने ङीसार्वधातुके प्रतिषेधो वक्तव्यः । पट्वी मृद्वी× । कुरुत इति* ।

---

प्र०–तेन नद्या ह्रस्वे कृते तस्य गुणबाधनाय ह्रस्व एव क्रियते । अथवेति । सिद्धे ह्रस्वे पुनरनुवृत्त्या तद्विधानं गुणबाधनार्थम् ।

जसि च । जसादिष्विति । आदिशब्दः प्रकारवाची । प्रकरणेऽस्मिन्येषु कार्यं विधीयते ते जसादय इति । पूर्वयोगनिर्दिष्टानामपि ग्रहणम् । दर्वीति । कृदिकारादक्तिन इति पक्षे ङीष्विधानात्सिध्यति रूपद्वयं ङीष्विकल्पं त्वनपेक्ष्यैतदुक्तम् । शतक्रत्व इति । जसि चेति गुणाभावपक्षे प्रथमयोरिति पूर्वसवर्णदीर्घोऽपि वा छन्दसीति वचनान्न भवतीति यणादेशः प्रवर्तते । किकिदीविशब्दः कृविघृष्वित्युणादिषु निपातितः ।

घेः० । कुरुत इति । शेषो घ्यसखीति यस्य नदीसंज्ञा नास्ति स घिसंज्ञ इति

---

उ०–गुणाभावोऽनुमीयत इत्यर्थः । तेन नद्या इति । अम्बार्थानां पुनर्ह्रस्वविधानप्रयोजनाभावान्नदीविषयमेतद्ध्रस्वविधानमित्यर्थः । मातृशब्द ऋतो ङीति गुणबाधोऽपि स्यादिति नदीग्रहणमात्रमनुवर्तत इति तत्त्वम् । पुनरनुवृत्त्येति । वाक्यभेदेनेत्यर्थः । अम्बार्थनद्योर्गुण इत्येव सिद्धे ह्रस्वविधानसामर्थ्यान्न गुण इति कश्चित्तन्न, इक्परिभाषोपस्थितावम्बेत्यादौ गुणानापत्तेः । तदनुपस्थितौ तु मातृवाचकानसूशब्देऽपि गुणापत्तेः । तस्य नपुंसकत्वेऽपि अपो इतिवत्पक्षे गुणापत्तिरिति बोध्यम् ।

जसि च । प्रकारः–सादृश्यम् । तच्चैकप्रकरणनिर्दिष्टत्वनिबन्धनम् । किकिदीविः–पक्षिविशेषः । अनपेक्ष्येति । तदा ह्येकमन्तोदात्तं स्यात् । आद्युदात्तमेव प्रयोगद्वयमिष्यत इति भाष्यकृदभिप्रायं मन्यते ।

घेर्ङिति । ननु कुरुशब्दस्यालिङ्गस्य कथं घिसंज्ञा । यू स्त्र्याख्यावित्यपेक्षया शेषविज्ञा-

---

÷ ७. ४. १. + ७. ३. १०७; १०८; १०९; १११; ११०. × ४. १. ४४. * १. २. ४.

## सुबधिकारात्सिद्धम् ॥ २ ॥

सुबिति वर्तते । क्व प्रकृतम् ? सुपि च बहुवचने झल्येत् [१०२; १०३] इति ।

## याडापः ॥ ७ । ३ । ११३ ॥

इह अतिखट्वाय अतिमालायेति ह्रस्वत्वे× कृते स्थानिवद्भावाद्याट् प्राप्नोति तस्य प्रतिषेधो वक्तव्यः । न वक्तव्यः ।

## याड्विधानेऽतिखट्वायेत्यप्रतिषेधो ह्रस्वादेशत्वात् ॥ १ ॥

याड्विधाने अतिखट्वाय अतिमालायेत्यप्रतिषेधः । अनर्थकः प्रतिषेधोऽप्रतिषेधः । याट् कस्मान्न भवति ? ह्रस्वादेशत्वात् । ह्रस्वादेशोऽयम् । उक्तमेतन्ङ्याब्ग्रहणेऽदीर्घ इति+ । अथेदानीमसत्यपि स्थानिवद्भावे दीर्घत्वे÷ कृत आप् चासौ भूतपूर्व इति कृत्वा याट् कस्मान्न भवति ? लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । ननु चेदानीं सत्यपि स्थानिवद्भाव एतया परिभाषया शक्यमुपस्थातुम् ? नेत्याह । न हि तदानीं क्वचिदपि स्थानिवद्भावः स्यात् ।

प्र०—कुरुशब्दो घिः ।

याडा० । अतिखट्वायेति । खट्वामतिक्रान्त इति प्रादिसमासे ह्रस्वे च कृते चतुर्थ्येकवचनस्य ङेर्य इति प्राप्नोति, याडाप इति च । तत्र परत्वाद्याट्प्राप्नोति तत्र कृते दीर्घत्वे चातिखट्वायै देवदत्तायेति प्रसङ्गः । ह्रस्वादेशत्वादिति । यतो ह्रस्वादेशः कृतस्ततो रूपभेदादाब्ग्रहणेन तस्य ग्रहणाभावात्स्थानिवत्त्वं नास्तीत्याह—उक्तमेतदिति । लक्षणेति । अकारस्य दीर्घे सत्याविति लाक्षणिकं रूपमिति न तस्य ग्रहणम् । ननु चेति । ङ्याब्ग्रहणेऽदीर्घ इति न वक्तव्यमिति चोद्यते । नेत्याहेति परिहारः ।

उ०—नात् । अत आह—शेषो घीति ।

याडापः । परत्वादिति । नित्यत्वेनोत्कृष्टत्वादित्यर्थः । लाक्षणिकं रूपमिति । यद्येव खट्वाया इत्यत्र सवर्णदीर्घे लाक्षणिकत्वमिति तत्रापि न स्यात्, आद्यन्तवत्त्वेन प्रवृत्तेः । किञ्च यत्र लक्षणप्रवृत्तिं विना तद्रूपासंभवस्तदेव लक्षणप्रतिपदोक्तपरिभाषानिषेधविषयः । यद्येवमत्र तथा । एकादेशतः प्रागपि तद्रूपसत्त्वादिति केचित् । अत एवाऽऽपारप्रश्लेषेण वार्तिकप्रत्याख्यानेऽपि न दोष इति बोध्यम् । यत्तु तत्पक्षेऽह्रस्वाऽऽपन्तविशेषणत्वेनाऽऽपन्तात्वाभावान्न दोषः । उपसर्जनदीर्घप्रत्यये तदादिनियमस्याप्यादिति । तन्न । अतिखट्वायेत्युदाहरणविषयवार्तिकस्य तात्पर्याख्यानाय प्रश्लेषस्य च वैयर्थ्यापत्तेः । स्थानिवत्त्वाभावेऽपि प्राप्त्यभावात् । किञ्चैवं खट्वाया अर्थेऽतिखट्वायामित्यादौ याडापत्तिरिति दिक् ।

× १. २. ४८. + १. १. ५१. ÷ ७. ३. १०२.

## ङेराम्नद्याम्नीभ्यः ॥ ७ । ३ । ११६ ॥

### इदुद्भ्यामाम्विधानमौत्त्वस्य परत्वात् ॥ १ ॥

इदुद्भ्यामाम्विधेयः—शकट्याम् पद्धत्याम् धेन्वामिति । किं पुनः कारणं न सिध्यति ? औत्त्वस्य परत्वात् । परत्वादौत्त्वं प्राप्नोति* ।

### योगविभागात्सिद्धम् ॥ २ ॥

योगविभागः करिष्यते । ङेराम्नद्याम्नीभ्यः । तत इदुद्भ्याम् । इदुद्भ्यामुत्तरस्य ङेराम्भवतीति । शकट्याम् पद्धत्याम् धेन्वामिति । तत औदच्च घेः ।

## औदच्च घेः ॥ ७ । ३ । ११८ ॥ ११६ ॥

### औत्त्वे योगविभागः ॥ १ ॥

औत्त्वे योगविभागः कर्तव्यः । औत् । औद्भवतीदुद्भ्याम् । ततोऽच्च घेरिति । अकारश्च भवति घेरिति । किमर्थो योगविभागः ?

### सखिपतिभ्यामौत्त्वार्थः ॥ २ ॥

सखिपतिभ्यामौत्त्वं यथा स्यात् सख्यौ पत्यौ÷ ।

### एकयोगे ह्यप्राप्तिरत्त्वसंनियोगात् ॥ ३ ॥

एकयोगे हि सत्यौत्त्वस्याप्राप्तिः । किं कारणम् ? अत्त्वसंनियोगात् । अत्त्व-

---

प्र०— ङे० । शकट्यामिति । शकटिशब्दस्य ङिति ह्रस्वश्चेति वा नदीसंज्ञा विधानात्तदभावपक्षे घिसंज्ञायां शकटाविति भवति । नदीसंज्ञापक्षे तु परत्वादौत्वं प्राप्नोति । आमोऽवकाशः—कुमार्यामिति । औत्त्वस्यावकाशः—सख्यौ पत्याविति । अत आह—इदुद्भ्यामिति । पूर्वविप्रतिषेध आश्रयणीय इत्यर्थः । ननु कृत औत्त्वे पुनःप्रसङ्गविज्ञानादाम् भविष्यति । पुनरौत्त्वं न भविष्यति । चक्रकेऽनिष्टतो व्यवस्थापनात् । नैतदस्ति । द्रव्यपदार्थपक्षे सकृद्गतपरिभाषयाऽऽम्न स्यात् । योगविभाग इति । इदुद्भ्यामित्यत्र योगे नदीग्रहणानुवृत्त्या सख्यौ पत्यावित्यत्राऽऽमोऽप्रसङ्गः ।

औदच्च० । औत्त्व इति । एकयोगे त्वत्त्वौत्त्वयोः संनियोगशिष्टत्वाद्यत्रात्त्वं तत्रौत्वं । सख्यौ पत्याविति । असखीति प्रतिषेधात्पतिः समास एवेति नियमाच्चानयोर्नास्ति घिसंज्ञा । अस्त्र्याख्यत्वाच्च नदीसंज्ञा नास्ति । यदा सखिशब्दः स्त्रियां वर्तते तदा सख्यशिश्वीति भाषायामिति ङीषा भाव्यम् । पतिशब्दस्य तु स्त्रीवृत्तेर्यज्ञसंयोगादन्यत्र

---

उ०— ङेराम्० । शकट्यामितीति । अत्र प्रयोगे शकटिशब्दस्येत्यर्थः । ननु योगविभागे सख्यावित्यादावप्याम् स्यादत आह—इदुद्भ्यामित्यत्रेति ।

औदच्च० । सखिपत्योः स्त्रियां वृत्तौ कथं भाव्यं तत्राऽऽह—यदा सखीति । एवं च तस्य सख्यामित्येवेति भावः । यज्ञसंयोगादन्यत्रेति । यज्ञसंयोगे हि पत्न्यामिति भवति । भाष्-

---

* ७. ३. ११७; ११९. ÷ १. ४. ७; ८.

संनियोगेनौत्त्वमुच्यते तेन यत्रैवात्त्वं तत्रैवौत्त्वं स्यात् ।

**न वाऽकारस्यानन्वाचयवचनाद्यथा क्यङि सलोपः ॥ ४ ॥**

न वाऽर्थ औत्त्वे योगविभागेन । किं कारणम् ? अकारस्यान्वाचयवचनात् । प्रधानशिष्टमौत्त्वमन्वाचयशिष्टमत्त्वं यथा क्यङि सलोपः । तद्यथा प्रधानशिष्टः क्यङ् प्रातिपदिकमात्राद्भवति, यत्र च सकारस्तत्र लोपः+ ।

**अत्त्वे टाप्प्रतिषेधः ॥ ५ ॥**

अत्त्वे टापः प्रतिषेधो वक्तव्यः । शकटौ पद्धतौ धेनौ । अत्त्वे कृते टाप्प्राप्नोति÷ ।

**न वा संनिपातलक्षणस्यानिमित्तत्वात् ॥ ६ ॥**

न वा वक्तव्यः । किं कारणम् ? संनिपातलक्षणस्यानिमित्तत्वात् । संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्येति टाप् न भविष्यति ।

**ङित्करणाद्वा ॥ ७ ॥**

---

प्र०—ङिति ह्रस्वश्चेति पक्षे नदीसंज्ञेति पत्यामिति भवति । न वेति । अन्वाचये चशब्दः । इदुद्भ्यां परस्य ङेरौद्भवति । यत्र तु घिसंज्ञाऽस्ति तत्र तस्यात्त्वमिति । अत्त्वानपेक्षमौत्त्वं प्रधानशिष्टम् । अत्त्व इति । टापि सत्यौङ आप इति शीभावः प्राप्नोति । यदा तत्र सामान्यग्रहणार्थो ङकारो वर्णनिर्देशो वा । यदा तु पूर्वाचार्यनिर्देशस्तदा प्रथमाद्वितीयाद्विवचनयोरेव शीविधानादस्याप्रसङ्गः । अन्ये टापि याट्प्रसङ्गमाहुः । न वेति । या सेत्यादौ टाब्भवति त्यदाद्यकारष्टाब्विधेरिति दोषेषु परिगणनात् । ङित्करणाद्वेति । अन्तोदात्तेषु स्वरभेदोऽपि नास्ति ङित्त्व उदात्तनिवृत्तिस्वरेण भाव्यम् । अङित्त्वे त्वेकादेश उदात्तेनोदात्त इति । ननु ङित्त्वे सख्यौ पत्याविति टिलोपप्रसङ्गः । नैतदस्ति । औङ्ङिच्च घेरिति न्यासः क्रियते । 'पत्यावैश्वर्ये' इति निपातनाद्वाऽघेष्टिलोपाभावः । विंशताविस्यत्र ति विंशतेर्डितीति तिलोपो भवति, नस्तद्धित इति योगविभागात् । तद्धित इत्यत्र ति विंशतेर्डितीति, न इति चानुवर्तते । टेरित्येतत्तु नानुवर्तते,

---

उ०—शास्त्रेषु स्वरभेदप्रसङ्ग एव न । अन्तोदात्तेष्वपि नेत्याह—ङित्त्व इति । तित्स्वरितमित्युक्तं स्वरितत्वं तु नात्र तितिप्रत्ययग्रहणात् । प्रत्ययाप्रत्यययोरित्येव सिद्धे पुनः प्रत्ययग्रहणेनौपदेशिकप्रत्ययस्यैव ग्रहणादिति भावः । अघेरिति । सामान्यापेक्षं ज्ञापकमिति भावः । वस्तुतः दर्शैवायुक्ता । इदुद्भ्यामुत्तरस्य ङेरौत् । घेः परस्य तु स ङिदित्यर्थात् । योगविभागादिति । तद्धित इति विभज्य तत्र तिविंशतेर्डिति न इति चानुवर्त्य वाक्यभेदेन व्याख्येयमिति भावः । टेरित्येतदिति । तस्य टेरिति लोप इति स्वातन्त्र्येणैवार्थो न तु तद्धित इत्येतदपेक्षयापरतयेति भावः । अत-

---

+ १. १. ११. ÷ ४. १. ४.

अथवा डिदौकारः करिष्यते×। औ डिच्च घेः।

**आङो नाऽस्त्रियाम्** ॥ ७ । ३ । १२० ॥

कमर्थमस्त्रियामित्युच्यते नाऽऽङो ना पुंसीत्येवोच्येत ? का रूपसिद्धिः— त्रपुणा जतुना। नुमा सिद्धम्+। नैवं शक्यम्। इह हि अमुना ब्राह्मणकुलेनेति मुभावस्यासिद्धत्वान्नुम्न स्यात्। अस्त्रियामिति पुनरुच्यमाने न दोषो भवति। कथम् ? वक्ष्यत्येतन्न मु टादेश इति*।

इति श्रीभवगत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम्। पादश्च समाप्तः॥

---

प्र०—अतद्धितानां डित्करणसामर्थ्यात्। यथैव ह्यभस्य लोपो भवत्येवमतद्धितेष्वपि।

आङो०। किमर्थमिति। आङो ना पुंसीत्युच्यमाने मात्रालाघवं भवतीष्टं च सिध्यतीति प्रश्नः। नुमेति। इकोऽचि विभक्ताविस्यनेन। अमुनेति। पुंसीत्युच्यमाने नपुंसके नाभावो न स्यान्नमर्पागलक्षणो मुत्वस्यासिद्धत्वान्नास्ति। न मु टादेश इति। टाया आदेशष्टायामादेश इत्यनेकविभक्त्यन्तसमासाश्रयेण नाभावे कर्तव्ये ने च परतो दीर्घे मुत्वस्य सिद्धत्वाद्घिलक्षणो नाभावो भव'त्यतो दीर्घो यञि' 'सुपि चे'ति दीर्घत्वं न भवतीति सर्वेष्टसिद्धिः।

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे सप्तमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम्। पादश्च तृतीयः समाप्तः।

---

उ०—द्धितानामिति पाठे यथाऽतद्धितानां डा इत्यादीनां डित्करणसामर्थ्यात्सिद्धान्तेऽभत्वेऽपि टिलोपस्तथाऽतद्धितत्वेऽपि भविष्यतीति तदनुवृत्तावपि न क्षतिरित्यर्थः। क्वचित्तु तद्धितानामिति पाठः। यथा ड्मतुपादितद्धितेऽभत्वेऽपि लोपस्तथौडादावतद्धितत्वेऽपि लोप इत्यर्थः। कश्चित्तु तत्सामर्थ्यादेवोभयवैकल्येऽपि डादौ लोप इति बोध्यम्।

आङो नाऽ०। ननु 'न मुने' इत्यस्य तन्त्रेण नाभावे नकारे च कृते कर्तव्ये च मुत्वं नासिद्धमित्यर्थान्नपुंसके नुमा सिद्धमित्यत आह—भाष्ये—वक्ष्यत्येतदिति। एवं च वार्तिकैकवाक्यतया सूत्रेऽपि नाभावे कृते कर्तव्य चेत्येवार्थं इति भावः। किंचैवमस्मै कुलाय अमू कुले इत्याद्यसिद्धिः। न मु न इति सूत्रविषये पूर्वं विभक्तिनिमित्तकार्याप्रवृत्तौ मुत्वे तस्य नकारविषये कमपि प्रत्यसिद्धत्वाभावेन विभक्त्यादेशं प्रत्यसिद्धत्वेऽपि वा परत्वेन नुमापत्तेरिति सर्वेष्टसिद्धिः।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते सप्तमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकं पादश्च समाप्तः।

---

× ६. ४. १४३. + ७. १. ७३. * ८. २. ३.

# अथ चतुर्थः पादः

## णौ चङ्युपधाया ह्रस्वः ॥ ७ । ४ । १ ॥

अथ णिग्रहणं किमर्थं न चङ्युपधाया ह्रस्व इत्येवोच्येत ? चङ्युपधाया ह्रस्व इतीयत्युच्यमाने—अलीलवत् अपीपवत्, ऊकारस्यैव ह्रस्वत्वं प्रसज्येत । नैतदस्ति प्रयोजनम् । वृद्धिरत्र बाधिका भविष्यति* । वृद्धौ तर्हि कृतायामौकारस्यैव ह्रस्वत्वं प्रसज्येत । नैतदस्ति—अन्तरङ्गत्वादत्रावादेशो भविष्यति+ । न हीदानीं ह्रस्वभाविन्युपधा भवति । तस्माण्णिग्रहणं कर्तव्यम् ।

प्र०- णौ चङ्युपधायाः० । अथ णिग्रहणमिति । ह्रस्वग्रहणादुपधाग्रहणाच्च चङ्परणिराश्रितो नह्यण्यन्तानां चङि ह्रस्वभागुपधाऽस्ति । ह्रस्वश्रुत्या ह्यच्परिभाषोपस्थानादच उपधाया ह्रस्वेन भाव्यम् । न श्रिद्रुस्रुधेट्श्वीनामजुपधा । कमिगुप्योस्तु ह्रस्व एवोपधा । तत्र णावन्तरङ्गत्वाद्वृद्ध्यादिषु कृतेषु चङ्युपधा ह्रस्वभाङ् नास्तीति सामर्थ्याच्चङि यः प्रत्ययस्तस्मिन्नुपधाया ह्रस्वो विज्ञास्यत इति प्रश्नः । इतरो यथाश्रुतसंभवाच्चङि यः प्रत्यय इत्यध्याहारो न युक्त इति वचनादन्तरङ्गमपि वृद्ध्यादि ह्रस्वो बाधेतेति मत्वाऽऽह—चङ्युपधाया इति । इतरस्तु चङि यः प्रत्ययस्तस्मिन्नुपधाया ह्रस्व इत्यध्याहारेण सूत्रार्थसंभवादयुक्ताऽन्तरङ्गबाधेति मत्वाह—वृद्धिरत्रेति । इतरो ह्रस्वस्यानवकाशतां मत्वाऽऽह—औकारस्येति । नन्वेवं वृद्धिरनर्थिका स्यात् । एतदेव तर्ह्युच्यते वृद्ध्याऽत्र न भाव्यमभ्युपगम्य तु वृद्धिरुच्यते । वृद्धौ तर्हि कृतायामिति । अपवादत्वाद्धि ह्रस्वो वृद्धेर्बाधक आवादेशस्य चेति भावः । इतरो वाक्याध्याहारेण ह्रस्वस्य सावकाशतां मत्वाऽऽह—नैतदस्तीति । इतरो यथाश्रुतसंबन्धसंभवादनवकाशतामेव मत्वाऽऽह—न हीदानीमिति । ननु वृद्धिं बाधित्वा भवतूकारस्य ह्रस्वस्तस्मिंस्तु कृते बाधितत्वान्मा

उ०- णौ चङि० । ह्रस्वग्रहणादिति । ह्रस्वविधानादित्यर्थः । विधेयसमर्पकह्रस्वग्रहणेन तल्लिङ्गकपरिभाषोपस्थानादिति यावत् । वृद्ध्यादिष्विति । आदिनाऽयादि, अदीदपदित्यादौ पुक् च । चङि यः प्रत्यय इति । स च णिरेवेति णिग्रहणमनर्थकमित्यर्थः । यथाश्रुतेति । अनुपसंजातविरोधत्वादिति भावः । अयमेव सिद्धान्ताशयः । भाष्ये—ऊकारस्यैवेति । न त्वचीकरदित्यादाविति भावः । नन्वेवमिति । यद्यौकारस्य ह्रस्व उकारस्तर्हि प्रतिपत्तिगौरवपरिहारायोकारस्य ह्रस्वोऽस्त्वित्याशयः । अत्र वदन्ति—वृद्धिशास्त्रमर्थवदेवान्यत्र । अत्र प्रवृत्तिरपि चरितार्थत्वेनेति चिन्त्यमिदम् । वृद्ध्याऽत्र न भाव्यमिति । आवादेशस्य चेति । वृद्धिबाधकत्वमिति भावः । अपवादत्वाद्धीति । क्रमेण संस्कारे वृद्धिमाश्रित्यापि ह्रस्वप्राप्त्या चिन्त्यमिदम् । पदसंस्कारं तु पक्षं नाश्रयं परन्तु भाष्यस्य पदसंस्काराभिप्रायेण प्रवृत्तिर्दृश्यते ।

* ७. २. ११५. + ६. १. ७८.

अथ चङ्ग्रहणं किमर्थं न णावुपधाया इत्येव सिद्धम् ? णावुपधाया ह्रस्व इतीयत्युच्यमाने कारयति हारयतीत्यत्रापि प्रसज्येत । नैतदस्ति प्रयोजनम् । आचार्यप्रवृत्तिर्ज्ञापयति न णावेव ह्रस्वत्वं भवतीति यदयं मितां ह्रस्वत्वं शास्ति*। इहापि तर्हि न प्राप्नोति—अचीकरत्, अजीहरत् । वचनाद्भविष्यति । इहापि तर्हि वचनात्प्राप्नोति—कारयति, हारयति । तस्माच्चङ्ग्रहणं कर्तव्यम् ।

अथोपधाग्रहणं किमर्थम् ?

---

प्र०—भूद्वृद्धिः । गुणस्तु केन वार्यते । ततो गुणेऽवादेशे च सिद्धमलीलवदिति । नैतदस्ति गुणस्य वृद्ध्या बाधितत्वात् । वृद्धेश्च ह्रस्वेन । भ्रष्टावसरस्य गुणस्य कुतः पुनः प्रवृत्तिरित्युवङ् प्रसज्येत । अदीदपदित्यत्र च ह्रस्वेन पुग्बाध्येत । अपीपवदित्यादौ च नैव ह्रस्वः स्यादिति णिग्रहणं क्रियते । यदा तु चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधस्तदा वृद्ध्यावादेशयोः कृतयोः पुकि च णिलोपस्य स्थानिवत्त्वाभावाच्चङ्युपधा ह्रस्वभाविनी संभवतीति णिग्रहणं न कर्तव्यम् । सूत्रकारेण चङ्परनिर्ह्रासे स्थानिवत्त्वनिषेधो न कृत इति णिग्रहणं कृतम् । अथेति । मितां ह्रस्वविधानादनेन सर्वत्र णौ ह्रस्वो न भविष्यति । प्रयोगदर्शनाच्चेष्टाव्यवस्थाऽऽश्रयितव्येति मत्वा प्रश्नः । इतरो वचनमन्तरेणेष्टानिष्टविभागो दुर्ज्ञान इति मत्वाऽऽह—णावुपधाया इति । अथोपधाग्रहणमिति । न्यायान्नाग्लोपिशास्वृदितामिति निषेधाच्च लिङ्गादुपधाया एव ह्रस्वो भविष्यतीति प्रश्नः ।

---

उ०—ह्रस्वभाव्युपधाया अलीलवदित्यादावप्यभावाच्छास्त्रं व्यर्थमेव स्यादिति णिग्रहणं कार्यमिति भाष्याशयः । पदसंस्कारेऽपि तत्तद्धातुं सिद्धं कृत्वा तत्प्रकृतिकपदसंस्कार इति धातुसंज्ञासमकालमेव वृद्धिरिति तद्बाधो ह्रस्वेनाशक्यः । एतेनादीदपदित्याद्यपि चिन्त्यम् । भ्रष्टावसरन्यायश्चात्र शास्त्रे नास्तीत्यसकृदावेदितम् । भ्रष्टावसरस्येति । अत्र शास्त्रे भ्रष्टावसरन्यायाङ्गीकारे फलाभावात् । गुणाङ्गीकारेऽप्यपीपचदित्यादेरसिद्धिरिति भाष्याशयो बोध्यः । न त्वलीलवदित्यसिद्धौ तात्पर्यम् । स्वयं दोषान्तरमप्याह—अदीदपदिति । अनवकाशत्वेनान्तरङ्गबाधकताया एवास्य क्लृप्तत्वादित्यर्थः । किंचानन्तरस्येति न्यायात्पुक एव बाधः स्यान्नतु वृद्ध्यादेरित्यलीलवदित्यादेरप्यसिद्धिर्बोध्या । यदा त्विति । यदर्थं तद्वार्तिकं तस्यात्रैव सूत्रे णेर्णिच्युपसंख्यानमित्यनेन साधयिष्यमाणत्वात्तदनावश्यकमिति णिग्रहणम् । एतदुत्तरसूत्रे कैयट एव स्पष्टम् । णिग्रहणं कृतमिति । यदि तु नाग्लोपीत्येतत्सामर्थ्यादत्र निर्दिष्टपरिभाषाया बाध इत्युच्यते तदा सूत्रमतेऽपि स्पष्टार्थमेव णिग्रहणमिति दिक् । ननु चङ्ग्रहणाभावे कारयतीत्यत्रापि स्यादत आह—मितामिति । वचनमन्तरेणेति । मन्दबुद्धीनामित्यर्थः । ननूपधाग्रहणाभावेऽचकाङ्क्षदित्यादावतिप्रसङ्गोऽत आह—न्यायादिति । येन

---

* ६. ४. ९२.

## णौ चङ्युपधाग्रहणमन्त्यप्रतिषेधार्थम् ॥ १ ॥

णौ चङ्युपधाग्रहणं क्रियतेऽन्त्यस्य ह्रस्वत्वं मा भूत् । 'णौ चङि ह्रस्व' इतीयत्युच्यमाने अलीलवत् अपीपवत् अन्त्यस्यैव ह्रस्वत्वं प्रसज्येत । नैतदस्ति प्रयोजननम् । अन्तरङ्गत्वादत्रावादेशो भविष्यति । न हीदानीं ह्रस्वभाव्यन्त्योऽस्ति, अन्त्यो ह्रस्वभावी नास्तीति कृत्वा वचनादनन्त्यस्य भविष्यति । इहापि तर्हि वचनात्प्राप्नोति—अचकाङ्क्षत्, अववाञ्छत् । येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात् । केन च नाव्यवधानम् ? वर्णेन । एतेन पुनः संघातेन व्यवधानं भवति, न भवति च । उत्तरार्थं तर्ह्युपधाग्रहणं कर्तव्यम् । लोपः

---

प्र०—चङ्युपधाग्रहणमिति । असत्युपधाग्रहणेऽच्परिभाषोपस्थानादचाऽङ्गस्य विशेषणादजन्तस्याङ्गस्य ह्रस्वो विधीयमानोऽलोऽन्त्यस्येत्यन्त्यस्य स्यात् । लू इ अत इति स्थित ऊकारस्य ह्रस्वत्वप्रसङ्गः । वृद्धिरत्र बाधिका भविष्यतीति पूर्ववत्सर्वमत्रानुषञ्जनीयम् । न्यायव्युत्पत्तये त्वन्यदभिधातुमाह—नैतदस्तीति । इतरो ह्रस्वं निरवकाशत्वादन्तरङ्गाणां बाधकं मत्वाऽऽह—न तर्हीदानीमिति । इतरो विशेषणविशेष्यभावे कामचारादङ्गेनाज्विशेष्यते—अङ्गस्य यत्र तत्र स्थितस्याचो ह्रस्वो भवतीत्येवं विध्यन्तराण्यपि न बाधितानि भवन्ति ह्रस्वश्च सावकाशो भवतीति मत्वाऽऽह—अन्त्यो ह्रस्वभावीति । अङ्गस्येति चावयवषष्ठीविज्ञानादलोऽन्त्यस्येत्यस्योपस्थानाभावः । येन नाव्यवधानमिति । तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानाद्येन शब्देनावश्यं व्यवधानं तेन व्यवहितेऽपि कार्यं विज्ञायमानमन्यव्यवधाने न प्रवर्तते । ण्यङ्गाभ्यां ह्यज्विशेष्यते णौ परतोऽङ्गस्य योऽजिति सामर्थ्यादेकवर्णव्यवधानमवश्यंभावित्वादाश्रीयते । एकस्मिंस्तु विषयेऽन्त्यसदेशानन्त्यसदेशयोर्ह्रस्वभाविनोरसंभवादनन्त्यविकारेऽन्त्यसदेशस्यैव ग्रहण-

---

उ०—नाव्यवधानमिति न्यायादित्यर्थः । निषेधेन ज्ञापकेनान्त्याचोऽपकर्षः । न्यायाच्च व्यवहितस्याप्रवृत्तिरिति बोध्यम् । असतीति । एवं चालीलवदित्यत्रैव स्यात् । अपीपवदित्यादौ तु न स्यादिति भावः । पूर्ववदिति । अनवकाशत्वाद्वृद्ध्यादेर्बाधकं ह्रस्वत्वं स्यादिति भावः । एतत्पूर्ववदेवायुक्तमित्यन्ये । नन्वेवं तदनुपन्यासेनैव सिद्धे नैतदस्तीति भाष्यं व्यर्थमत आह—न्यायेति । येन नाव्यवधानमित्यादेर्न्यायस्य व्युत्पत्तये—व्युत्पादनाय । अन्यत्—इहापि वचनादित्यादि वक्तुमुक्तमप्यादेरित्यर्थः । भाष्ये—अन्तरङ्गत्वादत्रावादेशो भविष्यतीति । वृद्ध्यावादेशौ भविष्यत इत्यर्थः । अलोऽन्त्यपरिभाषायां सत्यां कथमनन्त्यस्य स्यादत आह—इतर इति । अवयवषष्ठीति । स्थाने विज्ञातस्य हि सोऽनुसंहार इत्यर्थः । ननु णाविप्यनेनाङ्गविशेषणादेव न्यायोऽत्र नावतरतीत्याशयेनाऽऽह—ण्यङ्गाभ्यां हीति । उपधाग्रहणाकरणलाघवानुरोधेन णिपरस्याङ्गसंबन्धिनोऽच इत्यर्थः फलिष्यत इत्यभिमानः ।

पिबतेरी चाभ्यासस्य [ ४ ] उपधाया यथा स्यात् । अपीप्यत्, अपीप्यताम्, अपीप्यन् ।

अथेह कथं भवितव्यम्—मा भवानटिटदिति, आहोस्विन्मा भवानाटिटदिति । मा भवानाटिटदिति भवितव्यम् । ह्रस्वत्वं कस्मान्न भवति ? द्विर्वचने+ कृते परेण रूपेण व्यवहितमिति कृत्वा । इदमिह संप्रधार्यम्—द्विर्वचनं क्रियतां ह्रस्वत्वमिति, किमत्र कर्तव्यम् ? परत्वाद्ध्रस्वत्वम् । नित्यं द्विर्वचनम् । कृते ह्रस्वत्वे प्राप्नोत्यकृतेऽपि । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—द्विर्वचनाद्ध्रस्वत्वं बलीय इति यदयमोणिमृदितं करोति । कथं कृत्वा ज्ञापकम् ? ऋदित्करण एतत्प्रयोजनमृदितां नेति× प्रतिषेधो यथा स्यात् । यदि चात्र पूर्वं द्विर्वचनं स्यादृदित्करणमनर्थकं स्यात् । द्विर्वचने कृते परेण व्यवहितत्वाद्ध्रस्वत्वं न भविष्यति । पश्यति त्वाचार्यो द्विर्वचनाद्ध्रस्वत्वं बलीय इति तत ओणिमृदितं करोति । तस्मान्मा भवानटिटदित्येव भवितव्यम् ।

## उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानम् ॥ २ ॥

प्र०—मिति परिहारो नोक्तः । अपीप्यदिति । अलोऽन्त्यस्येति युको लोपप्रसङ्गादुत्तरार्थमुपधाग्रहणम् । ननु ह्रस्वापवादो लोपो विज्ञायमान उत्सर्गदेशत्वादपवादानामुपधाया एव भविष्यति । नैतदस्ति । ह्रस्वश्रुत्याऽच्परिभाषोपस्थानादङ्गेन चाचो विशेषणाद्युक्तं यदुपधाया ह्रस्वः स्यात् । लोपविधौ तु पिबतेरिति स्थाने षष्ठ्या अन्त्येऽल्युपसंहारादन्त्यस्यैव लोपः स्यात् । भिन्नदेशावप्युत्सर्गापवादौ दृश्येते यथा शप्श्नमौ । काकचौ । सत्यपि संभवे बाधनं भवतीति न्यायाद्भिन्नदेशोऽप्यपवाद उत्सर्गं बाधते । यदि तर्ह्युत्तरार्थमुपधाग्रहणं तत्रैव वक्तव्यमाल्लोपः पिबतेरीच्चाभ्यासस्येति । नैतदस्त्यन्तरङ्गमपि युकमनवकाशत्वादाल्लोपो बाधेत । उपधाग्रहणे त्वन्तरङ्गत्वाद्युकि कृत आकारस्योपधाया लोप इति न कश्चिद्दोषः । अथेहेति । न्यायप्रयोगविरोधात्प्रश्नः । स एव प्रष्टा न्यायाश्रयेणाऽऽह—मा भवानाटिटदित्येवमिति । इतरो वक्ष्यमाणलिङ्गावष्टम्भेन पृच्छति—ह्रस्वत्वं कस्मान्न भवतीति । एवं तर्हीति । ज्ञापकात्पूर्वं ह्रस्वः पश्चाद्द्विर्वचनमिति

उ०—प्रत्ययस्याङ्गांश उत्थिताकाङ्क्षत्वादियमेकदेशयुक्तिः । नोक्त इति । तस्या प्रत्याख्यातत्वाच्चेत्यपि बोध्यम् । लोपविधौ त्विति । तत्राच्परिभाषोपस्थित्यभावादित्यर्थः । स्थाने षष्ठ्या इति । तस्या एव युक्तत्वादिति भावः । भिन्नदेशाविति । स्थानषष्ठ्यलोऽन्त्यपरिभाषाऽबाधायेति भावः । ननु भिन्नदेशत्वे बाध्यबाधकभावो न स्यादत आह—सत्यपीति । उदाहरणान्तरेभ्यो विशेषमाह—न्यायेति । अटिटदिति प्रयोगे दृश्यते, न्यायेन स्याटिटदिति प्राप्नोतीति विरोध इत्यर्थः । ननु कृतायां वृद्धौ णिरूपत्वाभावाल्लोपो न स्यादत आह—

---

+ ६. १. ११. × ७ ४. २.

उपधाह्रस्वत्वे णेर्णिच्युपसंख्यानं कर्तव्यम् । वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन । किं पुनः कारणं न सिध्यति ? णिचा व्यवहितत्वात् । णिलोपे कृते+ नास्ति व्यवधानम् । स्थानिवद्भावाद्व्यवधानमेव । प्रतिषिध्यतेऽत्र स्थानिवद्भावश्चङ्परनिर्ह्रासे न स्थानिवदिति× । एवमप्यग्लोपिनां नेति÷ प्रतिषेधः प्राप्नोति । वृद्धौ* कृतायां लोपस्तत्राग्लोप्यङ्गं भवति । इदमिह संप्रधार्यम्—वृद्धिः क्रियतां लोप इति, किमत्र कर्तव्यम् ? परत्वाद्वृद्धिः । नित्यो लोपः । कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि । अनित्यो लोपः । अन्यस्य कृतायां वृद्धौ प्राप्नोत्यन्यस्याकृतायां शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति । उभयोरनित्ययोः परत्वाद्वृद्धिः । वृद्धौ कृतायां लोपस्तत्राग्लोप्यङ्गं भवति । एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति वृद्धेर्लोपो बलीयानिति यदयमग्लोपिनां नेति प्रतिषेधं शास्ति । नैतदस्ति ज्ञापकम् । अस्त्यन्यदेतस्य वचने प्रयोजनम् । किम् ? यत्र वृद्धावपि कृतायामगेव लुप्यते—अत्यरराजत्† । यत्तर्हि प्रत्याहारग्रहणं करोति । इतरथा ह्यलोपिनां नेति ब्रूयात् । एवं

प्र०—क्रमः । कृतायामपीति । स्थानिवद्भावात् । एवं तर्हीति । सर्वत्राको वृद्धौ कृतायामैकारौकारयोर्लोपो न त्वकः । अत्यरराजदिति । राजानमतिक्रान्तवानिति प्रातिपदिकाद्धात्वर्थ इति णिचि कृतेऽत उपधाया इति वृद्धौ कृतायामगेव लुप्यते । यत्तर्हीति । प्रत्याहारग्रहणाल्लिङ्गात्पूर्वविप्रतिषेधेन लोपो भवति । ननु प्रत्याहारग्रहणे स्वामिनमाख्यदसस्वामन्, गोमिनमाख्यदजुगोमत् इत्यादौ वृद्धिप्रसङ्गाभावाल्लोपे ह्रस्वनिषेधार्थं स्यादिति कथं ज्ञापकमिति चिन्त्यमेतत् । अत्राऽऽहुः । अनभिधानाण्णिजत्र नास्तीति भाष्यकारस्याभिप्रायः । एवं तु ज्ञापकेन लोपस्य बलीयस्त्वे यदुक्तं हलिकल्योरदन्तत्वनिपातनं सन्वद्भावप्रतिषेधार्थमिति तद्विरुध्यते । असत्यप्यत्वनिपातने वृद्धिं बाधित्वेकारस्य लोपे सति सन्वद्भावस्याप्रसङ्गात्तदनाश्रित्य ज्ञापकत्वमत्वनिपातनमुक्तम् । ज्ञापकाश्रयणं तु ज्यायः । पटुमाख्यदपपटदित्यादावकृतायां वृद्धौ लोपे सति सन्वद्भावस्य प्रसङ्गाभावार्थम् ।

उ०—स्थानिवद्भावादिति । पूर्वविप्रतिषेधेनेति । लोपसामान्यं वृद्धेः पूर्वविप्रतिषेधेनेत्यनेन ज्ञाप्यते । अत एव ग्लोपुंसाभ्यां णस्येत्यिति सूत्रस्थं भाष्यं संगच्छते । णिजत्र नास्तीति । लुङ्पर्यायस्यानभिधानमित्यन्ये । विरोधं परिहरति—अनाश्रित्येति । ज्याय इति । वस्तुतस्तु पूर्वभाष्यसंमतपक्षभेदेन विकल्प एव तात्पर्यम् । तत्र लघ्वानुरोधारम्भपरत्वेति तत्त्वम् । भाष्येऽपादिना न पूर्वोक्तस्य त्यागः किंतु प्रकृतविषये समाधानान्तरमित्येव । पूर्वोक्तार्थस्यवदस्या-

+ ६.४.५१. × १.१.५८. ÷ ७.४.२. * ७.२.११५. † ७.२.११६.

वा वृद्धेर्लोपो बलीयानिति । अथवाऽऽरभ्यते पूर्वविप्रतिषेधो णयल्लोपावियङ्यण्गुणवृद्धिदीर्घत्वेभ्यः पूर्वविप्रतिषिद्धमिति+ । तस्मादुपसंख्यानं कर्तव्यमिति ।

**नाग्लोपिशास्वृदिताम्** ॥ ७ । ४ । २ ॥

**अग्लोपिप्रतिषेधानर्थक्यं च स्थानिवद्भावात्** ॥ १ ॥

अग्लोपिप्रतिषेधश्चानर्थकः । किं कारणम् ? स्थानिवद्भावात् । स्थानिवद्भावादत्र ह्रस्वत्वं न भविष्यति । यत्र तर्हि स्थानिवद्भावो नास्ति तदर्थमयं योगो वक्तव्यः । क्व स्थानिवद्भावो नास्ति ? यो हलचोरादेशः—अत्यरराजत्* । किं पुनः कारणं हलचोरादेशो न स्थानिवदित्युच्यते ? अजादेशः स्थानिवदित्यु-

---

प्र०–अथवेति । हलिकल्योरत्वनिपातनमेव ज्ञापकं लोपात्पूर्वं वृद्धिर्भवतीति । णिलोपस्तु वाचनिकेन पूर्वविप्रतिषेधेन वृद्धेः पूर्वं भवति । एवं पटुमाख्यदपपटदिति सन्वद्भावप्रसङ्गात्प्रत्याहारग्रहणमेव ज्ञापकमाश्रयणीयम् । तेन वृद्धेः प्राग्लोपो विधेयः ।

नाग्लोपि० । अग्लोपीति । मालामाख्यदममालदित्यादौ टिलोपस्य स्थानिवत्त्वादनुपधात्वात्प्राप्तिरेव ह्रस्वस्य नास्तीति प्रतिषेधोऽनर्थकः । ननु प्रतिषिध्यते तत्र स्थानिवत्त्वं किलुगुपधात्वचङ्परनिर्ह्रासकुत्वेष्विति । नैतदस्ति । यदर्थः स प्रतिषेधस्तस्य णेणिच्युपसंख्यानमित्यनेन साधितत्वान्न वक्तव्यः । हलचोरादेश इति । यथा सुधातुरकङ् चेत्यादेशे समुदायेऽवयवस्यानादेशत्वादणो रपरत्वं न भवति—सौधातकिरिति, तथा समुदाये स्थानिन्यवयवस्यास्थानित्वादजादेशत्वाभावान्नास्ति स्थानिवद्भावः । किं पुनरिति । अवयवात्मकत्वात्समुदायस्य तस्मिन्स्थानिन्यवयवानामपि स्थानित्वादजादेशत्वान्न्याय्य एव स्थानिवद्भावः । तथा खट्वर्श्य इति ऋस्थानिकत्वाश्रयमणो रपरत्वं भवतीति भावः । इतरः पूर्वोक्तेनैवाभिप्रायेणाऽऽह—अजादेश इति । इतरस्त्वनुमीयमानोऽवश्या-

---

उ०–श्रयणीय इत्याह—एवमिति । भाष्ये—तस्मादुपसंख्यानमिति । यत्तु ण्याकृतिनिर्देशात्वेति, तन्न, जातेः पौर्वापर्याभावेन चङ्पर इति विशेषणेनात्र व्यक्तिपक्षस्यैवाऽऽश्रयणात् । किंच तदाश्रयणे विषयसप्तम्या एव आर्धधातुक इति सूत्र आकर उक्ततया वृद्ध्यादीनामन्तरङ्गत्वं प्रागुक्तम्, ओणेर्ऋदित्करणस्य ज्ञापकत्वं च भज्येतेत्याहुः ।

नाग्लोपिशा० । अनुपधात्वादिति । ह्रस्वभाविन उपधात्वाभावादित्यर्थः । यदर्थ इति । ण्यन्तप्रकृतिकण्यन्तार्थः । फलान्तरं तु नास्त्येव, तस्य तथाप्रयोगानभिधानात् । एतदेव ध्वनयितुमत्रेदमुपसंख्यानम् । तद्वा कर्तव्यमिदमेवेति तात्पर्यकम् । अवयवस्यानादेशत्वादिति । समुदाये गुणभूतत्वादिति भावः । भाष्ये—'किं पुनरित्यादि-स्थानिवदिति' इत्यन्ता शङ्का । उच्यत इत्याद्युत्तरम् । अवयवानामपि स्थानित्वादिति । गुणानामपि प्रधानकार्याविरोधेन कार्यप्रवृत्त्यङ्गीकारादिति भावः । अत्र दृष्टान्तमाह—

---

+ ६. ४. ४८. * ६. ४. १५५.

च्यते× न चायमच एवाऽऽदेशः। किं तर्हि? अचश्चान्यस्य च। अग्लोपिनां नेत्यपि तर्हि प्रतिषेधो न प्राप्नोति। किं कारणम्? अग्लोपिनां नेत्युच्यते न चात्रागेव लुप्यते। किं तर्हि? अक् चान्यश्च। योऽत्राग्लुप्यते तदाश्रयः प्रतिषेधो भविष्यति। यथैव तर्हि योऽत्राग्लुप्यते तदाश्रयः प्रतिषेधो भवत्येवं योऽत्राग्लुप्यते तदाश्रयः स्थानिवद्भावो भविष्यति। एवं तर्हि सिद्धे सति यदग्लोपिनां नेति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्य इत उत्तरं स्थानिवद्भावो न भवतीति। किमेतस्य ज्ञापने प्रयोजनम्? पूर्वत्रासिद्धे न स्थानिवदित्युक्तं+ तन्न वक्तव्यं भवति। यद्येतज्ज्ञाप्यते आदीधयतेरादीधकः, आवेवयतेरावेवकः—यीवर्णयोर्दीधीवेव्योः [ ७. ४. ५३ ] इति लोपो न प्राप्नोति। इह च यत्प्रलुनीह्यत्र तिङि चोदात्तवति [ ८. १. ७१ ] इत्येष स्वरो न प्राप्नोति।

प्र०-अयिलव्यः स्थान्यादेशभाव इति मत्वाऽऽह—अग्लोपिनामिति। इत उत्तरमिति। पञ्चपाद्यामित्यर्थः। पूर्वत्रासिद्ध इति। तस्य दोष संयोगादिलोपलत्वणत्वेष्विति वक्तव्यमेव। यद्वा ज्ञापकज्ञापिता विधयोऽनित्या इति संयोगादिलोपलत्वणत्वेषु स्थानिवद्भावो भवत्येव। अचः परस्मिन्नित्यत्र विचारितं हलचोरादेशः स्थानिवदिति चेद्विंशतेस्तिलोप एकादेश इत्यादि तत्र निर्णीतं हलचोरादेशो न स्थानिवदिति। इह तु प्रतिषेधवचनमर्थान्तरज्ञापनायोक्तमिति ग्रन्थविरोधस्तस्मान्न्यायाश्रयेण हलचोरादेशो न स्थानिवदित्ययं पक्षो ग्राह्यः। इह त्वभ्युपेत्य स्थानिवत्त्वं ज्ञापकत्वमाश्रितम्। शिष्यबुद्धिव्युत्पादनायास्थितोऽपि पक्षः कश्चिदुपन्यस्यत इत्येवं विरोधः परिहार्यः। अग्लोपग्रहणसामर्थ्याच्च समुदायलोपोऽप्यग्लोप आश्रीयते। केवलाग्लोपे प्रतिषेधस्याऽऽनर्थक्यात्। खट्वर्श्य इत्यत्र त्वेकः पूर्वपरयोरित्यवयवावेव शब्देन चोदिताविति रपरत्वं प्रवर्तते। तदुक्तम्—यो ह्युभयोः षष्ठीनिर्दिष्टयोः स्थाने भवति लभतेऽसावन्यतरतोव्यपदेशमिति। आदीधक इति। दीधी णिच्। दीधीवेवीटामिति गुणवृद्धिप्रतिषेधस्ततो ण्वुलि णिलोपे कृते तस्य स्थानिव-

उ०-तथा चेति। अनुमीयमान इति। समुदायद्वाराऽवयवानामित्यर्थः। नन्वित उत्तरं स्थानिवत्त्वाभावज्ञापनेऽपि ह्रस्वे कथं स्थानिवत्त्वाभावोऽत आह—पञ्चपाद्यामित्यर्थ इति। अर्थान्तरज्ञापनायेति। तद्भिन्नार्थान्तरेत्यर्थः। इह त्वभ्युपेत्येति। एवं चेद् भाष्यं प्रौढ्येति भावः। अस्थितपक्षाश्रयणे फलमाह—शिष्यबुद्धीति। अग्लोपिनां नेत्यपि तर्हि प्राप्नोतीत्यारभ्य एकदेश्युक्तिरिदं भाष्यमिति तत्त्वम्। प्रकृतेऽनग्लोपेऽप्यग्लोपित्वाश्रयणे बीजमाह—अग्लोपिग्रहणसामर्थ्यादिति। आनर्थक्यादिति। मालामाचष्टमालयदित्यादेरनभिधानमिति भावः। णेणिटि त्विऽयत एव ह्रस्व इति बोध्यम्। खट्वर्श्य इत्यादौ रपरत्वोपपत्तिमाह—खट्वर्श्य इत्यत्र त्विति। स्थानिवद्भावाभावादिति। इत उत्तरम्

× १. १. ५७. + १. १. ५८.

नैष दोषः । यत्तावदुच्यते—आदीधयतेरादीधकः, आवेवयतेरावेवकः—यीवर्ण-योरिति लोपो न प्राप्नोतीति । यीवर्णयोरित्यत्र वर्णग्रहणसामर्थ्याद्भविष्यति । यदप्युच्यते यत्प्रलुनीह्यत्र तिङि चोदात्तवतीत्येष स्वरो न प्राप्नोतीति । बहिरङ्गो यणादेशोऽन्तरङ्गः स्वरोऽसिद्धं बहिरङ्गमन्तरङ्गे ।

**भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम् ॥ ७ । ४ । ३ ॥**

काण्यादीनां चेति† वक्तव्यम् । के पुनः काण्यादयः ? काणिराणिश्राणि-

---

प्र०—द्रावाभावाद्यीवर्णयोरिति लोपो न प्राप्नोति । यद्यप्यन्तरङ्गत्वाल्लोपः सिध्यति तथाऽपि वर्णग्रहणस्यानन्यार्थस्य प्रयोजनाख्यानायोपक्षेपः । यत्प्रलुनीह्यत्रेति । तिङ्ङतिङ इति निघातो निपातैर्यद्यदीति निषिद्धः । हेरपित्त्वादाद्युदात्तत्वान्न विकरणस्वरो लसार्वधातुक-स्वरं बाधत इति श्नास्वराभावस्तत्र यणादेशे कृत उदात्तत्वाभावात्स्थानिवत्त्वाभावाच्च निघातो न प्राप्नोति । वर्णग्रहणसामर्थ्यादिति । वर्णग्रहणाद् भूतपूर्वगतिराश्रीयते । अन्तरङ्गत्वात्तु लोपे सिद्धे वर्णग्रहणं शक्यमकर्तुम् । तत्तु केचिज्ज्ञापकं वर्णयन्त्युत्तरत्र स्थानिवत्त्वाभावस्य । अग्लोपिग्रहणं तु सति प्रयोजने न ज्ञापकमस्यार्थस्य । अन्तरङ्गः स्वर इति । यद्यप्युभयं पदद्वयाश्रयं तथाऽपि पूर्वमुपसर्गेण संबन्धः पश्चादधिकरण-वाचिनाऽत्रशब्देनेति यणादेशो बहिरङ्गः ।

भ्राज० । काण्यादीनां चेति । आदिशब्दः प्रकारे । येषां ह्रस्वविकल्पो दृश्यते ते काण्यादयः । काणिराणिश्राणिहेठिलोपिप्रभृतयः ।

---

उ०—स्थानिवत्त्वाभावज्ञापनादित्यर्थः । तथाऽपीति । एतदतिरिक्तप्रयोजनाभावबोधनायेति भावः । ननु हेः पित्त्वादनुदात्तत्वमत आह—हेरिति । ननु सति शिष्टत्वात्सार्वधातुकस्वरं बाधित्वा विकरणस्वरः स्यादिति कथं हेरुदात्तत्वमत आह—न विकरणेति । 'सति शिष्टस्वर-बलीयस्त्वमन्यत्र विकरणेभ्यः' इत्युक्तेरिति भावः । भाष्ये वर्णग्रहणसामर्थ्यादिति । अयं भावः । यीवर्णयोरित्यत्र परसमाहारद्वंद्वगर्भेतरेतरयोगः । यकारे इकारे वर्णे च परत इत्यर्थः । तत्र संनिहितत्वाद्वर्णशब्देनेवर्ण एव । एतत्सामर्थ्याल्लुप्तेऽपि तस्मिन्भूतपूर्वगत्या लोपः । अत एवाचः परस्मिन्नित्यत्राऽऽदीध्य इति भाष्यप्रयोग संगच्छते । वस्तुतस्त्वन्तरङ्गत्वेन णिलो-पात्पूर्वं यीवर्णयोरिति लोपे नेदमस्य फलं तदाह—अन्तरङ्गत्वात्त्वित्यादिना । इत उत्तरं स्थानिवत्त्वाभावज्ञापनपरं पूर्वभाष्यं त्वेकदेश्युक्तिरित्युक्तमेव कैयटेन ध्वनितं च । एतेन वर्णग्रहणसामर्थ्याच्छ्रूयमाणे वर्ण एव लोपः । तेनाऽऽदीध्यक इत्येवेति हरदत्तोक्तमपास्तम्, भाष्यविरोधात् । तस्मात्सिद्धान्ते न्यायप्राप्तार्थानुवादकमेव वर्णग्रहणमिति तत्त्वम् । तथाऽपि पूर्वमुपसर्गेणेति । तदर्थेनेत्यर्थः । विशिष्टक्रियावचनस्य पदस्य पदान्तरेण संबन्धादिति भावः । एवं चान्तरङ्गसंबन्धार्थकोपसर्गनिमित्तकं कार्यमन्तरङ्गमिति तात्पर्यम् ।

भ्राजभासभाष० । काण्यादीनां संनिवेशेन क्वाप्यपाठादाह—प्रकार इति । प्रकारः सादृश्यम् । केन रूपेणेत्यत आह—येषामिति । प्रभृतय इत्यनेन भाष्योक्तानामुपलक्षणत्वं ध्वन-यति । अत्र मानं चिन्त्यम् ।

---

† चेति पाठान्तरम् । काण्यादीनां चेति पाठः कीलहर्नसम्मतः, स चैवोपयुक्तः । भ्राजभासादीनां ह्रस्वविकल्पे काण्यादीनां चापि ग्रहणं कर्त्तव्यम् । विकल्पार्थं त्वन्यतरस्याम् पदं सूत्र एव पठ्यते ।

भाणिहेठिलोपयः । अचकाणत्, अचीकणत् । अरराणत्, अरीरणत् । अशश्राणत्, अशिश्रणत् । अबभाणत्, अबीभणत् । अजिहेठत्, अजीहिठत् । अलुलोपत्, अलूलुपत् ।

## दयतेर्दिगि लिटि ॥ ७ । ४ । ६ ॥

इह अवदिग्ये अवदिग्याते अवदिग्यिरे दिग्यादेशे कृते द्विर्वचनं प्राप्नोति* तत्र साभ्यासस्येति वक्तव्यम् । ननु च द्विर्वचने कृते साभ्यासस्य दिग्यादेशो भविष्यति । न सिध्यति । किं कारणम् ?

**दिग्यादेशस्य परत्वात्साभ्यासस्याऽऽदेशवचनम् ॥ १ ॥**

दिग्यादेशः क्रियतां द्विर्वचनमिति परत्वाद्दिग्यादेशेन भवितव्यम् । तत्र साभ्यासस्येति वक्तव्यम् ।

एवं तर्हि दिग्यादेशो द्विर्वचनं बाधिष्यते । पुनःप्रसङ्गविज्ञानाद् द्विर्वचनं प्राप्नोति ।

---

प्र०— दयते० । दिग्यादेशे कृत इति । यद्यपि प्राप्ते द्विर्वचने दिग्यादेश आरभ्यते तथाऽपि बाध्यबाधकभावे द्वैतं लक्षणं वा लक्षणेन बाध्यते लक्ष्यं वा । तत्र यदा द्विर्वचनशास्त्रं दिग्यादेशशास्त्रेण बाध्यते तदा दिग्यादेशे कृते नास्ति द्विर्वचनप्रसङ्गः । यदा तु लक्ष्यं बाध्यते तस्य द्विर्वचनं दिगिना बाध्यते दिगेस्तु तत्प्राप्नोति शास्त्रस्याबाधितत्वात् । ततश्च यथा चख्यावित्यादौ ख्यात्रादेशे कृते द्विर्वचनं भवत्येवं दिग्यादेशे कृते प्राप्नोति । साभ्यासस्येति । तेन कृते द्विर्वचने दिग्यादेशो नच पुनर्द्विर्वचनं भवति सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात्, साभ्यासग्रहणसामर्थ्याच्च । ननु चेति । पूर्वविप्रतिषेधाल्लक्ष्यसिद्धय इष्टक्रमाश्रयणाद्वेति भावः । न सिध्यतीति । विप्रतिषेधे परं कार्यमित्यस्मिन्व्यवस्थाहेतौ सत्येष क्रमो दुर्लभः । तत्र द्विर्वचनस्यावकाशः पपाचेति । कृते द्विर्वचने दयतिसद्भावाद् दिग्यादेशस्य । अकृते तु द्विर्वचन उभयप्रसङ्गे परत्वाद्दिग्यादेशः । एवं तर्हीति । नाप्राप्ते द्विर्वचने दिग्यादेशस्याऽऽरम्भात् । इतरस्तद्बुद्धिपरीक्षार्थं विप्रति-

---

उ०— दयतेर्दिगि० । लक्ष्यमिति । विधेयं कार्यमित्यर्थः । नास्ति द्विर्वचनेति । शास्त्रस्य बाधितत्वेन पुनःप्रवृत्त्ययोगादिति भावः । तच्च द्विर्वचनमिति । दयतेरित्यर्थः । लक्ष्यभेदाल्लक्षणभेद इति भावः । तत्र दृष्टान्तमाह—ननु च यथेति । सकृत् प्रवृत्त्येति । आदेशकृतलक्ष्यभेदानाश्रयणादिति भावः । तत्र मानमाह—साभ्यासग्रहणेति । पौर्वापर्ये । ननु परत्वाद्दिग्यादेशे कृतेऽपि पुनरेवं तर्हीत्यादिना तत्कथनं पुनःप्रसङ्ग आह—नाप्राप्त इति । कृते द्विर्वचन आदेशस्यावकाश इति

---

* ६. १. ८.

पुनःप्रसङ्ग इति चेदमादिभिस्तुल्यम् । पुनःप्रसङ्ग इति चेदमादिभिस्तुल्यमेतद्भवति* । तद्यथा, अमादिषु कृतेषु पुनःप्रसङ्गाच्छिशीलुग्नुमो न भवन्ति । एवं दिग्यादेशे कृते पुनःप्रसङ्गाद् द्विर्वचनं न भविष्यति । अथवा विप्रतिषेधे पुनःप्रसङ्ग इत्युच्यते, विप्रतिषेधश्च द्वयोः सावकाशयोरिह पुनरनवकाशो दिग्यादेशो द्विर्वचनं बाधिष्यते । यदि तर्ह्यनवकाशा विधयो बाधका भवन्ति—बभूव भूभावो+ द्विर्वचनं बाधेत । सावकाशो भूभावः । कोऽवकाशः ? भविता भवितुम् । इह तर्हि चक्षिङः ख्याञ्वा लिटि [ २. ४. ५४; ५५ ] इति

प्र०–षेधाश्रयेण सकृद्गता इत्येवं दिग्यादेशो द्विर्वचनस्य त्वया बाधक उक्त इत्यारोप्य कथयति—पुनःप्रसङ्गविज्ञानादिति । इतरोऽप्यभ्युपगम्य तावद्विप्रतिषेधं सकृद्गता इत्याश्रित्याऽऽह—पुनःप्रसङ्ग इति चदिति । यथा यूयं ब्राह्मणकुलानि युवां त्वमित्यमादेशे कृते शिशीलुको न भवन्त्येवं दिग्यादेशे कृते द्विर्वचनाभावः । इदानीं न्याय्यं परिहारमाह—अथवेति । क्वचित्पाठः—नैष युक्तः परिहारो विप्रतिषेधे पुनःप्रसङ्ग इति । योऽयं मदुक्तस्यार्थस्य दिग्यादेशो द्विर्वचनं बाधिष्यत इत्यस्य त्वया परिहारोऽभिहितः पुनःप्रसङ्गविज्ञानाद् द्विर्वचनं प्राप्नोतीति स न युक्त इत्यर्थः । अनवकाशो दिग्यादेश इति । पूर्वं सामान्यविशेषभावमनाश्रित्योभयोः सावकाशत्वमुक्तम् । इदानीं तु सामान्यविशेषाश्रयेण नाप्राप्ते द्विर्वचन आरभ्यमाणस्य दिग्यादेशस्यापवादत्वमुच्यते । यदि तर्हीति । नन्ववश्यमनवकाशेन बाधकेन भाव्यम् । अन्यथा न कश्चिद्बाधकः स्यात् । एवं तर्ह्यनवकाशाभिमता अनवकाशा इत्यर्थो विवक्षितो नैवायमनवकाशः । कृतेऽपि द्विर्वचने प्रवृत्त्यविघातात् । अथ पुनरेवमप्यनवकाशत्वं मन्यसे तदा लक्ष्यदोषप्रसङ्गः । बभूवेति । अस्तेर्भूरिति भूभावः । सावकाश इति । यत्र द्विर्वचनाभावः । इह तर्हीति । आचख्यावित्यत्र कृतेऽपि द्विर्वचने ख्याञः प्रवर्तनादनवकाशत्वभावो

उ०–त्वयुक्तम् । यस्मिन्नवश्यं प्राप्ते यदारभ्यते तत्तस्य बाधकमित्येव सिद्धान्तात् । तदप्राप्तिविषये चारितार्थ्याभाव एव चानवकाशत्वमिति बोध्यम् । तर्हि पुनःप्रसङ्गेत्याद्यग्रिमग्रन्थासंगतिमाशङ्क्याऽऽह—इतर इति । पूर्वं सामान्येति । असंभव एव स बाधकप्रयोजक इति वार्तिकमते बाधकत्वप्रयोजकतया तमनाश्रित्येत्यर्थः । प्रतिलक्ष्यं लक्षणभेदादित्यर्थः । द्विर्वचनावकाशः पपाचेत्युक्तिस्त्वत्र पक्षे नासङ्गता । एतद्विधेयद्विर्वचनसजातीयावकाशमात्रेणैव सावकाशत्वस्यात्र पक्षे वक्तव्यत्वादिति भावः । इदानीं त्विति । सत्यपि संभवे बाधनं भवतीति भाष्यमत इत्यर्थः । कृतेऽपि द्विर्वचन इति । इदं चिन्त्यम् । उक्तरीत्या तद्ध्वनयन्नाह—अथ पुनरेवमिति । ख्याआदेशेऽपि सावकाशत्वाभासं दर्शयति—आचख्यावित्यत्रेति । वास्तवमर्थमाह—यदा त्विति । अयमेव सिद्धान्त इति बोध्यम् । 'भूभावस्यावकाशत्वाद्यदि

* ७. १. २६; ७२. + २. ४. ५२.

ख्याञ्द्विर्वचनं बाधेत । इह चापि बभूवेति यदि तावत्स्थाने द्विर्वचनं भूभावः सर्वादेशः प्राप्नोत्यथ द्विःप्रयोगो द्विर्वचनं परस्य भूभावे कृते पूर्वस्य श्रवणं प्राप्नोति । नैष दोषः । आर्धधातुकीयाः सामान्येन भवन्त्यनवस्थितेषु प्रत्ययेषु । तत्राऽऽर्धधातुकसामान्ये भूभावे कृते यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति ।

## ऋतश्च संयोगादेर्गुणः ॥ ७ । ४ । १० ॥

## संयोगादेर्गुणविधाने संयोगोपधग्रहणं कृञर्थम् ॥ १ ॥

संयोगादेर्गुणविधाने संयोगोपधग्रहणं कर्तव्यम् । किमर्थम् ? कृञर्थम् । इहापि यथा स्यात्—संचस्करतुः संचस्करुः । यदि संयोगोपधग्रहणं क्रियते नार्थः संयोगादिग्रहणेन । इहापि सस्वरतुः सस्वरुः, संयोगोपधस्येत्येव सिद्धम् ।

---

प्र०—यदा तु येन नाप्राप्तिन्यायेनानवकाशत्वमभ्युपगम्यते तदा ख्याञि कृते द्विर्वचनाप्रसङ्गः । सर्वादेश इति । स्थानिवद्भावादस्तिग्रहणेन ग्रहणात्कार्यकृतत्वाच्च पुनर्द्विर्वचनाभावादिष्टरूपासिद्धिः । पूर्वस्य श्रवणमिति । अयं दोषो नोत्सर्गापवादपक्ष उपात्तो भूभावस्यावकाशदर्शनेनोत्सर्गापवादभावनिराकरणात् । द्वयोस्तु सावकाशयोः परत्वाद् द्विर्वचने कृते बभूवेति न सिध्यतीति प्रतिपाद्यते । तत्राऽऽर्धधातुकसामान्य इति । द्विर्वचननिमित्तस्य लिटोऽनुपजातत्वादसति विप्रतिषेधे पूर्वं भूभावः पश्चाल्लिटि परतो द्विर्वचनमित्यदोषः । यो यतः प्राप्नोतीति । विषयसप्तमीफलं ज्ञापितम् । ख्याञ्विधावपि विषयसप्तम्याश्रीयत इति येन नाप्राप्त इत्यस्य न्यायस्यानवतारात्कृते ख्याञि द्विर्वचनं भवत्येव । दिग्यादेशे तु लिटीति परसप्तम्याश्रयणान्नाप्राप्ते द्विर्वचने दिगिरारभ्यमाणस्तं बाधते ।

ऋतश्च० । संयोगादेरिति । इहाङ्गाधिकारादङ्गं संयोगाद्याश्रीयते न च 'स्कृ' इत्येतदङ्गं संयोगादि भवतीति भावः । उपधाग्रहणं संयोगस्य देशविशेषोपलक्षणम-

---

उ०—परत्वाद् द्विर्वचनं तदाऽप्यनिष्टमिति । भाष्ये—यदीति । तदाशयमाह—स्थानिवद्भावादिति । तदेव दर्शयति—अयं दोष इति । भाष्ये—परस्य भूभावे कृत इति । नानर्थक इति परिभाषायामनभ्यासविकार इत्युक्त्याऽभ्यासस्यानर्थकत्वेऽप्युत्तरखण्डस्यानर्थकत्वे मानाभाव इति भावः । प्रत्ययाव्यवहितप्राग्वर्तिनः सर्वस्यार्थवत्त्वदर्शनेन तत्त्यागे मानाभाव इति तात्पर्यम् । फलमिति । तेन भव्यमित्यादौ ण्यन्न भवति । परसप्तम्याश्रयणादिति । लक्ष्यानुरोधेन क्वचित्परसप्तमी क्वचिद्विषयसप्तमीत्यर्थः । द्विर्वचने तु परसप्तम्येवेति भावः ।

ऋतश्च सं० । ननु 'चस्कृ' इत्यत्र 'स्कृ' इत्यस्य संयोगादित्वाल्लिट्परत्वात् किं संयोगोपधग्रहणेनेत्यत आह—इहेति । अन्त्यल्मात्रस्योपधात्वेन संयोग उपधा यस्येति सामानाधिकरण्यमनुपपन्नमत आह—उपधाग्रहणमिति । अत्र पक्ष उपधाशब्दो गौणः । इत्यत्र

भवेत्सिद्धं सस्वरतुः सस्वरुरिति । इदं तु न सिध्यति संचस्करतुः संचस्करुरिति । किं कारणम् ? सुटो× बहिरङ्गलक्षणत्वात् । बहिरङ्गः सुट्, अन्तरङ्गो गुणः । असिद्धं बहिरङ्गमन्तरङ्गे । संयोगादिग्रहणे तु क्रियमाणे संयोगोपधग्रहणमनन्यार्थं विज्ञायते ।

### ऋतो लिटि गुणाञ्ञ्णिति वृद्धिर्विप्रतिषेधेन ॥ २ ॥

ऋतो लिटि गुणाञ्ञ्णिति वृद्धिर्भवति पूर्वविप्रतिषेधेन* । ऋतो लिटि गुणस्यावकाशः—सस्वरतुः सस्वरुः । ञ्णिति वृद्धेरवकाशः—स्वारकः ध्वारकः । इहोभयं प्राप्नोति—सस्वार दध्वार । ञ्णिति वृद्धिर्भवति पूर्वविप्रतिषेधेन ।

### पुनःप्रसङ्गविज्ञानाद्वा सिद्धम् ॥ ३ ॥

अथवा पुनःप्रसङ्गाद् गुणे कृते रपरत्वे चात उपधायाः [ ७. २. ११६ ] इति वृद्धिर्भविष्यति । नैष युक्तः परिहारः । पुनःप्रसङ्गो नाम स भवति यत्र

प्र०—ल्मात्रस्योपधासंज्ञाविधानात्संयोगस्योपधात्वासंभवात् । अथवा संयोगावयवे संयोग—शब्दो वर्तते तस्योपधात्वमस्त्येव । बहिरङ्गः सुडिति । पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण साधनं हि क्रियां निर्वर्तयति तामुपसर्गो विशिनष्टि न चासिद्धस्य विशेषणेन संबन्धो भवति सुट्कात्पूर्व इत्यत्र तूक्तं पूर्वं धातुरुपसर्गेण युज्यत इति । एवं च सुटोऽन्तरङ्गत्वात्सिद्धो गुण इति नार्थ उपसंख्यानेन । संस्कृषीष्ट संस्क्रियत इत्यत्र त्विड्गुणयोः प्रतिविधेयम् । अनन्यार्थमिति । कृत्र्थमेवेत्यर्थः । तत्र वचनादसिद्धत्वं बाध्यते । यथाऽन्यत्रोक्तमाश्रयात्सिद्धत्वं यथा रोरुत्व इति । पुनः प्रसङ्गविज्ञानाद्वेति । अस्तु परविप्रतिषेधेन गुणस्तस्मिन्कृते वृद्धिर्भविष्यति । अनाश्रित्य लक्षणभेदं च वृद्धिमेकत्वेनाऽऽश्रित्यैतदुक्तम् । पुनःप्रसङ्गो नामेति । वाचोयुक्तिरेवेयं न संगच्छते लक्षणद्वयस्य परस्परप्रतिषेधादप्रवृत्तौ प्राप्तायां विप्रतिषेधे परं कार्यमित्यनेन परस्मिन्कार्ये विहिते

उ०—संयोगशब्द इति विशेषः । साधनेन । तत्प्रयुक्तकार्येण लिङ्गादिना । एवं च तावत्येव निमित्तसद्भावाद् गुणप्राप्तिरन्तरङ्गा पश्चादुपनतोपसर्गसापेक्षः सुड् बहिरङ्ग इत्यर्थः । साधनम् । तत्प्रयुक्तकार्यम् । क्रियां निर्वर्तयति—बोधयति । पदस्यैवार्थबोधकत्वादित्यर्थः । न चासिद्धस्य—शब्दादनुपस्थितस्य । उपसर्गेणेति । तद्द्योत्यार्थेनेत्यर्थः । एवं हि तत्र भाष्यं पूर्वं धातुरुपसर्गेणेति न सारम् । पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण । सत्यमेवमेतद् । यस्त्वसौ धातूपसर्गयोरभिसंबन्धस्तमभ्यन्तरं कृत्वा धातुः साधनेन युज्यते । एवं च सुट् सर्वतोऽन्तरङ्गतरक इति । एवं चेति । संयोगादित्वविवक्षणेन संयोगादित्वादेव गुणसिद्धेरिति भावः । प्रतिविधेयमिति । तच्च सुट्कादिति सूत्र उक्तम् । चिन्त्यमेतदिति । न च आम इति सूत्रे गुणे कृत उपधावृद्धिर्नेति णल्ग्रहणेन ज्ञापनाद्दोषः तस्य जागृमात्र-

× ६. १. १३५–१३७. * ७. २. ११५.

तेनैव कृते प्राप्नोति तेनैव चाकृते । अत्र खलु गुणे कृते रपरत्वे चात उपधाया इति वृद्धिः प्राप्नोत्यकृते चाचो ञ्णितीति । तस्मात्सुष्ठूच्यते 'ऋतो लिटि गुणाञ्णिति वृद्धिर्विप्रतिषेधेने'ति ।

### शॄदॄप्रां ह्रस्वो वा ॥ ७ । ४ । १२ ॥

किमर्थं ह्रस्वो वेत्युच्यते न गुणो वेत्युच्येत ? तत्रायमप्यर्थो गुणग्रहणं न कर्तव्यं भवति । प्रकृतमनुवर्तते । क्व प्रकृतम् ? ऋतश्च संयोगादेर्गुणः [१०] इति ।

### ऋतो ह्रस्वत्वमित्त्वप्रतिषेधार्थम् ॥ १ ॥

ऋतो ह्रस्वत्वमुच्यते, किम् प्रयोजनम् ? इत्त्वप्रतिषेधार्थम् । इत्त्वं× मा भूदिति । गुणो वेतीयत्युच्यमाने गुणेन मुक्त इत्त्वं प्रसज्येत । ह्रस्वो वेत्युच्यमाने ह्रस्वेन मुक्ते यथाप्राप्तो+ गुणो भविष्यति ।

प्र०–निमित्तसंभवात्पूर्वस्य लक्षणस्य पुनः प्राप्तिः पुनःप्रसङ्ग उच्यते न त्वपूर्वलक्षणप्राप्तिः पुनःप्रसङ्गः । तस्मादिति । ननु यदि नाम पुनःप्रसङ्गवाचोयुक्तिर्न घटते किमेतावता गुणरपरत्वयोः कृतयोरुपधावृद्धिर्नहि न प्राप्नोति सत्यां च प्राप्तौ किं पूर्वविप्रतिषेधाश्रयेणेत्यत्र चिन्त्यमेतत् ।

शॄदॄ० । न गुणो वेत्युच्येतेति । गुण एव पूर्वसूत्रेण नित्यं प्राप्तो विकल्पनीयस्तत्र गुणपक्षे विशशरतुरित्यादि भविष्यति तदभावपक्षे तु यणादेशेन विशश्रतुरित्यादीति भावः । तत्रायमपीति । न केवलं गुणविधानप्रकरणमनुसृतं भवति यावल्लाघवमपीत्यर्थः । इत्त्वं प्रसज्येतेति । वार्णादाङ्गं बलीय इति वर्णाश्रयमन्तरङ्गमपि यणं बाधित्वेत्त्वं स्याद् ह्रस्वविधाने तु यणादेशः सिध्यति । विशश्रृवान् विदद्द्वान् विपप्रृवानिति क्वसौ च सिध्यति । गुणविकल्पे त्वेतद्रूपासिद्धिः । क्वसोः कित्त्वेन प्रतिषेधविषयस्यापि गुणस्य प्रतिषेधः प्रदेशान्तरे भाष्यकृता प्रदर्शितः । उत्तरार्थं च ह्रस्वग्रहणं कर्तव्यमिति लाघवमपि नास्ति । ह्रस्वविधावप्युत्तरत्र ह्रस्वविधानादेकप्रकरणता भवतीति नास्ति पूर्वोक्तो विशेषः ।

उ०–विषयत्वात् । अत एव कृधात्वादौ भावकर्मणोः परत्वाद् गुण उपदेशग्रहणाच्चिण्वद्भावे कारिष्यत इत्यादौ वृद्धिरुदाहृता भाष्यकारेण । अचो ञ्णितीति सूत्रेऽपि स्पष्टमेवोक्तं भाष्ये । तस्मात्सेष युक्तः परिहार इत्यादि भाष्यमेकदेश्युक्तिरिति तात्पर्यम् । पुनःप्रसङ्गविज्ञानादित्यस्यायमर्थः—पुनर्गुणप्रवृत्त्युत्तरं वृद्धेः शास्त्रान्तरेण प्रसक्तस्य विज्ञानादिति । एतदजानत एकदेशिनोऽग्रिमग्रन्थ इति बोध्यम् । वस्तुतस्तु गुणं कृत्वा वृद्धौ प्रक्रियागौरवात्, परशब्दस्येष्टवाचितयाऽस्यापि सूत्रेणैव संग्रहात्, सुष्ठूच्यत इत्युक्तिर्भाष्य इति बोध्यम् ।

शॄदॄप्रां० । अपिशब्दार्थमाह—न केवलमिति । ह्रस्वविधाने त्विति । इत्त्वस्य निमित्ताभावादित्यर्थः । क्वसोः कित्त्वेनेति । यद्यपि गुणे सत्यपीदं न सिध्यति तथाऽपि तद्प्राप्तावपीष्टासिद्धिरित्यर्थः ।

× ७. १. १००. + ७. ४. ११.

## केऽणः ॥ ७ । ४ । १३ ॥

## केऽणो ह्रस्वत्वे तद्धितग्रहणं कृन्निवृत्त्यर्थम् ॥ १ ॥

केऽणो ह्रस्वत्वे तद्धितग्रहणं कर्तव्यम् । किं प्रयोजनम् ? कृन्निवृत्त्यर्थम् । कृति मा भूत्—राका धाकेति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ।

## उपसर्गाद्ध्रस्व ऊहतेः ॥ ७ । ४ । २३ ॥

इह कस्मान्न भवति—प्रोह्यते उपोह्यते ? एकादेशे कृते व्यपवर्गाभावात् । एवमपि आ ऊह्यते ओह्यते समोह्यत इत्यत्र प्राप्नोति । अण इति÷ वर्तते ।

## एतेर्लिङि ॥ ७ । ४ । २४ ॥

---

प्र०—उपसर्गात्० । प्रोह्यत इति । अकृत एकादेशे ह्रस्वभावाभावयोर्विशेषाभावादन्तरङ्गत्वाच्च प्रागेकादेशेन भाव्यम् । वार्णादाङ्गमित्येतत्तु समानाश्रयाङ्गवार्णविषयं तस्मादेकादेशे कृतेऽन्तादिवद्भावेन ह्रस्वप्रसङ्गश्चोद्यते । एकादेशे कृत इति । उपसर्गात्परस्योहतेर्ह्रस्वो विधीयमान एकादेशे कृते भेदाभावाद् भेदनिबन्धनपौर्वापर्यानुपपत्त्योभयत आश्रयेऽन्तादिवद्भावाभावाच्च ह्रस्वत्वाभावः । आ ऊह्यत इति । धातूपसर्गयोरसंहिता नास्ति । तदुक्तम्—संहितैकपदे नित्या नित्या धातूपसर्गयोरिति । एवं च लौकिके प्रयोगे विग्रहाभावान्नित्येनैकादेशेन भाव्यम् । एवं च 'आ उह्यत' इति ये ह्रस्वं पठन्ति ते न सम्यङ्न्यायविदः । लौकिकप्रयोगसंपादनाय हि ह्रस्वो विधीयते । तस्मादलौकिकेन प्रक्रियावाक्येनाकृतह्रस्वेनाऽऽङः प्रश्लेषप्रदर्शनमात्रं क्रियतेऽथ त्वलौकिके प्रक्रियावाक्ये ह्रस्वत्वप्रतिपत्तिरुच्यते, तथाऽपि न काचित्क्षतिः । तत्रैकादेशस्याऽऽदिवद्भावाद्धिग्रहणेन ग्रहणात्समः परस्य ह्रस्वत्वप्रसङ्गः । अण इति वर्तत इति । एवं च रूपाश्रयोऽयं विधिरिति ताद्रूप्यानतिदेशादण्त्वाभावाद् ह्रस्वाभावः ।

---

उ०—उपसर्गाद्ध्रस्व० । समानश्रयेति । अनित्यत्वात्तदनाश्रित्यैकदेश्युक्तिरियमिति तत्त्वम् । यद्यपि वास्तवं पौर्वापर्यं नास्ति तथाऽप्यन्तादिवच्चेति शास्त्रबोधितमार्थसमाजग्रस्तमस्त्येवेत्यत आह—उभयत इति । आ ऊह्यत इति । ह्रस्वपाठनिराकरणायाऽऽह—धातूपसर्गयोरिति । लौकिकप्रयोगसंपादनायेति । नाह ह्रस्वप्रवृत्तिमात्रेण लौकिकप्रयोगसंपत्तिरिति भावः । तस्मादलौकिकेनेति । अन्तरङ्गत्वेनैकादेशस्यैव युक्तत्वेन तत्र ह्रस्वोऽयुक्त इति भावः । न्यायत एव ह्रस्वस्यायुक्तत्वमुच्यते । दोषस्तु नास्त्येवेत्याह—अथ त्विति । चिन्त्यमिदम् । लक्ष्ये लक्षणस्येति न्यायेन पुनर्ह्रस्वाप्राप्तिः, उक्तयुक्त्या ह्रस्वस्याप्रवृत्तेश्च । एवं चाणग्रहणानुवृत्तिरप्येकदेशिन एव । अण्त्वाभावादिति । अण् च सर्वत्र पूर्वेणैवाणुदित्सूत्रं वर्जयित्वेति सिद्धान्तः ।

---

÷ ७. ४. १३.

एतेर्लिङ्युपसर्गात् ॥ १ ॥

एतेर्लिङ्युपसर्गादिति वक्तव्यम्। इह मा भूत्—ईयात्*। तत्तर्हि वक्तव्यम्? न वक्तव्यम्। उपसर्गादिति+ वर्तते। एवं तर्ह्याचार्योऽन्वाचष्ट उपसर्गादित्यनुवर्तत इति। नैतदन्वाख्येयमधिकारा अनुवर्तन्त इति। एष एव न्यायो यदुताधिकारा अनुवर्तेरन्।

रीङृतः ॥ ७ । ४ । २७ ॥

दीर्घोच्चारणं किमर्थं न रिङ्त इत्येवोच्येत? का रूपसिद्धिः—मात्रीयति पित्रीयति। अकृत्सार्वधातुकयोरिति* दीर्घत्वं भविष्यति। एवं तर्हि सिद्धे सति यद्दीर्घोच्चारणं करोति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषाऽङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति। किमेतस्य ज्ञापने प्रयोजनम्? पिबेर्गुणप्रतिषेधश्चोदितः× स न वक्तव्यो भवति।

यङि च ॥ ७ । ४ । ३० ॥

यङ्प्रकरणे हन्तेर्हिंसायामीट् ॥ १ ॥

प्र०— एते०। ईयादिति। आशिषि लिङ्। अकृत्सार्वधातुकयोर्दीर्घः। नैतदन्वाख्येयमिति। वार्तिककारेण नैतदन्वाख्येयं सर्वाधिकाराणामन्वाख्यानप्रसङ्गात्। वृत्तिकारास्त्वधिकाराणां प्रवृत्तिनिवृत्ती व्याचक्षते।

रीङृतः। दीर्घत्वं भविष्यतीति। ननु नाप्राप्ते दीर्घे रिङारभ्यमाणस्तस्य बाधकः स्यात्। नैतदस्ति। ऋवर्णस्य बाध्यतां रिङ्स्तु कथं बाध्यते। नहि तस्य दीर्घे प्राप्ते स आरभ्यते। ततश्च द्रव्ये पदार्थे रिङि कृते दीर्घः प्रवर्तत एव।

यङि च। यङ्प्रकरण इति। हिंसायास्त्वन्यत्र जङ्घन्यत इत्येव भवति।

उ०— एतेर्लिङि। आशिषि लिङिति। विधिलिङि दीर्घाभावादाशीर्लिङ्येव ह्रस्वविषय इति भावः। तदाह—अकृदिति। वार्तिककारेणेति। उक्तानुक्तदुरुक्तचिन्तैव हि तत्कार्यम्।

रीङृतः। द्रव्ये पदार्थ इति। तत्पक्षे रिविषयकदीर्घशास्त्रस्याचरितार्थत्वादिति भावः। वस्तुतो जातिपक्षेऽपि तज्जात्याश्रयसकलव्यक्तिविषयकत्वाज्जात्याश्रयणसामर्थ्यादेव प्रवृत्तिः सुलभेति द्रव्यपक्ष इति चिन्त्यमेव। क्ङिन्नानवकाशत्वादत्र बाधकत्वं स्यात् पूर्वं प्रवृत्तिरूपं अत्र कृते चोत्सर्गो भवत्येव। सति संभव उत्सर्गे कृतेऽपवादप्राप्तियोग्यतायामेवापवादत्वमिति गुणो यङ्लुकोरित्यत्र निरूपयिष्यते। वस्तुतः पिबेरदन्तत्वाद् गुणप्रतिषेधप्रत्याख्यानसंभवेन परिभाषायाः प्रयोजनान्तराभावाच्च दीर्घोच्चारणं स्पष्टार्थमेवेति बोध्यम्।

यङि च। जङ्घन्यत इति। कुटिलं गच्छतीत्यर्थः। ननूपधालोपेऽनच्-

* ७. ४. २५. + ७. ४. २१; × ७. १. ७८.

यङ्प्रकरणे हन्तेर्हिंसायामीड्वक्तव्यः । जेघ्नीयते । यदीडभ्यासरूपं न सिध्यति* । एवं तर्हि यङ्प्रकरणे हन्तेर्हिंसायामीक् । एवमप्युपधालोपो न प्राप्नोति । एवं तर्हि यङ्प्रकरणे हन्तेर्हिंसायां घ्नी ।

**न च्छन्दस्यपुत्रस्य ॥ ७ । ४ । ३५ ॥**

अत्यल्पमिदमुच्यतेऽपुत्रस्येति । अपुत्रादीनामिति वक्तव्यम् । इहापि यथा स्यात्÷ 'जनीयन्तो न्वग्रवः, पुत्रीयन्तः सुदानवः'†

**छन्दसि प्रतिषेधे दीर्घप्रतिषेधः ॥ १ ॥**

छन्दसि प्रतिषेधे दीर्घत्वस्य+ प्रतिषेधो वक्तव्यः । संस्वेदयुः, मित्रयुः ।

**न वाऽश्वाघस्याऽऽद्वचनमवधारणार्थम् ॥ २ ॥**

न वा वक्तव्यम् । किं कारणम् ? अश्वाघस्याऽऽद्वचनमवधारणार्थं भविष्यति× । अश्वाघयोरेव च्छन्दसि दीर्घो भविष्यति नान्यस्येति ।

प्र०—अभ्यासरूपं न सिध्यतीति । उपधालोपस्य स्थानिवत्त्वाद्धनिति द्विर्वचनं प्राप्नोति । एवं तर्हीति । ईको धातुभक्तत्वाद्द्विर्वचननिमित्तत्वाभावात्स्थानिवत्त्वाभावात् । एवमपीति । अजादौ प्रत्यये विधानात् । एवं तर्हीति । प्रक्रियालाघवाय घकाराद्यादेशविधानम् । घ्नीभावविधावभ्यासाच्चेति कुत्वे गौरवप्रसङ्गात् व्यक्तिपदार्थाश्रयणे च घ्नीभावे कृते द्विर्वचनं प्रवर्तते । आकृतिपक्षे तु दिग्यादेशेनेव घ्नीभावेन द्विर्वचनबाधप्रसङ्गात् ।

न च्छन्द० । जनीयन्त इति । जनमिच्छन्तीति । क्यच् । लटः शत्रादेशः । जस् । उगिदचामिति नुम् । छन्दसीति । आनन्तर्यादीत्त्वस्यैव प्रतिषेधः प्राप्नोति । ततश्चापवादेऽपनीत उत्सर्गो दीर्घः प्राप्नोतीति तस्यापि प्रतिषेधो विधेयः । संस्वेदयुरिति । क्याच्छन्दसीत्युप्रत्ययः । न वेति । अश्वाघयोरनेनेत्त्वे प्रतिषिद्धेऽकृत्सार्वधातुकयोरित्याकारे सिद्धे पुनराद्वचनं नियमार्थमित्यन्येषामाकारो न भवति ।

उ०—स्यादभ्यास एव दुर्लभोऽत आह—उपधालोपस्येति । ईटः प्रत्ययभक्तत्वेन द्वित्वनिमित्ताजनिमित्तत्वादुपधालोपस्येत्यर्थः । नन्वीक्यपि स्थानिवत्त्वेन हन एव द्वित्वेऽभ्यासरूपासिद्धिस्तदवस्थैवेत्यत आह—ईक इति । अभ्यासाच्चेति । न च परत्वादन्तरङ्गत्वाच्च द्वित्वात्प्राग्घो हन्तेरिति न्याय्यम् । अङ्गापेक्षत्वेन समतया नित्यत्वात्पूर्वं द्वित्वे परत्वाद्धो हन्तेरिति बाधित्वाऽभ्यासाच्चेति प्रवर्तत इत्याशयात् । व्यक्तीति । घ्नीभावविषयकद्वित्वशास्त्रस्य चारितार्थ्येनेति भावः । घ्नीभावे कृत इत्यस्य परत्वादित्यादिः । वस्तुतोऽग्रे यङीति विषयसप्तमीति वक्ष्यावित्यादाविव द्वित्वमिति बोध्यम् ।

न च्छन्दस्यपु० । जनमिच्छन्तीति । जनीमिच्छन्तीति व्याख्यानं तु भाष्यविरुद्धम् । दीर्घ इति । अकृत्सार्वेत्यनेन ।

* १. ४. ९८; १. १. ५९. ÷ ७. ४. ३३. + ७. ४. २५. × ७. ४. ३७.

† ऋग्वेद ७. ९४. ४. सामवेद उ० १३. ४. ८.

## शाच्छोरन्यतरस्याम् ॥ ७ । ४ । ४१ ॥

### श्यतेरित्वं व्रते नित्यम् ॥ १ ॥

श्यतेरित्वं व्रते नित्यमिति वक्तव्यम् । संशितव्रतः । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।

देवत्रातो+ गलो÷ ग्राह× इतियोगे च सद्विधिः† ।
मिथस्ते न विभाष्यन्ते गवाक्षः* संशितव्रतः ॥

प्र०— शाच्छो० श्यतेरिति । व्रत इति । विषयो निर्दिश्यते न तूत्तरपदं, तेन संशितो ब्राह्मण इत्यत्रापि नित्यमित्त्वं भवति । यद्येवमित्त्वेन व्रतस्य द्योतितत्वात्संशितव्रत इति व्रतशब्दप्रयोगो न प्राप्नोति । नैष दोषः । अन्यत्रापीत्त्वविधानात् । संशितशब्दः सामान्यशब्द इति विशेषप्रतिपादनायाविरुद्धो व्रतशब्दप्रयोगः । व्रते तु नित्यमित्त्वं विधीयते । न वक्तव्यमिति । साधारणेन न्यायेन सिद्धत्वादत एव तुल्यधर्मणः शब्दानुपन्यस्यति । देवत्रात इति । नुदविदोन्दत्रेति नत्वं संज्ञायां न भवति । देवग्रहणं संज्ञाविषयोपलक्षणार्थम् । तेन भवत्त्रात इत्यादावपि संज्ञात्वान्नत्वाभावः । यदा तु क्रियाशब्दस्त्राणं त्रातमिति तदा नत्वविकल्पः । गल इति । अचि विभाषेति लत्वं प्राण्यङ्गे नित्यं भवति, विषे तु गर इति लत्वाभावः । क्रियाशब्दे तूभयं भवति गरो गल इति । ग्राह इति । विभाषा ग्रह इति णप्रत्ययो जलचरे नित्यं भवति । ज्योतिषि पचाद्यजेव ग्रह इति । इतियोग इति । लक्षणहेत्वोः क्रियाया इति शतृशानज्विधिर्हन्तीति पलायते, वर्षतीति धावतीत्यादाविति प्रयोगे न भवति । मिथ इति । एकस्मिन्विषये न विकल्प्यन्ते किन्तु विषयभेदेन । एतच्चाऽऽकृतिपक्ष उपपद्यते । तत्र हि सर्वं लक्ष्यमैकध्यमापाद्योभयमुपदिश्यते ततश्चोभयं भवतीत्येतावतैव लक्षणस्य व्यापारः । असंकीर्णत्वं तु प्रयोगवशात्प्रतीयते । गवाक्ष इति । वातायनेऽवङ् स्फोटायनस्येति नित्यमवङ् भवति, प्राण्यङ्गे तु गोरक्षि गोऽक्षीति भवत्यन्यत्र तु विकल्पेन । एतच्चोदाहरणं न व्यवस्थितविभाषाणां परिगणनम्, अन्यासामपि संभवात् ।

उ०— शाच्छो० । श्लोके संशितव्रत इति निर्देशाद्व्रतमुत्तरपदमिति भ्रमं निवर्तयति— विषयइत्यादि । संशितो ब्राह्मण इति । नियमविशेषे व्रतवानुच्यते । विशेषप्रतिपादनायेति । प्रकरणादिना विशेषप्रतीतौ तु क्वचिद्प्रयोगोऽपि । न्यायेन व्यवस्थितविभाषारूपेण । संज्ञायामिति । क्तिच्क्तौ च संज्ञायामिति क्तः । ज्योतिषि । रविगुर्वादिरूपे । क्रियाशब्दे तूभयं बोध्यम् । ऐकध्यमेकरूपत्वम् । बुद्ध्या युगपद्संनिधाप्येत्यर्थः । व्यक्तिपक्षे तु प्रतिलक्ष्यं लक्षणभेदादेकस्मिन्नेव विषये भावाभावौ प्राप्नुत इति जातिपक्षाश्रयः । व्यक्तिपक्षेऽपि लक्ष्यानुरोधात्तत्तद्व्यक्तिविषयकलक्षणानुपपत्तेः इति परन्तु दाक्यमिति बोध्यम् । जातिपक्षेऽपि लक्ष्यानुसारं पक्षाऽन्तरप्रदर्शकः इति बोध्यम् । अन्यत्र । गवाक्षं गोऽक्षमित्यादौ । अन्यासामपीति । भ्रत्रैवेति सूत्रे भाष्ये तत्र व्यवस्थितविभाषाप्रपञ्चनात् ।

+ ८. २. ५६. ÷ ८. २ २१. × ३. १. १४३. † ३. २. १२६. * ६. १ १२२.

## दो दद्घोः ॥ ७ । ४ । ४६ ॥

अवदत्तं विदत्तं च प्रदत्तं चाऽऽदिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥

किं पुनरयं तकारान्तः, आहोस्विद्दकारान्त उत धकारान्तोऽथवा थकारान्तः ? कश्चात्र विशेषः ?

**तान्ते दोषो दीर्घत्वं स्यात् ।**

यदि तकारान्तो दस्ति [ ६. ३. १२४ ] इति दीर्घत्वं प्राप्नोति ।

**दान्ते दोषो निष्ठानत्वम् ।**

अथ दकारान्तो रदाभ्यां निष्ठात इति+ नत्वं प्राप्नोति ।

**धान्ते दोषो धत्वप्राप्तिः ।**

अथ धान्ते झषस्तथोर्धोऽधः [ ८. २. ४० ] इति धत्वं प्राप्नोति ।

**थान्तेऽदोषस्तस्मात्थान्तः ॥ १ ॥**

अथ थकारान्तो न दोषो भवति ।

तान्ते दोषो दीर्घत्वं स्याद् दान्ते दोषो निष्ठानत्वम् ।
धान्ते दोषो धत्वप्राप्तिस्थान्तेऽदोषस्तस्मात्थान्तः ॥ १ ॥

प्र०— दो दद्घोः । अवदत्तमिति । आदिकर्मग्रहणं प्रदत्तशब्दस्यैव संभवाद्विशेषणमवदत्तादिसिद्ध्यर्थत्वाद्वचनस्यावदत्तादयोऽपि भवन्ति । तथा चाच उपसर्गात्त इत्यस्यावकाशः प्रत्तमवत्तमिति वक्ष्यते । तस्मान्निदत्तमिति चेष्यत इति चशब्देनावदत्तादयोऽपीष्यन्त इति सूच्यते । किं पुनरिति । यद्यपि दकारः श्रूयते तथाऽपि संहितायां तकारादीनामप्येतस्य रूपस्य संभवात्प्रश्नः । तान्ते दोष इति । यदा 'द' इत्येतस्य यस्तकारान्त आदेशस्तत्र दीर्घ इति सूत्रार्थस्तदाऽयं दोषो यदा तु तकारादौ दादेशे दीर्घस्तदा न दोषः । तस्मात्थान्त इति । संनिपातपरिभाषाश्रये तु दान्तधान्तयोर्न दोषः ।

उ०— दो दद्घोः । अवदत्तादिसिद्ध्यर्थत्वादिति । अच उपसर्गादिति तत्वे प्राप्त एतत्सिद्धिबोधनार्थमेवेदं नतु तन्निवृत्त्यर्थमिति भावः । अत एव वचने चकारबाहुल्यम् । तैश्च तस्यापि संग्रह इत्याहुः संनिपातेति । नच नत्वधत्वयोरसिद्धत्वादस्या अप्रवृत्तिः । असिद्धत्वविषयेऽप्यस्याः प्रवृत्तेः कृन्मेजन्तसूत्रे भाष्ये ध्वनितत्वात् । किंच पूर्वत्र कर्तव्येऽसिद्धत्वेऽपि कृते तस्मिन्नस्यासिद्धत्वे मानाभावः । किंचाऽऽतिदेशिकनिमित्तविघाताभावमादायास्या अप्रवृत्तौ गौरीत्यादौ संबुद्धिलोपेऽपि स्थानिवद्भावेन ह्रस्वनिमित्तविघाताभावात्तत्रसंनिपातपरिभाषयाऽतिव्याप्तिपरकृन्मेजन्तसूत्रस्थभाष्यासंगतिः । नच संनिपातस्याशास्त्रीयत्वान्न तत्र स्थानिवत्त्वमिति चेदसिद्धत्वेऽपि तुल्यम् । किंच तस्य स्थानिवत्त्व आर्थसमाजग्रस्तः संनिपातः । अन्यथा हे त्रपो इत्यत्र न लुमतेति निषेधानित्यत्वेऽपि गुणो दुर्लभ एव स्यात् । भाष्यकृतस्त्वयं भावः—

+ ८. २. ४२.

## अच उपसर्गात्तः ॥ ७ । ४ । ४७ ॥

### अच उपसर्गात्तत्व आकारग्रहणम् ॥ १ ॥

अच उपसर्गात्तत्व आकारग्रहणं कर्तव्यम् । न कर्तव्यम् । अलोऽन्त्यस्य विधयो भवन्तीत्याकारस्य भविष्यति+ । न सिध्यति । किं कारणम् ?

### आदेर्हि परस्य ॥ २ ॥

अत्र हि तस्मादित्युत्तरस्याऽऽदेः परस्य [१.१.६७;५४] इति दकारस्य प्राप्नोति । नैष दोषः ।

### अवर्णप्रकरणात्सिद्धम् ॥ ३ ॥

अस्येति वर्तते । क प्रकृतम् ? अस्य च्वौ [ ३२ ] इति । यद्यवर्णग्रहणमनुवर्तते दद्भावे* दोषो भवति । एवं तर्ह्येवं वक्ष्यामि—दोऽद्घोरिति । दो य आकारस्तस्याद्भवति । ततोऽच उपसर्गात्तः । अस्येत्येव । एवमपि सूत्रभेदः कृतो भवति । नासौ सूत्रभेदः । सूत्रभेदं कमुपाचरन्ति । यत्र तदेवान्यत्सूत्रं क्रियते भूयो वा । यद्धि तदेवोपसंहृत्य क्रियते नासौ सूत्रभेदः । अथवा द्वितकारको निर्देशः क्रियते सोऽनेकाल्शित्सर्वस्य [ १. १. ५५ ] इति सर्वस्य भविष्यति । इहापि तर्हि प्राप्नोति—अद्भिः अद्भ्य इति× । अच इति वर्तते तच्चावश्यमज्ग्रहणमनुवर्त्यं लवाभ्यामित्येवमर्थम्÷ । अथवा त्रितकारको निर्देशः करिष्यते इहार्थौ द्वावुत्तरार्थश्चैकः ।

---

प्र०— अच उप० । यदीति । दाशब्दाकारस्य दद्भावे दत्तमिति संयोगादि श्रूयेत । नासौ सूत्रभेद इति । दोपायेति शेषः । तदेव सूत्रं लघु क्रियमाणं प्रत्युत गुणं संपादयति । अथवेति । लघुकरणेऽपि यदि न्यासान्तरत्वात्स्पष्ट एव सूत्रभेद इति मतं तदैवमुत्तरम्—अलोऽन्त्यस्य द्वावपवादावादेः परस्यानेकाल्शित्सर्वस्येति तयोर्विप्रतिषेधे परं प्रवर्तते । अच इति वर्तत इति । तेनाप्शब्दस्य योऽच् तस्मात्परस्य पकारस्य द्वितकार आदेशस्तत्रान्त्यस्य झलां जशोऽन्त इति जश्त्वं, पूर्वस्य झलां जश्झशीति । लवाभ्यामिति । 'लूञ्'ऋदोरबित्यप् । अस्यापि भकारादौ त्तः प्राप्नोति । अज्ग्रहणानुवृत्तौ लप्शब्दस्य योऽच् तस्मात्परो भकारादौ न कश्चिदस्तीति त्तत्वाभावः । अथवेति । तत्र तकारद्वयात्मक

---

उ०—दध्यमित्यादौ धत्वसिद्धये साहित्यसंनिपातनिमित्तकस्य तद्विघातकविधिप्रवर्तकत्वाय तद्विषये तदनित्यत्वमावश्यकमित्येतत्सूत्रस्थथकारनिर्देश एव तज्ज्ञापक इति चेति दिक् ।

अच उप० । नन्वेवमपि सूत्रभेद एवेत्यत आह—दोपायेति । ननु त्रितकारकनिर्देशे त्रयाणामप्युभयत्र संबन्धः स्यादिति इष्टविभागालाभोऽत आह—तत्रेति । पृथग्विभक्तिक इति । 'त' इत्यपेक्षायामित्यर्थः । संयोगान्तलोपस्तु माभूदत् । नन्वेवमुत्तरार्थाज्ग्रहणानुवृत्तौ लवाभ्यामिति दोषः स्यादत आह—लवाभ्यामित्यादौ चेति ।

---

+ १. १. ५२. * ७. ४. ४६. × ७. ४. ४८. ÷ १. १. ५७.

द्युतेरित्त्वादचस्तः ॥ ४ ॥

द्युतेरित्त्वादचस्त इत्येतद्भवति विप्रतिषेधेन । द्युतेरित्त्वस्यावकाशः×—निर्दितम्, निर्दितवान् । अचस्त इत्यस्यावकाशः—प्रत्तम्, अवत्तम् । इहोभयं प्राप्नोति—नीत्तम्, वीत्तम् । अचस्त इत्येतद्भवति विप्रतिषेधेन ।

अपो भि ॥ ७ । ४ । ४८ ॥

अपो भि मासश्छन्दसि ॥ १ ॥

अपो भीत्यत्र मासश्छन्दस्युपसंख्यानं कर्तव्यम् । माद्भिरिष्ट्वा इन्द्रो वृत्रहा । अत्यल्पमिदमुच्यते ।

स्ववस्स्वतवसोर्मास उषसश्च त इष्यते ।

स्ववद्भिः स्वतवद्भिः । समुषद्भिरजायथाः† । माद्भिरिष्ट्वा इन्द्रो वृत्रहा ।

सनि मीमाघुरभलभशकपतपदामच इस् ॥ ७ । ४ । ५४ ॥

इस्त्वं सनि राधो हिंसायाम् ॥ १ ॥

इस्त्वं सनि राधो हिंसायामिति वक्तव्यम् । प्रतिरित्सति । हिंसायामिति किमर्थम् ? आरिरात्सति ।

आप्ज्ञप्यृधामीत् ॥ ७ । ४ । ५५ ॥

---

प्र०—आदेशः पृथग्विभक्तिक इहार्थो यस्तु साच्कस्तकारस्तस्याचः स्वरितत्वप्रतिज्ञानादुत्तरत्रानुवृत्तिः । लवाभ्यामित्यादौ तु तत्वं न भवति । पकारलोपादप्शब्दाभावात् । नच भूतपूर्वगत्याश्रयो न्याय्यः । अद्भिरित्यादौ सांप्रतिकाप्शब्दसंभवे गौणस्याग्रहणादस एव समकत्वाभावात्प्रत्ययाप्रत्यययोः प्रत्यये संप्रत्यय इति नावतिष्ठते । अद्भिः संस्कृतमिति लिङ्गाद्वा । नहि प्रत्ययस्यैव ग्रहणेऽद्भिरिति निर्देशोपपत्तिः । द्युतेरित्त्वादिति । पुरस्तादपवादा इति न्यायादित्त्वं दद्भावस्यैव बाधकं न तत्वस्य । ततश्चेत्त्वतत्वयोर्दद्भावापवादयोर्विप्रतिषेधे परं तत्वं प्रवर्तते ।

अपो भि । माद्भिरिति । पद्दन्नोमासिति मासशब्दस्य मासादेशस्य च्छन्दस्येव विधानान्मासश्छन्दसीति च्छन्दोग्रहणं न कर्तव्यम् । तत्क्रियमाणं भाषायामपि कचित्पदादयः प्रयुज्यन्त इति ज्ञापनायेत्याहुः ।

आप्ज्ञ० । ज्ञपेरिति । इहाज्ग्रहणमनुवर्तते तेन ज्ञपौ विशेष्यमाणेऽजन्तस्य

---

उ०—नावतिष्ठत इति । तस्याः सिद्धान्तिना काप्यनाश्रयणाच्चेत्यपि बोध्यम् । ननु द्युतेरित्त्वं दद्भावस्येव तत्वस्याप्यपवाद इति कथं विप्रतिषेधोऽत आह—पुरस्तादिति ।

अपो भि । छन्दस्येवेति । वृत्तिकृतोक्तां छन्दसीत्यनुवृत्तिमभ्युपेत्येदम् ।

आप्ज्ञप्यृ० । नन्वच इत्यनुवर्तनादनन्त्यस्यैव भविष्यतीत्यत आह—इहेति ।

---

× ७. ४. ४०. † ऋग्वेद १. ६. १.

## ज्ञपेरीत्त्वमनन्त्यस्य ॥ १ ॥

ज्ञपेरीत्त्वमनन्त्यस्येति वक्तव्यम् । ज्ञीप्सति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । लोपो*ऽन्त्यस्य बाधको भविष्यति । अनवकाशा विधयो बाधका भवन्ति सावकाशश्च णिलोपः । कोऽवकाशः ? कारणा हारणा । एवमपीत्त्वमन्त्यस्य लोपस्य बाधकं स्यात् । अनवकाशा हि विधयो बाधका भवन्तीत्त्वमपि सावकाशम् । कोऽवकाशः ? अनन्त्यः । कथं पुनः सत्यन्त्येऽनन्त्यस्येत्त्वं स्यात् ? भवेद्योऽचाऽङ्गं विशेषयेत्तस्यानन्त्यस्य न स्याद्वयं तु खल्वङ्गेनाचं विशेषयिष्यामः—अङ्गस्याचो यत्र तत्रस्थस्येति । एवमप्युभयोः सावकाशयोः परत्वादीत्त्वं प्राप्नोति तस्मादनन्त्यस्येति वक्तव्यम् ।

## अत्र लोपोऽभ्यासस्य ॥ ७ । ४ । ५८ ॥

## अभ्यासस्यानचि ॥ १ ॥

अभ्यासस्येति यदुच्यते तदनचि द्रष्टव्यम् । पतापतः चराचरः वदावदः+ ।

---

प्र०—ज्ञपेरीत्त्वं विधीयमानमलोऽन्त्यस्य प्राप्नोतीति भावः । लोपोऽन्त्यस्येति । ज्ञपिनाऽज्विशेष्यते यथाऽऽपृधिभ्यामेवं चैकप्रस्थानो विशेषणविशेष्यभावो भवति तत्रानन्त्यस्याचः सावकाशमीत्त्वं पूर्वविप्रतिषेधेन णिलोपो बाधते । इतरस्त्वगृहीताभिप्राय आह—अनवकाशा इति । ईत्त्वमेव त्वनवकाशत्वाद्बाधकं प्राप्नोति । एवमपीति । नन्वस्तु परत्वादीत्त्वं तस्य स्थानिवद्भावाण्णिलोपो भविष्यति । ईत्त्ववचनं त्वनन्त्यस्य श्रवणार्थं स्यात् । नैतदस्ति । सकृद्गतौ विप्रतिषेधे यद्बाधितमिति लोपाप्रसङ्गात् ।

अत्र लोपः० । चराचर इति । चरिचलिपतिवदीनामच्याक् चाभ्यसस्येति द्विर्वचनमागागमश्चेति हलादिशेषोऽत्र न भवति । नन्वागागमविधानसामर्थ्याद्धलादिशेषो न भविष्यति । नहि हलादिशेष आगमस्याऽऽदेशस्य वा विशेषोऽस्तीत्यादेश एवाऽऽकारो विधेयः स्यात् । नैतदस्ति । सत्यपि हलादिशेषे विगृहीतश्रवणार्थमाग्विधानं स्यादित्यनचीत्युच्यते ।

---

उ०—ननु येन नेति न्यायेनानन्त्यस्येत्त्वं लोपस्य बाधकं स्यादत आह—ज्ञपिनेति । यथाऽऽपिति । तयोरजन्तत्वासंभवादिति भावः । पूर्वविप्रतिषेधेनेति । ण्यल्लोपावियङ्यण्गुणवृद्धिभ्य इत्यनेन तत्र दीर्घग्रहणेनास्यापि ग्रहादिति भावः । ईत्त्वमेवेति । नतु लोपस्य बाधकत्वं युक्तमित्यर्थः । भाष्ये—एवमपीत्त्वमित्यस्यैवमित्त्वमेवेत्यर्थः । अपिशब्दस्यैवकारार्थस्य स्यानन्तरत्वयात् । स्यादिति । यदि तु पूर्वप्रतिषेधवार्तिके ईत्त्वमपि दीर्घग्रहणेन गृह्यते, पुनःप्रसङ्गविज्ञानमाश्रीयते तदेदं न वक्तव्यमिति बोध्यम् ।

अत्र लोपोऽ० । विगृहीतेति । सवर्णदीर्घबाधनद्वारेत्यर्थः । तत्प्रवृत्तिकाल एव वैदर्ध्योपस्थितेरिति भावः ।

---

* १. ४. ५१. + ३. १. १२.

## हलादिः शेषः ॥ ७ । ४ । ६० ॥

किमयं षष्ठीसमासः—हलामादिर्हलादिः हलादिः शिष्यत इति । आहो-स्वित्कर्मधारयः—हलादिर्हलादिः हलादिः शिष्यत इति ? कश्चात्र विशेषः ?

**हलादिशेषे षष्ठीसमास इति चेदजादिषु शेषप्रसङ्गः ॥ १ ॥**

हलादिशेषे षष्ठीसमास इति चेदजादिषु शेषः प्राप्नोति । आनक्ष, आनक्षतुः, आनक्षुः । अस्तु तर्हि कर्मधारयः ।

**कर्मधारय इति चेदादिशेषनिमित्तत्वाल्लोपस्य तदभावे लोपवचनम् ।२।**

कर्मधारय इति चेदादिशेषनिमित्तत्वाल्लोपस्य तदभावे—आद्यस्य हलोऽभावे लोपो वक्तव्यः । आटतुः, आटुः ।

**तस्मादनादिलोपः ॥ ३ ॥**

तस्मादनादिर्हल्लुप्यत इति वक्तव्यम् ।

**उक्तं वा ॥ ४ ॥**

किमुक्तम् ? प्रतिविधास्यते हलादिशेष इति+ । अयमिदानीं स प्रतिविधान-कालः । इदं प्रतिविधीयते, इदं प्रकृतमत्र लोपोभ्यासस्य [ ५८ ] इति ।

---

प्र०— हला० । हलामादिरिति । विग्रहप्रदर्शनं विस्पष्टप्रतिपत्त्यर्थम् । अजादिष्विति । अजादिष्वभ्यासेषु हलन्तरापेक्षयाऽऽदित्वे हल आश्रीयमाणे शेषः प्राप्नोति । आनक्षेति । अक्षू व्याप्तौ संघाते चेत्यस्माल्लिट् । अत्र ककारस्य शेषः प्राप्नोति । कर्मधारये त्वभ्यासापेक्षयाऽऽदित्वं हलो विज्ञायत इति शेषो न भवति । आदिशेषनिमित्तत्वादिति । शेषशब्दोऽन्यनिवृत्तियुक्तमवस्थानमाहेति यत्रैवाभ्यासे पपाचेत्यादावादेर्हलोऽवस्थानं तत्रैवान्यस्य निवृत्तिः स्यान्नान्यत्र । अवस्थानं हि शब्दार्थत्वात्प्रधानम् । नच प्रधानाभाव आनुषङ्गिककार्यप्रवृत्तिरानक्षेत्यत्रापि ककारषकारयोरस्यामवस्थायां निवृत्त्यप्रसङ्गः । षष्ठीसमासेऽप्याटतुराटुरित्यत्र टकारस्याऽऽदिवद्भावे न शेषप्रसङ्गः । स च प्रागुक्त एव । तत्र यद्याकृतिपक्ष आश्रीयते तदाऽभ्यासाकृतौ वर्तमानो हलादिः सर्वस्यामभ्यासव्यक्तावनादेर्निवृत्तिं करोतीति दोषाभावो व्यक्तिपक्षे तु यस्यामेवाभ्यासव्यक्तौ हल

---

उ०—हलादिः शेषः । भाष्ये—हलामादिरिति । नच 'न निर्धारणे' इति निषेधात्स दुर्लभः । त्रितयसंनिधान एव निर्धारणे षष्ठीतत्समासनिषेधयोरङ्गीकारेणादोषात् । एवं च प्रकृते शेषषण्ढ्यवेति समासो भवत्येवेति भावात् । कथमादिशेषनिमित्तत्वमनादिलोपस्ये-त्यत आह—शेषशब्द इति । आनुषङ्गिकेति । सामर्थ्यसिद्धेत्यर्थः । अवस्थितस्या-वस्थानविधानं हि सामर्थ्यादन्यनिवृत्तिं फलतीति यत्रैव तत्रैव तत्फलितमपि स्यादित्यर्थः । अस्यामवस्थायामिति । कर्मधारयाश्रयण इत्यर्थः । आदिवद्भाव इति । आद्यन्तवदि-त्यनेन । प्रागुक्त एवेति । प्रागुक्तोदाहरणन्यायेनोक्त एवेत्यर्थः । के ह्रस्वभावि-

---

+ ६. १. २.

ततो वक्ष्यामि 'ह्रस्वः' [ ५९ ] ह्रस्वो भवत्यादेशः । अभ्यासस्य लोप इत्यनुवर्तते । तत्र ह्रस्वभाविनां ह्रस्वो लोपभाविनां लोपो भविष्यति । ततो हलादिः शेषश्चेति । अथवैवं वक्ष्यामि—ह्रस्वोऽहल् । ह्रस्वो भवत्यभ्यासस्येति । ततोऽहल्, अहल्च भवत्यभ्यासः । तत आदिः शेषः । आदिः शेषो भवत्यभ्यासस्येति । अथवा योगविभागः करिष्यते । ह्रस्वादेशो भवत्यभ्यासस्य । ततो हल् । हल्च लुप्यतेऽभ्यासस्य । तत आदिः शेषः । आदिः शेषश्च भवत्यभ्यासस्य ।

## शर्पूर्वाः खयः ॥ ७ । ४ । ६१ ॥

## शर्पूर्वशेषे खर्पूर्वग्रहणम् ॥ १ ॥

शर्पूर्वशेषे खर्पूर्वग्रहणं कर्तव्यम् । खर्पूर्वाः खयः शिष्यन्ते खरो लुप्यन्त इति वक्तव्यम् । किं प्रयोजनम् ? उचिच्छिषति व्युचिच्छिषति । तुकः श्रवणं

प्र०—आदेरवस्थानं तत्रैवानादेर्निवृत्तिर्नान्यत्रेति दोषप्रसङ्गः । ह्रस्वभाविनामिति । ह्रस्वश्रुत्याऽच्परिभाषोपस्थानादजन्तस्याभ्यासस्य ह्रस्वो विधीयमानोऽलोऽन्त्यस्येति वचनादच एव दीर्घस्य ह्रस्वस्य च लोपबाधनार्थो विज्ञायत इति हल्विषय एवाऽऽदिशेषनिरपेक्षो लोपोऽवतिष्ठते । तत आदेरपि हलो लोपे प्राप्ते तद्बाधनार्थं हलादिः शेष इति सूत्रम् । एतदेव ज्ञापकं लोपविधावलोऽन्त्यपरिभाषा नोपतिष्ठत इत्यानर्चेत्यादावनन्त्यस्यापि हलो लोपो भवतीति न कश्चिद्दोषः । अहल् चेति । अविद्यमानहल्कोऽभ्यासो भवतीत्यर्थः ।

शर्पूर्वाः० । उचिच्छिषतीति । उच्छी विवासे । छे चेत्यन्तरङ्गत्वात्तुक् । सन् इट् । पूर्वत्रासिद्धमिति चुत्वस्यासिद्धत्वात् च्छिशब्दो द्विरुच्यते । तकारस्य शेषे प्राप्ते छशेषार्थं वार्तिकम् । ननु च पूर्वत्रासिद्धीयमद्विर्वचन इति श्चुत्वे कृते च्छिशब्दस्य द्विर्वचने चकारशेषेणैव रूपं सिध्यति । न चेदमस्ति निमित्ताभावे नैमित्तिकस्याप्यभाव इति येन चुत्वं निवर्तते । एवं तर्हि पूर्वत्रासिद्धीयमद्विर्वचन इत्येतदनित्यमुभौ साभ्यासस्येति वचनात् । अन्यथा कृतणत्वस्य द्विर्वचने प्राणिणदित्यादि सिध्यतीति किं सूत्रेण ? तथा चौजढदित्यसिद्धत्वस्योदाहरणं प्रदर्शयिष्यते । इतरो

उ०—नसत्राऽऽह—ह्रस्वश्रुत्येति । ह्रस्व इति सूत्रे लोप इत्यनुवर्तनादभ्यासह्रस्वो लोपश्च विधीयते । तत्र लोपस्य हल्विषये चरितार्थस्य ह्रस्वेन स्वीयाज्विषये बाध इति भावः । अजन्ताभ्यासस्येति । अभ्यासावयवस्याच इति वक्तुं युक्तम् । अन्यथा 'क्षी' इत्यादावेव स्यादत एवाचेत्यादावित्याहुः । आदिशेषनिरपेक्ष इति । तेनाऽऽटतुरित्यादि सिद्धम् ।

शर्पूर्वाः खयः । न चेदमस्तीति । प्रवृत्तस्य निवर्तयितुमशक्यत्वादिति भावः । अनित्यताज्ञापकाभावोऽत्र । प्रदर्शयिष्यत इति । पृणिक्तारादिभिरिति शेषः । इदं वार्तिकमपि तदनित्यत्वे ज्ञापकमिति तत्त्वम् । भवभावोः के निरपवादकशम्पा-

मा भूदिति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । चर्त्वे* कृते तुग्न भविष्यति । असिद्धं चर्त्वं तस्यासिद्धत्वात्तुक्प्राप्नोति+ । सिद्धकाण्डे पठितमभ्यासजश्त्वचर्त्वमेत्त्वतुकोरिति÷ । एवमप्यन्तरङ्गत्वात्प्राप्नोति तस्मात्खर्पूर्वग्रहणं कर्तव्यम् । न कर्त्तव्यम् । एत्त्वतुग्ग्रहणं न करिष्यते । अभ्यासजश्त्वचर्त्वं सिद्धमित्येव ।

आदिशेषप्रसङ्गस्तु ॥ २ ॥

आदिशेषस्तु प्राप्नोति× । तिष्ठासति । ननु चानादिशेष आदिशेषं बाधिष्यते । कथमन्यस्योच्यमानमन्यस्य बाधकं स्यात् । असति खल्वपि संभवे बाधनं भवत्यस्ति च संभवो यदुभयं स्यात् । यद्यादिशेषोऽपि भवति शर्पूर्ववचनमिदानीं किमर्थं स्यात् ।

शर्पूर्ववचनं किमर्थमिति चेत्खयां लोपप्रतिषेधार्थम् ॥ ३ ॥

प्र०-व्यवस्थितस्य समुदायस्य प्रविभज्यान्वाख्यानेऽन्तरङ्गत्वं तुकोऽनपेक्ष्याकृत एव तुकि द्विर्वचनं मत्वाऽऽह—चर्त्वे कृत इति । अभ्यासे चर्चेति चर्त्वे छस्य कृते तुगभावाद्रूपं सिध्यति । असिद्धमिति । तुकि कर्तव्ये । एवमप्यन्तरङ्गत्वादिति । शब्दनित्यत्वेऽप्युपायानामवश्याश्रयणीयोऽन्तरङ्गबहिरङ्गभावः । एत्त्वतुग्ग्रहणमिति । तदकरणे हलादिशेषेऽपि कर्तव्ये चुत्वलक्षणस्य चर्त्वस्यासिद्धत्वाभावात्तकारस्य चकारे कृते हलादिशेषेण निवर्तिते छकारे रूपं सिध्यति । आदिशेषप्रसङ्गस्त्विति । विषयभेदाद्विरोधाभावाच्च बाध्यबाधकभावायोगः । शर्पूर्ववचनमिति । अपवादा वाक्यार्थद्वयं

उ०-दाख्यानणिचि चङि रकशब्दस्य द्वित्व आकत्कदिति रूपार्थं वार्तिकमावश्यकमित्यन्ये । तन्न । एतत्प्रत्याख्यानपरभाष्यविरोधेनैषामनभिधानात् । द्विर्वचन इत्यस्य च द्वित्वे कर्तव्ये कृते च इत्यर्थः । अत एव वाक्, वाक्क् इति भाष्योदाहृतं† संगच्छते । अन्यथा चर्त्वस्यासिद्धत्वाद्गस्यैव द्वित्वेऽन्त्यस्य वाऽवसान इति चर्त्वे गश्रवणं स्यात् । किंच कृतेऽपि कस्य द्वित्वे चर्त्वस्यासिद्धत्वाद्गकारे झशि पूर्वस्य जश्त्व उक्तरीत्यैव चर्त्वाभावे गस्य श्रवणं स्यात् । नन्वन्तरङ्गस्तुक् कथमभ्यासचर्त्वं प्रतीक्षेतेत्यत आह—इतर इति । अकृत एव तुकि इति । परत्वमल्पापेक्षत्वरूपान्तरङ्गत्वं चानपेक्ष्येदम् । शब्दनित्यत्वेऽपीति । अन्वाख्येयस्य शब्दस्य नित्यत्वेऽपीत्यर्थः । वाक्यपदरूपश्च स नित्यः । उपायानाम् । तदन्वाख्यायकानां शास्त्रीयाणाम् । अवश्याश्रयणीय इति । अन्यथा क्वचिदप्यन्तरङ्गबहिरङ्गभावो न स्यादिति भावः । चुत्वलक्षणस्येति । तत्शब्दस्य द्वित्वेऽभ्यासखण्डे तकारस्थानिकचुत्वेत्यर्थः । 'पूर्वत्रासिद्धीयमद्वित्वे' इत्यनेनापि सिद्धेर्व्यर्थमेवैतदिति बोध्यम् । ननु येन नाप्राप्तिन्यायेनास्य हलादिशेषबाधकत्वात्कथमादिशेषप्रसङ्गोऽत आह—विषयभेदादिति । ननु खयः शेषविधानार्थत्वात्कथमानर्थक्यं शङ्कितमत आह—अपवादवाक्यार्थद्वयमिति । अपवादत्व-

* ८. ४. ५४. + ६. १. ७१. ÷ ८. २. ६. × ७. ४. ६० † ८. ४. ४७.

शर्पूर्ववचनं किमर्थमिति चेत्खयां लोपो मा भूदिति ।

**व्यपकर्षविज्ञानात्सिद्धम् ॥ ४ ॥**

व्यपकर्षविज्ञानात्सिद्धमेतत् । किमिदं व्यपकर्षविज्ञानादिति ? अपवादविज्ञानात् । अपवादत्वादत्रानादिशेष आदिशेषं बाधिष्यते । ननु चोक्तं कथमन्यस्योच्यमानमन्यस्य बाधकं स्यादिति । इदं तावदयं प्रष्टव्यः—यदि तन्नोच्येत किमिह स्यात् ? हलादिशेषः । हलादिशेषश्चेन्नाप्राप्ते हलादिशेष इदमुच्यते तद्बाधकं भविष्यति । यदप्युच्यतेऽसति खल्वपि संभवे बाधनं भवत्यस्ति च संभवो यदुभयं स्यादिति सत्यपि संभवे बाधनं भवति । तद्यथा—दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्यायेति सत्यपि संभवे दधिदानस्य तक्रदानं बाधकं भवति । एवमिहापि सत्यपि संभवेऽनादिशेष आदिशेषं बाधिष्यते ।

**दाधर्ति दर्धर्ति दर्धर्षि बोभूतु तेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतो दविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च ॥ ७ । ४ । ६५ ॥**

दाधर्तीति किं निपात्यते ? धारयतेः श्लावभ्यासस्य दीर्घत्वं णिलुक् च । अनिपात्यम् । तूतुजानवदभ्यासस्य दीर्घत्वं× पर्णशुपिवण्णिलुग्भविष्यति । धृङो वाऽभ्यासस्य दीर्घत्वं परस्मैपदं च । अनिपात्यम् । तूतुजानवदभ्यासस्य

प्र०-साधयन्ति । अपवादं च विदधत्युत्सर्गं च निवर्तयन्ति । तत्रोत्सर्गाभ्युपगम एकार्थवद्द्वितीयार्थस्य त्यागादानर्थक्यप्रसङ्ग एवेत्यर्थः । हलादिः शेष इत्यनेन खयां निवृत्तौ प्राप्तायामवस्थानविधानादानर्थक्यं नास्ति । व्यपकर्षविज्ञानादिति । व्यपकर्षणमुत्सर्गस्य निवर्तनं, तस्य विज्ञानं तस्मादपवादविधानादित्यर्थः । एकाभ्यासविषयत्वादविरोधेऽप्युत्सर्गापवादभावः ।

दाधर्ति० । श्लाविति । बहुलं छन्दसीति शपः श्लुः । तूतुजानवदिति । तुजादीनां दीर्घोऽभ्यासस्येति दीर्घत्वमित्यर्थः । पर्णशुपिवदिति । यथा पर्णानि शोषयन्ति पर्णशुपो वाता इत्यादौ क्विपि बहुलमन्यत्रापि संज्ञाछन्दसोरिति णिलुग् भवत्येवं दाधर्तीत्यादौ भविष्यतीत्यर्थः । धृङ इति । 'धृङ् अवस्थाने' इत्यस्य शे प्राप्ते व्यत्ययेन

उ०—[illegible] आशयमाह—हलादिः शेष इत्यनेनेति । ननु विषयभेदे विरोधाभावे च कथमपवादत्वमत आह—एकाभ्यासेति । [illegible] तस्यैव कार्यित्वमिति भावः । विषयभेदेऽपि बाधकत्वदर्शनादस्योपयोगश्चिन्त्यः । इदं तावदयं प्रष्टव्य इत्यादिना विषयभेदेनैव बाधकत्वप्रदर्शनमिति ध्येयम् ।

दाधर्ति दर्धर्ति० । एतौ [illegible]—बहुलमिति । तुजादीनां दीर्घोऽभ्यासस्येति । तूतुजानवदिति भाष्यप्रयोगः । शिलुगिति । अत

× ६. १. ७.

दीर्घत्वं युध्यतिवत्परस्मैपदं भविष्यति ।

दर्धर्तीति किं निपात्यते ? धारयतेः श्लावभ्यासस्य रुग्णिलुक्च । अनिपात्यम् । देवा अदुहवद्रुट्+ पर्णशुषिवरिणलुग्भविष्यति । धृङो वाऽभ्यासस्य रुक्परस्मैपदं च । अनिपात्यम् । देवा अदुहवद्रुड्युध्यतिवत्परस्मैपदं च भविष्यति ।

दर्धर्षीति किं निपात्यते ? धारयतेः श्लावभ्यासस्य रुग्णिलुक्च । अनिपात्यम् । देवा अदुहवद्रुट्पर्णशुषिवरिणलुक् च भविष्यति । धृङो वाऽभ्यासस्य रुक्परस्मैपदं च । अनिपात्यम् । देवा अदुहवद्रुड्युध्यतिवत्परस्मैपदं च भविष्यति ।

बोभूत्विति किं निपात्यते ? भवतेर्यङ्लुगन्तस्यागुणत्वं निपात्यते । नैतदस्ति प्रयोजनम् । सिद्धमत्रागुणत्वं भूसुवोस्तिङि [ ७. ३. ८८ ] इति । एवं तर्हि नियमार्थं भविष्यति । अत्रैव यङ्लुगन्तस्य गुणो न भवति नान्यत्रेति । क्व मा भूत् ? बोभवीतीति ।

तेतिक्त इति किं निपात्यते ? तिजेर्यङ्लुगन्तस्याऽऽत्मनेपदं निपात्यते । नैतदस्ति प्रयोजनम् । सिद्धमत्राऽऽत्मनेपदमनुदात्तङित आत्मनेपदम् [ १.३.१२ ] इति । नियमार्थं तर्हि भविष्यति । अत्रैव यङ्लुगन्तस्याऽऽत्मनेपदं भवति नान्यत्रेति । क्व मा भूत् ? बेभिदीति चेच्छिदीति ।

---

प्र०—शप् । युध्यतिवदिति । व्यत्ययो बहुलमित्यनेनेत्यर्थः । रुडिति । शीङो रुड् बहुलं छन्दसीत्यनेन । बोभवतीति । लिङर्थे लेट् । लेटोऽडाटावित्यट् । सिद्धमत्रेति । प्रत्ययलक्षणेन यद्यप्यनुदात्तङित इति ङित्त्वनिमित्तमात्मनेपदं न प्रत्ययनिमित्तं, तथाऽपि लोलूयत इत्यादौ यद्यङन्तादात्मनेपदं तत्प्रत्ययस्य ङित्त्वात्प्रत्ययलक्षणं भवत्येव । एतन्नियमार्थमिति । एवं चादादिषु चर्करीतं परस्मैपदमिति लिङ्गसिद्धानुवादः । परस्मै-

---

उ०—एव गुणाभावः, प्रकृते वृद्ध्यभावः । भाष्ये—धृङो वेति । ण्यन्तार्थस्य केवलार्थस्य च प्रयोगेषु प्रतीतेरिति भावः । व्यत्ययेनेति । अस्य तुदादित्वादिति भावः । शस्यैव व्यत्ययेन श्लुरित्यन्ये । कैयटमते श्लुरपि च्छान्दसत्वात्कल्प्यः । देवा अदुह्रवदिति भाष्ये पाठः । अदुद्रुवदित्यपाठः, द्रुधातोश्चङि रूपस्य सत्त्वात् । अत्रैव यङ्लुगन्तस्येति । श्नन्तस्याङ्गस्य गुणो नेत्यर्थं इति भावः । भूसुवोरित्यत्राङ्गस्येति तु निर्बीजम् । न च दीङो युडचीत्याद्यनुबन्धनिर्देशानां भरेत्यादिशपा निर्देशानां श्तिपा निर्देशानां च प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणमित्यर्थज्ञापकत्वं श्तिपेत्यादिपरिभाषया भाष्यानादृतत्वात् । यङ्लुगन्तस्य च्छान्दसत्वाच्चेत्याहुः । प्रत्ययलक्षणेनेति । न लुमतेति तु न । आत्मनेपदस्याङ्गकार्यत्वाभावात् । तथाऽपि लोलूयत इति । प्रत्ययलक्षणसूत्रं विध्यर्थमिति वार्तिककृन्मत इदम् । नियमार्थत्वपक्षे तु प्रत्ययासाधारणरूपानाश्रयणात् । प्रत्ययलक्षणेनाऽऽत्मनेपदाप्राप्तिरेवेति विध्यर्थ-

---

+ ७. १. ८.

## द्युतिस्वाप्योः संप्रसारणम् ॥ ७ । ४ । ६७ ॥

किमर्थं स्वपेरभ्यासस्य संप्रसारणमुच्यते यदा सर्वेष्वभ्यासस्थानेषु स्वपेः संप्रसारणमुक्तम्* ?

### स्वापिग्रहणं व्यपेतार्थम् ॥ १ ॥

स्वापिग्रहणं क्रियते व्यपेतार्थम् । व्यपेतार्थोऽयमारम्भः । सुष्वापयिषतीति । अस्ति प्रयोजनमेतत् ? किं तर्हीति ।

### तत्र क्यजन्तेऽतिप्रसङ्गः ॥ २ ॥

तत्र क्यजन्तेऽतिप्रसङ्गो भवति । इहापि प्राप्नोति—स्वापकमिच्छति स्वापकीयति स्वापकीयतेः सन्सिस्वापकीयिषतीति ।

### सिद्धं तु णिज्ग्रहणात् ॥ ३ ॥

सिद्धमेतत् । कथम् ? णिग्रहणात् । णिग्रहणं कर्तव्यम् । न कर्तव्यम् । निर्देशादेव हि व्यक्तं ण्यन्तस्य ग्रहणमिति । नात्र निर्देशः प्रमाणं शक्यं कर्तुम् ।

---

प्र०—पदग्रहणं कर्तव्यमेव चेदमात्मनेपदं नियम्यत इति भावकर्मणोर्यङ्लुगन्तादात्मनेपदं भवत्येव ।

द्युति० । किमर्थमिति । स्वपिरेव सौत्रत्वान्निर्देशस्य दीर्घं कृत्वा निर्दिष्ट इति पूर्वः पक्षः । तत्र लिटि किति वचिस्वपीति संप्रसारणविधानात्कृतसंप्रसारणस्य द्विर्वचने सत्यभ्यासस्य संप्रसारणं श्रूयते । अकिति लिट्यभ्यासस्येति संप्रसारणं सनो रुदविदेति कित्त्वविधानाद्वचिस्वपीति संप्रसारणम् । 'स्वपिस्यमिव्येञां यङि' इति यङि, चङि—स्वापेश्चङी'ति । व्यपेतार्थमिति । स्वपेः सनादिषु परतो विहितं संप्रसारणं णिचा व्यवधाने न प्राप्नोतीति स्वापेर्ण्यन्तस्याभ्यासस्य संप्रसारणं विधीयते । सुष्वापयिषतीति । स्वापयितुमिच्छतीति सन् । इड्गुणायादेशाः । णौ कृतस्य स्थानिवत्त्वात्स्वपेर्ण्यन्तस्य द्विर्वचनमभ्याससंप्रसारणं स्तौतिण्योरिति षत्वम् । इतरस्तु ण्यन्तस्य ग्रहणमबुद्ध्वा येन केनचित्प्रत्ययेन व्यवहितस्य स्वपेरभ्याससंप्रसारणमनेनोक्तमिति मत्वाऽऽह—अस्ति प्रयोजनमिति । स्वपितीति स्वापकस्तमिच्छतीति क्यच् । निर्देशादेवेति ।

---

उ०—मेवेदम । लिङ्गसिद्धानुवाद इति । अनुदात्तङिदादिभ्यो यङ्लुकोऽनभिधान इदं, तत्सत्त्वे तु वचनमेवेदं बोध्यम् । परंतु तत्सत्त्वेऽपि 'दितपाशपे' त्यस्याऽभावादनुवाद एवायमित्याहुः । कर्तव्यमेवेति । तुल्यजातीयविषयत्वान्नियमस्येत्यर्थः । अत एव प्रत्ययलक्षणसूत्रस्यानियमपक्षेण न फलभेदः । यदि यङ्लुगन्ताद्भावकर्मणोरभिधानमस्ति तदेदम् ।

द्युतिस्वाप्योः० । ननु स्वापीति ण्यन्तग्रहणात्तस्य च लक्षणान्तरेणासिद्धया प्रश्नोऽनुपपन्न अत आह—स्वपिरेवेति । वार्तिके व्यपेतशब्देन व्यवहितमुच्यते । वस्तुतो निमित्तप्रयोजकधर्मैर्व्यवच्युतं व्यपेतं तत्त्वं चात्र सनो व्यवहितत्वादकित्वाच्च बोध्यम् । स्वापेर्ण्यन्तस्येति । अन्यथा ह्रस्वमेवोच्चारयेदिति भावः । णौ कृतस्येति । पूर्व-

---

* १. १. १५; १७; १८; १९. ( १. २. ८. )

यथा हि निर्देशस्तथेहापि प्रसज्येत—स्वापं करोति स्वापयति स्वापयतेः सन्स्वापयिषतीति । तस्माण्णिग्रहणं कर्तव्यम् ।

### निजां त्रयाणां गुणः श्लौ ॥ ७ । ४ । ७५ ॥

### त्रिग्रहणानर्थक्यं गणान्तत्वात् ॥ १ ॥

त्रिग्रहणमनर्थकम् । किं कारणम् ? गणान्तत्वात् । त्रय एव निजादयः ।

### उत्तरार्थं तु ॥ २ ॥

उत्तरार्थं तर्हि त्रिग्रहणं कर्तव्यम् । भृञामित् [ ७६ ] त्रयाणां यथा स्यात् । इह मा भूत्—जहाति ।

### अर्तिपिपर्त्योश्च ॥ ७ । ४ । ७७ ॥

अर्तिग्रहणं किमर्थं न बहुलं छन्दसि [ ७८ ] इत्येव सिद्धम् । न ह्यन्त-

---

प्र०–ण्यन्त एव स्वपिः सूत्रे निर्दिष्ट इत्यर्थः । स्वापं करोतीति । स्वापेर्घ्यन्तात्करोतीति णिच् तस्माण्णिग्रहणमिति । स्वपेर्णेरिति वक्तव्यं तेन स्वपेर्यो णिर्विधीयते तदन्तस्य ग्रहणाद्घ्यन्तात्णेर्ग्रहणाभावः ।

निजां० । त्रिग्रहणमिति । वृत्करणपरिच्छिन्नास्त्रय एव निजादय इत्यर्थः । एकारे विधातव्ये गुणग्रहणमिक्परिभाषोपस्थानार्थम् । तेन हलादिशेषे कृते गुणो भवत्यन्यथा तदपवादो हलः स्थान एकारः स्यात् । अथाभ्यासविकारेऽपवादा नोत्सर्गान्बाधन्त इत्याश्रीयते तदा विस्पष्टार्थं गुणग्रहणम् ।

अर्त्ति० । अर्त्तिग्रहणमिति । ऋ सृ गताविति जुहोत्यादौ पठ्यते । गा स्तुतौ च

---

उ०–रूपस्येत्यर्थः । णावच आदेशः स्थानिवदिति वचनादिति भावः । अस्य प्राप्तिमात्रेणोल्लेखो न त्वत्र फलमस्ति किंचित् । तस्माण्णिग्रहणं कर्तव्यमित्यस्य स्वपेर्ण्यन्तस्य ग्रहणमिति व्याख्येयमित्यर्थः । ग्रहणाभाव इति । स्वपिप्रकृतिकण्यन्तस्यैव शीघ्रोपस्थितिकत्वेन द्युतिसाहचर्येण चानामधातोरेव ग्रहणमिति तत्त्वम् । द्युतेस्त्वण्यन्तस्यैव । एवं च वृत्त्याद्युक्तमदिद्युतदिति चिन्त्यमेव, भाष्यानुक्तत्वात् । अभ्यासेनाङ्गेन चाऽऽक्षिप्तप्रत्यययोरैक्य एवैतत्प्रवृत्तेश्च । अत एव दुद्योतकीयिषतीत्यादौ न दोष इति बोध्यम् ।

निजां त्र० । तेनेति । विषयभेदात् । गुणेन हलादिःशेषानुबाध इति भावः । गुणोत्तरं वा हलादिःशेष इत्यपि बोध्यम् । विस्पष्टार्थमिति । लिङ्गसिद्धपरिभाषाश्रयणगौरवपरिहारायेत्यर्थः । तदाश्रयणे च हलादिःशेषोत्तरमवशिष्टस्यैकार इति बोध्यम् । भाष्ये–उत्तरार्थमिति । कपिञ्जलाधिकरणन्यायस्त्वत्र शास्त्रे नाऽऽश्रीयत इति भावः ।

अर्तिपि० । गणान्तःस्थं छन्दसीति घृप्रभृतीनां सर्वेषां शेष इति पूर्वपक्षः । इत एव ज्ञापकान्न सर्वशेष इत्युत्तरम् ।

रेण च्छन्दोऽर्तेः श्लुर्लभ्यः । एवं तर्हि सिद्धे सति यदर्तिग्रहणं करोति तज्ज्ञापयत्याचार्यो भाषायामर्तेः श्लुर्भवतीति । किमेतस्य ज्ञापने प्रयोजनम् । इयर्तीत्येतत्सिद्धं भवति ।

**गुणो यङ्लुकोः ॥ ७ । ४ । ८२ ॥**

**ऐचोर्यङि दीर्घप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्वम् ॥ १ ॥**

ऐचोर्यङि दीर्घत्वं प्राप्नोति । डोढौक्यते तोत्रौक्यत इति । ननु च ह्रस्वत्वे कृते दीर्घत्वं न भविष्यति* । न सिध्यति । किं कारणम् ? ह्रस्वाद्धि परं दीर्घत्वम् । ह्रस्वत्वं क्रियतां दीर्घत्वमिति किमत्र कर्तव्यम् ? परत्वाद्दीर्घत्वेन भवितव्यम् ।

**न वाऽभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वात् ॥ २ ॥**

न वैष दोषः । किं कारणम् ? अभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वात् । 'अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते' इत्येषा परिभाषा कर्तव्या । कान्येतस्याः परिभाषायाः प्रयोजनानि ?

**प्रयोजनं सन्वद्भावस्य दीर्घत्वम् ॥ ३ ॥**

अचीकरत् अजीहरत् । सन्वद्भावमपवादत्वाद्दीर्घत्वं न बाधते+ ।

**मान्प्रभृतीनां दीर्घत्वमित्त्वस्य ॥ ४ ॥**

मान्प्रभृतीनां दीर्घत्वमपवादत्वादित्त्वं न बाधते÷ ।

**गणेरीत्त्वं हलादिशेषस्य ॥ ५ ॥**

गणेरीत्त्वमपवादत्वाद्धलादिशेषं न बाधते× ।

---

प्र०—च्छन्दसीति च्छन्दोग्रहणं पूर्वेषामपि घृप्रभृतीनां शेष इति च्छान्दस एवार्तिः श्लुविषयः । इयर्तीति । तिप् । शप् । शपः श्लुः । द्विर्वचनमुरदित्यत्त्वमित्त्वमभ्यासस्यासवर्णे इतीयङ्, गुणरपरत्वे ।

गुणो० । ऐचोरिति । ह्रस्वस्यावकाशः पपावित्यादि । दीर्घोऽकित इत्यस्यावकाशः कृतेऽकृते वा ह्रस्वत्वे पापच्यत इति । डोढौक्यत इत्यादौ तु परत्वादौकारस्य दीर्घे औकार एव प्राप्नोति । ऐकारस्योदाहरणं वेवैत ( पेपैण्यते ) इति । ह्रस्वत्वे कृत इति ।

---

उ०— गुणो यङ्लुकोः । औकार एवेति । ततश्चेगन्तत्वाभावाद्गुणस्याप्राप्तिः । पेपैण्यत इति । पैण् गतीत्यादिधातुः । अस्य स्थाने प्रैण् इत्यन्ये पठन्ति । तन्मते पेप्रैण्यत इति रूपम् । पेपेप्यत इति पाठे 'पिधृ पेधृ ग्रापने' इति धातुः । ऐजोरित्युपलक्षणमिति भावः । 'वेवैत' इति पाठे धातुश्चिन्तनीयः । कैयटप्रामाण्याद्वेपधातुं प्रपञ्चयन्ति । यङ्लुकि च रूपं वदन्ति । ननु कृतेऽपि ह्रस्वत्वे दीर्घः स्यात्परत्वादत आह—गुणस्त्विति । दीर्घे प्राप्ते गुणारम्भादिति भावः । प्रति-

---

* ७. ४. ५९; ८१. + ७. ४. ९३; ९४. ÷ ३. १. ६; ७. ४. ७९. × ७. ४. ९७; ६०.

इदमयुक्तं वर्तते । किमत्रायुक्तम् ? ऐचोर्यङि दीर्घप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्वमित्युक्त्वा तत उच्यते—न वाऽभ्यासविकारेष्वपवादस्योत्सर्गाबाधकत्वादिति । तस्याश्च परिभाषायाः प्रयोजनानि नामोच्यन्ते प्रयोजनं सन्वद्भावस्य दीर्घत्वं मान्प्रभृतीनां दीर्घत्वमित्त्वस्य गणेरीत्वं हलादिशेषस्येति च । न च सन्वद्भावमपवादत्वाद्दीर्घत्वं बाधते । किं तर्हि ? परत्वात् । न खल्वपि मान्प्रभृतीनां दीर्घत्वमपवादत्वादित्त्वं बाधते । किं तर्हि ? अन्तरङ्गत्वात् । न खल्वपि गणेरीत्वमपवादत्वाद्धलादिशेषं बाधते । किं तर्हि ? अनवकाशत्वात् । एवं तर्हीयं परिभाषा कर्तव्याऽभ्यासविकारेषु बाधका न बाधन्त इति । सा तर्ह्येषा परिभाषा

---

प्र० वक्ष्यमाणोऽभिप्रायः । गुणश्च दीर्घस्यापवाद इति दीर्घाभावः । इदमयुक्तमिति । परत्वाद्दीर्घप्रसङ्गमुक्त्वोत्सर्गापवादयोर्बाध्यबाधकत्वाभावः प्रतिपाद्यत इति । उक्तं प्रयोजनमपि किंचिन्न वचनानुरूपमिति पौर्वापर्यविरोधादयुक्तम् । न च सन्वद्भाव-मिति । सन्वद्भावस्यावकाशोऽचिक्षणदिति । दीर्घत्वस्यावकाशोऽदीदपदिति । इहोभयं प्राप्नोति । अचीकरदिति । तत्र परत्वाद्दीर्घः प्राप्नोति । न खल्वपीति । सन्प्रत्ययोऽभ्यासदीर्घत्वं च संनियोगेन विधीयत इत्यन्तरङ्गं दीर्घत्वम् । इत्त्वं तु बहिरङ्गम् । सनि परतोऽङ्गाधिकारेऽभ्यासस्याकारान्तस्य विधानात् । न खल्वपीति । आदेः शेषो विधीयतेऽन्त्यस्य त्वीत्त्वमिति नास्त्युत्सर्गापवादभावो हलादिशेषेऽभ्यासस्येत्यवयवषष्ठी । ई च गण इत्यत्राभ्यासस्येति स्थानषष्ठीति भिन्नविषयावीत्त्वहलादिशेषावनवकाशत्वात्तु बाधकमीत्त्वं हलादिशेषस्य । निरवकाशा हि विधयः सावकाशान्विधीन्बाधन्त इति न्यायात् । यदा तु येन नाप्राप्त इति न्यायस्तदाऽस्त्येवोत्सर्गापवादभावः । अभ्यास-

---

उ०—पाद्यत इतीति । अस्यायुक्तत्वं हेतोर्वैयधिकरण्यात् । उक्तं प्रयोजनमपीति । तदपि वैयधिकरण्यादयुक्तमित्यर्थः । पौर्वापर्यविरोधादिति । पूर्वापरविरोधादित्यर्थः । अचिक्षणदिति । अत्राभ्यासस्य लघुत्वाभावाद्दीर्घाप्राप्तिः । अदीदपदिति । अत्र सन्यत इत्यादिना सनि कस्यचित्कार्यस्याविधानात्सन्वत्त्वाप्राप्तिः । दीर्घस्तु सन्वद्भावविषय उच्यते न तु तेनेति भावः । सन्प्रत्ययोऽभ्यासेति । ननु सन्प्रत्ययकालेऽभ्यासाभावेन कथं दीर्घस्यान्तरङ्गत्वमिति चेन्न । अभ्यासस्याऽऽवश्यकत्वेन तावत्पर्यन्तं दीर्घस्यावस्थानेऽपीत्त्वपर्यन्तमवस्थितौ कारणाभावेन तदपेक्षयान्तरङ्गत्वादिति भावः । नन्वनवकाशत्वमेवापवादत्वमित्ययुक्तमत आह—आदेः शेष इति । नास्तीति । विषयभेदादिति भावः । विषयभेदेऽप्यनवकाशत्वमात्रं बाधानिमित्तमस्तीति तात्पर्यं तदाह—निरवकाशा हीति । उत्सर्गे कृते चरितार्थस्यैवापवादत्वं गणेरीत्वं तु नाभ्यासलोपे कृते प्राप्नोति । अलोऽन्त्यस्येत्येकवाक्यतयाह्नि वाक्यार्थेन णस्यैव तत्प्राप्तिः । एवं चानवकाशत्वं स्पष्टमेवेति भावः । शेषपदलभ्यनिवृत्तिबाधकत्वे भाष्यतात्पर्यादत्र कैयटश्चिन्त्यः । यदा त्विति । एकाभ्यासविषयत्वान्नाप्राप्ते हलादिःशेष

कर्तव्या ? न कर्तव्या । आचार्यप्रवृत्तिर्ज्ञापयति भवत्येषा परिभाषेति यदयमकित इति प्रतिषेधं शास्ति+ ।

## दीर्घोऽकितः ॥ ७ । ४ । ८३ ॥

अकित इति किमर्थम् ? यंयम्यते रंरम्यते । अकित इति शक्यमकर्तुम् । कस्मान्न भवति यंयम्यते रंरम्यत इति ? नुकि कृते×ऽनजन्तत्वात् । अत उत्तरं पठति—

**अकिद्वचनमन्यत्र किदन्तस्यालोऽन्त्यनिवृत्त्यर्थम् ॥ १ ॥**

अकिद्वचनं क्रियते ज्ञापकार्थम् । किं ज्ञाप्यम् ? एतज्ज्ञापयत्याचार्योऽन्यत्र किदन्तस्याभ्यासस्यालोऽन्त्यविधिर्न भवतीति* । किमेतस्य ज्ञापने प्रयोजनम् ?

**प्रयोजनं ह्रस्वत्वात्त्वेत्त्वगुणेषु ॥ २ ॥**

ह्रस्वत्वम्—अवचच्छतुः अवचच्छुः । अत्त्वम्—चच्छृदतुः चच्छृदुः । इत्त्वम्—चिच्छादयिषति चिच्छर्दयिषति । गुणः—चेच्छिद्यते चोच्छुप्यते । तुकि कृतेऽनन्त्यत्वादेते विधयो न प्राप्नुवन्ति÷ ।

प्र०-विकारेषु बाधका इति बाधकत्वमनपेक्षितनिमित्तविशेषमाश्रणीयमित्यर्थः । यद्यमिति । यथा चाकित इति ज्ञापकं तथोत्तरत्र वक्ष्यते ।

दीर्घोऽ० । नुकि कृत इति । दीर्घश्रुत्याऽच्परिभाषोपस्थानादचाऽभ्यासस्य विशेषणादजन्तस्याभ्यासस्य दीर्घो विधीयते । स चालोऽन्त्यस्येति वचनादन्त्यस्याचो भवति । अकिद्वचनमिति । यदाचाऽभ्यासो विशेष्यतेऽकित इति प्रतिषेधोऽनर्थकः स्यात् । तस्मादभ्यासेनाज्विशेष्यते । ततोऽभ्यासस्येति विशेषणषष्ठीत्यलोऽन्त्यस्येति नोपतिष्ठत इत्येतज्ज्ञाप्यत इत्यर्थः । अवचच्छतुरिति । छो छेदने । आत्वम् । लिट् । छाशब्दस्य द्विर्वचनमन्तरङ्गत्वात्तुकि कृतेऽनन्त्यस्याप्यचो ह्रस्वत्वम् । चच्छृदतुरिति । उछृदिर् दीप्तिदेवनयोः । छृदो द्विर्वचनम् । छे चेति तुकि कृत उरदित्यत्त्वमभ्यासेन ऋवर्णस्य विशेषणात् । चिच्छादयिषतीति । छद संवरणे । परत्वादेते विधय इति ।

उ०-इत्यमारभ्यत इति यथाश्रीयत इत्यर्थः । अनपेक्षितेति । अनपेक्षितो निमित्तविशेषो येन नाभ्यासव्यपदेशादिकं येन तदित्यर्थः ।

दीर्घोऽकितः । ननु कृतेऽपि नुगन्तस्य तस्य दीर्घः स्यादत आह—दीर्घश्रुत्येति । अभ्यासेऽन्त्यनिवृत्तौ ज्ञापकत्वमुपपादयति—यदाचेति । अन्तरङ्गत्वादिति । वर्णाश्रयत्वेनेति भावः । न च तुकि कृतेऽपि दृग्आदिरोपेण तन्निवृत्तौ

+७. ४. ८३ ×७. ४. ८५. * १. १. ५२. ÷६. १. ७३; ७. ४. ५९; ६६; ७९; ८२.

विप्रतिषेधात्सिद्धम् ॥ ३ ॥

नैतानि सन्ति प्रयोजनानि । विप्रतिषेधेनाप्येतानि सिद्धानि । तुक्क्रियतामेते विधय इति किमत्र कर्तव्यम्, परत्वादेते विधय इति ।

तदन्ताग्रहणाद्वा ॥ ४ ॥

अथवा नैवं विज्ञायतेऽभ्यासस्याजन्तस्यर्कारान्तस्याकारान्तस्येगन्तस्येति । कथं तर्हि ? अभ्यासे योऽजभ्यासे य ऋकारोऽभ्यासे योऽकारोऽभ्यासे य इगिति । एवं च कृत्वा दीर्घत्वं प्राप्नोति । एवं तर्हीदमिह व्यपदेश्यं सदाचार्यो न व्यपदिशति । किम् ? अपवादो नुग्दीर्घत्वस्येति ।

एवं तर्हि सिद्धे सति यदकित इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो भवत्येषा परिभाषाऽभ्यासविकारेषु बाधका न बाधन्त इति । किमेतस्य ज्ञापने

प्र०—न ह्येतेषूदाहरणेषु तुगन्तरङ्गः । प्रत्ययविशेषनिमित्तत्वात् । अभ्यासस्याभ्यासाश्रयत्वात्तु ह्रस्वादीनाम् । तदन्ताग्रहणाद्वेति । ज्ञापकमन्तरेणापि विशेषणविशेष्यभावे कामचारात्कृतेऽपि तुक्येते विधयः सिध्यन्ति । एवं च कृत्वेति । ततश्चाकित इति वचनं दीर्घनिषेधाय नतु ज्ञापकाय । अपवादो नुगिति । नाप्राप्ते दीर्घे नुक आरम्भात् । एवं तर्हीति । ओहाक् त्याग इत्यस्य तु निषेधायाकित इति न भवति । धातुर्ह्ययं किन्त्वभ्यासः । ककारो हि हश्च व्रीहिकालयोरित्यत्र हाङ्हाकोः सामान्यग्रहणार्थः ।

उ०—ह्रस्वः सुलभः, अभ्याससंज्ञाप्रवृत्तिकाले स्थानिद्वारा साक्षाद्वा संनिहितानां हलामेव तेन निवृत्तेः । अत एव नुगत इत्यादि चरितार्थमिति तात्पर्यम् । नन्वन्तरङ्गस्य तुको बहिरङ्गह्रस्वादीनां च विप्रतिषेधोऽयुक्तोऽत आह—नह्येतेष्विति । प्रत्ययविशेषनिमित्तत्वादिति । तुग्विधावभ्यासस्यानाश्रयणेऽपि प्रकृतलक्ष्येऽभ्याससापेक्षत्वं तुकः । अत एव दध्यानयेत्यादौ यणः संयोगान्तलोपं प्रत्यसिद्धत्वं वार्तिककारेणाऽऽश्रितमिति भावः । तुकोऽन्तरङ्गत्वेन विप्रतिषेधात्सिद्धमित्ययुक्तम् । ह्रस्वादीनामाङ्गत्वेन बहिरङ्गत्वादित्याशयेन तदन्ताग्रहणाद्वेति वार्तिकं तद्व्याचष्टे—भाष्येऽथवेति । अत एव चिच्छासति चाच्छायत इत्यादावन्तरङ्गत्वात्तुक्यभ्यासह्रस्वत्वेत्वदीर्घत्वसिद्धिः । ननु ज्ञापकेनाप्यस्यैवार्थस्योक्तत्वात्पुनरुक्तमेतदत आह—ज्ञापकमन्तरेणेति । न्यायसिद्धेऽर्थे लिङ्गमनावश्यकमित्यर्थः । नाप्राप्त इति । अपवादप्रवृत्तौ नोत्सर्गप्रवृत्तिस्तद्विषय इति भावः । नन्वेवं धातोः किल्करणं व्यर्थमत आह—ककार इति । अन्यथा तदनुबन्धकपरिभाषया ओहाङो न स्यादिति भावः । अत्र सूत्रेऽनुबन्धानुच्चारणादेतत्परिभाषाया विषयाभावेन वनो र चेत्यत्रेव सामान्यग्रहणं ककारं विनाऽपि सूपपादमिति

प्रयोजनम् ? ऐचोर्यङि दीर्घप्रसङ्गो ह्रस्वाद्धि परं दीर्घत्वमित्युक्तं+ स न दोषो भवति ।

**नुगतोऽनुनासिकान्तस्य ॥ ७ । ४ । ८५ ॥**

**नुकि यंयम्यते रंरम्यत इति रूपासिद्धि ॥ १ ॥**

नुकि सति यंयम्यते रंरम्यत इति रूपं न सिध्यति× ।

**अनुस्वारागमवचनात्सिद्धम् ॥ २ ॥**

अनुस्वारागमो वक्तव्यः । एवमपीदमेव रूपं स्यात्—यय्यँम्यते÷, इदं न स्यात्—यंयम्यते ।

**पदान्तवच्च ॥ ३ ॥**

पदान्तवच्चेति वक्तव्यम् । वा पदान्तस्य [ ८. ४. ५६ ] इति ।

**रीगृदुपधस्य च ॥ ७ । ४ । ९० ॥**

**रीगृत्वतः संयोगार्थम् ॥ १ ॥**

रीगृत्वत इति वक्तव्यम् । किं प्रयोजनम् ? संयोगार्थम् । संयोगान्ताः प्रयोजयन्ति । वरीवृश्च्यते परीपृच्छ्यते वरीभृज्ज्यते ।

---

प्र०- नुग० । तपकरणं भूतपूर्वस्यापि दीर्घस्य निवृत्त्यर्थम् । तेन बाभाम्यत इति नुग् न भवति । नुकि यंयम्यत इति । अज्झल्परत्वादनुस्वारो न प्राप्नोति । एवमपीति । नित्यं परसवर्णः प्राप्नोति, विकल्पेन चेष्यते । पदान्तवच्चेति । तेन वा पादन्तस्येति परसवर्णविकल्पः ।

---

उ०-चिन्त्यम् । तस्मात् 'गस्थकन्' 'प्रुसृल्व' इति पूर्वोत्तरसाहचर्येण हृश्चेति सूत्रेऽप्यन्यनुबन्धकस्यैव ग्रहणं स्यादिति हाकः किरवमिति कैयटाशयः । ज्ञापकपरभाष्यप्रामाण्याद् हाधातोर्यङ्लुकावेव न स्तः । अन्यथा किरवस्य चारितार्थ्येऽपि द्विः प्रयोगत्वाद्द्विर्वचनस्याभ्यासस्य किरवमेवेत्यकिद्ग्रहणचारितार्थ्यं स्पष्टमेवेत्यपरे । अन्ये तु न विद्यते किद्यस्मिन्निति बहुव्रीह्याश्रयणात्तत्र चानन्तरस्येति न्यायेन प्रतिपदोक्तपरिभाषया चाभ्यासनिमित्तकित एव ग्रहणमिति न दोषः । अत एव चाच्छायत इत्यादौ माधवाद्युदाहृतो दीर्घः संगच्छत इत्याहुः ।

नुगतो०ऽ । नित्यं परसवर्ण इति । अनुस्वारस्य ययीत्यनेन । भाष्ये पूर्वत्र परसवर्णघटित उत्तरत्रानुस्वारघटितः पाठः ।

रीग्० । रीगृत्वत इति । अपूर्वमेवेदम् । ननु ऋदुपधस्येत्यस्य स्थाने, उत्तरार्थं तस्याऽऽवश्यकत्वात् ।

---

+ ७. ४. ८२. × ८. ३. २४. ÷ ८. ४. ५८.

## रुग्रिकौ च लुकि ॥ ७ । ४ । ९१ ॥

**मर्मृज्यते मर्मृज्यमानास इति चोपसंख्यानम् ॥ १ ॥**

मर्मृज्यते मर्मृज्यमानास इति चोपसंख्यानं कर्तव्यम् । मर्मृज्यते मर्मृज्यमानासः ।

## ऋतश्च ॥ ७ । ४ । ९२ ॥

किमिदमृकारग्रहणमङ्गविशेषणम्—ऋकारान्तस्याङ्गस्येति, आहोस्विदभ्यासविशेषणम्—ऋकारान्तस्याभ्यासस्येति । अङ्गविशेषणमित्याह । कथं ज्ञायते ? यदयं तपरकरणं करोति । कथं कृत्वा ज्ञापकम् ? न हि कश्चिदभ्यासे दीर्घोऽस्ति× यदर्थं तपरकरणं क्रियते । अथाङ्गविशेषण ऋकारग्रहणे सति तपरकरणे किं प्रयोजमम् ? इह मा भूत्—चाकर्ति चाकीर्तः चाकिरति ।

किरतिं चर्करीतान्तं पचतीत्यत्र यो नयेत् ।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन संग्रहः ॥

## सन्वल्लघुनि चङ्परेऽनग्लोपे ॥ ७ । ४ । ९३ ॥

---

प्र०— रुग्रि० । मर्मृज्यत इति । रुग्रिकौ च लुकीति रुग्विधीयमानो न प्राप्नोति इति वचनम् ।

ऋतश्च । अङ्गविशेषणमिति । यद्यप्यभ्यासविशेषणे भूतपूर्वदीर्घनिवृत्त्यर्थं तपरकरणं तथापि मुख्यकल्पनासंभवे गौणी कल्पना किमित्याश्रीयत इति मत्वा भाष्यकारेणाङ्गविशेषणमृत इत्याश्रितम् । पचतीति । लट उपलक्षणं तेन लटि चाकर्तीत्यादिरूपाणि किरतिं यो नयेदित्यर्थः । प्राप्तिज्ञमिति । तपरकरणादङ्गविशेषणमृत इति । तेन रुगादीनां विषयविभागेन या प्राप्तिस्तां जानातीत्यर्थः । प्रारब्ध इति । संग्रहणं संग्रहः । साधुशब्दराशिः । स तेन प्रारब्ध इति योग्यतातिशयोद्भावनेन स्तूयते ।

सन्वत्० । चङ्पर इति बहुव्रीहिणाऽन्यपदार्थो णिराश्रीयते । तेनाचकमतेति केवले चङि सन्वद्भावो न भवति । नहि णिजन्यतिरेकेणान्यश्चङ्परः संभवति । तेन चङ्परे

---

उ०— ऋतश्च । उपलक्षणमिति । दशलकाराणामपि । चाकरितेत्यादावपि रुगाद्यभावात् । नयेदिति । प्रापयेदित्यर्थः ।

सन्वल्लघुनि० । अग्रिमभाष्योत्थानाय सोपपत्तिकं सूत्रार्थं दर्शयति—चङ्पर इतीति । परशब्दसामर्थ्याच्चङ् परो यस्मादिति बहुव्रीहिः कर्मधारये हि चङीत्येव वदेदिति भावः । भाष्यस्थचङ्परपदेष्वप्येवमेव । अन्यपदार्थश्च सामर्थ्याण्णिरेव तदाह—णिरिति । लघ्वक्षरे त्वन्यपदार्थे बहुव्रीह्याश्रयणं परशब्दश्च व्यर्थः स्यादिति भावः । एवं च चङ्परे लघुनीति वैयधिकरण्येन संबन्ध इत्याह—तेनेति । सन्वदिति । सन्यत इत्यादियोगत्रयेण

---

× ७. ४. ५९.

इह कस्मान्न भवति—अजजागरत् ? लघुनि चङ्पर इत्युच्यते, व्यवहितं चात्र लघु चङ्परम्। इहापि तर्हि न प्राप्नोति—अचीकरत्, अजीहरत्। वचनाद्भविष्यति। इहापि वचनात्प्राप्नोति—अजजागरत्। येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्। केन च नाव्यवधानम् ? वर्णेन। एतेन पुनः संघातेन व्यवधानं भवति, न भवति च। एवमपि 'अचिक्षणत्' अत्र न प्राप्नोति। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति भवत्येवंजातीयकानामित्त्वमिति यदयमत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् [ ९५ ] इतीत्त्वबाधनार्थमत्त्वं शास्ति।

**सन्वद्भावदीर्घत्वे णेर्णिच्युपसंख्यानम् ॥ १ ॥**

सन्वद्भावदीर्घत्वे णेर्णिच्युपसंख्यानम् कर्तव्यम्। वादितवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन। किं पुनः कारणं न सिध्यति ? णिचा व्यवहितत्वात्। लोपे कृते* नास्ति व्यवधानम्। स्थानिवद्भावाद्व्यवधानमेव। प्रतिषिध्यतेऽत्र स्थानिवद्भावो दीर्घविधिं प्रति न स्थानिवदिति×। एवमप्यनग्लोप

प्र०—णौ यल्लघु तस्मिन्परतोऽभ्यासस्य सन्वत्कार्यं भवति। इह कस्मादिति। न कचिदभ्यासो लघोरनन्तरः संभवतीति सत्सप्तमीविज्ञानादत्रापि प्रसङ्ग इति भावः। इतरः परसप्तम्याश्रये येन नाव्यवधानमित्याश्रीयत इत्याह—लघुनीति। एवंजातीयकानामिति। संयोगव्यवहितानामित्यर्थः। णिचा व्यवहितत्वादिति। चङ्परे णौ यल्लघु तस्मिन्परतोऽभ्यासस्य सन्वद्भावः। यस्मिंश्चात्र णौ लघुर्नासौ चङ्परः। यस्तु चङ्परो न तस्मिन्परतो लघुः। दीर्घविधिं प्रतीति। ननु दीर्घे कर्तव्ये भवति स्थानिवत्त्वनिषेधः। सन्वद्भावे तु प्राप्नोति स्थानिवद्भावः। एवं तर्हि दीर्घभावित्वादिकारोऽप्युपचाराद्दीर्घशब्देनोच्यत

उ०—विहितमित्यर्थः। नन्वजजागरदित्यादावभ्यासस्य लघ्वक्षरपरत्वाभावात्कथमतिप्रसङ्गोऽत आह—न कचिदिति। सत्सप्तमीति। सामर्थ्यात्तस्मिन्निति परिभाषाया अप्रवृत्तेरिति भावः। अपीपचदित्यादावपि पकारेण व्यवधानमिति तात्पर्यम्। भाष्ये—व्यवहितं चात्र लघु चङ्परमिति। चङ्परे णौ यल्लघु तदभ्यासस्य व्यवहितमित्यर्थः। चङ्परमिति पाठेऽपि चङ्पदेन तत्परणिर्लक्ष्यत इति न दोषः। अत्स्मृदृत्वरेत्यत्र चङ्परे णाविति वर्तते। तद्धीत्वबाधनार्थम्। अन्यथाऽचिक्षणदित्यादाविव तत्रापि सन्वत्त्वाभावादित्त्वाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेति बोध्यम्। नन्वव्यवहितणिचमादाय दीर्घोऽस्त्वत आह—चङ्पर इति। सन्वद्भावे त्विति। एवं चेत्त्वं न स्यादिति भावः। सन्वद्भावदीर्घत्वे इति विषयनिर्देशमध्ये दीर्घत्वरूपविषयनिर्देशप्रत्याख्यानपरतया भाष्यस्य युक्तत्वेन कैयटोक्तं चिन्त्यमेव चिन्त्यम्।

* ६. ४. ५१. × १. १ ५८.

इति प्रतिषेधः प्राप्नोति। वृद्धौ* कृतायां लोपस्तन्नाग्लोप्यङ्गं भवति। एवं तर्हीदमिह संप्रधार्यम्—वृद्धिः क्रियतां लोप इति किमत्र कर्तव्यम्? परत्वाद्वृद्धिः। नित्यो लोपः। कृतायामपि वृद्धौ प्राप्नोत्यकृतायामपि। लोपोऽप्यनित्यः। अन्यस्य कृतायां वृद्धौ प्राप्नोत्यकृतायामन्यस्य, शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति। उभयोरनित्ययोः परत्वाद्वृद्धिः। वृद्धौ कृतायां लोपस्तन्नाग्लोप्यङ्गं भवति।

**मीमादीनां तु लोपप्रसङ्गः ॥ २ ॥**

मीमादीनां तु लोपः प्राप्नोति×। अमीमपत्।

**सिद्धं तु रूपातिदेशात् ॥ ३ ॥**

सिद्धमेतत्। कथम्? रूपातिदेशोऽयम्। सनि यादृशमभ्यासरूपं तत्सन्वद्भावेनातिदिश्यते न च मीमादीनां सन्यभ्यासरूपमस्ति।

**अङ्गान्यत्वाद्वा सिद्धम् ॥ ४ ॥**

अथवा ण्यन्तमेतदङ्गमन्यत्। लोपे कृते नाङ्गान्यत्वम्। स्थानिवद्भावादङ्ग-

प्र०-इति भाष्यकारस्याभिप्रायः। किंतु मुख्ये दीर्घे संभवति गौणग्रहणमयुक्तमिति चिन्त्यमेतत्। वृद्धौ कृतायां लोप इति। एतच्च णौ चङीति सूत्रभाष्येण विरुध्यते। तत्र ह्यगिति प्रत्याहारग्रहणसामर्थ्यात् कृतायां वृद्धौ लोप इति प्रतिपादितम्। मीमादीनां त्विति। सनि यद्दृष्टमभ्यासकार्यं तदतिदिश्यते मीमादीनां च सन्यभ्यासस्य लोपो दृष्ट इति सन्वद्भावात्प्राप्नोति। सिद्धं त्विति। नेह कार्यमतिदिश्यतेऽपि तु रूपम्। लोपश्चाभावः। रूपं लोपो न भवतीति नातिदिश्यते। किंचात्र लोपोऽभ्यासस्येति। अत्रग्रहणं विषयावधारणार्थम्। तेनेसादिविषय एवाभ्यासस्य लोपो भवतीति तदभावे तु सन्वद्भावान्न भवति। अङ्गान्यत्वादिति। मीमादीनामङ्गानामभ्यासलोपो विहितः।

उ०-एतच्चेति। ण्यन्ताण्णिविषय एव तत्र तदाश्रितं ण्यल्लोपाविति पूर्वविप्रतिषेधसत्त्वाच्च णिविषये वृद्धौ कृतायां लोप इत्याश्रयितुमशक्यमित्यपि बोध्यम्। तस्मादुपसंख्यानमेवाऽऽश्रयणीयम्। तन्नाग्लोप्यङ्गमिति। तत्रैवात्राप्येकदेशिनो वाक्यं तस्य तत्रत्यदूषणमपि सूचितमनेनेति बोध्यम्। सनि यद्दृष्टमिति। कार्यातिदेशाश्रयेण पूर्वः पक्ष इति भावः। सन्वद्भावादिति। सन्वद्भावाल्लोपः प्राप्नोतीत्यर्थः। कार्यातिदेशेऽपि स्वयं परिहरति—किंचेति। तदभावे त्विति। धातोः सन्वद्भावाभावादिस्भावस्य सन्वद्भावेनाभावे त्वित्यर्थः। यद्वा सादौ सनि तद्विधानात्सामान्यातिदेशे विशेषानतिदेशेनोभयोरपि सन्वद्भावेनाभाव इति तात्पर्यम्। मीमादीनामिति चङ्निरूपिताङ्गाभ्यासस्य ह्यनेन सन्वद्भावः। न च तदङ्गसंबन्ध्यभ्यासस्य

* ७. २. ११५. × ७. ४. ५४; ५८.

मन्यत्। कथमजिज्ञपत् ? अत्र सन्यपि ण्यन्तस्यैवोपादानमाज्ञप्यृधामीत् [ ७. ४. ५५ ] इति। अत्राङ्गान्यत्वाभावादभ्यासलोपः स्यात्। तस्मात्पूर्व एव परिहारः—सिद्धं तु रूपातिदेशादिति।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये सप्तमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम्। पादश्च समाप्तः।

॥ सप्तमोऽध्यायः समाप्तः ॥

---

प्र०—अयं त्वभ्यासो ण्यन्तानामिति न लुप्यते। अन्ये तु व्याचक्षते—चङ्परे णौ यदङ्गं तदभ्यासस्य सन्वद्भावो विधीयते। णौ मीमादीन्येवाङ्गानि युकस्तद्भक्तत्वात्तद्ग्रहणेन ग्रहणात्तस्मादङ्गान्यत्वादित्यस्यायमर्थः—येषामङ्गानामच इसादिर्विधीयते तदभ्यासस्यात्र ग्रहणाद्विषयावधारणाल्लोपो नान्येपामितीसादिरहितानामर्मीमपदित्यादौ च धातोः सन्वद्भावाभावादिसाद्यभावादभ्यासलोपाभावः। अथवा सकारादौ सन्यभ्यासलोपो विहितो न सन्मात्रे। सामान्यातिदेशे विशेषानतिदेशाल्लोपाभावः।

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे सप्तमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम्। पादश्च चतुर्थोऽध्यायश्च सप्तमः समाप्तः।

---

उ०—लोपोऽत्र लोपो इत्यनेनेति नानेन तदतिदेश इति भावः। अन्ये त्विति। चङ्परे णौ यल्लघु इत्यर्थेऽप्यङ्गस्याभ्यास इत्यत्राङ्गं किंनिरूपितं ग्राह्यम्। चङ्निरूपितं णिनिरूपितं वा। तत्रोपस्थितत्वात्प्राधान्याच्च णिनिरूपितमेव गृह्यत इति तात्पर्यान्न पूर्वभाष्यविरोधोऽत्रेति बोध्यम्। एवं चोक्तव्याख्याऽसंगतैवेत्याशयेनाऽऽह—तस्मादिति। नान्येपामित्यस्य व्याख्या—इसादिरहितानामिति। इसाद्यभावे हेतुः—धातोः सन्वद्भावाभावादिति। मीमादीनां धातूनामच इसादयो विधीयन्ते। न च धातुकार्यं प्रति सन्वद्भावोऽस्ति, अभ्यासकार्यविषयत्वात्तस्येत्यर्थः। एतण्ण्यन्तमङ्गमभ्यासलोपविषयादिसादिविशिष्टादङ्गादन्यदिति भाष्याक्षरार्थः। सकारादाविति। सः सीत्यनुवर्तनादिति भावः। यद्यपि शाब्दं प्राधान्यं णेस्तस्याऽपि ण्यन्तप्रकृतिकतिङर्थद्योतकतया चङोऽप्यार्थं प्राधान्यमेवेति तन्निरूपिताङ्गसंबन्ध्यभ्यासस्यैव सन्वत्त्वमिति पूर्वोक्तार्थमेव भाष्यस्याभिप्रेत्य शङ्कते भाष्ये—लोपे कृत इति। सिद्धान्त्येकदेश्याह—स्थानिवद्भावादिति। चोदक आह—कथमजिज्ञपदिति। अत्र ण्यन्ताङ्गाभ्यासस्यैवाऽऽज्ञपीतीत्त्वविषयसन्नन्तसंबन्धिनो लोप इति भावः। सिद्धान्त्येकदेश्याह-तस्मादिति।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते सप्तमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकं पादोऽध्यायश्च समाप्तः॥

---

॥ ओ३म् ॥

श्रीभगवत्पतञ्जलिविरचितं

# व्याकरण-महाभाष्यम्

## अष्टमोऽध्यायः

---

### अथ प्रथमः पादः

**सर्वस्य द्वे ॥ ८ । १ । १ ॥**

सर्ववचनं किमर्थम् ?

**सर्ववचनमलोऽन्त्यनिवृत्त्यर्थम् ॥ १ ॥**

सर्वग्रहणं क्रियते, 'अलोऽन्त्यनिवृत्त्यर्थम्' । 'अलोऽन्त्यस्य विधयो

---

प्रदीपः— सर्वस्य द्वे । सर्वशब्दो द्रव्यप्रकारावयवकार्त्स्न्यवृत्तिः । द्रव्यकार्त्स्न्ये यथा—'सर्वस्वं ददाती'ति । प्रकारकार्त्स्न्ये यथा—'सर्वान्नं भक्षयती'ति । सर्वप्रकारमन्नं भुङ्क्ते इति गम्यते । अवयवकार्त्स्न्ये यथा—'सर्वः पटो दग्ध' इति । इह तु पचादीनां विशिष्टार्थानां कार्यित्वेनोपादानाद्द्रव्यप्रकारकार्त्स्न्याऽसंभवादवयवकार्त्स्न्यवृत्तिः सर्वशब्दः । तस्योपादानमलोऽन्त्यनिवृत्त्यर्थं वा स्याद् द्विःप्रयोगनिवृत्तये स्थानषष्ठ्यर्थं वा । तत्र वक्ष्यमाणैर्लिङ्गसामर्थ्यादिभिरलोऽन्त्यनिवृत्तिं षष्ठ्यर्थप्रक्लृप्तिं च सिद्धां मत्वा, स्थाने द्विर्वचनस्य द्विःप्रयोगद्विर्वचनस्य च फलभेदमपश्यन् पृच्छति—सर्ववचनमिति । अलोन्त्यनिवृत्त्यर्थमिति । ननु सर्वस्येत्यस्मिन्नसति स्थानषष्ठ्यभावादनुसंहाराऽभावः । स्थाने विज्ञातस्याऽनुसंहार इत्युक्तत्वात् । कथं चान्त्यस्य द्विर्वचनं प्राप्नोति यावता अनेकाल्त्वात्सर्वादेशेन तेन भवितव्यम् । उच्यते—'परेर्वर्जने' इत्यादौ तावत् षष्ठी

---

उद्द्योतः—सर्वस्य द्वे । ननु 'सर्व'शब्दस्याऽलोन्त्यनिवृत्त्यर्थत्वात्प्रश्नानुपपत्तिरत आह—सर्वशब्द इति । उपादानादिति । यत्रापि 'नित्यवीप्सयो'रित्यादौ न कश्चिद्विशेष उपादीयते, तत्रापि विशेषाऽनुपादानादेव सर्वेषां शब्दानां सिद्धमिति द्रव्यप्रकारार्थाऽसम्भव इति भावः । स्थानषष्ठ्यभावादिति । 'नित्यवीप्सयो'रित्यादाविति भावः । 'परे'रित्यादौ स्थानषष्ठीसत्त्वा-

भवन्ती'त्यन्त्यस्य द्विर्वचनं मा भूदिति*। क्व पुनरलोन्त्यनिवृत्त्यर्थेनाऽर्थः सर्वग्रहणेन ? 'नित्यवीप्सयोः' [ ८. १. ४ ] इति। 'नित्यवीप्सयो'रित्युच्यते, न चाऽन्त्यस्य द्विर्वचनेन नित्यता वीप्सा वा गम्यते। इह तर्हि—'परेर्वर्जने' [ ८. १. ५ ] इत्यन्त्यस्याऽपि द्विर्वचनेन वर्ज्यमानता गम्येत।

षष्ठीनिर्देशार्थश्च ॥ २ ॥

षष्ठीनिर्देशार्थं च सर्वग्रहणं कर्तव्यम्। षष्ठीनिर्देशो यथा प्रकल्पेत।

अनिर्देशे हि षष्ठ्यर्थाऽप्रसिद्धिः ॥ ३ ॥

अक्रियमाणे हि सर्वग्रहणे षष्ठ्यर्थस्याऽप्रसिद्धिः स्यात्। कस्य ? स्थानेयोगत्वस्य†। क्व पुनरिह षष्ठीनिर्देशाऽर्थेनार्थः सर्वग्रहणेन यावता सर्वत्रैव षष्ठ्युच्चार्यते—'परेर्वर्जने' [ ५ ] 'प्रसमुपोदः पादपूरणे' [ ६ ] 'उपर्यध्य-

प्र०-विद्यत एव। 'नित्यवीप्सयो' रित्यत्रापि सामर्थ्यलभ्या षष्ठी। यच्चोक्तम्'नेकाल्त्वात्सर्वादेशो भविष्यती'ति, हलन्तेष्वेव तत्स्यात्। अजन्तेषु तु पर्यादिष्विकारादेरन्त्यस्य प्राप्नोति। ननु द्वाविकारौ सर्वस्य स्यातां, यथा डा-आ-डा इति प्रश्लेषनिर्देशात्सर्वादेशो डा भवति। उच्यते—द्वाविकारौ कृतैकादेशावादेशत्वं प्रतिपद्येते इत्येकाल्त्वादादेशोऽलोन्त्यस्य प्राप्नोति। डास्तु प्रश्लेषनिर्देशसामर्थ्याद्विगृहीतरूपः सर्वादेशत्वं प्रतिपद्य सवर्णदीर्घत्वं प्रतिपद्यते। क्व पुनरिति। नित्यादिरर्थोऽन्त्यद्विर्वचनेन न द्योतयितुं शक्यत इति भावः। अन्त्यस्यापीति। यथाऽन्तरेण द्विर्वचनं परिवर्जनार्थः प्रयुज्यते—'परि त्रिगर्तेभ्य' इति। अत एवोच्यते—'परेर्वर्जने वावचन'मिति। एवमन्त्यस्यापि द्विर्वचने परेर्वर्जनं प्रतीयेत। षष्ठीनिर्देशार्थं चेति। इष्टस्य षष्ठ्यर्थस्य प्रक्लृप्त्यर्थमित्यर्थः। कस्येति। 'नित्यवीप्सयोर्यः शब्दस्तस्य द्वे' इति सामर्थ्यात् षष्ठ्यर्थो लभ्यत इति भावः। इतरः शब्दमन्तरेणाऽऽनन्तर्यादिरपि संबन्धः सामर्थ्याद्विज्ञायेतेति मत्वाह—स्थानेयोगत्वस्येति। क्व पुनरिति। षष्ठी

उ०-दाह—कथं वाऽन्त्यस्येति। सामर्थ्यलभ्येति। नित्यवीप्सयोर्वर्तमानस्य पदस्य द्वित्वविधानादित्यर्थः। हलन्तेष्विति। तत्र हि-अन्त्यद्विर्वचनेऽपि आदेशस्याऽनेकाल्त्वेनाऽपवादविषयत्वादलोऽन्त्याऽप्रवृत्तौ सर्वस्यैव भविष्यतीति भावः। यथा—'डा-आ' इति 'लुटः प्रथमस्ये'त्यत्र, यथा च 'युष्मदस्मद्भ्यां ङस' इत्यत्र शित्त्वप्रत्याख्यानाय 'अ-अ' इति प्रश्लेषेण सर्वाऽऽदेशत्वमुक्तम्। 'द्वाविकारा'वित्यादि पूर्वपक्ष्याशयवर्णनमात्रम्, षष्ठीनिर्देशस्य वक्ष्यमाणरीत्या सुलभत्वादाह—इष्टस्येति। आनन्तर्यादिरपीति। वस्तुतो 'द्वे उच्चारणे'

* १. १. ५२. † १. १. ४९.

घसः समीप्ये' [ ७ ] 'वाक्यादेरामन्त्रितस्य' [ ८ ] इति।

इह न काचित् षष्ठी—'नित्यवीप्सयोः' [ ४ ] इति? ननु चैषैव षष्ठी। नैषा षष्ठी। किं तर्हि? अर्थनिर्देश एषः—'नित्ये चाऽर्थे वीप्सायां चे'ति।

अलोऽन्त्यनिवृत्त्यर्थेन तावन्नार्थः सर्वग्रहणेन। इदं तावदयं प्रष्टव्यः—'नित्यवीप्सयोर्द्वे भवत' इत्युच्यते, द्विशब्द आदेशः कस्मान्न भवति? आचार्य-प्रवृत्तिर्ज्ञापयति—'न द्विशब्द आदेशो भवती'ति—यदयं 'तस्य परमाम्रेडितम्' 'अनुदात्तं च' [ २; ३ ] इत्याह। कथं कृत्वा ज्ञापकम्? द्विशब्दोऽयमेकाच्, तस्यैकाच्त्वात्तस्य परमाम्रेडितमनुदात्तं चेत्येतन्नास्ति। पश्यति त्वाचार्यो—'न द्विशब्द आदेशो भवती'ति, ततस्तस्य परमाम्रेडितमनुदात्तं चेत्याह। यदि

प्र०-सर्वत्र विद्यत इति भावः। ननु चैषैवेति। नित्यार्थवचनः शब्दो नित्यो, वीप्सार्थ-वचनश्च वीप्सेत्याश्रीयत इति भावः। अर्थनिर्देश इति। प्रयोक्तृधर्मो वीप्सा यथा आबाधो, नत्वभिधेयधर्मः। यद्वक्ष्यते 'वीप्सुश्चेत्कर्ता भवती'ति। वीप्सायाश्चाऽर्थत्वे नित्यशब्दोऽप्यर्थवृत्तिरेव ग्राह्यो, द्वन्द्वनिर्देशाद्भिन्नविभक्तिकत्वाऽयोगात्। अलोऽन्त्य-निवृत्त्यर्थेनेति। ननु च नित्यवीप्सयोरित्यत्रार्थाश्रयणेन पूर्वमेवालोऽन्त्यविधिर्निवा-रितस्तत्किमर्थं 'नित्यवीप्सयो'रित्युपादीयते, परेर्वर्जन इत्यादि ह्युपादेयम्। प्रकरणोप-लक्षणार्थत्वात्सर्वेषु वा सूत्रेषु परिहारस्य तुल्यत्वाददोषः। कथं पुनर्द्विशब्द आदेशः संभाव्यते यावता 'ग्रामो ग्राम' इत्यस्मिन्नर्थे प्रतिपाद्ये द्विशब्दो न प्रवर्त्तते। पराभि-प्रायेणैतदुच्यते, यथा भवान् सामर्थ्यादिन्यायत्यागेन शास्त्रसद्भावमात्रेणालोऽन्त्यविधिं मन्यते तथा 'स्वं रूपं शब्दस्ये'ति शास्त्रप्रामाण्याद् द्विशब्दः प्राप्नोति। न्यायाश्रये तु स्वरूपविधिवदलोऽन्त्यविधिर्न भविष्यति। आचार्यप्रवृत्तिरिति। न्यायसिद्धेऽर्थे लिङ्गदर्शनम्। नहि द्विशब्द आदेशो ग्रामादिशब्दस्यार्थं वक्तुं समर्थ इति न प्रवर्तते। 'नाम्रेडितस्यान्त्यस्य तु वा' 'नित्यमाम्रेडिते डाची'त्येतदपि लिङ्गं द्रष्टव्यम्। यदि

उ०-इति उच्चारणक्रियानिरूपितं कर्मत्वमेव प्रतीयेतेति बोध्यम्। ननु नित्यादिशब्दयोरर्थपरत्वा-देषैव षष्ठीत्यनुपपन्नमत आह—नित्यार्थेति। भिन्नविभक्तिकत्वेति। वीप्सांशे विषयसप्तमी, नित्यांशे षष्ठीत्येवमित्यर्थः। ननु चेति। 'नित्यवीप्सयोरर्थयोर्द्वे भवत'इत्यर्थे स्थानषष्ठ्य-भावादलोऽन्त्यस्याऽप्रसक्ति इति भावः। परिहरति—प्रकरणेति। परिहारस्येति। वक्ष्य-माणस्येत्यर्थः। इत्यस्मिन्नर्थे इति। एवंरूपैः शब्दैर्हि वीप्साप्रत्ययो न तु 'द्वि'शब्देनेति भावः। सामर्थ्यादिन्यायेति। आदिना ज्ञापकसङ्ग्रहः। 'सर्वस्ये'त्यस्य सर्वशब्द-

तर्हि न द्विशब्द आदेशो भवति के तर्हीदानीं द्वे भवतः ? द्विशब्देन यदुच्यते । किं पुनस्तत् ? द्विशब्दोऽयं सङ्ख्यापदं, सङ्ख्यायाश्च सङ्ख्येयमर्थः । सङ्ख्येये द्वे भविष्यतः । के पुनस्ते ? पदे वाक्ये मात्रे वा ।

तद्यदा तावत्पदे वाक्ये वा तदाऽनेकाल्त्वात्सर्वादेशः सिद्धः । यदा तावन्मात्रे अपि तदा 'ऽनेकाल्शित्सर्वस्य [ १. १. ५५ ]' इति सर्वादेशो भविष्यति ।

यदा तर्ह्यर्द्धमात्रे तदा सर्वादेशो न सिध्यति । नैष दोषः । न चार्द्धमात्रे द्विरुच्येते । किं कारणम् ? इह व्याकरणे यत्सर्वाऽल्पीयान् स्वरव्यवहारः स मात्रया भवति । नाऽर्द्धमात्रया व्यवहारोस्ति, तेनाऽर्द्धमात्रे न भविष्यतः । एवमपि कुत एतत्—'पदे द्वे भविष्यत' इति, न पुनर्वाक्ये स्यातां मात्रे वा ? 'नित्यवीप्सयोर्द्वे भवत' इत्युच्यते न च वाक्यद्विर्वचनेन मात्राद्विर्वचनेन वा नित्यता वीप्सा वा गम्यते ।

---

प्र०—तर्हीति पृष्टे द्विशब्देन इत्युच्यत इत्युत्तरे उक्तेऽपि सामान्याभिधानाद्विशेषो दुर्ज्ञान इति पृच्छति—किं पुनस्तदिति । सङ्ख्येयमर्थ इति । अभिधेयमित्यर्थः । यदुच्यते—'आदशभ्यः सङ्ख्याः सङ्ख्येये वर्त्तन्ते तत उत्तरं सङ्ख्याने सङ्ख्येये चे'ति । पदे इति । शब्दानुशासनप्रस्तावाच्छब्दप्रकारोपन्यासः । यदा तावन्मात्रे इति । यदुक्तं—'द्वाविकारौ कृतैकादेशावेकालादेशोऽन्त्यस्य प्राप्नोती'ति, तदयुक्तं, न ह्यप्रवृत्तयोरेकादेशशास्त्रप्रवृत्तिरस्ति, प्रवृत्तिकाले चाऽनेकाल्त्वात्सर्वादेशत्वमिति नास्त्यलोऽन्त्यविधिः । यदा तर्हीति । परिशब्देकारस्य द्वे अर्धमात्रे अल्ग्रहणेनाऽर्द्धमात्राया अग्रहादनेकाल्त्वाऽभावात्प्राप्नुतः । इहेति । विशिष्टमर्द्धमात्राद्वयमुच्चारणाऽयोगादशक्य आदेशः कर्त्तुम् । 'तस्यादित उदात्तमर्द्धह्रस्व'मित्यनेन तु ह्रस्वादिवर्णस्थाया अर्द्धमात्राया गुणाख्यानं क्रियते । न च वाक्यद्विर्वचन इति । नित्यत्वाद्यर्थप्रतिपादनाय

---

उ०—स्फोरयर्थधारणाय ज्ञापकान्तरमाह—नाम्रेडितस्यान्त्यस्येति । भाष्ये—सङ्ख्यापदं—सङ्ख्याप्रवृत्तिनिमित्तकं पदम् । सङ्ख्यायाश्चेति । तत्प्रवृत्तिनिमित्तकपदस्येत्यर्थः । अत उत्तरं—दशभ्यः उत्तरं, विंशत्यादय इत्यर्थः । ननु सङ्ख्येयस्याऽनन्तरत्वात्पदादीनामेवोपन्यासोऽयुक्तोऽत आह—शब्दानुशासनेति । प्रकारो—भेदः । भाष्ये—अपि तदेति । तदापीत्यर्थः । अत्र 'मात्रा'शब्दो वर्णोपलक्षणम् । प्राप्नुत इति । 'अन्त्यस्ये'तिशेषः । भाष्ये—व्याकरणे यत्सर्वमिति । 'य'दिति सामान्ये नपुंसकम् । 'य' इति वा पाठः । गुणाऽऽख्यानं क्रियत इति । न तु सा पृथगुच्चारणविषयेति भावः । ननु परिशिष्टमात्रपदद्वयमेवाऽऽदेशः

षष्ठीनिर्देशार्थमेव तर्हि सर्वग्रहणं कर्त्तव्यम् ।

**न वा पदाधिकारात् ॥ ४ ॥**

न वा वक्तव्यम् । किं कारणम् ? 'पदाधिकारात्' । 'पदस्ये'ति प्रकृत्य द्विर्वचनं वक्ष्यामि ।

**तच्च समासतद्धितवाक्यनिवृत्त्यर्थम् ॥ ५ ॥**

तच्चावश्यं पदग्रहणं कर्त्तव्यं समासनिवृत्त्यर्थं तद्धितनिवृत्त्यर्थं वाक्यनिवृत्त्यर्थञ्च । समासनिवृत्त्यर्थं तावत्—सप्तपर्णः, अष्टापदम् । तद्धितनिवृत्त्यर्थं—द्विपदिका, त्रिपदिका* । माषशः, कार्षापणशः† । वाक्यनिवृत्त्यर्थं—ग्रामे ग्रामे पानीयम् । माषं माषं देहि ।

अथ क्रियमाणेऽपि वै पदग्रहणे 'समासनिवृत्त्यर्थ'मिति कथमिदं

प्र०-तत्प्रतिपादनसमर्थः शब्दः प्रयुज्यते, 'स्थानेऽन्तरतम' इत्युपस्थानाच्च शब्दतोऽर्थतश्चान्तरतमे एव द्वे पदे आदेशौ भवतः । 'परेर्वर्जने' इत्यादौ तु पर्यादिशब्दसंनिधानाद् द्विशब्दः पर्यादीनेव सङ्ख्येयानाचष्ट इति वाक्ये मात्रे पदे अपि ये के चिन्न प्रवर्तेते । न वेति । शब्दान्तरं षष्ठ्यन्तमुपादेयम्, को विशेष इति चेदाह—तच्चेति । सप्तपर्ण इति । सप्तसङ्ख्यानि पर्णानि वीप्स्यन्ते न तु तद्वान् वृक्ष इति वीप्सायामेकत्वस्याऽनन्तर्भावात्प्रागेव विभक्तेर्द्विर्वचनं प्राप्नोति—सप्तपर्ण इति । पदाधिकारात्तु न भवति । द्विपदिकेति । द्वित्वसङ्ख्यायुक्तः पादार्थो वीप्स्यते इति वीप्सायां स्त्रीत्वैकत्वलक्षणयोर्लिङ्गसङ्ख्ययोरनन्तर्भावात् प्राक्तद्धितोत्पत्तेः समासे कृते पदत्वाऽभावाद्द्विर्वचनाऽभावः । ग्रामे ग्रामे पानीयमिति । वाक्यस्याऽपदत्वाद्द्विर्वचनाभावः । अथेति । 'सप्त-

उ०-स्यादत आह—अन्तरतमे एव द्वे पदे इति । द्विपदे एव, न तु वाक्ये । तादृशार्थबोधनाऽसामर्थ्येनानन्तरतमत्वादिति भावः । नित्यवीप्सयोर्थः शब्दस्तस्येति षष्ठीं स्थानषष्ठीं मन्यते । पर्यादीनेवेति । प्रत्यासत्त्येति भावः । ये केचिदिति । 'पदे अपी'त्यनेन सम्बध्यते । को विशेष इति । षष्ठ्यन्तशब्दान्तरोपादाने किमेतद्द्वैरूप्येणेत्यर्थः । एकत्वस्यानन्तर्भावादिति । वीप्साविषयव्याप्तिबोधसमये वृक्षगतैकत्वस्याऽननुभवाद्विभक्त्युत्पत्तेः प्रागेव द्वित्वमित्यर्थः । पृथगेव विभक्तेरिति । विभक्तेः पृथग्भूतस्य । विभक्तिरहितस्येत्यर्थः । 'प्रागेव विभक्ते' रिति तु युक्तः पाठः । पदाऽधिकारे तु 'सप्तपर्ण' इति पदवाच्यस्य वीप्सायोगाऽभावान्न दोषः । पादार्थ इति । पादशब्दार्थ इत्यर्थः । पदत्वाभावादिति । अत्यन्तस्वार्थिकत्वात्सुबुत्पत्तेः पूर्वमेवाऽयं तद्धित इति भावः । भाष्ये—'द्विपदिका' 'त्रिपदिके'त्युत्तरं—'माषशः कार्षापणशः' इत्यपाठः । पदग्रहणेनाऽपि तत्र तन्निवृत्तेरशक्यत्वात्, शसन्तस्यापि पदत्वात् ।

* ५. ४. १. † ५. ४ ४३.

विज्ञायते—समासस्य निवृत्त्यर्थं समासनिवृत्त्यर्थमिति, आहोस्वित्समासे निवृत्त्यर्थं समासनिवृत्त्यर्थमिति ? किं चातः ? यदि विज्ञायते समासस्य निवृत्त्यर्थं समासनिवृत्त्यर्थमिति, सिद्धं—सप्तपर्णः सप्तपर्णौ सप्तपर्णाः इति । सप्तपर्णाभ्यां सप्तपर्णेभ्य इत्यत्र* प्राप्नोति । अथ विज्ञायते—समासे निवृत्त्यर्थं समासनिवृत्त्यर्थमिति,—सप्तपर्णः सप्तपर्णौ सप्तपर्णाः इत्यत्रापि प्राप्नोति† ।

तथा—'तद्धितनिवृत्त्यर्थ'मिति,—कथमिदं विज्ञायते—तद्धितस्य निवृत्त्यथ तद्धितनिवृत्त्यर्थमिति, आहोस्वित्तद्धिते निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति ? किं चातः ? यदि विज्ञायते तद्धितस्य निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति, सिद्धं द्विपदिका, त्रिपदिका, द्विपदिकाभ्यां त्रिपदिकाभ्यां माषशः कार्षापणश इत्यत्र

प्र०—पर्ण' इत्यत्र किं सङ्ख्याया वीप्सा, अथ पर्णानाम्, अथ सङ्ख्याविशिष्टानां पर्णानाम् ? तत्र यदि समुदायो वीप्स्यते तदा समुदायस्य प्राप्तं द्विर्वचनं पदाधिकारेण निवर्त्यते । अथ त्ववयवार्थवीप्सा तदाऽवयवस्य प्राप्तं द्विर्वचनमिति समासे विद्यमानस्य निवृत्त्यर्थमित्यर्थः संपद्यते । एवं वाक्यतद्धितयोर्योज्यम् ।

यदि विज्ञायते इति । यदा 'समुदायो वीप्सायुक्त' इति पक्षः । सिद्धं सप्तपर्ण इति । विभक्तौ परतः समासस्यापदत्वात् । सप्तपर्णाभ्यामिति । स्वादिषु पूर्वस्य पदत्वाद्द्विर्वचनप्रसङ्गः । अथेति । यदाऽवयवार्थवीप्सा तदा समासे प्रत्ययलक्षणेनाऽवयवस्य पदत्वाद्द्विर्वचनप्रसङ्गः । उत्तरपदस्य तूत्तरपदत्वे चाऽपदादिविधाविति प्रत्ययलक्षणप्रतिषेधात्पदत्वाऽभावः । सिद्धं द्विपदिकेति । हल्ङ्यादिलोपे तद्धितान्तस्य पदत्वा 'द्द्विपदिका' इति बहुवचनान्तं पठितव्यम् । द्विपदिकाभ्यामिति । एकादेशस्याऽन्तवद्भावात्तद्धितान्तं, 'स्वादिष्वि'ति पदं च । माषश इति । प्रत्यय-

उ०—तत्पूर्वभागस्यापि सुबन्ताच्छस उत्पत्त्या पदत्वात् । वाक्यस्येति । अन्यथा 'ग्रामे पानीयं ग्रामे पानीय'मिति स्यादिति भावः । 'किं सङ्ख्याया वीप्सा अथ पर्णाना'मित्यन्तेनावयवार्थवीप्सापक्षो दर्शितः । समुदायवीप्सापक्षमाह—अथवेति । तत्रान्ये षष्ठीसमासोऽस्थितिरित्याह—तत्र यदीति । आद्ययोः सप्तमीसमास इत्याह—अथ त्विति । समासे निवृत्त्यर्थमिति । समासे विद्यमानस्य निवृत्त्यर्थमित्यर्थः । तद्धितयोरिति । तद्धितपदं तद्धितान्तपरं बोध्यम् । प्रत्ययलक्षणेनेति । 'अन्तरङ्गानपी'ति न्यायेन सर्वतः पूर्वं सुप्सुप्र-वृत्तेरिति भावः । अवयवस्य पदत्वादिति । पूर्वपदस्येत्यर्थः । पदत्वाभाव इति । परे तु—'अपदादिविधा'वित्यस्य तद्धितपदान्तविधावित्यर्थादत्र न तत्प्राप्तिः । अन्यथा पर्णवीप्सापक्षे दोषानुद्धारेण भाष्यस्य न्यूनता स्यादित्याहुः । भाष्ये—द्विपदिका इत्यत्रा-

* १. ४. १७. † १. ४. १७; १. १. ६२.

प्राप्नोति । अथ विज्ञायते—तद्धिते निवृत्त्यर्थं तद्धितनिवृत्त्यर्थमिति द्विपदिकाः त्रिपदिका इत्यत्रापि प्राप्नोति ।

तथा 'वाक्यनिवृत्त्यर्थ'मिति कथमिदं विज्ञायते—वाक्यस्य निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमिति । आहोस्विद्वाक्ये निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमिति ?

किं चातः ? यदि विज्ञायते—वाक्यस्य निवृत्त्यर्थं वाक्यनिवृत्त्यर्थमिति, यदि वाक्यं वीप्सायुक्तं; भवितव्यमेव द्विर्वचनेन । अथाऽप्यवयवः,—भवत्येव । तदेतत्क्रियमाणेऽपि पदग्रहणे आलूनविशीर्णं भवति, किंचित्सङ्गृहीतं किंचिदसङ्गृहीतम् ।

**सगतिग्रहणं च ॥ ६ ॥**

सगतिग्रहणञ्च कर्त्तव्यम् । प्रपचति—प्रपचति, प्रकरोति—प्रकरोतीति । किं पुनः कारणं न सिध्यति ? न हि सगतिकं पदं भवति ।

समासनिवृत्त्यर्थेन तावन्नार्थः पदग्रहणेन । समासेनोक्तत्वाद्वीप्साया द्विर्वचनं न भविष्यति । किं च भोः 'समासो वीप्साया'मित्युच्यते ? न खलु

---

प्र०–लक्षणेन सुबन्तं, तद्धितान्तं च । वाक्यं वीप्सायुक्तमिति । वाक्यार्थस्य वीप्सायोगाऽभावाद्वीप्साग्रहणं द्विर्वचननिमित्तोपलक्षणं, तेन 'प्रपचति—प्रपचती'ति नित्यतायां वाक्यस्य द्विर्वचनं भवत्येव । अथेति । यदा ग्रामार्थस्य वीप्सा तदा 'ग्रामे ग्रामे पानीय'मिति भवति । यदा पानीयस्य तदा 'ग्रामे पानीयं पानीयं स्या'दिति भवति । तदेतदिति । अतिव्याप्तिर्न कथंचित्परिहर्तुं शक्यते । सगतिग्रहणं चेति । पदाधिकारे क्रियमाणे सगतिग्रहणमधिकं कर्तव्यम् । भाष्यकारः पदाधिकारेण विनापि समासादिनिवृत्तिप्रतिपादनायाह—समासेनेति । 'सप्तपर्ण' इति रूढिशब्दः परिगृहीतावयवार्थविशेषो वृत्तविशेषे वर्तत इत्यर्थः । किं च भो इति । ननु न वचनादर्थ

---

उ०–पीति । अपिना'द्विपदिकाभ्यां' 'मापशः' इत्यादौ च दोषः । वीप्साऽयोगादिति । वीप्सयाऽयोगादित्यर्थः । वाक्यस्य—पदसमुदायस्य । वीप्सायुक्तमिति । भाष्यस्य वीप्सापदघटितसूत्रोपात्तार्थयुक्तमित्यर्थ इति भावः । भाष्ये—अथाऽप्यवयव इत्यादिसप्तमीसमासदूषणम् । एतत्प्रयोजनवचनम्—आलूनविशीर्णं, तद्व्याचष्टे—किञ्चिदिति । किञ्चिदसंगृहीतमिति । किञ्चिद्व्यावर्त्यं न व्यावर्तितमित्यर्थस्तदाह—अतिव्याप्तिर्न कथंचिदिति । वाक्यविषये चाऽव्याप्तिवारणाय वचनान्तरमावश्यकमित्याह भाष्ये—सगतीति । तद्व्याचष्टे—पदाधिकारे इति । परिगृहीतावयवार्थेति । अनेन योगरूढोऽयमिति ध्वनितम् ।

वीप्सायामित्युच्यते गम्यते तु सोऽर्थः । तत्रोक्तः समासेनेति कृत्वा द्विर्वचनं न भविष्यति । यत्र च समासेनाऽनुक्ता वीप्सा—भवति तत्र द्विर्वचनम् । तद्यथा—एकैकविचिताः अन्योन्यसहाया इति ।

अथ वा यदत्र वीप्सायुक्तं नाऽदः प्रयुज्यते । किं पुनस्तत् ? पर्वणि पर्वणि सप्त पर्णान्यस्य, पंक्तौ पंक्तावष्टौ पदान्यस्येति ।

तद्धितनिवृत्त्यर्थेन चाऽपि नार्थः पदग्रहणेन । तद्धितेनोक्तत्वाद्वीप्साया द्विर्वचनं न भविष्यति । तद्धितः खल्वपि 'वीप्साया'मित्युच्यते* । यत्र च तद्धितेनाऽनुक्ता वीप्सा भवति तत्र द्विर्वचनम् । तद्यथा—एकैकशो ददातीति ।

---

प्र०–शब्दः प्रत्याययति किन्तर्हि, स्वसामर्थ्यात् । एवं मन्यते—वाक्ये द्विर्वचनेन वीप्सा व्यज्यते—'सप्त सप्त पर्णान्यस्ये'ति, एवं समासेऽपि वीप्साप्रतिपादनाय द्विर्वचनस्य प्रसङ्गात् प्रतिषेधो विधेयो—'नित्यवीप्सयोरसमासे' इति । यथा वक्ष्यते—'परेरसमासे' इति ।

न खल्विति । रूढिशब्दत्वादस्याक्षिप्तवीप्सोऽवयवार्थः । यथा 'त्रिदशा' इत्यादावादिप्रसुजर्थः । अन्ये हि वाक्यधर्मा अन्ये वृत्तिधर्माः । ततः समासेनोक्तत्वादित्यस्यायमर्थः—समासेनाभिव्यक्तत्वादिति । यत्र चेति । यो न रूढिशब्दः । एकैकविचिता इति । एकैकेन विचिताः । अन्योन्यसहाया इति । अन्योन्यस्य सहाया इत्यर्थः । अत्र कर्मव्यतिहारो द्विर्वचनद्योत्यः । अथ वेति । न चाऽप्रयुज्यमानस्य द्विर्वचनसंभवः, गतार्थत्वाच्च पर्वादिशब्दस्याऽप्रयोगो, रूढिशब्दत्वाच्च गतार्थत्वम् । तद्धितेनेति । तद्धितस्य स्वार्थिकत्वादभिव्यक्तिरेवोक्तिरवसेया एकैकश इति । केचिदाहुः—अल्पार्थोऽप्येकशब्दोऽस्ति तस्य वीप्सायां द्विर्वचने कृते 'बह्वल्पार्था'

---

उ०–ननु चेति । तथा हि सति समर्थसूत्रस्थभाष्यविरोध इत्यर्थः । प्रतिषेधो विधेय इति । सप्तपदस्य पञ्चमत्वात्पदस्येत्यनेन वारणमिति भावः । रूढीति । अनेनाऽवयवानां वीप्साविशिष्टस्वार्थबोधकत्वे निमित्तं दर्शितम् । नन्वेवं वाक्येऽपि द्विर्वचनं न स्यादत आह—अन्ये हीति । वृत्तिविषयाणामेवाऽयं स्वभाव इति भावः । नन्वेवमवयवेनोक्तावपि समासेनोक्तत्वादित्यसङ्गतमत आह—अभिव्यक्तत्वादिति । अवयवद्वारेत्यर्थः । 'वीप्सोक्ते'रस्य व्यापकत्वमुक्तमित्यर्थः । कर्मव्यतिहार इति । भाष्यस्थवीप्सापदमुपलक्षणमिति भावः । ननु यदि पर्वार्थो वीप्सापन्नोऽवगम्यते तर्हि तत्प्रयोगोऽपि स्यादत आह—गतार्थत्वाच्चेति । पर्वपर्वाधिकरणकसप्तपर्णसम्बन्धिनि विशिष्टे शक्तत्वस्वीकारादिति भावस्तदाह—रूढिशब्दत्वाच्चेति । भाष्ये—तद्धितेनोक्तत्वादिति । न च 'नित्यवीप्सयो'रित्यस्य 'येन नाप्राप्ति' न्यायेन समासबाधकत्वमत्र द्विर्वचनप्राप्तिरिति वाच्यं, तदसन्ताम्य प्राप्तेः । तस्य-

---

* ५. ४. १; ४१.

वाक्यनिवृत्त्यर्थेन चाऽपि नार्थः पदग्रहणेन । पदद्विर्वचनेनोक्तत्वाद्वीप्साया वाक्यद्विर्वचनं न भविष्यति । यत्र च पदद्विर्वचनेनाऽनुक्ता वीप्सा भवति तत्र द्विर्वचनम् । तद्यथा—प्रपचति—प्रपचति, प्रकरोति—प्रकरोतीति ।

उत्तरार्थं तर्हि पदग्रहणं कर्तव्यम् । 'तस्य परमाम्रेडितम्' 'अनुदात्तं च' [ २; ३ ] इति वक्ष्यति । तत्पदद्विर्वचने यथा स्याद्वाक्यद्विर्वचने

---

प्र०–दिति शस्प्रत्ययः । अन्ये त्वाहुः—एकैकमेकैस्मै ददातीति कर्मसंप्रदानवीप्साद्वय-प्रतिपादनाय शस्द्विर्वचने भवत इति, तदयुक्तम्, एकेन पदेन युगपत्कारकद्वयस्याऽभिधानाऽसंभवात् । पदद्विर्वचनेनोक्तत्वादिति । आधारवीप्सायाऽऽधेयवीप्साया आक्षेपादाधेयवाचिपदद्विर्वचनाऽभावः । यत्र चेति । अडादिव्यवस्थार्थं धातूपसर्गयोः पृथक्कल्पनेति । परमार्थतः समुदायस्य क्रियाविशेषवाचित्वान्नित्यताप्रतिपादनाय पदसमु-

---

उ०–कृतिप्राप्तद्विर्वचनाऽपवादत्वेऽपि शसन्ते तदपवादत्वाऽभावात् । केचिदाहुः—अल्पार्थोऽपीति । अत्राऽरुचिबीजन्तु तस्याऽल्पार्थत्वे न मानम् । 'ष्णान्ता षट्' 'बहुगु' 'एकादाकिनिच्चा'स्यादिसूत्रेषु सङ्ख्याऽसहायान्यार्थस्यैवैकशब्दस्य भाष्य उक्तेः । 'एको गोत्र' इति सूत्रेऽपि च भाष्ये लक्षणया प्रथमार्थकोऽप्युक्तः । एवञ्च प्रधानसमानसाधारणाऽल्पार्थत्वे न मानं, समानसाधारणार्थौ सङ्ख्यापदैकशब्दप्रयोगेणैव फलितौ भवतः । किञ्चाऽल्पार्थकतत्सत्त्वेऽपि तदर्थत्वेनैकशब्दस्य प्रसिद्ध्यभावा'द्बह्वल्पार्था'दिति सूत्रे न तद्ग्रहणं, किञ्च सङ्ख्याशब्दातिरिक्तशब्दार्थानां परिगृहीतैकत्वानामेव वीप्सासत्त्वेन ततो द्वित्वाऽपवादः शसेव प्राप्नोति । किञ्चाऽल्पत्वस्य परिमाणविशेषतया 'अल्पे' इति सूत्रभाष्यकैयटयोरुक्तत्वेन प्रस्थादयर्थानामिव परिगृहीतैकत्वस्यैव वीप्सेति भाष्याऽसङ्गतिः । न चैकं बहुव्रीहिवदिति तत्र द्वित्वम्, न च तस्य शसपवादो नाऽप्राप्त्यभावादिति वाच्यम्, एकपदेन शास्त्रे प्रसिद्धतरतया सङ्ख्यावाचकस्यैव ग्रहणेनाऽत्र तदप्राप्तेः । स्पष्टञ्चेदमाकिनिज्विधायके भाष्ये । किञ्च तेन वीप्सायां कृतद्वित्वैकशब्दाऽनुवादेन बहुव्रीहिवद्भावस्यैव विधिः । अत एवैकश इत्यस्य सिद्धिः । तस्मादयमत्र भाष्यार्थः—'सङ्ख्यैकवचनाच्चे'त्यत्र चस्य 'वीप्साया'मित्यनेन सम्बन्धाद्वीप्सायां स्वार्थे च शसित्यर्थः । तत्र स्वार्थिकोऽभिधानस्वाभाव्यादेकशब्दात्कृतद्विर्वचनैकैकशब्दाच्च, तेन नातिप्रसङ्गः । एवञ्चैकशब्दप्रकृतिकशसः स्वार्थिकत्वस्यापि सत्त्वेन न ततो नियमेन वीप्सोक्तिरिति, तत्र वीप्साशसभावपक्षे द्विर्वचने कृते ततः स्वार्थिकः शसिति । अत्र चेदं भाष्यमेव मानम् । एकश इत्येतत्स्वार्थिकशसन्तं, वीप्सार्थकशसन्तं वेत्यत्र शास्त्रे व्याख्यानं लोके प्रकरणादिकं नियामकं बोध्यम् । तद्धितः खल्वपीत्यनेन समासतो वैषम्यमुक्तम् । युगपदिति । 'विप्रतिषेधविषयविभक्ति विने'त्यादिः । आधारवीप्सयेति । 'ग्रामे ग्रामे पानीय'मित्यादौ । अनेनैव न्यायेन यत्तच्छब्दयोः प्रयोगे उभयत्र वीप्सां नेच्छन्ति । नन्वाभीक्ष्ण्यरूपनित्यत्वस्य क्रिया-

माभूत्—मह्यं ग्रहीष्यति, मह्यं ग्रहीष्यति । मामभिव्याहरिष्यति, मामभिव्याहरिष्यति ।

कथं चाऽत्र द्विर्वचनम्? छान्दसत्वात् । स्वरोऽपि तर्हि च्छान्दसत्वादेव न भविष्यति । उत्तरार्थमेव तर्हि पदग्रहणं कर्त्तव्यं, 'पदस्य पदात्' [१६; १७] इति वक्ष्यति, तत्पदग्रहणं न कर्त्तव्यं भवति ।

सर्वग्रहणमपि तर्ह्युत्तरार्थम् । 'अनुदात्तं सर्वमपादादौ' [ १८ ] इति वक्ष्यति तत्सर्वग्रहणं न कर्तव्यं भवति । उभयं क्रियते तत्रैव ।

इहार्थमेव तर्हि षष्ठीनिर्देशार्थमन्यतरत्कर्त्तव्यं, षष्ठीनिर्दिष्टस्य स्थाने द्विर्वचनं

---

प्र०-दायस्य द्विर्वचनमित्यर्थः । वीप्सयाऽत्र नित्यत्वं लक्ष्यते ।

मह्यमिति । 'आबाधे चे'ति द्विर्वचनमित्याहुः । कथमिति । आबाधस्याऽसम्प्रत्ययादथान्तरस्य च द्विर्वचननिमित्तस्याऽभावाद्द्विर्वचनाऽप्रसङ्गः । स्वरोपीति । अनुदात्तत्वाऽभावे प्रकृतिस्वरो भवति । उत्तरार्थमिति । 'सर्वस्ये'त्यपनीय 'पदस्ये'ति क्रियमाणे मण्डूकप्लुतिन्यायेन द्विर्वचनप्रकरणमुल्लङ्घ्योत्तरत्रोपतिष्ठते । इहार्थमेवेति । ननु सामीप्यादिसम्बन्धप्रतीतिनिवारणमप्यन्यतरोपादानस्य प्रयोजनं कस्मान्न भवति? उच्यते—'नित्यवीप्सयो'रित्यर्थनिर्देशेन शब्दस्याक्षेपात्—'नित्यवीप्सयोर्यो वर्तते शब्दस्तस्य द्वे भवत'इति प्रक्रियावाक्यस्योपप्लवनाद्विशिष्टपष्ठ्यर्थावगमात्सामीप्यादिसंबन्धप्रतीत्यभावः सिद्धः । पक्षद्वयसंभवे तु षष्ठीनिर्देशेन 'षष्ठी स्थानेयोगे'ति परिभाषोप-

---

उ०-धर्मत्वाद्दातोश्च क्रियावाचित्वात्कथं स'प्र'शब्दस्य द्वित्वमत आह—अडादीति । लिङ्क्षु वीप्साया अभावादाह—वीप्सयेति । एवञ्च पदग्रहणाऽभावे सगतिकग्रहणं सुतरां व्यर्थमिति तात्पर्यम् । उल्लङ्घ्येति । अत्र फलाऽभावेनाऽसम्बन्धादित्यर्थः । न च नित्ये द्वित्वं धातुमात्रस्य मा भूदिति पदस्येत्यावश्यकं, किन्तु सुपः प्राग्वर्तिनोऽपि द्वित्वं वारयितुं तत्, किञ्चाऽऽबाधादिविषये वाक्यद्वित्वव्यावृत्त्यर्थमिति वाच्यं, धातुद्वित्वेन नित्याद्यर्थानवगतेः । किञ्च सुबादिभिः स्वार्थे परिपूर्णस्यैव लोकव्युत्पत्त्या शब्दानुपस्थितस्य बहिर्भूतवीप्सादियोग इति न तद्द्विर्वचनप्रसक्तिः । आबाधाविषयवाक्याऽभावाच्च । अत एव भाष्ये छान्दसत्वेन वाक्ये द्वित्वमुक्तम् । न च पदस्येत्यस्याऽभावे गत्यर्थेभ्यः कौटिल्यमात्रे सावकाशो यङ् कौटिल्यपौनःपुन्योभयविवक्षायां परेण द्वित्वेन बाध्येत, एवं भृशार्थपौनःपुन्योभयविवक्षायामपि । तत्सत्वे तु यङिरान्ताद्द्विर्वचनस्य यत्नेव । अत एव 'स्वरितो वे'तिसूत्रे लम्पटवादीनां द्वित्वस्य च समर्थं वक्ष्यति भाष्यकार इति वाच्यम्, एवं ( विधे ) विषये उभयविवक्षैव नाऽनभिधानादित्याशयात् ।

ननु सामीप्यादीति । मत्याः शङ्काया लोकिसंभव इति चिन्त्यम् । विशिष्टपष्ठ्य-

यथा स्याद्विःप्रयोगो मा भूदिति। किं च स्यात्? 'आम्पचसि पचसि देवदत्ता३' 'आम एकान्तरमामन्त्रितमनन्तिके' [ ५५ ] इत्येकान्तरता न

प्र०-स्थानाद्द्विःप्रयोगो निवर्तते। 'द्वे' इत्येतावत्युच्यमाने सङ्ख्येयमुच्चारणं यद्यपेक्षते—'शब्दस्य द्वे उच्चारणे भवत' इति,—तदा शब्दस्य क्रियायाश्च स्थान्यादेशभावाऽयोगाद्द्विःप्रयोगो द्विर्वचनमिति पक्षः। यदा तु—शब्दरूपं सङ्ख्येयं तदा 'द्वे शब्दरूपे एकस्य प्रसङ्गे भवत' इति स्थाने द्विर्वचनं विज्ञायते। अथैकाचो द्वे प्रथमस्येत्यत्र षष्ठीनिर्देशात्स्थाने द्विर्वचनं कस्मान्न भवतीति। 'अभ्यासाच्चे'त्यनेनाऽभ्यासादुत्तरस्य हन्तिहकारस्य कुत्वविधानाल्लिङ्गात्। न हि स्थाने द्विर्वचनेऽभ्यासादुत्तरो हन्तिः संभवति, शब्दान्तरत्वादादेशस्य। स्थानिवद्भावादपि समुदायो हन्तिग्रहणेन गृह्यते न तु तदवयवः। एकान्तरतेति। आवृत्तिभेदनिबन्धनया द्वित्वसङ्ख्यया स्वाश्रयस्यैकत्वस्य निवर्तनात्। तथा चोक्तम्—"एकाजनेकाज्ग्रहणेषु चावृत्तिसङ्ख्यानादिति, ऋषिसहस्रमेकां कपिलां दत्वा सर्वे ते सहस्रदक्षिणाः संपन्नास्तत एकदक्षिणा आनीयन्तामित्युक्ते सहस्रदक्षिणात्वान्न त आनीयन्ते"। तत्र आम्शब्दो निपातत्वादाद्युदात्तः। एकस्य 'पचसि'शब्दस्य तिङ्ङतिङ'इति निघातो, द्वितीयस्याऽ'नुदात्तं चे'त्यामन्त्रितस्य पदात्परस्य निघाते प्राप्ते, प्रतिषिद्धे, 'आमन्त्रितस्य चे'त्याद्युदात्तत्वम्। प्लुतस्याऽप्युदात्तत्वम्। अथ स्थाने द्विर्वचने कथमेकान्तरता, यावतैकस्य स्थाने द्वौ शब्दावादेशौ विधीयेते? उच्यते—एकपदादेशत्वात् स्थानिवद्भावादेकपदत्वम्।

उ०-थेति। स्थानरूपः कर्मत्वरूपो वेत्यर्थः। कथं पुनरन्यतरोपादानेन द्विःप्रयोगनिवृत्तिरत आह—पक्षद्वयसंभवे त्विति। तदभावे पक्षद्वयसंभवमुपपादयति—द्वे इति। शब्दस्येत्युच्चारणक्रियापेक्षया कर्मषष्ठीति भावः। यदा त्विति। परं तु कारकषष्ठीसंभवे इतरस्या अन्याय्यत्वेन द्विप्रयोग एव स्यात्, तदर्थं 'सर्वस्ये'त्याद्युक्तिः। तदुक्तौ तु तत्सामर्थ्यात्स्थानषष्ठीति भावः।

ननु 'पचसि'शब्द एक एव, उच्चारणमेव तु भिद्यत इति द्विःप्रयोगेऽप्येकान्तरता सिद्धेत्यत आह—आवृत्तीति। उक्तमिति। 'अ इ उ'णित्यत्र। 'न ते आनीयन्ते' इत्यन्तस्तत्रत्यो ग्रन्थः। प्रतिषिद्धे इति। 'आम एकान्तर'मित्यनेनेत्यर्थः। आमन्त्रितस्य चेति। पाष्ठिकेत्यर्थः। प्लुतस्याप्युदात्तत्वमिति। त्रिपाद्यामनुदात्तं पदमित्यस्याऽप्रवृत्त्या तत्प्रयुक्तलोपनिघातस्याऽभावादिति भावः। ननु पुनःशब्दस्याऽऽसत्त्ववाचित्वेन कथं भावसम्बन्धयोगोऽत्र

स्यात् । इह च 'पौनःपुन्यम्' 'पौनःपुनिक'मिति—अप्रातिपदिकत्वात्तद्धितोत्पत्तिर्न स्यात् ।

यदि तर्हि स्थाने द्विर्वचनं—राजा-राजा वाग्वाक्—पदस्येति नलोपादीनि* न सिध्यन्ति । इदमिह संप्रधार्यं—द्विर्वचनं क्रियतां नलोपादीनीति, किमत्र कर्त्तव्यम् ? परत्वान्नलोपादीनि । पूर्वत्राऽसिद्धे नलोपादीनि, सिद्धाऽ-

प्र०-पौनःपुन्यमिति । पुनः पुनर्भवितरि वर्तमानात् 'पुनः पुनः'शब्दाद्भावे प्रत्ययो, यथा नानात्वमिति नानाभूतवृत्तेर्नानाशब्दात् । पौनःपुनिक इति । 'पुनः पुनर्भव' इति 'कालाट्ठञ्' । तत्र द्विःप्रयोगे पदस्य विज्ञायमाने वीप्स्यमानार्थवाचित्वादर्थवत्त्वेऽप्यर्थवतः समुदायस्य समासग्रहणान्नियमार्थादप्रातिपदिकत्वम् । स्यादेतत्—अनुत्पन्न एव सुपि पुनःशब्दस्य नित्यतायुक्तक्रियाप्रधानस्याऽव्ययस्य द्विःप्रयोगो विधास्यते, ततो सुबन्तसमुदायत्वादव्यावृत्तं प्रातिपदिकत्वं, यथैकशेषे सरूपप्रातिपदिकसमुदायस्य । तच्च न । द्विर्वचनस्य नित्यत्वाद्यर्थापेक्षत्वाद्बहिरङ्गत्वात्सुबुत्पत्तेरव्ययार्थमात्रापेक्षयाऽन्तरङ्गत्वात् । स्थाने द्विर्वचने तु स्थानिवद्भावात्प्रातिदिकत्वम् । ननु स्थान्येव सुबन्तत्वान्न प्रातिपदिकम् । नैतदस्ति । सुब्लुकि सत्यप्रत्ययान्तत्वात् । न च प्रत्ययलक्षणेनाऽप्रत्यय इति प्रातिपदिकसंज्ञानिषेधो, 'न ङिसंबुद्ध्यो'रिति नलोपनिषेधाल्लिङ्गात् । अन्यथा प्रातिपदिकत्वाऽभावान्नलोपस्य प्राप्त्यभावान्निषेधो न कर्त्तव्यः स्यात् । राजाराजेति । पदस्य स्थाने समुदाय आदेशत्वात्पदं न तदवयव इति पूर्वस्य नलोपाद्यसिद्धिः । अन्त-

उ०-आह—पुनः पुनर्भवितरीति । वृत्तिविषये इति भावः । पुनः शब्दस्येति । आकृतिगणत्वाद्विसर्गान्तस्यापि स्वरादिपठितस्येत्यर्थः । नित्यतायुक्तक्रियाप्रधानस्येति । साध्यक्रियाकारकवृत्तेरित्यर्थः । अतएव ततः ष्यञादिसिद्धिः । यथैकशेषेति । सरूपप्रातिपदिकसमुदायादेकस्यां विभक्तौ परत एकशेष इति पक्षे इदम् । अन्तरङ्गत्वादिति । एवञ्च सुबन्तत्वा'दत्र संघाते पूर्वो भागः पद'मिति नियमात्प्रातिपदिकत्वव्यावृत्तिरिति भावः । तत्रान्यपदशब्दस्याऽर्थवत्त्वेऽपि न क्षतिः, लोके तदानुपूर्वीकादपि प्रयुज्यमानादर्थप्रत्ययेनाऽऽद्यस्याऽप्यर्थवत्त्वात् । बोधावृत्तिस्तु 'ह्ना'वित्यादिवद्वारणीया । सुब्लुकीति । ननु प्रातिपदिकत्वेऽपि तत्प्रकृतिकसुबन्तत्वं दुर्लभं, सुबन्तात्तद्धितोत्पत्तिरिति हि सिद्धान्त इति चेन्न, प्रत्ययस्याप्यतिदेशेन लाभात् । प्रत्ययग्रहणपरिभाषायां 'यस्मा'दित्यस्य सत्त्वेन प्रकृतेरुपादानात्प्रातिपदिकप्रकृतिकसुबन्तत्वस्याऽपि सार्वत्रिकत्वात् । इति पूर्वस्येति । उत्तरस्य तु समुदायपदत्वेनापि सिध्यतीति

* ८. २. ७, १०.

सिद्धयोश्च नास्ति संप्रधारणा । एवं तर्हि—'पूर्वत्राऽसिद्धीयमद्विर्वचन' इति वक्ष्यामि । तच्चावश्यं वक्तव्यम् । किं प्रयोजनम् ? विभाषिताः प्रयोजयन्ति—द्रोग्धा-द्रोग्धा । द्रोढा-द्रोढेति* । इह तर्हि—बिसंबिसम्, मुसलंमुसलम्, 'आदेशप्रत्ययोः' [ ८. ३. ५९ ] इति षत्वं प्राप्नोति । 'आदेशो यः सकारः' 'प्रत्ययो यः सकार' इत्येवमेतद्विज्ञायते । इह तर्हि—नृभिर्नृभिः, 'रषाभ्यां नो णः समानपदे' [ ८. ४. १ ] इति णत्वं प्राप्नोति । 'समानपद' इत्युच्यते,

प्र०–रङ्गबहिरङ्गानपेक्षे च चोद्यसमाधाने । नलोपादीनि हि पदत्वमात्रनिबन्धनत्वादन्तरङ्गाणि, द्विर्वचनं तु वीप्साद्यपेक्षत्वाद्बहिरङ्गम् । एवं विभाषिता अपि विधयोऽन्तरङ्गाः ।

विभाषिता इति । ननु 'न ह्येकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्या' इति न्यायाद्यदा पूर्वस्य घत्वादि तदा परस्यापि लाघवाद्भविष्यति । एवं मन्यते—धात्वाकृतिः प्रत्ययाकृतिश्चैकैव । प्रक्रान्तार्थभेदाशङ्कापि नास्ति यथा—'गवां स्वाम्यश्वेषु चे'ति । नित्यत्वविरोधिनी च विभाषा । शक्या चाऽत्र युगपदेकत्र प्रयोगे सा विधातुमिति तस्याः प्रसङ्गः । एतन्न्यायाऽनपेक्षया चैतदुच्यते । आदेश इति । सकारस्यादेशस्य षत्वं न त्वादेशावयवस्य । प्रत्ययो यः सकार इति । आदेशानुरोधेनैतदुक्तम् । प्रत्ययावयवस्य तु सकारस्य षत्वं व्यवस्थापयिष्यते । नृभिर्नृभिरिति । स्थानिवत्त्वात्समुदायस्यैकपदत्वाण्णत्वप्रसङ्गः । समानमेवेति । यत्र निमित्तनिमित्तिनोरवियोगस्तत्र णत्वम् । इह तु वीप्साऽभावे द्विर्वचनाऽभावान्नृभिरिति रेफं पूर्वमन्तरेणाऽपि

उ०–भावः । अन्तरङ्गबहिरङ्गानपेक्षे इति । वक्ष्यमाणे भाष्यगतचोद्यसमाधाने इत्यर्थः । अपादिकेऽन्तरङ्गेतदप्रवृत्तेः । अर्थाऽपेक्षस्य बहिरङ्गत्वाऽभावाच्चेति भावः । विभाषिता अपीति । अतएव 'स्निग्धं—स्निग्धं पश्ये'त्यादौ खण्डद्वयेऽपि विभाषितेयङ्सिद्धिः । एकस्या आकृतेरिति । द्रोहृता—द्रोहृतेति स्थितिर्बोध्या । लाघवादिति । प्रतिपत्तिलाघवादित्यर्थः । एतन्न्यायबीजादि 'कृञ्चे'त्यत्र निरूपितम् । धात्वाकृतिरिति । धातुप्रत्ययाकृतिभेदाभावादेकैवाऽऽकृतिरित्यर्थः । स्वरूपभेदादाकृतिभेदः स्यादेवेत्यरुचेराह—प्रक्रान्तार्थभेदशङ्कापि नास्तीति । यथा—'गवां स्वाम्यश्वेषु चे'त्यत्राश्वेषु तिष्ठतीत्यर्थोन्तरप्रतीतिर्नैवमत्रेत्यर्थः । तद्भेदशङ्कैव तन्न्यायबीजमिति भावः । नित्यत्वविरोधिनी चेति । एकत्र प्रयोगे तदनुष्ठानानुपपत्त्या त्वकरणम्, नचाऽत्र साऽस्तीति भावः । अनपेक्षयेति । अनित्यत्वादिति भावः । 'प्रत्ययो यः सकार' इत्येष न सिद्धान्त इत्याह—आदेशानुरोधेनेति । ननु पदद्वयस्याऽऽदेशत्वात्समानपदस्थत्वाऽभावेन निमित्तनिमित्तिनोः कथं णत्वप्रसक्ति इत्यत आह—स्थानिवत्त्वादिति । यत्रेति । पदे 'आस्तीर्ण'मित्यादौ । अथवेति । पूर्वं प्रयोगान्तराश्रयेण समाम-

* ८. २. ३३.

समानपदमेव यन्नित्यं, न चैतन्नित्यं समानपदमेव । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? 'समानग्रहणसामर्थ्यात्' यदि हि यत्समानं चाऽसमानं च तत्र स्यात्समानग्रहणमनर्थकं स्यात् ।

अथ वा पुनरस्तु द्विःप्रयोगो द्विर्वचनम् । ननु चोक्तम्—"आम्पचसि-पचसि देवदत्ता३—आम एकान्तरमामन्त्रितमनन्तिक इत्येकान्तरता न प्राप्नोती"ति । नैष दोषः । सुप्तिङ्भ्यां पदं विशेषयिष्यामः । 'सुप्तिङन्तं पदम्' [ १. ४. १४ ] यस्मात्सुप्तिङ्विधिस्तदादि सुप्तिङन्तं च ननु चैकैकस्मादेवात्र

---

प्र०—नकारस्य प्रयोगात्सर्वदा समानपदस्थत्वाऽभावः। अथवा स्थानिवद्भावादेकपदत्वं, तत्त्वतस्तु पदद्वयात्मक आदेशः। समानग्रहणमिति। 'रषाभ्यां नो णः पदे' इत्येव वक्तव्यं, तत्राऽपदस्थयोर्निमित्तिनोरसंभवाद्गुणे सङ्ख्याया विवक्षितत्वाच्चैकपदस्थत्वे सिद्धे समानग्रहणं नियमार्थमाश्रीयत इत्यत्र णत्वं न भवति। यस्मात्सुप्तिङ्विधिरिति। अर्थरूपसामान्यात्स एव पच्शब्दः स एव च तिङिति यः पूर्वस्माद्विहितः स परस्मा-दपि, यः परस्मात्स पूर्वस्मादपि। तदादिग्रहणं चानुवर्तते। तेन 'पचसि-पचसी'ति समुदायः पच्छब्दादिः पदसंज्ञ इति सिद्धमेकान्तरत्वम्। ननु चेति। ततो नैकं पदम्।

---

उ०—पदद्वयस्थं नेत्युक्तम्। इदानीमस्मिन्नेव प्रयोगे इति विशेषः। गुणे सङ्ख्याया इति। उद्देश्यगतसङ्ख्यायाः सर्वथाऽविवक्षितत्वात्प्रयोगान्तरेऽनापत्तेश्च चिन्त्यमिदम्, तस्मात्पदद्वय-पर्याप्त्यधिकरणे इत्यर्थः। न च पदसमुदायस्तथेति वाच्यम्। नियमार्थमिति। नियमश्चाऽ-खण्डपदस्याश्रयणरूपः। अखण्डत्वञ्च—निमित्तनिमित्तिमत्पदाऽघटितत्वम्। तेन 'मातृभोगीण' इत्यादौ णत्वं, पदं चाऽर्थबोधकं, तेन 'रामनाम' 'गन्धर्वगान'मित्यादौ न णत्वम्। नन्वेवम'च्पचत्पच'न्निति ङमुट्, 'अग्नेऽग्ने' इति पूर्वरूपं, 'रामान् रामा'न्निति णत्वनिषेधादिकं च न स्यादिति चेन्न, 'द्वे' इति द्विर्वचनपक्षेनानस्तमिताऽवयवभेदसमुदायस्यै-वादेशस्य विधानेन प्रत्येकमपि पदत्वसिद्धेः। तदुक्तं कैयटेन—'पदद्वयाऽऽत्मक आदेश' इतीत्याहुः। भाष्ये—सुप्तिङ्भ्यामिति। 'यस्मा'दिति परिभाषासंस्कृताभ्यामाभ्यां पदं—पदसंज्ञां विशेषविषयां करिष्याम इत्यर्थः। ननु यस्मात्प्रत्ययविधिस्तदादि तदन्तस्यैव पदत्वं प्रोक्तम्। 'पचसि-पचसी'त्यत्र च आदिः 'पच्' शब्दो न तस्मादन्त्यस्तिङिति कथं समुदायस्य पदत्वमत आह—अर्थरूपेति। यः पूर्वस्माद्विहितः स परस्मादपीत्यस्य महतो उपयोगाभिप्रायः। न च शिवादयं महत्वया 'एकस्य लक्षणस्ये'ति न्यायेन पुनरप्रवृत्तिः, रूपभेदात्। तदादिग्रहणञ्चेति। 'प्रत्ययग्रहणे' इति परिभाषयैव सिद्धे 'यस्मात्प्रत्ययविधि'-

सुप्तिङ्विधिः । समुदाये या वाक्यपरिसमाप्तिस्तया पदसंज्ञा । कुत एतत् ? शास्त्राऽहानेः । एवं हि शास्त्रमहीनं भवति । यदप्युच्यते—इह पौनःपुन्यं पौनःपुनिकमिति—अप्रातिपदिकत्वात्तद्धितोत्पत्तिर्न प्राप्नोतीति । मा भूदेवं 'समर्था'दित्येवं भविष्यति । अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति—'भवत्येवंजातीय-

---

प्र०–समुदाय इति । यथा समुदायस्याऽवयवानां चैकाच्त्वे तुल्ये समुदायस्यैव द्विर्वचनं भवति नाऽवयवानां पपाचेति, तथेहापि पदसंज्ञा । एवं हि शास्त्रमिति । प्रत्यवयवं तु पदसंज्ञायां पदसमुदायस्य त्यागात्तद्विषयं शास्त्रं हीनं स्यात् । तदादिग्रहणाऽनुवृत्तिश्चाऽनर्थिका स्यात् । मा भूदेवं समर्थादिति । तद्धितोत्पत्तौ द्वैतं, विभक्त्यन्ताद्वोत्पत्तिः, तदवयवात्प्रातिपदिकाद्वेति । तत्र विभक्त्यन्तादुत्पत्तिरिति पक्ष आश्रीयते । समुदायश्च पूर्वोक्तेन न्यायेन विभक्त्यन्त इति ततस्तद्धितोत्पत्तिरविरुद्धा । अथ वेति । यद्यपि प्राति-

---

उ०–रित्यनुवृत्तेरीदृशार्थलाभ इति भावः । ननु 'चैकैकस्मा'दिति । द्विःप्रयोगत्वाद्द्वितीयस्य प्रयोगोऽपि शास्त्रप्रक्रियानिष्पन्न इति भावः ।

यथा समुदायस्येति । समुदायस्य संज्ञाप्रवृत्तिमात्रेऽयं दृष्टान्तः, नतु तद्वदवयवानां पदत्वाऽभावः । समुदायपदत्वेनाऽवयवमात्रनिष्टपदकार्याननुग्रहणेन तन्न्यायविषयाऽभावात् । अत एव—'अग्नेऽग्ने' इत्यादौ पूर्वखण्डान्त्येन पदान्तत्वनिबन्धनपूर्वरूपादिसिद्धिः । 'नित्यसंक्रमिदं प्रकरण'मिति 'नित्यवीप्सयो'रिति सूत्रस्थभाष्येण तथैव बोधनात् । समुदाये वाक्यपरिसमाप्तिस्तया पदसंज्ञे'ति भाष्यस्य तयापि पदसंज्ञेत्यर्थ इति न विरोधः । अत एव शास्त्राऽहानिरुपपन्ना । अन्यथाऽवयवविषयशास्त्रहानेस्तदवस्थत्वमेव स्यादिति बोध्यम् । एतच्चैकाचो द्वे इति सूत्रे विस्तरेण निरूपितं, न चैवमनेकपदान्तरत्वस्यापि सत्त्वेन कथमेकान्तरतेति वाच्यम्, अनेकपदान्तरे न भवतीत्यर्थस्य विधिस्पृष्टत्वाऽभावेन विशिष्टस्यापि पदत्वेनैकान्तरे भवतीति विधिस्पृष्टार्थस्य सत्त्वेनाऽदोषात् । प्रत्यवयवं त्विति । प्रत्यवयवमात्रं त्वित्यर्थः । ननु पौनःपुन्यादेरपि पूर्वोक्तन्यायेन सिद्धत्वात्पुनः प्रश्नोऽयुक्तोऽत आह—तद्धितोत्पत्ताविति । भाष्ये—समर्थादित्येवमिति । प्रातिपदिकात्समर्थादित्यन्वयः । प्रातिपदिकस्य पदस्य च तत्प्रकृतिके लक्षणेत्यर्थके सुबन्तादव्यवहितपरत्वम्, प्रातिपदिकात्तु व्यवहितमिति न क्षतिः । अङ्गत्वन्तु व्यापकत्वात्समुदायस्यैव, प्राधान्याच्च । 'एकाचो द्वे' इति सूत्रे भाष्ये स्फुटमेतत् । तत्र प्रातिपदिकात्तादृशपरत्वस्याप्यसंभवादाह—भाष्ये—अथवेति । एवं द्विःप्रयोगपक्षोऽपि भाष्ये स्थापितः । अस्माज्ज्ञापकात्स्थानेद्विर्वचनपक्षाश्रयणमेव युक्तमित्याहुः । न चैवं द्विःप्रयोगत्वे 'घटोऽयं घट'इति वाक्यस्यापि पदत्वापत्तिः, एकस्यैव घटस्य बोधनार्थं मन्दं प्रति लौकिको द्विःप्रयोगोऽयमिति नाऽर्थभेदोऽत्र । तथा च—'आम् घटोऽयं घटः अग्निदत्त १'

केभ्यस्तद्धितोत्पत्ति'रिति, यदयं कस्कादिषु† कौतस्कुतशब्दं पठति ।

## नित्यवीप्सयोः ॥ ८ । १ । ४ ॥

इह कस्मान्न भवति—हिमवान्, वाडवः, पारियात्रः, समुद्र इति । 'नित्ये द्वे भवत' इति प्राप्नोति । नैष दोषः । अयं नित्यशब्दोऽस्त्येव कूटस्थेष्व-

प्र०—पदिकात्तद्धितोत्पत्तिस्तथाप्यप्रातिपदिकादपि द्विरुक्ताज्ज्ञापकात्तद्धितोत्पत्तिः । कुत कुत आगत इति कस्कादिषु पाठान्निपातनादव्ययलंत्तणत्यबभावे अण्प्रत्ययः ।

नित्यवीप्स० । इहेति । यदा नाश्रितप्रवृत्तिनिमित्तविशेषो नित्यशब्दः परिगृह्यतेऽङ्गीकृतसामान्यप्रवृत्तिनिमित्तो वा तदाऽत्रापि प्राप्नोति । निमित्तविशेषाङ्गीकरणेऽप्याभीक्ष्ण्यमङ्गीकृतं न कूटस्थत्वमिति विशेषे प्रमाणाऽभाव इति मत्वा प्रश्नः । अथ वा नित्यशब्दस्य कूटस्थत्वलक्षणो मुख्योऽर्थः, शब्दान्तरसंनिध्यनपेक्षणात्, आभीक्ष्ण्यं तु क्रियापदप्रयोगसमधिगम्यं गौणोऽर्थः, अविच्छेदोपलब्धिसामान्यमाश्रित्य तत्र प्रयोगात् । ततश्च गौणमुख्ययोर्मुख्ये संप्रत्यय इति कूटस्थवाचिनामेव द्विर्वचनेन भाव्यम् । येषां च प्रयोक्तृभिरुत्पादविनाशौ नोपलभ्येते ते नित्याः । तत्र नित्यशब्दस्य तत्पर्यायाणां च 'नित्यं कौटिल्ये गतौ' 'ध्रुवमपाये' इत्यादिनिपातनाच्छक्यो द्विर्वचनाऽभावः प्रतिपत्तुमिति विशेषानुपन्यस्यति—हिमवानिति । कूटस्थेष्वविचालिष्विति । उभयोपादानं नित्यार्थाभिव्यक्त्यर्थम् । कूटस्थे-

उ०—इत्यत्राप्येकान्तरता स्यात् । अतः स्थाने द्विर्वचनत्वमेव न्याय्यमिति वाच्यम्, ईदृशप्रयोगस्यानभिधानेनाऽदोषात् ।

नित्यवी० । नन्वाभीक्ष्ण्यवृत्तिर्नित्यशब्दस्य ग्रहणादाभीक्ष्ण्यस्य च क्रियाविषयत्वात्कथमतिप्रसङ्गोऽत आह—यदानाश्रितेति । अत्र पक्षे नित्यशब्दप्रतिपाद्येऽर्थे इत्यर्थः । अङ्गीकृतसामान्येति । तच्च नित्यशब्दरूपमिति भावः । विशेषे प्रमाणाभाव इति । तथा च सकलविशेषाणां ग्रहणमिति भावः । अथवेति । योऽर्थः शब्दादुच्चारितमात्रादन्यनिरपेक्षः प्रतीयते स मुख्यः, यस्तु शब्दान्तरसंनिधानादिना प्रतीयते स गौण इति विभागः । क्रियापदेति । 'नित्यप्रहसित' इत्यादौ । मुख्यार्थसादृश्यसंबन्धेन प्रतीयमानस्य गौणत्वासं दर्शयति—अविच्छेदोपलब्धीति । कूटस्थस्य यथाऽविच्छेदेनोपलब्धिस्तथा प्रसहनादेरपीति भावः । सामान्यम्—सादृश्यम् । कूटस्थत्वं नाम किं तदाह—येषाञ्चेति । न तु सर्वथोत्पादविनाशराहित्यं, तस्य ब्रह्मण्येव सत्त्वेन 'नित्या पृथिवी'त्यादेरुच्छेदापत्तेः । अत्र पक्षेऽनिष्ट एव द्वित्वं प्राप्नोति न त्विष्ट इति भाष्यार्थः । तत्र नित्यशब्दतत्पर्यायाणां

† ८. २. ४८ सू०.

विचालिषु भावेषु वर्त्तते । तद्यथा—नित्या द्यौः, नित्या पृथिवी, नित्यमाकाश-मिति । अस्त्याभीक्ष्ण्ये वर्तते । तद्यथा—नित्यप्रहसितो नित्यप्रजल्पित इति ।

---

प्र०-ष्वित्येतावत्युच्यमाने राशेरपि नित्यत्वं प्रतीयेत, यस्माद् व्ययो न क्रियते । तथा चोच्यते—'कूटस्थं राशिं कुरु, नाऽस्माद् व्ययः कर्त्तव्य' इति । एवमविचालिष्वित्युच्य-माने यदा क्रियारहितं द्रव्यं भवति तदा तस्य नित्यत्वप्रसङ्गः । उभयोपादाने तु 'येऽर्था उत्पादविनाशरहितास्ते नित्या' इत्युक्तं भवति । नित्या पृथिवीति । अवयवानां विचा-लित्वेऽप्यवयविस्वभावा पृथिवी स्वरूपान्न चलतीति नित्योच्यते । तदिति । आभीक्ष्ण्य-वचन एवाऽत्र नित्यशब्दो गृह्यते न कूटस्थवचनः । कूटस्थवचने हि तद्वाचिनां सुब-न्तानां स्वार्थ एव द्विर्वचनं स्यात् । न चैवं लोके प्रयोगोऽस्ति, प्रयुक्तानां चेदमन्वाख्यानं 'हिमवान्—हिमवा'निति ह्युक्ते वीप्सा प्रतीयते न तु स्वार्थः । सुबन्तानामेव च नित्य-वीप्सालक्षणद्विर्वचनविधानेन तिङन्तानि नाऽनुगृहीतानि स्युः । आभीक्ष्ण्यलक्षणे तु नित्यत्वे गृह्यमाणे तल्लक्षणं द्विर्वचनं तिङन्तानां, वीप्सालक्षणं तु सुबन्तानामित्युभयानु-ग्रहः कृतो भवति । गौणोपि चार्थो लक्ष्यदर्शनवशादिहाश्रीयते, यथा 'शीतोष्णाभ्यां कारिणि 'पार्श्वनान्विच्छती'त्यादौ । यद्याभीक्ष्ण्ये द्विर्वचनं विधीयते किमर्थं वार्तिक-कारः—'क्रियासमभिहारे' 'आभीक्ष्ण्ये' इति वक्ष्यति । क्रियासमभिहारे द्विर्वचनं विधीयमानं यथा लोडन्तस्य भवति—'लुनीहिलुनीहीत्येवायं लुनाती'ति, तथा पापच्यत इत्यादौ यङन्तस्य कस्मान्न भवति ? उच्यते—क्त्वाणमुलावाभीक्ष्ण्ये विषये विहिताविति ताभ्यामेव तस्य द्योतितत्वादप्राप्तं द्विर्वचनं मत्वा तद्विधानम् । प्रत्यय-

---

उ०-त्यागे बीजमाह—तत्र नित्यशब्दस्येति । पौनरुक्त्यपरिहारायाह—उभयेति । नित्या-र्थेति । नित्यशब्दप्रसिद्धार्थेत्यर्थः । उभयोपादाने तु तत्सामर्थ्यादभिमतार्थलाभ इत्याह—येऽर्था उत्पादेति । प्रयोक्त्रनुपलभ्यमानेत्यादिः । ननु पृथ्वीविकाराणां घटादीनामनित्यत्व-दर्शनात्कथं नित्यत्वमत आह—अवयवानामिति । भाष्ये—'तस्येद'मित्यत्र तस्यैवेदमित्य-वधारणमित्याह—आभीक्ष्ण्यवचन एवेति । अत्रोपपत्तिमाह—कूटस्थग्रहणे हीति । 'नित्य-पदेने'तिशेषः । यदनुग्रहाय च आभीक्ष्ण्यवाचिग्रहणमेव न्याय्यमित्याह—सुबन्तानामेवेति । आभीक्ष्ण्यं—पौनःपुन्यम् । गौणोऽपि चेति । पदान्तरसमभिव्याहारगम्यत्वाच्चाऽस्य गौणत्व-मुक्तम् । शीतोष्णपार्श्वशब्दाश्च मन्दकारिशीघ्रकार्यनृजूपायलाक्षणिका इति बोध्यम् । यद्याभीक्ष्ण्ये इति । आभीक्ष्ण्यमेव च क्रियासमभिहार इत्यभिमानः । एवमाभीक्ष्ण्ये द्वे वाच्य इत्यस्यापि वैयर्थ्यम् । शङ्कान्तरं करोति—क्रियासमभिहारे इति । स्वार्थः—पौनःपुन्यं

तद्य आभीक्ष्ण्ये वर्तते तस्येदं ग्रहणम् ।

---

प्र०–द्विर्वचनाभ्यां सहिताभ्यामाभीक्ष्ण्यं द्योत्यत इति वा वार्तिककारः प्रदर्शयति । क्रियासमभिहारश्च द्विविधो भृशार्थः पौनःपुन्यं च । तत्र भृशार्थे द्विर्वचनस्याऽप्रसङ्ग एव । आभीक्ष्ण्यमपि लोटाऽभिव्यक्तमिति तत्रापि तन्न प्राप्नोतीति विधीयते । तत्र यङः क्रियासमभिहारव्यभिचाराऽभावाद्यङैव स्वार्थिकेन क्रियासमभिहारद्योतनाद्यङन्तस्य न भवति । यदा तु भृशार्थे यङ् तदा पौनःपुन्यप्रतिपिपादयिषायां द्विर्वचनं भवत्येव—पापच्यते-पापच्यते इति । लोडपि भवति—पापच्यस्व-पापच्यस्वेति । लोट् तु विषयान्तरेऽपि विधानाद्व्यभिचरति क्रियासमभिहारमिति द्विर्वचनसहित एव तं द्योतयतीति तदन्तस्यैव क्रियासमभिहारलक्षणद्विर्वचनप्रवृत्तिः । अथ नित्यतायां द्विर्वचनं विधीयमानं धातुमात्रस्य कस्मान्न भवति ? धातुर्हि क्रियावाची, क्रियाधर्मश्चाभीक्ष्ण्यम् । नैतदस्ति । परिगृहीतसाधना क्रिया व्यवहारोपयोगिनीति तिङन्तस्यैव भवति । न च धातुमात्रद्विर्वचनेन नित्यत्वं द्योत्यते इति धातुमात्रस्य द्विर्वचनाऽभावः ।

---

उ०–च—क्रियासमभिहारः । अप्राप्तं द्विर्वचनं मत्वेति । समानकर्तृकयोरित्यादिनाऽर्थान्तरेऽपि तद्विधानात्केवलयोस्तद्द्योतने सामर्थ्याऽभावान्मत्वेत्युक्तं, तदाह—प्रत्ययेत्यादि । एवञ्च न्यायसिद्धार्थानुवादकमेव तदिति भावः । एवमाभीक्ष्ण्ये इत्यस्य सार्थक्यमुक्त्वा 'क्रियासमभिहारे' इत्यस्य तदाह—क्रियासमभिहारश्चेति । एवञ्च भृशार्थेऽप्राप्तविध्यर्थमेतदिति भावः । 'नन्वेवं 'भृशार्थे' इत्येव वक्तव्ये 'क्रियासमभिहार'ग्रहणं व्यर्थमत आह—आभीक्ष्ण्यमपीति । विधीयत इति । लोटो विध्यादौ समुच्चये च विधानादाभीक्ष्ण्याभिव्यक्तौ केवलस्य सामर्थ्याऽभावाद् द्विर्वचनमावश्यकमिति प्रतिपादयितुं विधीयत इति तात्पर्यम् । यङन्ते द्वित्वं निवारयति—तत्रेति । द्विर्वचनं भवत्येवेति । 'नित्यवीप्सयो'रित्यनेनेत्यर्थः । सफलाऽवयवविशिष्टक्रियां संपादयन् पुनः पुनः पचतीत्यर्थः । नच पौनःपुन्ये यङि ततो भृशार्थविवक्षायामपि द्वित्वापत्तिः, सूत्राऽप्राप्तेः । वार्तिकं तु लोडन्तमात्रविषयमित्यग्रे निरूपयिष्यामः । लोडपीति । भृशार्थविशिष्टे पौनःपुन्यप्रतिपादनाय धातुसम्बन्धे विवक्षिते लोट्द्विर्वचने अपि भवत इत्यर्थः । तदन्तस्यैवेति । लोडन्तस्यैव, नतु यङन्तस्येत्यर्थः । अतएव 'क्रियासमभिहारे लोण्मध्यमपुरुषैकवचनस्य द्वे भवत' इति वचनं 'क्रियासमभिहारे लो'डिति सूत्रे भाष्ये पठितमिति भावः । नच पौनःपुन्ये यङि 'नित्यवीप्सयो'रिति यङन्ते दुर्वारम् । नच यङोक्तत्वात्तत् । भृशार्थेऽपि यङो विधानेन केवलस्य द्योतने सामर्थ्याभावादिति वाच्यं, भृशार्थे इत्येव सिद्धे क्रियासमभिहारग्रहणादाभीक्ष्ण्ये द्वे इत्यस्मात्स्य ज्ञापकात्पौनःपुन्यस्य केनचिद्द्योतने सौत्रद्वित्वाऽप्रवृत्तिज्ञापनेन यङन्ते द्वित्वाभावसिद्धेः ।

अथ किमिदं वीप्सेति ? आप्नोतेरयं विपूर्वादिच्छायामर्थे सन् विधीयते। यद्येवं—चिकीर्षति जिहीर्षतीत्यत्रापि प्राप्नोति। नैष दोषः। नैवं विज्ञायते—'वीप्सायामभिधेयाया'मिति। कथं तर्हि ? कर्तृविशेषणमेतत्। वीप्सतीति वीप्सः। वीप्सश्चेत्कर्त्ता भवतीति।

---

प्र०—आप्नोतेरिति। व्युत्पत्तिप्रदर्शनेन क्रियाविशेषे योगरूढिर्वीप्साशब्द इति दर्शयति। इतरो रूढित्वमबुद्ध्वाह—यद्येवमिति। करोत्यादिभिः क्रियाभिः कटादीनां या व्याप्तुमिच्छा तद्वाचित्वाच्चिकीर्षतीत्यादेर्द्विर्वचनप्रसङ्गः। रूढत्वाश्रयेणाह—नैष दोष इति। चिकीर्षति-चिकीर्षतीति द्विर्वचने आभीक्ष्ण्यमेव प्रतीयते न तु स्वार्थमात्रम्। नाऽभिधेया वीप्सा गृह्यते—'वीप्सावाचिनो द्वे भवत' इति, किं तर्हि प्रयोक्तृधर्मो, यथा आबाधो गतगत इति ह्युक्ते प्रियस्य चिरगमनेन पीडितो वाक्यं प्रयुङ्क्त इति प्रतिपत्तिः। वीप्सश्चेत्कर्तेति। अत्र प्रयोक्ता कर्ता विवक्षितः। यदा पृथक् संख्यायुक्तानितरेतरयोगमप्राप्तान्सर्वानर्थान् क्रियया गुणेन वा युगपद्व्याप्तुवन् वाक्यं वक्ति तदा स

---

उ०—धातुमात्रस्येति। 'पदस्ये'त्यधिकाराभावादिति भावः। गृहीतसाधनेति। 'कुत्सिते' इति सूत्रस्थभाष्यरीत्या, 'पूर्वं धातुः साधनेने'ति न्यायेन चाऽन्तरङ्गत्वात् पूर्वं साधनाऽऽकाङ्क्षया तत्प्रयुक्तकार्यप्रवृत्त्युत्तरं तदन्वितार्थ एव बहिर्भूताऽऽभीक्ष्ण्यादिसम्बन्ध इति भावः। भावाख्यातान्तेऽपि अन्तरङ्गत्वात्प्रत्यये तदनन्तरमेव द्वित्वमिति तात्पर्यम्। अनभिधानादपि धातोर्द्वित्वाऽभाव इत्याह—नच धातुमात्रेति। क्रियाविशेषेति। व्याप्तिप्रतिपिपादयिषारूपे योगरूढिर्यस्येत्यर्थः। 'रूढिमबुद्ध्वे'ति पाठः। तद्वाचित्वादिति। वीप्सावृत्तेः शब्दस्य द्वित्वमित्यर्थेऽयं दोष इत्यर्थः। रूढत्वेति। पङ्कजादिवद्योगरूढोऽयमिति भावः। 'रूढित्वे'ति पाठो लेखकप्रमादात्। वीप्साया अभिधेयत्वाभावेऽनभिधानं हेतुमाह—चिकीर्षतीत्यादि। प्रयोक्तेति। व्याप्तिप्रतिपिपादयिषारूढवीप्साकर्तृत्वस्य तत्रैव संभवादिति भावः। वीप्सास्वरूपं दर्शयति—यदेति। पृथक्सङ्ख्याऽरिक्तत्वे हेतुः—इतरेतरयोगमप्राप्तानिति। साहित्यमप्राप्तानित्यर्थः। अत्र साहित्यभानाऽभावात्। तेनैकशेषे विषये न द्विर्वचनं, पृथक्सङ्ख्यायोगश्च परिगृहीतैकत्वादीनामेव भानादिति बोध्यम्। केचित्तु—'इतरेतरयोगं प्राप्ता'निति पाठः। 'बोधे' इति शेषः। पृथक्सङ्ख्यायोगाच्चैकशेषतो वैलक्षण्यं बोध्यमित्याहुः, तेषामितरेतरयोगं प्राप्तानिति स्वरूपकथनम्। युगपद्ग्रहणात् क्रमविवक्षायां न द्विर्वचनं, यथा'ऽत्र वनेऽयं वृक्षः शोभनोऽयं वृक्षः शोभन' इति क्रमेण शोभनत्वप्रतिपादने बहूनां शब्दानां प्रयोगो भवति।

युगपद्व्याप्नुवन्—व्याप्तिरूपं सम्बन्धं युगपत्प्रतिपादयन्। अर्थः प्रयोजनमिति।

कः पुनर्वीप्सार्थः ? अनवयवाभिधानं वीप्सार्थः । अनवयवेन द्रव्याणामभिधानमेव वीप्सार्थः ।

**अनवयवाभिधानं वीप्सार्थ इति चेज्जात्याख्यायां द्विर्वचनप्रसङ्गः ॥ १ ॥**

अनवयवाभिधानं वीप्सार्थ इति चेज्जात्याख्यायां द्विर्वचनं प्राप्नोति । व्रीहिर्यव इति ।

**न वैकार्थत्वाज्जातेः ॥ २ ॥**

---

प्र०–वक्तृस्थ इच्छाविशेषो द्विर्वचनेन द्योत्यते । कः पुनर्वीप्सार्थ इति । अर्थः प्रयोजनम् । एवं भूताया वीप्साया उपादाने किं प्रयोजनमिति प्रश्नः । अनवयवाभिधानमिति । साकल्येन द्रव्याणां क्रियागुणसंबन्धप्रतिपादनं वीप्साफलमित्यर्थः । जात्याख्यायामिति । जातौ पदार्थे साकल्येन द्रव्याणां प्रतिपत्तिर्भवति । यथा 'ब्राह्मणो न हन्तव्य' इति सर्वब्राह्मणहननप्रतिषेधः प्रतीयते । न वैकार्थत्वादिति । यदि व्यक्तिव्यतिरिक्ता जातिरथ त्यक्तभेदहेतवो व्यक्तय एव जातिः, उभयथा भेदाभावाज्जातिलक्षण एकोऽर्थः, तत्र यथाग्न्यानयने चोदितेऽचोदितमपि पात्रं नान्तरीयकत्वादग्न्यानयनस्योपादीयते तथा जातौ चोदितायां द्रव्यं क्रियाङ्गभावेन प्रतीयते, ततोऽनवयवाभिधानस्य भेदविषयत्वाज्जात्यभिधाने तदभावाद्द्विर्वचनाभावः । एकशेषेऽप्यस्मिन्वने शोभना वृक्षा इति कतिपयानामपि वृक्षाणां शोभनत्वेन प्रयोगदर्शनादनवयवाभिधानाऽभावाद्द्विर्वचनाऽभावः ।

---

उ०–नाभिधेय इत्यर्थः । अतः 'किमिदं वीप्से'त्यनेन न पौनरुक्त्यम् । अनवयवाभिधानं—साकल्येनाभिधानं, व्याप्यत्वमिति फलति । साकल्येन द्रव्याणां क्रियागुणेति । ग्रामे ग्रामे पानीयमित्यादावपि अस्तिक्रियायाः सत्त्वेन तया सम्बन्धस्य प्रतिपादनाददोषः । वस्तुत इदमुपलक्षणं द्रव्याऽभावयोरपि, 'ग्रामे ग्रामे स्वामी' 'दासेदासे न शूद्र'मित्युदाहरणे आद्ये स्वामीश्वरेति सप्तमी । भेदाभावादिति । आद्यमते स्वरूपत एव तस्याऽभावः । अन्त्ये तद्धेतोस्त्यागात्तज्ज्ञानाऽभावः । ननु जातेः क्रियाङ्गत्वाऽयोगाद् द्रव्यस्यापि शब्दवाच्यताया आवश्यकत्वेत्यत आह—तत्र यथेति । आक्षेपाद् द्रव्यप्रतीतिर्न [illegible] शब्दवाच्यं तदिति भावः । भेदविषयत्वादिति । शब्दवाच्याऽर्थगतपरस्परनिरूपितभेदविषयत्वादित्यर्थः । शब्दवाच्यभिन्नार्थविषयत्वादिति यावत् । द्विर्वचनविषयानवयवाभिधानस्य स्वरूपकथनमिदं, जातिव्यावृत्तये एव 'पृथक्सङ्ख्यापुष्का'निति पूर्वलक्षणे दत्तम् । अनेनाप्येकशेषस्य व्यावृत्तिरित्याह—एकशेषेऽपीति । कतिपयानामपीति । परिगृहीतकृत्स्नानामभावाच्च पृथक्सङ्ख्यापुष्करत्वाऽभावः । अत एकशेषे प्रत्येकं विधेयसम्बन्धो नियमेन न प्रतीयते । नहि 'ब्राह्मणेभ्यः शतं देय'मित्युक्ते नियमेन प्रत्येकं शतं देयं ( भवति ) । 'वृक्षं वृक्षं प्रति सिञ्चती'त्यत्र च तथा प्रतीतिः ।

न चैष दोषः । किं कारणम् ? 'एकार्थत्वाज्जातेः' । एकार्था हि जातिः । 'एकमर्थं प्रत्याययिष्यामी'ति जातिशब्दः प्रयुज्यते ।

**अनेकार्थाश्रयत्वाच्च वीप्सायाः ॥ ३ ॥**

अनेकार्थाश्रया च पुनर्वीप्सा । 'अनेकमर्थं संप्रत्याययिष्यामी'ति वीप्सा प्रयुज्यते । एकार्थत्वाज्जातेरनेकार्थाश्रयत्वाच्च वीप्साया जात्याख्यायां द्विर्वचनं न भविष्यति ।

**निवर्त्तकत्वाद्वा ॥ ४ ॥**

---

प्र०—'ग्रामो ग्रामो रमणीय' इति तूक्ते निःशेषग्रामगतरमणीयत्वप्रतीतिः, तथाऽस्मिन्वने वृक्षो वृक्षः शोभन इत्युक्ते सर्वेषामेव वृक्षाणां प्रत्येकं सन्निवेशनिरपेक्षदर्शनीयत्वयोगप्रतीतिः, 'सर्वे वृक्षाः शोभना' इत्यत्र तु सर्वनाम्ना वीप्साया द्योतनाद्द्विर्वचनाऽभावः । इह तु 'सर्वे माषा ब्राह्मणेभ्यो दत्ता' इति यद्यपि कस्मैचित् त्रयो दत्ताः कस्मैचित् पञ्च, तथापि प्रयोगाद्वीप्साऽभावः । यदा त्वेकैको दत्तस्तदा वीप्सासंभवान्माषोमाषो दत्त इति द्विर्वचनं भवति । वृत्तिकारैरप्युक्तम्—'नानावाचिनामधिकरणानां क्रियागुणाभ्यां युगपत्प्रयोक्तुर्व्याप्तुमिच्छा वीप्से'ति । नानाभूतमर्थं द्रव्यलक्षणं ये शब्दा ब्रुवन्ति तेषां यान्यधिकरणान्यभिधेयानि तेषां सहाऽविवक्षितानां पृथक् सङ्ख्यायुक्तानां प्रत्येकं क्रियागुणयुक्तानां प्रयोक्तुः क्रियया गुणेन वा युगपदेककाला व्याप्तुमिच्छा सा वीप्सा । तत्र नानावाचिशब्देन जातिशब्दनिरासः । युगपद्ग्रहणेन क्रमविवक्षायां द्विर्वचननिरासः । यथाऽस्मिन्वनेऽयं वृक्षः शोभनोऽयं वृक्षः शोभन इति क्रमेण शोभनत्वप्रतिपादने बहूनपि शब्दान् प्रयुङ्क्ते । वीप्सा प्रयुज्यत इति । वीप्साविषयत्वाद्द्विर्वचनं वीप्साशब्देनोच्यते । निवर्तकत्वाद्वेति । नेदं द्विर्वचनस्य विधायकमिति जातिशब्दानां द्विर्वचनाऽभावः । द्रव्यशब्दानां तु यावदर्थं प्रयोगे प्राप्ते द्वयोरेव प्रयोग

---

उ०—द्विर्वचनविषयेऽनवयवाभिधानं स्फोरयति—ग्रामो ग्राम इति । सन्निवेशनिरपेक्षेति । साहित्यनिरपेक्षेत्यर्थः । तेनैकशेषाद्वैधर्म्यं दर्शितम् । वैधर्म्यान्तरमाह—इह तु सर्वे माषा इति । युगपदिति । क्रियागुणाभ्यां युगपद्व्यापकत्वेनान्वयं बोधयितुमिच्छेत्यर्थः । सहाविवक्षितानामिति । साहित्यभानाऽभावात्तथ्यं बोध्यं, तदेवाऽऽह—'पृथक्सङ्ख्यायुक्तानामिति । तदुपपादकमेव 'प्रत्येकं क्रियागुणयुक्ताना'मिति । 'युगप'दित्यस्य व्याख्या—एककालेति । नन्वर्थरूपाया वीप्सायाः प्रयोगकर्त्तव्यमयुक्तमत आह—वीप्साविषयत्वादिति । अनेन च जातिशब्देषु प्रयोक्तुर्वीप्साऽसम्भवान्न द्विर्वचनप्रवृत्तिरित्युक्तम् । नेदमिति । ननु द्विःप्रयोगद्विर्वचनपक्षे समुदायपदस्यैवेदमावश्यकमिति कथं नियमार्थं स्यात्, व्यक्त्यभिप्रायकनानाप्रयोगेषु सैव प्रकृतिः स एव प्रत्यय इति कल्पना वक्तुमशक्याऽर्थभेदादिति समुदायपदार्थं सुलभमिति चेन्न, वीप्साविषये पृथगन्तरताप्रयुक्तप्रतिषेधोदाहरणाऽनभिधानेन तदभावात् ।

अथ वा नाऽनेन द्विर्वचनं निर्वर्त्यते। किं तर्हि? अद्विर्वचनमनेन निवर्त्यते। यावन्तस्तेऽर्थास्तावतां शब्दानां प्रयोगः प्राप्नोति, तत्राऽनेन निवृत्तिः क्रियते—'नित्यवीप्सयोरर्थयोर्द्वे एव शब्दरूपे प्रयोक्तव्ये नातिबहु प्रयोक्तव्य'मिति।

**सर्वपदसगतिग्रहणानर्थक्यं चार्थाभिधाने द्विर्वचनविधानात्॥५॥**

सर्वग्रहणं* चानर्थकम्। किं कारणम्? सर्वस्यैव हि द्विर्वचनेनार्थो गम्यते नावयवस्य। पदग्रहणं चानर्थकम्, पदस्यैव हि द्विर्वचनेनाऽर्थो गम्यते नाऽपदस्य। 'सगतिग्रहणं' चानर्थकम्, सगतिकस्यैव हि द्विर्वचनेनाऽर्थो गम्यते नाऽगतिकस्य।

किं पुनरिदं वीप्सायां सर्वमभिधीयते, आहो स्विदेकम्? कश्चाऽत्र विशेषः?

---

प्र०—इति नियमः क्रियते। नातिबह्विति। बहुशब्दस्य वैपुल्यार्थत्वाद्बहुवचनाऽभावः। सर्वपदेति। यदा निवर्तकमिदं तदा सर्वादिग्रहणं न कर्तव्यमित्यर्थः। येषां हि बहूनां प्रयोगः प्राप्तस्तेषां द्विवचनेनाऽसौ निवर्त्तते, न चावयवस्याऽपदस्य गतिसन्निधावगतेर्वा आवृत्तिप्रसङ्गः। अथ परेर्वर्जने इत्यादिषु विधायकेषु कथमवयवद्विर्वचनाऽभावः? उच्यते—'परेर्द्वे भवत' इत्युक्ते समुदायसन्निधौ द्विशब्दः श्रुतः प्रत्यासत्त्या समुदायमेव सङ्ख्येयं प्रतिपादयतीति सर्वादेशः सिद्ध इति नार्थः सर्वग्रहणेन।

किं पुनरिति। 'अनवयवाभिधानं वीप्सार्थ' इति यदुक्तं तन्नोपपद्यत इति मत्वा

---

उ०—सूत्रारम्भेऽपि तदुपपादनाऽसंभवाच्च। नियमत्वे समुदायेनैव सकलार्थप्रतीत्या एकैकस्यार्थाऽभावात्, विधायकत्वाऽसंभवाच्च। स्थाने द्विर्वचनपक्षेऽपि प्राप्ताऽनेकप्रयोगस्य स्थाने तदवयवीभूतं प्रयोगद्वयमेव कर्तव्यमिति बोध्यते। स्थानषष्ठीनिर्देशाच्चेतरनिवृत्तिः—रमागमेन रोपधयोरिवेति दिक्।

नित्यवीप्सयोरर्थयोरिति भाष्ये नित्यग्रहणन्तु संपातायातम्। ननु 'नातिबहूनी'ति वक्तव्ये नातिबह्विप्यसङ्गतमत आह—बहुशब्दस्येति। आवृत्तिप्रसङ्ग इति। न चैषामभावे स्थाने द्विर्वचनत्वं न सिद्ध्येत्, द्विःप्रयोगेऽपि दोषाणामुद्धारात्। सत्यपि तस्मिन्'नेकाचो द्वे' इतिवद्द्विःप्रयोगस्य दुर्वारतया स्थानषष्ठ्यैव लक्ष्यानुरोधेन कारणीकर्त्तव्यतया 'नित्यवीप्सयो'-रित्यत्र 'शब्दस्ये'त्यस्य 'परे'रित्यादेश्च सम्बन्धेनाऽदोषाच्चेति भावः। उच्यते परेरिति। एव-मन्यत्रापि बोध्यम्। अनवयवाभिधानं वीप्सार्थं इत्युक्त्यैव कोटिद्वयाऽऽकारसन्देहानु-

---

* ८. १. १. † ८. १. १.

**वीप्सायां सर्वाभिधाने वचनाऽप्रसिद्धिः ॥ ६ ॥**

वीप्सायां सर्वाऽभिधाने वचनं न सिध्यति—ग्रामो-ग्रामः, जनपदो-जनपदः। बहवस्तेऽर्थास्तत्र 'बहुषु बहुवचनम्' [ १. ४. २१ ] इति बहुवचनं प्राप्नोति। अस्तु तर्ह्येकम्।

**एकाभिधानेऽसर्वद्रव्यगतिः ॥ ७ ॥**

एकाऽभिधाने सर्वद्रव्यगतिर्न सिध्यति। अस्तु तर्हि सर्वम्। ननु चोक्तं—'वीप्सायां सर्वाभिधाने वचनाऽप्रसिद्धि'रिति।

**न वा पदार्थत्वात् ॥ ८ ॥**

न वैष दोषः। किं कारणम्? 'पदार्थत्वात्' पदस्याऽर्थो वीप्सा, सुबन्तं च पदं, ङ्याप्प्रातिपदिकाच्चैकत्वादिष्वर्थेषु स्वादयो विधीयन्ते*, न चैतत्प्रातिपदिकम्। यत्तर्हि प्रातिपदिकं—दृषद्-दृषत्, समित्समिदिति। एतदपि प्रत्ययलक्षणेन सुबन्तं न प्रातिपदिकम्। अपर आह—न वा पदार्थत्वात्। न वैष

---

प्र०-प्रश्नः। ग्रामो ग्राम इत्येकवचनं श्रूयते, अर्थास्तु बहवः, तत्र किं श्रुतिप्रामाण्यादेकत्वावसायोऽथाऽर्थवशाद्वीप्साविषयस्य शब्दस्य बह्वर्थत्वं, यथैकशेषशब्दस्य द्व्यर्थत्वं बह्वर्थत्वं वा। कश्चात्र विशेष इति। परिगृहीतैकत्वानां बहूनामर्थानां वीप्सायामभिधानात्सर्वाभिधाने एकाभिधाने वा नास्ति विशेष इति भावः। वीप्सायामिति। सर्वे चेद् ग्रामशब्देनोच्यन्ते तदैकत्वविरोधिबहुत्वसङ्ख्योपजननादेकवचनमिष्टं न सिध्यति। एकाऽभिधानेऽसर्वद्रव्यगतिरिति। यद्येकाभिधानमभ्युपगम्यते तदा सर्वद्रव्यगतिर्न प्राप्नोति। अस्तु तर्हीति। परिगृहीतैकत्वस्य सर्वस्याभिधानमित्यर्थः। पदस्यार्थ इति। निर्ज्ञातसङ्ख्यस्यार्थस्य वीप्सायोग इत्यर्थः। उत्तरकालं तु सत्यपि बहुत्वे प्रातिपदिकत्वाऽभावाद्बहुवचनाऽभावो यथा 'पश्य मृगो धावती'ति दर्शनक्रियापेक्षे सत्यपि कर्मत्वे द्वितीयाऽभावः। न चैतदिति। 'सुबन्तत्वादप्रत्यय' इति प्रतिषेधात्। एतदपीति। 'न ङिसंबुद्ध्यो'रिति तु नलोपविषयमेव ज्ञापकं मन्यते। अपर आहेति। पूर्वमप्राति-

---

उ०-पपत्तिरत आह—अनवयवाभिधानमिति। एकवचनश्रुत्यैकत्वावसायादिति भावः, तदाह—ग्रामो ग्राम इति। नास्ति शेष इति। अन्तरङ्गैकत्वमादाय वचनं, बहुविषयबोधश्च सिद्ध इति भावः। सर्वाभिधानशब्देन विशिष्टसर्वाभिधानं विवक्षितमित्याह—परिगृहीतैकत्वस्येति।

निर्ज्ञातसङ्ख्यस्येति। एवं च पदाधिकाराऽभावेऽपि इदं पदस्यैव तत्साहचर्यादन्येषामपि तत्संबन्धित्वमेवेति बोध्यम्। उत्तरकालं त्विति। द्विर्वचनोत्तरकालमित्यर्थः।

---

* ४. १. २.

दोषः । किं कारणम् ? 'पदार्थत्वात्' । पदस्याऽर्थो वीप्सा, सुबन्तं च पदम्, ङ्याप्प्रातिपदिकाच्चैकत्वादिष्वर्थेषु स्वादयो विधीयन्ते, न चैतत्प्रातिपदिकम् । यत्तर्हि प्रातिपदिकं—दृषद्-दृषत्, समित्समिदिति । एतदपि प्रत्ययलक्षणेन सुबन्तं न प्रातिपदिकम् ।

अथेह कथं भवितव्यं—पचति-पचतितरां तिष्ठति, आहोस्वित् पचतितरां-पचतितरां तिष्ठतीति ? पचतिपचतितरां तिष्ठतीति भवितव्यम् । कथम् ? द्विर्वचनं क्रियतामातिशायिक इति द्विर्वचनं भविष्यति विप्रतिषेधेन । इहापि तर्ह्यातिशायिकाद्द्विर्वचनं स्यात्—'आढ्यतरमाढ्यतरमानये'-

प्र०-पदिकत्वाद्बहुवचनाऽभाव उक्त इदानीमन्यथोच्यते । सङ्ख्यान्तरेणाऽनाविष्टस्य यद्बहुत्वं तस्य वाचकं द्योतकं वा बहुवचनमुत्पद्यते, वीप्सायां तु परिगृहीतैकत्वानामर्थानां बहुत्वोपजननादन्तरङ्गत्वादेकवचनमुत्पन्नमिति स्वादिशास्त्रस्य कृतार्थत्वात्पुनरप्रवृत्तिः । ततो 'न चैतत्प्रातिपदिक'मित्यस्याऽयमर्थः सङ्ख्यान्तरानाविष्टं प्रातिपदिकमत्र नास्तीति । यत्तर्हीति । अर्थाऽभावात्स्वभावतो निवृत्तस्य प्रत्ययस्य लोपविधानद्वारेणानुत्पत्तिरेव प्रत्ययलक्षणायान्वाख्यायत इत्येकत्वानाविष्टमेतत्प्रातिपदिकमिति भावः । एतदपीति । प्रत्ययो लक्षणं यस्य तत्प्रत्ययलक्षणम्—एकत्वं तेन सुबन्तमेतदेकत्वाविष्टमर्थं प्रतिपादयति । निवृत्ते हि प्रत्यये प्रकृतिरेवैकत्वयुक्तमर्थं प्रतिपादयति, यथा राजा तक्षेति नास्त्येकत्वस्याऽप्रतीतिः । 'एकैक'मित्यत्र सत्यपि बहुव्रीहिवद्भावात्प्रातिपदिकत्वे परिगृहीतैकत्वस्यार्थस्य वीप्सायोगादन्तरङ्गत्वादेकवचनं भवति । बहुत्वप्रतीतेस्तु बहिरङ्गत्वाद्बहुवचनाऽभावः । एतस्यैवार्थस्यैकैकस्य प्राचामिति निर्देशो लिङ्गम् । अथेहेति । विनापि

उ०-द्वितीयाभाव इति । कर्मप्रतिपादकस्य द्वितीयस्य प्रातिपदिकत्वाऽभावादिति भावः । मन्यत इति । अत एवाऽस्वरसात्पक्षेऽपर आहेति पक्षान्तरोपादानम् । तत्र पूर्वस्माद्विशेषमुपपादयन्नवतारयमाह—पूर्वमिति । सङ्ख्यान्तरेणाऽनाविष्टस्येति । एकत्वादिनेत्यर्थः । साङ्ख्यान्तरायेनै [illegible] अन्तरङ्गत्वात्तन्निमित्तमेव वचनमिति भावः । नन्वेवं सति यत्तर्हि प्रातिपदिकमिति ग्रन्थोऽसङ्गत इत्यत आह—अर्थाभावादिति । 'एतदपि प्रत्ययलक्षणेने'त्युत्तरग्रन्थेऽर्थं योजयति—प्रत्ययो लक्षणमिति । प्रत्यायने निमित्तमित्यर्थः । नन्वसतः सुपः कथमर्थप्रत्यायकत्वं स्यादत आह—निवृत्ते हीति । 'निवृत्तेऽपी'ति क्वचित्पाठः । अयमेव पक्षो युक्तो मतु पूर्व इत्याह—एकैकमिति । भाष्यपक्षे ह्यत्र बहुवचनं दुर्वारमिति भावः । भाष्यकारेणाप्ययमेव पक्षो ज्ञापितो युक्त इत्याह—एतस्यैवेति । विरम्य

ति । अस्त्यत्र विशेषः—अन्तरङ्ग आतिशायिकः । काऽन्तरङ्गता ? ङ्याप्प्रातिपदिकादातिशायिकः[†], पदस्य द्विर्वचनम् । आतिशायिकोऽपि नाऽन्तरङ्गः । कथम् ? समर्थात्तद्धितोऽसावुत्पद्यते, सामर्थ्यं च सुबन्तेन । अथ वा स्पर्द्धायामातिशायिको विधीयते न चाऽन्तरेण प्रतियोगिनं स्पर्धा गम्यते ।

एवं तर्हीह द्वावर्थौ वक्तव्यौ नित्यवीप्से चाऽतिशयश्च, नचैकस्य प्रयोक्तुरनेकमर्थं युगपद्वक्तुं संभवोऽस्ति । तदेतत्प्रयोक्तर्यधीनं भवति, एतस्मिंश्च प्रयोक्तर्यधीने क्वचित्काचित्प्रसृततरा गतिर्भवति । इह तावत्—पचतिपचतितरां तिष्ठतीत्येषा प्रसृततरा गतिर्यन्नित्यमुक्त्वाऽतिशय उच्यते ।

---

प्र०—चशब्देन पाकस्थानयोरत्र समुच्चय इति केचिदाहुः । अन्ये तु तिष्ठतीति शत्रन्तमाहुः । तिष्ठति देवदत्ते यज्ञदत्तः पक्त्रन्तराऽपेक्षया पचतिपचतितरामित्यर्थः । नित्यवीप्से चातिशयश्चेति । यद्यप्येते त्रयोऽर्थास्तथापि प्रयोगभेदाश्रयेणैतदुक्तम् । तिङन्तेषु नित्यत्वाऽतिशयौ द्वावर्थौ, सुबन्तेषु वीप्साऽतिशयौ । न चैकस्येति । यद्यपि वृक्षा इत्यादौ युगपदनेकार्थाभिधानमस्ति तथापि प्रकृतार्थापेक्षयैतदुच्यते । नित्यतातिशययोर्वीप्सातिशययोश्च निमित्तभेदाद्युगपदभिधानाऽसंभवः ।

प्रयोक्तर्यधीनमिति । नन्वध्युत्तरपदात्खविधानात्कथं केवलस्याधीनशब्दस्य प्रयोगः । अवृत्तिजा वृत्तिजसदृशा अधीनादय इत्यदोषः । इनशब्देन वाऽधिशब्दस्याऽव्ययीभावः परायत्तताप्रतिपादनपरः । क्वचित्काचिदिति । क्रियाप्रकर्षः प्रतियोग्यपेक्षो बहिरङ्ग इत्यन्तरङ्गं पौनःपुन्यं पूर्वं विवक्ष्यते । इह त्वाढ्यतरमाढ्यतरमानयेति प्रकर्ष-

---

उ०—स्यान्वयोपपत्तिमाह—विनापीति । अन्येत्विति । एतत्पक्षे 'षष्ठी चनादर' इति सप्तमी । भाष्ये—पदस्येति । तदर्थस्यैव बहिर्भूताभीक्ष्ण्यादियोगादिति भावः । प्रकारान्तरेणातिशायिकस्य बहिरङ्गत्वं दर्शयति—अथवा स्पर्धायामिति । एवञ्च परत्वादन्तरङ्गत्वाच्च द्वित्वं प्राप्नोतीति भावः । त्रयोऽर्था इति । एवञ्च द्वावर्थावित्येतदनुपपन्नमिति भावः । निमित्तभेदादिति । शब्दभेदादित्यर्थः । द्वित्वं नित्यवीप्से वक्ति । तरवादि त्वतिशयमिति भावः । अवृत्तिजा इति । अव्युत्पन्नाः । वृत्तिजाः—तद्धितान्तसदृशा इत्यर्थः । इनशब्देनेवेति । ईश्वरवाचिनेनशब्देन सप्तम्यर्थवृत्त्यधिशब्दस्याऽव्ययं विभक्तीति समासः । यो यत्र वर्तते स तदधीनो भवतीति परायत्ततालाभः । तिङन्ते द्वित्वे कृते प्रकर्षप्रत्ययः, सुबन्ते तु प्रकर्षप्रत्यये कृते द्वित्वमित्युक्तं भाष्ये । तत्रोपपत्तिमाह—क्रियाप्रकर्ष इति । पदार्थान्तरापेक्षया प्रकर्षयोगात्तस्य बहिरङ्गत्वम् । पौनःपुन्यं तु स्वापेक्षयेत्यन्तरङ्गमििति भावः । सुबन्ते त्वेतद्विपरीतमित्याह—इह त्विति । वीप्साद्विर्वचने हि स्वप्रकृत्यर्थे व्याप्यताप्रतीतिः । प्रकृते चाऽतिशय-

---

† ५. ३. ५५–५७.

इहेदानीमाढ्यतरमाढ्यतरमानयेत्येषा प्रसृततरा गति र्यदतिशयमुक्त्वा वीप्साद्विर्वचनमुच्यते ।

## परेर्वर्जने ॥ ८ । १ । ५ ॥

## परेरसमासे ॥ १ ॥

परेरसमासे इति वक्तव्यम् । इह मा भूत्—परित्रिगर्तं[†] वृष्टो देवः । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । 'परेर्वर्जन' इत्युच्यते न चाऽत्र परिर्वर्जने वर्तते । कस्तर्हि ? समासः ।

---

प्र०–युक्ता एवाढ्या आनयनक्रियायामुपयुज्यन्त इति लब्धप्रकर्षा एव वीप्स्यन्ते । किं च—कृतद्विर्वचनात्तरपि सत्याढ्याढ्यतरमानयेति भाव्यम् । ततश्च प्रकर्षोऽर्थो गम्यते न तु वीप्सा । तस्मात् प्राक् प्रकर्षो विवक्ष्यते ततो वीप्सेति यथेष्टं सिद्धम् ।

परेर्वर्जने । परि त्रिगर्तमिति । त्रिगर्तान्वर्जयित्वा वृष्टो देव इति वर्जनक्रियाकृतो वर्षत्रिगर्तानां संबन्ध इति परेः सन्निधाने वाक्यवत्समासेऽपि प्रतीयत इति द्विर्वचनप्रसङ्गः । कस्तर्हि समास इति । 'जहत्स्वार्था वृत्ति'रिति समास एव वर्ज्यमानोपसर्जने वर्जने वर्तते, अवयवौ त्वनर्थकौ । यदाऽप्यजहत्स्वार्था वृत्तिरिति पक्षस्तदा वाक्ये केवले वर्जने परिर्वर्तते इति तत्रैव द्विर्वचनं समासे तु वर्ज्यमानार्थास्कन्दी द्व्यर्थः परिः केवले वर्जने न वर्तत इति सिद्धो द्विर्वचनाऽभावः । अत्र पक्षे 'न चात्र परिर्वर्जने

---

उ०–विशिष्टे व्याप्यत्वप्रतीतौ तात्पर्यात्पूर्वं तरबिति भावः । आद्ये तु पौनःपुन्यविशिष्टक्रियायामतिशयान्वयेऽतिशयविशिष्टायां वा पौनःपुन्यान्वये न विशेष इत्यन्तरङ्गत्वाद्द्वित्वम् । सुबन्ते त्वतिशयवद्व्याप्यत्वमपि पदार्थान्तरापेक्षमिति समत्वेऽपि द्वयोर्विशिष्टे व्याप्यत्वप्रतीतिनिर्वाहाय पूर्वं तरबितितात्पर्यम् । पूर्वं द्वित्वे विवक्षितार्थाप्रतिपत्तेरप्ययं विभागो युक्त इत्याह—किंचेति । कृतद्वित्वात्तरपि तदन्तस्य प्रातिपदिकत्वात्सुब्लुकि 'प्रकारे गुणवचनस्ये'ति द्वित्वे कर्मधारयवद्भावात्सुब्लुकि 'पटुपटु'रित्यादाविवात्रापि प्रकारार्थो गम्येतेतीष्टार्थप्रतीतिलाभाय पूर्वं प्रकर्षयोगः पश्चाद्वीप्सेतीष्टसिद्धिरित्यर्थः ।

परेर्वर्जने । वाक्यसमानार्थत्वात्समासस्य वाक्यवद्द्विर्वचने प्राप्ते प्रतिषेध इति प्रतिपादयितुं वाक्यवृत्त्योरर्थाऽभेदं दर्शयति—त्रिगर्त्तानित्यादिना । संबन्ध इति । वाक्ये पञ्चमीबोध्यो, वृत्तौ तु तद्बोध्य इत्यर्थः । 'अपपरी वर्जने' इति कर्मप्रवचनीयत्वं 'पञ्चम्यपाङ्परिभि'रिति पञ्चमी । अपपरिबहि'रिति समासः । ननु वाक्यवत्समासेऽपि परिणैव वर्जनं द्योत्यते इति किमिति समासस्य तत्र शक्तिः कल्प्यत इत्यत आह—जहदिति । वर्जनं—संबन्धाऽभावः । एवञ्च त्रिगर्तनिष्ठाऽभावप्रतियोगिसंबंधवद्वृष्टिकर्तृत्वबोधः । तदाह—वर्ज्यमानोपस-

---

[†] २. १. १२.

## परेर्वर्जने वावचनम् ॥ २ ॥

परेर्वर्जने वेति वक्तव्यम् । परि त्रिगर्तेभ्यो वृष्टो देवः । परि-परि त्रिगर्तेभ्यो वृष्टो देवः ।

## वाक्यादेरामन्त्रितस्याऽसूयासंमतिकोपकुत्सनभर्त्सनेषु ॥८।१।८॥

## असूयाकुत्सनयोः कोपभर्त्सनयोश्चैकार्थत्वात्पृथक्त्वनिर्देशानर्थक्यम् ॥ १ ॥

असूया कुत्सनमित्येकोऽर्थः । कोपो भर्त्सनमित्येकोऽर्थः । असूयाकुत्सनयोः कोपभर्त्सनयोश्चैकार्थत्वात्पृथक्त्वनिर्देशोऽनर्थकः । न ह्यनसूयन् कुत्सयति, न चाप्यकुपितो भर्त्सयते । ननु च भो अकुपिता अपि दृश्यन्ते दारकान् भर्त्सयमानाः । अन्ततस्ते तां शरीराकृतिं कुर्वन्ति या कुपितस्य भवति ।

---

प्र०-वर्तत' इत्यस्यायमर्थः—शुद्धवर्जने न वर्तते । अन्य एव द्व्यर्थः परिः समासे, अन्यो वाक्ये शुद्धवर्जनविषयः । कस्तर्हि समास इति । समासविषयत्वात्परिरेव समासः । अन्य एव परिर्द्व्यर्थ इत्यर्थः । वाक्ये नित्यद्विर्वचनप्रसङ्गादाह—परेरिति ।

वाक्या० । असूयाकुत्सनयोरिति । यद्यप्यसूयादयः परस्परस्माद्भिन्नास्तथापि कार्यकारणभावेनैकविषयत्वमेकार्थत्वं ज्ञेयं, तमेव कार्यकारणभावं दर्शयति—न ह्यनसूयन्निति । तत्र कुत्सनभर्त्सनाऽभावेऽप्यसूया कोपश्च भवतो न तु कोपाऽसूयाऽभावे भर्त्सनकुत्सने इति कोपाऽसूययोर्द्विवचनं विधीयमानं भर्त्सनकुत्सनयोरपि तत्सद्भावात्सिध्यतीति कुत्सनभर्त्सनग्रहणमनर्थकं भवतीत्यर्थः ।

ननु चेति । कोपमन्तरेणापि भर्त्सनसद्भावात्पृथग्विधेयं द्विर्वचनमित्यर्थः ।

---

उ०-र्जन इति । अवयवौ त्वनर्थकाविति । इदं चिन्त्यम्, ईदृशजहत्स्वार्थवृत्ते रूढेरन्यत्र भाष्यकारैरनभ्युपगमात् । द्व्यर्थः परिरिति । चिन्त्यमिदं—सूत्राक्षरैः केवले वर्जने वर्तमान-परेरित्यर्थाऽलाभात् । तस्मादयमत्र भाष्यार्थः—कर्मप्रवचनीयानां स्वयोगविहितविभक्त्यर्थ-संबन्धपरिच्छेदकत्वेन तत्र विभक्त्यभावेन तत्त्वाऽसंभवान्निरर्थकः परिः । किंच वाक्यदृष्ट-विभक्त्यर्थान्तर्भावेण तत्र समासस्यैव शक्तिकल्पेन परेस्तद्द्योतकत्वाऽभावः । नहि समासस्य पदार्थान्तर्भावेण शक्तिः, तत्र तद्द्योतकापेक्षा । अतएव घनश्यामादाविवाद्यप्रयोगः परिशब्दस्तु वृत्तौ साधुत्वमात्रार्थं प्रयुज्यते, 'समूलकाषं न्यवधी'दित्यादौ कषिरिवेति ।

वाक्यादेरा० । ननु परगुणासहनमसूया, कुत्सनं निन्दनं, कोपः—क्रोधः, शब्दैर्भयोत्पादनं भर्त्सनमिति कथं तेषामेकार्थत्वमत आह—यद्यपीति । तत्र कुत्सनेति । कार्यं

एवं तर्ह्याह—

> साम्तैः पाणिभिर्घ्नन्ति गुरवो न विषोक्षितैः ।
> लालनाश्रयिणो दोषास्ताडनाश्रयिणो गुणाः ॥

**एकं बहुव्रीहिवत् ॥ ८ । १ । ९ ॥**

इह कस्माद् बहुव्रीहिवद्भावो न भवति—'एकं' इति ? एकस्य द्विर्वचनसम्बन्धेन बहुव्रीहिवद्भाव उच्यते न चाऽत्र द्विर्वचनं पश्यामः ।

---

प्र०—अत्राप्यस्ति कोप इति दर्शयति—अन्तत इति । यद्यकुपिता भर्त्सयेरन् गुरवो नैव दारकास्तेभ्यो बिभियुरिति कोपं प्रदर्शयन्तो भर्त्सयन्ते । ततः सर्वत्र भर्त्सने कोपसद्भावात्पृथग्भर्त्सनग्रहणं न कर्त्तव्यम् । कुत्सनभर्त्सनग्रहणसमर्थनायाह—साम्तैरिति ।

> गुरवो हि हितैषित्वादकुप्यन्तोऽपि भर्त्सनम् ।
> कुर्वते भर्त्स्यमानास्तु कुपितान् प्रतियन्ति तान् ॥ १ ॥
> विनाऽप्यसूयया कुत्सां कुर्वन्तीति पृथक्क्रयोः ।
> निर्देशः सूत्रकारेण विहितः सूक्ष्मबुद्धिना ॥ २ ॥

एकम्० । इह कस्मादिति । केवलो बहुव्रीहिवद्भावोऽनेन विधीयतेऽनिर्दिष्टविषय इति मत्वा प्रश्नः । किं पुनरत्राऽनिष्टं यावता कृतेऽपि सुब्लुकि बहुव्रीहिवद्भावादपरः सुब्भविष्यति । समासग्रहणं च नियमार्थं न तु विध्यर्थमिति प्रत्ययान्तत्वादेक

---

उ०—विनाऽपि कारणं भवति, ननु कारणं विना कार्यमिति भावः । कोपाऽभावे भर्त्सनं न स्याद- सस्तत्राप्यारोपितः कोपोऽस्तीत्याह—यद्यकुपिता इति । इदमुपलक्षणं, यद्यसूयादीना निन्देरन्नित्यस्यापि । तदेव ध्वनयन्नाह—कुत्सनभर्त्सनग्रहणेति । एवं तर्ह्याहेति । एवं तर्हि यत आह ऋषिः—'साम्तै'रिति अतोऽसूयाकुत्सनयोः पृथग्ग्रहणं कर्तव्यमित्यर्थः । तदाह—गुरवो हीति । 'एव'मित्यादिः । ननु कोपाऽभावे भर्त्सनैव कथं स्यादत आह—भाष्ये—लालनेति ।

एकं बहुव्रीहिवत् । ननु द्वित्वसन्नियोगेन विधानात्कथमत्र प्राप्तिरत आह—केवल इति । सुब्लुकमभ्युपगम्य दोषाऽभावमुक्त्वा सुब्लुगेव नास्तीति युक्त्यन्तरमाह—समासग्रहणं चेति । विध्यर्थत्वे स्वप्रत्यय इति प्रतिषेधं बाधित्वा बहुव्रीहिवद्भावात्प्रातिपदिकत्वं स्यादिति भावः । वस्तुतो द्वित्वे कृतेऽपि स्थाने द्विर्वचनत्वे स्थानिवद्भावेन द्विःप्रयोगपक्षे ठक्युक्त्या प्रत्ययान्तत्वेनाऽप्रत्यय इति निषेधो दुर्वारः । यदि बहुव्रीहिवद्भावेन तत्र स्वरूपमात्रेण प्रातिपदिकत्वमुच्यते तर्हीदानीमपि तुल्यमिति चिन्त्यमेवैतत् । पुंवद्भाव इत्यपि चिन्त्यम् । सहि- 'सर्वनाम्नो वृत्तिमात्र' इत्यनेन बाध्यः । सहि वृत्तिघटकानेकभागमध्ये पूर्वभागस्यैव । अत एवात्र 'दक्षिणपूर्वस्यै' इत्यत्रोत्तरपदस्य च न, नचैवं प्रकृते तस्मादेक इत्यादौ दधीत्यादाविव

## एकस्य द्विर्वचनसंबन्धेनेति चेदर्थनिर्देशः ॥ १ ॥

एकस्य द्विर्वचनसंबन्धेनेति चेदर्थनिर्देशः कर्तव्यः । द्विर्वचनमपि ह्यत्र कस्मान्न भवति । तस्माद्वाच्यम्—'अस्मिन्नर्थे द्वे भवतो बहुव्रीहिवच्चे'ति ।

## न वा वीप्साधिकारात् ॥ २ ॥

न वा वक्तव्यम् । किं कारणम् ? 'वीप्साधिकारात्' । 'नित्यवीप्सयोः' [ ४ ] इति वर्तते ।

अथ बहुव्रीहिवत्त्वे किं प्रयोजनम् ?

## बहुव्रीहिवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावौ ॥ ३ ॥

सुब्लोपः* एकैकम् । पुंवद्भावः—गतगता† । यद्येवम्—

---

प्र०—इत्यस्याऽप्रातिपदिकत्वान्नैव वा सुब्लुक् प्राप्नोति । एवं तर्ह्युदाहरणदिक्प्रदर्शिता । इदं तूदाहरणमेकेति । अत्र हि पुंवद्भावः प्राप्नोति ।

एकस्येति । 'द्वे' इत्यधिकाराद्द्विर्वचनसन्नियोगेन विधीयमानो बहुव्रीहिवद्भावस्तदभावे न भवति । द्विर्वचनमप्यनेन विधीयमानमत्र प्राप्नोतीति मत्वाह—एकस्येति । नवेति । वीप्साशब्दः स्वरितत्वप्रतिज्ञानात् 'परेर्वर्जने' इत्यादावर्थान्तरनिर्देशादाकाङ्क्षाया अभावात्तत्संबन्धमननुभूयेहैवोपतिष्ठते । सत्यपि संभवे बाधनं भवतीति न्यायाद्वीप्सायां विधीयमानेन बहुव्रीहिवद्भावेन द्विर्वचनस्य बाधाऽप्रसङ्गादनेनैवोभयं विधीयते । अथेति । किं बहुव्रीहौ दृष्टं सर्वं कार्यमतिदिश्यते अथ किंचिदेवेति प्रश्नः ।

---

उ०—सुब्लुकि'लक्ष्येलक्षणस्ये'ति न्यायात्तद्रहितस्यैव साधुत्वापत्तिरिति यथाश्रुतभाष्यमेव रमणीयम् । कृते द्वित्वे तु लक्ष्यभेदात् पुनर्विभक्तिरिति न दोषः । न च कार्यातिदेशेऽनेनैव सुबुत्पत्तिरिति लक्षणभेदादेक इत्यत्र पुनः सुब्दुर्वार इति वाच्यं, कार्यातिदेशेऽपि प्रातिपदिकत्वरूपकार्यमतिदिश्यते । तद्द्वारैव कार्यान्तरस्य तत्र दर्शनात् । ततः सुब्लोपादि स्वशास्त्रेणैवेत्यदोषात् । अतएव प्रयोजनान्वाख्यानपरसिद्धान्तभाष्ये 'सुब्लोपपुंवद्भावौ'इत्यत्र न न्यूनता । अन्यथा सुबुत्पत्तिरपि तत्र वक्तव्या स्यात् । मम तु लुब्लोपपदेन तन्निमित्तभूतप्रातिपदिकत्वलक्षणान्न दोष इति बोध्यम् । द्विर्वचनसन्नियोगेनेति । कृतद्विर्वचनैकशब्दानुवादेनेत्यर्थः । अनेनैव तद्विधाने हि 'एकश' इति न सिध्येत् । परत्वाद्द्वित्वस्यैवापत्तेः । भस्य तु न शसपवादः । अनेन सह येन नाप्राप्तिन्यायाऽभावात् । द्विर्वचनमप्यनेनेति । अर्थविशेषानिर्देशादिति भावः । भाष्ये—वीप्साधिकारादिति । समुदायोच्चारणेऽप्येकदेशे स्वरितत्वप्रतिज्ञानाद्वीप्सापदानुवृत्तिः । ननु मध्येऽपि संबन्धः स्यादत आह—परेरिति । ननु तेनैव वीप्सायां द्विर्वचनस्य सिद्धत्वादनेन पुनस्तद्विधानं व्यर्थमत आह—सत्यपीति । बहुव्रीहिवद्भावादिति । प्रातिपदिकसंज्ञातिदेशद्वारेति । अस्याशय उक्तः ।

---

* २. ४. ७१. † ८. १. १०; ६. ३. ३४.

## सर्वनामस्वरसमासान्तेषु दोषः ॥ ४ ॥

सर्वनामस्वरसमासान्तेषु दोषो भवति । [ सर्वनाम— ] सर्वनामविधौ दोषो भवति—एकैकस्मै । 'न बहुव्रीहौ' [ १. १. २९ ] इति प्रतिषेधः प्राप्नोति । सर्वनाम । स्वर—नन सुसु‡ । 'नञ्सुभ्याम्' [ ६. २. १७२ ] इत्येष स्वरः प्राप्नोति । स्वर । समासान्त—ऋगृक् । पूःपूः ‡ । 'ऋक्पूरब्धूःपथामानक्षे' [ ५. ४. ७४ ] इति समासान्तः प्राप्नोति ।

---

प्र०–एकैकमिति । सुबन्तसमुदायस्य बहुव्रीहिवद्भावात्सुब्लुकि कृते पुनर्बहुव्रीहिवद्भावादेव सुबुत्पत्तिः । गतगतेति । उत्तरसूत्रेण द्विर्वचनबहुव्रीवद्भावौ । एकैकेत्यत्र तु पुंवद्भावे विशेषाऽभावः । अवग्रहे त्वत्रापि विशेषोऽस्ति । न चाऽत्र नित्या संहिता, 'एकैकयेत्येक' इत्यवग्रहकरणात्, 'अग्रे अग्रे सूक्ष्म' इत्युदाहरणाच्च । नन सुसु इति । 'आबाधे चे'ति द्विर्वचनम् । नन करोति सुसु जागर्तीत्येवमादिवाक्यैकदेश उदाहृतः । अथ 'नञ्सुभ्या'मित्यन्तोदात्तत्वेऽसति केन स्वरेण भाव्यम् ? अत्र हि चत्वारः स्वराः प्राप्नुवन्ति । समासान्तोदात्तत्वं, पूर्वपदप्रकृतिस्वरो, 'नञ्सुभ्यामित्यन्तोदात्तत्वमाम्रेडितानुदात्तत्वं च । तत्र कार्यातिदेश इदमेव कार्याणां विधायकमिति परत्वादाम्रेडितानुदात्तत्वमनेन बाध्यते । शास्त्राऽतिदेशे विरुद्धस्य स्वाश्रयस्यातिदेशेन निवर्तनान्न भाव्यमाम्रेडिताऽनुदात्तत्वेन । यथा च 'नञ्सुभ्या' मित्यस्य समासग्रहणानुवृत्त्याऽनति-

---

उ०–उत्तरसूत्रेणेति । 'आबाधे चे'त्यनेन । अत्र पुंवत्त्वं तु 'स्त्रियाः पुंव'दित्यनेन अतिदेशबलेनोत्तरपदस्यैकार्थेन भिन्नार्थत्वाऽभावेन च सामानाधिकरण्यस्य सत्त्वादिति भावः । नन्वेतत्सूत्रविषये पुंवत्त्वं कुतो नोदाहृतमित्यत आह—एकैकेत्यत्रेति । नचात्रेति । द्विर्वचनविषये इत्यर्थः । 'संहितैकपदे नित्ये'त्यस्य समासग्रहणसामर्थ्येनाऽखण्डपद एव प्रवृत्तेरिति भावः । तदेवाह—अग्रे इति । उदाहरणात् । 'प्रकारे इति सूत्रे भाष्यकारेणे'ति शेषः । अत 'एकैकया आहुत्या'इत्यत्र 'एकऽएकये'त्यवग्रहं याजुषाः कुर्वन्ति । न चाऽत्रेत्यादेरुपयोगश्चिन्त्यः । 'मयूररोमभि'रित्यादौ मुख्यसमासेऽप्यवग्रहणकरणेनाऽवग्रहे संहितानित्यत्वस्याऽप्रतिबन्धकत्वादिति केचित् । 'नन' 'सुसु' इत्येतावन्मात्रेण कथमाबाधाप्रतीतिरत आह—नन करोतीति । भृत्यादीनां कार्यकरणे मान्द्यात्पीडित एवं प्रयुङ्क्ते, शयितस्यात्यन्तजागरणाच्च पीडितः । समासान्तोदात्तत्वमिति । व्याप्यधर्मातिदेशे व्यापकधर्मस्याप्यतिनिर्देशादिति भावः । पूर्वपदप्रकृतिस्वर इति । 'बहुव्रीहौ प्रकृत्ये'त्यनेन । परत्वादिति । अनुदात्तस्यावकाशो 'शुक्ले'इत्यादौ । शास्त्रातिदेशेऽनुदात्तत्वमेव परमत आह—विरुद्धेति । अतिदेशस्याभाव्यादिति भावः । कार्यातिदेशेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदेशत्वेनैव पुरस्था

---

‡ ८. १. १०.

सर्वनामविधौ तावन्न दोषः । उक्तं तत्र* बहुव्रीहिग्रहणस्य प्रयोजनम्—'बहुव्रीहिरेव यो बहुव्रीहिस्तत्र प्रतिषेधो यथा स्याद् बहुव्रीहिवद्भावेन यो बहुव्रीहिस्तत्र मा भू'दिति । स्वरसमासान्तयोरपि—प्रकृतं+ समासग्रहणमनुवर्तते, तेनैव बहुव्रीहिं विशेषयिष्यामः—'समासो यो बहुव्रीहि'रिति ।

---

प्र०-देशादप्रवृत्तिरेवं पूर्वपदप्रकृतिस्वरस्याऽपीति समासान्तोदात्तत्वप्रसङ्गः । उच्यते—'नञ्सुभ्या'मित्यत्रैव 'वनं समासे' इत्यतः सिंहालोकितन्यायेन समासग्रहणमनुवर्तते, न तु 'बहुव्रीहौ प्रकृत्ये'त्यत्र, तेन पूर्वपदप्रकृतिस्वरोऽतिदेशेन भवन् समासाऽन्तोदात्तत्वं बाधते । अक् अगिति । समासमात्राद्विधीयमानो बहुव्रीहेरपि दर्शनादकारोबहुव्रीहिवद्भावात्प्राप्नोति ।

उक्तं तत्रेति । 'विभाषा दिक्समास'इत्यतो 'न बहुव्रीहा'वित्यत्र बहुव्रीहिग्रहणानुवर्तनाद्बहुव्रीहिरेव यो बहुव्रीहिर्मुख्यस्तस्य सर्वनामसंज्ञानिषेध इत्यतिदेशान्न प्रवर्तते । स्वरसमासान्तयोरिति । स्वरे व्याख्यातम् । समासान्ते व्याख्यायते—'समासान्ता' इत्यत्र'समासाच्च तद्विषया'दित्यतः समासग्रहणमनुवर्तते, तेन मुख्यसमासपरिग्रहादतिदेशात्समासान्ताऽप्रसङ्गः । समासमात्रस्य समासग्रहणेन विशेषणादर्थाद्बहुव्रीहेरपि विशेषणम् । 'तेनबहुव्रीहिं विशेषयिष्याम' इत्येतद्भाष्यमुपपद्यते । अन्ये त्वाहुः—बहुव्रीहौ सङ्ख्येये डजबहुगणा'दित्यतः 'ऋक्पूरब्धू'रित्यत्र

---

उ०-तद्वारणं बोध्यम् । तर्हि पूर्वपदप्रकृतिस्वरः स्यादत आह—यथाचेति । अन्तोदात्तत्वप्रसङ्ग इति । एवञ्च विशेषाऽभावाद्विचारोऽयमयुक्त इति भावः । अनुवर्तत इति । अपकृष्यत इत्यर्थः । सन्निहितत्वाच्च 'नञ्सुभ्या'मित्यत्रैव संबन्धो न तु 'बहुव्रीहौ प्रकृत्ये'त्यत्रेत्याशयः । बाधत इति । तेन 'निपाता आद्युदात्ता' इति पूर्वपदमाद्युदात्तं, शिष्टमनुदात्तम् । एवञ्च सत्याम्रेडितानुदात्तत्वेऽपि विशेषाऽभावाच्चिन्त्योऽयं कैयटः । अतिदिश्यमानकार्याणामुत्पत्तिदेशस्यैव देशत्वेन परत्वेनाऽऽम्रेडितानुदात्तत्वस्यैव प्राप्तेश्च । स्वरे समासग्रहणापकर्षेण समाधानपरं भाष्यं त्वतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याऽभावेन, 'नञ्सुभ्या'मित्यतिदेशे आम्रेडितानुदात्तत्वाप्राप्तेरिति बोध्यम् । इदमेवाभिप्रेत्य भाष्ये उपक्रमे सुब्लोपपुंवद्भावावेव प्रयोजने उक्ते, आम्रेडितानुदात्तत्वेनैव स्वरसिद्ध्या विशेषाऽभावात् । अतएव समासवद्भावो नोक्तः । तथाहि सत्यन्तोदात्तत्वापत्तेः । तेन मुख्येति । समास एव समास इत्यश्रवणादिति भावः । एवञ्चानुवृत्तिसामर्थ्यादनेनातिदेशेन तयोरनतिदेश इति तात्पर्यम् । नन्वेवं सति 'तेन बहुव्रीहिं विशेषयिष्याम' इत्ययुक्तमत आह—समासमात्रस्येति । एवं च भाष्येण सामर्थ्यसिद्धं वस्त्वेव दर्शितमिति भावः । ननु 'स्थूलादिभ्यः प्रकारवचने कनि'त्यादावपि संबन्धः

---

* १. १. २८*. + १. १. २२१; ५. ४. ६८.

## कर्मधारयवदुत्तरेषु ॥ ८ । १ । ११ ॥

कर्मधारयवत्त्वे कानि प्रयोजनानि ?

**कर्मधारयवत्त्वे प्रयोजनं सुब्लोपपुंवद्भावान्तोदात्तत्वानि ॥ १ ॥**

सुब्लोपः*—पटुपटुः । पुंवद्भावः+—पटुपट्वी । अन्तोदात्तत्वम्×—पटुपटुः ।

## प्रकारे गुणवचनस्य ॥ ८ । १ । १२ ॥

गुणवचनस्येति किमर्थम् ? अग्निर्माणवकः, गौर्वाहीकः ।

---

प्र०—बहुव्रीहिग्रहणं, 'समासाच्च तद्विषया'दित्यतः समासग्रहणे च संबन्धानुवृत्त्याऽनन्तरैर्योगैः संबन्धमगच्छदनुवर्तते । तदुभयं वाक्यभेदेन संबध्यते, तेन 'ऋगाद्यन्तात्समासादकारः प्रत्ययो भवति । बहुव्रीहेस्तु समासादेव न त्वतिदेशा'दित्यर्थः संपद्यते । अथ 'नने'त्यत्र बहुव्रीहिवद्भावान्नलोपः कस्मान्न भवति ? 'वनं समासे' इत्यतः समासग्रहणं संबन्धानुवृत्त्या पुंवद्भावमविशेषयन्नलोपेऽनुवर्तत इत्यदोषः ।

कर्म० । 'कालककालिके'त्यादौ 'न कोपधाया' इति प्रतिषेधात् पुंवद्भावो बहुव्रीहिवद्भावेन न सिध्यति, पूर्वपदप्रकृतिस्वरश्च प्राप्नोतीति कर्मधारयवद्भावाऽधिकारः ।

प्रकारे० । गुणवचनस्येति किमर्थमिति । क्रियमाणेऽपि गुणवचनग्रहणेऽनिष्टप्रसङ्ग इति प्रश्नः । अग्निर्माणवक इति । अग्निशब्दो वह्नौ वृत्तः सोऽय-

---

उ०—स्यादत आह—संबंधानुवृत्त्येति । 'वनं समासे' इत्यत इति । उत्तरपदाक्षिप्तसमासस्य तेन विशेषणान्मुख्यसमास एव तत्प्रवृत्तिरिति भावः । परंतु बहुव्रीहिवद्भावेन नोत्तरस्य मुख्यसमासचरमावयवत्वरूपमुत्तरपदत्वम्, अतो नात्र लोप इत्याहुः । इत्यदोष इति । अधिशब्दस्याऽऽबाधायां द्वित्वे 'इकोऽसवर्णे'इत्यस्य 'न समास' इति शाकल्यप्रतिषेधस्तु सिरसाहचर्येणौपदेशिकसमासस्यैव तत्र ग्रहणान्नेति बोध्यम् । यद्यभिधानमस्ति ।

कर्मधारयव० । ननु 'बहुव्रीहिव'दित्यनुवृत्त्यैव सिद्धे किमनेनेत्यत आह—कालकेत्यादि । स्वार्थिककान्तमेतत् । आबाधाविषये तु नैतादृशेषु पुंवत्त्वम् । अतएव तत्रैव कर्मधारयवद्भावो नोक्तः । अन्तोदात्तत्वमिति भाष्ये । आम्रेडितानुदात्तत्वं [illegible] न, अतिदेशेन स्वाश्रयविरुद्धस्य निवर्तनात् । अतएवाधिकारत्वेऽपि तस्यात्रानुपस्थितिरिति बोध्यम् ।

प्रकारे गुण० । प्रकारोऽत्र सादृश्यम् । अनिष्टप्रसङ्ग इति । सर्वस्यापि सादृश्ये

---

* २. ४. ७१. + ६. ३. ४२. × ६. १. २२३.

प्रकारे सर्वेषां गुणवचनत्वात्सर्वप्रसङ्गः ॥ १ ॥

प्रकारे सर्वेषां गुणवचनत्वात्सर्वप्रसङ्गः । सर्वे हि शब्दाः प्रकारे वर्तमाना गुणवचनाः सम्पद्यन्ते । तेनेहापि प्राप्नोति—अग्निर्माणवकः । गौर्वाहीक इति ।

सिद्धन्तु प्रकृत्यर्थविशेषणत्वात् ॥ २ ॥

सिद्धमेतत् । कथम् ? 'प्रकृत्यर्थविशेषणत्वात्' । प्रकृत्यर्थो विशेष्यते । नैवं विज्ञायते—'प्रकारे वर्तमानस्य गुणवचनस्ये'ति । कथं तर्हि 'गुणवचनस्य शब्दस्य द्वे भवतः प्रकारे वर्तमानस्ये'ति । अथवा—प्रकारे गुणवचनस्ये'-

---

प्र०–मिति सादृश्यनिमित्तादभेदोपचारान्माणवके वर्तत इति द्रव्ये पूर्वं संवृत्य संप्रत्यपि द्रव्यवचन इति गुणवाचित्वाऽभावान्न द्विरुच्यते । एवं 'गौर्वाहीक' इति गोशब्दः सास्नादिमति वर्तित्वा पूर्ववद्वाहीके वर्तते । प्रकारे सर्वेषामिति । अग्निशब्दोऽभिगतं तैक्ष्ण्यं माणवके प्रतिपादयितुं प्रयुज्यत इति गुणशब्दः । एवं गोशब्दः सास्नादिमद्गतजाड्यप्रतिपादनाय वाहीके प्रयुज्यते । गुणगुणिनोश्चात्र विषये नित्यमभेदोपचाराद्भेदनिबन्धनषष्ठ्यभावः । सिद्धं त्विति । द्विर्वचनस्य प्रकृतिः स्थानीति तदर्थो विशेष्यते न तु प्रकारः । तत्र सर्वस्य गुणवचनत्वाद्व्यभिचाराऽभावात्तद्ग्रहणाद्

त्युच्यते, सर्वश्च शब्दः प्रकारे वर्तमानो गुणवचनः सम्पद्यते, तत्र प्रकर्षगतिर्विज्ञास्यते—'साधीयो यो गुणवचन' इति। कश्च साधीयः? यः प्रकारे च प्राक्च प्रकारात्। अथ वा 'प्रकारे गुणवचनस्ये'त्युच्यते, सर्वश्च शब्दः प्रकारे वर्तमानो गुणवचनः संपद्यते त एवं विज्ञास्यामः—'प्राक्प्रकाराद्यो गुणवचन'इति।

## आनुपूर्व्ये ॥ ३ ॥

आनुपूर्व्ये द्वे भवत इति वक्तव्यम्। मूलेमूले स्थूलाः। अग्रेऽग्रे सूक्ष्माः।

---

प्र०–गुणवचनो यः शब्दो निर्ज्ञातस्तस्य सादृश्ये द्योत्ये द्वे भवत इति सूत्रार्थः। ननु वक्ष्यत्येतत्—'त एवं विज्ञास्यामः प्राक् प्रकाराद्यो गुणवचन' इति, तत्कोऽनयोरर्थयोर्भेदः? उच्यते—इह प्रतिज्ञामात्रं कृतं 'सिद्धं त्वि'ति। तत्र तूपपत्तिर्वक्ष्यते। तत्र प्रकर्षगतिरिति। सामर्थ्याद्गुणवचनत्वे लब्धे पुनर्गुणवचनग्रहणं प्रकर्षप्रतिपत्त्यर्थमुपात्तमित्यर्थः। प्राक् प्रकारादिति। गुणवचनग्रहणसामर्थ्यादवस्थाविशेषः परिगृहीतः। इह च सादृश्यं प्रकार आश्रीयते न तु भेदः। पटुपटुरिति ह्युक्ते पटुसदृशः प्रतीयते। 'प्रकारवचने जातीय'रित्यत्र सादृश्यं प्रकारः केषांचिन्मते गृह्यतेऽन्येषां तु भेदः प्रकारः। अत्र केचिदाहुः—गुणोपसर्जनद्रव्यवाचिनोपि द्विर्वचनं भवति 'शुक्लशुक्लः पट'इति, गुणमात्रवाचिनोऽपि 'शुक्लशुक्लं रूप'मिति। अन्ये तु, गुणविशिष्टद्रव्यवाचिन एव द्विर्वचनं मन्यते—'मूलेमूल' इति। अग्रमध्यमूलानि त्रयो भागाः, तत्रैक-

---

उ०–द्विर्वचने पट्वादयः शब्दाः सादृश्यनिमित्तादभेदोपचारादपटुबोधका इति भावः। एवं हि पटुसादृश्यं तत्र द्योतितं भवति। एवं च यस्य परिपूर्णं पटुत्वं यः पटुकार्याणि सर्वाणि करोति तेन यो न्यूनस्तत्कार्यकारी स 'पटुपटु'रित्युच्यते। 'प्रकारे वर्तमानस्ये'त्यस्यापि-त्यञ्जनया प्रकारे वर्तमानस्येत्यर्थः। इह प्रतिज्ञामात्रमिति। 'अथवे'ति पक्षान्तरोक्तिद्वारेणोक्तेऽर्थे हेतुरभिधीयते इति भावः। सामर्थ्यादिति। प्रकारे वर्तमानस्य सर्वथा गुणवचनत्वादिति भावः। पूर्वव्याख्यानानुसारेण विशेषं दर्शयति—गुणवचनग्रहणेति। गुणवचनस्य प्रकारे वर्तमानस्येत्यर्थं आश्रीयत इति भावः। 'गोवाहीक'इत्यादौ तु प्रकारवृत्तितायाः प्राग्न गुणवचनत्वमिति तात्पर्यम्। आद्यपक्षे द्वित्वोत्तरं प्रकारे व्यक्तमाकृतिमतः, द्वितीये प्रकारे तद्ग्रहणोत्तरं द्वित्वमिति पक्षयोर्भेदः। अयमेव पक्ष एव ज्यायानिति ध्वनयितुं पुनरप्यथवेत्यादिना भाष्ये तस्योपादानम्। केषाञ्चिन्मतेनेति। वामनादीनामित्यर्थः। अन्येषान्त्विति। जयादित्यादीनाम्। तत्राद्यमते द्रव्यवचनेभ्यः प्रकारवचने जातीयर् गुणवचने सादृश्येऽनभिधानेन द्वित्वेन प्राप्तोऽपि बाधो नेष्यत इति वामनः। तत्र मानं चित्रमिति जयादित्यमतमेव युक्तमिति बोधयितुं तत्कण्ठोक्तिः। गुणमात्रवाचिनोऽपीति। व्याप्तिप्रदर्शनमिति भावः। अन्ये त्विति। वचनग्रहणबलेन गुणवचनादित्यादावित्येति तदाशयः। ननु वीप्सायां द्विर्वचनेनैवानुपूर्व्येऽपि सिद्धत्वाद्

## स्वार्थेऽवधार्यमाणेऽनेकस्मिन् ॥ ४ ॥

स्वार्थेऽवधार्यमाणेऽनेकस्मिन् द्वे भवत इति वक्तव्यम्। अस्मात्कार्षापणादिह भवद्भ्यां माषं माषं देहि। अवधार्यमाण इति किमर्थम्। अस्मात्कार्षापणादिह भवद्भ्यां माषं देहि द्वौ देहि त्रीन् देहि। अनेकस्मिन्निति किमर्थम्? अस्मात्कर्षापणादिह भवद्भ्यां माषं देहि। माषमेव देहि। किं पुनः कारणं न सिध्यति? अनवयवाभिधानं वीप्सार्थ इत्युच्यते*, अवयवाभिधानं चाऽत्र

---

प्र०—मेव मुख्यमग्रं मूलं च, अन्येषां तु भागानामपेक्षाकृतोऽग्रमूलव्यपदेशः, अधःसंनिवेशापेक्षोऽग्रव्यपदेशः। उपरि संनिवेशमपेक्ष्य मूलव्यपदेशः। न चैकरूपं भागानां स्थौल्यं सौक्ष्म्यं वा, किं तर्हि यथामूलमुपचीयते स्थौल्यं, यथाग्रं च सौक्ष्म्योपचय इति वीप्साया अभावः। स्वार्थ इति। स्वार्थग्रहणमर्थान्तराऽभावप्रदर्शनार्थम्। अस्मात्कार्षापणादिति। अनेकमाषसमुदायः कार्षापणः। तत्र सर्वे माषा दानक्रियया न व्याप्यन्ते किं तर्हि द्वावेवेति वीप्साऽभावः। भिन्नार्थत्वाच्चाऽनेन द्विर्वचनेनैकशेषो न बाध्यते। 'इह भवद्भ्यां माषौ देही'त्युक्ते एकैकं देहीत्यर्थो न गम्यते। माषं माषं देहीत्युक्ते एकैकदानप्रतीतिः। द्वौ देहीति। माषं माषौ माषान्देहीत्यस्यार्थस्य प्रदर्शनपरमेतत्। माषशब्दस्य हि द्विर्वचनाभावः प्रदर्शयितव्यस्तत्र यथेच्छं देहीत्यस्यार्थस्य प्रदर्शनादवधारणस्याऽभावः। माषमेव देहीति। अवधारणमत्राऽस्तीति प्रतिपादयति। किं पुनरिति। यथा द्वावेव माषौ निर्ज्ञातौ यदा दानक्रियया व्याप्येते तदा माषं माषं देहीति वीप्सायां द्विर्वचनं भवति, एवमनेकमाषसमुदायादपि कार्षापणाद् द्वयोरस्ति दानक्रियया व्याप्तिरिति सिद्धं द्विर्वचनमिति भावः। इतर आह—अनवयवाभिधानमिति। एवं मन्यते—वीप्सायां संनिहिताऽर्थस्य न कस्य चिद्वर्जनमस्ति इह तु वर्जन-

---

उ०—वचनेनेत्यत आह—अग्रमध्येति। वीप्साया इति। एकजातीयानां पदार्थानामेकरूपगुणाद्यन्वये हि वीप्सेति भावः। 'मूले मूले पथि विटपिना'मित्यादौ तु वीप्सायामेव द्वित्वं बोध्यम्। स्वार्थग्रहणमिति। अन्यथात्राऽपि एकमितिवद्वीप्सार्थसंबन्ध इति भ्रमः स्यादिति भावः। भिन्नार्थत्वमुपपादयति—इह भवद्भ्यामिति। न गम्यत इति। किन्तु प्रत्येकं माषद्वयदानं प्रतीयते इति भावः। ननु 'द्वौ देही'त्यायुक्तं, द्विशब्दादेर्द्विर्वचनाऽभावप्रतिपादने तात्पर्याऽभावादित्यत आह—माषं माषाविति। भाष्ये 'माषं देही'त्यस्य विवरणं—'माषमेव

गम्यते । आतश्चावयवाभिधानं, यो ह्युच्यते—'अस्मात्कार्षापणादिह भवद्भ्यां माषं माषं देही'ति, माषं माषमसौ दत्वा पुनः शेषं पृच्छति—'किमनेन क्रियता'मिति । यः पुनरुच्यते—'इमं कार्षापणमिह भवद्भ्यां माषं माषं देही'ति माषंमाषमसौ दत्वा तूष्णीमास्ते ।

## चापले ॥ ५ ॥

चापले द्वे भवत इति वक्तव्यम् । अहिरहिर्बुध्यस्व बुध्यस्व । न चावश्यं द्वे एव, यावद्भिः शब्दैः सोऽर्थो गम्यते तावन्तः प्रयोक्तव्याः । अहिरहिरहिर्बुध्यस्व बुध्यस्व बुध्यस्वेति ।

## क्रियासमभिहारे ॥ ६ ॥

क्रियासमभिहारे द्वे भवत इति वक्तव्यम् । स भवान् लुनीहिलुनीहीत्येवायं लुनाति† । पुनीहि पुनीहीत्येवाऽयं पुनाति ।

## आभीक्ष्ण्ये ॥ ७ ॥

प्र०—मस्तीति वीप्साया अभावः । इमं कार्षापणमिति । अत्र वीप्सायां द्विर्वचनमिति निःशेषमापदानावगमः । चापल इति । आशुप्रतिपादनं चापलम् । अहिरहिरिति । यद्यहमेनं न बोधयामि तदा हन्यत एवायमहिनेति ज्ञात्वाऽऽशु प्रतिपादनाय वाक्यप्रयोगः । न चावश्यमिति । एवं च ब्रुवताऽनेन नेदं शास्त्रीयं द्विर्वचनं किं तर्हि परप्रत्यायनायाऽनेकस्वतन्त्रपदप्रयोग इत्युक्तं भवति । एवं चाहिरहिरित्याम्रेडितानुदात्तत्वाऽभावाद्यथाप्राप्तः स्वरो भवतीत्याहुः । क्रियासमभिहार इति । लोडन्तस्यैवेदं द्विर्वचनं न यङन्तस्य, लोटः समुच्चयेऽपि विधानात्क्रियासमभिव्याहारव्यक्तौ केवलस्य सामर्थ्याभावात् । यङ् तु क्रियासमभिहारविषय एवेति तद्द्योतने स्वयं सामर्थ्यान्नापेक्षते द्विर्वचनम् । आभीक्ष्ण्य इति । ननु चाभीक्ष्ण्यं नित्यतेति नित्यवीप्सयोरिति सिद्धं द्विर्वचनम् । नैतदस्ति । पुनःपुनः

उ०—देही'ति । न कस्य चिद्वर्जनमिति । यथा 'ग्रामो ग्रामो रमणीय' इत्यादौ । एवञ्च ब्रुवतेति । वचनप्रत्याख्याने तात्पर्यमिति भावः । लोडन्तस्यैवेति । अस्य बीजादि प्रागेव निरूपितम् । आभीक्ष्ण्य इति वचनस्य प्रयोजनं वक्तुं नित्याभीक्ष्ण्यशब्दयोरर्थभेदप्रदर्शनायाह—ननु चेति । यथा जीवति जीवतीति । किं देवदत्तो मृतो वा तिष्ठति वेति प्रश्ने इदमुत्तरम् । आभीक्ष्ण्यविषय इति । कृदन्तादिव्यावृत्तये इत्यर्थः । विच्छेदाऽविच्छेदौ तु न

† ३. १ २.

आभीक्ष्ण्ये द्वे भवत इति वक्तव्यम् । भुक्त्वा भुक्त्वा व्रजति । भोजंभोजं व्रजति+ ।

डाचि च ॥ ८ ॥

डाचि च द्वे भवत इति वक्तव्यम् । पटपटायति मटमटायति ।

---

प्र०—क्रियाया उत्पत्तिराभीक्ष्ण्यम् । तथा हि 'भुक्त्वा व्रजती'त्युक्ते सत्यपि क्रियाविच्छेदे पुनर्भुङ्क्ते पुनर्व्रजतीति क्रियाऽऽवृत्तिः प्रतीयते । नित्यता क्रियाया अविच्छेदो, यथा 'जीवतिजीवती'त्युक्ते जीवत्येवायमिति प्रतीयते न त्वावृत्तिः, न ह्यसौ जीवित्वा म्रियते मृत्वा वा जीवति, जीवनमेव दीर्घमविच्छिन्नं प्रतीयते । यत्तूक्तं भाष्ये—'तद्य आभीक्ष्ण्ये वर्तते' इति—नित्यशब्दस्य विषयोपलक्षणार्थम्, आभीक्ष्ण्यविषयो यो नित्यशब्दस्तस्य ग्रहणमित्यर्थः । तथा च वृत्तिकारा आहुः—'यां क्रियां कर्ता प्राधान्येनाऽनुपरमन्करोति तन्नित्यम्' । अन्ये त्वाहुः—भुक्त्वाभुक्त्वा व्रजतीत्यादौ क्त्वाणमुलन्तस्य द्विर्वचनं प्राप्नोति तिङन्तस्य च । तत्राभीक्ष्ण्यसंशब्दनेन यो विहितस्तदन्तस्य यथा स्यात्तिङन्तस्य मा भूदिति नियमार्थमिदम् । अन्ये तु प्रत्ययेनाभीक्ष्ण्यस्य द्योतनादप्राप्तं द्विर्वचनं विधीयत इत्याहुः । अथ 'क्रियासमभिहारे' इति सिद्धे 'आभीक्ष्ण्ये' इति किमर्थमुच्यते । क्रियासमभिहारसंशब्दनेन यो विधीयते तदन्तस्यैव द्विर्वचनमिति कश्चिद्विपर्यस्येदिति वाक्यद्वयोपन्यासः । डाचीति । विषयसप्तमीयम् । तेनाऽनुत्पन्न एव डाच्यकृतटिलो-

---

उ०—विवक्षिताविति तात्पर्यम् । तिङन्तस्य चेति । भोजनवद्व्रजनस्यापि पौनःपुन्यावगमादिति भावः । अत्र नियमे 'आभीक्ष्ण्यविहितप्रत्ययान्तसमभिव्याहारे'इति पूरणीयम् । तेन पचति पचतीत्यादावप्येवं सति द्विर्वचनानापत्तिरिति परास्तम् । अन्येत्विति । अत्राऽरुचिवीजन्तु अर्थान्तरेऽपि तयोर्विधानेन केवलयोस्तद्द्योतने सामर्थ्याऽभाव इति । आद्यं व्याख्यानमपि न युक्तं, 'तद्य आभीक्ष्ण्य'इति भाष्यसङ्कोचे मानाभावात् । 'नित्यवीप्सयोरित्येव सिद्ध'मिति वृत्तिविरोधाच्च । वृत्तिस्थनित्यलक्षणमपि चिन्त्यमेव, अप्रधानक्रियाकृतविच्छेदस्य नित्ये आभीक्ष्ण्ये चावश्यं सत्त्वम् । विच्छेदकाऽप्रधानक्रिया च 'भुक्त्वा भुक्त्वे'त्यादावुपात्तव्रजनादिरूपैव, उपस्थितपरित्यागे मानाऽभावात् । एवं क्त्वाप्रत्ययक्त्वाद्यन्तद्वित्वाभ्यामेव व्रजनादिनिष्ठाभीक्ष्ण्यस्य द्योतनात्त क्त्वाद्यन्तसमभिव्याहारे तिङन्तस्य द्वित्वमिति द्वितीयमतमपि चिन्त्यम् । 'जीवति जीवती'त्यादौ तु 'कमलानि कमलानी'तिवदेकं जीवतिपदं दीर्घाऽविच्छिन्नजीवनलक्षकमिति न तत्र शास्त्रीयद्वित्वमिति मम प्रतिभाति । एतत्प्रयोजनन्तु पौनःपुन्यस्य केनचिद्द्योतने सौत्रद्वित्वाऽप्रवृत्तिज्ञापनमिति 'नित्यवीप्सयो'रित्यत्र उपपादितमस्माभिः । कश्चिद्विपर्यस्येदिति । वस्तुतस्तु इदमेव ज्ञापकं,—'तस्य लोट्येव प्रवृत्ति'रिति, तेन यङन्ते न तस्य प्रवृत्तिरित्याहुः । विषय-

---

+ १.४.२२.

## पूर्वप्रथमयोरर्थातिशयविवक्षायाम् ॥ ६ ॥

पूर्वप्रथमयोरर्थातिशयविवक्षायां द्वे भवत इति वक्तव्यम् । पूर्वंपूर्वं पुष्प्यन्ति । प्रथमंप्रथमं पच्यन्ते ।

---

प्र०—पस्य पटदित्यादेर्द्विर्वचनं, ततोऽव्यक्तानुकरणादिति डाच् । ततष्टिलोपः । ततो 'नित्यमाम्रेडिते डाची'ति पररूपत्वम् । केचित्तु पररूपविधानमच्छब्दस्य डाचीति परसप्तम्यामपि टिलोपात्प्राग्द्विर्वचनमित्यस्यार्थस्य ज्ञापकमाहुः । तदयुक्तम् । 'पत'दित्यादेः कृतटिलोपस्याऽप्यच्छब्दस्य संभवात् । तस्मा'ड्डाची'ति विषयसप्तम्येवाश्रयणीया । प्रयोगदर्शनवशाच्चाव्यक्तानुकरणाड्डाचीदं द्विर्वचनं न तु सूत्रान्तरविहित इति द्वितीयाकरोतीत्यादौ द्विर्वचनाऽभावः । केचित्तु 'नित्यमाम्रेडिते डाची'ति पररूपविधानमेवाऽव्यक्तानुकरणाड्डाचि द्विर्वचनमनुमापयतीत्याहुः । यदा तु पररूपमकारान्तानुकरणाद्वेतीति प्रत्याख्यायते तदा द्विर्वचनं वक्तव्यमेव । बहुलग्रहणमत्राऽन्येऽधीयते, तेन द्वितीयाकरोतीत्यादौ द्विर्वचनाभावो, डाचीति परसप्तम्यामपि नित्यादपि टिलोपात्पूर्वं द्विर्वचनं च सिध्यति । पूर्वप्रथमयोरिति । कचिदाद्यादिविवक्षायामिति पठन्ति । अन्ये त्वर्थातिशयविवक्षायामिति । तत्र भिन्नार्थत्वाद्द्विर्वचनेनातिशायिको न बाध्यत इत्याहुः । तथा हि 'पूर्वतरं भुङ्क्ते' इत्युक्ते किमात्मसाध्यक्रियान्तरापेक्षं भोजनस्य पूर्वत्वमथ भोक्त्रन्तरसाध्यभोजनापेक्षमिति सन्देहः । एवं 'पूर्वपूर्वतरं पुष्प्यती'त्ययमप्यर्थो गम्यते

---

उ०—सप्तमीति । परसप्तम्यां तु डाचि द्विर्वचनस्य शब्दान्तरप्राप्त्याऽनित्यत्वेन नित्यत्वाट्टिलोपे पटपटेत्यस्याऽसिद्धिरन्योन्याश्रयश्च,—डाचि द्वित्वं द्वित्वे द्व्यजवरार्धत्वं सति च तस्मिन् डाजितीति भावः । ततष्टिलोप इति । उत्तरखण्डे पररूपं च, डाच्पराम्रेडिते परे पूर्वखण्डस्य पररूपमेवेति । अन्यथा डाच्पराम्रेडिते पररूपविधानमनर्थकं स्यादिति भावः । यदा तु पररूपमिति । 'नित्यमाम्रेडिते डाची'त्येतत् । अत्रान्यैरिति । वृत्तिकारैः । आश्रीयत इति । अपकृष्य व्याख्यात इत्यर्थः । बहुलग्रहणस्य प्रयोजनान्तरमाह—परसप्तम्यामपीति । अतएव डाजभावेऽपि क्वचिद्भवति 'पटपटे'ति । अतएव 'नाम्रेडितस्यान्त्यस्य तु वे'ति चरितार्थम् । भाष्ये—डाचिचेति । चेन तदभावेऽपीत्यपि बोध्यम् । अन्योन्याश्रयपरिहाराय विषयसप्तम्या आवश्यकत्वमिति । केचिदाद्यादीति । पाठद्वयेऽपि पूर्वप्रथमशब्दयोर्योऽर्थस्तस्यातिशयविवक्षायामित्यर्थः । नन्वेवं विशेषविहितत्वादातिशायिकस्य द्वित्वेन बाधः प्राप्नोतीत्यत आह—तत्र भिन्नार्थत्वादिति । आतिशायिकशब्दोऽनुशतिकादिः । पूर्वत्वमिति । पूर्वत्वातिशय इत्यर्थः । इति सन्देह इति । प्रकरणादिवशाच्च निर्णय इति भावः । पूर्वं पूर्वं भुङ्क्ते इत्यतस्तु अन्येभ्यो भोक्तृभ्योऽतिशयेनेत्यर्थ एव गम्यते ।

## डतरडतमयोः समसम्प्रधारणायां स्त्रीनिगदे भावे ॥ १० ॥

डतरडतमयोः समसंप्रधारणायां स्त्रीनिगदे भावे द्वे भवत इति वक्तव्यम्। उभाविमावाढ्यौ, कतराकतराऽनयोराढ्यता। सर्वे इमे आढ्याः, कतमा कतमैषामाढ्यतेति।

## कर्मव्यतिहारे सर्वनाम्नो समासवच्च बहुलं, यदा न समासवत्प्रथमैकवचनं तदा पूर्वपदस्य ॥ ११ ॥

कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यम्, समासवच्च बहुलम्। यदा न समासवत्प्रथमैकवचनं भवति तदा पूर्वपदस्य। अन्योन्यमिमे ब्राह्मणा

---

प्र०-न तावदयं किसलयितो यावदेव पुष्प्यतीति। 'पूर्वं पूर्वं पुष्प्यती'त्यस्मात्तु पुष्पितृभ्योऽन्येभ्यः पूर्वं पुष्प्यतीत्यर्थः प्रतीयते। अत एवाद्यादिविवक्षायामित्युच्यते। आदेरादिविवक्षायामादेर्वातिशयविवक्षायां द्विर्वचनमित्यर्थः। डतरडतमयोरिति। डतरडतमान्तस्य द्वे भवतः, आढ्यत्वादिना समेन तुल्येन गुणेन संप्रधारणायां निरूपणायां विषये। तथाहि उभाविमावाढ्याविरयुक्तेऽनेकप्रकाराढ्यत्वसंभवात्प्रतिपत्ता किंकृतमनयोराढ्यत्वमिति सन्दिहानः पृच्छति—'कतराकतरानयोराढ्यते'ति। स्वार्थे चैतद्द्विर्वचनम्। स्त्रीनिगदो भावः—स्त्रीलिङ्गशब्दाभिधेयो-भूतिः, ऋद्धिः, संपत्, आढ्यतेति। निगद्यत इति निगदः। 'नौ गदे'त्यप्। स्त्रिया निगदः—स्त्रीनिगदः। कर्मव्यतिहार इति। क्रियाव्यतिहार इत्यर्थः। तत्र द्विर्वचनं नित्यं भवति। समासवद्भावस्तु बहुलम्। तत्र बहुल-

---

उ०-अयमपीति। अन्येभ्यः पुष्पितृभ्योऽतिशयेनेत्यप्यर्थः। अन्येभ्यः पूर्वमिति। अन्येभ्योऽतिशयेनेत्यर्थः पाठान्तरेणैकवाक्यत्वायाह—आदेर्वातिशयेति। द्वितीय 'आदि'शब्दोऽतिशयलक्षक इति भावः। एवं चेदं वचनं नावश्यकम्, एकस्य पूर्वशब्दस्यातिशयलक्षणयाऽप्युपपत्तेः। किं कृतमिति। किं साधनसंपत्कृतमुत दैवकृतमित्यर्थः। परिप्रश्ने प्रत्ययौ। 'स्त्रीनिगद' इत्यस्यार्थकथनं—स्त्री लिङ्गेति। स्त्रीलिङ्ग शब्दाभिधेये भावे वर्तमानयोरित्यर्थः। भावश्चाऽविशेषात्कृत्तद्धितोऽपि गृह्यते। तदाह—भूतिः ऋद्धिः संपत् आढ्यतेत्यादि। निगदः—निगदनकर्मीभूतोऽर्थः। स्त्रीशब्देन स्त्रीलिङ्गः शब्दः। कर्तृषष्ठ्या समासः। क्रियाव्यतिहार इति। परस्परकरणमत्र सः। समासवद्भावस्तु बहुलमिति। अनन्तरन्यासेनैव बहुलशब्दस्य सम्बन्ध इति भावः। अत एव भाष्ये 'यदा न समासव'दित्येवोक्तम्।

भोजयन्ति । अन्योऽन्यस्य भोजयन्ति । इतरेतरं भोजयन्ति । इतरेतरस्य भोजयन्ति ।

### स्त्रीनपुंसकयोरुत्तरपदस्य वाऽम्भावः ॥ १२ ॥

स्त्रीनपुंसकयोरुत्तरपदस्य वाऽम्भावो वक्तव्यः । अन्योन्यमिमे ब्राह्मण्यौ भोजयतः । अन्योन्यां भोजयतः । इतरेतरं भोजयतः । इतरेतरां भोजयतः । अन्योन्यमिमे ब्राह्मणकुले भोजयतः । अन्योन्यां भोजयतः । इतरेतरं भोजयतः । इतरेतरां भोजयतः ।

---

प्र०—ग्रहणादन्योन्यशब्दे समासवद्भावाऽभावात्सुब्लुग्न भवति, नाऽपि समासान्तोदात्तत्वमित्याम्रेडितानुदात्तत्वं भवति । इतरेतरशब्दे तु नित्यः समासवद्भाव इति सुब्लुक्समासस्वरौ भवतः । स्त्रीनपुंसकयोरिति । उत्तरपदस्य या विभक्तिस्तस्या आम्भावोऽन्यथानेकाऽल्त्वात् सर्वस्योत्तरपदस्याऽऽम्भावः स्यात् । तत्र 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव'इति स्त्रीनपुंसकयोः पुंवद्भावे कृते पक्षे आम्विधिः । वार्तिकेषु कर्मधारयवदिति न संबध्यत इति सुब्लोपादि न भवति ।

---

उ०—समासवद्भावाभावादिति । अत्र नित्यस्तदभावः । तथैव भाष्योदाहरणात् । एवं च यदेति यत्रेत्यर्थकं भाष्यम् । भाष्ये—प्रथमैकवचनं भवतीति । बहुलग्रहणसिद्धोऽयमर्थः । 'परस्पर'-शब्दे तस्य ह्रस्वाद्यभावो नपुंसकेऽन्योन्यमित्यादौ पूर्वखण्डेऽमभावश्च । तत एव नित्य इति । तथैव भाष्योदाहरणादिति भावः । भाष्ये अन्योन्यस्येत्यादि कर्मणः शेषत्वविवक्षायां षष्ठी, पुत्राद्यपेक्षया । वार्तिकेषु कर्मधारयवत्पदासंबन्धज्ञापनायाऽत्र 'समासव'दित्युक्तिः । उत्तरपदस्य या विभक्तिरिति । नन्वितरेतरशब्दसमासवद्भावात्सुपो लुकि समुदायात्पुनः सुबिति नोत्तरपदस्यायं सुबिति चेन्न; उत्तरपदोत्तरवर्त्तिसुप इत्यर्थेनाऽदोषात् । स्त्रीनपुंसकयोरिति । 'सर्वनाम्नो वृत्तिमात्रे'इत्यस्य 'स्त्रिया'इति प्रकरणाद्बहिः पाठेन नपुंसकेऽपि प्रवृत्तिरिति भावः । तत्र नपुंसके पुंवत्त्वप्रवृत्तेः फलं चिन्त्यं, पुंवत्त्वं तु पूर्वखण्ड एव इत्युक्तम् । इदमपि इतरेतरशब्दविषयम् । अन्योऽन्ये समासवद्भावाऽभावेन वृत्तित्वाऽभावात् । तस्मात्—दलद्वये टाबभावः क्लीबे चाद्ड्विरहः स्वमोः । समासे सोरलुक् चेति सिद्धं बाहुलकात्त्रयम् ॥' इति बोध्यम् । अतएवेतरेतरमित्यादावद्ड्भावः । अन्योन्यसंश्रयंत्वेतदिति ज्ञियामिति सूत्रस्थभाष्यप्रयोगः, अन्योन्यसहाया इति 'सर्वस्य द्वे' इति सूत्रस्थभाष्यप्रयोगश्च संगच्छते । तथा नपुंसकेऽन्योन्यमिति पूर्वपदे सोरम्भावोऽपि बाहुलकादेव बोध्यः । परे तु इतरादिभ्यो विहितयोः स्वमोरद्ड्ित्यर्थस्य सर्वादिसूत्रे भाष्ये दर्शनादितरेतरमित्यादौ नाऽद्ड्ः प्राप्तिः । 'अन्योन्यमिमे ब्राह्मण्या'वित्यादावपि 'शुद्धपदन्तु' वाच्य' मितिपरसामान्ये नपुंसकमितिरीत्याऽन्यथाप्त्यस्यैव क्लीबत्वेन टाप एवाऽभावः । स्त्रीनपुंसक-

द्वन्द्वं रहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगा-
ऽभिव्यक्तिषु ॥ ८ । १ । १५ ॥

**अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वमित्युपसङ्ख्यानम् ॥ १ ॥**

अत्यन्तसहचरिते लोकविज्ञाते द्वन्द्वमित्युपसङ्ख्यानं कर्तव्यम् । द्वन्द्वं स्कन्दविशाखौ । द्वन्द्वं नारदपर्वतौ । अत्यन्तसहचरित इति किमर्थम् ? द्वौ युधिष्ठिरार्जुनौ । लोकविज्ञात इति किमर्थम् ? द्वौ देवदत्तयज्ञदत्तौ । अथ 'द्वन्द्व-'मिति किं निपात्यते ?

**'द्वन्द्व'मिति पूर्वपदस्य चाऽम्भाव उत्तरपदस्य चाऽत्वं नपुंसकत्वं च ॥ २ ॥**

द्वन्द्वमिति पूर्वपदस्य चाऽम्भावो निपात्यते उत्तरपदस्य चात्वं नपुंसकत्वं च ।

**उक्तं वा ॥ ३ ॥**

किमुक्तम् ? "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्ये"ति,+ तत्र नपुंसकत्वमनिपात्यम् ।

**पदस्य ॥ ८ । १ । १६ ॥ पदात् ॥ ८ । १ । १७ ॥**

---

प्र०—द्वन्द्वम्प० । अत्यन्तसहचरित इति । अभिव्यक्तिग्रहणादतिप्रसङ्ग इति वचनम् । द्वौ युधिष्ठिरार्जुनाविति । लोकविज्ञानादभिव्यक्तावेतौ, न त्वत्यन्तसहचरितौ । पूर्वपदस्येति । द्वि औ द्वि औ इति स्थिते कर्मधारयवद्भावात्सुब्लुकि कृते पूर्वपदावयवस्येकारस्याऽम्भावः, उत्तरपदावयवस्याऽत्वं, समासान्तोदात्तत्वं च भवति ।

पदस्य । अथ किमर्थं पदस्येत्यधिक्रियते यावता वक्ष्यमाणानि कार्याणि पदविषयाण्येव । अर्थे प्रयुक्तस्यैवेदमन्वाख्यानं पदं चार्थे प्रयुज्यते । न च समर्थपरिभाषोपस्थानार्थः पदाधिकार उपयुज्यते । यस्मात्पदद्वयनिबन्धनेषु कार्येषु समानवाक्ये निघात-

---

उ०—यो'रित्यस्य तत्समानाधिकरणयोरित्यर्थं इत्याहुः । सुब्लोपादि न भवतीति । 'मूले मूले स्थूल' इत्यादौ ।

द्वन्द्वं रहस्य० । अभिव्यक्तिग्रहणादिति । लोकप्रसिद्धिमात्रार्थकत्वात्तस्येति भावः । भाष्ये—नपुंसकत्वं चेति । चेन कृतद्वित्वादिद्विवचनोत्पत्त्यभावस्य संग्रहः ।

पदस्य । यावता वक्ष्यमाणानीति । आमन्त्रितनिघातो युष्मदस्मदादेशाश्च सुबन्तस्यैव विधीयन्ते । 'तिङ्ङतिङ' इति निघातस्तिङन्तस्येत्यादि द्रष्टव्यम् । कुत्वादिसाधारण्येन पदस्यैव कार्ययोगे युक्त्यन्तरमाह—अर्थप्रयुक्तस्य चेति । न चेति । पदद्वयनिबन्धनेष्वित्यर्थः । यत्र

---

+ ५. १. ५५.

आकुतः पदाधिकारः ?

**पदाधिकारः प्रागपदान्ताधिकारात् ॥ १ ॥**

'अपदान्तस्य मूर्द्धन्यः' [ ८. ३. ५५ ] इत्यतः प्राक्पदाधिकारः ।

अथ 'पदा'दित्यधिकार आकुतः ?

**पदात्प्राक् सुपि कुत्सनात् ॥ २ ॥**

पदादित्यधिकारः प्राक्सुपि कुत्सनात् । 'कुत्सने च सुप्यगोत्रादौ' [ ८. १. ६९ ] इति वक्ष्यति प्रागेतस्मात् ।

**यणेकादेशस्वरस्तूर्ध्वं पदाधिकारात् ॥ ३ ॥**

यणेकादेशस्वरस्तूर्ध्वं पदाधिकारात्कर्तव्यः ।

**इह वचने ह्यपदान्तस्याऽप्राप्तिः ॥ ४ ॥**

---

प्र०—युष्मदस्मदादेशा इति वक्ष्यते । कुत्वादीनि त्वेकपदनिबन्धनान्येव । नच भसंज्ञकस्य व्यावृत्त्यर्थः पदाधिकारो, अवयवस्य भत्वेपि समुदायपदावयवत्वाश्रयकुत्वादिप्रवृत्त्यभ्युपगमात्—वक्तरि दोग्ध्रीति । उच्यते—नलोपाद्यर्थः पदाधिकारः । असति हि तस्मिन् यथा राजभ्यामित्यादौ प्रातिपदिकान्तस्य नकारस्य लोपो भवत्येवं राजानावित्यादावपि स्यात् । पदाधिकारे तु प्रातिपदिकस्य पदस्य योऽन्तो नकारस्तस्य लोपः । तथा संयोगान्तस्य पदस्य लोपो भवति गोमानित्यादौ, न तु गोमन्तावित्यादौ । 'मो नो धातो'रिति नकारः प्रशानित्यादौ भवति, न तु प्रशामावित्यादौ । आकुत इति । कस्यचित्कार्यस्याऽसिद्धिं मत्वा पृच्छति । प्रागिति । अपदान्तस्येति विरोध्युपादानात्प्रागतः पदाधिकारः । प्राक्सुपि कुत्सनादिति । यदि त्वत्र पदादित्यनुवर्तेत 'देवदत्तो यत्पचति पूती'त्यत्रैव तिङन्तस्य निघातः स्यान्न तु 'पचति पूती'त्यत्र । यणेकादेशस्वर इति । 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्ये'ति यणाश्रयः स्वर 'एकादेश उदात्तेनोदात्त' इत्येकादेशस्वरश्चेडाया वेत्यस्मात्परौ कर्तव्यौ । इह वचने हीति । पदस्येति स्थानषष्ठीत्युदात्तस्वरितयोर्यो यणतः परो योऽनुदात्तस्तदन्तस्य पदस्य

---

उ०—समानवाक्याधिकारो नास्ति तथापि तदुपयोगाऽभावमाह—कुत्वादीनि त्विति । एवञ्च पदद्वयनिबन्धनसामर्थ्यस्य तत्र वक्तुमशक्यत्वमित्यर्थः । अवयवस्य भत्वेऽपीति । सुपः प्रागागमस्येत्यर्थः । समुदायपदेति । सुबन्तसमुदायपदेत्यर्थः । कस्यचित्कार्यस्येति । वक्ष्यमाणाधिपरिभाषे 'उदात्तस्वरितयोर्यण' इत्यादेर्वक्ष्यमाणरीत्या सर्वकार्यसिद्धिमभिप्रेत्यो-क्तम् । अस्याऽर्थस्योपादानं न्यायानुरोधेनेत्यत आह—यदि त्वत्रेति । यणेकादेशाश्रयः स्वर इति मध्यमपदलोपी समास इत्याह—यणाश्रय इति । तत्र यण्निमित्तम्, एकादेशः स्थानी । इडाया वेत्यस्मात्पराविति । तद्वत्तेन पदाधिकारस्योपयोगादिति भावः । स्थानषष्ठीति । 'षष्ठी स्थाने'इति परिभाषणादिति भावः । इहत्यरीति । 'स्वरविधा'वित्यस्यापि न प्रवृत्तिः,

इह क्रियमाणेऽपदान्तस्याऽप्राप्तिः स्यात् । उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' [ ८. २. ४ ] इतीहैव स्यात्—कुमार्यौ किशोर्यौ, इह न स्यात्—कुमार्यः किशोर्यः । एकादेश उदात्तेनोदात्तः [ ८. २. ५ ] इहैव स्यात्—वृक्षौ प्लक्षौ, इह न स्यात्—वृक्षाः प्लक्षाः ।

**न वा पदाधिकारस्य विशेषणत्वात् ॥ ५ ॥**

न वोर्ध्वं पदाधिकारात् कर्तव्यो यणेकादेशस्वरः । किं कारणम् ? 'पदाधिकारस्य विशेषणत्वात्' । पदस्येति नैषा स्थानषष्ठी । का तर्हि ? विशेषणषष्ठी । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? प्रत्याख्यायते स्थानषष्ठी* ।

**अन्तग्रहणाद्वा नलोपे ॥ ६ ॥**

प्र०—स्वरितत्वमलोऽन्त्यस्य भवतीति वाक्यार्थः । एवमुदात्तानुदात्तयोर्य एकादेशस्तदन्तस्य पदस्यालोऽन्त्यस्योदात्त आदेश इति स्यात् । कुमार्य इति । हल्स्वरप्राप्तिरत्र नास्तीति व्यञ्जनस्याऽविद्यमानत्वाऽभावः । न वेति । इह पदस्येति संबन्धसामान्ये षष्ठी, सा तूत्तरेषु वाक्येषु यथायोगं संबन्धविशेषेऽवतिष्ठते । क्वचित्स्थानेषष्ठी, क्वचिदवयवषष्ठी । तत्र यणेकादेशस्वरयोः पदस्येत्यनुवृत्तं कार्यिविशेषणार्थं न तु कार्यिप्रतिपत्त्यर्थं, तेन पदावयवयोरनुदात्तैकादेशयोः स्वरविधानादनन्त्ययोरपि भवति । किं वक्तव्यमिति । 'षष्ठीस्थाने योगे'ति नियमादलभ्या विशेषणषष्ठीति प्रश्नः । प्रत्याख्यायत इति । योगे प्रत्याख्याते यत्राऽन्यः सबन्धोऽस्ति यथोदुपधाया गोह इति—तत्र विशेषणविशेष्यभाव आश्रीयते—'गोहोऽङ्गस्य योपधा तस्या ऊद्भवती'ति । यत्र तु विशिष्टः संबन्धो न प्रतीयते तत्र स्थानसंबन्ध एवाश्रीयते यथाऽस्तेर्भूरिति । तदुक्तं भाष्ये—'शब्दस्य तु शब्देन कोऽन्यः संबन्धोऽन्यदतः स्थाना'दिति । एवं यणेकादेशस्वरयोः स्थान्यन्तरोपादानात्पदस्येत्यवयवषष्ठी । मो नो धातो'रित्यादौ स्थानषष्ठी, प्रयोगमूलत्वाद्व्याकरणस्मृतेर्यथाप्रयोगं लक्षणव्यवस्थापनात् । अन्तग्रहणाद्वेति । पठ्यमाने योगे विशेषणषष्ठी न लभ्यते इति लिङ्गेनाऽसौ प्रतिपाद्यते, यदि पदस्येति स्थानषष्ठ्येव

उ०—स्वरोद्देश्यकविधेरभावात् । क्वचित्स्थाने षष्ठीति । 'नैषा स्थानषष्ठी'ति भाष्यं तु प्रकृताभिप्रायेणेति भावः 'प्रत्याख्यायते स्थाने षष्ठी'ति भाष्यस्य 'षष्ठी स्थानेयोगे'ति सूत्रं प्रत्याख्यायत इत्यर्थं इत्याह—योगे इति । स्थानसंबन्ध एवेति । अन्तरङ्गत्वादिति भावः । स्थान्यन्तरोपादानादिति हेतो'र्मो न'इत्येतत्साधारणत्वं मत्वा हेत्वन्तरमाह—प्रयोगमूलत्वादिति । पठ्यमाने योगे इति । 'षष्ठी स्थानेयोगे'त्येतस्मिन्नित्यर्थः । 'न स्थानषष्ठीति'ति

*१. १.४९.

अथवा यदयं 'नलोपः प्रातिपदिकान्तस्य' [ ८. २. ७ ] इत्यन्तग्रहणं करोति तज्ज्ञापयत्याचार्यो—'विशेषणषष्ठ्येषा न स्थानषष्ठी'ति ।

## अनुदात्तं सर्वमपादादौ ॥ ८ । १ । १८ ॥

सर्ववचनं किमर्थम् ? सर्ववचनमनादेरनुदात्तार्थम् । सर्वग्रहणं क्रियते, अनादेरप्यनुदात्तत्वं यथा स्यादिति । तिङ्ङतिङः [ ८. १. २८ ] इति इहैव स्यात् 'देवदत्तः पचती'ति, इह न स्यात्—'देवदत्तः करोती'ति ।

**सर्ववचनमनादेरनुदात्तार्थमिति चेल्लुटि प्रतिषेधात्सिद्धम् ॥ १ ॥**

सर्ववचनमनादेरनुदात्तार्थमिति चेत्तन्न । किं कारणम् ? 'लुटि प्रतिषेधात्सिद्धम् । यदयं लुटि प्रतिषेधं शास्ति 'न लुट्' [ ८. १. २९ ] इति तज्ज्ञापयत्याचार्योऽनादेरप्यनुदात्तत्वं भवती'ति । कथं कृत्वा ज्ञापकम् ? न हि लुडन्तमाद्युदात्तमस्ति ।

---

प्र०-स्यात्—अलोन्त्यस्य लोपस्य सिद्धत्वादन्तग्रहणमनर्थकं स्यात्तस्मादन्तग्रहणात्क्वचिद्विशेषणषष्ठ्यपि विज्ञायते । प्रातिपदिकान्तस्य चेत्यसमासनिर्देशस्तेन प्रातिपदिकस्य पदस्य योऽन्तो नकारस्तस्य लोप इति सूत्रार्थः ।

अनुदात्तम्० । सर्ववचनमिति । वक्ष्यमाणोऽभिप्रायः । सर्ववचनमनादेरिति । असति सर्वग्रहणे पदादित्यधिकारादादेः परस्येत्यनेन पदस्येति स्थानषष्ठ्या आदावल्यनुसंहारादादेरेवोदात्तस्याऽनुदात्तत्वं स्यान्न त्वनादेः, सर्वग्रहणे तु पदस्येति विशेषणषष्ठीविज्ञानात्पदस्य सर्वोऽवयवोऽनुदात्तो भवतीत्यर्थः संपद्यते । पचतीति । धातुस्वरेणाऽऽद्युदात्तं पदं, शप्तिपोः पित्त्वादनुदात्तत्वात् । करोतीति । प्रत्ययस्वरेणमध्योदात्तत्वम् । नहि लुडन्तमिति । लुडन्तः कश्चिदन्तोदात्तः कश्चिन्मध्योदात्त इति' श्वः कर्ते'त्यादौ

---

उ०-भाष्यस्य—न स्थानषष्ठ्येवेत्यर्थः । प्रातिपदिकान्त्यस्य चेति । चस्त्वर्थे । असमासनिर्देश इति । समासनिर्देशे उपसर्जनस्याऽन्येन संबन्धाभावः स्यादित्यर्थः ।

अनुदात्तम्० । आदेरेवोदात्तस्येति । इदं स्वरितस्याप्युपलक्षणं, यदि संभवः । अनुदात्तस्यानुदात्तविधाने फलाऽभावादिति भावः । सर्वोऽवयव इति । अवयवकार्त्स्न्ये वृत्तिः सर्वशब्द इति भावः । प्रत्ययस्वरेण—विकरणस्वरेण । कश्चिदिति । लुडन्ते सर्वत्र तासेः परस्सार्वधातुकानुदात्तत्वात्तासिरुदात्तः । तत्र टिलोपविषये कर्तेत्यादावुदात्तनिवृत्तिस्वरेणा-

---

† १. १. ५४.

## अलोन्त्यविधिप्रसङ्गस्तु ॥ २ ॥

अलोन्त्यस्य विधयो भवन्तीत्यन्त्यस्य विधिः प्राप्नोति+ यत्र । ह्यादिविधिर्नास्ति अलोन्त्यविधिना तत्र भवितव्यम् । तत्र को दोषः ? 'तिङ्ङतिङ' इतीहैव स्यात्—देवदत्तयज्ञदत्तौ कुरुतः, इह न स्यात्—देवदत्तः करोतीति ।

## लृटि प्रतिषेधात्सिद्धम् ॥ ३ ॥

यदयं लृटि प्रतिषेधं शास्ति× तज्ज्ञापयत्याचार्योऽनन्त्यस्याप्यनुदात्तत्वं भवतीति । कथं कृत्वा ज्ञापकम् ? न हि लृडन्तमन्तोदात्तमस्ति । ननु चेदमस्ति भोक्ष्य इति ?

## उक्तं वा ॥ ४ ॥

किमुक्तम् ? 'न वा पदाधिकारस्य विशेषणत्वा'दिति* ।

इदं तर्हि प्रयोजनम्—'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ' [ ८. १. २० ] इति वान्नावादयः सविभक्तिकस्य यथा स्यु'रिति । एतदपि नास्ति प्रयोजनम् 'पदस्य' [ १६ ] इति हि वर्तते, विभक्त्यन्तं च पदं

प्र०-निघातप्रसङ्गात्किं न लुडिति निषेधेन । निषेधात्तु लिङ्गात्पदस्येति विशेषणषष्ठी विज्ञायते न स्थानषष्ठीति स्थानषष्ठीशेषस्याऽऽदेः परस्येत्यस्योपस्थानाभावादनादेरप्यनुदात्तत्वं भविष्यति । अलोन्त्यप्रसङ्गस्त्वति । 'अलोऽन्त्यस्ये'त्यस्यापवादः—'आदेः परस्ये'ति । तत्र लिङ्गादपवादेऽपनीते उत्सर्गेण प्रवर्त्यमिति भावः । कुरुत इति । लसार्वधातुकस्य प्रत्ययस्वरेणाऽन्तोदात्तत्वं, विकरणस्य तु शेषनिघातः । न विकरणस्वरो लसार्वधातुकस्वरं बाधते, तासेर्लसार्वधातुकानुदात्तत्वविधानेन ज्ञापनात् । अत्रापि लिङ्गमुच्यते—लृटीति । 'गत्यर्थलोटे'त्यनेन लृडन्तस्य निघातः प्रतिषिध्यते, सर्वं च लृडन्तं लसार्वधातुकानुदात्तत्वेन मध्योदात्तमिति निघातस्य प्रसङ्गाऽभावान्नाऽर्थो निषेधेन । तदेतस्माल्लिङ्गादलोऽन्त्यविध्यभावः । भोक्ष्य इति । 'एकादेश उदात्तेनोदात्त'इत्यन्तोदात्तमेतत् । ततश्चाऽत्र निघाताऽभावार्थत्वादलिङ्गं लृटि निषेध इत्यलोन्त्यनिवृत्त्यर्थं सर्वग्रहणं कर्तव्यम् । उक्तं वेति । असत्यपि सर्वग्रहणे भूयो लक्ष्यसिद्धयेऽ-

उ०—न्तोदात्तः, कर्त्तारावित्यादौ मध्योदात्त इति भावः । न स्थानषष्ठीति । यथाऽलोन्त्यस्येति स्थानषष्ठ्या अनुसंहारस्तथा तदपवादभूतमादेः परस्येत्यपीत्यर्थः । तत्र लिङ्गादिति । अवयवषष्ठीत्वे इदं ज्ञापकमित्यजानतोऽयं प्रश्न इत्यर्थः । असत्यपीति । 'न लु'डित्यनेनाऽवयवषष्ठी-

+ १. १. ५२. × ८. १. ५१. * ८. १. १६.

तत्राऽन्तरेण सर्वग्रहणं सविभक्तिकस्य भविष्यति। भवेत्सिद्धं यत्र विभक्त्यन्तं पदं, यत्र तु खलु विभक्तौ पदं तत्र न सिध्यति—ग्रामो वां दीयते, ग्रामो नौ दीयते। जनपदो वां दीयते, जनपदो नौ दीयते।

ननु च स्थग्रहणं क्रियते तेन सविभक्तिकस्यैव भवति। अस्त्यन्यत्स्थग्रहणस्य प्रयोजनम्। किम्? श्रूयमाणविभक्तिविशेषणं यथा विज्ञायेत—यत्र विभक्तिः श्रूयते तत्र यथा स्यादिह मा भूत्—'इति युष्मत्पुत्रो ददाति' 'इत्यस्मत्पुत्रो ददाती'ति।

**समानवाक्ये निघातयुष्मदस्मदादेशाः ॥ ५ ॥**

---

प्र०—नुदात्तविधौ विशेषणषष्ठ्याश्रयिष्यते न तु स्थानषष्ठीत्यर्थः। सविभक्तिकस्येति। अन्यथा केवलयोर्युष्मदस्मदोरादेशाः स्युः। तत्र षष्ठ्येकवचने ङसिङसोश्चेत्यसि पूर्वैकादेशे दोषाऽभावेऽपि वचनाऽन्तरेषु दोषप्रसङ्गः। सर्वग्रहणे तु सति युष्मदस्मद्भ्यां तदवयवः समुदायो लक्ष्यत इति युष्मदस्मदवयवस्य सर्वस्य पदस्य वान्नावादय आदेशा भवन्ति। पदस्येति हि वर्तत इति। तेन युष्मदस्मद्वतः पदस्यादेशा भवन्तीत्यर्थः। भवेत्सिद्धमिति। यत्र केवले युष्मदस्मदी पदे तत्र तद्वतः प्रतिपत्तेरयोगादिति भावः।

स्थग्रहणमिति। षष्ठ्यादिष्वादेशविधानाद्युष्मदस्मदोस्तत्स्थत्वे लब्धे स्थग्रहणं निमित्तसहितयुष्मदस्मत्प्रतिपत्त्यर्थं विज्ञायत इति सविभक्तिकयोरादेशसिद्धिः। यथाऽश्वस्थ आनीयतामित्युक्ते सहैवाऽश्वेनाऽऽनीयते। श्रूयमाणविभक्तिविशेषणमिति। यत्र श्रूयते विभक्तिस्तत्र तत्स्थत्वं युष्मदस्मदोर्न तु तस्यां लुप्तायाम्। प्रत्ययलक्षणेन च कार्यं शास्त्रं वाऽतिदिश्यते न तु तात्स्थ्यं, तस्याऽपौरुषेयत्वात्। तदेवमन्यार्थत्वात्स्थग्रहणस्य सर्वग्रहणं सविभक्तिकादेशार्थं कर्तव्यम्। इति युष्मत्पुत्र इति। 'इति' शब्दात्पदात्परयोः षष्ठ्यन्तयोर्युष्मदस्मदोर्वस्नसौ न भवतः।

समानवाक्य इति। 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्या'दिति

---

उ०—एवमेव ज्ञाप्यते इति न दोषः। स्वरविधौ संघातः कार्यीति षष्ठीज्ञापनायेत्यपि बोध्यम्। ङसिङसोश्चेत्यसि पूर्वैकादेश इति। 'ते-म' इत्यादिस्थितौ ङसिङसोश्चेति पूर्वैकादेश इत्यर्थः। वचनान्तरेषु—'ग्रामो वां, जनपदो नौ' इत्यादिषु। तदवयव इति बहुव्रीहिः। ननु युष्मदस्मदोः प्रातिपदिकयोः पदत्वाऽभावात्सामानाधिकरण्येनाऽन्वयः कथमुपपद्यतेऽत आह—तद्वतः प्रतिपत्तेरिति। किन्तु पदयोर्युष्मदस्मदोरित्येव प्रतीतिः स्यादिति भावः। ननु यत्र षष्ठ्यादिसत्त्वात्तत्र युष्मदस्मदोरादेशार्थं स्थग्रहणं स्यादिति कथं सविभक्तिकयोरादेशसिद्धिरत आह—षष्ठ्यादिष्विति। तत्स्थत्वे लब्धे इति। तत्प्रकृतिस्थमेव तत्स्थमित्यभिमानः। तत्र तत्स्थत्वमिति। अतत आधारत्वाऽयोगात्। 'भाष्ये 'श्रूयमाणविभक्तिविशेषण'मिति कर्मधारयगर्भः कर्मधारयः। अपौरुषेयत्वादिति। पाणिन्यादिपुरुषीयत्वाऽभावादित्यर्थः।

समानवाक्य इति प्रकृत्य निघातयुष्मदस्मदादेशा वक्तव्याः । किं प्रयोजनम् ? नानावाक्ये मा भूवन्निति । अयं दण्डो हराऽनेन । ओदनं पच तव भविष्यति मम भविष्यति ।

**पश्यार्थैश्च प्रतिषेधः ॥ ६ ॥**

पश्यार्थैश्च प्रतिषेधः+ समानवाक्य इति प्रकृत्य वक्तव्यः । इतरथा हि यत्रैव पश्यार्थानां युष्मदस्मदी साधनं तत्र प्रतिषेधः स्यात्—ग्रामस्त्वां संप्रेक्ष्य संदृश्य समीक्ष्य गतः । ग्रामो मां संप्रेक्ष्य संदृश्य समीक्ष्य गतः । इह न स्यात्—ग्रामस्तव स्वं संप्रेक्ष्य संदृश्य समीक्ष्य गतः । ग्रामो मम स्वं संप्रेक्ष्य संदृश्य समीक्ष्य गतः ।

---

प्र०—लौकिकं वाक्यलक्षणम् । इह तु वाक्यं परिभाषितम्—'आख्यातं साऽव्ययकारकविशेषणं वाक्य'मिति । आख्यातमित्येकत्वं विवक्ष्यते । 'अयं दण्डोहराऽनेने'ति वाक्यद्वयमेतत्, अयं दण्डोऽस्ति हरानेनेति तिङन्तद्वययोगात् । तत्रानेनेति सर्वनाम्ना दण्डस्य परामर्शात्करणत्वादस्ति सामर्थ्यमिति निघातप्रसङ्गः । ओदनं पचेति । त्वत्कर्तृकेण पाकेन त्वत्स्वामिको, मत्कर्तृकेण पाकेन मत्स्वामिकश्चौदनो भविष्यतीत्येवंरूपपाकस्य युष्मदस्मदर्थस्य च व्यपेक्षाऽस्तीत्यादेशप्रसङ्गः । पश्यार्थैश्चेति । विधौ समानवाक्यग्रहणं कृतं; प्रतिषेधश्चायमिति वाक्यान्तरारम्भः । तेन समानवाक्ये पश्यार्थैर्युक्ते युक्तयुक्ते च युष्मदस्मदर्थे आदेशप्रतिषेधः । संप्रेक्ष्य संदृश्य समीक्ष्येति पर्यायत्वाद्विकल्पेनैषां प्रयोगः । भाष्ये तु पश्यार्थैरित्यर्थग्रहणप्रयोजनकथनायैषामुपादानम् ।

---

उ०—अशास्त्रीयत्वादिति यावत् । अर्थैकत्वादिति । विभागे सति साकाङ्क्षावयवकमेकार्थबोधकं पदकदम्बकमित्यर्थः । इहत्विति । अस्मिञ्शास्त्रे इत्यर्थः । परिभाषितमिति । समर्थसूत्रे इति भावः । एकत्वं विवक्ष्यत इति । अन्यथाऽयं दण्डो हराऽनेनेत्यादावतिप्रसङ्गाऽनिवारणादेतदधिकारोऽलौकिकवाक्यलक्षणकरणं चानर्थकं स्यादिति भावः । वस्तुत इदं न पारिभाषिकं, किन्त्वेकतिङित्येवेति निरूपितं समर्थसूत्रे, अतस्तदेवात्र वक्तुं युक्तम् । नन्वत्रैकस्यैव तिङः श्रवणात् कथमदोषोऽत आह—वाक्यद्वयमिति । समर्थपरिभाषयैवातिप्रसङ्गनिरासमाशङ्क्याह—तत्रानेनेति । वस्तुतश्चिन्त्यमिदम्, एकार्थीभावयोग्यसूत्रोपात्तद्वितीयाऽभावेन एकार्थीभावाऽभावात् । व्यपेक्षायाश्च तत्र सूत्रेऽग्रहणात्समर्थपरिभाषाया अत्राऽप्रवृत्तेरित्याहुः । केचित्तु 'समर्थ' इत्येवात्राधिकारे कर्त्तव्ये 'समानवाक्ये' इति गुरुभूताधिकारप्रयोजनं दर्शयतीत्याहुः । मत्कर्तृकेण पाकेनेति । मम भविष्यतीत्यतः प्रागोदनं पचामीत्यध्याहार्यमितिभावः । विधाविति । एवञ्चैतस्मिन्निषेधेऽपि तस्य संबन्ध इत्यर्थबोधकं वाक्यमिति भावः । युक्तयुक्ते चेति । अन्यथा साक्षात्संबन्धे चरितार्थं शास्त्रं परम्परासंबन्धे न प्रवर्त्तेतेति भावः । समान-

---

+ ८. १. २५.

## सपूर्वायाः प्रथमाया विभाषा ॥ ८ । १ । २६ ॥

### युष्मदस्मदोरन्यतरस्यामनन्वादेशे ॥ १ ॥

युष्मदस्मदोरन्यतरस्यामनन्वादेश इति वक्तव्यम् । ग्रामे कम्बलस्ते स्वम्, ग्रामे कम्बलस्तव स्वम् । ग्रामे कम्बलो मे स्वम्, ग्रामे कम्बलो मम स्वम् । अनन्वादेशइति किमर्थम् ? अथो ग्रामे कम्बलस्ते स्वम् । अथो ग्रामे कम्बलो मे स्वम् ।

अपर आह—सर्व एव वान्नावादयोऽनन्वादेशे विभाषा वक्तव्याः । कम्बलस्ते स्वम्, कम्बलस्तव स्वम् । कम्बलो मे स्वम्, कम्बलो मम स्वम् । अनन्वादेशइति किमर्थम् ? अथो कम्बलस्ते स्वम् । अथो कम्बलो मे स्वम् । न तर्हीदानीमिदं वक्तव्यं,—सपूर्वायाः प्रथमाया विभाषेति ? वक्तव्यञ्च । किं प्रयोजनम् ? 'अन्वादेशार्थम्' अन्वादेशे विभाषा यथा स्यात्—अथो ग्रामे कम्बलस्ते स्वम् । अथो ग्रामे कम्बलस्तव स्वम् । अथो ग्रामे कम्बलो मे स्वम् । अथो ग्रामे कम्बलो मम स्वम् ।

---

प्र०— सपूर्वायाः० । युष्मदस्मदोरिति । 'सपूर्वायाः प्रथमाया विभाषे'ति यो विकल्पः सोऽनन्वादेशे भवति, अन्वादेशे तु नित्य आदेशविधिरित्यर्थः । व्यवस्थितविभाषेयमित्युक्तं भवति । अन्वादेशार्थमिति । विरोधात्पूर्ववाक्यं 'युष्मदस्मदोरन्यतरस्यामनन्वादेश' इति बाध्यते, तेनाऽन्वादेशानन्वादेशयोः सपूर्वायाः प्रथमाया विभाषा भवति ।

---

उ०—वाक्याधिकारात्तु युक्तयुक्तेऽपि भवतीति बोध्यम् । 'समर्थे'ति सूत्रं तु तत्र समानवाक्ये इत्यस्याऽभावादयुक्तयुक्ते न प्रवर्तत इति बोध्यम् । अतएव भाष्ये 'पदार्थश्च प्रतिषेध' इत्येवोक्तम् । विकल्पेनेति । पर्यायाणां सह प्रयोगाऽभावादिति भावः । भाष्ये पर्यायोपादानं किमर्थमत आह—भाष्येत्विति ।

सपूर्वायाः० । व्यवस्थितेति । तथैव सिद्धत्वाद्वचनान्तरं व्यर्थमिति भावः । वार्तिकस्य व्याख्यानान्तरं भाष्ये—अपर आहेति । ननु पूर्वव्याख्याने 'सपूर्वाया'इति विकल्पोऽन्वादेशे न भवतीत्युक्तम्, इदानीं तु तत्र विकल्प इति फलभेदात् कथं साधुत्वमुभयस्येत्यत आह—विरोधादिति । परया व्याख्यया पूर्वव्याख्या बाध्यत इत्यर्थः । 'पूर्ववाक्य'मित्यस्य पूर्वोक्तव्याख्यानवाक्यमित्यर्थो बोध्यः ।

**तिङो गोत्रादीनि कुत्सनाभीक्ष्ण्ययोः ॥ ८ । १ । २७ ॥**

किमिदं तिङो गोत्रादिषु कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणं—'कुत्सनाभीक्ष्ण्ययोरर्थयोर्गोत्रादीनि भवन्ति तिङः पराण्यनुदात्तानी'ति, आहोस्विदनुदात्तविशेषणं—'तिङः पराणि गोत्रादीनि कुत्सनाभीक्ष्ण्ययोरर्थयोरनुदात्तानि भवन्ती'ति ?

**तिङो गोत्रादिषु कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणम् ॥ १ ॥**

तिङो गोत्रादिषु कुत्सनाभीक्ष्ण्यग्रहणं क्रियते 'पाठविशेषणम्' । पाठो विशेष्यते ।

**अनुदात्तविशेषणे ह्यन्यत्र गोत्रादिग्रहणे कुत्सनाभीक्ष्ण्यग्रहणम् ॥२॥**

अनुदात्तविशेषणे हि सत्यन्यत्र गोत्रादिग्रहणे कुत्सनाभीक्ष्ण्यग्रहणं कर्तव्यं स्यात्—'चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः' [ ८. १. ५७ ] इति । 'कुत्सनाभीक्ष्ण्ययो'रिति वक्तव्यं स्यात् ।

**अनुदात्तग्रहणं वा ॥ ३ ॥**

अथ वा 'यान्यनुदात्तानी'ति वक्तव्यं स्यात् । तस्मात्सुष्ठूच्यते—"तिङो गोत्रादिषु कुत्सनाभीक्ष्ण्यग्रहणं पाठविशेषणमनुदात्तविशेषणे ह्यन्यत्र गोत्रादिग्रहणे कुत्सनाभीक्ष्ण्यग्रहणमनुदात्तग्रहणं वे"ति ।

**तिङ्ङतिङः ॥ ८ । १ । २८ ॥**

---

प्र०— तिङो० । पाठविशेषणमिति । पठ्यत इति पाठः । संनिवेशविशेषो ग्रन्थसन्दर्भ उच्यते । एतयोरेवाऽर्थयोर्गोत्रादिव्यपदेशं प्रतिपद्यन्ते नान्यत्रेत्यर्थः । अयं चार्थो योगविभागेन लभ्यते । 'तिङो गोत्रादीनी'त्येको योगोऽनुदात्तविध्यर्थः, 'कुत्सनाभीक्ष्ण्ययो'रिति द्वितीयो 'गोत्रादीनी'त्यस्याऽनुवृत्त्या परिभाषाऽर्थः—'इह शास्त्रे गोत्रादीनि कुत्सनाभीक्ष्ण्यविषयाण्येव ग्राह्याणी'ति ।

तिङ्ङतिङः । पचति करोतीति । विनापि 'च' शब्देन समुच्चयावगमात् संबन्धसद्भावः । न चेति । 'आख्यातं साव्ययकारकविशेषणं वाक्य'मिति निघा-

---

उ०— तिङो गोत्रा० । पाठशब्देन कर्मव्युत्पत्त्या गोत्रादीन्युच्यन्ते इत्याह—पठ्यत इति । नन्वेकस्माद्वाक्यात्पाठविशेषणमनुदात्तविधानं चेत्युभयं कथं लभ्यत इत्यत आह—अयं चेति ।

तिङ्ङतिङः । विनाऽपि चेति । क्रियाकर्मभावेनाऽप्यन्वयः सुवचः । अर्थैक्यादिति । लौकिकैकवाक्यत्वमाश्रित्याऽतिङ्ग्रहणं कृतम् । वार्तिककारेण तु समानवाक्याधिकारं पारि-

अतिङ इति किमर्थम् ? पचति करोति ।

**अतिङ्वचनमनर्थकं समानवाक्याधिकारात् ॥ १ ॥**

अतिङ्वचनमनर्थकम् । किं कारणम् ? 'समानवाक्याधिकारात्' समानवाक्य इति+ वर्त्तते, न च समानवाक्ये द्वे तिङन्ते स्तः ।

**निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम् ॥ ८ । १ । ३० ॥**

निपातैरिति किमर्थम् ? यत्कूजति शकटम्, यती कूजति शकटी, यन् रथः कूजति । निपातैरिति शक्यमवक्तुम् । कस्मान्न भवति—यत्कूजति शकटम्, यती कूजती शकटी, यन् रथः कूजतीति ? लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति । नैषा परिभाषेह शक्या विज्ञातुम्, इह हि दोषः स्याद्या-वद्यथाभ्याम् [ ३६ ] इह न स्यात्—यावदस्त्यत्रैषः सरो जनेभ्यः कृणवत्† ।

प्र०-तादिव्यवस्थायै वाक्यस्य परिभाषणादाख्यातमित्येकत्वस्य विवक्षितत्वादेकैकस्या-ख्यातस्य वाक्यत्वाद् द्वयोराख्यातयोरेकवाक्यताऽभावः । आख्यातमित्येकत्वस्याऽ-विवक्षाशङ्का स्यादिति द्वितीयं वाक्यलक्षणं वाक्यकारेण पठितम्—'एकतिङ् वाक्य'-मिति । अत्रैकशब्देन यत्नेन सङ्ख्या प्रतिपाद्यते ।

निपातैः० । यत्कूजतीति । इणः शतरि 'इणो य'णिति यणि रूपम् । यतीति । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्याऽपि ग्रहणमिति प्राप्तिः । यन्निति । संयोगान्त-लोपस्याऽसिद्धत्वात्तन्मध्यपतितस्य नुमस्तद्ग्रहणेन ग्रहणात्प्राप्तिः । लक्षणप्रतिपदोक्त-योरिति । लाक्षणिकस्यानुमानेन रूपाऽवधारणं, प्रतिपदोक्तस्य तु प्रत्यक्षेण । प्रत्यक्षा-नुमानयोश्चाऽविलम्बितप्रतीतिरूपत्वात्प्रत्यक्षं बलीयः ।

यावदिति । यत्परिमाणमस्येति वतुबन्तस्य यावच्छब्दस्य लाक्षणिकत्वात्कृणव-दित्यस्य लेडन्तस्य निघातप्रतिषेधो न स्यात् । निपातस्यैव तु ग्रहणं स्यात्, तत्र यदा प्रायोगिकं रूपमाश्रीयते तदा शास्त्रानपेक्षणाल्लक्षणप्रतिपदोक्तयोरिति परिभाषा नोप-तिष्ठते । शास्त्राऽपेक्षायां वा प्रत्यक्षानुमानयोः समकक्ष्यत्वाश्रयणं तत्र निपातग्रहणमिह

उ०—भाषिकं च वाक्यमाश्रित्य प्रत्याख्यातम् । तच्चाप्यनर्थकमित्युक्तमेव । अतएव 'पश्य मृगो धावती'त्यादौ धावतीत्यस्य न निघातः । यथोत्तरं च मुनीनां प्रामाण्यमिति दिक् । एकत्वस्य विवक्षितत्वादिति । नित्यमित्युक्तं समर्थसूत्रे ।

निपातैर्य० । लेडन्तस्येति । 'कृवि हिंसाया'मित्यस्येत्यर्थः । प्रायोगिकमिति । तद्धि नित्यमनपेक्षमिति भावः । शास्त्रापेक्षायामिति । शास्त्रीयस्य कल्पितप्रकृतिप्रत्ययाद्यवयवस्य ग्रहणे इत्यर्थः । शास्त्रीयप्रक्रियायां शास्त्रीयस्यैव ग्रहणं युक्तमिति भावः । समकक्ष्यत्वाऽ-

+ ८. १. १८. † ५. २. ३९.

## चार्थाद्विशिष्टश्चेदर्थे ॥ १ ॥

चार्थाद्विशिष्टश्चेदर्थे द्रष्टव्यः । 'अयं च वै मरिष्यति' । अयं चेन्मरिष्यति न च पितृभ्यः पूर्वेभ्यो दास्यति । अप्रायश्चित्तिकृतौ च स्याताम् ।

## छन्दस्यनेकमपि साकाङ्क्षम् ॥ ८ । १ । ३५ ॥

'अनेक'मिति किमुदाहरणम् ? यदाह्यसौ मत्तो भवति अथ यत्तपति । नैतदस्ति । एकमत्र हियुक्तमपरं यद्युक्तन्तत उभयोरप्यनिघातः× ।

इदं तर्हि 'अनृतं हि मत्तो वदति पाप्मा एनं विपुनाति' एकं खल्वपि 'अग्निर्हि पूर्वमुदजयत्तमिन्द्रोऽनूदजय'दिति ।

---

प्र०-प्रकरणे एतत्परिभाषानाश्रयणस्य लिङ्गम् । चेदर्थ इति । आशङ्कावधारणादिकश्चेदर्थः 'अयं च वै मरिष्यती'त्याशङ्का गम्यते । अप्यर्थो वा—'अपि मरिष्यत्ययं न च दास्यती'ति ।

छन्द० । हेतुहेतुमद्भावस्य द्योतको हिरित्यनेकमपि तिङन्तं हियुक्तं भवति । उभयोरप्यनिघात इति । लक्षणान्तरेण—'हि चे'ति, 'निपातैर्यद्यदी'ति च । यद्यपि द्वे हियुक्ते तथापि द्वितीयस्याऽनिघातकारणान्तरसद्भावा'देकं हियुक्त'मित्युक्तम् ।

इदं तर्हीति । अनिघातकारणान्तराऽभावात् । पाप्मा-एन उच्यते । यस्मान्मत्तोऽनृतं वदति तस्मादनृतवदनदोषेण न युज्यत इत्यर्थः । उदजयदिति ।

---

उ०-युक्तत्वं मनसि निधायाह—तत्रेति । ज्ञापकेनैव निर्वाह इति भावः । चेदर्थ इति । समुच्चयादिषु दृष्टश्चशब्दश्चेदर्थेऽपि । तदर्थग्रहणे च चिह्नमित्संज्ञकणकार इति भाष्याभिप्रायः । अप्यर्थो वेति । तदुपपादकं भाष्ये—'न च पितृभ्य'इत्यादि । न चेत्यस्य च नैवेत्यर्थ इति भावः । अप्रायश्चित्तिकृतौ चेत्यत्राऽप्यवधारणार्थ इति बोध्यम् । प्रायश्चित्तिः—प्रायश्चित्तम् । अस्याऽप्ययं चेन्मरिष्यतीत्याद्येकं वाक्यं, तादृशमरणेऽपि न प्रायश्चित्तमित्यर्थं इति केचित् ।

छन्दस्यने० । नन्वनेकस्य कथं 'हि'योगः स्यादत आह—हेतुहेतुमदिति । यद्यपीति । अत्रापि हेतुहेतुमद्भावसत्त्वादिति भावः । मत्तत्वावस्थायामेव तपति शत्रून्पीडयतीत्यस्याऽर्थ इति तात्पर्यम् । पाप्मा एन इति । क्वचित्तु 'पाप्मा मद' इति पाठः । तत्र पापहेतुत्वात्पाप्मा । मदादीनां हि विरुद्धानां दोषेषु गणनात् । यस्मान्मदयुक्तः पुरुषो मद्यपानादिना व्याकुलचित्ततयाऽज्ञानादनृतं वदति तस्मात्स मद एवाऽनृतवादिनं पुरुषं पुनाति । अनृतवदनदोषकृतमपावित्र्यं न करोतीत्यर्थः । यद्वा—अनृतवदनजन्यमेनः तं न संबध्नाति, मत्तत्वा-

---

× ८. १. ६४; ६०.

## तुपश्यपश्यताऽहैः पूजायाम् ॥ ८ । १ । ३९ ॥

'पूजाया'मिति* वर्त्तमाने पुनः पूजाग्रहणं किमर्थम् ? अनिघातप्रतिषेधाऽभिसंबद्धं तत् । यदि तदनुवर्त्तेत इहाऽप्यनिघातप्रतिषेधः प्रसज्येत । इष्यते चाऽत्र निघातप्रतिषेधः । यथा पुनस्तत्र यावद्यथेत्येताभ्यामनिघाते प्राप्ते+ऽनिपातप्रतिषेध उच्यते इहेदानीं केनाऽनिघाते प्राप्तेऽनिघातप्रतिषेध उच्येत ? इहापि 'यद्वृत्तान्नित्यम् [ ८. १. ६६ ] इत्येवमादिभिः ।

## एहि मन्ये प्रहासे लृट् ॥ ८ । १ । ४६ ॥

किमर्थमिदमुच्यते, न 'गत्यर्थलोटा लृ'डित्येव सिद्धम् ? नियमार्थोऽयमारम्भः—'एहि मन्ये प्रहास एव यथा स्यात्' क मा भूत् ? एहि मन्ये रथेन यास्यसीति ।

---

प्र०—एकमजयदिति पदमद्स्वरेणाद्युदात्तमपरमनुदात्तं, तत्र पूर्वेणानेकस्य निघातनिषेधे प्राप्ते क चिदेकस्य यथा स्यादिति वचनम् । तत्र छन्दसि दृष्टाऽनुविधानाद्यथाप्रयोगं व्यवस्था ।

तुपश्य० । अनिघातेति । 'यावद्यथाभ्या'मित्यनेनाऽनिघातः प्राप्तः 'पूजायां नानन्तर'मिति प्रतिषिद्धः । इह त्वनिघात इष्यत इति पुनः पूजाग्रहणम् ।

एहि० । माङ्पूर्वादिणो लोट् सिप् हिरादेशः । एहि मन्य इति । अप्रहासेऽपि वैयधिकरण्यादुत्तमप्रयोगः । एहि त्वं रथेन यास्यसीत्येवमहं मन्य इत्यर्थः । 'यास्यसी'त्यस्य निघातो भवत्येव । उत्तमस्याऽतन्त्रत्वादेहि मन्यसे रथेन यास्यामीत्यत्रापि नियमादनिघाताऽभाव इति केचिदाहुः ।

---

उ०—दैवेरपर्थः । पापाऽसंबन्ध एवाऽत्र पवनमिति भावः । एकमजयदिति । आपमित्यर्थः । तत्रपूर्वेणेति । अपिरहितेनाऽनेनेत्यर्थः । वचनमिति । अपिरूपमित्यर्थः ।

तुपश्यपश्यता० । एतद्विषये निघाताऽप्राप्त्या न तत्प्रतिषेधसंभव इति शङ्कते भाष्ये—यथापुनरित्यादि प्रतिषेध उच्यते इत्यन्तेन । उत्तरयति—इहापीति ।

एहि मन्ये० । वैयधिकरण्यादिति । आगमनमननयोः कर्तृभेदादित्यर्थः । प्रहासे तु 'एहि मन्ये रथेन यास्यसी'त्यादावेककर्तृकत्वं, 'रथेन यास्यामीति यदि त्वं मन्यसे' इत्यर्थः । अतन्त्रत्वादिति । 'सूत्रे' इति शेषः । केचिदाहुरिति । वृत्त्यनुसारिणः । भाष्याननुगममत्रारुचिबीजम् ।

---

* ८. १. ३७. + ८. १. ३६. × ८. १. ५१.

## जात्वपूर्वम् ॥ ८ । १ । ४७ ॥

किमिदमपूर्वग्रहणं जातुविशेषणं—'जातुशब्दादपूर्वात्तिङन्त'मिति आहोस्वित्तिङन्तविशेषणं 'जातुशब्दात्तिङन्तमपूर्व'मिति ? जातुविशेषणमित्याह । कथं ज्ञायते ? यदयं 'किंवृत्तं च चिदुत्तरम्' [ ४८ ] इत्याह । कथं कृत्वा ज्ञापकम् ? अत्राऽप्यपूर्वमित्येतदनुवर्तते न चाऽस्ति संभवो यत्किंवृत्तं च चिदुत्तरं स्यात्तिङन्तं चाऽपूर्वम् । अत्रापि तिङन्तविशेषणमेव । कथम् ? किंवृत्ताच्चिदुत्तरात्तिङन्तमपूर्वमिति । यत्तर्हि 'आहो उताहो चानन्तरम्' [ ४९ ] इत्यनन्तरग्रहणं करोति । एतस्याप्यस्ति वचने प्रयोजनम् । किम् ? शेषप्रक्लृप्त्यर्थमेतत्स्यात्—'शेषे विभाषा' [ ५० ] । कश्च शेषः सान्तरं शेष इति । अन्तरेणाऽप्यनन्तरग्रहणं प्रक्लृप्तः शेषः । कथम् ? 'अपूर्व' इति वर्तते । शेषे विभाषा [ ५० ] कश्च शेषः ? 'सपूर्वः शेषः' इति ।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्येऽष्टमाध्यायस्य
प्रथमे पादे प्रथममाह्निकम् ।

---

प्र०— जात्व० । किमिदमिति । निमित्तनिमित्तिसन्निधौ सति संशयात्प्रश्नः । कथं ज्ञायत इति । निमित्तस्याऽप्राधान्यात्सति प्रधाने विशेषणसम्बन्धयोग्येन युक्तो विशेषणसम्बन्ध इति प्रश्नः । तिङन्तं चाऽपूर्वमिति । चिदुत्तरात्किंवृत्तात्परस्य तिङन्तस्य विद्यमानपूर्वत्वात् । अत्रापीति । 'कश्चिद्भुङ्क्ते'इत्यादावेवाऽनिघातो यथा स्यात् 'कश्चित्पुरुषो भुङ्क्ते'इत्यादौ व्यवधाने मा भूदित्येवमर्थं तिङन्तविशेषणमपूर्वग्रहणं स्यात् । यत्तर्हीति । तिङन्तविशेषणे ह्यपूर्वग्रहणेऽन्तरमेवापूर्वं भवतीत्याहो देवदत्तः पचतीति सपूर्वत्वादेवाऽनिघातो न भविष्यतीति किमनन्तरग्रहणेन, तस्मान्निमित्तविशेषणमपूर्वग्रहणमित्यनुमीयते । तथाचाहो देवदत्तः पचतीति निमित्तस्याऽपूर्वत्वादनिघातः स्यादिति कर्तव्यमनन्तरग्रहणम् ।

इति महाभाष्यप्रदीपेऽष्टमाध्यायस्य प्रथमे पादे प्रथमसाह्निकम् ।

---

उ०— जात्वपूर्वम् । निमित्तेति । जातु इत्येतन्निमित्तं, तिङन्तं निमित्ति । जातुयुक्तं तिङन्तं मानुदात्तमिति सूत्रार्थात् । कश्चित्पुरुषो भुङ्क्ते इति । व्यवहितोऽपि किंवृत्तेन चिदुत्तरेण युक्तो भवत्येवेति भावः ।

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टविरचिते भाष्यप्रदीपोद्द्योते
ष्टमस्य प्रथमे पादे प्रथममाह्निकम् ।

## गत्यर्थलोटा लृण्न चेत्कारकं सर्वान्यत् ॥ ८ । १ । ५१ ॥

## लृटः प्रकृतिभावे कर्त्रन्यत्व उपसङ्ख्यानं कारकाऽन्यत्वात् ॥ १ ॥

लृटः प्रकृतिभावे कर्तुर्यत्कारकमन्यत्तस्याऽन्यत्व उपसङ्ख्यानं कर्त्तव्यम् । आगच्छ देवदत्त ग्राममोदनं भोक्ष्यसे । किं पुनः कारणं न सिध्यति ? 'कारकान्यत्वात्' । 'न चेत्कारकं सर्वान्य'दित्युच्यते सर्वान्यच्चाऽत्र कारकम् । किं पुनः कारणं सर्वान्यत्प्रतिषेधेनाश्रीयते न पुनरसर्वाऽन्यद्विधानेनाश्रीयेत ? कर्त्ता चाऽत्राऽसर्वान्यस्ततः कर्तृसामान्यात्सिद्धम् ।

---

प्र०— गत्यर्थ० । लृट इति । निघातप्रतिषेध एव प्रकृतिभावः । कर्तुरिति पञ्चमी । कर्तुरन्यत्कारकं कर्मादि, तस्यान्यत्व इत्यर्थः । आगच्छेति । भोजनगमनयोरेको देवदत्तः कर्ता, कर्म तु ग्रामो गमनस्यौदनो भोजनस्येति कर्मभेदादनिघाताऽप्रसङ्गः । कारकशब्देन सूत्रे कारकव्यक्तिराश्रीयते, तेन कर्मत्वाऽभेदेऽपि ग्रामौदनव्यक्तिभेदात्कारकभेदः । किं पुनरिति । कारकमत्र न सर्वमन्यत्, कर्मभेदेऽपि कर्तुरेकत्वादित्यनिघातो भविष्यती-

---

उ०— गत्यर्थलोटा० । नन्वत्र प्रकृतिभावो न प्रकृतोऽत आह—निघातप्रतिषेधे एवेति । कर्तुरन्यदिति । कर्त्रन्यत्व इति वार्तिके कर्तृपदेन कर्तृभिन्नं लक्ष्यते, तस्याऽन्यत्वे इत्यर्थः । 'कर्त्रन्यान्यत्वे' इति वा वार्तिकपाठः । कर्मभेदादिति । लोडन्तलृडन्तयोर्यद्यत्कारकं तत्सर्वं यद्यन्यन्न भवतीत्यर्थादिति भावः । सर्वान्यदिति,—समासस्तु सौत्रत्वाद्बोध्यः । लुप्तविभक्तिकं वा 'सर्वे'ति भिन्नं पदम् । ननु कारकपदवाच्यतत्तच्छक्तेरेकत्वादनन्यदेवात्र कारकमत आह—कारकशब्देनेति । सामर्थ्यादिति भावः । कर्मत्वाभेदेऽपीति । अखण्डशक्तिरूपं तदेकम् । अत एवाग्रे वक्ष्यति—'तिङ्भ्यामेकद्रव्याभिधाना'दिति । न तु सूत्रस्थपदेनैककारकाभिधानादिति । न च तदेकत्वे ग्रामः पाककर्मस्यादित्यापत्तिः । एवमोदनं पचति देवदत्ते शाकं पचतीत्याद्यापत्तिरिति वाच्यं, कारकाधिकारसहकृतैः 'कर्तुरीप्सिततम'मित्यादिभिः क्रियाजनकत्वतत्तद्वारत्वयाश्रयत्वादिज्ञानस्य तत्तत्कारकशक्तेर्विवक्षायां नियामकत्वबोधनेन तद्ज्ञानेनतच्छक्त्युपविवक्षणादिति भावः । इदं चिन्त्यं, 'सप्तमीपञ्चम्यौ कारकमध्ये' इति सूत्रस्यकारकविरोधात् । आगमनभोजननिरूपितकर्तृत्वशक्तिभेदेऽपि 'कर्तृसामान्यात्सिद्ध'मिति भाष्यानुपपत्त्या कारकशब्देन द्रव्यं गृह्यत इत्यन्यत् । 'ऊह्यन्ता'मित्युदाहरणे शालिषु वहनभोजननिरूपितशक्तिभेदात्—'एकद्रव्याभिधाने'इत्युक्तमिति बोध्यम् । भाष्ये—सर्वान्यच्चात्रेति । तिङन्तद्वयसंबन्धिसर्वकारकमध्ये किञ्चिदन्यदप्यत्र कारकमित्यर्थः । सर्वान्यत्प्रतिषेधेनेति । अत्र पक्षे 'सर्वकारकं लोडन्ते यद्यत्कारकं तन्मध्ये लृडन्ते यत्किञ्चिदप्यन्यच्चेत्तदा निघातप्रतिषेधो ने'त्यर्थः । न पुनरसर्वान्यद्विधानेनेति । लोडन्ते यत्कारकं तत्सर्वमन्यन्न, किं त्वेकमप्यन्यदपि तदापि निघातप्रतिषेध इत्येतत्पक्षेऽर्थः । 'सर्वे'ति लुप्तविभक्तिकं कारकविशेषणम् । तत्राऽस्य पक्षस्य सिद्धिं दर्शयति—कारकमत्र नेति । अन्याऽभिधाने इति भाष्यस्य—अन्यकर्मण

**कर्तृसामान्यात्सिद्धमिति चेत्तद्भेदेऽन्यसामान्ये प्रकृतिभावप्रसङ्गः २**

कर्तृसामान्यात्सिद्धमिति चेत्तद्भेदे—कर्तृभेदे—अन्यस्मिन्कारकसामान्ये प्रकृतिभावः प्राप्नोति। आहर देवदत्त शालीन् यज्ञदत्त एनान्भोक्ष्यते। एवं तर्हि—व्यक्तमेव पठितव्यं 'न चेत्कर्ता सर्वान्य' इति।

**न चेत्कर्ता सर्वान्य इति चेदन्याऽभिधाने प्रतिषेधमेके ॥ ३ ॥**

'न चेत्कर्त्ता सर्वान्य' इति चेदन्याभिधाने प्रतिषेधमेके इच्छन्ति। 'उह्यन्तां देवदत्तेन शालयो यज्ञदत्तेन भोक्ष्यन्त' इति प्राप्नोति+। 'भोक्ष्यन्त' इति चेष्यते×।

**सिद्धं तु तिङोरेकद्रव्याऽभिधानात् ॥ ४ ॥**

सिद्धमेतत्। कथम्? 'तिङोरेकद्रव्याभिधानात्'। यत्र तिङ्भ्यामेकं द्रव्यमभिधीयते तत्रेति वक्तव्यम्।

---

प्र०-त्यर्थः। आहरेति। अत्रापि न सर्वान्यत्कारकं, शालिलक्षणकर्मैकत्वात्। अन्याभिधान इति। यदैकमेव कर्म लकारद्वयवाच्यं कर्तृभेदश्च तदाप्यनिघात इष्यते। कर्तृशब्दोपादाने तु न सिध्यति। एकग्रहणं न विकल्पार्थमपि त्वागमपारम्पर्यप्रतिपादनार्थम्।

सिद्धं त्विति। एकद्रव्यं कारकशक्त्या विशिष्टं कर्म कर्तृ वा यदा लोड्लृड्भ्यामुच्यते तदाऽनिघातः। न चेदमपूर्वं कर्तव्यं, सूत्रेणैवाऽस्यार्थस्य सङ्ग्रहात्। तथा हि लोड्लृटोः सन्निधानात्तद्वाच्यमेवात्र कारकमाश्रीयते, लोडन्तलृडन्तयोश्चाऽर्थलक्षणो निमित्तनिमित्ति [illegible]वः।

---

उ०—आख्यातावाच्यत्वे इत्यर्थस्तदाह—यदैकमेवेति। 'एक इच्छन्ती'त्यस्याऽन्ये नेच्छन्तीति नार्थ इत्याह—एकग्रहणमिति। नचेदमपूर्वमिति। एवञ्च वक्तव्य'मित्यस्य' व्याख्येयमित्यर्थः। तद्वाच्यमेवेति। अन्तरङ्गत्वादिति भावः। सर्वग्रहणं तु 'आगच्छ देवदत्त ग्रामं त्वं चाहञ्च भोक्ष्याव एन'मित्यत्रापि निघातप्रतिषेधाय, 'सर्वं चेत्कारकमन्यच्च तदा निघातप्रतिषेध' इति सूत्रार्थात्। योगश्च न सहप्रयोगमात्रं, किन्त्वर्थद्वारक इत्याह—लोडन्तेति। अर्थलक्षण इति। अर्थद्वारक इत्यर्थः। 'शक्तेरेव वाच्यत्व'मिति पक्षे एकस्यैव द्रव्यस्याभिधानात्—शक्त्याश्रयत्वेन ग्रहणादित्यर्थः।

---

+ ८. १. २८. × ८. १. ५१.

## आम एकान्तरमामन्त्रितमनन्तिके ॥ ८ । १ । ५५ ॥

कस्यायं प्रतिषेधः ?

### आम एकान्तर ऐकश्रुत्यप्रतिषेधः ॥ १ ॥

आम एकान्तर ऐकश्रुत्यस्याऽयं प्रतिषेधः । कथं पुनरप्रकृतस्याऽसंशब्दितस्यैकश्रुत्यस्य प्रतिषेधः शक्यो विज्ञातुम् ? अनन्तिक इत्युच्यते । अनन्तिकं

---

प्र०— आम० । कस्यायमिति । 'आम्भो देवदत्ते'त्युदाहरणम् । आमिति निपातत्वादाद्युदात्तः । भो इति भवच्छब्दस्य 'विभाषा भवद्भगवदघवतामोच्चावस्ये'ति । रुत्वे ओत्वे च रूपं, तस्य पदात्परस्यामन्त्रितस्य चेति निघातः । देवदत्तेत्यस्य निघातः प्राप्तोऽनेन प्रतिषिध्यते । भोःशब्दस्य 'नामन्त्रिते' इत्यनेनाऽविद्यमानवत्त्वनिषेधादेकान्तरत्वे निघाते च निषिद्धे 'एकश्रुतिर्दूरात्संबुद्धा'वित्येकश्रुतिः प्राप्नोति, 'दूराद्धूते चे'ति प्लुतोदात्तत्वं च । तत्र 'स्वरितस्यार्द्धह्रस्वोदात्तादोदात्तस्वरितपरस्य सन्नतरादूर्ध्वमुदात्तादनुदात्तस्य स्वरितात्कार्यं स्वरितादिति सिद्ध्यर्थ'मिति वचनात्प्लुतोदात्ते कर्त्तव्ये पूर्वत्राऽसिद्धमित्येकश्रुतेरसिद्धत्वात्प्लुतोदात्तत्वमेव भवति नैकश्रुतिः । तत्राऽनेकप्रतिषेधसम्भवात्प्रश्नः । यदि प्रकरणमपेक्ष्यते तदा निघातस्यैव निषेधेन भाव्यं, नैकश्रुतेः । अथ सामर्थ्यात्प्राप्तस्य निषेधः, तदैकश्रुतेरेव निषेधो न निघातस्य । ऐकश्रुत्यस्येति । एका श्रुतिर्यस्य तदेकश्रुतिः, तस्य भाव ऐकश्रुत्यम् । कथं पुनरिति । प्रकृतस्य वा प्रतिषेधो भवति, यथा नाज्झलाविति सवर्णसंज्ञायाः, संशब्दितस्य वा यथा 'न संप्रसारणे संप्रसारण'मिति ।

इतरः सामर्थ्यमाश्रित्याह—अनन्तिक इत्युच्यत इति । ततश्चार्थादेकश्रुतिः सन्निहिता । कथं पुनरनन्तिकं दूरम् ? उच्यते । कश्चिन्नञ्समासोऽर्थान्तरस्य वाचकः । यथा अनादर इति—परिभवः अवज्ञानं वोच्यते, न त्वादराऽभावः ।

---

उ०— आम । एकान्तरमा० । ननु भोःशब्दस्यामन्त्रितं पूर्वमित्यविद्यमानवत्त्वे कथमेकान्तरत्वमत आह—भोःशब्दस्येति । एकान्तरत्वमिति । अन्तरयतीत्यन्तरं—व्यवधायकम् । एकमन्तरं यस्य तद्भाव एकव्यवहितत्वमित्यर्थः । वस्तुतस्तत्र प्रकरणेन स्वाश्रयानिवृत्तेस्तत्त्वमिति बोध्यम् । नैकश्रुतिरिति । प्लुतोदात्तत्वोत्तरमेकश्रुत्यप्रवृत्तिः केन वार्यतामिति चिन्त्यम् । अथ सामर्थ्यादिति । अनन्तिकशब्दस्य दूरवाचित्वेनैकश्रुतेरेव प्राप्तत्वादित्यर्थः । यथा चैकश्रुतेरेव प्राप्तिस्तस्योपरिष्टात्स्फुटी भविष्यति । ऐकश्रुत्यशब्दे भावप्रत्ययाऽसङ्गतिं परिहरति—एका श्रुतिरिति । इतरः सामर्थ्यमिति । यथा प्रकरणाच्छब्दोपादानात्र सन्निधानं तथा सामर्थ्यादपीत्यर्थः । [illegible]प्रतिपदोक्तपरिभाषया दूरवाचकशब्दो-

च किम् ? दूरम्। दूरात्संबुद्धौ चैकश्रुतिरुच्यते। अस्ति प्रयोजनमेतत् ? किं तर्हीति।

**निघातप्रसङ्गस्तु ॥ २ ॥**

निघातस्तु प्राप्नोति—आम्भो देवदत्ता३। आमन्त्रितस्याऽनुदात्तत्वं प्राप्नोति*।

**सिद्धं तु प्रतिषेधाधिकारे प्रतिषेधवचनात् ॥ ३ ॥**

सिद्धमेतत्। कथम् ? 'प्रतिषेधाधिकारे प्रतिषेधवचनसामर्थ्यान्निघातो न भविष्यति। नैव वा पुनरत्रैकश्रुत्यं प्राप्नोति। किं कारणम् ? अनन्तिक इत्युच्यते, अन्यच्च दूरमन्यदनन्तिकम्। यद्येवं प्लुतोऽपि तर्हि न प्राप्नोति,

प्र०—एवमनृताऽमित्राऽधर्मादयोऽर्थान्तराभिधायिनः। तथाऽनन्तिकशब्दोऽपि दूरार्थाभिधायी। तत्रानुदात्तत्वं 'पचसि देवदत्त'त्यादौ सावकाशं बाधित्वा एकश्रुतिः प्राप्ताऽनेन प्रतिषिध्यते। निघातस्त्विति। अपवादे प्रतिषिद्धे उत्सर्गस्य न्यायप्राप्तत्वात्। सिद्धं त्विति। निघातप्रतिषेधाधिकारे वचनान्निघातोऽपि प्रतिषिध्यते, अन्यथैकश्रुतिर्दूरात्सम्बुद्धावित्युक्त्वा 'नाम एकान्तर' इत्युच्येत। एवं ह्यामन्त्रितमनन्तिक इति न वक्तव्यं भवति। केवलस्य च निघातस्यैकश्रुत्या बाधितत्वात्प्रतिषेधोऽनर्थक इति सामर्थ्यादुभयप्रतिषेधः। ननु चैकश्रुतिर्देवदत्ता३ आगच्छेत्यादौ सावकाशा कथमाम् भो देवदत्ता३ इत्यादौ निघातस्य बाधिका ? प्रत्युत परत्वादेकश्रुतेर्निघात एव बाधक इति तस्यैवाऽत्र प्रसङ्ग इति प्रतिषेधोऽपि तस्यैव न्याय्यः। तस्य च प्रतिषेधे एकश्रुतिः स्यादेव। नैष दोषः। पदद्वयनिबन्धननिघातापेक्षयाऽधिकनिमित्तं दूरात्संम्बोधनमपेक्ष्यमाणा एकश्रुतिः सतिशिष्टस्वरो भवतीति तथैव भाष्यम्। अन्यथेति।

उ०—उच्चारणेन विहितस्य निषेध इति सामर्थ्यमिति भावः। उत्तरमाह—कश्चिदिति। अर्थान्तरस्येति। उत्तरपदार्थविपक्षरूपस्येत्यर्थः। ननु परत्वादेकश्रुत्यस्याऽसिद्धत्वाद्वा निघात एव प्राप्नोतीत्यत आह—तत्रेति। ननु अष्टावसरत्वात्कथं निघातप्राप्तिरत आह—अपवाद इति। 'सौ स' दिति निर्देशात्स न्यायो नास्त्येवेति भावः। नन्वेवमेकश्रुतिनिषेधे मानाभावोऽत आह—केवलस्य चेति। सावकाशेति। पदात्परत्वाऽभावेन निघाताऽप्राप्तेरिति भावः। परत्वादिति। इदं च मधान्यासे। वार्तिकोक्तोत्कर्षे तु असिद्धत्वान्निघातो भविष्यतीति बोध्यम्। सति शिष्टेति। अन्तरङ्गत्वात्पूर्वं निघाते पश्चात्प्रवर्त्तमानतयेत्यर्थः। वस्तुतोऽसिद्धत्वादेकश्रुतेः पूर्वं निघाते तस्याः प्राप्त्या सतिशिष्टत्वं बोध्यम्। एतेनाऽर्थकृतबहिरङ्गत्वानाश्रयणेऽपि न क्षतिः। एवञ्च तस्या एव निषेधो युक्तः, प्रतिषेधाधिकारे विधानाच्च निघातस्यापीति उभयनिषेधसिद्धिरिति भावः। अन्तिकसदृशमिति। अब्राह्मण इत्यादाविव सादृश्यफलको नञ्, न तु

* ८. १. १९.

प्लुतोऽपि हि 'दूरा'दित्युच्यते† । इष्टमेवैतत्संगृहीतम्; आम्भो देवदत्तेत्येव भवितव्यम् ।

## यद्धितुपरं छन्दसि ॥ ८ । १ । ५६ ॥

किमर्थमिदमुच्यते ? यदाद्यैरेव सर्वैरेतैरनिघातकारकैर्योगेऽनिघात उच्यते‡, यथैव पूर्वैर्योगे एवं परैरपि । अत उत्तरं पठति—

**यद्धितपरस्य च्छन्दस्यनिघातोऽन्यपरप्रतिषेधार्थः ॥ १ ॥**

---

प्र०–अन्तिकसदृशं यन्न दूरं न चान्तिकं तदनन्तिकं गृह्यते । अन्यथा दूरग्रहणमेव कुर्यात् । अथ वा दूरमध्ययोः सामान्यशब्दोऽपि दूरे निघातस्याऽप्राप्त्या तत्प्रतिषेधसामर्थ्यान्मध्याभिधाय्यनन्तिकशब्दः । स्वरव्यङ्ग्यं च—आम् भो देवदत्तेत्यादावन्तिकाऽनन्तिकत्वम्, अन्तिके निघातस्य विधानात्, अनन्तिके निषेधात् ।

यद्धि० । यदाद्यैरिति । 'निपातैर्यद्यदी'ति 'हि चे'ति 'तुपश्ये'ति सूत्रैः । जाये स्वो रोहावेह्येहीति । आङ्पूर्वादिणो लोटः सिपो हिः । गत्यर्थलोटा युक्तस्य 'रोहावे'त्यस्य 'लोट् चे'त्यनिघातः प्राप्तोऽनेन नियमेन निवर्त्त्यत इति स्वःशब्दाश्रयो निघातो भवति । ननु 'परमपि छन्दसी'ति वचनात् स्वशब्दस्य पूर्वाङ्गवद्भावाज्जाये स्वरित्यस्यामन्त्रितं पूर्वमविद्यमानवदित्यविद्यमानवत्त्वान्निघातो नैव प्राप्नोति । नैष दोषः । 'अव्ययानां प्रतिषेध' इति वचनात् परस्य पूर्वाङ्गवत्त्वाऽभावादव्ययस्य । यद्वा—षष्ठ्यामन्त्रितकारकवचनं तन्निमित्तवचनं वा अङ्गवद्भावे आश्रितमिति नास्ति पूर्वाङ्गवद्भावः । नहि स्वःशब्दः षष्ठ्यन्तो, नाप्यामन्त्रितकारकं नाऽपि तन्निमित्तम् । स्वरे च पूर्वाङ्गवत्त्वविधिर्नाऽविद्यमानवत्त्वे ।

---

उ०–विपक्षफलक इत्यर्थः । अन्यथेति । प्रतिपत्तिलाघवान्मात्रालाघवाच्चेति भावः । नन्वनन्तिकग्रहणसामर्थ्याद्दूरमध्ययोरुभयोरपि ग्रहणमस्त्वत आह—अथवेति । निघातस्याऽप्राप्त्येति । एकश्रुत्या बाधादिति भावः । कथं पुनरत्रार्थनिर्णयोऽत आह—स्वरव्यङ्ग्यश्चेति । भाष्ये—इत्येव भवितव्यमिति । आद्यपक्षे प्लुतस्याप्यनेन निषेधः । एकश्रुतेरिव तस्याऽपि प्रतिपदोक्तत्वात् । वार्तिके नैकश्रुत्यग्रहणमप्राकरणिकस्याप्ययं निषेध इत्यर्थस्योपलक्षणमित्याशयः । 'प्लुतोदात्तत्वमेव भवती'ति पूर्वकैयटस्तु प्रासिमात्राभिप्रायः । एवञ्च 'सर्वस्य द्वे' इति सूत्रस्थे 'आम्पचसि देवदत्ते'त्युदाहरणे प्लुतलेशो लेशफलमभावात्, 'प्लुत उदात्त' इति तत्रत्यकैयटोऽप्येवमिति दिक् ।

यद्धितु० । भाष्ये—अन्यपरस्येति । परैर्योगे चेद्यैरेव नान्यैरित्यर्थः । निघातो नैवेति । पदात्परत्वाऽभावादिति भावः । परस्याऽव्ययस्य पूर्वाङ्गवत्त्वाऽभावादित्यन्वयः । षष्ठ्यन्त इति । कर्मशक्तिप्रधानत्वादिति भावः । स्वरे चेति । स्वरे इत्यवधारणार्थम्

---

† ८. २. ८४. ‡ ८. १. ३०.

यद्धितुपरस्य च्छन्दस्यनिघात उच्यतेऽन्यपरप्रतिषेधार्थः। अन्यपरस्य प्रतिषेधो मा भूदिति। जाये स्वो रोहावेहि†। अथेदानीं रोहावेत्यनेन युक्ते 'एही'त्यस्य कस्मान्न भवति? लोट् च गत्यर्थलोटा युक्त इति प्राप्नोति। न हि रुहिर्गत्यर्थः। कथं ज्ञायते? यदयं 'गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च' [ ३. ४. ७२ ] इति पृथग्रुहिग्रहणं करोति। यदि न गत्यर्थः,—आरोहन्ति हस्तिनं मनुष्याः, आरोहयति हस्ती स्थलं मनुष्यान्'—'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माऽकर्मकाणामणि कर्ता स णौ' [ १. ४. ५२ ] इति कर्मसंज्ञा न

---

प्र०— अथेदानीमिति। आङः परस्यैहीत्यस्य निघात इष्यते, न च प्राप्नोति, 'लोट् चे'ति निषेधात्। केवलोऽपि रुहिश्छन्दसि गत्यर्थो दृश्यत इत्याङ इणा योगो, न रुहिणा। 'छन्दसि परेऽपी'तिवचनाद्यदि रुहिणाऽऽङो योगः स्यात्तदा नानावाक्यत्वादाङो निघातो न स्यात्। ननु नित्यत्वादेकादेशे कृते व्यपवर्गाऽभावादुभयत आश्रयेऽन्तादिवद्भावनिषेधाच्च निघातो न प्राप्नोति। एवं तर्ह्यस्मादेव भाष्यकारविचारादनुमीयते—'प्राङ्निघातस्तत एकादेश' इति। न हि रुहिरिति। येषामुपसर्गयोगाद्विना गतिप्रतीतिहेतुत्वं ते गत्यर्थाः। रुहिस्तूपसर्गयोगे गतिवाची। यद्वाऽवष्टम्भवाची रुहिः। गतिस्तु तदवयवक्रियेति भावः। यदयमिति। अनुपसर्गस्य रुहेरकर्मकत्वात्कर्तरि क्तः सिद्धः, सोपसर्गस्य तु गत्यर्थत्वादिति किं रुहिग्रहणेन? तत्क्रियमाणमुपसर्गयोगेन विना ये गत्यर्थास्ते गत्यर्थग्रहणेन गृह्यन्ते। अथवा रुहिरवष्टम्भवाची, तदवयवस्तु गतिः। सत्यपि वा गत्यर्थत्वे गत्यर्थग्रहणेन रुहिर्न गृह्यते इति ज्ञापयति। यदीति। उपसर्गयोगेऽपि ये यदर्थास्ते तदर्थग्रहणेन गृह्यन्ते, यथा हरतिरभ्यवपूर्वः प्रत्यवसानार्थ इति तद्ग्रहणेन गृह्यते। तथा च 'हृक्रोरन्यतरस्या'मित्यु-

---

उ०—पत्वादिकं प्रति नातिदेश एवमविद्यमानवत्त्वं प्रत्यपीति भावः। ननु केवलस्य रुहेर्गत्यर्थत्वाऽभावादिह च तस्येष्टत्वेन न परत्र श्रुतोऽप्याङ् पूर्वत्र योजनीय इति समानवाक्यस्थत्वाऽभावादाङाश्रयनिघात 'इही'त्यस्य न स्यादत आह—केवलोऽपीति। आङो निघातो न स्यादिति। आङः परस्य 'इही'त्यस्य निघातो न स्यादित्यर्थः। प्राङ्निघात इति। 'नेन्द्रस्य परस्ये'ति सामान्यापेक्षं ज्ञापकमिति भावः। उपसर्गयोगे इति। 'आरोहन्ति हस्तिन'मित्यादौ केवलोऽपि रुहिर्गत्यर्थः। 'छन्दसि दृश्यत' इति प्रागुक्तेन विरोधात्पक्षान्तरमाह—यद्वाऽवष्टंभेति। हस्तिनमुपरि गत्वा समाश्रयत इत्यर्थावगमादिति भावः। एवञ्च प्राधान्येन न गत्यर्थत्वमिति तात्पर्यम्। सत्यपीति। केवलस्यापि रुहेर्गतौ वेदे प्रयोगादिति भावः। उपसर्गयोगेऽपीति। इदं पोक्तोपपत्तित्रयस्याप्युपलक्षणम्। कथं तर्हि रोहावेत्यत्र 'विनोपसर्गं

---

† ८. १. ५२; 'जाय एहि सुवो रोहावेहि' (तै० सं० १. ७. ९.)

प्राप्नोति । तस्मान्नैतच्छक्यं वक्तुं 'न रुहिर्गत्यर्थ' इति । कस्मात्तर्हि रोहावेत्यनेन युक्ते 'एही'त्येतस्य न भवति ? छान्दसत्वात् ।

## चनचिदिवगोत्रादितद्धिताम्रेडितेष्वगतेः ॥ ८ । १ । ५७ ॥

### 'आम्रेडितेष्वगतेः' 'सगतिरपि ति'ङित्यत्र गतिग्रहणं उपसर्गग्रहणम् ॥ १ ॥

'आम्रेडितेष्वगतेः' 'सगतिरपि तिङ्' [ ६८ ] इत्यत्र गतिग्रहणं उपसर्गग्रहणं द्रष्टव्यम् । इह मा भूत्—शुक्लीकरोति+ चन, कृष्णीकरोति चन । यत्काष्ठा शुक्लीकरोति, यत्काष्ठा कृष्णीकरोति ।

अपर आह—"सर्वत्रैवाष्टमिके गतिग्रहणं उपसर्गग्रहणं द्रष्टव्यं—'गतिर्गतौ' 'तिङि चोदात्तवति'वर्ज"मिति‡ ।

---

प्र०–भयत्र विभाषा प्रतिपादिता । तस्माद्रुहेर्गत्यर्थग्रहणेनाऽवश्याभ्युपेयं ग्रहणं, केवलोऽपि रुहिश्छन्दसि गतौ प्रयुज्यत इति प्रागेवोक्तं, गतिरेव रुहेरर्थोऽवष्टम्भस्तु तत्फलमित्यभ्युपेयं, 'गत्यर्थाकर्मके'त्यत्र तु रुहिग्रहणं प्रपञ्चार्थम् ।

चनचिदिव० । शुक्लीकरोति चनेति । 'अगते'रिति प्रतिषेधाऽभावादत्राऽनिघातो भवत्येव । यत्काष्ठमिति । शुक्लीशब्दस्य तु निघातो न भवति । सर्वत्रेति । चादिषु च 'चवायोगे प्रथमे'त्येतयोरगतिग्रहणमनुवर्तत इति तत्राप्युपसर्ग एव गतिः ।

---

उ०–गतिप्रतीतिस्त्वत्राह—केवलोऽपीति । अध्यारोपितप्रेषणे 'आरोहयति हस्ती स्थल'मिति भाष्योदाहरणम् । तत्र स्थलशब्देन हस्त्युपरिध्रियमाणं काष्ठादिमयमुपवेशनस्थानमुच्यते । सौकर्यातिशयाय प्रेरणाबुद्धिपरफलांशस्यापि बुद्ध्या द्विकर्मकत्वं प्रपञ्चार्थमिति । तेन फलान्तराय नाभिनिवेष्टव्यं भाष्यविरोधादिति तात्पर्यम् । भाष्ये—छान्दसत्वादिति । सर्वविकल्पानां छन्दसि व्यवस्थितत्वादित्यर्थः ।

चनचिदिव० । अगतेरिति । ऊर्यादीनां गतिसंज्ञैव, नोपसर्गसंज्ञेति भावः । प्रतिषेधाऽभावादिति । निघातप्रतिषेधस्य प्रतिषेधाऽभावादित्यर्थः । 'अनिघातो भवत्येवे'ति पाठः । शुक्लीशब्दस्येति । 'यद्वृत्तान्नित्य'मिति निघातप्रतिषेधे प्राप्ते 'सगतिरपि'त्यनेन पुनर्विधीयते । तत्रोपसर्गग्रहणात्कृष्यन्तरस्य प्रतिषेधः पुवेत्यर्थः ।

---

+ १. ४. ६१. ‡ ८. १. ७०; ७१.

## यद्वृत्तान्नित्यम् ॥ ८ । १ । ६६ ॥

यद्वृत्तादित्युच्यते तत्रेदं न सिध्यति—यः पचति, यं पचति, येन पचतीति । वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात् । कथं यतरः पचति, यतमः पचतीति ? डतरडतमौ च प्रतीयात् । कथं यदा ददातीति ? एषोऽपि विभक्तिसंज्ञः× । कथं 'यावदस्त्यत्रैषः सरो जनेभ्यः कृणवत्'† ? यावद्यथाभ्याम् [३६] इत्येवं भविष्यति । कथं 'यद्र्यङ्वायुः पवते' 'यत्कामास्ते जुहुमः'* । एवं तर्हि यदस्मिन् वर्तते यद्वृत्तं, यद्वृत्तादित्येवं भविष्यति ।

### वा याथाकाम्ये ॥ १ ॥

वा याथाकाम्य इति वक्तव्यम् । यत्र क्व चन यजते तद्देवयजन एव यजते ।

प्र०- यद्वृत्तात्० । यद्वृत्तादित्युच्यते इति । वृत्तमुच्चारणमित्युच्यते । यथा 'त्यदादिवृत्त'मिति । ततश्चेहैव स्यात्—यत्पचतीति । वृत्तग्रहणेनेति । वृत्तशब्दोऽधिकरणसाधनो वर्ततेऽस्मिन्निति वृत्तं, यदो वृत्तं यद्वृत्तम् । 'अधिकरणवाचिना चे'ति प्रतिषेधे प्राप्तेऽत एव निपातनात्समासः । यदा ददातीति । स्वादय एव विभक्तित्वेन प्रसिद्धा इति प्रश्नः । एषोऽपीति । 'प्राग्दिशो विभक्ति'रिति विभक्तिसंज्ञाविधानात् । यावद्यथाभ्यामिति । निपातैर्यद्यदी'ति 'निपातग्रहणाल्लिङ्गलक्षणप्रतिपदोक्तयोरि'ति परिभाषा नाश्रीयत इत्युक्तम् । यद्र्यङिति । यदञ्चतीति क्विन् । 'विष्वग्देवयोश्चे'ति टेरद्र्यादेशः । यदस्मिन्निति । सर्वं पदं यच्छब्दवद्वृत्तग्रहणेन गृह्यत इत्यर्थः । पञ्चमीनिर्देशेऽप्यत्र व्यवहितस्य कार्यं भवतीति 'पूजनात्पूजित'मित्यत्र पूजनग्रहणस्य सम्बन्धिशब्दत्वात्पूजितग्रहणे सिद्धे पुनः पूजितग्रहणेन ज्ञाप्यते । वा याथाकाम्य इति । याथाकाम्यं—यथेच्छं प्रवृत्तिर्देशकालावनपेक्ष्य, तत्र गम्यमाने वा निघातप्रतिषेधः ।

उ०- यद्वृत्तान्नित्यम् । त्यदादिवृत्तमिति । त्यदादीनामुच्चारणमित्यर्थः । एवमिहापि उच्चारिताद्यदित्येतस्मादित्यर्थः स्यादिति भावः । अधिकरणसाधन इति । अकर्मकत्वाद्वृत्तमित्यधिकरणे क्तः । यदो वृत्तमिति । यच्छब्दो यस्मिन् पदे वर्तत इत्यर्थः । नाश्रीयते इति । अत्र हि यावदिति परिमाणार्थकवत्वन्तमिति भावः । सर्वं पदमिति । 'वृत्तग्रहणेन तद्विभक्त्यन्तं प्रतीयात्, डतरडतमौ चे'त्येतत्पक्षेहाश्रीयत इति भावः । ननु पञ्चमीनिर्देशाद्व्यवहिते यावदस्य कृणवदित्यादौ कथं प्राप्तिरत आह—पञ्चमीनिर्देशेपीति । पुनःपूजितेति । पुनस्तदनन्तरपूजितप्रतिपत्त्यर्थमन्यत्र व्यवहितप्रतिपत्तौ ज्ञापकमित्यर्थः ।

× ५. ३. १; १५. * ऋग्वेद १०. १२१. १०. तै० सं० १. ८. १४.

† 'यावदस्योषः सरो जनेभ्यः कृणवत्' इति पाठभेदः ।

## पूजनात्पूजितमनुदात्तम् ॥ ८ । १ । ६७ ॥

### पूजितस्याऽनुदात्तत्वे काष्ठादिग्रहणम् ॥ १ ॥

पूजितस्यानुदात्तत्वे काष्ठादिग्रहणं कर्तव्यम्। काष्ठादिभ्यः पूजनादिति वक्तव्यम्। इह मा भूत्—शोभनोऽध्यापकः।

### मलोपवचनं च ॥ २ ॥

मलोपश्च वक्तव्यः। दारुणाध्यापकः। दारुणाभिरूपः।

## सगतिरपि तिङ् ॥ ८ । १ । ६८ ॥

सगतिग्रहणं किमर्थम्?

### सगतिग्रहणमपदत्वात् ॥ १ ॥

सगतिग्रहणं क्रियतेऽपदत्वात्। पदस्य [ १६ ] इति वर्तते न हि सगतिकं पदं भवति।

---

प्र०— पूजनात्०। काष्ठादिग्रहणमिति। 'काष्ठादिभ्य' इति,—सूत्रे वार्तिकदर्शनात्कैश्चित्प्रक्षिप्तम्। दारुणाध्यापक इति। क्रियाविशेषणं दारुणशब्दो द्वितीयान्तः। यथा 'ग्रामं गत' इत्यादौ गुणभूताया अपि क्रियायाः साधनेन योगस्तथा विशेषणेनाऽपि। तत्र वैयधिकरण्यात्समासाऽभावान्मलोपो विधीयते।

दारुणाभिरूपक इति। आभिरूप्यं दारुणशब्देन विशेष्यत इति दारुणस्य नपुंसकत्वं, पूर्ववत्समासाऽभावः।

सगतिः०। सहशब्दोऽत्र तुल्ययोगे, तेन गतिरपि निहन्यते। अपदत्वादिति। नन्वतिङन्तत्वादिति वक्तव्यं, नहि सगतिस्तिङन्तो भवति। उच्यते। अतिङन्तत्वादित्युच्यमाने मा भूदनेन सगतेर्निघातः, पूर्वेण तु कस्मान्न भवतीति स्यादेव चोद्यं, तत्रेदमेवाभिधानीयं स्यात्—अपदत्वादिति। तस्मात्पूर्वोत्तरयोरपि योगयोर्यत्साधा-

---

उ०— पूजनात्पू०। ननु 'दारुणाध्यापक'इत्यादौ विशेषणसमासे विभक्तिलोपेन सिद्धे किं मलोपवचनेनेत्यत आह—क्रियाविशेषणमिति। ननु अध्यापकशब्दे समासे एकार्थीभूतोपसर्जनाध्यापकेन कथमस्याऽन्वयोऽत आह—गुणभूताया अपीति। साधनवदस्यापि क्रियांशे उपस्थिताकाङ्क्षत्वादिति भावः। साधन इवाऽत्रापि क्रिया आकांक्षावतीति वा। नियतैतत्प्रयोगाऽभाववत् तु करणादिप्रयोगाऽभाववदुपपाद्यः। वैयधिकरण्यादिति। दारुणं यदध्यापनं तत्कर्तेति बोधेन द्रव्यवाचिना सामानाधिकरण्याऽभावादिति भावः। केचित्तु मयूरव्यंसकादित्वाद्वैयधिकरण्येऽपि समासः, सुप्सुपेति वा। समासविषय एव समासान्तोदात्तत्वापवादोऽयं निघात इति तन्न भाष्यविरुद्धम्। कर्तृकर्मणोरिति षष्ठी तु न, धात्वर्थे भेदेनान्वयित्वगृहीतत्वेन साक्षादेव कर्मणो ग्रहणात्। इदं च समानाधिकरणं क्रियाविशेषणं न तथेति बोध्यम्। अनुक्तपर्यायाः काष्ठादयः पूजनवचना बोध्याः।

सगतिरपि तिङ्। इदं सूत्रं पूजनवाचिभ्यः काष्ठादिभ्यः परस्य तिङन्तस्य 'निपातैर्य-दी'ति निघातप्रतिषेधे प्राप्ते प्रतिप्रसवार्थम्। तत्र सगतिकस्य तिङन्तत्वाऽभावादप्राप्ते सगति-

**उत्तरार्थश्च ॥ २ ॥**

उत्तरार्थं च सगतिग्रहणं क्रियते—'कुत्सने च सुप्यगोत्रादौ' [ ६६ ] सगतिरपि । प्रपचति पूति ।

अथाऽपिग्रहणं किमर्थम् ? अगतिकस्यापि यथा स्यात्—यत्काष्ठा पचति । नैतदस्ति प्रयोजनम् । सिद्धं पूर्वेणाऽगतिकस्य । न सिध्यति । मलोपाभिसम्बद्धं तत् । यदि तदनुवर्तेतेहापि मलोपः प्रसज्येत—दारुणं पचतीति । उत्तरार्थं चापि ग्रहणं क्रियते—'कुत्सने च सुप्यगोत्रादौ', 'अगतिरपी'ति । पचति पूतीति ।

**तिङ्निघातात् पूजनात् पूजितमनुदात्तं विप्रतिषेधेन ॥ ३ ॥**

---

प्र०-रणमुत्तरं तदेवोक्तमपदत्वादिति । तिङ्निघातादिति । 'पूजनात्पूजितमितीहानुवर्तेत' इत्यनेन सह विप्रतिषेधोपन्यासो न तु पूर्वेण सह, तस्य सुबन्तविषयत्वात्, तत्रैव मलोपस्येष्टत्वात् । काष्ठाध्यापक इति । पूर्वोत्तरयोः सूत्रयोरेकवाक्यत्वात् 'पूजनात्पूजित'मित्येतदभिसबन्धाच्चाऽभेदमाश्रित्याऽवकाशः प्रदर्शितः । यत्काष्ठा पचतीति । 'निपातैर्यद्यदी'ति तिङ्निघाते प्रतिषिद्धेऽनेन निघातः प्रवर्तते । ननु च 'तिङ्ङतिङ' इति निघातस्य प्रतिषेधोऽपवादस्तस्याऽपि 'सगतिरपि ति'ङित्यपवादः, तत्राऽपवादापवादत्वाद्विप्रतिषेधानुपपत्तिः । नैतदस्ति । गतेरप्राप्त एवाऽनेन निघातो विधीयत इति नास्त्यपवादत्वम् । अपिग्रहणं तूत्तरार्थमपि स्यादित्यपिग्रहणादपिनाऽ-

---

उ०-ग्रहणं क्रियते, तेन यथा गतेः सिध्यति तदाह—सहशब्दोऽत्रेति । अनेन सहेति । भाष्ये—'पूजनात्पूजित'मित्यनेन तदनुवृत्तिविशिष्टं प्रकृतसूत्रं लक्षणीयमिति भावः । तस्य सुबन्तविषयत्वे युक्तिमाह—तत्रैव मलोपस्येति । यत्र मलोपस्तत्रैव सन्नियोगशिष्टन्यायात्तस्य प्रवृत्तिरिति भावः । नन्वेवं 'काष्ठाध्यापक' इत्यवकाशप्रदर्शनमुक्तमत आह—पूर्वोत्तरयोरिति । एकवाक्यत्वादिति । उद्देश्याऽनेकत्वेऽपि विधेयैकत्वादितिभावः । उद्देश्यानेकत्वेऽपि वाक्यभेदाङ्गीकारादाह—पूजनादित्यादिना । ननु चेति । तृतीयकक्षाप्राप्तः प्रथमकक्षाप्राप्तेन सह न स्पर्धतेऽतुल्यबलत्वादिति भावः । गतेरप्राप्त एवेति । प्राप्ताऽप्राप्तविवेकन्यायादिति भावः । तत्र 'सगति'रित्यस्य विशेष्यतया तिङन्तोपादानात् 'यत्काष्ठा प्रपचती'त्यादौ तिङो निघातस्तिङ्ङतिङ इत्यनेनाऽनेन वेति सन्देहे परत्वादनेनैव तत्फलं प्रतिषेधाऽभाव इति तात्पर्यात् । नन्वपिग्रहणादगतेस्तिङन्तस्याऽपि निघातोऽनेन विधीयते प्रतिषेधबाधनायेति विप्रतिषेधानुपपत्तिस्तदवस्थैवेत्यत आह—अपिग्रहणं त्विति । अभेदं

तिङ्निघातात्पूजनात्पूजितमित्येतद्भवति विप्रतिषेधेन । तिङ्निघात-स्याऽवकाशः†—देवदत्तः पचति । पूजनात्पूजितमनुदात्तमित्यस्यावकाशः—काष्ठाध्यापकः । इहोभयं प्राप्नोति—काष्ठा पचति । पूजनात्पूजितमनुदात्त-मित्येतद्भवति विप्रतिषेधेन । कः पुनरत्र विशेषस्तेन वा सत्यनेन वा ? अयमस्ति विशेषः । साऽपवादकः* स विधिः; अयं पुनर्निरपवादकः । यदि हि तेन स्यादिह न स्यात्—यत्काष्ठापचति ।

## कुत्सिने च सुप्यगोत्रादौ ॥ ८ । १ । ६९ ॥

---

प्र०-स्यापवादापवादत्वम् । यद्वा—पूर्वोत्तरयोर्योगयोरेककार्यत्वादभेदं विवक्षित्वा विप्रति-षेधोपन्यासः । तत्र येन नाप्राप्त इति वा मध्येऽपवादा इति वा 'तिङ्ङतिङ' इत्यस्यैव 'न लु'ङित्यादिः प्रतिषेधोऽपवादो, नत्वस्येति सापवादकः स विधिरित्युक्तम् ।

कुत्सने० । पचति पूतिरिति । पूतिः कर्तुर्विशेषणं न क्रियाया इति क्रिया-कुत्सनाऽभावः । ननु क्रियाप्रधानत्वादाख्यातस्य विशेषणेन योगः साधनस्य 'नोपपद्यते । नैतदस्ति । यदुपसर्जनं जहत्स्वार्थमुपसर्जनीभूतस्वार्थं वाऽर्थान्तरे वर्तते तस्य न भवति विशेषणेन योगो, यथा 'राजपुरुष' इति राजशब्दस्य वृत्तिविषयस्य । वाक्यविषयस्य त्वर्थान्तरानुपादानाद्भवति विशेषणयोगो, यथा 'मद्राणां राज्ञः पुरुष' 'ऋद्धस्य राज्ञः पुरुष' इति । एवं साधनं क्रियां प्रति अङ्गभावं गच्छदपि एकार्थीभावाऽभावाद्विशेषणेन युज्यते । तथा कृदन्त क्रिया उपलक्षणभावेनोपात्ता तथैव विशेषणैर्युज्यते 'शोभनमध्यापक' इति । यथा तर्हि साधनस्य विशेषणेन योग एवं क्रियान्तरेणाऽपि प्राप्नोति, तत्र यदुक्तं 'न हि

---

उ०-विवक्षित्वेति । अपवादस्वरूपं भेदमविवक्षित्वेत्यर्थः । नन्वस्यापि स निषेधः कुतो नेत्यत आह—तत्र येननेति ।

कुत्सने च सु० । कर्तुर्विशेषणमिति । प्रत्ययार्थः कर्ताऽत्र कुत्स्यते, क्रिया तु शोभनैव । पूतिशब्दः कुत्सितवाची । साधनस्येति । तद्विशेषप्रतिपादकस्य देवदत्तादेः, पूत्यादेरित्यर्थः । 'पदार्थः पदार्थेनान्वेती'ति व्युत्पत्तिभङ्गभियेति तात्पर्यम् । उपसर्जनीभूतस्वार्थं वेति । अजहत्स्वार्थापक्षे स्वार्थविशेषणकार्यान्तरोपस्थापकमित्यर्थः । अर्थान्तरानुपादाना-दिति । स्वार्थमात्रस्यापि बोधजननादित्यर्थः । उपलक्षणभावेनेति । अध्यापनाद्यभावेऽपि तद्व्यवहारप्रवृत्तेरिति भावः उपलक्षणस्याऽपि विशेषणत्वमस्त्येवेति बोध्यम् । 'शोभन-मध्यापक' इति सुबन्तानुद्देश्यककृद्विषये एकार्थीभावाऽभावादिति भावः । इदं चिन्त्यम्—'प्रकृतिप्रत्ययौ सहार्थं ब्रूत' इति भाष्यादेकार्थीभावाऽभावेऽपि प्रत्ययार्थ-विशेषणक एव तिङन्ताद्बोधो न पृथक् ताभ्यां बोध इत्यर्थस्य लाभात् । किञ्च अध्यापकपदे

---

† ८. १. २८. * ८. १. १०.

**सुपि कुत्सिने क्रियायाः,**

क्रियायाः कुत्सन इति वक्तव्यम् । कर्तुः कुत्सने मा भूत् । पचति पूतिः ।

**पूतिश्चानुबन्धः,**

पूतिश्च चानुबन्धो द्रष्टव्यः । पचति पूति ।

**विभाषितं चापि बह्वर्थम् ।**

विभाषितं चापि बह्वर्थं द्रष्टव्यम् । पचन्ति पूति । पचन्ति पूति* ।

---

प्र०–भवति 'पचति पठती'ति, तद्विरुद्ध्यते । अथ मतं क्रियावशीकृतं क्रियारूपतामापन्नमाख्यातवाच्यं साधनं क्रियान्तरेण न संबध्यते इति; विशेषणेनाप्येवं न संबध्येत । संबध्यमानं वा क्रियारूपतामापन्नं नपुंसकेन विशेषणेन संबध्येत । नैष दोषः । यथा भार्या पत्युर्वनिताऽन्तरसंबन्धं न सहते स्नानादिसंस्कारं तु स्वार्थमनुमन्यते तथा क्रियाविशिष्टं साधनमात्मन्यङ्गत्वं गमयितुं तस्य विशेषणेन संबन्धं न प्रतिबध्नाति । क्रियान्तराऽङ्गत्वापत्तिस्तु स्वार्थविरोधिनीति तां नाऽनुजानाति । पूतिश्चेति । पूतिरयमिति सामानाधिकरण्यदर्शनात् पूतिशब्दो न क्तिन्नन्तो नापि क्तिजन्तोसंज्ञात्वात् । तस्मादव्युत्पन्नं प्रातिपदिकम् । तत्र प्रातिपदिकस्वरेणाऽन्तोदात्तत्वे सिद्धे निघातनिमित्तस्य तस्याऽन्तोदात्तत्वं यथा स्यादन्यत्र त्वाद्युदात्तत्वमिति वचनमित्याहुः । नन्वाद्युदात्तत्वं लक्षणाऽभावात्कथं स्यात् ? एवं तर्हि वसेस्तिविति तिबन्वो बाहुलकादु-

---

उ०–समासनिबन्धनैकार्थीभावसत्वात्कृन्मात्रेऽपि तदङ्गीकाराच्च । अतएव कृदन्तेषु संबन्धप्रवृत्तिनिमित्तकत्वक्रियाप्रवृत्तिनिमित्तकत्वादिव्यवहारः । तस्मादाख्यातार्थकर्त्रादेर्नियमेन विशेषाकाङ्क्षाबलात्तद्विशेषदेवदत्तपूत्यादेस्तत्रान्वयः । आकाङ्क्षावशादेव कारकाणामिव क्रियाविशेषणानामपि गुणभूतक्रियया संबन्ध इत्येव सांप्रतम् । अतएव 'कृतपूर्वी कट'मित्यादि सङ्गच्छते इत्याहुः । पचति पठतीति । एककर्तृकपाकक्रियासंबन्धिकर्तृका पाठक्रियेति बोधसंभवादिति भावः । कृदन्तवाच्यसाधनात्तिङन्तवाच्ये विशेषं शङ्कते—अथ मतमिति । क्रियागुणीभूतस्वरूपं—क्रियावशीकृतत्वं क्रियारूपतापन्नत्वे हेतुः । न सहत इति । स्वार्थविरोधित्वादितिभावः । विशिष्टं साधनमिति । विशेषणविशिष्टं साधनमित्यर्थः । कुत्सितेन कर्त्रा इयं क्रिया निष्पादितेति बोधयितुमिति भावः । अत्राऽस्मदुक्ता नियतविशेषाकाङ्क्षैव बीजम् । स्वार्थविरोधिनीति । स्वार्थस्य प्राधान्यविरोधिनीत्यर्थः । अयं भावः—तथाहि सति 'पचति—पठती'त्यस्य उक्तरीत्या बोधे कारकनिरूपितविशेषणत्वेन तदुपगम एव तदना-

---

* अयं स्वरसञ्चारो वासुदेवशास्त्री अभ्यंकरसम्पादितभाष्यस्य मराठीटीकामवलम्ब्य कृतः ।

सुपि कुत्सने क्रियाया मकारलोपोऽतिङीति चोक्तार्थम् ।
पूतिश्च चानुबन्धो विभाषितं चापि बह्वर्थम् ॥ १ ॥

**गतिर्गतौ ॥ ८ । १ । ७० ॥**

गताविति किमर्थम् ? प्रपचति, प्रकरोति ।

**गतेरनुदात्तत्वे गतिग्रहणानर्थक्यं तिङ्यवधारणात् ॥ १ ॥**

गतेरनुदात्तत्वे गतिग्रहणमनर्थकम् । किं कारणम् ? 'तिङ्यवधारणात्' । 'तिङि चोदात्तवति' [ ७१ ] इत्येतन्नियमार्थं भविष्यति—तिङ्युदात्तवत्येव गतिरनुदात्तो भवति नान्यत्रेति । छन्दोऽर्थं तर्हि गतिग्रहणं कर्त्तव्यम् । छन्दसि

---

प्र०—स्पाद्यः । विभाषितमिति । बह्वर्थे तिङन्तं विभाषा निहन्यते, यदा च तस्य निघातस्तदा पूतिरन्तोदात्तः । अतिङीति । तिङन्ते मलोपो न भवति । 'दारुणं पचती'ति । उक्तार्थमिति । आचार्यपरंपराकथितप्रयोजनमेतदित्यर्थः ।

गति:० । गतेः शुद्धे वा तिङन्ते प्रयोगो गतियुक्ते वा । एवं कृदन्ते । रूढिशब्देषु तु गवाश्वादिषु क्रियाया अभावान्नाऽस्ति गतेः प्रयोगः । तत्र कृदन्ते सगतावगतौ च कृत्स्वरथाथादिस्वरगतिस्वरेषु कृतेषु शेषनिघातेन गतेर्निघातस्य भावात्तिङि चोदात्तवतीति नियमादनुदात्ते तिङन्ते तदप्रसङ्गात्पारिशेष्याद्गतावेव भविष्यतीति मत्वाह—गताविति । किमर्थमिति । 'तिङ्युदात्तवत्येवे'ति विपरीतनियमस्तु न भवति, 'तिङ्येवोदात्तवति नाऽन्यत्र प्रकारक इत्यादा'वितीष्टसिद्धये शास्त्रारम्भात् । अनन्त-

---

उ०—काङ्क्षैवाऽत्र बीजमिति । न क्तिनन्त इति । स्त्रियां क्तिन्विधानादिति भावः । बाहुलकादिति । अत एव च गुणाऽभावोऽपि बोध्यः । तिङन्ते मलोप इति । 'मलोपश्चे'ति वार्तिकोक्तो मलोपस्तिङन्ते नेष्टः । एवं चाऽस्य वाक्यस्य विशिष्टांशपयस्त्वं यदुक्तं तदाचार्यपरंपराकथितत्वात्प्रमाणमित्यर्थः ।

गतिर्गतौ । ननु गताविस्यस्याऽभावे 'प्रपचती'त्यादावपि निघातः स्यादत आह—गतेः शुद्धेवेति । एवं कृदन्तेपीऽति । शुद्धे गतियुक्ते चेत्यर्थः । अभावात्—अप्रतीतेः । गतिस्वरः—'गतिरनन्तर' इति । एवं च कृदन्ते गतिपरगतिनिघातस्य फलाऽभावः । तिङन्तेऽप्युदात्तवतीत्युत्तरसूत्रेण भवत्येव सः । अनुदात्ते तु नियमाश्रयणादप्रवृत्तिरित्याह—तिङि चेति । अनन्तरस्य चेति । यथाऽनन्तरस्य नियमेन व्यावृत्तिर्न तु शेषनिघातस्य तथा व्यावृत्त्यर्थमपि नाव्यवहितो वा विपरीतनियमो नेत्यर्थः । 'आ मन्द्रै'रिति प्रयोजनं पाश्चिम-

गतौ परतोऽनुदात्तत्वं यथा स्यान्मन्द्रशब्दे मा भूत् । आ मन्द्रैरिन्द्र हरिभि-र्याहि मयूररोमभिः* ।

## छन्दोऽर्थमिति चेन्नाऽगतित्वात् ॥ २ ॥

छन्दोऽर्थमिति चेत्तन्न । किं कारणम् ? 'अगतित्वात्' । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतः, न चात्राऽऽङो मन्द्रशब्दं प्रति क्रियायोगः । किं तर्हि ? याहिशब्दं प्रति । इहापि तर्हि न प्राप्नोति—अभ्युद्धरति, समुदानयति, उपसमादधातीति । अत्रापि नाऽभेरुदं प्रति क्रियायोगः । किं तर्हि ? हरतिं प्रति

---

प्र०–रस्य वा नियमाच्छेषनिघाताऽव्याघातात् । आमन्द्रैरिति । 'ते प्राग्धातो'रित्यत्र द्वौ पक्षौ, प्रयोगनियमः संज्ञानियमो वा । तत्र यदा प्रयोगनियमः—'धातोः प्रागेव गत्युपसर्गाः प्रयोक्तव्या' इति, तदा 'छन्दसि परेपि' 'व्यवहिताश्चे'त्यारब्धव्यम् । तत्रैव चेदमुक्तं—"प्राग्धातुवचनं प्रयोगनियमार्थमिति चेदनुकरणस्येतिकरणपरप्रतिषेधोऽनिष्टशब्दनिवृत्त्यर्थः, छन्दसि परव्यवहितवचनं चे"ति† । अस्मिन्पक्षे याहीत्येतदपेक्षया आङो गतित्वान्निघातप्रसङ्गः । यदा तु संज्ञानियमो 'धातोः प्राक् प्रयुज्यमाना गत्युपसर्गसंज्ञा भवन्ति न तु परे नापि व्यवहिता' इति तदाऽत्राङो गतित्वाऽभावान्निघाताऽप्रसङ्गः ।

न चात्राङ इति । मन्द्रशब्दस्य रूढिशब्दत्वात्क्रियावाचित्वाऽभावात् । ननु परनिमित्ताऽनुपादाने 'यत्क्रियायुक्तास्तं प्रती'ति कथं लभ्यते ? उच्यते । "पदस्ये"त्यधिकारात्पदाविधित्वात्समर्थपरिभाषोपस्थानादेतद्विशेषलाभः । नाभेरुदं प्रतीति ।

---

उ०–मित्याह—ते प्रागिति । तदाऽत्राङ इति । तत्पक्षे छन्दसि परेऽपि व्यवहिताश्चेत्यस्य प्रत्याख्यानात्त तद्बलेन छन्दसि व्यवहितपरयोर्गतित्वमिति भावः । अयमेव भाष्ये-उत्तराशयः ।

ननु मदे रकि मन्द्रशब्दनिष्पत्तेस्तत्र मदिक्रियानुपपत्तान्मन्द्रं प्रति क्रियायोगोऽस्त्येवेत्यत आह—मन्द्रशब्दस्येति । उणादिषु 'व्युत्पत्त्यर्थमेव क्रियोपादीयते, रूढ्यर्थ एव तु प्रवृत्तिनिमित्तमिति भावः । ननु परेति । यथो'पसर्गस्य घञि' 'उपसर्गादसमासेऽपी'त्यादौ, तत्रैव 'यत्क्रिया युक्ता' इति न्यायो न चाऽत्र तथेति भावः । समर्थेति । ततश्च 'येन गतेः सामर्थ्यं तत्प्रति यो गतिः स तस्मिन्परे निहन्यत' इत्यर्थ इति भावः । चिन्त्यमेतत्—एकार्थीभावविषय एव तत्प्रवृत्तेः, न चेरेषु तत्संभावना, साक्षाद्विध्युद्देश्ययोर्विधेयोद्देश्ययोर्वा तत्स्वीकारात् । भाष्यस्य स्वयमर्थः, यया क्रिययाऽव्यवहितपरया युक्तास्तं प्रत्येव गत्यादिसंज्ञाः । प्रकृते तु यया क्रियया योगस्तद्व्यवहितत्वेन संज्ञानियमपक्षे गतित्वाऽभावो, येन चाऽव्यवधानं तस्य क्रियात्वाऽभाव इति सर्वथा गतित्वाऽभाव इति । 'किं तर्हि ? याहि शब्दंप्रती'ति

---

* ऋग्वेद० ३. ४५. १; यजु० २०. ५३; साम० २४६; १६२८; अथर्व० ७. ११७. १;

† ते प्राग्धातोः (१. ४. ८०) सूत्रभाष्ये ।

क्रियायोगः । नैष दोषः । उदं प्रति क्रियायोगः । कथम् ? उत्—हरतिक्रियां विशिनष्टि । उदा विशिष्टाम् अभिर्विशिनष्टि । तत्र 'यत्क्रियायुक्ता' इति भवत्येव संघातं प्रति क्रियायोगः । इहापि तर्हि मन्द्रसाधना क्रियाऽऽङाऽभिव्यज्यते—'आयाहि मन्द्रै'रिति । ननु 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेने'ति । नैतत्सारम्—'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेण' । किं कारणम् ? साधनं हि क्रियां निर्वर्तयति, तामुपसर्गो विशिनष्टि, अभिनिर्वृत्तस्य चार्थस्योपसर्गेण विशेषः शक्यो वक्तुम् । सत्यमेवमेतत् । यस्त्वसौ धातूपसर्गयोरभिसम्बन्धस्तमभ्यन्तरे कृत्वा धातुः साधनेन युज्यते । अवश्यं चैतदेवं विज्ञेयम् ।

---

प्र०—उच्छब्दस्य क्रियावाचित्वाऽभावात् । उदमिति । उपसर्गः क्रियायाः समानाधिकरणो विशेषकः, तत्राऽन्वयव्यतिरेकाभ्यां धातुः क्रियावचनः । उपसर्गास्तु विशेषस्य वाचका इति धातूपसर्गसमुदायं क्रियाविशेषवचनं प्रत्यभेगतित्वादवयवव्यतिरेकेण समुदायाऽभावादवयवमुदं प्रति गतित्वमित्यर्थः ।

इहापीति । मन्द्रादिकरणमिन्द्रकर्तृकं यानमाङा विशेष्यत इति समुदायं क्रियाविशेषवाचिनं प्रत्याङो गतित्वमिति वक्तव्यम् । पूर्वं धातुरिति । यानक्रिया आङा विशिष्टा मन्द्रादिभिः साधनैः सम्बध्यते इति न समुदायं प्रत्याङो गतित्वमपि तु 'याही'त्येतत्पदं प्रतीत्यर्थः । अभिनिर्वृत्तस्येति । सतो ह्यर्थस्य विशेषणेन सम्बन्धो दृश्यते । साधनायत्तं च क्रियायाः सत्त्वमिति तस्याः प्राक्साधनेन योगः, पश्चादुपसर्गेण । कथमसती साधनेनाऽभिसम्बध्यत इति चेत्, साधनेन तस्या उत्पाद एव सम्बन्धः । ततश्च साधनादवाप्तजन्मा क्रियोपसर्गेण विशेष्यत इत्युक्तं भवति । यस्त्वसाविति । नहि साधनादुत्पन्ना क्रियाऽन्यतो विशेषं लभते, अपि तु विशिष्टैव

---

उ०—भाष्यस्य—तद्व्यवहितत्वाद् गतित्वाऽभाव इति भावः । नानार्थस्य धात्वर्थे विभक्त्यर्थे-मद्वारीकृत्य भेदेनाऽन्वयाऽभावादाह—समानाधिकरण इति । कथं तर्हि 'उदं प्रति अत्र क्रियायोग' इति परिहारवादिनो वचनमत आह—अन्वयव्यतिरेकेणेति । मन्द्रादिकरणमिति । ससाधनक्रियाया आङा विशेषणात्तन्न्यायेन मन्द्रं प्रत्यपि क्रियायोगाद्गतिप्रसङ्गनिवारणाय गताविति वक्तव्यमित्यर्थः । भाष्ये—आङाऽभिव्यज्यत इत्यनेन द्योतकत्वपदं सूचयति । भाष्येऽप्युद्धरतिविषये आह—गतिनेति । गतिना तु विशिष्टः । आङा विशिष्टेति । आङर्थेन चङ्क्रमणोत्तरदेशसंयोगानुकूल्येनेत्यर्थः । सतो हीति । जातस्येत्यर्थः । क्रियायाः सत्त्वं—ज्ञानम् । अयं भावः—साधनकार्यतिङादिविशिष्टो धातुः साध्यत्वविशिष्टार्थबोधकः, उपस्थिता च क्रिया विशेषणेन संबध्यत इति । कथमसतीति । अज्ञातेत्यर्थः । उत्पाद एव—ज्ञानोत्पाद एवेत्यर्थः । साधनात्—साधनप्रयुक्तप्रद-

यो हि मन्यते—'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणे'ति, 'आस्यते गुरुणे'त्यकर्मकः 'उपास्यते गुरु'रिति केन सकर्मकः स्यात् ?

गतिना तु विशिष्टस्य गतिरेव विशेषकः ।
साधने केन ते न स्याद्बाह्यमाभ्यन्तरो हि सः ॥

## तिङि चोदात्तवति ॥ ८ । १ । ७१ ॥

तिङ्ग्रहणं किमर्थम् ?

**तिङ्ग्रहणमुदात्तवतः परिमाणार्थम् ॥ १ ॥**

---

प्र०-क्रिया साधनेनोत्पाद्यते, ततश्च प्रयोक्ता विशिष्टायाः क्रियायाः साधनेन सम्बन्धं प्रतिपादयितुं सोपसर्गसमुदायं प्रयुङ्क्ते । यथैव यानस्येदं साधनं न पाकादेरिति प्रतिपादनाय यातेः प्रयोग एवमागमनस्येदं साधनं न गमनस्येति प्रतिपादयितुं सोपसर्गस्य प्रयोगः । ततश्च परमार्थतो धातूपसर्गसंघात एव क्रियावाची, पृथगुपदेशस्तु धातूपसर्गयोरडादिव्यवस्थार्थः । ततश्चाऽन्तरङ्ग उपसर्गयोगो बहिरङ्ग साधनयोगः । आस्यत इति । केवल आसिरकर्मक इति तस्मात्कर्तृभावयोर्लकार उत्पद्यते । उपसर्गयोगे त्वर्थान्तरवृत्तित्वात्सकर्मकत्वात्कर्मणि लकारोत्पत्तिः । यदि तु प्राक् साधनेन सम्बन्धः स्यात्ततोऽकर्मकत्वात्कर्मणि लकारो नोपपद्यते । तस्मात् क्रियाविशेषणप्रतिपादनाय 'पूर्वं धातुरुपसर्गेण युज्यत' इत्याङो मन्द्रं प्रत्यगतित्वाद्गताविति न कर्तव्यम् । गतिनेति । ऊर्ध्वताविशिष्टा हरतिक्रिया गतिना विशेष्यतेऽभ्युद्धरतीत्यत्रेत्यर्थः । साधन इति । गतावित्यस्मिन्नसति आ मन्द्रैरित्यत्र मन्द्रशब्दे साधनाभिधायिनि परतो निघातः कथं न स्यादिति चोद्यम् ।

उत्तरमाह—बाह्यमिति । साधनं बाह्यं, तत्सम्बन्धस्य बहिरङ्गत्वात् । धातूपसर्गयोस्त्वन्तरङ्ग इति मन्द्रं प्रत्यगतित्वान्निघाताऽभावः ।

तिङि चोदा० । तिङ्ग्रहणमिति । या क्रिया यत्क्रिया, यत्क्रियया युक्ता

---

उ०-विशिष्टाद्धातोरनाप्तजन्मा जातज्ञाना उत्पाद्यते ज्ञाप्यते । लोक इति शेषः । अन्तरङ्ग उपसर्गयोग इति । उपसर्गार्थयोग इत्यर्थः । उपसर्गयोगे त्विति । उपसर्गद्योत्यार्थयोगे त्वित्यर्थः । उपसर्गेणेति । तदर्थेनेत्यर्थः । अत्र यद्वक्तव्यं तत्सुट्कात्पूर्व इत्यत्रोक्तम् । निघातः कथं न स्यादिति । ते—तव—साधने परतः केन न स्यादित्यन्वयः । धातूपसर्गयोरिति । तदर्थयोरित्यर्थः ।

तिङि चो० । ननु यस्य वाच्या क्रिया यत्क्रियेत्याश्रयणे क्रियावाचकधातावेवोदात्तवति स्यात्

तिङ्ग्रहणं क्रियत उदात्तवतः परिमाणार्थम् । तिङ्युदात्तवति यथा स्यान्मन्द्रशब्दे मा भूत्—आ मन्द्रैरिन्द्र हरिभिर्याहि । यद्योगाद्गतिः । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो न चाङो मन्द्रशब्दं प्रति क्रियायोगः । किं तर्हि ? 'याहि'शब्दं प्रति ।

**यद्योगाद्गतिरिति चेत्प्रत्ययोदात्तत्वेऽप्रसिद्धिः ॥ २ ॥**

यद्योगाद्गतिरिति चेत्प्रत्ययोदात्तत्वेऽप्रसिद्धिः स्यात् । यत्प्रकरोति । तस्मात्तिङ्ग्रहणं कर्तव्यम् ।

यदि तिङ्ग्रहणं क्रियते आमन्ते न प्राप्नोति—प्रपचतितराम्, प्रजल्पतितराम् । असति पुनस्तिङ्ग्रहणे क्रियाप्रधानमाख्यातं तस्मादतिशये तरबुत्पद्यते,

---

प्र०—यत्क्रियायुक्ता इत्याश्रयणादव्याप्तिर्न भविष्यति, क्रियमाणे च तिङ्ग्रहणेऽव्याप्तिः, 'प्रपचतितरा'मित्यामन्ते निघाताऽप्रसङ्गादिति प्रश्नः । परिमाणार्थमिति । असति तिङ्ग्रहणे सर्वस्मिन्नुदात्तवति निघातः स्यादिति तत्परिच्छेदाय तिङ्ग्रहणमित्यर्थः । आ मन्द्रैरा त । मन्द्रशब्दो रक्प्रत्ययान्तोऽन्तोदात्तः । यद्योगादिति । गतिशब्दः पित्रादिशब्दवत्सम्बन्धिशब्दत्वात्सम्बन्धिनमाक्षिपतीति क्रियावाचिन एवोदात्तवतो ग्रहणं नान्यस्येत्यर्थः । प्रत्ययोदात्तत्व इति । धातुरेव क्रियावाचित्वाद्गतिसंज्ञानिमित्तमिति धातावेवोदात्तवति गतेर्निघातः स्यान्न तु प्रत्यये । तिङ्ग्रहणात्तु परिमाणार्थात्प्रत्ययोदात्तेनाप्युदात्तवति तिङन्ते गतेर्निघातो भवति । प्रपचतितरामिति । यदा 'गतिकारकोपपदानां कृद्भिरेव समासो नान्येन, स च प्राक् सुबुत्पत्ते'रिति दर्शनं तदाम्स्वरेणोदात्तवत्यामन्ते गतेर्निघात इष्यमाणस्तिङ्ग्रहणे सति न प्राप्नोति, अतिङन्तत्वादामन्तस्य । यदा त्वविशेषेण 'गतीनां समासः प्राक्सुबुत्पत्ते'रिति पक्षस्तदाऽऽमन्तेन प्रशब्दस्य समासेऽव्ययपूर्वपदप्रकृतिस्वरेण शेषनिघातेन च भाव्यम् । अथवा 'गति-

---

उ०—'यत्प्रपचती'त्यादौ, न तु 'यत्प्रकरोती'त्यादौ प्रत्ययोदात्तवतीति तिङ्ग्रहणमवश्यं कर्तव्यमत आह—या क्रियेति । अत्र पक्षेऽर्थं प्रति गतित्वं, न शब्दं प्रति, तत्रार्थे कार्यासम्भवात्तद्बोधकशब्दे परतः कार्यं विधीयमानं क्रियाप्रधाने सर्वत्रोदात्तवति सिद्ध्यतीत्ययमर्थोऽपि तिङ्ग्रहणेऽन्यथाभाव इत्यर्थः । 'आमन्ते निघाते'ति पाठः । 'आमन्तेन चे'त्यपपाठः । तत्परिच्छेदायेति । विशेषणस्थापनादित्यर्थः । संबन्धिशब्दत्वादिति । क्रियायोगे गतिसंज्ञाविधानादित्यर्थः । धातुरेवेति । तस्य धात्वा क्रियैक्यार्थादिति भावः । एवञ्च 'यत्प्रपचती'त्यादावेव स्यादिति तात्पर्यम् । यदा त्विति । तदा गतावव्याप्तिरिति भावः । शेषनिघातेनेति । एकश्रुतिबलः [illegible] तत्र प्राप्तिरिति भावः । वस्तुतोऽत्र समासो वैकल्पिक

तरबन्तात्स्वार्थे आम्, तत्र 'यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत' इति भवत्येतं संघातं प्रति क्रियायोगः। तस्मान्नार्थस्तिङ्ग्रहणेन। कस्मान्न भवति—आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः? 'यद्योगाद्गति'रिति। ननु चोक्तं—"यद्योगाद्गतिरिति चेत्प्रत्ययोदात्तत्वेऽप्रसिद्धि"रिति। नैष दोषः। 'यत्क्रियायुक्ता' इति नैवं विज्ञायते—यस्य क्रिया यत्क्रिया, यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति। कथं तर्हि? या क्रिया यत्क्रिया यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति।

## आमन्त्रितं पूर्वमविद्यमानवत् ॥ ८। १। ७२॥

वत्करणं किमर्थम्? स्वाश्रयमपि यथा स्यात्। आम् भो देवदत्तेत्यत्र 'आम एकान्तरमामन्त्रितमनन्तिके' [ ५५ ] इत्येकान्तरता यथा स्यात्।

## पूर्वं प्रति विद्यमानत्वादुत्तरत्रानन्तर्याप्रसिद्धिः ॥ १॥

---

प्र०—कारकोपपदात्क्त'दित्यत्र कृद्ग्रहणप्रत्याख्यानादुत्तरपदप्रकृतिस्वरेण प्रशब्दस्य शेषनिघातस्तदा तिङ्ग्रहणस्याऽव्याप्तिदोषो न चोदनीयः। कस्मादिति। 'पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणे'ति दर्शने संघातं प्रत्यस्य गतित्वात्प्राप्नोति। यद्योगादिति। 'पूर्वमुपसर्गेण धातोर्योगः पश्चात्साधनेने'ति प्रतिपादनात्। यस्य क्रियेति। अन्वयव्यतिरेकाभ्यां यस्य क्रिया धातोरेवासौ क्रिया वाच्येति तमेव प्रति गतित्वं स्यात्। यदा तु या क्रिया यत्क्रियेति क्रियालक्षणोऽर्थ आश्रीयते तदाऽर्थं प्रति गतित्वं न शब्दं प्रति। तत्राऽर्थे कार्याऽसम्भवात्तद्वाचिनि शब्दे परतः कार्यं विज्ञायमानं क्रियाप्रधाने सर्वस्मिन् प्रत्ययोदात्तत्वेन धातूदात्तत्वेन चोदात्तवति सिध्यति।

आमन्त्रितं०। वत्करणमिति। वतिमन्तरेणाप्यतिदेशो दृश्यते यथा 'गोवोणि'दिति प्रश्नः। नन्वसति वत्करणे 'पूर्वमामन्त्रितमविद्यमान'मित्युच्यमाने पूर्वस्या-

---

उ०—इति 'गतिकारकोपपदा'दित्यत्र निरूपितं तेन समासाऽभावपक्षे इदं भाष्यमिति न कश्चिद्दोषः। अस्य गतित्वादिति। आङ इत्यर्थः। 'प्रस्ये'ति त्वपपाठः। पूर्वमुपसर्गेणेति। तदर्थेनेत्यर्थः। यस्य क्रियेति। कुत्र संबन्धषष्ठीत्यत आह—अन्वयव्यतिरेकेति। एवञ्च यत्प्रकरोतीत्यादावव्याप्तिः स्यादिति भावः। तद्वाचिनीति। तद्बोधके इत्यर्थः। एवञ्च सूत्रे तिङ्ग्रहणं क्रियाप्रधानोपलक्षणमिति भावः।

आमन्त्रितं पूर्वम्०। ननु वत्करणाऽभावेऽर्थान्तरस्याप्रवृत्तेरतिदेशो दुर्लभ इत्याशङ्क्य

पूर्वं प्रति विद्यमानत्वादुत्तरत्रानन्तर्यस्याऽप्रसिद्धिः स्यात्। इमं मे गङ्गे यमुने सरस्वति*। गङ्गेशब्दोऽयं यमुनेशब्दं प्रत्यविद्यमानवद्भवति। तत्रामन्त्रितस्य पदात्परस्येत्यनुदात्तत्वं× न स्यात्।

**सिद्धं तु पदपूर्वस्येति वचनात्॥ २॥**

सिद्धमेतत्। कथम्? 'पदपूर्वस्येति वचनात्' पदपूर्वस्य चामन्त्रितस्याऽविद्यमानवद्भावो भवतीति वक्तव्यम्।

कानि पुनरस्य योगस्य प्रयोजनानि?

**अविद्यमानवत्त्वे प्रयोजनमामन्त्रितयुष्मदस्मत्तिङ्निघाताः॥ ३॥**

'आमन्त्रितस्य पदात्परस्यानुदात्तो भवती'तीहैव भवति† 'पचसि देवदत्त'। 'देवदत्त यज्ञदत्ते'त्यत्र न भवत्यविद्यमानवत्त्वादामन्त्रितस्य। 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वान्नावौ' [ २० ] इतीहैव भवति— 'ग्रामो वां स्वम्' 'जनपदो नौ स्वम्। 'देवदत्तयज्ञदत्तौ युवयोः स्व'मि-

प्र०-मन्त्रितस्य निवृत्तिः स्यात्। नैष दोषः। अर्थप्रत्यायनाय शब्दप्रयोगादनिवृत्तेऽर्थे शब्दनिवृत्त्यभावात्। अथापि 'परप्रयोगो भवतु पूर्वप्रयोगो मा भू'दित्यर्थः कल्पेत तथापि राजदन्तादिषु परमामन्त्रितं चेति वक्तव्यं स्यात्। स्वाश्रयमपीति। यत्स्वाश्रयं कार्यमातिदेशिकेन विरुध्यते तद्बाध्यते। यथा 'चण्डालवदस्मिन् ब्राह्मणे वर्तितव्य'मित्यतिदेशे कृते 'ब्राह्मणा भोज्यन्ता'मित्युक्ते नाऽसौ भोज्यते। तथा च पूर्वविधिग्रहणस्य 'नैधेय' इति प्रत्युदाहरणमुक्तं, सति स्थानिवत्त्वे त्र्यच्व्यपदेशेन द्व्यच्व्यपदेशस्य बाधनाड्ढकोऽ-

उ०-परिहरति—नन्वसतीति। अनिवृत्तेऽर्थे इति। इदं चिन्त्यम्, अर्थाऽनिवृत्तावेव लोपादिदर्शनात्। तस्माल्लोपपदे वक्तव्ये गुरूच्चारणादतिदेश इति बोध्यम्। इति वक्तव्यं स्यादिति। न च वाक्येऽपि पूर्वप्रयोगाऽभावायाऽत्र पाठः, एवमप्यामन्त्रितं परमित्येव सिद्धे शेषवैयर्थ्यापत्तेः। ननु सामर्थ्यादतिदेशलाभेऽपि स्वाश्रयकार्याऽसिद्धिः। कुतोऽत आह— यत्स्वाश्रयमिति। तद्बाध्यत इति। न स्वविरुद्धं बाध्यत इत्यर्थः। तत्र दृष्टान्तमाह— यथेति। नैधेये निपूर्वाद्धाञः क्वावातो लोपे 'द्व्यचः' 'इतश्चानिञ' इति ढक्।

* ऋग्वेद० १०. ७५. ५. × ८. १ १९; × ८. १. १९.
† अत: परस्मिन् पूर्वविधौ ( १. १. ५७ ) सूत्रभाष्ये।

त्यत्र न भवत्यविद्यमानवत्त्वादामन्त्रितस्य । 'तिङ्ङतिङः' [ २८ ] इतीहैव भवति—'देवदत्तः पचति' । 'देवदत्त पचसी'त्यत्र न भवत्यविद्यमानवत्त्वादामन्त्रितस्य ।

## पूजायामनन्तरप्रतिषेधः ॥ ४ ॥

पूजायामनन्तरप्रतिषेधः* प्रयोजनम् । यावत्पचति शोभनम् । यावद्देवदत्त पचसीत्यत्रापि सिद्धं भवति ।

## जात्वपूर्वम् ॥ ५ ॥

जात्वपूर्वम् [ ४७ ] प्रयोजनम् । जातु पचति । देवदत्त जातु पचसीत्यत्रापि सिद्धं भवति ।

## आहो उताहो चानन्तराविधौ ॥ ६ ॥

---

प्र०—प्रसङ्गात् । एवमिहाप्येकान्तरताऽविद्यमानवत्त्वेन विरोधान्निवर्तेत, वत्करणात्तु यत्राश्च निवर्तते । आम् भो देवदत्तेति । 'नामन्त्रित' इति निषेधादेकान्तरता सिद्धेति चिन्त्यमेतत् । पूर्वं प्रतीति । पूर्वशब्दस्य सम्बन्धिशब्दत्वात्परं प्रत्यामन्त्रितस्याऽविद्यमानवत्त्वात् पूर्वं तु प्रति विद्यमानत्वमेवेति तेन व्यवधानात्पूर्वाश्रयकार्याऽप्रसङ्गः । सिद्धं त्विति । पूर्वं यत्पदं तदपेक्षयापि पूर्वस्याऽऽमन्त्रितस्याविद्यमानत्वाद्व्यवधायकत्वाऽभावः । अन्ये तु न्यायसिद्ध एवायमर्थ इत्याहुः । पूर्वत्वस्य परापेक्षत्वात्परस्य कार्ये

---

उ०—वत्करणात्त्विति । तत् सामर्थ्याद्विरुद्धमपि स्वाश्रयं प्रवर्त्तेत इत्यर्थः । व्याख्यानाच्चेदं क्काचित्कमिति नातिप्रसङ्गः । चिन्त्यमेतदिति । एवञ्च बहुवचनान्तं प्रत्युदाहर्त्तव्यं, तत्र हि 'विभाषितं विशेषवचने' इत्यनेन पक्षेऽविद्यमानवद्भावाभावान्निघातप्रसङ्ग इति भावः । वस्तुतस्तु 'नामन्त्रित' इति सूत्रे उत्तरसूत्रापकृष्टसामान्यवचनमित्यनेन संबन्धिशब्दत्वादामन्त्रित इति सप्तम्यन्तार्थे विशेषवचनत्वाक्षेपे सामानाधिकरण्यस्यार्थलब्धतया समानाधिकरणग्रहणमत्यन्तसमानाधिकरणग्रहणार्थम् । एवञ्च नाऽत्र निषेधप्राप्तिः । भोःशब्दस्य सामान्यवचनत्वेऽपि निपातत्वाल्लिङ्गादिवाचित्वाऽभावेन सत्त्वार्थकदेवदत्तपदेनाऽत्यन्तसमानाधिकरणत्वाऽभावादिति चिन्त्यमेव चिन्त्यम् । तेन व्यवधानादिति । 'गङ्गे'इत्यस्य 'यमुने'शब्दं प्रत्यविद्यमानवत्त्वेऽपि 'मे'शब्दं प्रति विद्यमानत्वाद् व्यवधानेन, 'मे'शब्दनिमित्तो 'यमुने' इत्यस्य निघातो न स्यादित्यर्थः । पूर्वं यत्पदमिति । वार्तिके 'पदं च तत्पूर्वं चे'ति कर्मधारयः । 'तत्संबन्ध्यानन्तर्यादावपि अविद्यमानव'दिति वाच्योऽर्थस्तत्फलितमाह—तदपेक्षयापीति । एवञ्च पूर्वशब्दस्य संबन्धिशब्दतया परं प्रति, अस्माद्वचनादेव

---

* ८. १. ३७.

आहो उताहो चानन्तरविधौ+ प्रयोजनम् । आहो पचसि, उताहो पचसि । आहो देवदत्त पचसि, उताहो देवदत्त पचसीत्यत्रापि सिद्धं भवति ।

**आम एकान्तरविधौ ॥ ७ ॥**

आम एकान्तरविधौ× प्रयोजनम् । आम् पचसि देवदत्तः । आम् भोः पचसि देवदत्त अत्रापि सिद्धं भवति ।

**नामन्त्रिते समानाधिकरणे ॥ ८ । १ । ७३ ॥**

इह कस्मान्न भवति—अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये एतानि ते अघ्न्ये नामानि ? योगविभागः† करिष्यते—'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' ततो 'विभाषितं विशेषवचन' इति ।

---

प्र०—स्वनिमित्तेऽन्यनिमित्ते वा कर्तव्ये आमन्त्रितस्याऽविद्यमानवत्त्वान्मेशब्दात्परोऽनन्तरो भवति 'यमुने'शब्द इति निघातसिद्धिः ।

नामन्त्रिते० । इहेति । 'नामन्त्रिते समानाधिकरणे' इति सूत्रं पठितं, ततः सामान्यवचनं विभाषितं विशेषवचने' इति द्वितीयं ततश्च पर्यायशब्दानामपि सामानाधिकरण्यादविद्यमानवत्त्वनिषेधान्निघातप्रसङ्गः । योगविभाग इति । पर्यायत्वाच्च सामान्यवचनत्वाऽभावः, सामान्यस्य विशेषापेक्षत्वात् एवं चामन्त्रिताद्युदात्तत्वं सर्वेषामेतेषां भवति ।

---

उ०—प्रत्यपीति 'मे' शब्दाश्रयो 'यमुने'इत्यस्य निघातः सिद्ध्यतीति भावः । स्वनिमित्तेऽन्यनिमित्ते वेति । परं प्रत्येवाऽविद्यमानवदित्यवधारणं नाश्रीयते मानाऽभावात् । परस्य कार्ये पूर्वं प्रत्यपि तत्त्वमिति भावः ।

नामन्त्रिते० । सामानाधिकरण्यादिति । समानार्थत्वं सामानाधिकरण्यम् । तच्च पर्यायशब्दानां सुतरामस्तीति भावः । भिन्नप्रवृत्तिनिमित्तत्वं तु भाष्यकृता तल्लक्षणेनाश्रितमिति तात्पर्यम् । अतएव पट्वीमृद्व्याविरयत्र युगपदधिकरणवचनतापक्षे पुंवद्भावः शङ्कितश्चार्थे द्वन्द्व इति सूत्रे भाष्ये । अघ्न्यादीनां पर्यायत्वं श्रुतावेवोक्तमित्याह—भाष्ये—एतानि ते अघ्न्ये नामानीति । एवञ्चेति । पदात्परत्वाऽभावेन निघाताऽप्राप्तिरित्यर्थः । एतदुदाहरणम्—अग्ने पावक रोचिषेति । पावकेत्यग्नेर्विशेषणमत्र ।

---

+ ८. १. ४९. × ८. १. ५५. † ८. १. ७४.

**सामान्यवचनं विभाषितं विशेषवचने ॥ ८ । १ । ७४ ॥**

इह कस्मान्न भवति—ब्राह्मण वैयाकरण ? 'बहुवचन'मिति वक्ष्यामि ।

सामान्यवचनमिति शक्यमवक्तुम् । कथम् ? 'विभाषितं विशेषवचन' इत्युच्यते, तेन यत्प्रति विशेषवचनमित्येतद्भवति तस्य भविष्यति । किं च प्रत्येतद्भवति ? सामान्यवचनम् ।

अपर आह—"विशेषवचन इति शक्यमवक्तुम् । कथम् ? 'सामान्यवचनं विभाषित'मित्युच्यते तेन यत्प्रति सामान्यवचनमित्येतद्भवति [ तस्य भविष्यति ] । किं च प्रत्येतद्भवति ? विशेषवचनम् । सामान्यवचनं विभाषितं विशेषवचन इति ।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये अष्टमाध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् । पादश्च समाप्तः ।

---

प्र०— सामान्यवचनं विभाषितम्० । इहेति । बहुवचनग्रहणमपाणिनीयमिति प्रश्नः । बहुवचनमिति । तेन 'ब्राह्मणा वैयाकरणा'इति वा निघातः, 'ब्राह्मणवैयाकरणे'त्यत्र नित्यः । सामान्यवचनमिति । 'विशेषवचन'इत्यस्य पूर्वेण संबन्धात्पर्यायस्य विशेषवाचित्वाऽभावात्पूर्वसूत्रार्थमपि सामान्यवचनग्रहणं न कर्तव्यम् 'अघ्न्ये देवी'त्यादौ सर्वेषामामन्त्रिताद्युदात्तत्वसिद्धये ।

इति कैयटकृते महाभाष्यप्रदीपेऽष्टमस्य प्रथमे द्वितीयमाह्निकम् । पादश्च प्रथमः ।

---

उ०— सामान्यवचनं विभा० । ननु पूर्वसूत्रार्थं सामान्यवचनग्रहणमावश्यकमत आह—विशेषवचन इति । अस्यैव पूर्वेण संबन्ध इति सर्वेष्टसिद्धिः ।

इति श्रीनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते अष्टमस्य प्रथमे पादे द्वितीयमाह्निकम् । पादश्चायं समाप्तः ।

# अथ द्वितीयः पादः

## पूर्वत्राऽसिद्धम् ॥ ८ । २ । १ ॥

येयं सपादसप्ताध्याय्यनुक्रान्ता एतस्यामयं पादोनोऽध्यायोऽसिद्धो वेदितव्यः । यदि 'सपादायां सप्ताध्याय्यामयं पादोनोऽध्यायोऽसिद्ध' इत्युच्यते य इह सप्तमीनिर्देशः पञ्चमीनिर्देशः षष्ठीनिर्देशाश्चोच्यन्ते तेऽप्यसिद्धाः स्युः । तत्र को दोषः ? 'झलो झलि' [ ८. २. २६ ] 'ह्रस्वादङ्गात्' [ २७ ] संयोगान्तस्य लोपः' [ २३ ] इत्येतेषां निर्देशानामसिद्धत्वा'तस्मिन्निति निर्दिष्टे पूर्वस्य' [ १. १. ६६ ] 'तस्मादित्युत्तरस्य [ ६७ ] 'षष्ठी स्थानेयोगा' [ ४९ ]

प्र०– पूर्वत्रासिद्धम् । येयमिति । वृत्तिग्रन्थोपक्षेपेण शास्त्राऽसिद्धत्वमाश्रीयते न तु कार्याऽसिद्धत्वं, शास्त्रस्य संनिवेशात्पौर्वापर्यसंभवात्, कार्याणां तु प्रयोगसमवायात्पौर्वापर्याऽयोगात् । शास्त्रद्वारेण वा कार्याणां पौर्वापर्यं शास्त्रस्य मुख्यं पौर्वापर्यमिति तस्यैव ग्रहणं न्याय्यमित्युत्सर्गलक्षणकार्यसिद्धिरपि भवतीति दर्शयति । एतच्च सूत्रमात्मानं विहाय सूत्रान्तराणामसिद्धत्वं प्रतिपादयति न त्वात्मनः, बोधकस्य बोध्यत्वाऽभावात् । एतस्य चाऽसिद्धत्वे सर्वेषां सिद्धत्वात्सूत्रारम्भ एवाऽनर्थकः स्यात् । यथा 'सर्वं मिथ्या ब्रवीमी'ति वाक्यं वाक्यान्तराणामेव मिथ्यात्वं प्रतिपादयति । एतस्याऽपि मिथ्यात्वे वाक्यान्तराणां मिथ्यात्वं न स्यादित्यनर्थकमेवैतद्वाक्यं स्यात् । यदीति । यथोद्देशं संज्ञापरिभाषमाश्रित्य चोद्यते । यदा प्रतिपत्ता यथाश्रुतग्राही 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'त्यस्य सूत्रस्य 'यत्र सप्तमीनिर्दिष्टः शब्दस्तत्र पूर्वस्य कार्यं भवती'त्येतमर्थं प्रतिपद्यते, स तु सप्तमीनिर्देशः क्व स्याद्विति विशेषं न पर्यालोचयति, तदेको यणचीत्येवमादौ प्रदेशवाक्ये सप्तमीश्रवणात्पूर्वस्य कार्यं प्रतिपद्यते । अस्मिन्पक्षे

उ०– पूर्वत्रासिद्धम् । सूत्रार्थमात्रकथनस्य भाष्ये क्वाऽप्यदृष्टत्वादत्र तत्कथनं किमर्थंत आह— वृत्तिग्रन्थोपक्षेपेणेति । अस्य वक्ष्यमाणेन 'दर्शयती'त्यनेनान्वयः । उपक्षेपः—तिरस्कारः । अत एवाग्रिमप्रश्नप्रतिवचनाद्युपपत्तिः । कार्यस्य प्राधान्येऽपि कार्याऽसिद्धत्वे दोषमाह— उत्सर्गलक्षणेति । 'अमुष्मै' इत्यादौ स्मायादिः । अनर्थकमेवैतदिति । एवञ्च सामर्थ्यादेवात्मनोऽसिद्धत्वं न प्रतिपादयतीत्यर्थः । यद्यपि जगतो मिथ्यात्वप्रतिपादकश्रुतिवाक्यैरात्मनोऽपि मिथ्यात्वं प्रतिपाद्यते, तथापि शास्त्रवैयर्थ्यापत्त्याऽत्र न तथात्वमिति तत्त्वम् । यद्यपि परिभाषाणां कार्यार्थत्वात्कार्यकालत्वमेव युक्तं तथापि प्रतिपत्तृविशेषापेक्षो यथोद्देशपक्ष इत्याह—यदेति । पूर्वस्य कार्यमिति । 'तद्देशस्थेनैव तेने'ति शेषः । इत्येवमफलाभावादिति । तत्फलभूतस्थानसंबन्धाऽभावादित्यर्थः । फलाप्रवृत्त्येति । फलप्रवृत्त्यभावप्रसक्तेरित्यर्थः । सर्वस्य पदस्येति । अलोऽन्त्यस्येत्येतदृष्ट्याऽस्याऽसिद्धत्वात्तदप्रवृत्ताविति भावः । कार्यकालमिति । ननु कार्यकालपक्षेऽपि यत्कार्यं सिद्धं तत्रोऽपस्थितिरस्तु, पूर्वा

इत्येताः परिभाषा न प्रकल्पेरन्। नैष दोषः, यद्यपीदं तत्राऽसिद्धं तत्त्विह सिद्धम्। कथम्? कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम्। 'झलो झलि' 'ह्रस्वादङ्गात्' 'संयोगान्तस्य लोपः', उपस्थितमिदं भवति— 'तस्मिन्निति निर्दिष्टे पूर्वस्य' 'तस्मादित्युत्तरस्य' 'षष्ठी स्थानेयोगे'ति। यदि 'कार्यकालं संज्ञापरिभाष'मित्युच्यते, इयमपि परिभाषाऽस्ति 'विप्रतिषेधे पर'-मिति+ साऽपीहोपतिष्ठेत। तत्र को दोषः? विस्फोर्यम् अवगोर्यमिति गुणाद्दीर्घत्वं स्याद्विप्रतिषेधेन। अत उत्तरं पठति—

**पूर्वत्राऽसिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य ॥ १ ॥**

---

प्र०-'झलो झली'त्येवमादौ सप्तम्या निर्देशस्याऽसिद्धत्वात्परिभाषाफलाऽभावप्रसङ्गः। तथा 'संयोगान्तस्य लोप'इत्यत्र 'षष्ठी स्थानेयोगे'त्येतत्फलाऽभावात्तच्छेषस्याऽलोन्त्यस्ये-त्यस्याऽपि फलाऽप्रवृत्त्याऽन्तरङ्गत्वात्स्थानसंबन्धविज्ञानेऽपि सर्वस्य पदस्य लोपप्रसङ्गः। यद्यपीदमिति। यथोद्देशपक्षे। तत्त्विह सिद्धमिति। 'कार्यकालं संज्ञापरिभाष'-मित्यस्मिन्दर्शने संज्ञापरिभाषाणां ह्यत्यन्तपारार्थ्यान्न स्वातन्त्र्येण कार्यावगमहेतुत्वम्। केवलमाचार्येण लाघवायाऽनेकप्रधानाङ्गवद्भावप्रतिपत्तये पृथगुपदेशः कृतः। ततश्च 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'त्यनेन केवलेन न किंचित्क्रियते नाऽपि 'झलो झली'त्यनेन, किं तर्हि, संहृत्य कार्यं क्रियते, ततो झल्यनन्तरे पूर्वस्य सकारस्य झलः परस्य लोप इति वाक्यार्थ इत्येकवाक्यतायां पौर्वापर्याऽभावादसिद्धत्वाऽभावः। पूर्वत्राऽसिद्ध इति।

---

उ०-शास्त्राणामसिद्धत्वे तस्य कथमत्रोपस्थितिरिति चेन्न, तत्पक्षे कार्येण स्वसंस्काराय स्ववृत्तिलिङ्गविहितपरिभाषाणामाक्षेपः क्रियते। परिभाषा अपि स्वसंस्कार्यत्वेन विधीनपेक्षन्ते। तत्र सपादसप्ताध्याय्यामुभयाकाङ्क्षया संबन्धः। अत्र त्वेतदाकाङ्क्षयैवेति न दोषः। एवञ्च पक्षद्वयसाधारणः पूर्वपक्षः। कार्यकालाश्रयेणान्यतराकाङ्क्षयापि संबन्ध इत्युत्तरम्। तत्त्विह सिद्धमिति। परिभाषाशास्त्रं तु त्रिपाद्यां सिद्धमित्यर्थः। कथमिति। तावतापि कथं सिद्ध-मित्यर्थः। असिद्धेऽस्मिन्कथं तदुपस्थितिरिति भावः। उत्तरमाह—कार्यकालमिति। नन्वस्यापि कार्येण समकालं तयोः प्रवृत्तिरित्यर्थः, तत्र कार्यस्याऽसिद्धत्वे कथं तत्समकालं प्रवृत्तिरत आह—यत्र कार्यं तत्रैवावस्थितमिति। कार्येणाक्षेपादित्यर्थः। प्रायस्तत्रैवोपस्थित-मिति पाठः। कार्यकालशब्दस्य च—कार्येण काल्यते स्वसंस्काराय स्वसन्निधिं प्राप्यते इत्यर्थः। कैयटोक्तव्याख्यायां तु 'यद्यपीदं तत्राऽसिद्धं तत्त्विह सिद्ध'मिति भाष्यस्य फलं चिन्त्यम्। पौर्वापर्याभावादिति। इदमपि चिन्त्यम्—एकवाक्यतामात्रेण पाणिनीयपठित-सन्निवेशापेक्षपौर्वापर्याऽहानिः। ध्वनितं चेदं 'तस्मिन्निति निर्दिष्ट'इत्यत्र भाष्ये। तत्र हि 'ङमो ह्रस्वादची'त्यत्र परत्वात्तस्मादित्युत्तरस्येत्येव प्रवर्तेत इत्युक्तम्। किं चैवमन्योन्याश्रयः, एकवाक्यताज्ञानोत्तरं पौर्वापर्याऽभावज्ञानेऽसिद्धत्वाऽभावज्ञानं, तज्ज्ञाने चैकवाक्यतेति। दीर्घस्य—'हलि चे'त्यस्य। निमित्ताभावादिति। द्वयोः सावकाशयोः समवस्थितयोरेकत्र युगपत्प्रसङ्गो हि तच्छास्त्रप्रवृत्तिनिमित्तमित्यर्थः, न च स प्रकृते इति भावः। भाष्ये—

---

+ १. ४. २. ; ७. २. ८६; ८. २. ७७.

पूर्वत्रासिद्धे नास्ति विप्रतिषेधः। किं कारणम्? 'अभावादुत्तरस्य'। द्वयोर्हि सावकाशयोः समवस्थितयोर्विप्रतिषेधो भवति न च पूर्वत्राऽसिद्धे परं पूर्वं प्रति भवति। यद्येवं दोग्धा दोग्धुं—घत्वस्याऽसिद्धत्वाड्ढत्वं प्राप्नोति+। काष्ठतट् कूटतट् संयोगादिलोपस्याऽसिद्धत्वात्संयोगान्तलोपः प्राप्नोति×।

**अपवादो वचनप्रामाण्यात् ॥ २ ॥**

अनवकाशावेतौ वचनप्रामाण्याद्भविष्यतः। तस्मात्कार्यकालं संज्ञापरिभाषमिति न दोषः।

**पूर्वत्रासिद्धमधिकारः ॥ ३ ॥**

'पूर्वत्राऽसिद्ध'मित्यधिकारोऽयं द्रष्टव्यः। किं प्रयोजनम्?

**परस्य परस्य पूर्वत्र पूर्वत्राऽसिद्धविज्ञानार्थम् ॥ ४ ॥**

परः परो योगः पूर्वं पूर्वं योगं प्रत्यसिद्धो यथा स्यात्।

**अनधिकारे हि समुदायस्य समुदायेऽसिद्धविज्ञानम् ॥ ५ ॥**

अनधिकारे हि सति समुदायस्य समुदायेऽसिद्धत्वं विज्ञायेत। तत्र को दोषः?

---

प्र०—गुणे दीर्घस्याऽसिद्धत्वाद्युगपत्प्रसङ्गाऽभावाद्विप्रतिषेधस्य निमित्ताऽभावात्परिभाषाऽनुपस्थानाद्गुण एव प्रवर्तते। यद्येवमिति। 'अभावादुत्तरस्ये'ति न्यायाड्ढत्वे घत्वस्यासिद्धत्वाड्ढत्वप्रसङ्गः। अपवाद इति। योऽपवादः स एव भवति, वचनसामर्थ्यात्प्रकरणस्य श्रुत्या बाधनात्। पूर्वत्रासिद्धमधिकार इति। न तु विधिः। तथा हि वक्ष्यमाणत्रिपादीलक्षणात्समुदायाद्यत्पूर्वं तत्र स एव समुदायः सपादसप्ताध्याय्यपेक्षालब्धपरव्यपदेशोऽनपेक्षितान्तर्गतावयवपौर्वापर्योऽसिद्धो भवतीत्येतावानस्य विधिवाक्यस्यार्थो विज्ञायेत, अधिकारे तु परस्य परस्य पूर्वत्र पूर्वत्रासिद्धत्वं संपद्यते। सकलशास्त्रव्यापित्वनिरासार्थं तु परिभाषात्वं नाश्रितं, तेन तैस्तस्येत्यादाविनादिषु कर्तव्येष्वत्वस्यासिद्धत्वादकारान्तनिमित्ता इनादयो न स्युः।

अनधिकारे हीति। यदि स्वतन्त्रो विधिरयं स्यादित्यर्थः। यद्यप्यवयवा एव कार्येषु व्याप्रियन्ते न समुदायः, तथाऽप्यवयवद्वारकस्तस्यापि व्यापारोऽस्तीति वक्ष्य-

---

उ०—परं पूर्वं प्रति भवतीति। परं पूर्वदृष्ट्याऽवस्थितं भवतीत्यर्थः। एवञ्च सा यथोद्देशैवेति भावः। अपवादत्वे वचनप्रामाण्यं न हेतुः, किं तर्हि, अपवादवचने इत्याह—योऽपवाद इति। नन्वधिकारादसिद्धत्वसंबन्धे जाग्रति सत्यपि वचनेन कथमपवादत्वं स्यादत आह—प्रकरणस्येति। अस्याऽधिकारत्वेनाऽसिद्धत्वं प्रकरणलभ्यमिति भावः। भाष्ये—कार्यकालं संज्ञापरिभाषमिति न दोष इति। इतिपक्षेऽन्यतराकाङ्क्षया संबन्धेन न दोष इत्यर्थः। अनपेक्षितेति। त्रिपाद्यन्तर्गतपौर्वापर्यस्य शब्देनाऽनपेक्षितत्वादिति भावः। इत्येतावानिति। एवञ्च त्रिपाद्यां पूर्वं प्रति परमसिद्धं न स्यादित्यर्थः। अधिकारे त्विति। उत्तरत्रोपस्थित्या

---

+ ८. २. ३२; ३१. × ८. २. २९; २३.

**तत्राऽयथेष्टप्रसङ्गः ॥ ६ ॥**

तत्राऽयथेष्टं प्रसज्येत । गोधुङ्मान् गुडलिण्मानिति—षत्वढत्वयोः† कृतयोर्'झषः [ ८. २. १० ] इति वत्वं प्रसज्येत ।

**तस्मादधिकारः ॥ ७ ॥**

तस्मादधिकारोऽयं द्रष्टव्यः ।

अथाऽसिद्धवचनं किमर्थम् ?

**असिद्धवचन उक्तम् ॥ ८ ॥**

किमुक्तम् ? तत्र+ तावदुक्तं—"षत्वतुकोरसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं चे"ति । एवमिहाऽपि पूर्वत्राऽसिद्धवचनमादेशलक्षणप्रतिषेधार्थमुत्सर्गलक्षणभावार्थं च । आदेशलक्षणप्रतिषेधार्थं तावत्—राजभिः तक्षभिः, राजभ्यां तक्षभ्याम्, राजसु तक्षसु इति नलोपे कृते'ऽत' इत्यैस्भावादयः प्राप्नुवन्ति× । असिद्धत्वान्न भवन्ति । उत्सर्गलक्षणभावार्थं

प्र०—माणस्य समुदायस्याऽतिक्रान्ते समुदायेऽसिद्धत्वं स्यात् । अधिकारे तु सर्वेष्टसंग्रहः । अयथेष्टमिति । अयथेष्टमपि प्राप्नोति न तु यथेष्टमेवेत्यर्थः । गोधुङ्मानिति । गोदुहोऽस्य सन्तीति मतुप् । 'दादेर्धातोर्घ'इति घत्वं, जश्त्वस्याऽसिद्धत्वादेकाचो बश इति भष्भावः । ततो जश्त्वं गकारः । 'यरोऽनुनासिकेऽनुनासिको वा' प्रत्यये भाषायां नित्यवचन'मिति ङकारः । असिद्धवचनमिति । किं शास्त्रस्याऽसिद्धत्वमथ कार्यस्येति प्रश्नः । अथवा यच्छास्त्रमुच्चारितं तस्याऽसिद्धत्वमशक्यं कर्तुमिति प्रश्नः । असिद्धवचन उक्तमिति । सिद्धस्याऽसिद्धवचनादतिदेश आश्रीयते । शास्त्रस्य चाऽसिद्धवद्भाव आश्रीयते न तु कार्यस्य । अन्यथोत्सर्गलक्षणकार्यं न सिध्येत् । षत्वतुकोरिति । 'कोऽस्ये'-

उ०—ततस्ततः पूर्वसूत्रसमुदायस्य पूर्वशब्देन ग्रहणान्न दोषः । परिभाषात्वमिति । लिङ्गविशेषानुपादानाच्चेत्यपि बोध्यम् । शास्त्रत्वस्यैव लिङ्गत्वे तु सपादसप्ताध्याय्यामपि पूर्वं प्रति पराऽसिद्धत्वापत्तिः । मध्ये पाठसामर्थ्याश्रयणे तु त्रिपाद्यामप्यप्रवृत्तिः स्यादिति भावः । वक्ष्यमाणस्य समुदायस्येति । न तु तदवयवपूर्वं प्रतितदवयवपरमसिद्धं स्यादिति भावः । ननु किञ्चिदिष्टस्यापि सिद्धेरयथेष्टं प्रसज्येतेत्ययुक्तमत आह—अयथेष्टमिति । जश्त्वस्याऽसिद्धत्वादिति । इदं सिद्धान्तिरीत्या । भाष्ये—वत्वं प्रसज्येतेति । न च वत्वात्परत्वात्प्रत्यये भाषायामित्यनुनासिकत्वे झयोऽसत्त्वात्कथं वत्वापादनमिति वाच्यम् । एतत्पक्षे यथोद्देशत्वमाश्रित्य त्रिपाद्यां तदप्रवृत्तिरित्याशयात् । त्रिपादीस्थे परशास्त्रे तदप्रवृत्तेः सर्वसंमतत्वात् । किं शास्त्रस्येति । भाष्येऽर्थशब्दो विषयपर इति भावः । अथवेति । अत्राऽर्थशब्दः प्रयोजनपर इति भावः । उभयमपि समाधत्ते—सिद्धस्येति । षत्वं नेति । आदेशलक्षणमित्यर्थः ।

† ८. २. ३२; ३१. + ६. १. ८६. * × ८. २. ७; ७. १. ९; ७. ३. १०२; १०३.

च—अमुष्मै अमुष्मात् अमुष्य अमुष्मिन्नित्यत्र मुभावे कृते 'ऽत' इति स्मायादयो न प्राप्नुवन्ति* असिद्धत्वाद्भवन्ति । सुपर्वाणौ सुपर्वाणः, णत्वे कृते 'नोपधायाः' इति दीर्घत्वं न प्राप्नोति† । असिद्धत्वाद्भवति ।

## नलोपः सुप्स्वरसंज्ञातुग्विधिषु कृति ॥ ८ । २ । २ ॥

'सुब्विधिं प्रति नलोपोऽसिद्धो भवती'त्युच्यते, भवेदिह राजभिः तक्षभिरिति नलोपे कृते 'ऽत' इत्यैस्भावो+ न स्यात् । इह तु खलु राजभ्यां तक्षभ्यां राजसु तक्षस्विति—नलोपे कृते दीर्घत्वैत्त्वे× प्राप्नुतः । नैष दोषः । सुब्विधिरिति सर्वविभक्त्यन्तः समासः । सुपो विधिः सुब्विधिः, सुपि विधिः सुब्विधिरिति ।

प्र०—स्यादौ षत्वं न भवति । 'अधीत्य' इत्यादौ पूर्वं तुग्भवति पश्चादेकादेशः । राजभिरिति । नलोपशास्त्रमैसादिषु कर्त्तव्येष्वसिद्धत्वात्स्वकार्यं न प्रदर्शयतीत्यैसाद्यभावः । अमुष्मा इति । अदसो विभक्तौ त्यदाद्यत्वे कृते परत्वान्नित्यत्वाच्चोत्वप्रसङ्गादकारान्तत्वनिबन्धनस्मायाद्यप्रसङ्गः । उत्वशास्त्रस्याऽसिद्धत्वादप्रवर्तनात्पूर्वं स्मायादयः पश्चादुत्वम् ।

नलोपः० । सर्वविभक्त्यन्त इति । सर्वविभक्त्यन्ताऽवयवत्वात्सर्वविभक्त्यन्तः । अथ वा अर्श आदित्वादच्प्रत्ययः—सर्वविभक्त्यन्तोऽवयवोऽस्यास्तीति । सर्वग्रहणं चाऽनेकोपलक्षणं, द्वितीयाद्यसंभवात् । ननु चैकार्थेन शब्देन भाव्यमिति कथं सर्वविभक्त्यन्तत्वमाश्रीयते ? उच्यते, प्रवृत्तिनिमित्तविशेषाऽनपेक्षया सुब्विधिशब्दवाच्याऽर्थः सुब्विधिरित्याश्रीयते । अथ वा संबन्धसामान्ये षष्ठीं विधाय षष्ठीसमासः क्रियते । न तु स्थान्यादेशसंबन्ध एवाश्रीयते, तेन सुपि यो विधिः स सुपः संबन्धी भवतीति तत्राऽप्यसिद्धत्वं भवति । सर्वविभक्त्यर्थाऽन्तर्भावाच्च सर्वविभक्त्यन्त उच्यते । न चाऽत्र सुपः कार्यं विधीयते । तेन षष्ठी स्थानेयोगेत्यस्योपस्थानाऽभावः । 'उदीचामातः स्थाने'इतिस्थानग्रहणाल्लिङ्गादनुवादेऽस्याः परिभाषाया अप्रवृत्तिः । यदा त्वेषा परिभाषा प्रत्याख्याता तदाऽपि संबन्धसामान्यस्योपादानात्तस्य चैकत्वादयं संबन्धः संनिकृष्टोऽयं

उ०—तुगिति । स्थानिलक्षणः । स्मायाद्यप्रसङ्ग इति । उत्वस्याऽसिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेनाऽन्तत्वाभावादिति भावः ।

न लोपः सु० । भाष्ये—दीर्घत्वैत्वे प्राप्नुत इति । न हीमे सुपो विधीयन्त इति भावः । ननु समासस्य सर्वविभक्त्यन्तत्वमसंभवीत्यत आह—सर्वविभक्त्यन्तावयवत्वादिति । नन्वेवं सर्वविभक्त्यन्तावयवत्वं समासस्याऽनुपपन्नमत आह—सर्वविभक्त्यर्थेति । तेन षष्ठीति । विध्यङ्गभूतपरिभाषाणां साक्षात्तद्विशेषणे एव प्रवृत्तेरुचितत्वादिति भावः । अत्रैवार्थे लिङ्गमप्याह—उदीचामिति । कश्चित्तु लक्ष्यानुरोधाल्लक्षणत्वेऽपि तत्रापि परिभाषाणां प्रवृत्तिः, यथोदात्तस्वरितयोरित्यादौ । वस्तुत इदं चिन्त्यमित्यसहृदयैर्दिनम् । यदा त्वेषेति । षष्ठी स्थाने इत्यपेक्ष्यर्थः । संबन्धसामान्यस्येति । सम्बन्धत्वेन संबन्धस्य पाठ-

* ८. २. ८०. ७. १. ११; १४; १५; † ८. ४. २; ६. ४. ८. + ८. २. ७; ७. १. ९.
× ७. १. १०२; १०३.

अथ संज्ञाविधौ किमुदाहरणम् ? पञ्च सप्त । पञ्च सप्तेत्यत्र नलोपे* कृते 'ष्णान्ता षट्' [ १. १. २४ ] इति षट्संज्ञा न प्राप्नोति । असिद्धत्वाद्भवति ।

**संज्ञाग्रहणानर्थक्यं च तन्निमित्तत्वाल्लोपस्य ॥ १ ॥**

संज्ञाग्रहणं चाऽनर्थकम् । किं कारणम् ? 'तन्निमित्तत्वाल्लोपस्य' । नाऽकृतायां षट्संज्ञायां जश्शसोर्लुक्, न चाऽकृते लुकि पदसंज्ञा, न चाऽकृतायां पदसंज्ञायां नलोपः प्राप्नोति । तदेतदानुपूर्व्या सिद्धं भवति । इदं तर्हि प्रयोजनं पञ्चभिः सप्तभिरिति । 'षट्त्रिचतुर्भ्यो हलादिः' 'झल्युपोत्तम'मित्येष स्वरो यथा स्यात् ।

**स्वरेऽवधारणाच्च ॥ २ ॥**

प्र०—विप्रकृष्ट इति भेदनिबन्धनो व्यवहारो नास्ति । पञ्चेति । लौकिकात्प्रयोगान्नकाराऽसंभवं शास्त्राच्च विभक्त्यभावं मन्यते । तन्निमित्तत्वादिति । यथा विभक्तिलोपः शास्त्राधीन एवं नलोपः, ततश्चानुपूर्व्या सिद्धमेतदित्यर्थः । षट्त्रीति । अन्यथा नलोपे कृते नान्तत्वाऽभावादसत्यां षट्संज्ञायां 'झल्युपोत्तम'मिति स्वरो न स्यात् । ततश्च 'नः संख्याया'इत्याद्युदात्तं पदं श्रूयते । न चाऽत्र भूतपूर्वगतिराश्रयितुं शक्यते, षट्त्री'त्यस्य 'षड्भि'रित्यादौ सावकाशत्वात्, झल्युपोत्तम'मित्यस्यापि तिसृभिश्चतुर्भिरित्यादौ । समुदाये ह्यनुवर्त्तमाने केषु चिदवयवेषु कृतार्थं शास्त्रं तद्द्वारेण समुदाये प्रवृत्तमेव भवति । तथा च 'वान्यस्य संयोगादे'रित्यत्र ग्लादिनिवृत्त्यर्थमन्यग्रहणं कृतम् । अत एव वार्तिककारः परिहारान्तरमाह—स्वरेऽवधारणाच्चेति । स्वरे लोपस्याऽसिद्धत्वमुक्तमेवेति स्वरार्थायां षट्संज्ञायामसिद्धत्वं न वक्तव्यम् । केचित्तु 'पञ्च ब्राह्मण्य' इत्यादौ 'न षट्स्वस्रादिभ्य' इति टाप्प्रतिषेधाय षट्संज्ञायां नलोपस्यासिद्धत्वमुच्यते

उ०—र्थत्वमिति भावः । नास्तीति । तेनाऽन्तरङ्गत्वात्स्थानसंबन्ध एव षष्ठ्यर्थः स्यादिति न शङ्कनीयमिति भावः । ननु 'पञ्चे'त्यत्र संज्ञानिबन्धने जश्शसोर्लुकि ततो नलोप इति नलोपे षट्त्वस्य न फलमत आह—लौकिकादिति । 'नलोपे कृत' इति भाष्यस्य लोकतो नकारापगमे कृत इत्यर्थः । एवं नलोप इति । लौकिकोपगमस्याऽसिद्धत्वमपि दुर्वचनम्, शास्त्रीयत्वादिति भावः । ननु षड्विषयकं 'झल्युपोत्तम'मित्यचरितार्थमेवाऽत आह—समुदाये हीति । तथा चेति । अन्यथा ग्लाविषयस्य एर्लिङीत्यस्याऽचरितार्थत्वादेव तत्र नित्यसिद्धावन्यग्रहणवैयर्थ्यं स्पष्टमेव । ज्ञापिते तु दाविषये तस्य चारिताथ्यात्स्याधातौ परत्वाद्विकल्पः स्यादित्यन्यग्रहणम् । पञ्च ब्राह्मण्य इत्यादाविति । यद्यपीदं यथोद्देशपक्षे

* ८. २. ७

स्वरेऽवधारणाच्च सञ्ज्ञाग्रहणमनर्थकम् । स्वरेऽवधारणं क्रियते—'स्वरविधिं प्रती'ति । इदं तर्हि—दण्डिदत्तौ दत्तदण्डिनौ ।

तुग्विधौ किमुदाहरणम् ? वृत्रहभ्याम् वृत्रहभिः । नलोपे कृते 'ह्रस्वस्य पीति कृति तु'गिति तुक् प्राप्नोत्यसिद्धत्वान्न भवति ।

**तुग्विधौ चोक्तम् ॥ ३ ॥**

किमुक्तम् ? 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्ये'ति† । इदं तर्हि

प्र०-इत्याहुः । तत्र नान्तत्वात्पूर्वं ङीप्प्राप्तो निषिध्यते, ततो जसो लुकि नलोपे चाऽकारान्तत्वाट्टाप्प्राप्तः-सोऽपि निषिध्यते; 'स्त्रियां यदुक्तं तत्षट्स्वस्रादिभ्यो न भवती'ति सामान्येन निषेधविधानात् । अत्रान्ये आहुः—स्त्रीसमानाधिकरणपक्षः स्त्रीसूत्रे नाश्रित', अपि तु प्रकृत्यर्थविशेषणपक्षः प्रत्ययार्थविशेषणपक्षो वेति पञ्चादीनामलिङ्गत्वात्स्त्रीप्रत्ययस्य प्राप्तिर्नास्तीति नाऽर्थस्तन्निषेधेन । अथापि तत्प्राप्तिः स्यात्तथापि नलोपस्य बहिरङ्गत्वादन्तरङ्गे टाप्यसिद्धत्वान्नाऽस्ति टाप्प्राप्तिः । सत्यामपि टाप्प्राप्तावन्तरङ्गायां षट्संज्ञायां नलोपस्याऽसिद्धत्वात्सिद्ध एव तत्प्रतिषेधः । तुग्विधौ चोक्तमिति । द्वयमत्राऽस्ति—संनिपातलक्षणत्वं, बहिरङ्गलक्षणत्वं च । विभक्तिनिमित्तो हि नलोपः, किन्निमित्तस्तुक् । संनिपातपरिभाषायास्तु तुगभावः प्रयोजनत्वेनोक्त इति भाष्यकार-

उ०-प्रागेव कृतया संज्ञया सिध्यति । यथा द्वादशेऽह्नि कृतेन नाम्ना पश्चात्सर्वकार्याणि क्रियन्ते तद्वत्, 'पञ्चभिर्ब्राह्मणीभि'रित्यादावपि तद्वदेवाऽग्रे कार्यं भविष्यतीति बुद्ध्या प्रथमं संज्ञाकरणान्न दोषः, तथापि कार्यकालपक्षे विधिवाक्यैनैकवाक्यतापन्नसंज्ञाप्रवृत्तिरिति तत्पक्ष इदम् । अतएव स्वरविषये फलाशङ्का सङ्गच्छते । सूत्रविरोधादलिङ्गत्वमसङ्गतमित्याशयेनाह—अथापीति । बहिरङ्गत्वादिति । पदसंज्ञाद्वारा विभक्तिसापेक्षत्वेनेति भावः । सत्यामपीति । 'नाजानन्तर्यं' इति तत्प्राप्तिरित्यभिमानः । षट्संज्ञायामिति । 'बहिरङ्गत्वेने'ति शेषः । इदं चिन्त्यं, संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात् 'न ष'ड्इति निषेधस्तु भूतपूर्वषट्त्वमादाय सिद्ध इति न भाष्ये उक्तः । भाष्ये—दण्डिदत्ताविति । अत्र हि नलोपे दण्डिशब्दस्य घिसंज्ञायां तस्यैव पूर्वनिपातापत्तिः, दृश्यते त्वनियमः । असिद्धत्वे तु घित्वाऽभावात्सिध्यति । यद्यपि पूर्वनिपाते नलोपो, नलोपे च घित्वे पूर्वनिपात इत्यन्युक्तमिदं तथापि 'यस्य पूर्वपदत्वे घित्वं भवति तत्पूर्वमेव प्रयोक्तव्य'मिति सूत्रार्थ इति भावः । विभक्तिनिमित्त इति । स्वादिष्वीति पदसंज्ञाद्वारेति भावः । त्वेनोक्त इति । कृन्मेजन्त—सूत्रे । तथैवेति । बहिरङ्गपरिभाषानादरेण सन्निपातपरिभाषाश्रयेणेत्यर्थः । भाष्यकृता तु संज्ञानिमित्तस्य न बहिरङ्गत्वं, विभक्तिस्तु संज्ञानिमित्तं न । नलोपस्य परम्परया निमित्तत्वमादाय बहिरङ्गत्वाश्रयणे न मानमित्याशयेन सा नोक्तेत्यन्ये । न च 'वृत्रहणन'मित्यादावसन्निपात-

† १. १. ३९.

प्रयोजनं 'कृतीति वक्ष्यामि' । इह मा भूत्—अक्षद्यूच्छत्रम् । अ॒ग्रहच्छाया× । नैष संनिपातलक्षणः ।

न मु ने ॥ ८ । २ । ३ ॥

इह 'ने यत्कार्यं प्राप्नोति+ तत्प्रति मुभावो* नाऽसिद्ध' इत्युच्यते नाभावश्चैव‡ तावन्न प्राप्नोति । एवं तर्हि—

न मु टादेशे ॥ १ ॥

न मु टादेश इति वक्तव्यम् । किमिदं टादेश इति ? टाया आदेश ष्टादेश इति । यदि तर्हि टाया आदेश इत्युच्यते टायामादेशेऽप्रसिद्धिः । तत्र को दोषः ? 'अमुने'त्यत्र मुभावस्याऽसिद्धत्वादतो दीर्घो यञि सुपि च [ ७. ३. १०१; १०२ ] इति दीर्घत्वं प्रसज्येत । नैष दोषः । सर्वविभक्त्यन्तोऽयं समासः—टाया आदेशष्टादेशः, टायामादेशष्टादेश इति । सिध्यति । सूत्रं तर्हि भिद्यते । यथान्यासमेवाऽस्तु । ननु चोक्तं 'ने यत्कार्यं प्राप्नोति तस्मिन्मुभावो नासिद्ध इत्युच्यते नाभावश्चैव तावन्न प्राप्नोती'ति । नैष दोषः । इहेङ्गितेन चेष्टि-

प्र०—त्तथैव व्याचष्टे—सन्निपातेति । इदं तर्हीति । नियमार्थमिदं—'कृल्लक्षण एव तुग्माभूत्, छलक्षणस्तुग्यथा स्या'दित्यर्थः । इह मा भूदिति । तुगभावः । नैष इति । पदत्वमात्रनिबन्धनत्वान्नाऽत्र बहिरङ्गो नलोपः ।

न मु ने । ने यत्कार्यमिति । भूतस्य सप्तमीनिर्देशो युज्यते । परसप्तमी च शास्त्रे प्रसिद्धेति निष्पन्ने नाशब्दे परतो यत्कार्यं प्राप्नोति तत्र मुभावस्य सिद्धत्वं न्याय्यमिति भावः । नाभावश्चैवेति । नाभावे कर्तव्ये मुभावस्याऽसिद्धत्वाद्घिलक्षणो नाभावो न प्राप्नोति, ततश्च सूत्रमेवैतदसंबद्धं, नाभावस्यैवाऽभावात्, तत्कुतस्तस्मिन्परतः कार्यं प्राप्नोति यत्र मुभावस्य सिद्धत्वमुच्येत । इहेङ्गितेनेति । न निर्देशादेवाऽर्थप्रतिपत्तिः, किं तर्हि

उ०—लक्षणे नलोपे तुगभावार्थं कृति तुग्ग्रहणं, तेषामनभिधानमित्याशयात् । एकदेश्याह—इदं तर्हीति । इतरस्तत्खण्डयति—नैष इति । एवञ्च नियमानुपयोग इति भावः । सुबन्तमिति । पदसंज्ञामात्रनिमित्तकत्वादिति तात्पर्यम् । सदेवं प्रत्याख्यातं 'कृति तुग्ग्रहण'-मिति दिक् ।

न मुने । ननु ने कर्तव्य इत्यर्थेन नाभावः सिध्यतीत्यत आह—भूतस्येति । तस्यैवौपश्लेषिकाधारत्वौचित्यादिति भावः । 'ने कर्तव्य' इत्यर्थे दीर्घप्राप्तिरूपो दोषः, उक्तेऽर्थे तु नाभावाऽसिद्धिरिति तात्पर्यम् । 'नलोपः सुप्स्वरे'त्यत्राऽस्य व्यभिचारादाह—परसप्तमी चेति । तत्र स्वसंभवात्याग इति भावः । न निर्देशादेवेति । न उच्चारणादेवेत्यर्थः ।

× ६. १. ७३. + ७. ३. १०२. * ८. २. ८०. ‡ ७. ३. १२०.

तेन निमिषितेन महता वा सूत्रनिबन्धेनाचार्याणामभिप्रायो लक्ष्यते । एतदेव ज्ञापयत्याचार्यो 'भवत्यत्र नाभाव' इति यदयं ने परतोऽसिद्धत्वप्रतिषेधं शास्ति । अथ वा 'द्विगता अपि हेतवो' भवन्ति । तद्यथा—आम्राश्च सिक्ताः पितरश्च प्रीणिता भवन्ति । तथा वाक्यान्यपि द्विगतानि दृश्यन्ते—श्वेतो धावति, अलंबुसानां यातेति, अथ वा 'वृद्धकुमारीवाक्यव'दिदं द्रष्टव्यम् । तद्यथा—वृद्धकुमारीन्द्रेणोक्ता 'वरं वृणीष्वे'ति, सा वरमवृणीत—'पुत्रा मे बहुक्षीरघृतमोदनं कांस्यपात्र्यां भुञ्जीर'न्निति । न च तावदस्याः पतिर्भवति कुतः पुत्राः, कुतो वा गावः, कुतो धान्यम् ? तत्राऽनयैकेन वाक्येन पतिः पुत्रा गावो धान्यमिति सर्वं सङ्गृहीतं भवति । एवमिहापि नेऽसिद्धत्वप्रतिषेधं ब्रुवता नाभावोऽपि सङ्गृहीतो भवति ।

## उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ॥ ८ । २ । ४ ॥

### यणस्वरो यणादेशे स्वरितयणः स्वरितार्थम् ॥ १ ॥

यणस्वरो यणादेशे सिद्धो वक्तव्यः । किं प्रयोजनम् ? स्वरितयणः स्वरि-

---

प्र०-आचार्य एवं स्मरतीत्येतावत्-सूत्रनिर्देशादवसीयते । ततश्च यदाचार्यो ने यत्प्राप्नोति तत्र सुभावस्य सिद्धत्वं शास्ति तस्मान्नाभावेऽपि सुभावस्य सिद्धत्वं स्मरतीति प्रतीयते । अथ वेति । तन्त्रेण योगद्वयमुच्चारितम् । अथवैकस्याप्यनेकशक्तिसंभवादनेकार्थप्रत्यायनमविरुद्धमित्यर्थः । वाक्यान्यपीति । न केवलमर्थस्याऽनेकप्रयोजनत्वमपि तु शब्दस्याऽपीत्यर्थः । श्वेतो धावतीति । किंजातीयो धावति ? किंवर्णो धावतीत्येवमेकेनाऽनेकेन वा पृष्टः कौशलादेवं कश्चिदर्थद्वयं प्रतिपादयति । अथ वेति । अशब्दार्थस्याऽपि नान्तरीयकत्वादुपादानं दृश्यते । यथाऽग्निरानीयतामित्युक्ते अचोदितमपि पात्रानयनमग्न्यानयनेऽन्तर्भवति, एवमिहाऽपि ने परतः प्राप्तं कार्यं प्रति सुभावस्य सिद्धत्वं ब्रुवताऽर्थान्नेऽपि कर्तव्ये सिद्धत्वमाश्रितम् ।

उदात्त० । यणस्वर इति । यण्निमित्तत्वाद्यणः सम्बन्धी स्वरो यणस्वरः ।

---

उ०-किमस्त्वनुमानादपीत्यर्थः । सन्निपातपरिभाषामनाश्रित्येदम् । इदमपि सन्निपातपरिभाषाऽनित्यत्वे ज्ञापकमिति वा भावः । दीर्घेतद्प्रवृत्तिरिति वा । अर्थभेदेऽपि शब्दैक्यमिति पक्षे आह—अथवैकस्येति । न केवलमिति । दृष्टान्तार्थन्तु आद्ये अर्थोपादानम् । नान्तरीयकत्वादिति । पूर्वमनुमानादर्थान्तरसङ्ग्रहः, इदानीं तु नान्तरीयकत्वादिति भेदः ।

उदात्तस्वरितयोर्यणः० । ननु हलो स्वराभावाद्यणस्स्वर इत्यनुपपन्नमत आह—

तार्थम् । स्वरितयणः स्वरितत्वं यथा स्यात्—खलप्व्यटति खलप्व्यश्नाति+ । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । आहाऽयं—'स्वरितयण' इति, न चास्ति सिद्धः स्वरितः, तत्राश्रयात्सिद्धत्वं भविष्यति ।

## आश्रयात्सिद्धत्वमिति चेदुदात्तात्स्वरिते दोषः ॥ २ ॥

आश्रयात्सिद्धत्वमिति चेदुदात्तात्स्वरिते† दोषो भवति—दध्याशा मध्वाशा । एवं तर्हि योगविभागः करिष्यते । उदात्तयणः परस्याऽनुदात्तस्य स्वरितो भवति । ततः 'स्वरितयणः' । स्वरितयणश्च परस्यानुदात्तस्य स्वरितो भवति । 'उदात्तयण' इत्येव । अथ वा स्वरितग्रहणं न करिष्यते । केनेदानीं स्वरितयणः परस्याऽनुदात्तस्य स्वरितो भविष्यति ? 'उदात्तयण' इत्येव । ननु च स्वरितयणा व्यवहितत्वान्न प्राप्नोति । 'स्वरविधौ व्यञ्जनमविद्यमानव'दिति

---

प्र०-खलप्व्यटतीति । खलं पुनातीति क्विप् । उपपदसमासः । कृत्स्वरेणान्तोदात्तत्वम् । ङौ परत 'ओः सुपी'ति यणादेशः । तस्मात्परस्य ङेः सुप्त्वादनुदात्तस्योदात्तयणो हल्पूर्वादित्युदात्तत्वे प्राप्ते 'नोङ्धात्वो'रिति निषिद्धेऽनेन स्वरितत्वं, तस्य यणादेशे कर्त्तव्येऽसिद्धत्वात् स्वरितयणः परोऽटतिशब्दस्य 'तिङ्ङतिङ' इति निघातस्याऽकारो न भवतीति तस्य स्वरितत्वं न प्राप्नोतीति यण्स्वरस्य सिद्धत्वमुच्यते । केचिदाहुः—'एकपदाश्रयत्वादन्तरङ्गं स्वरितत्वं, पदद्वयाश्रितस्तु यणबहिरङ्गः, ततोऽसिद्धं बहिरङ्गमन्तरङ्ग इति यणोऽसिद्धत्वात् पूर्वत्रेति निर्दिष्टविषयाऽभावाद्यण्यसिद्धत्वप्रसङ्गः स्वरितस्य नास्ती'ति । तदयुक्तम् । 'नाजानन्तर्ये बहिष्ट्वप्रक्लृप्ति'रिति बहिरङ्गपरिभाषाया निषेधात्, इको यणचीति द्वयोरच्चोरानन्तर्याश्रयेण यण्विधानात् । दध्याशेति । दधिशब्दो 'नब्विषयस्याऽनिसन्तस्ये'त्याद्युदात्तः । 'उदात्तादनुदात्तस्य स्वरित' इति इकारः स्वरितः । आशाशब्दः 'आशाया अदिगाख्या चे'दित्यन्तोदात्तत्वादनुदात्तादिस्तत आकारस्य स्वरितत्वप्रसङ्गः । उदात्तयण इत्येवेति । तेनोदात्तयण इत्येवं यो

---

उ०-यणिनमित्तत्वादिति । 'तिङ्ङतिङ इति निहतस्ये'ति पाठः । 'निघातस्ये'ति पाठे अर्श आद्यचा निघातवत इत्यर्थः । नाजानन्तर्य इति । वस्तुतस्त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाऽभावस्य 'खरवसानयो'रिति सूत्रे भाष्ये वक्ष्यमाणतया शङ्कैवेयं निर्दला । असिद्धपरिभाषाया अनित्यत्वादत्राऽप्रवृत्तेश्च । भाष्ये—उदात्तात्स्वरित इति । 'उदात्तादनुदात्तस्ये'ति यः स्वरित-

---

+ ६. २. १३९; ३. ४. ८३; (१. १. १७४; १७५); ८. ३. ४; ६. १. ७७;
† ८. ४. ६६.

नास्ति व्यवधानम्। अथ वा नैवं विज्ञायते—स्वरितस्य यण्, स्वरितयण्, स्वरितयण इति। कथं तर्हि? स्वरिते यण् स्वरितयण् स्वरितयण इति।

## स्वरितो वाऽनुदात्ते पदादौ॥ ८। २। ६॥

स्वरितग्रहणं शक्यमकर्तुम्। कथम्? 'अनुदात्ते परतः पदादौ वोदात्त' इत्येव सिद्धम्। केनेदानीं स्वरितो भविष्यति—गाङ्गेऽनूप इति? आन्तर्यत उदात्तानुदात्तयोरेकादेशः स्वरितो भविष्यति। इदं तर्हि प्रयोजनं तेन वर्ज्यमानता† मा भूत्। अथ क्रियमाणेऽपि स्वरितग्रहणे यः सिद्धः स्वरितस्तेन

---

प्र०—निर्वृत्तः स्वरितस्तस्य यणः परस्याऽनुदात्तस्य स्वरितो भवतीत्यर्थः। ततश्चाऽस्यैव स्वरितस्याश्रयणात्सिद्धत्वं भवति। स्वरिते यणीति। 'उदात्तस्वरितयो'रिति सप्तमी, उदात्तस्य यो यण् स उदात्तेऽपि भवति, तद्विषयत्वात्। 'स्वरिते यणी'त्येषा तु परसप्तमी, तेन लौकिके प्रयोगे यः स्वरितस्तस्मिन् परतो यो यण् ततः परस्य लक्षणवशादनुदात्तस्य स्वरितः साधुर्भवतीत्ययमर्थः। न च दध्याशामित्याकारो लौकिके स्वरित इति न कश्चिद्दोषः। लौकिकस्य स्वरितस्याश्रयणे यणि कर्त्तव्ये तस्याऽसिद्धत्वाऽभावः।

स्वरितो वानु०। गाङ्गेऽनूप इति। गङ्गाया इदमिति तस्येदमित्यण्। प्रत्ययस्वरेणाऽन्वोदात्तः। ततो ङिः सुप्त्वादनुदात्तः। तयोरेकादेश उदात्तः। अपोऽनुगतमनूपमिति प्रादिसमासः। 'तत्पुरुषे तुल्यार्थे'ति पूर्वपदप्रकृतिस्वरे प्राप्ते'ऽनोरप्रधानकनीयसी' इत्युत्तरपदमन्वोदात्तं, शेषनिघातः। 'एङः पदान्तादती'त्युदात्तानुदात्तयोरेकादेशः पक्षे स्वरितः, पक्षे उदात्तः। तेन वर्ज्यमानतेति। आन्तरतम्याद्यस्स्वरितत्वं

---

उ०—तस्याऽपि सिद्धत्वात्तत्स्थानिकयणः परस्यापि स्वरितत्वप्रसङ्ग इत्यर्थस्तदाह—दधिशब्द इति। भाष्ये—स्वरविधाविति। स्वरोद्देश्यके विधावित्यर्थः।

ननु स्वरितस्याद्याप्यनिष्पत्तेः 'स्वरिते य'णित्यनुपपन्नमत आह—तेन लौकिके इति। ननु स्वरितस्याऽसिद्धत्वात्कथमयं स्वरिते यणत आह—लौकिकस्येति। शास्त्रीयस्यैवाऽसिद्धत्वमिति भावः। अत्र योगविभागपक्ष एवाचार्यस्य।

स्वरितो वा०। भाष्ये—उदात्त इत्येवेति। स च विकल्पेन। वाग्रहणस्य सत्त्वादिति भावः। तेन पक्षे स उदात्तः, पक्षे चान्तर्यतः स्वरित इति तत्फलाऽसिद्धिरिति तात्पर्यम्। पदाद्यनुदात्तयोरेकादेशं व्युत्पादयति—गङ्गाया इदमिति। स्वरितस्यासिद्धत्वादिति।

---

† ६. १. १५८.

वर्ज्यमानता कस्मान्न भवति—कन्याऽनूप इति ? बहिरङ्गलक्षणत्वात् । असिद्धं बहिरङ्गमन्तरङ्ग इत्येवं न भविष्यति । यथैव तर्हि क्रियमाणे स्वरितग्रहणे यः सिद्धः स्वरितस्तेन वर्ज्यमानता न भवत्येवमक्रियमाणेऽपि न भविष्यति । तस्मान्नार्थः स्वरितग्रहणेन । 'असिद्धं बहिरङ्गलक्षणमन्तरलक्षण' इत्येव सिद्धम् ।

### एकादेशस्वरोऽन्तरङ्गः ॥ १ ॥

एकादेशस्वरोऽन्तरङ्गः सिद्धो वक्तव्यः । किं प्रयोजनम् ?

### अयवायावेकादेशशतृस्वरैकाननुदात्तसर्वानुदात्तार्थम् ॥ २ ॥

अय्—वृक्ष इदम् प्लक्ष इदम् । उदात्तानुदात्तयोरेकादेशस्तस्यैकादेश उदात्तेनोदात्त [ ८. २. ५ ] इत्येतद्भवति । तस्य सिद्धत्वं वक्तव्यम्, आन्तर्यत उदात्तस्य उदात्तोऽयादेशो[1] यथा स्यात् । अवादेशो नास्ति ।

---

प्र०-सिद्ध्यति तत्सिद्धमिति शेषनिघातेन'पे'शब्दोऽनुदात्तः प्राप्नोत्युदात्तश्चेष्यते । अस्य तु स्वरितस्याऽसिद्धत्वाद्यथोक्तदोषाऽभावः ।

कन्यानूप इति । कन्याशब्दः 'कन्याराजन्यमनुष्याणामन्त' इत्यन्तस्वरितः । ततः स्वरितानुदात्तयोरेकादेश आन्तर्यतः स्वरितः । तस्य सिद्धत्वाद्वर्ज्यमानस्वरे सत्युदात्तस्वरितयोर्यौगपद्यं न प्राप्नोति । ततश्चाऽत्र यः परिहारः स एव 'गाङ्गेऽनूप' इत्यत्र भविष्यतीति भावः । असिद्धमिति । पदद्वयाश्रयत्वादेकादेशस्य बहिरङ्गत्वात्स्वरोऽपि तदीयो बहिरङ्गः । एकादेशस्वर इति । एकादेशस्वरे चत्वारि दर्शनानि—'उदात्तानुदात्तयोरेकादेश आन्तर्यात्स्वरितोऽभिनिर्वृत्तः । तस्य च स्थान एकादेश उदात्तेनोदात्त इत्युदात्तगुण आदेशः क्रियत' इत्येकं दर्शनम् । 'स्वरितगुणस्योदात्तगुणमात्रं क्रियत' इति द्वितीयम् । एकादेश उदात्तेनोदात्त इति परिभाषा यत्रैकादेशो विधीयते तत्रोपतिष्ठते । तत्रायमर्थो भवति—'आद्गुणो भवत्युदात्तानुदात्तयोस्त्वाद्गुण उदात्त इत्येकादेशो विधीयमान एवोदात्तो भवती'ति तृतीयम् । चतुर्थदर्शनं तूदात्तानुदात्तयोरेकादेश उदात्तो भवति, स्वरितगुणः प्राप्तस्तत्र येन नाप्राप्त इति स्वरितत्वापवाद उदात्त-

---

उ०-'अनुदात्त'मित्यस्याः कार्यकालत्वेऽपि स्वरितत्वप्रतिज्ञानादधिककार्यार्थादसिद्धेऽप्रवृत्तेरिति भावः । अत्र चेदमेव भाष्यं मानम् । षाष्ठभाष्येऽपि स्फुटमेतत् । आन्तर्यतः स्वरित इति । 'स्वरितो वानुदात्ते'इत्यस्य तु न प्रवृत्तिः, उदात्तेन सहैकादेशाऽभावादिति भावः । स्वरोऽपीति । आन्तर्यत आगत इत्यर्थः । एकादेशस्याऽसिद्धत्वात्तदाश्रितस्वरस्य ज्ञानाऽभावात्तदेकवाक्यताऽस्य नेति भावः । 'अनुदात्तं पद'मिति त्वेकपदविषये स्वरे चरितार्थमिति तात्पर्यम् । गुणमात्रं क्रियते इति । प्राप्ताऽप्राप्तविवेकन्यायेनेति भावः । तत्राद्यौ सम-

आय्—कुमार्या इदम्* । उदात्तानुदात्तयोरेकादेशस्तस्यैकादेश उदात्तेनोदात्त इत्येतद्भवति, तस्य सिद्धत्वं वक्तव्यम्, आन्तर्यत उदात्तस्य उदात्त आयादेशो यथा स्यात् । नैतदस्ति प्रयोजनं, एकादेशे+ कृते उदात्तयणो हल्पूर्वात् [ ६. १. १४७ ] इत्युदात्तत्वं भविष्यति । इदमिह संप्रधार्यम्—उदात्तत्वं क्रियतामेकादेश इति, किमत्र कर्त्तव्यम् ? परत्वादुदात्तत्वम् । नित्य एकादेशः । कृतेऽप्युदात्तत्वे प्राप्नोत्यकृतेऽपि प्राप्नोति । एकादेशोऽप्यनित्यः । अन्यथा—स्वरस्य कृत उदात्तत्वे प्राप्नोत्यन्यथास्वरस्याऽकृते, 'स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति' । अन्तरङ्गस्तर्ह्येकादेशः । काऽन्तरङ्गता ? वर्णाश्रित्यैकादेशः पदस्योदात्तत्वम् । एवं तर्हीदमिह संप्रधार्यम्—आट् क्रियतामुदात्तत्वमिति× किमत्र कर्त्तव्यम् ? परत्वादाडागमः । नित्यमुदात्तत्वम्, कृतेऽप्याटि प्राप्नोत्यकृतेऽपि प्राप्नोति । आडपि नित्यः, कृतेप्युदात्तत्वे प्राप्नोत्यकृतेऽपि प्राप्नोति । अनित्य आट् । अन्यथास्वरस्य कृत उदात्तत्वे प्राप्नोत्यन्यथास्वरस्याऽकृते, 'स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति' । उदात्तत्वमप्यनित्यम्—अन्यस्य कृते आटि प्राप्नोत्यन्यस्याऽकृते प्राप्नोति,

---

प्र०–विधिः सम्पद्यते । तत्र परिभाषापक्षे सिद्धमुदात्तत्वमयादिषु । इतरेषु पक्षेष्वसिद्धत्वे प्राप्ते सिद्धत्वमुच्यते । उदात्तोऽयादेश इति । अन्यथा स्वरितः स्यात् । कुमार्या इदमिति । कुमारीशब्द उदात्तनिवृत्तिस्वरेणाऽन्तोदात्तः । 'कुमारी ए' इति स्थिते आडागमे कृते यणादेशे चोदात्तयणो हल्पूर्वादित्याट उदात्तत्वे आडेकारयोरुदात्तानुदात्तयोर्वृद्धिरेकादेश उदात्तस्तस्याऽयादेशः । एकादेश इति । आडेकारयोरनुदात्तयोः प्रागेकादेशः पश्चाद्विभक्त्युदात्तत्वमित्यर्थः । पदस्योदात्तत्वमिति । विभक्तेरुदात्तत्वविधानात् । आट् क्रियतामिति । एकादेशस्थानिना सह विभ-

---

उ०–फलाभेव । तत्र परिभाषेति । वस्तुतोऽस्मिन्नपि पक्षेऽसिद्धत्वं भवत्येव, पाठकृतपरत्वाऽनपलापात् । किं च परिभाषा वक्तुमप्यशक्या, अनियमप्रसक्त्यभावात्, नियमेन स्वरितस्यैव प्राप्तेः । भाष्यस्वरसोऽप्येवमेवेति चिन्त्यमेतत् । अन्यथा स्वरित इति । आद्ययोः स्वरितप्राप्तिः स्पष्टैव । चतुर्थेऽपि उदात्ताऽसिद्धत्वे स्थानिस्वरेण स्वरितयुद्धान्तरतम्यात् स्वरितः स्यादिति भावः । भाष्ये—अयादेशो नास्तीति । 'स्तवे' इत्यादीनां तु नाऽभिधानमिति भावः । प्रागेकादेश इति । अन्तरङ्गत्वादिति भावः । ननु 'उदात्तयण' इत्यनेन

---

* ७. ३. ११२; ६. १. १०४; ८८; ८. २. ५. † ६. १. ७८; + ७. ३. ११२; ६. १. ८८.
× ७. ३. ११२; ६. १. १०४.

'शब्दान्तरस्य च प्राप्नुवन् विधिरनित्यो भवति'। उभयोरनित्ययोः परत्वादाडागमः, आटि कृतेऽन्तरङ्ग एकादेशः।

आव्—वृक्षाविदम्। उदात्तानुदात्तयोरेकादेशः, तस्यैकादेश उदात्तेनोदात्त इत्येतद्भवति, तस्य सिद्धत्वं वक्तव्यमान्तर्यत उदात्तस्योदात्त आवादेशो† यथा स्यात्।

एकादेशस्वरः—गाङ्गेऽनूप इति। उदात्तानुदात्तयोरेकादेशः‡। तस्यैकादेश उदात्तेनोदात्त इत्येतद्भवति, तस्य सिद्धत्वं वक्तव्यं, 'स्वरितो वानुदात्ते पदादौ' [ ८. २. ६ ] इत्येष स्वरो यथा स्यात्।

शतृस्वरः—तुदती नुदती। उदात्तानुदात्तयोरेकादेशः*, तस्यैकादेश उदात्तेनोदात्त इत्येतद्भवति, तस्य सिद्धत्वं वक्तव्यम्, 'शतुरनुमोऽनद्यजादिरन्तोदात्ता'दित्येष+ स्वरो यथा स्यात्। नैतदस्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति 'सिद्ध एकादेशस्वरः शतृस्वरे' इति, यदयमनुम इति प्रतिषेधं शास्ति। कथं कृत्वा ज्ञापकम्? न ह्यन्तरेणोदात्तानुदात्तयोरेकादेशं शन्नन्तं सनुम्कमन्तोदात्तमस्ति।

---

प्र०—क्त्युदात्तत्वं विचार्यते। ननु च यणादेशे कृते विभक्तिस्वरेण भाव्यं, ततश्च नदीसंज्ञाया अभावादाण्न प्राप्नोति। विहितविशेषणं नदीग्रहणं, तथा यो विहितो ङित्तस्याडित्यदोषः। अन्तरङ्ग एकादेश इति। वर्णावाश्रित्यैकादेशः, पदस्योदात्तत्वमिति प्रतिपादनेन। तस्मान्नाऽर्थः सिद्धत्ववचनेन।

गाङ्गेऽनूप इति। एकारोदात्तत्वस्याऽसिद्धत्वात्स्वरितानुदात्तयोरेकादेश आन्तर्यात्स्वरित एव स्यान्न तु कदा चिदुदात्तः। तुदतीति। 'तास्यनुदात्ते'दिति शताऽनुदात्तः। शप्रत्यय उदात्तः। 'शतुरनुम' इत्यत्रान्तोदात्तादिति वर्त्तते। न ह्यन्तरेणेति। असिद्धत्वे चाऽन्तोदात्तत्वाऽभावादेव तुदन्तीत्यादावुदात्तत्वं न भविष्यतीति किमनुम इति प्रतिषेधेन? प्रतिषेधात्तु नुमि सिद्धत्वमनुमीयते। ननु चेति। अत्र लसार्वधातु-

---

उ०—विभक्तेरुदात्तत्वं क्रियते तत्किमुच्यते 'पदस्ये'ति? अत आह—विभक्तेरिति। एवञ्च पदस्वसंपादकबहिर्भूतविभक्तिसंबन्धित्वेन बहिरङ्गत्वमिति भावः। आण्न प्राप्नोतीति। वर्णसंज्ञापक्षे इदं, ततश्चाडपि नित्य इति भाष्यमसङ्गतमिति भावः। केचित्तु यणः पूर्वं वार्णादाङ्गमिति न्यायेनाऽऽडिति चिन्त्यमेतदित्याहुः। अङ्गसंबन्धिन्याङ्ग एव तत्प्रवृत्तिरिति भाष्याशय इत्यन्ये। स्वरितानुदात्तयोरिति। एकादेशं प्रति उदात्तत्वाऽसिद्धत्वे आन्तर्यकृतस्वरितबुद्धिसत्त्वादिति भावः। ननु कदाचिदुदात्त इति। उदात्तेन सहैकादेशस्यैव विकल्पेन स्वरितविधानादिति भावः। प्रतिषेधात्तु नुमि सिद्धत्वमनुमीयते इति। 'एकादेशोदात्तत्व-

---

† ६. १. ७८. ‡ ६. १. ८७. * ६. १. ७७; ३; ६. १. १८६; ३. १. ६७.
+ ६. १. १७३.

ननु चेदमस्ति यान्ती वान्तीति । एतदपि निघाते+ कृते नाऽन्तरेणोदात्ता-नुत्तदायोरेकादेशं शत्रन्तं सनुम्कमन्तोदात्तं भवति । इदमिह संप्रधार्य-निघातः क्रियतामेकादेश इति× किमत्र कर्तव्यम् ? परत्वान्निघातः । नित्य एकादेशः—कृतेऽपि निघाते प्राप्नोत्यकृतेऽपि प्राप्नोति । एकादेशोऽप्यनित्यः । अन्यथा-स्वरस्य कृते निघाते प्राप्नोत्यन्यथास्वरस्याऽकृते निघाते, 'स्वरभिन्नस्य च प्राप्नुवन्विधिरनित्यो भवति' । अन्तरङ्गस्तर्ह्येकादेशः । काऽन्तरङ्गता ? वर्णा-वाश्रित्यैकादेशः, पदस्य निघातः । निघातोऽप्यन्तरङ्गः । कथम् ? उक्तमेतत्—'पदग्रहणं परिमाणार्थ'मिति । उभयोरन्तरङ्गयोः परत्वान्निघातो, निघाते कृत एतदपि नाऽन्तरेणोदात्तानुदात्तयोरेकादेशमन्तोदात्तं भवति । शतृस्वर ।

एकानुदात्त—तुदन्ति लिखन्ति । उदात्तानुदात्तयोरेकादेशः* । तस्य 'एकादेश उदात्तेनोदात्त' इत्येतद्भवति, तस्य सिद्धत्वं वक्तव्यं, तेन‡ वर्ज्यमानता यथा स्यात् । [ एकानुदात्त ] ।

सर्वानुदात्त—ब्राह्मणास्तुदन्ति, ब्राह्मणा लिखन्ति । उदात्तानुदात्तयोरेका-

प्र०–कानुदात्तत्वस्य निमित्ताऽभावाद्द्वयोरुदात्तयोरेकादेश उदात्त इति भावः । शेष-निघातः पदस्येति मन्यते । एतदपीति । प्रत्ययस्वरे सति निघाते धातोरनुदात्तत्वात् । एवमनुम इति ज्ञापकं स्थितमेव । एकाननुदात्तेति । एकाननुदात्तग्रहणेन 'ऽनुदात्तं पदमेकवर्ज'मित्येव स्वरोऽभिधीयते । तत्र ह्युक्तं—'सिद्धं त्वेकाननुदात्तत्वा'दिति । तुदन्तीति । विकरण उदात्तो लसार्वधातुकमनुदात्तं, तत्रोदात्तानुदात्तयोरेकादेशस्वरस्य धातुस्वरेऽसिद्धत्वाच्छेपनिघाताऽप्रसङ्गाद्धातोरप्यन्तोदात्तत्वं स्यात् । ननु चोदात्तत्वाऽ-सिद्धत्वेऽपि स्वरितेन वर्ज्यमानस्वरो भविष्यति ? सत्यं सिध्यति—यदा स्वरितस्यो-दात्तता भवतीति पक्षः । यदा तु 'स्वरितापवाद उदात्त' इति पक्षस्तदैकादेशस्योदात्तत्वं विधीयते, तस्य चाऽसिद्धत्वे स्वरान्तराऽभावाद्वर्ज्यमानस्वरो न स्यादिति सिद्धत्वमुच्यते । ब्राह्मणास्तुदन्तीति । अत्रापि 'स्वरितस्य स्थाने उदात्तः क्रियत' इति दर्शने उदात्त-

उ०–स्ये'ति पाठः । 'नुमी'त्यस्य नुम्पदघटितसूत्रविहिते स्वर इत्यर्थः । 'निमित्ताऽभावा'दिति पाठः । निघाते इति । पदग्रहणं परिमाणार्थमिति भावः । भाष्ये—निघातोऽप्यन्तरङ्ग इति । परिभाषात्वेनोदात्तादिविधिभिरेकवाक्यतयैवाऽस्य विधानादिति भावः । धातुस्वरे इति । धातोस्तन्मूलके निघाते कर्तव्ये इत्यर्थः । सिद्धत्वमुच्यत इति । विकरणोदात्तत्वप्रवृत्तिकाले

+ ८. १. १; ६. १. १५८. × ६. १. १५८; १०१. † ४. १. १४०. * ६. १. ७७; ६; ६. १. १८६; १७. ‡ ६. १. १५८.

देशः । तस्य 'एकादेश उदात्तेनोदात्त'इत्येतद्भवति, तस्य सिद्धत्वं वक्तव्यम् । किं प्रयोजनम् ? 'तिङ्ङतिङः' [ ८. १. २८ ] इति निघातो यथा स्यात् ।

किमुच्यतेऽन्तरङ्ग इति ? यो हि वहिरङ्गोऽसिद्ध एवासौ भवति—प्रपचतीति+, सोमसुत्पचतीति× । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । सर्वत्रैव नुम्प्रतिषेधो* ज्ञापकः—'सिद्ध एकादेशस्वरोऽन्तरङ्ग' इति ।

## संयोगान्तलोपो रोरुत्वे हरिवो मेदिनं त्वा ॥ ३ ॥

संयोगान्तलोपो रोरुत्वे सिद्धो वक्तव्यः । किं प्रयोजनम् ? 'हरिवो† मेदिनं त्वा' । संयोगान्तलोपस्याऽसिद्धत्वाद्धशीत्युत्वं न प्राप्नोति ।

## प्लुतिश्च ॥ ४ ॥

प्लुतिश्चोत्त्वे सिद्धा वक्तव्या । 'सुस्रोता३ अत्र न्वसी'त्यत्र प्लुतेरसिद्धत्वादतोऽतीत्युत्वं प्राप्नोति‡ । अप्लुतादप्लुते†† इत्येतन्न वक्तव्यं भवति । नैतदस्ति प्रयोजनं क्रियते न्यास एव ।

---

प्र०–स्याऽसिद्धत्वेऽपि स्वरितस्य निघातविधानादुदात्तस्याऽप्रयोगः सिद्ध एवेति स्वरिताऽपवाद उदात्तत्वमिति दर्शनाश्रयेण सिद्धत्वमुच्यते । अन्यथोदात्तस्यानुदात्ताऽभावादुदात्तः प्रयोगे श्रूयेत । प्रपचतीति । वाह्यपदापेक्षत्वादेकादेशस्य बहिरङ्गत्वात्तत्स्वरो बहिरङ्गः । तस्याऽसिद्धत्वात्तिङि चोदात्तवतीति गतेर्निघातो न भवति । सोमसुत्पचतीति । 'तिङ्ङतिङ' इति निघात ईकारस्य न भवति । सर्वत्रैवेति । लक्ष्यापेक्षया सामान्यविषयमनुमानमाश्रीयते । अनुमानत्वाज्ज्ञापकस्य तत्रैकपदाश्रयैकादेशस्वरः सिद्ध इत्यनुम इति प्रतिषेधेन ज्ञाप्यते । अथ वा 'एकादेश उदात्तेनोदात्त' इति परिभाषाश्रयितव्येति ज्ञाप्यते । यस्तु बहिरङ्ग एकादेशस्वरस्तस्याऽसिद्धं बहिरङ्गमन्तरङ्गे इत्यसिद्धत्वं भवत्येव । हरिव इति । हरयोऽस्य सन्तीति मतुप् । 'छन्दसीर' इति वत्वं सुलुम्संयोगान्तलोप-

---

उ०–तदेकवाक्यतापन्ननिघातस्याऽन्तरङ्गत्वात्पूर्वं प्रवृत्त्या सिद्धेरिदं प्रयोजनं चिन्त्यमिति कश्चित्तन्न, पदस्य विभज्यान्वाख्याने एकादेशेन विकरणस्य विनश्यदवस्थत्वात्तन्निमित्तनिघाताऽप्रवृत्तिरिति भाष्याशयात् । अन्यथेति । उदात्तस्याऽसिद्धत्वात्पूर्वं निघाते पश्चादेकादेशस्योदात्तत्वं स्यादिति भावः । सिद्धत्वे तु परत्वादेकादेशोदात्तत्वे कृते तिङन्तनिघातप्रवृत्तिरितीष्टसिद्धिः । बाह्यपदापेक्षत्वादिति । 'तिङि चे'ति सूत्रं तु 'यत्प्रपचती'त्यादौ तिङन्तनिघाताऽविषये चरितार्थम् । ईकारस्य नेति । स्वार्थाऽसंबद्धबहिर्भूतेतिशब्दनिमित्तकतया बहिरङ्गत्वेनैकादेशस्वरस्याऽसिद्धत्वेनाऽन्तरङ्गत्वात्पूर्वं निघाते पश्चादेकादेशस्वरेणोदात्तत्वादिति भावः । 'परिभाषाश्रयितव्या इति । चिन्त्यमेतत्, उक्तयुक्तेः । रुत्वानीति । 'मतुवसो'रिति रुत्वम् । अत्र

---

+ ८. १. ७१. × ८. १. २८. * ६. १. १७३. † ८. २. २५; २३; ८. ३. १; ६. १. ११४. ‡ ६. १. ८४; ६. १. ११३. †† ६. १. ११३.

## सिज्लोप एकादेशे ॥ ५ ॥

सिज्लोप एकादेशे सिद्धो वक्तव्यः । अलावीत्, अपावीत् । सिज्लोपस्याऽसिद्धत्वात्सवर्णदीर्घत्वं न प्राप्नोति* । यदि पुनरिडादेः सिचो लोप उच्येत ? नैवं शक्यमिह हि मा हि लावीत्, मा हि पावीत्, यद्यत्र इएन स्यादनुदात्तस्य ईटः श्रवणं प्रसज्येत । ईटि पुनः सत्युक्तमेतत् 'अर्थवत्तु चित्करणसामर्थ्याद्घीट उदात्तत्व'मिति+ । तत्रैकादेश उदात्तेनोदात्तः [ ८. २. ५ ] इत्युदात्तत्वं सिद्धं भवति ।

## संयोगादिलोपः संयोगान्तलोपे ॥ ६ ॥

संयोगादिलोपः संयोगान्तस्य लोपे सिद्धो वक्तव्यः । काष्ठतट्, कूटतट् । संयोगादिलोपस्याऽसिद्धत्वात्संयोगान्तलोपः प्राप्नोति× । नैष दोषः । उक्तमेतत्—'अपवादो वचनप्रामाण्या'दिति† ।

## निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु ॥ ७ ॥

प्र०—रुत्वानि । यदा तु च्छन्दसीवनिपाविति वनिप्प्रत्ययः क्रियते 'वन उपसङ्ख्यान'मिति तस्य च रुत्वं तदा नाऽर्थः सिद्धत्ववचनेन । यदि पुनरिति । 'इट ईटी'त्यत्र 'रात्सस्ये'त्यतः सस्येति वर्तते । 'इट' इति षष्ठी न तु पञ्चमी । तेनेडादेः सस्य लोपो विधीयमान इटो भवति । यद्यत्रेति । यदि लोपेन निवर्त्ततेत्यर्थः । ननु च उदात्तनिवृत्तिस्वरेणोदात्तत्वमीटो भविष्यति । नैतदस्ति । उदात्तनिवृत्तिस्वरे कर्त्तव्ये लोपस्याऽसिद्धत्वात् । संयोगादिलोप इति । ननु चोक्त'मपवादो वचनप्रामाण्या'दिति । एवं मन्यते—प्रवर्ततां संयोगादिलोपस्तस्मिंस्तु कृते तस्याऽसिद्धत्वात् संयोगान्तलोपः प्राप्नोति । उक्तमेतदिति । असिद्धश्चैवाऽपवादः संयोगादिलोपः । इट्प्राप्नोतीति । यदा 'तकार-

उ०—'रोरुत्वे'इत्यस्य कर्तव्ये कृते चेत्यर्थः । तेन 'हरिवोऽत्रे'त्यत्रेटः पदान्तादिति पूर्वरूपेऽपि नासिद्धत्वं, तत्प्रयोगसत्त्वे इति केचित् । तदा नार्थ इति । 'ह्रस्वनुड्भ्यां मतु'बित्यस्य सत्त्वेऽप्येतदुदाहरणे मतुवन्योः स्वरभेदादिदं चिन्त्यम् । भाष्ये—प्लुतिश्चेति । अन्यथा तस्याऽसिद्धत्वाद्गुरुविधायकेऽप्लुताद्प्लुते इत्यस्याऽसक्त्या तद्वाच्यं स्यादिति भावः । क्रियते न्यास एवेति । तत्सामर्थ्यादेव तत्र सिद्धत्वं सिद्धमिति भावः । नन्विट इति पञ्चमीनिर्देशात्कथमिडादेर्लोपोऽत आह—इट ईटीति । रात्सस्येति । 'इटः सस्ये'ति यथाश्रुते सामानाधिकरण्यासंभवात्तेनेडादिर्लक्ष्यते इति भावः । इटो भवतीति । इटोऽपि भवतीत्यर्थः । तदाश्रयणसामर्थ्यादिति भावः । असिद्धश्चैवेति । असिद्ध एव च संयोगादिलोपोऽपवाद इत्यन्वयः । पृथक् प्रवृत्तिविषये नोत्सर्गप्रवृत्तिरिति भावः ।

* ८. २. २८; ६. १. १०१. + ६. १. ४४. × ८. २. २९; २३. † ८. २. १.

निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वक्तव्यः । वृक्णः, वृक्णवान् । निष्ठादेशस्याऽसिद्धत्वाज्झलीति षत्वं प्राप्नोति* । स्वरः—क्षीबः+ । निष्ठादेशस्यासिद्धत्वा [ दिट्स ]हितस्य निष्ठातस्य निपातनलोपरूपत्वा ]त् 'निष्ठा च द्व्यजनात् [ ६. १. २०५ ] इत्येष स्वरो न प्राप्नोति । प्रत्ययः—क्षीबेण तरति क्षीबिकः । निष्ठादेशस्याऽसिद्धत्वाद् द्व्यचष्ठन्निति ठन्न प्राप्नोति× । इड्विधिः—क्षीबः । निष्ठादेशस्याऽसिद्धत्वाद्वलादिलक्षण इट् प्राप्नोति† । ननु च यः प्रत्ययविधौ सिद्धः सिद्धोऽसाविड्विधौ । इदं तर्हि प्रयोजनम्—ओलस्जी—लग्नः†† । निष्ठादेशः सिद्धो वक्तव्यो 'नेड्वशि कृति [ ७. २. ८. ] इतीट्प्रतिषेधो यथा स्यात् । ईदित्करणं न कर्त्तव्यं भवति‡ । एतदपि नास्ति प्रयोजनम् । क्रियत एतन्न्यास एव ।

## वस्वादिषु दत्वं सौ दीर्घत्वे ॥ ८ ॥

वस्वादिषु दत्वं सौ दीर्घत्वे सिद्धं वक्तव्यम् । उखास्रत्, पर्णध्वत् ।

प्र०—मात्रस्य लोपो निपात्यत' इति पक्षस्तदेट् प्राप्नोति । ननु चेति । इडभावाश्रयत्वात्प्रत्ययविधेः प्रत्ययविधौ सिद्धत्वेनेडभाव आश्रित एवेति पृथगिड्ग्रहणं न कर्त्तव्यम् । सिद्ध इति । सुतरां सिद्ध इत्यर्थः । अथवा नाऽसिद्धो वचनेन सिद्धः, किन्तर्हि अन्तरेण वचनं सिद्ध इत्यर्थः । क्रियते न्यास एवेति । येषां दत्वं नास्ति तदर्थं, चर्म वस्ते 'चर्मवः', पिण्डं ग्रसते 'पिण्डग्र' इति । अद्स इति । स्वरोऽच्, तद्विशेषणं 'बहिष्पदलक्षण' इति । बाह्यपदावयव इत्यर्थः । अथ वा बहिष्पदलक्षणे कार्ये कर्त्तव्ये स्वरे परत इत्यर्थः । यो ह्यन्य इति । बाह्यपदावयवो न भवतीत्यर्थः । असिद्ध एवासौ भवतीति ।

उ०— क्षीबो निष्ठादेशस्येति । भाष्ये इट्सहितस्य निष्ठातस्य लोपरूप आदेशो निपात्यत इति पक्षे इदम् । नन्विट्सहितनिष्ठातलोपो निपात्यत इति पक्षस्य स्वरप्रत्ययरूपसिद्धत्वप्रयोजनाभ्यां लाभेन कथमिडापादानमत आह—यदेति । उक्तदोषवारणार्थमिति भावः । आश्रित एवेति । विशिष्टलोपनिपातनपक्ष एवाश्रयितव्य इत्यर्थः । भाष्ये—सिद्धसिद्धोऽसाविति—द्वयोः सिद्धशब्दयोः पाठो व्यर्थ इत्यत आह—सुतरामिति । एकं सिद्धपदमतिशयलक्षकमिति भावः । अथ वेति । सिद्ध एव सिद्धः, नासिद्धः सन् सिद्ध इति भाष्ये योजना । भाष्ये—ईदित्करणं न वक्तव्यमिति । 'श्वीदितो निष्ठाया'मिति सूत्रे इत्यर्थः । क्रियते न्यास एवेति । 'वृत्त'मित्यादिसिद्धये ईदिद्ग्रहणमावश्यकमिति भावः । 'बहिष्पदलक्षणे स्वरे कर्त्तव्य' इत्यर्थभ्रमो न कार्य इत्याह—स्वरोऽपीति । लक्षणशब्दो न निमित्तपरः, किन्त्ववयववचन इति भावः । अथवेति । स्वरपरत्वनिमित्तके बहिष्पदलक्षणे कार्ये कर्तव्ये इत्यन्वयः । अत्र लक्षणशब्दो निमित्तार्थक एव । नन्वचो नासिद्धत्वमुच्यते, किं तर्हि, अचि परतो यत्कार्यं तत्प्रतीत्वोत्वयोरित्यसिद्ध एवासावित्ययुक्तमत आह—असौ स्वर

* ८. २. ४५; ३६. + ८. २. ५५. १ अयं पाठो न सार्वत्रिकः । × ४. ४. ७. † ७. २. ३५. †† ८. २. ४५. ‡ ७. २. १४.

दत्वस्याऽसिद्धत्वाददसन्तस्येति दीर्घत्वं प्राप्नोति+ । अधातोरिति* न वक्तव्यं भवति । नैतदस्ति प्रयोजनं क्रियते न्यास एव ।

**अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे ॥ ९ ॥**

अदस ईत्वोत्वे स्वरे बहिष्पदलक्षणे सिद्धे वक्तव्ये । अमी अत्र । अमी आसते । अमू अत्र । अमू आसाते । ईत्वोत्वयोरसिद्धत्वादेच इत्ययावेकादेशाः प्राप्नुवन्ति× । किमुच्यते 'बहिष्पदलक्षण' इति ? यो ह्यन्योऽसिद्ध एवाऽसौ भवति । अमुया अमुयोरिति† ।

**प्रगृह्यसंज्ञायां च ॥ १० ॥**

प्रगृह्यसंज्ञायां च सिद्धे वक्तव्ये । अमी अत्र । अमी आसते । अमू अत्र । अमू आसाते । ईत्वोत्वयोरसिद्धत्वाददसो मात् [ १. १. १२ ] इति प्रगृह्यसंज्ञा न प्राप्नोति । किमर्थमिदमुभयमुच्यते न 'प्रगृह्यसंज्ञाया'मित्येव स्वरेऽपि बहिष्पदलक्षणे चोदितं स्यात् । पुरस्तादिदमाचार्येण दृष्टं 'स्वरे बहिष्पदलक्षणे' इति तत्पठितम् । तत उत्तरकालमिदं दृष्टं 'प्रगृह्यसंज्ञायां चे'ति तदपि पठितम् । न चेदानीमाचार्याः सूत्राणि कृत्वा निवर्तयन्ति ।

**प्लुतिस्तुग्विधौ छे ॥ ११ ॥**

प्लुतिस्तुग्विधौ छे सिद्धा वक्तव्या । अग्ना३ इच्छत्रम् । पटा३ उच्छत्रम्‡ । प्लुतेरसिद्धत्वाच्छे च [ ६. १. ७३ ] इति तुग् प्राप्नोति । किमुच्यते छ इति ? यो ह्यन्योऽसिद्ध एवाऽसौ भवति—अग्निचीऽ३त् । सोमसू३त्†† ।

प्र०—असौ स्वरोऽसिद्धत्वे विषये भवति, तत्राऽसिद्धत्वं भवतीत्यर्थः । अमुयेति । 'अदस् आ' इति स्थिते त्यदाद्यत्वं टाप्, एकादेशः, उत्वस्याऽसिद्धत्वादाङि चाप इत्येवमयादेशस्तवो मुत्वम् । न चेति । व्याख्यानसूत्रेषु लाघवाऽनादरात् । अग्ना ३ इ च्छत्रमिति । 'एचोऽप्रगृह्यस्ये'त्याकारः प्लुतः । इदुतौ तु मात्रिकौ । तत्र इदुतोरसिद्धत्वादेकाराश्रयो विकल्पेन तुक् प्राप्नोति । ह्रस्वाश्रयस्तु नित्य इष्यते । प्लुतिशब्देन तत्सहचरिताविदुतौ लक्ष्येते । अग्निचीऽ३दिति । प्लुतस्याऽसिद्धत्वाद् ह्रस्वस्येति तुग्भवति । द्विविधं चाऽत्राऽसिद्धत्वं बहिरङ्गत्वात्, पूर्वत्रासिद्धमिति च ।

उ०—इति । असिद्ध इति भावप्रधानं सप्तम्यन्तं विषयत्वार्थकमिति भावः । तत्राऽसिद्धत्वमिति । यो ह्यन्यः स्वरस्तस्मिन् स्वरे परतः कार्ये ईत्वादीनामसिद्धत्वमित्यर्थः । नन्वानर्थक्ये त्याग एव युक्तोऽत आह—व्याख्यानसूत्रेष्विति । वार्तिकेष्वित्यर्थः । नन्विदुतोः सिद्धत्वे साध्ये प्लुतेऽसिद्धवचनमसङ्गतमत आह—प्लुतिशब्देनेति । इदुताविति । तात्पर्येत्यर्थः ।

+ ८. २. ७२; १. ४. १४. * १. ४. १४. × ८. २. ८०; ८१; ६. १. ७८; १०९;
† ७. २. १०२; ४. १. ४; ६. १. १०१; ७. ३. १०५; १०४; ६. १. ७८; ८. २. ८०.
‡ ८. २. ८६; १०७. †† ६. १. ७१.

## श्चुत्वं धुट्त्वे ॥ १२ ॥

श्चुत्वं धुट्त्वे सिद्धं वक्तव्यम् । अट् श्च्योतति, पट् श्च्योतति* । श्चुत्वस्याऽसिद्धत्वाड्ङः-सि धुट् [ ८. ३. २९ ] इति धुट् प्रसज्येत ।

## अभ्यासजश्त्वचर्त्वमेत्त्वतुकोः ॥ १३ ॥

अभ्यासजश्त्वचर्त्वमेत्त्वतुकोः सिद्धं वक्तव्यम् । बभणतुः, बभणुः । अभ्यासादेशस्याऽसिद्धत्वादेत्त्वं प्राप्नोति+ । उचिच्छिषति । अभ्यासादेशस्याऽसिद्धत्वाच्छे च [ ६. १. ७३ ] इति तुक् प्राप्नोति ।

## द्विर्वचने परसवर्णत्वम् ॥ १४ ॥

द्विर्वचने परसवर्णत्वं सिद्धं वक्तव्यम् । सय्ँय्न्ता, सव्ँव्त्सरः, तल्ँलोकं यल्ँलोकमिति परसवर्णस्याऽसिद्धत्वाद्यर इति द्विर्वचनं न× प्राप्नोति ।

प्र०- अट्श्च्योततीति । 'श्च्युतिर् क्षरणे' इति धातुः सकारादिः प्रतिज्ञायते, मधुश्च्युतमाचष्टे इति णिचि, टिलोपे, क्विपि, 'मधु'गिति रूपं यथा स्यात् । शकारादौ मधुडिति स्यात् । उचिच्छिषतीति । 'उच्छी विवासे' तुक्, सन्, इट्, 'अजादेर्द्वितीयस्ये'ति 'च्छि'शब्दस्य द्विर्वचनं, 'शर्पूर्वाः खय' इति शेषः, छस्य 'अभ्यासे चर्चे'ति चकारस्तस्याऽसिद्धत्वाच्छेचेति पूर्वस्य तुक् प्राप्नोति । सय्ँय्न्तेति । अनुस्वारस्याऽयोगवाहानामविशेषेण प्रत्याहार उपदेशकरणचोदनाद्यत्वाद्द्विर्वचने च सिध्यति

उ०-अत एवाग्रे प्रत्युदाहरणपरं भाष्यं सङ्गच्छते । बहिरङ्गत्वादिति । दूराद्धूतादित्वापेक्षत्वात् प्लुतो बहिरङ्गः । एवञ्च छेचेति विपर्यनिर्देशश्चिन्त्यफलः । आनन्तर्यात्पूर्वत्रासिद्धत्वस्यैवाऽनेन निषेधादिति भावः । अर्थकृतबहिरङ्गत्वानाश्रयणेन चिन्त्यमिदम् । अत्र चेदं भाष्यवार्तिकमपि मानम् । नन्वयं शकारादिरेव धातुरत आह—सकारादिरिति । तदुक्तं वृद्धैः—

'नकारजावनुस्वारपञ्चमौ झलि धातुषु ।
सकारजः शकारश्चेष्टाद्टवर्गस्तवगजः ॥'

इति । सकारादिप्रतिज्ञायाः फलं दर्शयति—मध्विति । यस्य 'लोपो व्यो'रिति लोपः । यत्तु वृत्तौ 'यस्य संयोगान्तलोप'इत्युक्तं, तन्न, यणः प्रतिषेधात् । नच णिलोपस्य स्थानिवत्त्वात्कथं संयोगादिलोपः, 'पूर्वत्रासिद्धीय' इति तु 'तस्य दोष' इत्यादिना निषिद्धमितिवाच्यं, 'क्वौ लुप्त'मिति निषेधात् । तस्यात्राश्रयणे मानं च सकारप्रतिज्ञैव । केचित्तु सकारप्रतिज्ञाफलं 'सन्श्च्योतती'त्यत्र शितुक्व्यावृत्तिः, किंच संयोगान्तलोपे सस्य रुत्वे 'र्वो'रिति दीर्घे 'मधू'रिति रूपमिति तदाश्रयणे मानाऽभावात 'मधु'गितीति कैयटश्चिन्त्य इत्याहुः । तुक्सन्नीति । एवं 'लक्ष्ये लक्षणस्ये'ति न्यायेन पुनस्तुगप्रवृत्तेश्चिन्त्यमिदं वचनमिति भावः । पदविषयत्वात्संहितायास्तत्कार्यं तुक् पश्चादेवेत्यन्ये भाष्याशयं वर्णयन्ति । शर्पूर्वा इति । तत्रत्येन 'खर्पूर्वा' इति वार्तिकेनेति बोध्यम् । क्वचित्तु 'खर्पूर्वाः खयः'इत्येव पाठः ।—द्विर्वचने चेति । अनुस्वारस्यैव द्वित्वे द्वयोरनुस्वारयोः क्रमेण परसवर्णाविति भावः । अनुस्वारस्य शर्षु पाठेन यरत्वेऽपि

* ८. ४. ४०. + ८. ४. ५४; ६. ४. १२०. × ८. ४. ५९; ४७.

**पदाधिकारश्चेल्लत्वघत्वनत्वरुत्वषत्वणत्वानुनासिकछत्वानि ॥१५॥**

पदाधिकारश्चेल्लत्वघत्वनत्वरुत्वषत्वणत्वानुनासिकछत्वानि सिद्धानि वक्तव्यानि*। लत्व—गरो गरः। गलो गलः। लत्व। घत्व—द्रोग्धा-द्रोग्धा। द्रोढा-द्रोढा। घत्व। नत्व—नुन्नो नुन्नः। नुत्तो नुत्तः। नत्व। रुत्व—अभिनोऽभिनः अभिनदभिनत्। रुत्व। षत्व—मातुःष्वसा मातुःष्वसा। मातुःस्वसा मातुःस्वसा। पितुःष्वसा पितुःष्वसा। पितुःस्वसा पितुःस्वसा। षत्व। णत्व—माषवापाणि-माषवापाणि। माषवापानि-माषवापानि। णत्व। अनुनासिक—वाङ्नयनं वाङ्नयनम्। वाग्नयनं वाग्नयनम्। अनुनासिक। छत्व—वाक्छयनं वाक्छयनम्। वाक्शयनं वाक्शयनम्।

उभयथा चाऽयं दोषो यद्यपि स्थाने द्विर्वचनमथापि द्विःप्रयोगः। कथम्?

---

प्र०—रूपम्। एतच्चाऽनपेक्ष्य सिद्धत्ववचनम्। पदाधिकारश्चेदिति। यदि लत्वादिषु 'पदस्ये'त्यपेक्ष्यते तदा लत्वादीनां द्विर्वचनस्य च समकक्षत्वाद्द्विर्वचने कर्त्तव्ये तेषामसिद्धत्वात्पूर्वं द्विर्वचने सत्यनिष्टोऽपि प्रयोगः स्यात्। यदा तु लत्वादिषु 'पदस्ये'ति नाऽपेक्ष्यते तदा द्विर्वचनस्य बहिरङ्गत्वादन्तरङ्गेषु लत्वादिषु कृतेषु द्विर्वचने सतीष्टं सिध्यतीति नाऽर्थः सिद्धवचनेन।

गल इति। 'अचि विभाषे'ति लत्वम्। द्रोग्धेति। 'वा द्रुहमुहे'ति वा घत्वं, पक्षे 'हो ढ' इति ढत्वम्। नुन्न इति। 'नुदविदे'ति वा निष्ठानत्वम्। अभिन इति। भिदेर्लङि, सिपि, श्नमि, अटि, हल्ङ्यादिलोपे 'सिपि धातोरुर्वा' 'दश्चे'ति वा रुत्वम्। मातुःष्वसेति। 'मातुःपितृभ्यामन्यतरस्या'मिति वा षत्वम्। माषवापाणीति। 'प्रातिपदिकान्ते'ति वा णत्वम्। वाङ्नयनमिति। 'यरोऽनुनासिक' इति वा गकारस्य ङकारः। वाक्छयनमिति। 'शश्छोटी'ति शकारस्य वा छत्वम्।

---

उ०—यण्त्वाऽभावाद्यकारादेरनुस्वारसवर्णत्वाऽभावाच्च वा पदान्तस्येत्यस्यानुस्वारस्य ययीत्येतद्दृष्ट्याऽसिद्धत्वाच्च चिन्त्यमिदम्। एतच्चेति। 'अनुस्वारस्ये'त्यादि मदुक्तमनपेक्ष्य 'द्विर्वचन' इति सिद्धवचनमित्यर्थः। पूर्वत्रासिद्धीयमद्विर्वचन इत्येतदनपेक्ष्येदं सर्वम्। वस्तुतस्त्वाऽनित्यबोधकानीमानि, 'उभौ' ग्रहणवदिति बोध्यम्। यदीति। द्वित्वं [illegible] यथा पदाधिकाराभावेऽपि पदस्यैव भवति तथोक्तम्। अनिष्टोऽपीति। गरो गलः गलो गर इत्यथार्थोऽ इत्यर्थः। बहिरङ्गत्वादिति। 'बहिरङ्गलक्षणत्वाद्'इति तत्र तत्र वार्तिककारोक्त्या तेन त्रैपादिकेऽन्तरङ्गे

---

* ८. १. १६; ८. २. २१; ३१; ५६; ७४; ७५; ८. ३. ८५; ८. ४. ११; ४५; ६३; ८. १. ४.

यदि तावत्स्थाने द्विर्वचनं संप्रमुग्धत्वात्प्रकृतिप्रत्ययस्य लत्वाद्यभावः । अथ द्विःप्रयोगोऽसिद्धत्वाल्लत्वादीनि निवर्त्तेरन् ।

## नलोपः प्रातिपदिकान्तस्य ॥ ८ । २ । ७ ॥

नलोपेऽन्तग्रहणं किमर्थम् ?

**नलोपेऽन्तग्रहणं पदाधिकारस्य विशेषणत्वात् ॥ १ ॥**

नलोपेऽन्तग्रहणं क्रियते । किं कारणम् ? 'पदाधिकारस्य विशेषणत्वात्' । पदाधिकारो विशेषणम् । कथम् ? पदस्येति नैषा स्थानषष्ठी* । का तर्हि ? विशेषणषष्ठी ।

**अह्नो नलोपप्रतिषेधः ॥ २ ॥**

अह्नो नलोपप्रतिषेधो वक्तव्यः । अहोभ्याम् अहोभिरिति । स तर्हि प्रतिषेधो वक्तव्यः ? न वक्तव्यः । रुरत्र बाधको भविष्यति+ । असिद्धो रुस्तस्याऽसिद्धत्वान्नलोपः प्राप्नोति । अनवकाशो रुर्नलोपं बाधिष्यते । साऽवकाशो

प्र०—लत्वादीनि निवर्त्तेरन्निति । द्विर्वचनात्प्राङ्न प्रवर्तेरन् । कृते तु द्विर्वचनेऽनिष्टोऽपि तद्विकल्पः स्यात् । ततश्च गलो गरो, गरो गल इत्याद्यपि प्रसज्येत ।

नलोपः प्राति० । अन्तग्रहणमिति । 'न लोपः प्रातिपदिकस्ये'त्येवाऽस्तु, पदस्येति वर्तते, तत्र नकारेण पदे विशेष्यमाणे तदन्तविधिना नकारान्तस्य पदस्य प्रातिपदिकस्य लोपो विधीयमानोऽलोऽन्त्यस्येत्यन्त्यस्य भविष्यतीति प्रश्नः ।

नलोप इति । असत्यन्तग्रहणे प्रातिपदिकस्य पदस्य योऽवयवो नकारस्तस्य यत्र तत्र स्थितस्य लोपः स्यात् । ततश्च नराभ्यामित्यत्र स्यात् । अह्न इति । 'अहन्' 'रोऽसुपी'ति रुत्वरत्वयोः संबुद्धौ सावकाशत्वात् 'पूर्वत्रासिद्ध'मित्यसिद्धत्वान्नलोपः प्राप्तो निषिध्यते । अनन्त्य इति । अकृतनलोपाऽपेक्षयाऽनन्त्यः । कृते तु नलोपे एकदेशविकृतस्याऽनन्यत्वात्स एव अहःशब्द इति प्रत्यभिज्ञानादलोऽन्त्यस्येति वचनादकारस्य

उ०—तत्प्रवृत्तिस्वीकारादिति भावः । भाष्यकृत्तु 'खरवसानयो'रिति सूत्रे त्रैपादिकेऽन्तरङ्गे तदप्रवृत्तिमेव वक्ष्यति कार्यकालेऽपि । ननु जातस्य निवृत्त्ययोगान्निवर्त्तेरन्नित्यसङ्गतमत आह—न प्रवर्तेरन्निति । शास्त्राणामसिद्धत्वादिति भावः ।

नलोपः० । 'ने'त्यविभक्तिकं पृथक्पदं, 'प्रातिपदिके'त्यपि तथा । भाष्ये—नैषा स्थानषष्ठीति । स्थानषष्ठ्येवेत्यर्थः । ननु रुत्वरत्वाभ्यां बाधात्कथं नलोपप्राप्तिरत आह—अहन्निति । नन्वलोऽन्त्यस्य विधीयमानं रुत्वं कथमनन्त्ये सावकाशं स्यादत आह—अकृतेति । न चाऽकारस्य रौ रे वाविशेषाऽभावेनोभयविधानं व्यर्थं, संबुद्धिविषये लोपाऽभावेन तयोश्चारितार्थ्यमिति भावः । ननु नलोपे कृतेऽचारितार्थ्यात् कथं ज्ञापकत्वमत आह—

* ८. १. १६; १. १. ४९; ५२. + ८. २. ६८.

रुः । कोऽवकाशः ? अनन्त्योऽकारः । आचार्यप्रवृत्तिर्ज्ञापयति 'नानन्त्यस्य रुर्भवती'ति यदयमहन्ग्रहणं करोति† ।

**अहन्ग्रहणादिति चेत्संबुद्ध्यर्थं वचनम् ॥ ३ ॥**

अहन्ग्रहणादिति चेत्संबुद्ध्यर्थमेतत्स्यात्‡ । हेऽहरिति* । यत्तर्हि रुत्वं शास्ति† । एतदपि संबुद्ध्यर्थमेव स्यात् । हे दीर्घाहोऽत्र+ । यत्तर्हि रूपरात्रि-रथन्तरेषूपसङ्ख्यानं करोति× तज्ज्ञापयत्याचार्यो 'नानन्त्यस्य रुर्भवती'ति । कथं कृत्वा ज्ञापकम् ? न ह्यस्ति विशेषो रूपरात्रिरथन्तरेष्वनन्त्यस्य रौ वा रे वा ।

---

प्र०—रुत्वप्रसङ्गः । यदयमहन्ग्रहणमिति । नकाराऽपरित्यागेन निर्देशस्यैतत्प्रयोजनं—नकारान्तस्य स्थानित्वं यथा स्यात् । अन्यथा'ऽह' इति ब्रूयात् । सम्बुद्ध्यर्थमिति । संबुद्धौ नलोपस्य प्रतिषेधात्तदन्तानुकरणनिर्देशः स्यादिति नलोपाऽभावो न ज्ञाप्येत । यत्तर्हि रुत्वमिति । हेऽहरित्यत्र 'रोऽसुपी'ति रादेशः क्रियते । 'अह'न्नित्यनेन तु रुत्वं विधीयते । तत्राऽकृतनलोपनिर्देशो नलोपाऽभावस्य ज्ञापक एवेति भावः । हे दीर्घाहोऽत्रेति । दीर्घाण्यहानि यस्मिन्निति बहुव्रीहिः । हल्ङ्यादिलोपः प्रत्ययलक्षणेन सुप्परत्वादुत्वम् । यत्तर्हीति—वार्तिककारवचनं ज्ञापकत्वेनोपन्यस्यति । नह्यस्तीति । अतः परस्य रोरुत्वमुच्यते, अकारस्य तु रौ रेफे वा विशेषाभावाद्रादेशमेव विदध्यादिति रुत्वविधानान्नलोपाऽभावोऽनुमीयत इति नकारस्यैव रुत्वरत्वाभ्यां तत्र भाव्यमिति । सिद्धमिष्टम् ।

---

उ०—नकारेति । लुप्तविभक्तिकस्यापूर्वं नकारापरित्यागेन निर्देशादित्यर्थः । संबुद्धौ नलोपस्येति । एवञ्च नकारसहितनिर्देशस्याऽलुप्तनकारसम्बुद्ध्यर्थत्वादहोभ्यामित्यादौ नलोपः स्यादेव, रुत्वं च न स्यादेवेत्यर्थः । हल्ङ्यादिलोप इति । निदाघरूपस्य पुँल्लिङ्गस्याऽन्यपदार्थत्वान्न लुक् । रादेशमेवेति । 'रोऽसुपी'ति सूत्रेणेत्यर्थः । एतद्भाष्यप्रामाण्यादस्याऽसंबुद्धावेव प्रवृत्तिरिति 'भोऽह्नोऽरूपमस्ती'त्यादौ चारितार्थ्यमिति न शङ्क्यं, तदनभिधानात् । वस्तुतस्त्वनवकाशो रुर्नलोपं बाधिष्यते इत्येव सिद्धान्तयुक्तिः । न च संबुद्धाववकाशः, तत्रापि नलोपप्राप्तेः । निषेधेनापि बाधित इत्यन्यत् । अत एव ब्राह्मणेभ्यो दधि दीयतां न रात्रौ तद्दीयतां, कौण्डिन्याय तु तक्रमित्यादावपि सर्वदा कौण्डिन्याय तक्रदानमेव भवति । अतएव पूर्वपक्षिणाऽत्रैव स्थाने संबुद्धौ चारितार्थ्यं नाशङ्कितम् । असंभवे एव बाध्यबाधकभाव इति वार्तिकमतानुसारी शङ्कते—अनन्त्योऽवकाश इति । तदनुसार्येकदेशी समाधत्ते—आचार्येत्यादीत्यपरम् ।

---

† ८. २. ६८. ‡ ८. २. ८. * ८. २. ६९. + ६. १. ६८; १. १. ६२; ८. २. ६८.
× ८. २. ६८. *

## न ङिसंबुद्ध्योः ॥ ८ । २ । ८ ॥

### न ङिसंबुद्ध्योरनुत्तरपदे ॥ १ ॥

न ङिसंबुद्ध्योरनुत्तरपद इति वक्तव्यम् । इह मा भूत्—चर्मणि तिला अस्य चर्मतिल इति । राजन् वृन्दारक राजवृन्दारकेति ।

### वा नपुंसकानाम् ॥ २ ॥

वा नपुंसकानामिति वक्तव्यम् । हे चर्म, हे चर्मन् । हे वर्म, हे वर्मन् । तत्तर्ह्यनुत्तरपद इति वक्तव्यम् ? न वक्तव्यम् । 'नङिसंबुद्ध्यो'रित्युच्यते न चाऽत्र ङिसंबुद्धी पश्यामः । *प्रत्ययलक्षणेन** । '*न लुमता तस्मि*'*न्निति*† *प्रत्ययलक्षण*स्यप्रतिषेधः । न क्वचिन्ङिर्लोपेन लुप्यते, सर्वत्र लुमतैव‡ । स यथैवेह भवति—आर्द्रे चर्मन्, लोहिते चर्मन्नित्येवमिहापि स्यात्—चर्मणि तिला अस्य चर्मतिल इति । तस्मादुपसङ्ख्यानं कर्त्तव्यम् । एवं तर्हि ङ्यर्थेन तावन्नाऽर्थः ।

### भत्वात्तु ङौ प्रतिषेधानर्थक्यम् ॥ ३ ॥

ङौ प्रतिषेधोऽनर्थकः । किं कारणम् ? 'भत्वात्' । भसंज्ञाऽत्र भविष्यति+ । यदि तर्हि भसंज्ञाऽत्र भवति रथन्तरे सामन्नित्यत्र अल्लोपोऽनः [ ६. ४. १३४ ] इत्यल्लोपः प्राप्नोति । नैष दोषः । उक्त'मुभयसंज्ञा-

प्र०— न. ङि० । चर्मतिल इति । 'न लुमता तस्मि'न्निति प्रत्ययलक्षणनिषेधाद्भसंज्ञाया अभावात्सुबन्तत्वात्पदत्वान्नलोपः । राजन्वृन्दारकेति । अवयवाऽर्थसंबोधनेन समुदायार्थसम्बोधनं प्रतीयत इति सम्बुद्ध्यन्तयोरेव समासः । यथैवेहेति । वचनसामर्थ्यात् प्रत्ययलक्षणाश्रयत्वात् । भत्वादिति । अयस्मयादित्वात् । सम्बुद्ध्यन्तानामिति । पृथगन्वयवार्थयोरभिमुखीकरणे परस्परस्यैकार्थीभावलक्षणसामर्थ्याऽयोगात् । यद्यपि

उ०— न ङिसं० । ननु ङिनिमित्तकभत्वात्पदत्वाऽभावेन कथं नलोपोऽत आह—न लुमतेति । ननु राजन् वृन्दारकेति समुदायरूपार्थस्य संबोधनेनाऽयोगात् प्रत्येकसंबोधने उभयोरपि विधेयान्वयेन परस्परमेकार्थीभावाऽभावात्कथं समासोऽत आह—अवयवार्थेति । अवयवानां समुदायनान्तरीयकत्वादिति भावः । भाष्ये—न क्वचिन्ङिर्लोपेनेति । नच परमे व्योमन्नित्यादौ घोषाल्पप्राणनिरनुनासिकत्वान्तर्येण पूर्वसवर्णे दकारे तस्य संयोगान्तलोपोऽस्त्येवेति वाच्यं, प्रक्रियालाघवाय तत्रापि लुक एव प्रवृत्तिरित्याशयात् । ननु 'आर्द्रे चर्म'न्नित्यत्रापि लुक एव सत्त्वाद्दृष्टान्तानुपपत्तिरत आह—वचनसामर्थ्यादिति । केचित्तु सामर्थ्यादेव षष्ठ्यन्तं व्याचक्षते । अयस्मयादित्वादिति । नच राजनीवाचरति राजन्यति भिक्षुके इत्यत्राधिकरणाच्चेति क्यचि लोके उदाहरणसंभवः । एतद्भाष्यप्रामाण्यादनभिधानेन तत्र क्यजनुत्पत्तेः । एवञ्च सूत्रस्थं वार्तिकस्थं च ङिग्रहणं प्रत्याख्यातम् । न्यायेति । षष्ठ्यन्ततया व्याख्याने भाष्योक्त एव परिहारः । एवं वार्तिकस्थं संबुद्धिग्रहणं प्रत्याख्यातम् ।

* १. १. ६२. † १. १. ६३. ‡ ७. १. ३९; २. ४. ७१. + १. ४. १८; १०.

न्यपि च्छन्दांसि दृश्यन्ते' तद्यथा—स सुष्टुभा स ऋक्वता गणेन [ ऋ० ४ । ५० । ५ ] पदत्वात्कुत्वं भत्वाज्जश्त्वं न भवति* । एवमिहापि पदत्वादल्लोपो न, भत्वान्नलोपो न भविष्यति । तस्मान्नाऽर्थो ङिग्रहणेन ।

संबुद्ध्यर्थेन चाऽपि नार्थः । कथम् ? संबुद्ध्यन्तानामसमासो राजन्-वृन्दारकेति । किं वक्तव्यमेतत् ? न हि कथमनुच्यमानं गंस्यते ? इह समानार्थेन वाक्येन भवितव्यं समासेन च । यश्चेहाऽर्थो वाक्येन गम्यते नाऽसौ जातुचित्समासेन गम्यते । अवयवसम्बोधनं वाक्येन गम्यते, समुदायसम्बोधनं समासेन । 'वा नपुंसकाना'मित्येतद्वक्तव्यमेव ।

**मादुपधायाश्च मतोर्वोऽयवादिभ्यः ॥ ८ । २ । ९ ॥**

**† ( रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥ ८ । २ । ४२ )**

**अनन्त्ययोरपि निष्ठामतुपोरादेशः ॥ १ ॥**

निष्ठामतुपोरादेशोऽनन्त्ययोरपीति वक्तव्यम् । भिन्नवन्तौ भिन्नवन्तः । वृक्षवन्तौ वृक्षवन्तः । न वक्तव्यम् । वचनाद्भविष्यति । अस्ति वचने प्रयोजनम् । किम् ? भिन्नवान्, छिन्नवान् । वृक्षवान्, प्लक्षवान् ।

**नार्मते प्रतिषेधः ॥ २ ॥**

नार्मते प्रतिषेधो वक्तव्यः । नृमतोऽपत्यं‡ नार्मत इति ।

**उक्तं वा ॥ ३ ॥**

---

प्र०–हे राजन्नित्यादौ लोपशब्देन सम्बुद्धेर्लोपात् प्रत्ययलक्षणेन संबुद्धिपरत्वान्नलोपनिषेधः प्रवर्त्तते, समासे तु लुमता लोपान्न लुमता तस्मिन्निति संबुद्धिपरत्वं नास्तीति परिहारोऽस्ति, तथापि न्यायव्युत्पादनाय परिहारान्तरं भाष्यकारेणाभिहितम् । वा नपुंसकानामिति । प्रत्ययलक्षणे सति नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं, प्रत्ययलक्षणप्रतिषेधे त्वप्राप्ते प्रतिषेधे वचनम् ।

मादुप० । अनन्त्ययोरपीति । मतुन्निष्ठाभ्यां पदस्य विशेषणात्तदन्तस्यैव पदस्य संप्रत्ययः स्यादिति वचनम् । नवेति । पदेन मतुन्निष्ठे विशेष्येते, नतु ताभ्यां पदमिति तदन्तविध्यभावः ।

---

उ०–प्रत्ययलक्षणे सतीति । 'न लुमते'त्यस्याऽनित्यत्वादनाश्रयणे, षष्ठ्यन्ततया व्याख्याने चेति भावः । प्रतिषेधे त्विति । सप्तम्यन्ततया व्याख्याने, 'न लुमते'त्यस्याश्रयणे चेति भावः ।

---

* १. १. १.* † इदं सूत्रमत्र सर्वपुस्तकेषु दृश्यते । वस्तुतस्तदग्रे ( ८. २. ४२ ) व्याख्यातम् । परं वार्त्तिकेऽमतुप । इह निष्ठाग्रहणादिहापि छिन्नितमिति प्रतीयते । ‡ अपत्यमिति क्वचिन्न दृश्यते ।

किमुक्तम् ? निष्ठामतुपोस्तावदुक्तं—'न वा पदाधिकारस्य विशेषणत्वा'-दिति+ । नामंतेऽप्युक्तम्—'न वा बहिरङ्गलक्षणत्वा'दिति× ।

संज्ञायाम् ॥ ८ । २ । ११ ॥

आसन्दीवदष्ठीवच्चक्रीवत्कक्षीवद्रुमण्वच्चर्मण्वती ॥८।२।१२॥

किमयमेक योग आहो स्विन्नानायोगौ ? किं चातः ? यद्येकयोगः, अहीवती कपीवती—अत्र न प्राप्नोति । अथ नानायोगौ, इक्षुमती द्रुमती—अत्रापि प्राप्नोति । यथेच्छसि तथास्तु । अस्तु तावदेकयोगः । कथमहीवती कपीवती ? आचार्यप्रवृत्तिर्ज्ञापयति—'भवत्येवंजातीयकानां वत्व'मिति 'यदयमन्तोऽवत्या' 'ईवत्याः' [ ६. १. २२०; २२१ ] इत्याह । अथवा पुनरस्तु नानायोगौ । ननु चोक्त'मिक्षुमती द्रुमती अत्रापि प्राप्नोतीति' । यवादिषु† पाठः करिष्यते ।

छन्दसीरः ॥ ८ । २ । १५ ॥

'छन्दसीर' इत्युच्यते तत्र 'ते विश्वकर्माणन्ते सप्तर्षिमन्त'मित्यत्रापि प्राप्नोति । नैष दोषः । नैवं विज्ञायते—'छन्दसि इर'इति । कथं तर्हि ? छन्दसि—ईर इति । एवमपि—त्विषीमान् पतीमानित्यत्रापि प्राप्नोति । नैष दोषः । विहितविशेषणमीकारग्रहणम्—'ईकारान्ताद्यो विहित'इति । एवमपि—'सूर्यं ते देवा पृथिवीमन्त'मित्यत्राऽपि प्राप्नोति । इह च न प्राप्नोति—'त्रिवतीर्याज्यानुवाक्या भवन्ती'ति । एवं तर्हि परिगणनं कर्त्तव्यम् । त्रिहर्यश्विपत्य-

प्र०— संज्ञायाम् । आसन्दी० । किमयमिति । तत्रैकयोगे निपातनादेव संज्ञालाभात् संज्ञाग्रहणं विस्पष्टार्थम् । नानायोगत्वे 'संज्ञाया'मिति वत्वे सिद्धे कार्यान्तरविधानार्थमासन्दीवदादीनां निपातनम् । यदयमिति । ननु चासन्दीवदाद्यर्थमीवत्या इति स्यादिति कथं ज्ञापकम् ? नैतदस्ति । स्त्रियामेषां प्रयोगाऽभावादीवतीशब्दान्तत्वाऽभावात् । यवादिष्विति । आदिशब्दः प्रकारार्थस्तत्राश्रीयत इत्यर्थः ।

छन्दसीरः । त्विषीमानिति । 'अन्येषामपि दृश्यते' इति दीर्घः । विहित०

उ०— संज्ञायामासन्दीव० । निपातनादेवेति । 'रूढ्यर्थं निपातन'मित्युक्तेः । कार्यान्तरेति । आसनशब्दस्यासन्दीभावः, अस्थ्नोऽष्ठीभावः, चक्रस्य चक्रीभावः, लवणशब्दस्य रुमण्भावः, चर्मणो नलोपाऽभाव इत्यर्थः । भाष्ये—अत्र प्राप्नोतीति । 'वत्व'मिति शेषः । ननु यवादिषु पाठाऽभावात्कथं निषेधोऽत आह—आदिशब्द इति । यवादिराकृतिगण इति भावः ।

छन्दसीरः । विजन्तादिति । रि पि गतावित्यस्माद्विपि गुणः । अत्रेरन्तत्वाभावेऽपि

+ ८. १ १६. × ८. ३. १५.* † ८. २. ९.*

ग्मिरे'। त्रि—त्रिवतीर्याज्यानुवाक्या भवन्ति । त्रि । हरि—हरिवो मेदिनं त्वा । हरि । अधिपति—अधिपतिवतीर्जुहोति । अधिपति । अग्नि—चरुरग्निवानिव । अग्नि । रे—आरेवानेतु नो विश इति । यदि तर्हि परिगणनं क्रियते सरस्वतीवान् भारतीवान् अपूपवान् दधिवांश्चरुरित्यत्र न प्राप्नोति । एवं तर्हि च्छन्दसीरो बहुलमिति वक्तव्यम् ।

## अनो नुट् ॥ ८ । २ । १६ ॥

यदि पुनरयं नुट् पूर्वान्तः क्रियेत—'अ'नो नु'गिति ।

### अनो नुकि विनामरुविधिप्रतिषेधः ॥ १ ॥

अनो नुकि सति विनामो विधेयः । अक्षण्वान्* 'पदान्तस्य ने'ति निषेधः प्राप्नोति+ । रुश्च प्रतिषेध्यः—सुपथिन्तरः× । 'नश्छव्यप्रशान्' [ ८. ३. ७ ] इति रुः प्राप्नोति । अस्तु तर्हि परादिः ।

### परादौ वत्वप्रतिषेधोऽवग्रहश्च ॥ २ ॥

यदि परादिर्वत्वस्य प्रतिषेधो वक्तव्यः । अक्षण्वान् । 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः [ ८. २. ९ ] इति वत्वं प्राप्नोति । अवग्रहश्चाऽनिष्टे देशे प्राप्नोति—अक्षण्वानिति । अस्तु तर्हि पूर्वान्तः । ननु चोक्तम्—'अनो नुकि विनामरुविधिप्रतिषेध' इति ।

### भत्वात्सिद्धम् ॥ ३ ॥

भसंज्ञा वक्तव्या । यदि तर्हि भसंज्ञा 'अल्लोपोऽनः' [ ६. ४. १३४ ] इत्यल्लोपः प्राप्नोति ।

---

प्र०–विशेषणमिति । लक्ष्यदर्शनवशेन वाक्यशेषकल्पनात् । एवं तर्हीति । बहुलग्रहणाद्रेशब्दादपि विजन्वाद्वत्वं भवति । अथवा रयिशब्दस्य 'रयेर्मतौ बहुल'मिति कृतसंप्रसारणस्य रूपम्—आरेवानिति ।

अनो नुट् । यदीति । यदि पूर्वान्तलिङ्गः पठ्येतेत्यर्थः । अक्षण्वानिति । अक्षिशब्दस्य मतुपि च्छन्दस्यापि दृश्यत इत्यनङादेशः । नुकोऽसिद्धत्वात्पूर्वं नलोपो, भूतपूर्वगत्या नुक् । सुपथिन्तर इति । 'नाद्धस्ये'ति नुकि सति पदान्तत्वान्नकारस्य रुत्वप्रसङ्गः । परादाविति । नुटो मतुब्भक्तत्वात्तद्ग्रहणेन ग्रहणाद्वत्वप्रसङ्गः । भत्वादिति । अयस्मयादित्वात् । अल्लोप इति । एवमाऽल्लोपे नुकोऽसिद्धत्वमनाश्रित्योच्यते । नुकोऽ-

---

उ०–बहुलग्रहणात्सर्वत्रेति भावः । अथवेति । अत्र पक्षे ईवर्णान्ताद्विहितत्वाद्वत्वमिति । भाष्ये—अपूपवानिति । वाक्यसन्दर्भेण पठितम् ।

अनो नुट् । भाष्ये—यदीति । इत्थं विपर्यये, यदि पूर्वान्तस्तत्र को दोष इति प्रश्नः ।

---

१ अयं पाठः क्वचित् । * ७. १. ७६; ८. २. ७. + ८. ४. ३७. × ८. ३. १०.

अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि ॥ ४ ॥

अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि वक्तव्यम् । इह तर्हि सुपथिन्तरः—नान्तस्य टिस्तद्धिते लुप्यत इति* लोपः प्राप्नोति ।

घग्रहणं च ॥ ५ ॥

घग्रहणं च कर्तव्यम् ।

तत्तर्हीदं बहु वक्तव्यम् । नुग्वक्तव्यो, भसंज्ञा च वक्तव्या, अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि वक्तव्यं, घग्रहणं च कर्तव्यमिति । न कर्तव्यम् । यत्तावदुच्यते—'नुग्वक्तव्य' इति, नुक एष परिहारो 'भत्वात्सिद्ध'मिति 'भसंज्ञा वक्तव्ये'ति क्रियते न्यास एव—'अयस्मयादीनिच्छन्दसि' [ १. ४. २० ] इति । यदप्युच्यते 'अनस्तु प्रकृतिभावे मतुब्ग्रहणं छन्दसि घग्रहणं च कर्तव्य'-मिति, न कर्तव्यम् । उभयसंज्ञान्यपि हि च्छन्दांसि दृश्यन्ते । तद्यथा—स सुष्टुभा स ऋक्वता गणेन । पदत्वात्कुत्वं, भत्वाज्जश्त्वं न भवति । एवमिहापि पदत्वादल्लोपटिलोपौ न, भत्वाद्विनामरुविधिप्रतिषेधौ भविष्यतः । सिध्यति—सूत्रं तर्हि भिद्यते । यथान्यासमेवाऽस्तु । ननु चोक्तं—'परादौ वत्वप्रतिषेधोऽवग्रहश्चे'ति । यत्तावदुच्यते—'वत्वप्रतिषेध' इति, 'निर्दिश्यमानस्यादेशा भवन्ती'-

---

प्र०-सिद्धत्वाद्व्यन्नन्तत्वभावो, नलोपस्त्वल्लोपे सिद्धो 'नलोपः सुप्स्वरे'ति नियमात् । नाऽपि नलोपाऽपवादत्वान्नुको नाऽनन्तत्वमिति शक्यते वक्तुम्, अन्नएवानिति पूर्वस्य नकारस्याऽपदान्तत्वाण्णत्वे कृते परस्य ष्टुत्वेन सिद्धत्वाद्विनामविधानस्याऽयुक्तत्वप्रसंगात् । घग्रहणं चेति । घे नान्तस्य टिलोपप्रसङ्गे प्रकृतिभावो विधेयः । नुक एष इति ।

---

उ०- तस्य पदान्तत्वं दर्शयितुमाह—अह्निशब्दस्येति । भूतपूर्वगत्येति । सर्वत्र नलोपप्रसङ्गेन सांप्रतिकाऽभावादिति भावः । वत्वप्रसङ्ग इति । 'आदेः परस्ये'ति नस्य वत्वप्रसङ्ग इति भावः । असिद्धत्वमिति । 'पूर्वत्राऽसिद्ध'मित्यनेन । ननु नलोपस्याऽसिद्धत्वादनन्तत्वमित्यल्लोपोऽन इति दुर्वारमत आह—नलोपस्त्विति । 'नलोपापवादत्वान्नुको नानन्तत्व'मिति पाठः । विनामविधानस्येति । तस्मान्नलोपे कृते नुगिति वार्तिककारस्यदर्शनम्, असंभवे एव तस्य मतेऽपवादत्वादस्य नलोपदृष्ट्या सिद्धत्वाच्चेति भावः । सुपथिन्तर । इत्यत्र 'नाद्घस्ये'-त्युत्तरसूत्रेण नुट् । प्रकृतिभाव इति । घसंज्ञकतरतमयोः परत इत्यर्थः । आश्रित्य नुकमिति । नुको वक्तव्यत्वं न वार्तिककृतो दोषः, नुकमभ्युपगम्यैव 'भत्वात्सिद्ध'मिति परिहाराभिधानादिति भाष्यार्थ इति भावः ।

---

*६. ४. १४४.

त्येवं न भविष्यति । यस्तर्हि निर्दिश्यते तस्य न प्राप्नोति । किं कारणम् ? नुटा व्यवहितत्वात् । असिद्धो नुट्, तस्याऽसिद्धत्वाद्भविष्यति ।

अवग्रहेऽपि न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम् । यथालक्षणं पदं कर्तव्यम् ।

**नाद् घस्य ॥ ८ । २ । १७ ॥**

**ईद्रथिनः ॥ १ ॥**

रथिन ईद्वक्तव्यः । रथीतरः ।

**भूरिदाव्नस्तुट् ॥ २ ॥**

भूरिदाव्नस्तुड् वक्तव्यः । भूरिदावत्तरो जनः ।

**कृपो रो लः ॥ ८ । २ । १८ ॥**

**[1]कृपणादीनां प्रतिषेधः ॥ १ ॥**

कृपणादीनां प्रतिषेधो वक्तव्यः । कृपणः । कृपाणः । कृपा । कृपीटम् ।

---

प्र०–आश्रित्य नुकं 'भत्वात्सिद्ध'मिति परिहाराभिधानान्नुग्वक्तव्य इति चोदनमयुक्तमित्यर्थः । असिद्धो नुडिति । अतोऽपि नुटो वत्वाभावः । न लक्षणेनेति । पौरुषेयत्वादवग्रहकरणस्य यथालक्षणं पदानि कर्तव्यानीत्यर्थः ।

नाद्घस्य । ईद्रथिन इति । नुडपवाद ईकारो विधीयते स च नलोपे कृते ईकारस्य विधेयः । यदि तु नलोपाऽपवादो नकारस्य स्थाने विधीयेत तदा तस्याऽसिद्धत्वादेकादेशाभावाद्रूपं न सिध्येत् । भूरिदावत्तर इति । भूरि ददातीति वनिप् ।

कृपो० । कृपण इति । 'रञ्जेः क्यु'न्निति बाहुलकात् क्युन् । कृपाण इति । 'युधिबुधिदृशः किच्चे'ति बाहुलकादानच् । कृपीटमिति । 'कृकृपिभ्यां कीट' न्निति कीटन् । 'कृपे'त्येतत्तु 'कृपेः संप्रसारणं चे'ति भिदादिषु पाठाद्भवति । ततो लाक्षणिकत्वाल्लत्वाऽभावः । अथ क्लृपू सामर्थ्य इत्येव कस्मान्न पठ्यते, लत्वं हि न विधेयं भवति । नैतदस्ति । अचीक्लृपदिति हि न सिध्येत् । 'ऋकारलृकारयोः सवर्णविधि'रिति लृकारस्य ऋकारे कृतेऽचीकृपदिति स्यात् । यदा तु लत्वं

---

उ०– नाद्घस्य । नुडपवाद इति । रथशब्दान्मत्वर्थीयेनन्तात्तरपि नुटि प्राप्ते तदपवाद ईकार इत्यर्थः । यदि त्विति । नलोपदृष्ट्याऽस्याऽसिद्धत्वान्नलोपेऽस्य चारितार्थ्याच्च नाऽपवादत्वं भाष्यमतेऽपीति भावः ।

कृपो रो लः । ततो लाक्षणिकत्वादिति । एवं च वचनं विनाऽपि कृपा सिद्ध्यतीति भावः । तद्वचनं भिदादिष्वप्रामाणिकमिति भाष्याशयः । ऋकारे इति । 'उरण्'रित्य-

---

१ इदं क्वचिन्न पठ्यते । प्रदीपे दर्शनादस्य पाठ आवश्यकः ।

वालमूललघ्वलमङ्गुलीनां वा लो रमापद्यते ॥ २ ॥

वालमूललघ्वलमङ्गुलीनां वा लो रमापद्यत इति वक्तव्यम् । वालं—अश्ववालः, अश्ववारः । वाल । मूल—मूलदेवः, मूरदेवः । मूलं । लघु—वरुणस्य लघुस्यदः, वरुणस्य रघुस्यदः । लघुं । अलम्—अलं भक्ताय, अरं भक्ताय । अलम् । अङ्गुलि—सुवाहुः स्वङ्गुलिः, सुवाहुः स्वङ्गुरिः ।

सञ्ज्ञाच्छन्दसोर्वा कपिलकादीनाम् ॥ ३ ॥

संज्ञाच्छन्दसोर्वा कपिलकादीनामिति वक्तव्यम् । कपिरकः, कपिलकः । तिल्पिलिकम्, तिर्पिरिकम्[1] । कल्मषम्, कर्मषम् । रोमाणि, लोमानि । पांसुरम्, पांसुलम् । कर्म, कल्म । शुक्रः, शुक्लः ।

उपसर्गस्यायतौ ॥ ८ । २ । १९ ॥

किमिदमयतिग्रहणं रेफविशेषणम्—'अयतिपरस्य रेफस्य लो भवति स चेदुपसर्गस्य भवती'ति । आहोस्विदुपसर्गविशेषणम्—'अयतिपरस्योपसर्गस्य यो रेफस्तस्य लो भवती'ति । कश्चात्र विशेषः ?

---

प्र०—क्रियते तदा पूर्वत्राऽसिद्धमिति लत्वस्याऽसिद्धत्वात्पूर्वमृकारस्ततो लत्वमिति दोषाभावः । तथा चलीक्लृप्यत इति रीकोऽपि लत्वमिति दोषाऽभावः । तथा चलीक्लृप्यत इति रीकोपि लत्वसिद्धिः । वालेति । 'वल संवरणे' । वल्यत इति वालः । 'मूल प्रतिष्ठाया'मित्यस्मादिगुपधलक्षणः कः । 'लघिवंह्योर्नलोपश्चे'ति कुप्रत्यये लघुशब्दः । अङ्गेश्चेतन्यश्चीत्युलि प्रत्ययेऽङ्गुलिशब्दः । 'अमेर्गुरिश्च लो वे'ति नापेक्षितम् । कपिलकादिषु वा रस्य लः । रोमाणीति । रु शब्द इत्यस्मान्मनिनि रोमन् । नामन्सिति[†] निपातनमनाश्रित्योदाहरणोपन्यासः । पांसुरस्मिन्नस्ति' नगपांसुपाण्डुभ्यश्चे'ति रः । कर्मेति । कृञो मनिन् । शुक्रः शुक्ल इति । 'ऋज्रेन्द्राग्रे'ति निपातनादयुक्तः पाठः ।

उपसर्ग० । किमिदमिति । 'र' इति वर्तते । तत्र किं प्राधान्याद्रेफस्यायति-

---

उ०—नेन । वा रस्य ल इति । पूर्ववाक्येन लस्य रत्वं वोक्तम्, अनेन रस्य लो वेत्यर्थः । 'कपिलकादि'ष्विति विषयसप्तमी । वार्तिकेऽपि 'सिद्धये रस्य लो वे'ति शेषो द्रष्टव्यः ।

निपातनमनाश्रित्येति । तत्र रोमन्लोमन्निति द्वयोः पाठादित्यर्थः । ऋज्रेन्द्राग्रेति । तत्र हि शुक्रशुक्लौ द्वावपि पठितौ । अयुक्त इति । वस्तुत उणादिसूत्र एवाऽयुक्तः पाठ इति बोध्यम् । तान्यपाणिनीयानीति बोध्यम् ।

---

१ इदं क्वचिन्न पठ्यते । † 'तिल्विरीकः, तिल्विलीकः' इति पाठान्तरम् । ‡ उणादौ ४, १५१.

## रेफस्याऽयताविति चेत्परेरुपसंख्यानम् ॥ १ ॥

रेफस्याऽयताविति चेत्परेरुपसंख्यानं कर्तव्यम् । पल्ययते । वचनाद्भविष्यति । अस्ति वचने प्रयोजनम् । किम् ? प्लायते पलायते । अस्तु तर्हि उपसर्गविशेषणम् ।

## उपसर्गस्येति चेदेकादेशेऽप्रसिद्धिः ॥ २ ॥

उपसर्गस्येति चेदेकादेशेऽप्रसिद्धिर्भवति । प्लायते पलायते । एकादेशे कृते व्यपवर्गाभावादयताविति लत्वं न प्राप्नोति । अन्तादिवद्भावेन व्यपवर्गः । उभयत आश्रये नान्तादिवत् । एवं तर्ह्येकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद् व्यपवर्गः । प्रतिषिध्यतेऽत्र स्थानिवद्भावः 'पूर्वत्रासिद्धे न स्थानिव'दिति* । दोषा एवैते तस्याः परिभाषायाः—'तस्य दोषः संयोगादिलोपलत्वणत्वे'ष्विति* ।

अथवा पुनरस्तु रेफविशेषणम् । ननु चोक्तं—'रेफस्यायताविति चेत्परेरुपसङ्ख्यान'मिति । वचनाद्भविष्यति । ननु चोक्तम्—'अस्ति वचने प्रयोजनम्, किम् ? प्लायते पलायत' इति । अत्राप्यकारेण व्यवहितत्वान्न प्राप्नोति । एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति स्थानिवद्भावाद्व्यवधानमेव । प्रतिषिध्यतेऽत्र स्थानिवद्भावः—'पूर्वत्रासिद्धे न स्थानिव'दिति । दोषा एवैते तस्याः परिभाषायास्तस्य दोषः संयोगादिलोपलत्वणत्वेष्विति ।

प्र०-विशेषणमुत श्रुतस्योपसर्गस्येति प्रश्नः । पल्ययत इति । यकारेण व्यवधानाल्लत्वाऽप्राप्तिः । वचनादिति । सर्वत्र व्यवधानसद्भावाद्येन नाऽव्यवधानमिति न्यायात् । न च निर्दुरावनवकाश इति वक्तुं शक्यम्, एवं हि निर्दुरोरयताविति वक्तव्यं स्यात् । प्लायत इति । एकादेशस्य परं प्रत्यादिवत्त्वादयतिग्रहणेन ग्रहणाद्व्यवधानाऽभावं मन्यते । अस्तिवति । प्रतेरयतिपरस्य प्रयोगो नास्ति, इण एव तेन योग इत्याहुः । दोषा इति । ततोऽस्ति स्थानिवद्भाव इत्युभयथाऽप्यदोषः ।

उ०- उपसर्गस्य० । सन्देहे बीजमाह—तत्र किमिति । कार्यित्वेन प्राधान्यम् । सर्वत्रेति । 'प्लायते' इत्यादावप्येकादेशस्य स्थानिवत्त्वेन व्यवधानसद्भावादिति भावः । वक्तव्यं स्यादिति । प्रत्यासत्त्याऽपरयोरन्वयिनोरेव निर्दुरोर्ग्रहणेन निरयणं दुरयणमित्यादौ व्यर्थविशेषणत्वेनाऽतिप्रसङ्ग इति केचित् । अन्यतरपक्षे प्रतेरपि स्यात्, पक्षान्तरे तु संघातेन व्यवधानान्न भविष्यतीत्यत आह—प्रतेरिति । 'प्रत्यय' इत्यादिप्रयोगास्तर्हि कथमत आह—इण एवेति । उभयथापीति । उपसर्गविशेषणत्वेन स्थानिवद्भावाद्व्यवधानेन प्लायत इत्यादौ लत्वसिद्धिः । रेफविशेषणत्वे स्थानिवत्त्वेन सर्वत्र व्यवधानाद्येन नाऽव्यवधानमिति न्यायेनेष्टसिद्धिरित्यर्थः ।

१ 'अयताविति स्थलम्' पाठः क्वचित् । * १. १. ५८.

## अचि विभाषा ॥ ८ । २ । २१ ॥

णावुपसंख्यानं कर्तव्यम् । इहापि यथा स्यात्—निगार्यते निगाल्यते । किं पुनः कारणं न सिध्यति ? अचीत्युच्यते न चात्राऽजादिं पश्यामः† । प्रत्ययलक्षणेन‡ । वर्णाश्रये नास्ति प्रत्ययलक्षणम् । एवं तर्हि स्थानिवद्भावाद्भविष्यति । प्रतिषिध्यतेऽत्र स्थानिवद्भावः 'पूर्वत्रासिद्धे न स्थानिव'दिति* । अत उत्तरं पठति—

**गिरतेर्लत्वे णावुक्तम् ॥ १ ॥**

किमुक्तम् ? 'तस्य दोषः संयोगादिलोपलत्वणत्वेष्वि'ति* ।

## परेश्च घाऽङ्कयोः ॥ ८ । २ । २२ ॥

योगे चेति वक्तव्यम् । इहापि यथा स्यात्—परियोगः पलियोगः ।

**सङि लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि ॥ १ ॥**

'सङी'ति+ प्रकृत्य लत्वसलोपसंयोगादिलोपकुत्वदीर्घत्वानि वक्तव्यानि । किं प्रयोजनम् ?

**प्रयोजनं—गिरौ गिरः पयो धावति द्विष्टरां हषत्स्थानं काष्ठशकुस्थाता कुश्चा धुर्य इति ॥ २ ॥**

गिरौ गिर× इत्यत्र 'अचि विभाषा' [ ८. २. २१ ] इति लत्वं

---

प्र०— अचि० । णाविति । पदस्य लत्वविधानाल्लत्वस्यान्तरङ्गत्वाऽभावात्पूर्वत्रासिद्धमित्यसिद्धत्वाण्णिलोपे कृते लत्वाऽप्रसङ्गः । वर्णाश्रय इति । विशेष्यस्य प्रत्ययस्याऽसंनिधानाद्वर्णाश्रयं लत्वं न तु प्रत्ययाश्रयमिति भावः ।

परेश्च० । सङीति । सनः सकारादारभ्य आ महिङो ङकारेण प्रत्याहारः । गिराविति । गिरतेः क्विबन्तादौजसौ । वक्ष्यत्येतदिति । इदं विरुद्ध्यते 'वक्ष्यत्येतच्च-

---

उ०— अचि वि० । ननु णिमात्राऽपेक्षत्वेनाऽन्तरङ्गत्वात्पूर्वं लत्वे पश्चाण्णिलोपे रूपसिद्धेः किमुपसङ्ख्यानेनेत्यत आह—पदस्येति । नन्वेमपि परत्वाल्लत्वं स्यादत आह—पूर्वत्रेति । नन्वस्याजादौ प्रत्यये विधानेन वर्णप्राधान्याऽभावात्कथं स निषेधोऽत आह—विशेष्यस्येति । यद्यपि 'धातोः स्वरूपग्रहणे'इति परिभाषया संनिहितप्रत्ययस्य विशेष्यतया तदादिविधेः सुलभत्वेन प्रत्ययलक्षणेनापीदं सिध्यति तथापि तस्याऽविहितकार्यानियामकत्वे न विध्येकबाध्यतेत्याशयः ।

परेश्च० । सन इति । तेन धातुविहितसर्वप्रत्ययसंग्रहः । भाष्ये—उक्तमेतदिति ।

---

† ६. ४. ५१. ‡ १. १. ६२. * ८. २. ५८.* + ६. १. ५–८. ४. ७८. × ४. १. २,

प्राप्नोति—'सङी'ति वचनान्न भवति। नैतदस्ति प्रयोजनम्। उक्तमेतत्—'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्सिद्ध'मिति† ।

पयो धावतीत्यत्र 'धि च' [ २५ ] इति सलोपः प्राप्नोति—'सङीति' वचनान्न भवति। एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत्—'धिसकारे सिचो लोप' इति‡ ।

द्विष्टरामित्यत्र* 'ह्रस्वादङ्गात्' [२७] इति सलोपः प्राप्नोति—'सङी'ति वचनान्न भवति। एतदपि नास्ति प्रयोजनम्। अत्रापि सिच इत्येवाऽनुवर्तिष्यते।

द्वषत्स्थानमित्यत्र झलो झलि [२६] इति सलोपः प्राप्नोति—'सङी'ति वचनान्न भवति। एतदपि नास्ति प्रयोजनम्। अत्रापि 'सिच' इत्येवानुवर्तिष्यते।

काष्ठशक्स्थातेत्यत्र 'स्कोः संयोगाद्योरन्ते च' [ २९ ] इति ककारलोपः प्राप्नोति—'सङी'ति वचनान्न भवति। एतदपि नास्ति प्रयोजनम्। काष्ठशगेव नास्ति कुतो यः काष्ठशकि तिष्ठेत्।

---

प्र०—काधीत्येव भवितव्य'मिति। तस्मादिदं वक्तव्यम्—एकपदाश्रयत्वादन्तरङ्गरुत्वे कर्तव्ये पदद्वयनिबन्धनत्वाद्बहिरङ्गस्य सलोपस्याऽसिद्धत्वात्पूर्वत्रेति निर्दिष्टविषयाऽभावाद्रुत्वमेवाऽसिद्धत्वाऽभावात्प्रवर्तते। अल्विधित्वाच्च स्थानिवत्त्वाऽभावाद्रोलोपाऽभावः। द्विष्टरामिति। द्वौ वारौ द्विः। सुच्प्रत्ययः। परिपूर्णत्वाद्वारद्वयस्य प्रकर्षप्रत्ययः। तदन्तात्किमेत्तिङव्ययेत्याम्प्रत्ययः। द्वषत्स्थानमिति। 'उदःस्थास्तम्भोः पूर्वस्ये'ति पूर्वसवर्णविधानात्सिचोऽन्यस्य सकारस्य 'झलो झली'ति लोपो न भवतीति ज्ञापकमाहुः। अन्यथा सलोपेनैवोत्थानमित्यादेः सिद्धत्वात्पूर्वसवर्णविधानमनर्थकं स्यात्। काष्ठशगेवेति। दृशिग्रहणात्प्रयोगानुसरणात्ककारान्तेभ्यो धातुभ्यः क्विबभावात्। पक्स्थातेत्यत्र तु पचेः कुत्वस्याऽसिद्धत्वाल्लोपाप्रसङ्गः।

---

उ०—मृजेर्वृद्धिरित्यग्र। 'धिसकारे सिचोलोप'इत्यस्य पूर्वपक्षस्थत्वादिदं समाधानमुपलक्षणमित्याह—इदं विरुध्यत इति। भाष्ये तु वार्तिकरीत्या वार्तिकप्रत्याख्यानम्। भाष्यमते तत्समाधिमाह—अल्विधित्वादिति। वस्तुतस्त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषायाः कार्यकालपक्षेऽप्यप्रवृत्तेः 'खरवसानयो'रिति सूत्रभाष्ये वक्ष्यमाणत्वेदमपि चिन्त्यम्। सिचोऽन्यस्येति। 'धि चे'तिवर्ज्जं सामान्यापेक्षं ज्ञापकं तेन 'द्विष्टरा'मित्यादौ 'ह्रस्वादङ्गा'दिति सलोपो न। भाष्ये त्वनुवृत्तिफललाभात्सिच इत्येवानुवर्तिष्यते इत्युक्तं ज्ञापकमुपपादयति—अन्यथेति। वस्तुत इदं ज्ञापकं 'झलो झली'ति प्रकरणस्थसलोपस्तिङ्प्रत्यय एवेति वर्णनीयं तेन 'पयो धावति' द्विष्टरा'मित्यत्रापि न दोष इति ध्येयम्। ननु लक्षणसत्त्वात्कुतस्तदभावोऽत आह—दृशिग्रहणादिति। 'क्विप्चे'त्यत्र पूर्वसूत्राद्दृशिग्रहणमनुवर्तत इति भावः। 'क्विप् चान्येभ्योऽपि

---

† ७. २. ११४. ‡ ८. २. २५. * ५. ४. १८.

क्रुश्चेत्यत्र चोः कुः झलीति कुत्वं प्राप्नोति—'सङी'ति वचनान्न भवति। एतदपि नास्ति प्रयोजनम्। निपातनादेतत् सिद्धम्। किं निपातनम्? 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चाम् [ ३. २. ५९ ] इति।

धुर्य इत्यत्र 'हलि च' [ ८. २. ७७ ] इति दीर्घत्वं प्राप्नोति—'सङी'ति वचनान्न भवति। एतदपि नास्ति प्रयोजनम्। न भकुर्छुराम् [ ७९ ] इति प्रतिषेधो भविष्यति।

## संयोगान्तस्य लोपः ॥ ८ । २ । २३ ॥

### संयोगान्तस्य लोपे यणः प्रतिषेधः ॥ १ ॥

संयोगान्तस्य लोपे यणः प्रतिषेधो वक्तव्यः। दध्यत्र मध्वत्रेति। संयोगादिलोपे+ च यणः प्रतिषेधो वक्तव्यः। काक्यर्थम्, वास्यर्थम्।

### न वा झलो लोपात् ॥ २ ॥

न वा वक्तव्यः। किं कारणम्? 'झलो लोपात्' झलो लोपः संयोगान्तलोपो वक्तव्यः।

### बहिरङ्गलक्षणत्वाद्वा ॥ ३ ॥

प्र०—कुतो यः काष्ठशकीत्यनेन सति समासे निमित्तनिमित्तिनोः समानपदस्थत्वे लोपप्रसङ्गो न तु वाक्य इति दर्शयति। पदस्येत्यधिकारात्प्रत्यासत्तिन्यायाश्रयाच्चैकपदस्थयोर्निमित्तनिमित्तिनोर्ग्रहणम्। एवञ्च पयो धावतीत्यत्र सलोपाऽभावः।

संयोगान्तस्य लोपः। काक्यर्थमिति। 'तस्य दोषः संयोगादिलोपलत्वणत्वेष्वि'ति वचनात्स्थानिवद्भावादपि लोपः परिहर्तुं शक्यः। न वेति। झलो झली-

उ०—दश्यत' इति ग्रहाश्रु णेति सूत्रभाष्यस्थपाठमभिप्रेत्य वेदम्। नन्वसमासेऽपि लोपप्राप्तेः समासप्रदर्शनमनुपयोगीत्यत आह—कुतो य इति। प्रत्यासत्तीति। अन्तरङ्गत्वादिति भावः। अनेनैव न्यायेनाऽन्यत्रापि परिहार इत्याह—एवञ्चेति। 'पयो धावन'मिति समासवारणार्थमुक्तमेव समाधानं मुख्यम्। 'काष्ठशक्स्याते'त्यतिरिक्तानां झलि परे संयोगादिलोपप्राप्तियोग्यानामनभिधानमिति भाष्याशयमन्ये। भाष्ये—क्रुञ्चेति। नन्वत्रानुस्वारस्य परसवर्णे तस्याऽसिद्धत्वाञ्ञकाराभावेन कस्य कुत्वमिति चेन्न, औपदेशिकञोपधत्वात्। अतएव क्रुञ्च्यादिष्यादौ ञश्रवणं, नोपधत्वे हि नलोपः स्यादिति भावः। न च ञकारोच्चारणसामर्थ्यादेव कुत्वाऽभावे निपातनपर्यन्तं धावनं व्यर्थं, क्रुङ्ङित्याद्यावपि कुत्वालापत्तेः। निपातनेन तु प्रयोगे कुत्वाऽभावबोधनान्न दोष इति दिक्। परे तु अनेकज्ञापकनिपातनाश्रयणापेक्षया'सङी'त्येव लघु इति सङीति कार्यमेव। प्रत्याख्यानं त्वेकदेशिन इत्याहुः।

संयोगान्तस्य०। तस्य दोष इति। एवं च तदनाश्रयेणेदमिति भावः। ननु

+ ८. २. २९।

अथवा बहिरङ्गो यणादेशोऽन्तरङ्गो लोपः, 'असिद्धं बहिरङ्गमन्तरङ्गे'।

**संयोगान्तलोपे सग्रहणम् ॥ ४ ॥**

संयोगान्तलोपे सग्रहणं कर्तव्यम्। 'संयोगान्तलोपः सस्य चे'ति वक्तव्यम्। इहापि यथा स्यात्—श्रेयान् भूयान् ज्यायान्। किं पुनः कारणं न सिध्यति? परत्वाद्रुत्वं† प्राप्नोति। असिद्धो रुस्तस्याऽसिद्धत्वाल्लोपो भविष्यति। न सिध्यति। किं कारणम्?

**रुविधानस्याऽनवकाशत्वात् ॥ ५ ॥**

अनवकाशो रुर्लोपं बाधेत। सावकाशो रुः। कोऽवकाशः? पयः शिरः। ननु चात्रापि जश्त्वं‡ प्राप्नोति। स यथैव रुर्जश्त्वं बाधत एवं लोपमपि बाधेत। न बाधते। किं कारणम्? येन नाऽप्राप्ते तस्य बाधनं भवति, न चाऽप्राप्ते जश्त्वे रुरारभ्यते, लोपे पुनः प्राप्ते चाप्राप्ते च।

**योगविभागात्सिद्धम् ॥ ६ ॥**

अथवा योगविभागः करिष्यते*। एवं वक्ष्यामि—'संयोगान्तस्य लोपोऽरात्' संयोगान्तस्य लोपो भवत्यरात्। ततः 'सस्य'। सस्य च लोपो भवति संयोगान्तस्य। किमर्थम्पुनरिदमुच्यते? 'प्रतिषिद्धार्थं रुबाधनार्थं च'।

---

प्र०–ऽयतः सिंहावलोकितन्यायेन झल्ग्रहणमिहाऽनुवर्तते। तत्पष्ठ्या विपरिणम्यत इति यणो लोपाऽभावः। 'स्कोः संयोगाद्यो'रित्यत्र तु पञ्चम्यन्तमेव संबध्यते, तेन झलः पूर्वयोः स्कोर्लोपविधानाद्यणः पूर्वयोर्लोपाऽभावः। अन्तरङ्ग इति। एकपदाश्रयत्वात्। स यथैवेति। यदा लक्षणनिरपेक्षं कार्याणां बाधकत्वमिति दर्शनं तदा विध्यन्तरैरनाक्रान्तो विषयो नास्तीत्यविशेषात्सर्वं कार्यं बाध्यमिति भावः। येन नाप्राप्त इति। यदा 'लक्षणं बाध्यत' इति दर्शनं तदा येन सर्वो विषय आक्रान्तस्तदेव

---

उ०–झल्ग्रहणस्याऽप्रकृतत्वात्कथं झलो लोपोऽत आह—झलो झलीति। विपरिणम्यत इति। तच्च वाक्यभेदेन संबध्यते, तेनाऽझलोऽपि कस्यचिल्लोप इत्याहुः। तेन झलः पूर्वयोरिति। वस्तुतस्तु झल्ग्रहणस्य संयोगान्तलोपसूत्र एव संबन्धो न तु 'स्को'रित्यत्र, झलो लोपः संयोगान्तलोप'इति भाष्यस्वरसादित्याहुः। एकपदाश्रयत्वादिति। यद्यपि यण्विधौ न पदद्वयमुपात्तं तथापि एतल्लक्ष्ये पदद्वयाश्रयो यणिति भावः। अत्र 'बहिरङ्गलक्षणत्वा'दिति वार्तिकस्वारस्यात्, 'बहिरङ्गो यणादेश' इति भाष्याच्च यणादेशव्यतिरिक्तसंयोगान्तलोपप्राप्तिविषययण्घटितप्रयोगाऽनभिधानं बोध्यम्। अन्यथाऽन्तरङ्गलक्षणत्वादन्तरङ्गो लोप इत्येव वदेत्। एवं च 'दध्य्' 'मध्व्'इत्यादि चिन्त्यमेवेति दिक्। बाध्यसामान्यचिन्ताश्रयणे बीजमाह—यदेति। विशेषचिन्ताबीजमाह—यदेति। प्रतिषिद्धलोपं यदत्र प्रयोजनं यस्येत्यर्थं इत्याह—अरादिति।

---

† ८. २. ६६. ‡ ८. २. ३९. * ८. २. २४.

अथवा यदेतद्रात्सस्येति सग्रहणं तत्पुरस्तादपकक्ष्यते—'संयोगान्तस्य लोपः'। ततः 'सस्य'। सस्य च संयोगान्तस्य लोपो भवति। ततः—'रात्'। रात्सस्यैव संयोगान्तस्य लोपो भवति। अथवा रात्सस्येत्यत्र 'संयोगान्तस्य लोप' इत्येतदनुवर्त्तिष्यते।

## धि च ॥ ८ । २ । २५ ॥

### धिसकारे सिचो लोपः

धिसकारे सिचो लोपो वक्तव्यः। किं प्रयोजनम्?

### चकाद्धीति प्रयोजनम्

इह मा भूत्—'चकाद्धि पलितं शिरः'। यदि तर्हि सिचो लोप इत्युच्यते।

### आशाध्वं तु कथन्ते स्यात्

आशाध्वमत्यत्र लोपो न प्राप्नोति।

### जश्त्वं सस्य भविष्यति ॥ १ ॥

जश्त्वमत्र सकारस्य भविष्यति*।

### सर्वत्रैवं प्रसिद्धं स्यात्

सर्वत्रैव जश्त्वेन सिद्धं स्यात्। इहापि—आयन्ध्वम् अरन्ध्वमिति, जश्त्वेनैवसिद्धम्†।

### श्रुतिश्चापि न भिद्यते

प्र०—बाध्यते। न हि तदबाधित्वा स्वविषयं लभते। यस्य तु कचित्प्राप्तिस्तदबाधेनाऽपि विषयलाभान्न तद्बाध्यते। अरादिति। रात्परस्य संयोगान्तस्य लोपो न भवति। ऊर्क्। अमार्ट्। प्रतिषिद्धार्थं चेति। 'अरा'दिति प्रतिषेधस्य बाधनार्थम्। यथा—मातुः पितुरिति। 'श्रेया'नित्यादौ तु रुत्वबाधनार्थम्। नन्वानन्तर्यात्प्रतिषेधस्यैव बाधनार्थं सस्येत्येतत्स्यान्न तु रुत्वस्येत्याशङ्क्याह—अथवेति। अथ वा रात्सस्येत्यत्रेति। वाक्यभेदेन संबन्धः। 'रात्सस्यैव लोपो भवती'त्येकं वाक्यम्। 'संयोगान्तस्य लोप' इति द्वितीयम्।

धि च। धिसकार इति। स्थानिनो लोपं प्रति विषयत्वविवक्षया सकार इति सप्तमीनिर्देशः। चकाद्धीति। हे शिरः! पलितं सच्चकाद्धि शोभस्वेत्यर्थः। जश्त्वमिति। 'झलां जश्झशी'त्यनेन। श्रुतिश्चापीति। एकस्याऽनेकस्य वा व्यञ्जनपरस्य श्रुतौ

उ०— धि च। स्थानिन इति। धकारे परतो यः सकारविषयो लोपः स सिच एवेति भाष्यार्थं इति भावः। हे शिर इति। अनेनायुः प्रार्थ्यते। भाष्ये—आयंध्वमरंध्वमिति सानुस्वारः पाठः। भाष्ये—जश्त्वेनैव सिद्धमिति। एवं च धि चेति सूत्रं न कार्यमिति भावः। ननु जश्त्वे दकारधकारौ, लोपे तु ध एवेति कथं श्रुतिभेदो न स्यादत आह—एकस्येति।

* ८. ४. ५३, † ८. ४. ६५.

श्रुतिकृतश्चापि न कश्चिद्भेदो भवति।

**लुङश्चापि न मूर्द्धन्ये ग्रहणम्**

तत्रायमप्यर्थः—इणः षीध्वंलुङ्लिटां धोऽङ्गात् [ ८. ३. ७८ ] इत्यत्र लुङ्ग्रहणं न कर्तव्यम्। इहापि—अच्योड्ढ्वमप्लोड्ढ्वमिति षत्वे सिचो धस्य ष्टुत्वे च कृते जश्त्वेन सिद्धम्†।

**सेटि दुष्यति ॥ २ ॥**

सेटि दोषो भवति+। इदमेव रूपं स्यात्—अलविड्ढ्वम्, इदं न स्यात्—अलविध्वमिति। तस्मात्सिचो ग्रहणं कर्तव्यम्। यदि तर्हि सिचो ग्रहणं क्रियते—

**घसिभस्योर्न सिध्येत्तु**

घसिभस्योर्न सिध्यति—'सग्धिश्च× मे सपीतिश्च मे', 'बब्धां* ते हरी धाना इत्यत्र न प्राप्नोति।

**तस्मात्सिज्ग्रहणं न तत्**

तस्माद्धि चेत्यत्र सिचो ग्रहणं न कर्तव्यम्। कथं 'चकाद्धि पलितं शिर' इति? एवं तर्हि सिज्ग्रहणं कर्तव्यम्। कथं सग्धिश्च मे सपीतिश्च मे बब्धां ते हरी धाना इति? इह तावत् सग्धिरिति, नैतद् घसे रूपम्। किं तर्हि? सघेरेत-

प्र०—विशेषो नावधार्यते। लुङश्चापीति। श्लोकवार्तिककारस्याऽयुक्तमिदं वचनम्। अकृढ्वमभृढ्वमित्यादौ 'ह्रस्वादङ्गादिति' सिज्लोपे सति मूर्द्धन्यस्याऽविधाने रूपं न सिध्येत्। सग्धिरिति। अदेः क्तिनि 'बहुलं छन्दसी'ति घस्लादेशः। 'घसिभसोर्हलि चे'त्युपधालोपः, तत्र 'झलो झली'ति सलोपो न प्राप्नोति, इष्यते च। बब्धामिति। भसेर्लोटि तामि श्लौ द्विर्वचने पूर्ववदुपधालोपः। सघेरिति। सघ हिंसायामित्यस्य स्वरभेदोऽपि नास्ति, क्तिन्याद्युदात्तत्वात्तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरविधानाच्च। अने-

उ०—अनेकस्येति। 'एकस्यानेकस्ये'त्यर्थः। व्यञ्जनपरस्येति। पञ्चमीतत्पुरुषबहुव्रीह्योस्तन्त्रेण निर्देशः। अकृढ्वमिति। एतदर्थं मूर्धन्ये लुङ्ग्रहणस्यावश्यकत्वं, पूर्वपक्षत्वात्तु भगवता सूक्ष्मेक्षिका न कृतेति भावः। तादृशानामनभिधानमिति तदाशयं कश्चित्। भाष्ये 'अच्योढ्ढ्व'मिति च्युङ्प्लुङो रूपे। इदं न स्यादलविध्वमिति। 'विभाषेट' इत्यस्याऽप्राप्तेः, धित्वस्याऽभावाच्च। तस्माल्लुङ्ग्रहणं धित्वेति च कार्यमिति भावः। तत्पुरुषे इति। समाना ग्धिरिति समानेऽप्याद्युदात्तत्वमेवेत्यर्थः। ननु सघेर्हिंसार्थत्वादसमानार्थत्वादप्राप्तिः अत आह—अनेकार्थत्वादेवेति। सन्निधापयत्वादिति। मागधेयनेन

†, ८. २. ५९; ८. ४. ४१; ५१. + ८. ३. ७९. × २. ४. ३९; ६. ४. १००. ८. २. २६.
* ६. ४. १००. ८. २. २६.

द्रूपम् । 'बन्धां ते हरीधाना' इति; नैतद्भसेरूपम् । किं तर्हि ? बन्धेरेतद्रूपम् ।

**'छान्दसो वर्णलोपो वा यथेष्कर्त्तारमध्वरे' ॥ ३ ॥**

अथ वा छान्दसो वर्णलोपो भविष्यति, 'यथेष्कर्त्तारमध्वरे' तद्यथा— 'तुभ्येदमग्ने' । तुभ्यमिदमग्न इति प्राप्ते । 'आम्बानां चरुः' । नाम्बानां चरुरिति प्राप्ते । 'आव्याधिनी रुगणाः' । आव्याधिनीः सुगणा इति प्राप्ते । 'इष्कर्तारमध्वरस्य' । निष्कर्तारमिति प्राप्ते । 'शिवा उद्रस्य भेषजीः' । शिवा रुद्रस्य भेषजीरिति प्राप्ते । तस्मात्सिज्ग्रहणं कर्तव्यम् ।

न कर्तव्यम् । यदेतद्रात्सस्य [ ८. २. २४ ] इति सकारग्रहणं तत्सिचो ग्रहणं विज्ञास्यते । कथम् ? 'रात्सस्ये'त्युच्यते न चाऽन्यो रेफात्परः सकारोऽस्त्यन्यदतः सिचः । ननु चायमस्ति 'मातुः' 'पितु'रिति । तस्मात्सिचो ग्रहणं कर्तव्यम् । न कर्तव्यम् । कस्मान्न भवति 'चकाद्धि पलितं शिर' इति ? इष्टमेवैतत्सङ्गृहीतम् । 'चकाधी'त्येव भवितव्यम् ।

धिसकारे सिचो लोपश्चकाद्धीति प्रयोजनम् ।
आशाध्वं तु कथं ते स्याज्जश्त्वं सस्य भविष्यति ॥ १ ॥
सर्वत्रैवं प्रसिद्धं स्याच्छ्रुतिश्चापि न भिद्यते ।
लुङश्चापि न मूर्द्धन्ये ग्रहणं, सेटि दुष्यति ॥ २ ॥
घसिभस्योर्न सिध्येत्तु तस्मात्सिज्ग्रहणं न तत् ।
छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे ॥ ३ ॥

---

प्र०-कार्थत्वाच्च धातूनां समानादने सघिर्वर्तत इत्यर्थभेदोऽपि नास्ति । बन्धेरिति । 'बन्ध-बन्धने' इत्यस्य भसेरर्थे वर्तमानस्य लोटि तामि व्यत्ययेन शपो लुकि नलोपे वर्णव्यत्ययेन धकारस्य बकारे बब्धामिति भवति । क्वचिद्बधेरिति पाठः, सत्वयुक्तः, वधेः सन्विषयत्वादित्याहुः । छान्दस इति । घसिभस्योः सकारस्य लोपे वा रूपसिद्धिरित्यर्थः । इष्कर्तारमध्वरस्ये'त्येकदेशानुकरणादिष्कर्तारमध्वरशब्दात्सप्तमी । यदेतदिति । तदेव चोत्तरत्रानुवर्तत इति भावः । मातुरिति । उभयोः स्थाने भवत एकादेशस्यान्यतरतो व्यपदेशाद्' स्थानिकत्वाद्रपरत्वे सति सकारस्य लोपः ।

---

उ०-नित्यं सन्विधानादिति भावः । अर्थान्तरे तत्र प्रयोगाऽभाव एवेति बोध्यम् । तत्र सिचो ग्रहणेऽपि प्रकृते किमायातमत आह-तदेव चेति ।

## दादेर्धातोर्घः ॥ ८ । २ । ३२ ॥

इह दोग्धा दोग्धुमिति घत्वस्याऽसिद्धत्वाड्ढत्वं† प्राप्नोति । नैष दोषः । उक्तमेतत्—'अपवादो वचनप्रामाण्या'दिति+ । अथवैवं वक्ष्यामि—'होढोऽदादेः' । हो ढो भवत्यदादेः । ततो 'धातोर्घः' इति । 'दादे'रित्यनुवर्तते 'ने'ति निवृत्तम् ।

'दादे'रित्युच्यते तत्रेदं न सिध्यति—अधोक् । क्व तर्हि स्यात् ? मा स्म धोक् । नैष दोषः । 'धातो'रिति नैषा दादिसमानाधिकरणा षष्ठी 'दादेर्धातो'-रिति । का तर्हि ? अवयवयोगैषा षष्ठी—'धातोर्यो दादिरवयव' इति । सा चावश्यमवयवयोगा षष्ठी विज्ञेयोत्तरार्था । किं प्रयोजनम् ? एकाचो बशो भष्झषन्तस्य स्ध्वोः [ ८. २. ३७ ] इति इहापि यथा स्याद् गर्दभयतेरप्रत्ययो

प्र०— दादे०ः । घत्वस्यासिद्धत्वादिति । 'पूर्वत्रासिद्ध'मित्यस्य प्रतियोगोपस्थानादेतत्सूत्रारम्भाच्च घत्वढत्वयोर्विकल्पप्रसङ्गः । उक्तमिति । न ह्युत्सर्गापवादयोर्विकल्पो युक्तः । द्रुहेश्च विकल्पविधिरनर्थकः स्यात् । अदादेरिति । असमर्थसमासो 'दादेर्न

उ०— दादेर्धा० । विकल्पेति । एवं चाऽसिद्धवच्छास्त्रबाधो नेतिभावः । नहीति । श्रुत्या प्रकरणबाध एव युक्त इत्याशयः । न्यायसिद्धेऽर्थे लिङ्गमप्याह—द्रुहेश्चेति । असमर्थसमासे नञो दादिग्रहणेन संबन्धाऽभावात्तस्य केवलस्योत्तरत्रानुवृत्तिरपि सुलभेत्याह—धातोर्घ इति । निषेधार्थकः 'अ' शब्दस्तु अप्रामाणिक इति तात्पर्यम् । न चाऽत्र न्यासे द्रुहेर्ढत्वाऽनापत्तिः 'वा द्रुहे' त्यनेन विकल्पद्वारा ढानुवृत्त्या तस्यापि विधानादितिभावः । नन्वेवमप्युत्तरत्र दादिग्रहणानुवृत्तिर्व्यर्था, असिद्धत्वेन दादिभिन्नविषये ढत्वस्यैव प्रवृत्त्या व्यावर्त्याऽभावादिति चेन्न; 'दादे'रित्यस्य उपदेशवद्दादिलक्षकत्वात् । तेन दामलिट् पार्श्वलिडित्यादौ वक्ष्यमाणवैयधिकरण्यान्वयेऽपि न घत्वं, नच ढत्वमपि न स्याददादेरिति निषेधादिति वाच्यम्, अर्थाधिकारानुरोधेनोपदेशवद्दादेरेव तेन निषेधादिति भावः । उक्तमर्थमजानानः शङ्कते भाष्ये—एवमपीति । 'एकाच' इत्युत्तरसूत्रार्थं प्रसङ्गान्निर्णेतुम् 'अधो'गित्यस्य दादिपदलक्षणाऽसाधारणफलत्वाऽभावं च दर्शयितुं तदुपेक्ष्य समाध्यन्तरमाह—भाष्ये—नैष दोष इति । सा चावश्यमिति । उत्तरार्थेति च । अनेनात्र सूत्रे तस्याऽनावश्यकता ध्वनिता । तर्ह्यस्तु दादिपदलक्षणया निर्वाह इति । अन्यथा 'अधो'गित्यादौ घत्वप्रवृत्तिरूपप्रयोजनान्तरसिद्धयेऽत्रैव सूत्रे वैयधिकरण्यान्वयस्यावश्यकत्वेनोत्तरार्थत्वेनावश्यकत्वप्रतिपादनस्य निर्बीजत्वापत्तिरिति दिक् । प्रयोगभेदादिति । यथा 'शिलापुत्रकस्य शरीरं' 'राहोः शिर' इत्यादौ ।

† ८. २. ३१. + ८. २. १.

गर्धवितिं । यद्यवयवयोगा षष्ठी, द्रोग्धा दोग्धुमित्यत्र न प्राप्नोति । एषोऽपि व्यपदेशिवद्भावेन धातोर्दादिरवयवो भवति ।

**ह्रग्रहोर्भश्छन्दसि ॥ १ ॥**

ह्रग्रहोश्छन्दसि हस्य भत्वं वक्तव्यम् । गर्दभेन संभरति† । मरुदस्य ग्रभीता । सामिधेन्यो जभ्रिरे । उद्ग्राभश्च निग्राभश्च ब्रह्म देवा अवीवृधन्‡ ।

**दधस्तथोश्च ॥ ८ । २ । ३८ ॥**

किमर्थश्चकारः ? स्ध्वोरित्येतदनुकृष्यते* । नैतदस्ति प्रयोजनम् । सिद्धं स्ध्वोः पूर्वेणैव । न सिध्यति । किं कारणम् ? अबशादित्वात् । ननु च जश्त्वे कृते बशादिः+ । असिद्धं जश्त्वं तस्याऽसिद्धत्वान्न बशादिः । एवं तर्हि सिद्धकाण्डे पठितम 'भ्यासजश्त्वचर्त्वमेत्त्वतुको' रिति× । एत्वतुकोर्ग्रहणं न करिष्यते । 'अभ्यासजश्त्वचर्त्वं सिद्ध' मित्येव । एवमप्यझषन्तत्वान्न प्राप्नोति । लोपे कृते झषन्तः†† । स्थानिवद्भावान्न झषन्तः अत उत्तरं पठति—

**दधस्तथोरनुकर्षणानर्थक्यं स्थानिवत्प्रतिषेधात् ॥ १ ॥**

दधस्तथोरनुकर्षणमनर्थकम् । किं कारणम् ? 'स्थानिवत्प्रतिषेधात्' । प्रतिषिध्यतेऽत्र स्थानिवद्भावः 'पूर्वत्रासिद्धे न स्थानिव' दिति** । स चावश्यं प्रतिषेध आश्रयितव्यः ।

**इतरथा ह्यलोपे प्रतिषेधः ॥ २ ॥**

यो हि मन्यतेऽनुकर्षणसामर्थ्यान्मेऽत्र भवति, अलोपे तेन प्रतिषेधो वक्तव्यः स्यात्—दधाति दधासि ।

प्र०—भवती'ति । 'धातोर्घ' इत्यत्र दादिग्रहणमनुवर्तते न तु नञ् । एषोऽपीति । प्रयोगभेदाद्भिन्नस्य धातोरयमवयव इति बुद्ध्या परिकल्पनात् ।

दधस्त० । एत्वतुकोर्ग्रहणमिति । फलिभजिग्रहणं सामान्येन सिद्धत्वस्य ज्ञापकमिति भावः । झलि झषन्तस्येति । झषन्तग्रहणाऽनुवृत्तौ सत्यां झषन्त-

उ०— दधस्तथोश्च । 'दध' इति कृतद्वित्वस्य धाञो ग्रहणम् । फलिभजीति । यद्यभ्यासजश्त्वादेरसिद्धत्वं स्यात् फलिभजिग्रहणं न कुर्यात्, अनादेशादित्वात्पूर्वेणैव सिद्धेः । तत्कृतं तयोः सिद्धत्वं सर्वकार्यविषयं ज्ञापयति, नत्वेत्वविषयमेवेत्यर्थः । भाष्ये—तथोश्चापीति । चेन स्ध्वोश्चेत्यर्थः । 'झली'ति मण्डूकप्लुत्या संबध्यते, भसादिव्यावृत्त्यर्थं, झषन्तस्येत्यनुवृत्तिरपि दधतीत्येतद्व्यावृत्त्यर्था । झषन्तत्वान्यथानुपपत्त्येति । सर्वत्र स्थानिवद्भा-

† तै० सं० ५. १. ५. ५. ‡ तै० सं० १. १. १३. १. * ८. २. ३७. + ८. ४. ५४. × ८. २. ६. †† ६. ४. ११२. ** १. १. ५८.

तथोश्चापि ग्रहणं शक्यमकर्तुम्। कथम्? 'झलि झषन्तस्ये'त्युच्यते तथोश्चाऽयं झलि झषन्तो भवति नान्यत्र।

अथाप्येतन्नास्ति 'पूर्वत्रासिद्धे न स्थानिव'दिति, एवमपि नैवाऽर्थोऽनुकर्षणार्थेन चकारेण, नापि तथोर्ग्रहणेन। आनन्तर्यमिहाश्रीयते—'झलि झषन्तस्ये'ति। क्वचिच्च सन्निपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यम्, क्वचिन्नैव सन्निपातकृतं नापि शास्त्रकृतम्। लोपे सन्निपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यम्, अलोपे नैव सन्निपातकृतं नापि शास्त्रकृतम्। यत्र कुतश्चिदेवानन्तर्यं तदाश्रयिष्यामः।

**झषस्तथोर्धोऽधः ॥ ८ । २ । ४० ॥**

'अध' इति किमर्थम्? धत्तः, धत्थः। 'अध' इति शक्यमकर्त्तुम्। कस्मान्न भवति—धत्तः धत्थ इति? जश्त्वे× योगविभागः करिष्यते। इदमस्ति दधस्तथोश्च [ ८. २. ३८ ] इति। ततो वक्ष्यामि—'झलां जशः'। झलां जशो भवन्ति दधस्तथोः। ततः 'अन्ते'। अन्ते च झलां जशो भवन्तीति। तत्र जश्त्वे कृतेऽझषन्तत्वान्न भविष्यति।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये अष्टमस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम्।

---

प्र०–त्वान्यथानुपपत्त्या श्रुतिकृतमानन्तर्यमाश्रीयते। स्थानिवत्त्वकृतं तु व्यवधानं वचनादप्रतिबन्धकमित्यर्थः।

झषस्त०। तत्र जश्त्व इति। 'पूर्वत्राऽसिद्ध'मिति भष्भावे जश्त्वस्याऽसिद्धत्वात् झषन्तत्वं। धत्वे तु परस्मिन्सिद्धं जश्त्वमिति धत्वाऽभावः।

इत्युपाध्यायजैय्यटपुत्रकैयटकृते महाभाष्यप्रदीपेऽष्टमाध्यायस्य द्वितीय पादे प्रथममाह्निकम्।

---

उ०–षादिति भावः। श्रुतिकृतमिति। तेन 'दधासी'त्यादौ न। एवं 'तथोश्चे'ति प्रत्याख्यातम्।

झषस्त०। यदि दधस्तथोर्जश्त्वं विधीयते तदाऽझषन्तत्वात् 'धत्त'इत्यादौ भष्भावो न स्यादत आह—पूर्वत्रेति।

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योतेऽष्टमाध्यायस्य द्वितीये पादे प्रथममाह्निकम्।

---

× ८. २. ३९.

## रदाभ्यां निष्ठातो नः पूर्वस्य च दः ॥ ८ । २ । ४२ ॥

रदाभ्यामिति किमर्थम् ? चरितं मुदितम् । ननु च 'रदाभ्या'मित्युच्यमानेऽप्यत्र प्राप्नोति । अत्रापि रेफदकाराभ्यां परा निष्ठा । न रेफदकाराभ्यां निष्ठा विशेष्यते । किं तर्हि ? तकारो विशेष्यते—'रेफदकाराभ्यामुत्तरस्य तकारस्य नो भवति स चेन्निष्ठाया' इति ।

अथ पूर्वग्रहणं किमर्थम् ?

**निष्ठादेशे पूर्वग्रहणं परस्यादेशप्रतिषेधार्थम् ॥ १ ॥**

निष्ठादेशे पूर्वग्रहणं क्रियते परस्यादेशो मा भूदिति । भिन्नवद्भ्याम् भिन्नवद्भिः ।

**पञ्चमीनिर्दिष्टाद्धि परस्य ॥ २ ॥**

'पञ्चमीनिर्दिष्टाद्धि परस्ये'ति† परस्य प्राप्नोति ।

---

प्र०— रदा० । विचारस्य सद्भावादत्र प्रत्युदाहरणोपन्यासः । अत्र प्राप्नोतीति । निष्ठेत्यसमस्तं लुप्तषष्ठीकं पदं, तेन रदाभ्यां परा या निष्ठा तस्यास्तकारस्य नत्वमिति सूत्रार्थाश्रयणात् । न रेफेति । 'निष्ठात' इति समासनिर्देशः । तत्र निष्ठाया उपसर्जनत्वाद्विशेषणेनाऽसम्बन्धः । प्रधानस्य तु तकारस्य सम्बन्धः ।

अथेति । 'भिन्नवद्भ्या'मित्यादौ निष्ठादकारस्य बहिरङ्गत्वाल्लाक्षणिकत्वाच्च नत्वाऽभावात्पूर्वस्यैव भविष्यतीति प्रश्नः । निष्ठादेश इति । असति पूर्वग्रहणे पाठक्रमे निष्ठा प्रत्यासन्नेति तद्कारस्यैव नत्वेन भाव्यं नाऽन्यस्येति बहिरङ्गत्वलाक्षणिकत्वयोरहेतुत्वम् । किञ्च—पदस्येत्यधिकारात्पदावयवस्य दस्य नत्वविधानाद् बहिरङ्गत्वं नास्ति । केवलस्य च वर्णस्यानुपदेशाद्वर्णग्रहणेषु लक्षणप्रतिपदोक्तपरिभाषाया अव्यापारः । पंचमीनिर्दिष्टादिति । यद्यपि प्रत्यासत्तिर्नापेक्ष्यते तथापि रदाभ्यां परस्य दस्य नत्वेन भाव्यमिति सामर्थ्यान्निष्ठादकारस्यैव नत्वप्रसङ्गः ।

---

उ०— रदाभ्यां निष्ठा० । भाष्ये प्रत्युदाहरणोपन्यासोऽनर्थक इत्यत आह—विचारस्येति । ननु समासे गुणभूतनिष्ठापदस्य विशेषणसंबन्धाऽयोगेना'ऽत्र प्राप्नोती'त्यसङ्गतमत आह—निष्ठेतीति । ननु पूर्वग्रहणाऽभावे रदाभ्यां निष्ठातस्य नो दस्य च प्रत्यासत्त्या निष्ठाया एवेत्यर्थेन रदाभ्यां परस्य दस्य निष्ठासंबन्धिन एव संभवेन च भिन्नवद्भ्यामित्यादौ दोषोऽत आह—भिन्नवद्भ्यामित्यादाविति । अहेतुत्वमिति । वाक्यार्थबोधकालिकप्रत्यासत्तिन्यायेन तयोर्बोध इति भावः । वस्तुतस्तयोः प्रसक्तिरेव नास्तीत्याह—किंचेति । त्रिपाद्यां बहिरङ्गपरिभाषाऽभावाच्चेत्यपि बोध्यम् केवलस्यचेति । साक्षादुच्चारणेन बोधितं हि प्रतिपदोक्तम्, अनुमेयं च लाक्षणिकं, न च दकारादिस्तथा समुदायघटकत्वेनैवोच्चारणेन तस्य सर्वथानुमेयत्वादिति भावः । इदमौत्सूत्रस्थभाष्यविरुद्धम् । नापेक्ष्यते इति । लक्ष्यानुरोधादिति भावः । तत्पुरुषे क्षैतेः संग्रहं कार्तिर-

---

† १. १. ६७.

**वृद्धिनिमित्तात्प्रतिषेधः ॥ ३ ॥**

वृद्धिनिमित्तात्प्रतिषेधो वक्तव्यः । किं प्रयोजनम् ?

**प्रयोजनं कार्तिक्षैतिफौल्लयः ॥ ४ ॥**

कार्तिरिति वृद्धौ कृतायां‡ 'रदाभ्या'मिति नत्वं प्राप्नोति । क्षैतिरिति वृद्धौ× कृतायां 'क्षियो दीर्घात्' [ ८. २. ४ ] इति नत्वं प्राप्नोति फौल्लिरिति वृद्धौ× कृतायामुदुपधत्वसन्नियोगेन लत्वमुच्यमानं+ न प्राप्नोति ।

अथोच्यमानेऽपि प्रतिषेधे 'वृद्धिनिमित्ता'दिति कथमिदं विज्ञायते—वृद्धिरेव निमित्तं वृद्धिनिमित्तं, वृद्धिनिमित्तादिति । आहोस्विद्वृद्धिर्निमित्तमस्य सोऽयं वृद्धिनिमित्तः, वृद्धिनिमित्तादिति । किं चातः ? यदि विज्ञायते वृद्धिरेव निमित्तं वृद्धिनिमित्तं वृद्धिनिमित्तादिति क्षैतिः सङ्गृहीतः कार्तिरसङ्गृहीतः । अथ विज्ञायते वृद्धिर्निमित्तमस्य सोऽयं वृद्धिनिमित्तो वृद्धिनिमित्तादिति कार्तिः सङ्गृहीतः क्षैतिरसङ्गृहीतः । उभयथा च फौल्लिरसङ्गृहीतः । यथेच्छसि तथाऽस्तु ।

अस्तु तावद्वृद्धिरेव निमित्तं वृद्धिनिमित्तं वृद्धिनिमित्तादिति । ननु चोक्तं—'क्षैतिः सङ्गृहीतः कार्तिरसङ्गृहीत' इति । कार्तिश्च संगृहीतः । कथम् ? वृद्धिर्भवति गुणो भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तते ।

---

प्र०- क्षैतिरिति । वृद्धिरेवाऽत्र नत्वस्य निमित्तं, 'क्षियो दीर्घा'दिति वचनात् । कार्तिरिति । नत्वस्याऽऽकारो न निमित्तं, किंतु रेफ इति प्रतिषेधो न प्राप्नोति । उभयथेति । न हि वृद्धिर्लत्वस्य निमित्तं नापि वृद्धिहेतुकात्परो निष्ठातकारः । न चाऽत्र लत्वनिषेध इष्यते । रफशिरा इति । ननु चाऽक्तरूपस्याऽक्तपरिमाणस्य च वृद्धिसंज्ञाविधानात्कथमारित्यस्य वृद्धिसंज्ञा । अथ पूर्वान्तत्वाद्रेफस्य वृद्धिग्रहणेन ग्रहणमित्युच्यते तदा किमनेनोक्तेन—'रेफशिरा गुणवृद्धिसंज्ञक' इति । यद्यपि प्रसज्यमानोऽण् रपरो न भवेदपि तूत्तरकालं रपरत्वं विधीयते तथापि तद्भक्तत्वात्कार्तिः

उ०-संग्रहं च दर्शयति—वृद्धिरेवेत्यादिना । बहुव्रीहिपक्षे क्षैतौ वृद्धिरेव ऐकारो नतु वृद्धिनिमित्तक इति तदसङ्ग्रहः । नहीति । उदुपधत्वमेव हि तस्य निमित्तं, न वृद्धिः । बहुव्रीहावप्यसंग्रहं दर्शयति—नापीति । यथा कार्तिरित्यत्र वृद्धिनिमित्ताद्रेफात्परो णकारो नैवमिहेत्यर्थः । नचात्रेति । एवं च फौल्लिरनेन निषेधेनाऽसंगृहीत इत्यर्थः । अक्तरूपस्य—आ इत्येवं रूपस्य । अक्तपरिमाणस्य—द्विमात्रस्य, नत्वर्द्धतृतीयमात्रस्य । एवं च रेफशिरस्कस्य वृद्धिसंज्ञकत्वाऽभावात्कथं कार्तौ प्रतिषेधप्राप्तिरिति भावः । अथेति । एवं च वृद्धिग्रहणेन ग्रहणाद्वृद्धिसंज्ञकत्वव्यवहार इति भावः । किमनेनोक्तेनेत्युक्तं, तदुक्तेः फलं स्पष्टयति—यद्यपीत्यादिना । एवं सतीति । प्रसज्यमानोऽण्रपर इत्येव तत्र सिद्धान्तस्थितपक्षस्तदनुसारेण 'रेफशिरा' इत्याद्युक्तमिति भावः । यद्यपि रेफो निमित्तं, न

---

‡ ४. १. ९५; ७. २. ११७. × ४. १. ९५; ७. २. ११७. + ८. २. ५५.

अथवा पुनरस्तु—वृद्धिनिमित्तमस्य सोऽयं वृद्धिनिमित्तः, वृद्धिनिमित्तादिति। ननु चोक्तं—'कार्तिः सङ्गृहीतः क्षैतिरसङ्गृहीतः' इति। क्षैतिश्च संगृहीतः। कथं ? यत्तद्वृद्धिशास्त्रं× तस्मिन्वृद्धिशब्दो वर्तते। स तर्हि प्रतिषेधो वक्तव्यः ?

न वा बहिरङ्गलक्षणत्वात् ॥ ५ ॥

न वा वक्तव्यः। किं कारणम् ? 'बहिरङ्गलक्षणत्वात्' बहिरङ्गा वृद्धिरन्तरङ्गं नत्वम्। 'असिद्धं बहिरङ्गमन्तरङ्गे'। एवं च कृत्वा लत्वमपि सिद्धं भवति फौल्लिरिति।

ल्वादिभ्यः ॥ ८। २। ४४ ॥

ऋकारल्वादिभ्यः क्तिन्निष्ठावत् ॥ १ ॥

ऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवतीति वक्तव्यम्। कीर्णिः, गीर्णिः। लूनिः, धूनिः।

दुग्वोर्दीर्घश्च ॥ २ ॥

दुग्वोर्दीर्घश्चेति वक्तव्यम्। आदूनः, विगूनः।

पूञो विनाशे ॥ ३ ॥

पूञो विनाश इति वक्तव्यम्। पूना यवाः। विनाश इति किमर्थम् ? पूतं धान्यम्।

---

प्र०—संगृहीत एव। एवं तर्हि स्थितपक्षप्रदर्शनात्पूर्वोक्तदोषाऽभावः। यत्तदिति। एवं प्रतिषेधस्य व्यापकत्वाश्रयणादनुग्रहो भवतीति गौणः शब्दार्थ आश्रीयते। फौल्लिसाधारणं परिहारं ब्रवीति—न वेति।

ल्वादिभ्यः। कीर्णिरिति। कॄगॄपूर्वाणि रूपाणि। दुग्वोरिति। 'दु द्रु गतावित्यस्य दोर्ग्रहणं न तु 'टुदु उपतापे' इत्यस्य सानुबन्धकत्वात्। पूना इति। अनेकार्थत्वाद्धातूनां पूञ् विनाशार्थः। सिनो ग्रास इति। बन्धनक्रियायामानुकूल्यात्तत्कर्माऽपि ग्रासः कर्तृत्वेन विवक्ष्यते।

---

वृद्धिविशिष्टा, तथापि अवयवद्वारा सैव निमित्तमिति बोध्यम्, ननु गौणमुख्यन्यायेन कथमस्य ग्रहणमत आह—एवं प्रतिषेधस्येति।

ल्वादिभ्यः। ऋकारेति दीर्घग्रहणं, नत्वस्यैवायमतिदेशो न कार्यान्तरस्य। तेन पूनिरित्यादौ 'पूङश्छन्दसी'तीड्विकल्पो न। न तु टुदु इति। दूने तदर्थस्यैव प्रतीतेरिदं चिन्त्यम्। 'पूञ्विनाशार्थे' इति पाठः पूङिति त्वपपाठः। तत्र पाठे 'चोःकु'रिति कुत्वं वा। बन्धनक्रियायामिति। यदा बध्यमानः पिण्डीक्रियमाणो ग्रासो दध्यादिव्यञ्जनवशात्तत्रानुकूल्यं प्रतिपद्यते तदा कर्मणः कर्तृत्वेऽयं प्रयोगः। प्रत्युदाहरणे—पाशेनेति करणे तृतीया।

---

× ७. २. ११७; ११४.

## सिनोतेर्ग्रासकर्मकर्तृकस्य ॥ ४ ॥

सिनोतेर्ग्रासकर्मकर्तृकस्येति वक्तव्यम् । सिनो ग्रासः । ग्रासकर्मकर्तृकस्येति किमर्थम् ? सिता पाशेन सूकरी ।

## क्षियो दीर्घात् ॥ ८ । २ । ४६ ॥

दीर्घादिति किमर्थम् ? अक्षितमसि† मा मे क्षेष्ठाः । दीर्घादिति शक्यमकर्तुम् । कस्मान्न भवति—अक्षितमसि मा मे क्षेष्ठा इति ? निर्देशादेवेदमभिव्यक्तं दीर्घस्य ग्रहणमिति । यदि ह्रस्वस्य ग्रहणं स्यात् 'क्षे'रित्येव ब्रूयात् । नाऽत्र निर्देशः प्रमाणं शक्यं कर्तुम् । यथैवाऽत्राऽप्राप्ता विभक्तिरेवमियङादेशोऽपि । नाऽत्राऽप्राप्ता विभक्तिः । सिद्धाऽत्र विभक्तिः 'प्रातिपदिका'दिति‡ । कथं प्रातिपदिकसंज्ञा ? 'अर्थवत्प्रातिपदिक'मिति× ।

ननु चाऽधातुरिति× प्रतिषेधः प्राप्नोति । नैष धातुर्धातोरेषोऽनुकरणम् । यद्यनुकरणमियङादेशो+ न प्राप्नोति । प्रकृतिवदनुकरणं भवती'तीयङादेशो भविष्यति । यदि 'प्रकृतिवदनुकरणं भवती'त्युच्यते स्वाद्युत्पत्तिर्न प्राप्नोति । एवं तर्ह्यातिदेशिकानां स्वाश्रयाण्यपि न निवर्तन्ते अथाप्येतन्नास्ति

प्र०— क्षियो० । अक्षितमिति । क्षयः क्षितमिति भावे क्तः । भावश्च ण्यदर्थ इति दीर्घाऽभावान्नत्वाऽभावः । क्षेरिति । इयङादेशात्परत्वाद्घेर्ङितीति गुणस्य न्याय्यत्वात् । नात्र निर्देश इति । न हीयङादेशाद्दीर्घस्य ग्रहणं प्रत्येतुं शक्यते, इयङ्निमित्तस्य विभक्तेर्दुर्लभत्वात्ततोऽप्राप्ता यथा विभक्तिः सौत्रत्वान्निर्देशस्य भवत्येवं ह्रस्वस्यापीयङादेशः स्यादिति दीर्घग्रहणमर्थवत् । नैष धातुरिति । क्रियावाचिनो धातुसंज्ञाविधानसामर्थ्यान्निर्देशे चाऽक्रियावाचित्वात् । प्रकृतिवदिति । अर्थभेदादनुकार्यानुकरणयोर्भेदाद्वाचनिकः कार्याऽतिदेशः । स्वाद्युत्पत्तिर्नेति । अधातुरिति प्रकृतेः प्रातिपदिकसंज्ञानिषेधादनुकरणस्यापि तत्प्रसङ्गात् । आतिदेशिकानामिति । अतिदेशः प्रयोजनं येषां तान्यातिदेशिकानि । अतिदेशभाञ्ज्युच्यन्ते । ननु यदतिदेशकार्येणाऽविरुद्धं स्वाश्रयं कार्यं तन्मा निवृतत्, यत्तु

उ०— क्षियो दी० । क्षयः क्षितमिति । यदा त्वकर्मकत्वात्कर्तरि क्तः, तदाऽऽकोशार्थयोर्वा क्षियो वृत्तिस्तदा दीर्घग्रहणाभावादस्योदाहरणं बोध्यम् । ननु विभक्त्युत्पत्त्यभावे तदर्थमेव यत्नः कार्यः, इयङादेशस्तु दीर्घनिर्देशे प्रमाणमेवेत्यत आह—ततोऽप्राप्तेति । एवं च सन्देहनिवृत्तये 'दीर्घा'दितीति भावः । ननु 'क्षी'त्यस्य गणे पाठाभावान्न धातुत्वमत आह-नैषेति । निर्देशे स्वरूपपरत्वादिति भावः । निषेधादिति । पर्युदासपक्षेऽपि आनुमानिको निषेधोऽस्त्येव तात्पर्यविषयभूत इति भावः । अतिदेशः प्रयोजनमिति । येषामतिदेशनिमित्तकार्यं निष्पन्नं तानीत्यर्थः । तदाह—अतिदेशभाञ्जीति । यत्तु विरुद्धमिति । प्राति-

† ६. ४. ६०. ‡ ४. १. १; २. × १. २. ४५. + ६. ४. ७७.

'आतिदेशिकानां स्वाश्रयाण्यपि न निवर्तन्ते' इत्येवमपि न दोषः । अवश्यमत्र सर्वतो नैर्देशिकी विभक्तिर्वक्तव्या । तद्यथा—'नेर्विशः' [ १. ३. १७ ] 'परिव्यवेभ्यः क्रियः' [१८] 'विपराभ्यां जेः' [१९] इति । अथाप्येतन्नास्ति 'प्रकृतिवदनुकरणं भवती'त्येवमपि न दोषः । धातोरजादौ यद्रूपं तदनुक्रियते ।

---

प्र०–विरुद्धं तत्कथं न निवर्त्तेत ? एवं तर्ह्यधातुरिति पर्युदासो न प्रसज्यप्रतिषेध इत्यातिदेशिकस्य कार्यस्याऽभावाद्धातोरन्यत्वात् स्वाश्रया प्रातिपदिकसंज्ञा प्रवर्तते, प्रसज्यप्रतिषेधे तु निषेध एवातिदेशिकः स्यात् । इयङादेशस्त्वातिदेशिको धातोर्विधीयमानत्वाद्भवति, स च दीर्घस्यैवेति दीर्घग्रहणमनर्थकम् । अथापीति । यद्यप्यधातुरिति प्रसज्यप्रतिषेध इति भावः । अवश्यमिति । यस्मात्प्रातिपदिकसंज्ञानिषेधादप्राप्ता यस्माच्चोत्पन्ना लुप्ता तस्मात्सर्वस्मादित्यर्थः । नेर्विश इति । 'ने'रिति लुप्तविभक्तिकाऽव्ययानुकरणान्निर्देशाऽर्था विभक्तिः, विश इति निर्देशादेवाऽप्राप्ता विभक्तिः । इयङ् तु दीर्घानुकरणस्यैवेति दीर्घग्रहणमनर्थकम् ।

अथापीति । इहानुकर्ता कदाचित्सामान्यमकरोति कदाचिद्विशेषम् । तत्र यदा सामान्यमनुक्रियते तदा विशेषनिबन्धनस्य कार्यस्य सामान्येऽभावात्प्रकृतावदृष्टत्वादनुकरणेऽप्यभावः । यदा तु विशेषोऽनुक्रियते तदा तन्निबन्धनं कार्यमनुकरणे प्रवर्तते । तत्र यदा धात्वधातुसामान्यं क्षिमात्रमनुक्रियते तदेयङोऽप्राप्तिरिति 'चिक्षियतु' रित्यादौ कृतेयङादेशस्येदमनुकरणमिति दीर्घादिति कर्त्तव्यम् ।

---

उ०–पदिकत्वं, तद्धि आतिदेशिकतदभावेन विरुद्धम् । प्रसज्यप्रतिषेधे त्विति । वस्तुतः पर्युदासपक्षेऽप्यतिदेशेन धातुत्वे बोधिते धातुभिन्नत्वाऽभावेन प्रातिपदिकत्वाऽभावोऽतिदेशफलमिति तत्प्रवृत्तिरस्त्येव । यद्यप्येतत्साक्षान्न शास्त्रीयं तथापि शास्त्रतात्पर्यविषयं भवत्येव । तद्विरुद्धं च स्वाऽऽश्रयं प्रातिपदिकत्वं न भवेत्, यथाऽपचत्तण्डुलानित्यादौ प्रातिपदिकत्वं नेति वक्तुं शक्यम् । 'अथाप्येतन्ने'ति भाष्यस्याऽयमेवार्थः । 'विरुद्धानि स्वाऽऽश्रयाणि निवर्त्तन्त एवे'ति कैयटोक्तव्याख्या त्वयुक्ता, सामान्यप्रवृत्तभाष्यस्य विनाऽनुपपत्तिमधातुरितिप्रातिपदिकसंज्ञारूपविशेषपरत्वाऽयोगात्, 'आतिदेशिकाना'मित्यादिबहुवचनाऽसङ्गतेश्च । 'ब्राह्मणवत्क्षत्रिय' इत्यादावतिदेशविरुद्धमद्यपानादिनिवृत्तेश्च । विश इति । 'अप्राप्ता विभक्तिर्निर्देशादेवे'त्यन्वयः । अप्राप्तिश्चानुकरणत्वेन धातुत्वादिति भावः । ननु वचने जाग्रति कथं नास्तीत्युच्यतेऽत आह—इहानुकर्त्तेति । सामान्यं—धात्वधातुसाधारणं क्षिरूपमित्यर्थः । विशेषमिति । धातुमात्रमित्यर्थः । अग्रे 'धात्वधातुसामान्यं क्षिमात्र'मिति पाठः । तदेयङोऽप्राप्तिरिति । धातुत्वाऽभावादिति भावः । कर्तव्यमिति । इदमेव दीर्घग्रहणमत्र विभक्तिकरणं चातिदेशाऽनित्यत्वे ज्ञापकमिति तत्त्वम् । 'सामान्यनुकरण'मिति तु चिन्त्यं, फलाऽभावात् । न च 'चिक्षियतु'रित्यादिरूपस्याऽनुकरणे कथं ततः परा निष्ठा, न हि तद्रूपानुकरणेन धातुः प्रत्याययितुं शक्यो नापि 'क्षि' इति रूपमिति वाच्यं, दीर्घादिति सामर्थ्येन क्षिय इति दीर्घविधानसामर्थ्येन च स्वानुकार्यमूलभूतस्यापि ग्रहणज्ञापनान्न दोषः ।

## अञ्चोऽनपादाने ॥ ८ । २ । ४८ ॥

### अञ्चेर्नत्वे व्यक्तप्रतिषेधः ॥ १ ॥

अञ्चेर्नत्वे व्यक्तस्य प्रतिषेधो वक्तव्यः । व्यक्तमनृतं कथयतीति ।

### अञ्जिविज्ञानात्सिद्धम् ॥ २ ॥

नैतदञ्चे रूपम् । अञ्जेरेतद्रूपम् । अञ्चत्यर्थो वै गम्यते । कः पुनरञ्चत्यर्थः ? अञ्चतिः प्रकाशने वर्तते । अञ्चितं गच्छति, प्रकाशयत्यात्मानमिति गम्यते । न वै लोकेऽञ्चितं गच्छतीति प्रकाशनं गम्यते । किं तर्हि ? समाधानं गम्यते । समाहितो भूत्वा गच्छतीति । एवं तर्ह्यञ्चतेरङ्कः, अङ्कश्च प्रकाशनम् । अङ्किता गाव इत्युच्यते, अन्याभ्यो गोभ्यः प्रकाश्यन्ते ।

### अञ्चत्यर्थ इति चेदञ्जेस्तदर्थत्वात्सिद्धम् ॥ ३ ॥

अञ्चत्यर्थ इति चेदञ्जिरप्यञ्चत्यर्थे वर्तते । कथं पुनरन्यो नामाऽन्यस्यार्थे

---

प्र०- अञ्चो० । अञ्चेरिति । प्रकाशनार्थे व्यक्तशब्दे नत्वं प्राप्नोति, न चेष्यते इति वचनम् । अञ्चितं गच्छतीति । गमनक्रियाविशेषणमेतत् । प्रकाशत्वेन च गमनं पूज्यत इति पूजानिबन्धनो नलोपप्रतिषेधः । न वै लोक इति । सर्वस्य गन्तुस्तत्समये तस्य च गमनस्य प्रकाशत्वादिति भावः । समाधानमिति । गमनस्याऽव्याकुलत्वमित्यर्थः । तथा 'नागाश्चाञ्चितगामिन' इति प्रयोगो दृश्यते । गमनस्य च समाधानमेव पूजा । अङ्कश्चेति । प्रकाश्यतेऽनेनेति ल्युट् । 'अङ्क' इत्यत्र तु 'हलश्चे'ति करणे घञ् । 'अङ्क पदलक्षणयोरित्यस्याप्येतद्रूपं भवति । अञ्चेस्त्वङ्क इति न सिध्यति । अङ्किता इति । अङ्कयुक्ताः कृता इत्यर्थः । मत्वन्तादङ्कशब्दात्तत्करोतीति णिचि कृत इष्ठवद्भावान्मतुब्लुकिटिलोपे च रूपम् । अञ्जेरिति । ननु यद्यप्यञ्जिस्त-

---

उ०- अञ्चोऽनपादाने । प्रकाशनेति । 'समक्त'इत्युदाहरणेषु गतिरेवाऽन्वयार्थ इति भावः । समञ्चितमित्यत्र प्रकाशनार्थत्वे पूजार्थत्वाऽभावादञ्चेरिति नलोपनिषेधो न स्यात्, अञ्चेः पूजायामितीट् च न स्यादत आह—प्रकाशत्वेनेति । भाष्ये—'प्रकाशयत्यात्मान'-मित्यादि फलितार्थकथनं, गमनस्य प्रकाशत्वं कर्तुः प्रकाशत्व एव भवतीति भावः ।

प्रतिषेध इति । इट्चेत्यपि बोध्यम् । सर्वस्य गन्तुरिति । एतच्च तदर्थकविशेषण-फलार्थं, नास्ति तेन गमनस्य पूजाप्रतीतिरिति भावः । तत्समये—गमनसमये, सर्वो—गन्ता, तदीयं गमनं च प्रकाशमानमेवेत्यर्थः । पूजेति । पूजाप्रयोजकमिति भावः । 'अञ्चतेरङ्क'

वर्तते । कथमञ्जिरञ्चत्यर्थे वर्तते ? अनेकार्था अपि धावतो भवन्तीति । अस्ति पुनः क्वचिदन्यत्राऽप्यञ्जिरञ्चत्यर्थे वर्तते ? अस्तीत्याह । अञ्जे रञ्जनम्, अञ्जनं च प्रकाशनम् । 'अङ्क्तेऽक्षिणी' इत्युच्यते यत्तत्सितं चाऽसितं चैतत् प्रकाशयति । तथाऽञ्जेर्व्यञ्जनम्, व्यञ्जनं च प्रकाशनम् । यत्तत्स्नेहेन मधुरेण च जडीकृतानामिन्द्रियाणां स्वस्मिन्नात्मनि व्यवस्थापनं स रागस्तद्व्यञ्जनम् । अन्वर्थं खल्वपि निर्वचनं 'व्यज्यतेऽनेनेति व्यञ्जन'मिति ।

## निर्वाणोऽवाते ॥ ८ । २ । ५० ॥

प्र०—दर्थस्तथाप्यञ्चतेः सोर्थो भवतीति तस्य 'व्यक्त'मिति न सिध्यति, 'व्यक्त'मिति प्राप्नोति । एवं तर्हि 'व्यक्त'मित्युक्ते प्रकाशनं न गम्यत इति व्यक्तशब्दप्रकृतिरञ्जिरेव प्रकाशने वर्तते न त्वञ्चिरित्यदोषः । कथं पुनरिति । अर्थान्तरे रूढोऽन्यः—अन्यस्याऽर्थान्तरवाचिनोऽर्थे—कथं प्रवर्तेत इत्यर्थः । अनेकार्था इति । धातुपाठे क्रियावाचित्वप्रदर्शनपरोऽर्थनिर्देशो न तु नियमार्थः । तथा च 'कुर्द खुर्द गुर्द गुद क्रीडायामेवे'त्येवकारः पठितः । अस्ति पुनरीति । अन्यत्र दर्शने व्यक्तशब्देऽपि तदर्थत्वमञ्चेः शक्यते साधयितुं नाऽन्यथेति प्रश्नः । अञ्जनमिति । अज्येते येनाऽक्षिणी तदञ्जनम् । तत्रैतस्याद्रूढिशब्दोऽयम्, रूढिषु च व्युत्पत्तिनिमित्तमेव क्रिया न तु शब्दप्रवृत्तिनिमित्तमित्याशङ्कयाऽरूढिशब्दमुदाहरति । अङ्क्त इति । व्यत्ययेन छन्दस्यात्मनेपदम् । यत्तत्सितं चेति । सिताऽसिते सुतरां विभागेन प्रकाशयतीत्यर्थः । तथेति । व्यज्यतेऽनेन रस इति व्यञ्जनम् । राग इति । रज्यतेऽनेनेति रागो व्यञ्जनमेव । अन्वर्थमिति । यौगिको व्यञ्जनशब्द इत्यर्थः ।

निर्वाणोऽवाते । आवाताभिधान इति । तेन 'निर्वातो वात' इत्यत्रैव नत्वनिषेधो

उ०—इति भाष्यादङ्कपदे लक्षणे चेति धातुरनार्ष इत्यन्ये । टिलोपे चेति । विन्मतोर्लुकि भाष्यकारेण टिलोपस्याऽनिष्टेश्चिन्त्यमिदं, तस्मादङ्कशब्दात्तारकादित्वादितच्प्रत्ययेऽङ्कित इति साध्वित्यन्ये । नन्विति । अनिष्टनिवृत्त्यर्थं वचनमावश्यकमिति भावः । नत्वञ्चिरिति । प्रकाशनार्थाञ्चतेरनभिधानेन निष्ठाऽभाव इति भावः । अर्थान्तर इति । 'अञ्जू व्यक्तिम्रक्षणगति'ष्विति पाठात् । अर्थान्तरेति । प्रकाशनादिवृत्तेः । अन्यत्रेति । अन्यत्राऽदर्शने तु विवादविषये निर्णेतुं न शक्यत इत्यर्थः । अज्येते—प्रकाश्येते इत्यर्थः । अञ्जेः परस्मैपदित्वादाह—व्यत्ययेनेति । व्यज्यतेऽनेनेति । जिह्वाया जडीभावनिराकरणेन रसो व्यज्यत इत्यर्थः । भाष्येऽपि—'इन्द्रिय' शब्देन जिह्वैव । व्यक्तिबहुत्वाद्बहुवचनम् । भाष्ये—स्वस्मिन्नात्मनीति । रसास्वादग्राहकत्वलक्षणे स्वस्वरूपे इत्यर्थः । यौगिक इति । न तु क्रमुकादिवद्रूढ इत्यर्थः ।

निर्वाणोऽवाते । तेनेति । वाते निष्ठान्तेनाभिधेये नेरर्थः । इत्यत्रैवेति । वातेर-

**अवाताऽभिधाने ॥ १ ॥**

अवाताभिधान इति वक्तव्यम् । इहापि यथा स्यात्—निर्वाणोऽग्निर्वातेन । निर्वाणः प्रदीपो वातेनेति ।

**अनुपसर्गात्फुल्लक्षीबकृशोल्लाघाः ॥ ८ । २ । ५५ ॥**

अनुपसर्गादित्युच्यते तत्रेदं न सिध्यति—परिकृशमिति ।

**कृशेः क एष विहित इगुदधात्**

नैतन्निष्ठान्तम् । किं तर्हि ? कृश एष इगुपधात्को विहितः* ।

**स्वरे हि दोषो भवति परिकृशे**

नैवं शक्यम् । इह हि परिकृश इति स्वरे दोषः स्यात् । 'अन्तः' थाथघञ्क्ताजबित्रकाणाम् [ ६. २. १४३; १४४ ] इत्येष स्वरः प्रसज्येत ।

**पदस्य लोपो विहित इति मतम्**

---

प्र०—न तु भावे निष्ठायामिति 'निर्वाणं वातेने'ति भाव्यमिति वार्तिककारस्य दर्शनम् । अन्ये तु वातकर्तृके धात्वर्थे सर्वत्र निषेधमिच्छन्ति—'निर्वातो वातो' 'निर्वातं वातेने'ति । 'निर्वाणः प्रदीपो वातेने'त्यत्र तु वातः करणमिति प्रतिषेधाऽभावः ।

अनुपसर्गात् । यद्यपि फुल्लादयः पचाद्यचीगुपधलक्षणे के च सिध्यन्ति तथापि 'निष्ठा च द्व्यजना'दित्यादिकार्यसिद्धये फुल्लिताद्यनिष्टशब्दनिवृत्तये च निपातनम् । स्वर इति । तनूकरणवृत्तेः कर्मणि क्ते 'गतिरनन्तर' इत्याद्युदात्तं पदं भवति । तनूभवनवृत्तेस्तु कर्त्तरि क्तेऽन्तोदात्तं पदं स्यात् । पदस्येति । गम्यमानाऽर्थत्वादप्रयोग

---

उ०—कर्मकर्त्तरि कर्त्तरि क्तः । अन्ये त्विति । अत्राऽरुचिस्तु भाष्यवार्तिकविरोधः, कर्मान्तरानुपादानाद्वातः करणमित्यपि चिन्त्यम् ।

अनुपसर्गात्फुल्ल० । पचाद्यचीति । फुल्लक्षीबकृशधातुभ्य इत्यर्थः । कृशोऽपीगुपधलक्षणे के कृश इति सिद्धं । ननु निष्ठान्तेऽपि थाथादिस्वरेण भाव्यमिति कः स्वरे दोषोऽत आह—तनूकरणेति । तनूभवनेति । तदर्थेऽकर्मकत्वात्कर्त्तरि क्तः स्यादिति थाथादि-

---

* ३. १. १३५.

एवं तर्हि पदस्य लोपोऽत्र द्रष्टव्यः । पर्यागतः कार्श्येन परिकृशः ।

**जगत्यनूना भवति हि रुचिरा ॥**

**फलेर्लत्वे उत्पूर्वस्योपसंख्यानम् ॥ १ ॥**

फलेर्लत्व उत्पूर्वस्योपसंख्यानं कर्तव्यम् । उत्फुलोऽनृतं कथयति । अत्यल्पमिदमुच्यते उत्पूर्वादिति ।

**उत्फुल्लसंफुल्लयोरिति वक्तव्यम्**

उत्फुल्लः । संफुल्लः ।

कृशेः क एष विहित इगुपधात्, स्वरे हि दोषो भवति परिकृशे ।
पदस्य लोपो विहित इति मतं, जगत्यनूना भवति हि रुचिरा ॥ १ ॥

**नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ॥ ८ । २ । ५६ ॥**

किमयं विधिराहोस्वित्प्रतिषेधः ? किं चातः ? यदि तावद्विधिर्नकारग्रहणं कर्तव्यम् । न कर्तव्यम्, प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' [ ४२ ] इति । तद्वा अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम् । अथ प्रतिषेधो, ह्रीग्रहणमनर्थकं न ह्येतस्माद्विधिरस्ति ।

यथेच्छसि तथास्तु । अस्तु तावद्विधिः । ननु चोक्तं "नकारग्रहणं कर्त-

---

प्र०—एव लोपस्तत्र गमिं प्रति परिरुपसर्गो न तु कृशिमित्यनुपसर्गत्वात्परेर्निष्ठान्त एव कृशशब्दः । अव्ययस्वरेणाद्युदात्तः परिकृशशब्दः, परेर्गतित्वाऽभावात् । जगतीति । येयं परिकृशशब्दस्य व्युत्पत्तिः प्रदर्शिता सा रुचिरा अनूना—परिपूर्णा, रूपे स्वरे च दोषाऽभावात् ।

नुदविद० । किमयमिति । कश्चिद्विधिनाऽर्थी, कश्चिन्निषेधेन, ततो वक्ष्यमाणोऽभिप्रायः । नकारग्रहणमिति । प्रतिषेधे तु नुदादिभ्यो यत्प्राप्नोति तन्न भवतीत्यन्तरेणापि

---

उ०—स्वरेणान्तोदात्तः स्यात्, तच्च नेष्यत इति तनूकरणवृत्तिरेवात्र कृशिः । एवं चाद्युदात्तत्वमेवेष्यते, न च कृशेः कर्तरि के तत्सिध्यतीति भावः । 'कर्तरि के' इति पाठस्तु युक्तः । निष्ठान्त एवेति । एवशब्दः प्रसिद्धौ । कथं पुनरेवं सतीष्टस्वरोऽत आह—अव्ययस्वरेणेति । 'तत्पुरुषे तुल्यार्थे'त्यनेन । गतित्वाऽभावादिति । तेन थाथघञित्यन्तोदात्तत्वं नेति भावः । भाष्ये—पर्यागतः कार्श्येनेति । परिकृशशब्दे कृशशब्दो भावप्रधानः । कृशत्वेन परितः प्राप्त इत्यर्थः । तेन परितः कृश इत्यर्थलाभ इति भावः । जगति—शाब्दव्यवहारे सर्वत्र ।

नुदविदोन्द० । कश्चिदिति । ह्रीधातुः । तस्याऽप्राप्तत्वादिति भावः । कश्चिदिति । तद्व्यतिरिक्तः सर्वः । तेषां प्राप्तत्वादिति भावः । ननु प्रतिषेधपक्षेऽपि निषेध्यसमर्पणाय नकारग्रहणं कर्तव्यमेवेत्यत आह—प्रतिषेधे त्विति । उत्तरसूत्रस्थो नसत्रैव पठनीय इति

व्यम्, न कर्तव्यम्, प्रकृतमनुवर्तते, क प्रकृतम्, रदाभ्यां निष्ठातो नः पूर्वस्य च द इति, तद्वा अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितु"मिति। संबन्धमनुवर्तिष्यते। अथ वा क्रियते न्यास एव। द्विनकारको निर्देशः। 'नुदविदोन्दत्राघ्राह्रीभ्योन्यतरस्यां न ध्याख्यापृमूर्च्छिमदाम् [ ५७ ] इति।

अथ वा पुनरस्तु प्रतिषेधः। ननु चोक्तं 'ह्रीग्रहणमनर्थकं नह्येतस्माद्विधिरस्ती'ति। नानर्थकम्। एतदेव ज्ञापयत्याचार्यो 'भवत्येतस्माद्विधि'रिति यदयं ह्रीग्रहणं करोति।

**वित्तो भोगप्रत्ययोः ॥ ८। २। ५८ ॥**

बहव इमे विदयः पठ्यन्ते। तत्र न ज्ञायते कस्य नित्यं नत्वं कस्य विभाषा*, कस्य प्रतिषेधः, कस्य इडिति। अत उत्तरं पठति—

**यस्य विदेः श्नशकौ 'त'परत्वे तनवचने तदु वा-प्रतिषेधौ।**

श्नविकरणस्य विभाषा, शविकरणस्य प्रतिषेधः।

**श्यन्विकरणान्नविधिश्छिदितुल्यः**

श्यन्विकरणाद्विदेर्नविधिश्छिदिना तुल्यः।

**लुग्विकरणो वलि पर्यवपन्नः।**

लुग्विकरणो विदिर्वलादौ† पर्यवपन्नः। एष एवार्थः—

प्र०—नकारग्रहणं सिध्यति। प्राकरणिकस्य प्रतिषेधविज्ञानादतिप्रसङ्गाऽभावः। द्विनकारक इति। 'वा पदान्तस्ये'ति परसवर्णाऽभावपक्षे एको नकार आदेशो द्वितीयो नञः सम्बन्धी। परसवर्णपक्षे तु 'हलो यमां यमि लोप' इति मध्यमनकारलोपः। एतदेवेति। न ह्यप्रसक्तस्य प्रतिषेधः सम्भवति।

वित्तो भोगप्रत्ययोः। यस्य विदेरिति। 'नुदविदे'त्यत्रोन्दिना रौधादिकेन साहचर्याद्विद विचारण इत्यस्मान्नत्वविकल्पः। यद्यपि नुदिना तौदादिकेन साहचर्यं तथापि शब्दपरविप्रतिषेधादुन्दिरत्र व्यवस्थाहेतुर्न तु नुदिः।

उ०—तात्पर्यम्। नन्वेवं फलयोऽपि न स्युरत आह—प्राकरणिकस्येति। ननु परसवर्णेन त्रयो नकारा इति 'द्विनकारक' इत्ययुक्तमत आह—वा पदान्तस्येति। नन्वतद्भावपक्षेऽपि मध्यमनस्य 'नलोप' इति लोपो दुर्वारः, सौत्रत्वादेति भावः।

वित्तो भो०। श्लोके—यस्य विदेरिति सामान्येन विदिद्वयनिर्देशः। श्नशकाविति। कप्रत्ययःस्वार्थिकः। ययोर्विदो श्नशौ विहितौ तदु तयोस्तशब्दपरत्वे नशब्दसंबन्धिनत्वविधिविषये यथाक्रमं विकल्पप्रतिषेधावित्यर्थः। छिदितुल्य इति। यथा छिदेश्छिन्न इत्यत्र नित्यं

* ८. २. ५६. † ७. २. ६५.

ययोर्विद्योः श्नशावुक्तौ तयोर्नत्वस्य वानञौ ।
ययोस्तु श्यँल्लुकौ ताभ्यां छिदिवच्चेड्वदिश्यते† ॥

अपर आह—

वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दतेः ॥

**भित्तं शकलम् ॥ ८ । २ । ५९ ॥**

'भित्तं शकल'मित्युच्यते तत्रेदं न सिध्यति—भित्तं भिन्नमिति ।

---

प्र०—'विद्लृ लाभे' इत्यस्मात्तु भोगप्रत्यययोर्नत्वनिषेधोऽन्यत्र नत्वम् । 'विद सत्तायां' मित्यस्मात्तु नत्वम् । 'विद ज्ञाने' इत्यस्मात्त्विटा व्यवधानान्नत्वाऽभावः । तौदादिकात्तु 'विभाषा गमहने'ति क्वसौ विकल्पविधानाद्यस्य विभाषेति निष्ठायामिट्प्रतिषेधः । तनवचन इति । तस्य नस्तनः, तस्य वचनमिति समासः । तद्‌ इति । 'त'दिति लुप्तषष्ठीकम् । 'उ' इत्यनर्थको निपातः पादपूरणार्थः । विन्तेरिति । विन्त इति तिङन्तानुकरणात्षष्ठी ।

भित्तं० । भिन्नमिति । शकलवाचिना भित्तशब्देन सामानाधिकरण्याद्भिन्न-

---

उ०—नत्वं तथा विद्यतेरित्यर्थः । पर्यवपन्न इति । इटि सति रूपान्तरं प्राप्त इत्यर्थः । यद्यपि प्रत्ययस्येट् तथापि प्रयोगे धातोरनन्तरं श्रूयमाणत्वात्तदवयवत्वप्रतिभानाद्विदिः पर्यवपन्न इत्युक्तं, तत्र बीजान्याह—नुदेति । शब्दपरविप्रतिषेधादिति । यद्यपि विप्रतिषेधसूत्रे कार्यशब्देन शास्त्रीयं ग्रहीतुमुचितं, तथापि विरोधे परस्य बलवत्त्वदर्शनादत्रापि तथैव कल्पनम् । यद्यप्यचः परस्मिन्निति सूत्रस्थभाष्यरीत्या पूर्वसाहचर्यमन्तरङ्गं तथापि व्याख्यानादेव निर्णयो बोध्यः । एवं 'विभाषागमहनविदविशा'मिति सूत्रेपि बोध्यम् । विद्लृलाभ इति । अस्यैव भोगप्रत्यययोर्वृत्तिसंभवादिति भावः । सत्ताविचारणयोर्हि तदसंभव इति तात्पर्यम् । क्वचित्तु 'विदिर्लाभ'इति कैयटे पाठः । श्यनित्यादि भाष्यं व्याचष्टे—विद सेति । ननु तौदादिकस्याऽनिट्कारिकासु पाठाऽभावात्तस्य कुतो नेडित्यत आह—तौदादिकात्त्विति । तत्र हि व्याख्यानात्तौदादिकस्यैव ग्रहणं नतु ज्ञानार्थलुग्विकरणस्येत्यर्थः । भाष्ये—वानञाविति । विकल्पप्रतिषेधावित्यर्थः । ननु रौधादिकस्य श्तिपा निर्देशे विन्तेरिति भवितव्यं कथं विन्तेरित्युक्तिरत आह—तिङन्तेति । तेन तदर्थो धातुर्लक्ष्यत इति भाव: । भाष्ये—वित्तो भोगेष्विति । भोगग्रहणं प्रत्ययस्याऽप्युपलक्षणम् ।

भित्तं शक० । पक्षान्तरेऽपि समाधिमाह—विशेषोपक्रमेऽपीति । क्रियाप्रवृत्तिनिमि-

---

† "छिदिवच्चेद्न इष्यते" "छिदिवच्चेड्वलीष्यते" इति पाठान्तरे ।

नैष दोषः—सर्वत्रैवाऽत्र भिदिर्विदारणसामान्ये वर्तते, तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः—भिन्नम् किम् भित्तमिति ।

तत्वमभिधायकं चेच्छकलस्याऽनर्थकः प्रयोगः स्यात् ।
शकलेन चाप्यभिहिते न भवति तत्वं निगमयामः ॥

## क्निन्प्रत्ययस्य कुः ॥ ८ । २ । ६२ ॥

प्रत्ययग्रहणं किमर्थं न 'क्निः कु'रित्येवोच्येत ? 'क्निः कु'रितीयत्युच्यमाने वकारस्यैव कुत्वं प्रसज्येत । ननु च लोपे कृते न भविष्यति ।

---

प्र०-शब्दस्याऽपि शकलार्थवृत्तित्वभावात्वाऽप्रसङ्गः । ततश्च भित्तं भित्तमित्येव स्यान्न तु भित्तं भिन्नमिति चोद्यम् । सर्वत्रेति । शकले पटादौ च । विदारणसामान्य इति । ततश्च सामान्यार्थे पदे संस्क्रियमाणे शब्दान्तरप्रयोगसमधिगम्यः शकलाऽर्थो बहिरङ्गत्वान्नत्वाऽभावस्यानिमित्तम् । तत्रावश्यमिति । सामान्योपक्रमे विशेषाऽभिधानमिति भावः विशेपोपक्रमेऽप्यभिधाने भित्तशब्दः शकले रूढ इति भिदिक्रिया केवलं व्युत्पत्तिनिमित्तं न तु प्रवृत्तिनिमित्तम् । अथवा यया विदारणक्रियया शकलं निर्वर्तते तामेव भित्तशब्दोऽन्तर्भावयति, या तु निष्पन्नस्य शकलस्यऽन्या विदारणक्रिया तत्प्रतिपादनायाऽनेकक्रियासम्बन्धसम्भवे क्रियान्तरव्यवच्छेदाय भिन्नशब्दस्याऽप्याविरुद्धः प्रयोगः । तत्त्वमिति । भित्तशब्दशकलशब्दयोः पर्यायत्वाद्युगपदप्रयोग इत्यर्थः ।

क्नि॒न्० । प्रत्ययग्रहणमिति । क्निनः प्रत्ययत्वाऽव्यभिचारात्प्रश्नः । वकारस्यैवेति । प्रत्ययग्रहणे यस्मात्स तदादेस्तदन्तस्ये'ति† वचनाल्लोपापवादो वकारस्यैव कुत्वं

---

उ०-सत्वेऽप्याह—अथवेति । क्रियान्तरव्यवच्छेदायेति । भिन्नमेव भित्तं, नत्वयतिष्ठत इत्यादीत्यर्थः । 'भित्तमिति निपात्यते शकलं तत्त्वेन रूढ्या उच्यते चे'दिति सूत्रार्थः । भाष्ये—तत्वमिति । तत्वशब्देन तद्युक्तो भित्तशब्दो लक्ष्यते । यदि भित्तशब्दः प्रयुज्यते तदा शकलशब्दस्य न प्रयोगः । पर्याययोः सह प्रयोगाऽभावात् । एवं शकलशब्दप्रयोगे भित्तिशब्दस्य न प्रयोग इति तत्त्वभूतं वस्तु निगमयामः—स्थिरीकुर्मः । स्थिरीकरणं हि निगमनं, यथा पञ्चावयवेऽनुमानप्रयोगे 'तस्मादग्निमान् पर्वत' इति । तस्मात्त्रूतोऽयमिति भावः । तत्फलितमाह—भित्तशब्देति ।

क्निन्प्रत्ययस्य० । प्रत्ययग्रहण इति । प्रत्ययपदसत्त्वे [illegible] बहुव्रीहिणा पूर्वस्यैवेति न दोष इति भावः । लोपाऽपवाद इति । 'वेरपृक्तस्ये'ति लोपे प्राप्ते कुत्यारम्भादिति भावः ।

---

† १. १. ७२.

अनवकाशं कुत्वं लोपं बाधेत । सावकाशं कुत्वम् । कोऽवकाशः ? अनन्त्यः । कथं पुनः सत्यन्त्येऽनन्त्यस्य कुत्वं स्यात् ? आचार्यप्रवृत्तिर्ज्ञापयति 'नान्त्यस्य कुत्वं भवती'ति यदयं 'क्विनः कु'रिति कवर्गनिर्देशं करोति, इतरथा हि तद्गुणमेवाऽयं निर्दिशेत् ।

इदं तर्हि प्रयोजनं—येभ्यः क्विन्प्रत्ययो विधीयते तेषामन्यप्रत्ययान्तानामपि पदान्ते कुत्वं यथा स्यात्—मानो अस्राक् । मानो अद्राक्† ।

क्विनः कुरिति वक्तव्ये प्रत्ययग्रहणं कृतम् ।
क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यते ॥ १ ॥

---

प्र०-स्यात् । लोपे कृत इति । अन्तरङ्गो लोपः, कुत्वं तु बहिरङ्गं, पदस्येति विधानात् । अनवकाशमिति । क्विबादिषु सावकाशं लोपं विशेषविहितं कुत्वं बाधेतेति भावः । अनन्त्य इति । क्विन्प्रत्ययापेक्षयाऽनन्त्यः, पदस्य त्वन्त्य इति ज्ञेयम् । 'पदस्ये'ति हि स्थानषष्ठ्या अन्त्येऽल्युपसंहारादन्त्यस्यैव कुत्वेन भाव्यं, यदि तु पदस्येत्यवयवषष्ठी स्यात्तदा घृतस्पृशेत्यादावपि कुत्वं स्यात् । कथं पुनरिति । 'सत्यपि सम्भवे बाधनं भवती'ति लोपं बाधित्वा कुत्वेन भाव्यमिति भावः । यदयमिति । अनेकस्य स्थानिनोऽनेकादेशप्रतिपत्तये वर्गग्रहणं, वकारस्यैव तु स्थानित्वे घकार एव निर्दिश्येत । 'वर्गाणां तृतीयचतुर्थाः' इति शिक्षायां वकारघकारयोर्गुणसाम्यप्रतिपादनात् । इदं तर्हीति । क्विन्प्रत्ययस्तत्प्रकृतिधातूपलक्षणमिति तस्मिन्सत्यसति वा तत्प्रकृतेर्धातोः पदस्य कुत्वं भवति । अस्रागिति । सृजिदृशिभ्यां माङि लुङ्, तिप्, सिच्, 'बहुलं छन्दसी'ति विधानादीडन भवति, हल्ङ्यादिलोपः, 'सृजिदृशोर्झल्यमकिती' त्यमागमः, 'वदव्रजे'ति वृद्धिः, 'बहुलं छन्दस्यमाङ्योगेऽपी'त्यडागमः, 'संयोगान्तस्य लोपः', 'व्रश्चभ्रस्जे'ति षत्वे प्राप्ते कुत्वं, जस्य गः, शस्य खः, 'वावसाने' इति चर्त्वं ककारः ।

---

उ०-अन्तरङ्ग इति । प्रत्ययमात्रापेक्षत्वादिति भावः । त्रैपादिकतयाऽप्यसिद्धं कुत्वमिति बोध्यम् । ननु पदस्येत्यधिकारादलोन्त्यपरिभाषया पदान्तस्यैव कुत्वं स्यादिति कथमनन्त्योऽवकाशः स्यादत आह—क्विन्प्रत्ययेति । ननु पदस्येत्यस्य विशेषणतया सप्युक्तत्वेन कथं स्थानषष्ठी स्यादत आह—यदि त्विति । शिक्षायामिति । दन्त्योष्ठ्यवस्यापि महाप्राणता तत्रोक्तेत्याहुः । धातूपलक्षणमिति । अतद्गुणसंविज्ञानबहुव्रीहिणेत्यर्थः । जस्य ग इति । अस्रागित्यत्र । अद्रागित्यत्राह—शस्य ख इति । 'वर्गाणां प्रथमद्वितीया' इत्यत्र शखयोर्गुण-

---

† ३. २. ५९; ६०.

## अहन् ॥ ८ । २ । ६८ ॥

### रुविधावह्नो रूपरात्रिरथन्तरेषूपसंख्यानम् ॥ १ ॥

रुविधावह्नो रूपरात्रिरथन्तरेषूपसंख्यानम् कर्तव्यम् । अहोरूपम्, अहोरात्रः, अहोरथन्तरं साम ।

## रोऽसुपि ॥ ८ । २ । ६९ ॥

### असुपि रादेश उपसर्जनसमासे प्रतिषेधोऽलुकि ॥ १ ॥

असुपि रादेश उपसर्जनसमासेऽलुकि प्रतिषेधो वक्तव्यः । दीर्घाहा निदाघ इति ।

---

प्र०—'पूर्वत्रासिद्ध'मित्यसिद्धत्वं षत्वे कुत्वस्य नास्ति, प्रत्ययग्रहणसामर्थ्यात्षत्वाद्यपवादत्वात्कुत्वस्य ।

अहन् । रुत्वविधाविति । समासाऽसमासयोर्लुमता लोपाद्रादेशे प्राप्ते रुत्वमुत्वार्थमुच्यते । अहोरूपमिति । अह्नो रूपमिति षष्ठीसमासः । गतमहो रूपं पश्येत्यसमासः । अहोरात्र इति । इकारलोपे कृतेऽप्येकदेशविकृतस्यानन्यत्वाद्रुत्वम् । रात्रग्रहणं तु न कृतं, गतमहो रात्रिरागतेत्यत्रापि रुत्वार्थम् ।

रोऽसुपि । 'असुपि रादेश' इति पर्युदासं मत्वेदमुच्यते—दीर्घाहा निदाघ इति । अत्र च सुप्सदृशो हल्परोऽस्तीति रादेशप्रसङ्गः, रुत्वं चाऽत्र यत्वार्थमिष्यते ।

---

उ०—साम्यप्रतिपादनादिति भावः । षत्वाद्यपवादत्वादिति आदिना जश्त्वम् । 'कुः क्रियत' इति न्यासेन 'इष्ट' इत्यध्याहारेण च बहुव्रीह्यर्थलाभे सिद्धे प्रत्ययग्रहणस्यान्यपदार्थांशे वीप्सागर्भबहुव्रीहिलाभार्थत्वेन विशिष्य तादृशादिविषयकलक्षणोपप्लवेन तद्विषये जश्त्वषत्वयोरवश्यं प्राप्त्या तस्य तदपवादत्वमिति भावः । इदं चिन्त्यं, भाष्यकृता बहुव्रीहिमात्रमूलकताया एव प्रत्ययग्रहणस्योक्तत्वात् । तस्मादुष्णिगञ्चुयुजिक्रुञ्चु कुत्वस्य चारितार्थ्येन न तदपवादत्वमिति । यत्तु क्विन्प्रकृतौ षत्वप्राप्तियोग्येऽपि कृते षत्वे कुत्वस्य चारितार्थ्यं, तस्मात्षत्वे जश्त्वे च कुत्वमिति बोध्यमिति, तन्न, तत्प्रवृत्तिकालेऽवश्यप्राप्तेरेवापवादत्वबीजत्वात् एतदेवोच्यते 'सत्यपि संभवे' इत्यादि ।

अहन् । समासासमासयोरिति । नलोपः प्रातिपदिकेति सूत्रस्थभाष्यप्रामाण्येनास्य समुदायप्रवृत्तिरिति बोध्यम् । लुमतेति । समासे—'सुपो धात्वि'ति । असमासे 'स्वमो'रिति । एकदेशविकृतस्येति । टचः प्राग्वर्तिभागस्येत्यर्थः । 'न लोप' इति सूत्रभाष्ये 'रात्रे'ति पाठो दृश्यते । अत्र चातिदेशिकमहोरात्र इत्येवोदाहृतमिति गतमह्नो रात्रिरित्यादेरनभिधानमित्यन्ये ।

रोऽसुपि । पर्युदासपक्षे दोषान्तरमाह—पर्युदासे चेति । एवं च पश्चाद्दातीति पदा-

**सिद्धं तु सुपि प्रतिषेधात् ॥ २ ॥**

सिद्धमेतत् । कथम् ? 'सुपि प्रतिषेधात्' प्रसज्याऽयं प्रतिषेधः—'सुपि ने'ति* । इहापि तर्हि न प्राप्नोति—अहर्ददाति, अहर्भुङ्क्त इति ।

**लुकि चोक्तम् ॥ ३ ॥**

किमुक्तम् ? 'अह्नो रविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवती'ति† ।

**अम्नरूधरवरित्युभयथा छन्दसि ॥ ८ । २ । ७० ॥**

**छन्दसि भाषायां च प्रचेतसो राजन्युपसंख्यानम् ॥ १ ॥**

छन्दसि भाषायां च प्रचेतसो राजन्युपसंख्यानं कर्तव्यम् । प्रचेतो राजन् । प्रचेतार्‌ राजन् ।

**अहरादीनां पत्यादिषूपसंख्यानम् ॥ २ ॥**

अहरादीनां पत्यादिषूपसंख्यानं कर्तव्यम् । अहर्पतिः, अहःपतिः । [ अहᳲपतिः ] अहर्पुत्रः, अहःपुत्रः । [ अहᳲपुत्रः ] । गीर्पतिः, गीःपतिः । [ गीᳲपतिः ] । धूर्पतिः । धूःपतिः [ धूᳲपतिः ]

**वसुस्रंसुध्वंस्वनडुहां दः ॥ ८ । २ । ७२ ॥**

इह कस्मान्न भवति—पपिवान् तस्थिवानिति ? 'सस्ये'ति× वर्तते ।

---

प्र०—पर्युदासे चाऽहरित्यत्र रुत्वमेव भवति न तु रः । सिद्धं त्विति । प्रत्ययलक्षणेन 'दीर्घाहा निदाघ' इत्यत्र सुप्परत्वाद्रत्वाऽभावः । 'पूर्वत्रासिद्ध'मिति रुत्वास्याऽसिद्धत्वात्पूर्वं नोपधालक्षणो दीर्घः, पश्चाद्रुत्वम् । अहरित्यत्र तु र एव भवति । इहापीति । प्रत्ययलक्षणेन रप्रतिषेधप्रसङ्गः ।

अम्नरूध० । प्रचेता राजन्निति । सकारस्य रेफः, तस्य रो रीति लोपे ढ्रलोप इति दीर्घः । अहर्पतिरिति । रेफस्य रेफो विसर्जनीयबाधनाय पक्षे छन्दोभाषयोर्विधीयते ।

वसुस्रं० । पपिवानिति । सस्येत्यस्याऽननुवृत्तौ नकारस्य दत्वं प्राप्नोति, तदनु-

---

उ०—न्तरसन्निधाने उत्वं स्यादित्यर्थः । रुत्वस्यासिद्धत्वादिति । वस्तुस्थितिप्रदर्शनमेतत् । भाष्ये—लुमता लुप्ते इति । प्रत्यये परतः पूर्वस्य कार्यं न लुमतेति निषेधादिति भावः ।

अम्नरू० । रेफ इति । रुत्वे एव प्राप्ते इति भावः । रेफस्य रेफविधाने फलमाह—रेफस्येति । अहःपत्यादौ पक्षे उपध्मानीयः ।

वसुस्रंसुध्वंस्व० । लोपं बाधित्वेति । संयोगान्तलोपमित्यर्थः । परत्वादिति भावः ।

---

* ६. १. ६८; १. १. ६२. † १. १. ६३.* ‡ ८. २. १४; ६. ३. १११. १—अयं पाठो न सार्वत्रिकः । × ८. २. ६६.

एवमप्यत्र प्राप्नोति । लोपे* कृते न भविष्यति । अनवकाशं दत्वं लोपं बाधेत । सावकाशं दत्वम् । कोऽवकाशः ? पपिवद्भ्यां पपिवद्भिरिति । [ नैषोऽस्त्यस्यावकाशः ]—अत्रापि रुः प्राप्नोति† । तद्यथैव रुं बाधते एवं लोपमपि बाधेत । न बाधते । किं कारणम् ? येन नाऽप्राप्ते तस्य बाधनं भवति, न चाऽप्राप्ते रौ दत्वमारभ्यते, लोपे पुनः प्राप्ते चाऽप्राप्ते च ।

यदि तर्हि 'सस्ये'ति वर्तते—अनडुद्भ्यामनडुद्भिरित्यत्र न प्राप्नोति । वचनादनडुहि भविष्यति । यद्येवम्—

**अनडुहो दत्वे नकारप्रतिषेधः ॥ १ ॥**

अनडुहो दत्वे नकारस्य प्रतिषेधो वक्तव्यः । अनड्वान् ।

**सिद्धं तु प्रतिपदविधानान्नुमः ॥ २ ॥**

सिद्धमेतत् । कथम् ? नुमः‡ प्रतिपदविधानसामर्थ्याद्दत्वं न भविष्यति । यदि तर्हि यद्यदनडुहः प्राप्तं तत्तन्नुमः प्रतिपदविधानसामर्थ्याद् बाध्यते रुत्वमपि न प्राप्नोति—अनड्वांस्तत्रेति+ । नैष दोषः । 'यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते' दत्वं च प्रति नुमः प्रतिपदविधिरनर्थको रोः पुनर्निमित्तमेव ।

प्र०—वृत्तौ तु लोपं बाधित्वा सकारस्य दत्वं प्राप्नोति । लोपे कृत इति । 'पूर्वत्रासिद्ध'मिति दत्वस्याऽसिद्धत्वाल्लोपः । अनवकाशमिति । कार्यान्तरेण सर्वस्य विषयस्याक्रान्तत्वात् । येन नाप्राप्त इति । सर्वविषयव्यापि लक्षणं दत्वेन बाध्यते, न तु सर्वं कार्यं सर्वं वा लक्षणम् । यदि तर्हीति । एकसमासनिर्दिष्टानां वस्वादीनां सर्वेषां विशेषणसंबन्धस्य न्याय्यत्वात् । वचनादिति । एकस्माद्ग्रहणकवाक्यादनेकस्य प्रक्रियावाक्यस्योपप्लवाऽसंभवव्यभिचाराभ्यां च विशेषणसंबन्धादनडुहोऽसंभवात्सस्येति विशेषणेनाऽयोगः । सिद्धं त्विति । यदि नकारस्य दत्वं स्यान्नुमोऽनर्थकः स्याद्विधिरिति हकारस्यैव दत्वं विधीयते । यदि तर्हीति । विधानसामर्थ्यात्सर्वत्राऽविकृतेन नुमा भवितव्यमिति भावः ।

उ०—अभिप्रायमाविष्करोतीदम् । ननु परत्वाल्लोपं बाधित्वा दत्वं स्यादत आह—पूर्वत्रेति कार्यान्तरेणेति । क्वचिद्रुत्वेन, क्वचिल्लोपेन । तत्राऽविशेषादुभयोरपि बाधः स्यादिति भावः । अनडुहोऽसंभवादिति । यद्यपि संनुप्संसोर्धिन्वासस्यनभिधानात्, अत एवानुवृत्तौ पपिवाभिरप्येव भगवता दोषः नादित्तः, एवम्च तयोरपि विशेषणं स्यधंसव्यभिचारात्तथापि उपलक्षणतया तद्विशेषणत्वेऽपि न दोष इत्यभिप्रायः ।

* ८.२.६६. † ८.२.३१. ‡ ७.१.८२. + ८.३.७.

## उपधायां च ॥ ८ । २ । ७८ ॥

किमर्थमिदमुच्यते न 'हली'त्येव‡ सिद्धम् ? न सिध्यति । 'धातो'रिति* तत्र वर्तते, तत्र रेफवकाराभ्यां धातुर्विशेष्यते—रेफवकारान्तस्य धातो'रिति । किं पुनः कारणं पूर्वस्मिन् योगे† रेफवकाराभ्यां धातुर्विशेष्यते ? इह मा भूत्—अग्निर्वायुरिति ।

एवं तर्हि पूर्वस्मिन्योगे यद्धातुग्रहणं तदुत्तरत्र‡ निवृत्तम् । एवमपि 'कुर्कुरः' 'मुर्मुर'इत्यत्रापि प्राप्नोति । एवं तर्ह्यनुवर्तते तत्र धातुग्रहणं, न तु रेफवकाराभ्यां धातुर्विशेष्यते । किं तर्हि इग्विशेष्यते—'रेफवकारान्तस्येको धातो'रिति । एवमपि कुर्कुरीयति मुर्मुरीयतीत्यत्रापि प्राप्नोति । तस्माद्धातुरेव विशेष्यः, धातौ च विशेष्यमाण उपधायां चेति वक्तव्यम् ।

### उपधादीर्घत्वेऽभ्यासजिव्रिचतुर्णां प्रतिषेधः ॥ १ ॥

प्र०- उपधायां च । पूर्वस्मिन्निति । 'र्वोरुपधाया' इत्यत्रेत्यर्थः । उत्तरत्रेति । 'हलि चे'त्यत्र । कुर्कुर इति । पदावयवस्य रेफस्य उपधाया इको दीर्घो विधीयमानोऽत्रापि प्राप्नोति । धात्वधिकारे तु रेफवकारान्तस्याऽधातुत्वान्न भवति । रेफवकारान्तस्येक इति । अन्तशब्दः समीपवाची, रेफवकारयोर्हल्परयोर्य उपधेक् तस्य धात्ववयवस्य दीर्घो विधीयमानो 'मूर्च्छिते'त्यादौ भविष्यति न तु 'कुर्कुर' इत्यादावित्यर्थः । कुर्कुरीयतीति । क्यजन्तस्य धातोरवयव इगिति दीर्घप्रसङ्गः । तस्मादिति । रेफवकारान्यस्य धातोर्हल्परस्योपधाया इको दीर्घो विधीयमानो 'मूर्च्छिते'त्यादौ न प्राप्नोतीति वचनम् । तेन धातोरुपधे यौ रेफवकारौ तयोरुपधाया इको दीर्घः । उपधादीर्घत्व इति । 'जिव्रि' शब्दो 'जीर्यतेः क्रिन् रश्च व' इति व्युत्पन्नः । तत्रोणादिप्रतिषेधश्चेति सिद्धे प्रपञ्चार्थः

उ०- उपधायां च । भाष्ये—हलीत्येवेति । 'गीर्ण'मित्यादिसिद्धये पदावयवरेफान्तस्योपधाया दीर्घ इत्यर्थं मन्यते । पूर्वस्मिन्नित्यस्य हलिचेत्यत्रेत्यर्थेऽग्निरिति उदाहरणाऽसङ्गतिरत आह—र्वोरिति । अत्र धातुग्रहणानुवृत्तौ उत्तरत्राप्यनुवृत्तिः संभाव्येत नान्यथेत्याशयेन प्रश्न इत्यर्थः । नन्विको रेफाद्यवयवत्वमनुपपन्नं, विशेष्याऽसन्निधानात्तदन्तविधेर्दुर्लभत्वं चात आह—अन्तशब्द इति । तेन धातोरित्युपधाग्रहणं, र्वोर्विशेषणं, षष्ठीद्विवचनस्य स्थाने सप्तम्येकवचनं, धातोरित्यनुवर्तमानं वैयधिकरण्येन र्वोर्विशेषणं, प्रकृतमुपधाग्रहणमिको विशेषणं, तच्च र्वपेक्षं पूर्वत्वमाचष्टे इति भावः । धातोरुपधारेफ इति । बहिरङ्गत्वेनाल्लोपस्याऽसिद्धत्वं

‡ ८. २. ७७. * ८. २. ७४. † ८. २. ७६.

उपधादीर्घत्वेऽभ्यासजिव्रिचतुर्णां प्रतिषेधो वक्तव्यः । रियंतुः, रियुः । संविव्यतुः, संविव्युः । जिव्रिः । चतुर्यिता, चतुर्यितुम् ।

**उणादिप्रतिषेधश्च ॥ २ ॥**

उणादीनां च प्रतिषेधो वक्तव्यः । किर्योः गिर्योरिति ।

अभ्यासप्रतिषेधस्तावन्न वक्तव्यः । 'हली'त्युच्यते न चाऽत्र हलादिं पश्यामः । यणादेशे कृते प्राप्नोति । स्थानिवद्भावान्न भविष्यति । प्रतिषिध्यतेऽत्र स्थानिवद्भावो 'दीर्घविधिं प्रति न स्थानिव'दिति* । नैषोऽस्ति प्रतिषेधः । उक्तमेतत्—'प्रतिषेधे स्वरदीर्घयलोपेषु लोपाऽजादेश' इति† ।

जिव्रिप्रतिषेधश्च न वक्तव्यः । 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' । चतुर्यिता चतुर्यितुमिति 'सुपि ने'ति‡ वर्तते । यद्येवं गीर्भ्यां गीर्भिरित्यप्रसिद्धिः+ । न सुपो विभक्तिविपरिणामाद्गीर्भ्यां गीर्भिरित्यदोषः । 'उणादिप्रतिषेधो वक्तव्य' इति, परिहृतमेतत्, उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'ति ।

**अदसोसेर्दादु दो मः ॥ ८ । २ । ८० ॥**

**अदसोऽनोस्रेः ॥ १ ॥**

अदसोऽनोस्रेरिति वक्तव्यम् । किमिदमनोऽस्रेरिति ? अनोकारस्य, असकारस्य, अरेफस्येति । अनोकारस्य—अदोऽत्र । असकारस्य—अदस्यति । अरेफस्य—अदः× । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । क्रियते न्यास एव ।

प्र०–पाठः । चतुर्यितेति । चतुर इच्छतीति क्यच्, तृच्, इट्, अतो लोपे कृते धातोरुपधारेफ इति दीर्घत्वप्रसङ्गः । स्वरेति । 'पूर्वत्राऽसिद्धे न स्थानिव' दिति स्थानिवत्त्वनिषेधाद्दीर्घः प्राप्नोति, तस्मादभ्यासप्रतिषेधो वक्तव्य एवेत्याहुः । न सुप इति । सुपः परो यो हल् तत्परयोर्वोर्दीर्घो न भवतीत्यर्थः ।

अदसोऽसे० । ओकारात्पर इति । सूत्रे तावत्पदानि निर्दिष्टान्युत्तरकालं तु

उ०– [illegible] न, शैषादिकेऽन्तरङ्गे तदप्रवृत्तेः । इत्याहुरिति । 'पूर्वत्रासिद्धे'त्यस्यापि स नियम इति [illegible] भाष्यानाय इत्यत्राऽरुचिः । भाष्ये—सुपिनेति वर्तत इति । आधारत्वविवक्षया सप्तमी । सुब्व्यवधानेऽपि नेत्यर्थ इति भावः । एतेन चतुर्यितेत्यादौ अन्तर्वर्तिसुपो लुका लुप्तत्वेन निमित्तत्वं सुपो व्यवहितत्वेन च दोष इत्यपास्तम् । सुपः पर इति । सप्तम्याः पञ्चम्या विपरिणाम इति भावः ।

अदसोऽसेः० । वार्तिके—अनोस्रेरिति चतुर्णामिति । इकार उच्चारणार्थः । अविद्य-

* १. १. ५८. † १. १. ५८. ‡ ८. २. ७७. + ८. २. ७९. × ८. २. ६६; ८. ३. १५.

अविभक्तिको निर्देशः—'अदस्-ओ' इति। ओकारात्परः प्रतिषेधः पूर्वभूतः†† । ततः सकारः। ततो रेफ इति।

अथ वा नैवं विज्ञायते—'अदसोऽसकारस्ये'ति। कथं तर्हि? अकारोऽस्य सकारस्य* सोऽयमसिः, असेरिति। यद्येवमसुमुयङ्ङिति न सिध्यति, अदद्र्यङ्ङिति प्राप्नोति†। अदमुयङ्ङिति भवितव्यम्—'अनन्त्यविकारेऽन्त्यसदेशस्य कार्यं भवती'ति।

अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत्‡ ।
केचिदन्त्यसदेशस्य नेत्येकेऽसेर्हि दृश्यते ॥

**तत्र पदाधिकारादपदान्तस्याऽप्राप्तिः ॥ २ ॥**

तत्र पदाधिकारादपदान्तस्य न प्राप्नोति+ अमुया अमुयोरिति।

**सिद्धन्तु सकारप्रतिषेधात् ॥ ३ ॥**

सिद्धमेतत्। कथम्? 'सकारप्रतिषेधात्'। यदयमसेरिति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्योऽपदान्तस्यापि भवतीति।

---

प्र०-यथेष्टमभिसंबन्धे लक्ष्यसंस्कारकवाक्यमुपप्लवमानमभिमतमर्थं संपादयति। असेरिति। यत्र सकारस्य त्यदाद्यत्वं क्रियते तत्र मुत्वं नान्यत्रेत्यर्थः। यद्येवमिति। त्यदाद्यात्वाऽभावान्मुत्वाऽप्रसङ्गः। अदमुयङिति। अःसेर्यस्येत्येवमनाश्रयणेऽपि नैवाऽमुमुयङिति भाव्यमित्यर्थः। अदसोऽद्रेरिति। ये—न सिः असिरिति सकारान्तप्रतिषेधमाश्रयन्ति नाऽन्त्यसदेशपरिभाषां, तेऽमुमुयङितीच्छन्ति। यथा 'चलीक्लृप्यत' इति रेफद्वयस्य लत्वम्। अन्त्यसदेशपरिभाषाश्रये त्वदमुयङिति। ये तु त्यदाद्यत्वविषये एव मुत्वमिच्छन्ति ते 'अदद्र्य'ङिति मन्यन्ते। असेर्हीति। अः सेर्यस्य सोऽसिस्तस्येत्यर्थः। यदयमिति। 'अदस्यती'त्यत्र 'नः क्ये'इति नियमाददसोऽपदत्वान्मुत्वं न भविष्यतीति

---

उ०-मानौकारसकाररेफस्याऽदस इत्यर्थः। 'अद'इति विसर्गस्याऽसिद्धत्वाद्रेफान्तम्। भाष्ये—ओकारात्परः प्रतिषेधः पूर्वभूत इति। भूतपूर्वः पूर्वरूपं प्राप्त इत्यर्थः। 'ओ'इति लुप्तषष्ठीकम्, 'सेर्'इति रेफान्तम्, तथैव इकार उच्चारणार्थं इति बोध्यम्। 'असे'रित्यसमर्थसमासः। ओकारसकाररेफान्तस्याऽदसो न मुत्वमित्यर्थः। तदाह—सूत्रे इति। अत एवादोऽनुपदेश इति निर्देशः सङ्गच्छते। अकारोऽस्येति भाष्येण व्यधिकरणबहुव्रीहिरित्युक्तं, तदाह—यत्रेति। त्यदाद्यत्वमित्युपलक्षणमाकारस्यापि, तेनाऽमूदृक् सिद्ध्यति। अदसोद्रेरिति। एवञ्च दन्ते-

---

†† ६. १. १०९. * ७. २. १०२. † ६. ३. ९२. ‡ ८. २. १८; ७. ४. ९०. + ८. १. १६.

उपधादीर्घत्वेऽभ्यासजिव्रिचतुर्णां प्रतिषेधो वक्तव्यः । रियतुः, रियुः । संविव्यतुः, संविव्युः । जिव्रिः । चतुर्यिता, चतुर्यितुम् ।

**उणादिप्रतिषेधश्च ॥ २ ॥**

उणादीनां च प्रतिषेधो वक्तव्यः । किर्योः गिर्योरिति ।

अभ्यासप्रतिषेधस्तावन्न वक्तव्यः । 'हली'त्युच्यते न चाऽत्र हलादिं पश्यामः । यणादेशे कृते प्राप्नोति । स्थानिवद्भावान्न भविष्यति । प्रतिषिध्यतेऽत्र स्थानिवद्भावो 'दीर्घविधिं प्रति न स्थानिव'दिति* । नैषोऽस्ति प्रतिषेधः । उक्तमेतत्—'प्रतिषेधे स्वरदीर्घयलोपेषु लोपाऽजादेश' इति† ।

जिव्रिप्रतिषेधश्च न वक्तव्यः । 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' । चतुर्यिता चतुर्यितुमिति 'सुपि ने'ति‡ वर्तते । यद्येवं गीर्भ्यां गीर्भिरित्यप्रसिद्धिः+ । न सुपो विभक्तिविपरिणामाद्गीर्भ्यां गीर्भिरित्यदोषः । 'उणादिप्रतिषेधो वक्तव्य' इति, परिहृतमेतत्, उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'ति ।

**अदसोऽसेर्दादु दो मः ॥ ८ । २ । ८० ॥**

**अदसोऽनोस्रेः ॥ १ ॥**

अदसोऽनोस्रेरिति वक्तव्यम् । किमिदमनोऽस्रेरिति ? अनोकारस्य, असकारस्य, अरेफस्येति । अनोकारस्य—अदोऽत्र । असकारस्य—अदस्यति । अरेफस्य—अदः× । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । क्रियते न्यास एव ।

---

प्र०–पाठः । चतुर्यितेति । चतुर इच्छतीति क्यच्, तृच्, इट्, अतो लोपे कृते धातोरुपधारेफ इति दीर्घत्वप्रसङ्गः । स्वरेति । 'पूर्वत्राऽसिद्धे न स्थानिव' दिति स्थानिवत्त्वनिषेधाद्दीर्घः प्राप्नोति, तस्मादभ्यासप्रतिषेधो वक्तव्य एवेत्याहुः । न सुप इति । सुपः परो यो हल् तत्परयोर्वोर्दीर्घो न भवतीत्यर्थः ।

अदसोऽसे० । ओकारात्पर इति । सूत्रे तावत्पदानि निर्दिष्टान्युत्तरकालं तु

---

उ०– तु न, औणादिकेऽन्तरङ्गे तदप्रवृत्तेः । इत्याहुरिति । 'पूर्वत्रासिद्धे न'इत्यस्यापि स नियम इति तु भाष्याशय इत्यन्ये[illegible] । भाष्ये—सुपि नेति वर्तत इति । [illegible] [illegible] । सुबन्तावयवयोर्नेत्यर्थ इति भावः । एतेन चतुर्यितेत्यादौ [illegible] [illegible] [illegible] सुपो विशिष्टोपादानेन च दोष इत्यपास्तम् । सुपः पर इति । [illegible] [illegible] विपरिणाम इति भावः ।

अदसोऽनोस्रे० । भाष्ये—अनोऽस्रेरिति चतुर्थादिः । इकार उच्चारणार्थः । अविद्य-

---

* १. १. ५८. † १. १. ५८. ‡ ८. २. ७९. + ८. २. ७६. × ८. २. ६६; ८. ३. १५.

काको वाश्यत इत्यधिकारा निवर्त्तन्ते। दोषः खल्वपि स्याद्यदि वाक्याधिकारः पदाधिकारं निवर्तयेत्। इष्यन्त एवोत्तरत्र पदकार्याणि, तानि न सिध्यन्ति—नश्छव्यप्रशान् [ ८. ३. ७ ] इति॥

पदनिवृत्त्यर्थमिति नैवं विज्ञायते—पदस्य निवृत्त्यर्थं पदनिवृत्त्यर्थमिति। किं तर्हि? पदे निवृत्त्यर्थं पदनिवृत्त्यर्थमिति। वाक्ये यावन्ति पदानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति, इष्यते च वाक्यपदयोरन्त्यस्य स्यादिति, तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थो वाक्याधिकारः॥

अथ टिग्रहणं किमर्थम्?

**टिग्रहणमलोन्त्यानियमे व्यञ्जनान्तार्थम्॥ २॥**

टिग्रहणं क्रियतेऽलोन्त्यनियमे* व्यञ्जनान्तस्यापि यथा स्यात्—अग्निचीऽ३त् सोमसु३त्॥ अस्ति प्रयोजनमेतत्? किं तर्हीति॥

**सर्वादेशप्रसङ्गस्तु॥ ३॥**

प्र०–नाह काक इति। नहि वाक्यग्रहणस्य पदाधिकारनिवृत्तिर्वाच्या यथा काकवाशितस्येत्यर्थः। विरोधाऽभावाच्चाऽशक्यः पदाधिकारो निवर्त्तयितुं, वाक्यस्थपदस्यैव कार्याभ्युपगमादित्याह—दोष इति। नश्छवीति। हन्तीत्यादावपदान्तस्य रुत्वं भवति। नैवमिति। 'पदस्ये'त्यनुवर्तत एव। पदस्य टेः प्लुतो मा भूत्पदवाक्ययोर्यष्टिस्तस्यैव यथा स्यादित्येवमर्थं तु वाक्यग्रहणमित्यर्थः। टिग्रहणमिति। असति टिग्रहणे प्लुतश्रुत्याऽच्परिभाषोपस्थानादचा तदन्तविधौ सत्यजन्तस्यैव वाक्यस्याऽलोऽन्त्यस्येति वचनादन्त्यस्याचो नपुंसकह्रस्व इव प्लुतः स्यात्। टिग्रहणे तु तदुपादानसामर्थ्याट्टिनाऽज्विशेष्यते, नत्वचा टिरिति हलन्तस्यापि प्लुतः सिध्यति। सर्वादेशप्रसङ्गस्त्विति। 'अचश्चे'त्ययमलोन्त्यशेष इति भावः। अच इति वचनादिति। इह तस्याऽनुपस्थानादिति भावः। सर्वादेश इति। हलन्तस्य टेः सर्वस्य स्थान इत्यर्थः।

उ०–निवर्त्तकत्वं दृष्टमित्यत आह—विरोधाभावाच्चेति। भाष्ये—पदे निवृत्त्यर्थमिति। पदे परतः पूर्वपदान्तस्य प्लुतनिवृत्त्यर्थमित्यर्थः। वाक्यान्तस्यैव पदान्तस्य यथा स्यादित्यर्थमिति भावस्तदाह—पदस्य टेरिति। भाष्ये—अलोन्त्यनियमे इति। अलोन्त्यनियमे सति व्यञ्जनान्तस्य न स्यात्तदर्थमित्यर्थस्तदाह—असतीति। सति तु पदावयवटेरवयवस्याऽच इत्यर्थ इति भावः। इह तस्येति। अच इत्यस्याऽलोन्त्यस्येत्यस्य चेत्यर्थः। परस्परविरोधेनोभयोरपि

* १. १. ५२; १. २. २८.

अथ दाद्ग्रहणं किमर्थम् ?

**दाद्ग्रहणमन्त्यप्रतिषेधार्थम् ॥ ४ ॥**

दाद्ग्रहणं क्रियते, 'अन्त्यप्रतिषेधार्थम्'। अलोऽन्त्यस्य मा भूत्—अमुया अमुयोरिति।

**एत ईद्बहुवचने ॥ ८ । २ । ८१ ॥**

**ईत्वं बहुवचनान्तस्य ॥ १ ॥**

ईत्वं बहुवचनान्तस्येति वक्तव्यम्। 'बहुवचन' इतीयत्युच्यमाने इहैव स्यात्—अमीभिः, अमीषु। इह न स्यात्—अमी अत्र, अमी आसते। तर्हि वक्तव्यम् ? न वक्तव्यम्। नेदं पारिभाषिकस्य* बहुवचनस्य ग्रहणम्। किं तर्हि ? अन्वर्थग्रहणमेतत्। बहूनामर्थानां वचनं बहुवचनम्, बहुवचन इति।

**वाक्यस्य टेः प्लुत उदात्तः ॥ ८ । २ । ८२ ॥**

वाक्याधिकारः किमर्थः ?

**वाक्याधिकारः पदनिवृत्त्यर्थः ॥ १ ॥**

वाक्याधिकारः क्रियते 'पदनिवृत्त्यर्थः'। पदाधिकारो† निवर्त्यते। न हि

---

प्र०–किं निषेधेन ? निषेधाभावपदस्याऽप्यदसो मुत्वं भवति—अमुयेति, पदस्याऽपि—अमुष्य अमूभ्यामिति। अन्त्यस्येति। 'अलोऽन्त्यस्ये'ति वचनादमुयेत्यत्र यकारस्योत्वं स्यात्।

एत ईद्बहुवचने। ईत्वमिति। 'कृत्रिमाऽकृत्रिमयोः कृत्रिमे संप्रत्यय' इति वचनात्प्रत्ययस्य बहुवचनस्य ग्रहणेन भाव्यं, ततश्च 'तस्मिन्निति निर्दिष्टे पूर्वस्ये'ति परिभाषोपस्थानाद्बहुवचने परत एकारस्येत्त्वेन भाव्यममीभिरित्यादौ, नत्वमी इत्यत्रेति भावः। नेदमिति। उभयगतिरिह शास्त्रे भवतीति प्रतिपादितं, तत्र व्याप्तिन्यायाश्रयादिहाऽर्थग्रहणम्।

वाक्यस्य टे:०। वाक्यस्थस्यैव पदस्य प्रयोगो न केवलस्येति मत्वाह—वाक्याधिकार इति। पदनिवृत्त्यर्थ इति। पदस्येति यत्प्रस्तुतं तन्निवृत्त्यर्थः।

---

उ०–नार्थद्वयेऽपि सूत्रतात्पर्यं, लक्ष्यानुरोधाच्च व्यवस्था। आचार्यमतभेदाच्च रूपत्रयमपि साध्विति भावः। परे तु 'अमेन'मित्यादिरर्थपक्षोत्तरमदमुयङिति भवितव्यमिति भाष्योक्तेरेवं रूपं भाष्याभिप्रेतम्। अथवेति व्याख्यानान्तरमेवेदं, श्लोकश्लोकपक्षद्वयप्राप्तरूपानुवादमात्रमेकदेशिनः। अतएवादसोऽसेरिति प्रतिषेधं शास्त्रीयमुक्तमित्याहुः।

एत ईत्०। प्रत्ययस्य बहुवचनस्य—तत्संज्ञकस्य। ग्रहणेन भाव्यम्। 'बहुवचनग्रहणे'ति शेषः।

वाक्यस्य टे:०। ननु वाक्यस्थस्यैव पदस्य यथा स्यान्न तु केवलस्येति पदविशेषणार्थं वाक्याधिकारः स्यादत आह—वाक्यस्यस्येति। ततश्चाऽस्याधिकारान्न पदविशेषणार्थं इति भावः। 'प्रविश पिण्डी'मिति केवलस्यापि प्रयोगदर्शनादिदं चिन्त्यम्, अस्याधिकारस्याऽधिकारान्तर-

---

* १. ४. १०१. † ८. १. १६.

काको वाश्यत इत्यधिकारा निवर्तन्ते । दोषः खल्वपि स्याद्यदि वाक्याधिकारः पदाधिकारं निवर्तयेत् । इष्यन्त एवोत्तरत्र पदकार्याणि, तानि न सिध्यन्ति—नश्छव्यप्रशान् [ ८. ३. ७ ] इति ॥

पदनिवृत्त्यर्थमिति नैवं विज्ञायते—पदस्य निवृत्त्यर्थं पदनिवृत्त्यर्थमिति । किं तर्हि ? पदे निवृत्त्यर्थं पदनिवृत्त्यर्थमिति । वाक्ये यावन्ति पदानि तेषां सर्वेषां टेः प्लुतः प्राप्नोति, इष्यते च वाक्यपदयोरन्त्यस्य स्यादिति, तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थो वाक्याधिकारः ॥

अथ टिग्रहणं किमर्थम् ?

**टिग्रहणमलोन्त्यनियमे व्यञ्जनान्तार्थम् ॥ २ ॥**

टिग्रहणं क्रियतेऽलोन्त्यनियमे* व्यञ्जनान्तस्यापि यथा स्यात्—अग्निची३त् सोमसू३त् ॥ अस्ति प्रयोजनमेतत् ? किं तर्हीति ॥

**सर्वादेशप्रसङ्गस्तु ॥ ३ ॥**

प्र०—नहि काक इति । नहि वाक्यग्रहणस्य पदाधिकारनिवृत्तिर्वाच्या यथा काकवाशितस्येत्यर्थः । विरोधाऽभावाच्चाऽशक्यः पदाधिकारो निवर्त्तयितुं, वाक्यस्थपदस्यैव कार्याभ्युपगमादित्याह—दोष इति । नश्छवीति । हन्तीत्यादावपदान्तस्य रुत्वं भवति । नैवमिति । 'पदस्ये'त्यनुवर्तत एव । पदस्य टेः प्लुतो मा भूत्पदवाक्ययोर्यष्टिस्तस्यैव यथा स्यादित्येवमर्थं तु वाक्यग्रहणमित्यर्थः । टिग्रहणमिति । असति टिग्रहणे प्लुतश्रुत्याऽच्परिभाषोपस्थानादचा तदन्तविधौ सत्यजन्तस्यैव वाक्यस्याऽलोऽन्त्यस्येति वचनादन्त्यस्याचो नपुंसकह्रस्व इव प्लुतः स्यात् । टिग्रहणे तु तदुपादानसामर्थ्याट्टिनाऽच्विशेष्यते, नत्वचा टिरिति हलन्तस्यापि प्लुतः सिध्यति । सर्वादेशप्रसङ्गस्त्विति । 'अचश्चे'त्ययमलोन्त्यशेष इति भावः । अच इति वचनादिति । इह तस्याऽनुपस्थानादिति भावः । सर्वादेश इति । हलन्तस्य टेः सर्वस्य स्थान इत्यर्थः ।

उ०—निवर्त्तकत्वं दृष्टमित्यत आह—विरोधाभावाच्चेति । भाष्ये—पदे निवृत्त्यर्थमिति । पदे परतः पूर्वपदान्तस्य प्लुतनिवृत्त्यर्थमित्यर्थः । वाक्यान्तस्यैव पदान्तस्य यथा स्यादित्यर्थमिति भावस्तदाह—पदस्य टेरिति । भाष्ये—अलोन्त्यनियमे इति । अलोन्त्यनियमे सति व्यञ्जनान्तस्य न स्यात्तदर्थमित्यर्थस्तदाह—असतीति । सति तु पदावयवटेरवयवस्याऽच इत्यर्थ इति भावः । इह तस्येति । अच इत्यस्याऽलोन्त्यस्येत्यस्य चेत्यर्थः । परस्परविरोधेनोभयोरपि

* १. १. ५२; १. २. २८.

सर्वादेशस्तु टेः प्लुतः प्राप्नोति। किं कारणम्? 'अच' इति वचनादन्त्यस्य न, 'अन्त्यस्येति' वचनादचो न, उच्यते च प्लुतः, स सर्वादेशः प्राप्नोति॥

**उक्तं वा॥ ४॥**

किमुक्तम्? 'ह्रस्वो दीर्घः प्लुत इति यत्र ब्रूयादच इत्येतत्तत्रोपस्थितं द्रष्टव्य'मिति* ॥ [ वाक्यस्य टेः प्लुतः ]

**प्रत्यभिवादेऽशूद्रे॥ ८। २। ८३॥**

अशूद्र इति किमर्थम्? कुशल्यसि तुषजक!॥ अत्यल्पमिदमुच्यते 'अशूद्र' इति।

**अशूद्रस्त्र्यसूयकेषु॥ १॥**

अशूद्रस्त्र्यसूयकेष्विति वक्तव्यम्। तत्र शूद्र उदाहृतम्। स्त्रियाम्—गार्ग्यहं भोः, आयुष्मती भव गार्गि!। असूयके—स्थाल्यहं भोः, आयुष्मानेधि स्थाली३न्। नैषा मम संज्ञा स्थालीति। किं तर्हि? दण्डिन्यायो मम विवक्षितः।

---

प्र०—उक्तं वेति। द्वितीया षष्ठी 'अच' इति प्रादुर्भाव्यते, तत्र टिनाऽचो विशेषणादच एव स्थाने प्लुतो भवती।

प्रत्यभिवादे०। गार्ग्यहं भो इति। केचिदाहुः—'न स्त्र्यभिवादयते पादोपसङ्ग्रहणान्येव तु करोति'। अन्ये त्वाहुः—'अभिवादयते न तु स्वनाम गृह्णाति। अभिवादप्रत्यभिवादौ च नामगोत्राभ्यामिति स्त्रीप्रतिषेधो न विधेयः'। ये तु स्त्रिया नाम्नाऽभिवादप्रत्यभिवादाविच्छन्ति तन्मतेनाऽयं प्रतिषेधः। नैषा ममेति। असूयकः प्रत्याचष्टे—प्रत्यभिवादवाक्यान्तस्थस्य नाम्नो गोत्रस्य च प्लुत इष्यते नान्यस्येति यौगिकस्य प्लुतो न विधेयः। तत्र प्रत्यभिवादयित्रा स्थालीशब्दं संज्ञां मत्वा प्लुतो विहितः। यदा तूपहासार्थमसूयकमभिक्षिपति तदाऽसौ प्रत्यभिवादं नार्हत्याशीर्वचनं हि प्रत्यभिवादो गृह्यते। प्रतिसम्भाषणमात्रन्तु प्रत्यभिवादं मत्वा वार्तिककृताऽसूयके प्रतिषेध उक्तः।

---

उ०—स्थानादिति भावः। भाष्ये—स सर्वादेशः प्राप्नोतीत्युत्तरम्। तस्मादच इति वक्तव्यमिति दोषो बोध्यस्तदाह—उक्तं वेति। उक्तं वेति 'च' पठितपाठे तु सम्यगेव। स्वर्थे वा वाशब्दः। [illegible]येति। पक्षोपस्थितिपक्ष एव तत्र स्थितो न तु तच्छेषपक्ष इति भावः।

प्रत्यभिवादे०। अभिवादयितारं प्रत्युच्यमानमाशीरूपं कुशलादिप्रश्नरूपं वा वाक्यमात्रं प्रत्यभिवादः। तदाह—भाष्ये—कुशल्यसि तुषजकेति। न स्त्र्यभिवादयते इति। अभिवादाभावे प्रत्यभिवादस्य सुतरामभाव इत्यर्थः। ये त्विति। इदमेव भाष्यसंमतम्। भाष्ये 'वृषी' ति [illegible]। 'आयुष्मानेधि स्थाली३न्' [illegible]। नाम इति। कथम् संज्ञा[illegible]। प्रत्यभिवादं नार्हतीति। विपरीतं [illegible]। आशीर्वचनं हीति। इदं हि [illegible]। प्रतिसंभाषणमात्रमिति।

---

* १. १. २८.

स वक्तव्यः । स्थाल्यहं भोः, आयुष्मानेधि स्थालिन् । न मम दण्डि-न्यायो विवक्षितः । किं तर्हि ? संज्ञा ममैषा । असूयकस्त्वमसि जाल्म न त्वं प्रत्यभिवादमर्हसि भिद्यस्व वृषल ! स्थालिन् ! ॥

भोराजन्यविशां वा ॥ २ ॥

भो राजन्यविशां वेति वक्तव्यम् । देवदत्तोऽहं भोः, आयुष्मानेधि देवदत्त भोः ३ । देवदत्त भोः । भोः ॥ राजन्य—इन्द्रवर्माऽहं भोः, आयुष्मानेधीन्द्र-वर्मा३न् । इन्द्रवर्मन् । राजन्य ॥ विट्—इन्द्रपालितोऽहं भोः, आयुष्माने-धीन्द्रपालिता ३ । इन्द्रपालित ॥

अपर आह—सर्वस्यैव नाम्नः प्रत्यभिवादे भोशब्द आदेशो वा वक्तव्यः । देवदत्तोऽहं भोः, आयुष्मानेधि भोः ३ । आयुष्मानेधि देवदत्ता३ इति वा ॥

इह कस्मान्न भवति—देवदत्त कुशल्यसीति । इह किं चिदुच्यते किंचित्प्र-त्युच्यते । [1]प्रधानमुच्यतेऽप्रधानं प्रत्युच्यते । तत्र प्रधानस्थस्य टिसंज्ञकस्य प्लुत्या

प्र०—शूद्रेऽप्याशीर्वचनरूपप्रत्यभिवादाभावात्प्रतिषेधो न विधेय इति केचिदाहुः । स वक्तव्य इति । अभिवादयित्वा प्रत्यभिवादयित्रैवं वक्तव्य इत्यर्थः । भिद्यस्वेति । कर्म-कर्तर्यात्मनेपदम् । भोराजन्यविशां वेति । भोःशब्दो—भवच्छब्दः, सम्बुद्ध्यन्तो निपातो वा । सर्वेति । नामगोत्रशब्दमन्तरेण प्रत्यभिवादो नास्तीति समाचारे भोःशब्दस्या-ऽसाधुत्वे प्राप्ते वचनम् । इह किं चिदिति । पदस्येति वर्तते तद्विशेषणं प्रत्यभिवाद इति, तेन प्रत्यभ्युद्यमानार्थवाचिनः पदस्य वाक्यान्तस्य टे प्लुत्या भाव्यं नान्यस्येत्यर्थः । प्रधानस्थस्येति । संस्क्रियमाणस्य प्राधान्यं कुशल्यसीति । साध्याया अपि क्रियायाः

उ०—अभिवादयितर्यनुग्रहद्योतकमन्यादृशं वेत्यर्थः । केचिदाहुरिति । अनुग्रहद्योतककुशल-प्रश्नाद्यपि प्रत्यभिवाद इत्यत्राऽरुचिः । कर्मकर्तरीति । स्वयमेव भिन्नो भवेत्यर्थः ।

ननु संबुद्ध्यन्तेन निपातेन वा भोःशब्देन सिद्धे आदेशविधानं व्यर्थमत आह—नामगोत्रेति । एवञ्च सर्वत्रेयं प्राप्तविभाषेति तात्पर्यम् । आमद्यते तु भोःशब्दादेशेऽप्राप्त-विभाषा, इतरयोस्तु प्राप्तविभाषेति बोध्यम् । तेनेति । 'प्रत्यभिवादे' इति विषयसप्तमी । यत्पदं प्रत्यभिवादविषयं साक्षाद्वक्ति तस्य प्लुतः । तच्च नाम गोत्रं वा । अत्र तु नामपदं न वाक्यान्ते इति भावः । ननु क्रियाया एव सर्वतः प्राधान्यमत आह—संस्क्रियमाणस्येति । अभिवादयित्रनुग्रहार्थकत्वात्तस्य तेन तस्य संस्कार्यत्वमिति भावः । साध्याया अपीति । अत-एव शब्दतः प्रधानाया अपीत्यर्थः । भाष्ये—प्रधानमुच्यतेऽप्रधानं प्रत्युच्यते इति । अय-मर्थः—प्रधानं संस्कार्यं देवदत्तादिकं प्रथमत उच्यते । अप्रधानं संस्कारकं कुशल्यसीत्येतत्

१ 'अप्रधानमुच्यते प्रधानं प्रत्युच्यते' पाठान्तरम् ।

भवितव्यं न चाऽत्र प्रधानस्थं टिसंज्ञम् । इहापि तर्हि न प्राप्नोति—आधेयोऽ-ग्नी३र्नाधेया ३ इति† । नैतद्विचार्यते—आधेयो नाधेयोऽग्निश्चेद्भवतीति । किं तर्हि ? इहाऽग्निसाधना क्रिया विचार्यते—आधेयोऽग्निर्नाधेय इति । यद्येवं द्वितीयोऽग्निशब्दस्य प्रयोगः प्राप्नोति । 'उक्तार्थानामप्रयोग' इति न भविष्यति । यद्येवमाधेयशब्दस्यापि तर्हि द्वितीयस्य प्रयोगो न प्राप्नोति—'उक्तार्थानाम-प्रयोगो भवती'ति । नैष दोषः । उक्तार्थानामपि प्रयोगो दृश्यते । तद्यथा—'अपूपौ द्वावानय' 'ब्राह्मणौ द्वावानये'ति ॥

प्र०—संस्कारिकात्वेन विवक्षितत्वादप्राधान्यम् । क्वचित्पाठः—'अप्रधानमुच्यते प्रधानं प्रत्युच्यते' इति । तस्याऽर्थः—अभिवादवाक्ये श्रुतो देवदत्तादिरेव प्रत्युच्यते, कुशल्य-सीत्येतत्तु पूर्वमश्रुतत्वान्न प्रत्युच्यते, किं त्वपूर्वमेवैतदुच्यते । इहापीति । द्रव्यस्य विचार्यमाणत्वात्प्राधान्यं मन्यते । नैतदिति । न ह्याधानाऽनाधानकर्मविशेषविषयो विचारो, नाप्यग्निविशेषविषयः—किमाहवनीयोऽथ दक्षिणाग्निरीति, किं तर्ह्याधानं कर्त-व्यं न कर्तव्यमिति तत्साधनक्रियाविचारः । यद्येवमिति । 'नाधेयोऽग्नि'रित्येवमग्नि-शब्दो निर्देश्यः । उक्तार्थानामिति । अग्निरेव प्रकृतत्वादपेक्ष्यत इत्यर्थः । उक्तार्थानाम-

उ०—प्रत्युच्यते—पश्चादुच्यते । एवञ्च वाक्यान्ते प्रधानस्य टेरभावान्न भवतीति भावः । तद्बीजं तु कैयटेनोक्तमेव । अभिवादवाक्ये इति । अन्यत्र सिद्धस्यैव हि संस्कारार्थमनुवादो युज्यत इति भावः । अतएव संबोधनविभक्त्या निर्देशः । भाष्यस्य—'प्रत्युच्यत' इत्यस्याऽनूद्यत इत्यर्थः । अपूर्वमिति । विधेयत्वादिति भावः । एवञ्चाऽनूद्यमानस्य वाक्यान्तस्थत्वाभावान्न प्लुत इति तात्पर्यम् । अत्र पक्षे 'प्रधानस्यस्ये'त्यस्याऽनूद्यमानस्यस्येत्यर्थः । द्रव्यस्येति । अग्नि-रूपस्येत्यर्थः । एवञ्च तद्वाचिन एव वाक्यान्तस्य टेः प्लुतः स्यान्न तु 'नाधेय' इत्यस्यापीति भावः । विचार्यमाणत्वादिति । द्वयोर्लक्षणं विचारस्तद्विषयत्वादित्यर्थः । न हीति । 'आधेयोऽग्नि'रित्यत्र त्रितयमस्ति, अग्निशब्दवाच्यं द्रव्यं, धातुवाच्या क्रिया, प्रत्ययवाच्यं कर्म । तत्र क्रियाविषय एव विचारो नेतरविषयः । तत्राग्निः किमाधानक्रियाकर्म तत्साध्यत्वा-त्तुतामाधानक्रियाया इति न विचार्यते इत्यर्थः । कोऽग्निराधेय इत्यपि नेत्याह—नापीति । तत्साधनक्रिया—अग्निसाधनाधानक्रिया । आधेयोऽग्निरित्यत्र तु क्रियावाचिनोऽन्त्यपदत्वा-भावात्तदुपलक्षितद्रव्यवाचिनो वाक्यान्तस्याऽग्निपदस्यापि प्लुत इति बोध्यम् । प्रधानस्यस्य प्रधानक्रियोपलक्षितस्यस्य च तेन प्लुतो विधीयते, अत्र चा'धेयोऽग्निर्नाऽऽधेया ३' इति भाष्य-प्रयोग एव मानम् । अन्वर्थप्रत्यायनाय शब्दप्रयोगाच्छब्दान्तरेणोक्ते किमर्थं तत्प्रयोगोऽत

† ८. २. ९७.

## दूराद्धूते च ॥ ८ । २ । ८४ ॥

दूराद्धूत इत्युच्यते दूरशब्दश्चाऽयमनवस्थितपदार्थकः । तदेव हि कंचित् प्रति दूरं कंचित्प्रत्यन्तिकं भवति । एवं हि कश्चित्कंचिदाह—'एष पार्श्वतः करकस्तमानये'ति । स आह—'उत्थाय गृहाण, दूरं न शक्ष्यामी'ति । अपर आह—'दूरं मथुरायाः पाटलिपुत्र'मिति । स आह—'न दूरमिदमन्तिक'-मिति । एवमेष दूरशब्दोऽनवस्थितपदार्थकस्तस्याऽनवस्थितपदार्थकत्वान्न ज्ञायते—'कस्यामवस्थायां प्लुत्या भवितव्य'मिति ॥ एवं तर्हि ह्वयतिनाऽयं निर्देशः क्रियते—'ह्वयतिप्रसङ्गे यद्दूरम्' । किं पुनस्तत् ? यत्र प्राकृतात्प्रयत्नात्प्रयत्न-विशेष उपादीयमाने† सन्देहो भवति, 'श्रोष्यति न श्रोष्यती'ति, तद् दूर-मिहाऽवगम्यते ॥

## हैहेप्रयोगे हैहयोः ॥ ८ । २ । ८५ ॥

---

प्र०-पीति । उक्ताऽर्थाभिमिता उक्तार्थाः सादृश्यादुच्यन्ते, तत्त्वतस्तु यथा वृषवृषभ-शब्दौ भिन्नौ, तथाऽपूपावानय अपूपौ द्वावानयेत्येतौ समुदायावेवार्थवन्तौ लोके प्रयुज्येते । प्रयोगानुसारेण लक्षणव्यवस्थाश्रीयते, तेनोक्तार्थानां प्रयोगेऽव्यवस्था नोद्भावनीया ।

दूराद्धूते च । तदेवेति । दूरस्याऽनवस्थितत्वात्प्लुतस्य विषयविभागो न व्यवतिष्ठत इत्यर्थः । ह्वयतीति । ह्वानक्रियापेक्षं दूरत्वमाश्रीयते न तु श्रोत्रादि-पुरुषापेक्षमित्यर्थः ।

हैहेप्रयोगे हैहयोः । पूर्वेण हूयमानार्थस्य पदस्य वाक्यान्तस्य टेः प्लुतविधाना-

---

उ०-आह—तत्त्वतस्त्विति । यथा वृषवृषभयोरखण्डपदत्वादेऽत्यन्तभेदेऽपि अवयवे ध्वनि-साम्याद्वृषशब्दत्वभ्रमस्तथानयोरत्यन्तभेदेऽपि सादृश्यादवयवे तत्वभ्रम इति न पौनरुक्त्यमिति भावः । नन्वेवं 'वृषो वृषभ' इत्यपि प्रयोगः स्यादित्याशङ्क्य 'स्थितस्य गति'रिति न्यायेन प्रयोगानुसारव्यवस्थेत्याह—प्रयोगेति ।

दूराद्धूते च । ह्वानेति । दूरस्थपुरुषश्रवणाय यदाह्वानमित्यर्थः । दूरादिति । 'दूरा-न्तिकार्थेभ्य' इति पञ्चमी । भाष्ये—यत्र प्राकृतात्प्रयत्नाद्विशेषे अनुपादीयमाने† इति म पाठः । विशेषे—अधिके यत्ने ।

हैहेप्र० । ननु दूराद्धूते हैहयोर्दूराद्धूतेचेति सूत्रान्तरेण सिद्धत्वादिदमनर्थकमित्यत

---

† 'अनुपादीयमाने इति पाठो नागोजीभट्टसम्मतो दृश्यते, स न सङ्गच्छते दूरपरिभाषायाम् ।

हैहेग्रहणं किमर्थम् ?

**हैहेप्रयोगे हैहेग्रहणं हैहयोः प्लुत्यर्थम् ॥ १ ॥**

हैहेप्रयोगे हैहेग्रहणं क्रियते हैहयोः प्लुतिर्यथा स्यात्। देवदत्त है३। देवदत्त हे३। अक्रियमाणे हि हैहेग्रहणे तयोः प्रयोगेऽन्यस्य स्यात् ॥ अथ प्रयोगग्रहणं किमर्थम् ?

**प्रयोगग्रहणमर्थवद्ग्रहणेऽनर्थकार्थम् ॥ २ ॥**

प्रयोगग्रहणं क्रियतेऽर्थवद्ग्रहणेऽनर्थकयोरपि यथा स्यात्। देवदत्त है३। देवदत्त हे३ ॥ अथ पुनर्हैहेग्रहणं किमर्थम् ?

**पुनर्हैहेग्रहणमनन्त्यार्थम् ॥ ३ ॥**

पुनर्हैहेग्रहणं क्रियतेऽनन्त्ययोरपि यथा स्यात्। है३ देवदत्त। हे३ देवदत्तेति ॥

**गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम् ॥ ८ । २ । ८६ ॥**

**गुरोः प्लुतविधाने लघोरन्त्यस्य प्लुतप्रसङ्गोऽन्येन विहितत्वात् ॥१॥**

गुरोः प्लुतविधाने लघोरन्त्यस्य प्लुतः प्राप्नोति। दे३वदत्त। किं कारणम् ? 'अन्येन विहितत्वात्'। अन्येन हि लक्षणेन लघोरन्त्यस्य प्लुतो विधीयते 'दूराद्धूते च [ ८. २. ८४ ] इति।

प्र०—हैहयोर्न प्राप्नोतीति वचनम्। हैहयोः प्लुत्यर्थमिति। अन्यथाऽऽरम्भसामर्थ्यो-दनन्त्यस्यापि हूयमानवाचिन एव प्लुतः स्यात्—देवदत्त है ३ इत्यादौ। अनर्थकयो-रपीति। यदा तु प्राक् सम्बोधनपदं प्रयुज्यते तदा हैहयोर्द्योत्यार्थाऽभावादानर्थक्यं, यदा तु तयोः प्राक् प्रयोगस्तदाऽऽमन्त्रणाभिव्यक्त्यर्थत्वादर्थवत्त्वम्। अनन्त्ययोरपीति। अन्यथा वाक्यस्य टेरित्यधिकारादनन्त्ययोर्न स्यात्।

गुरोः०। गुरोः प्लुतविधान इति। 'अनन्त्यस्यापी'त्यपिशब्देन गुरोः सन्निधानात्स एवाऽन्त्यः समुच्चीयते, तेन यत्र गुरुरन्त्यस्तत्रैव पर्यायः स्याल्लघौ त्वन्त्ये पूर्वेण तस्य स्यादनेन चाऽनन्त्यस्य गुरोरित्यर्थः। न चेति। अपिशब्देन

उ०—आह—पूर्वेणेति। नामगोत्रयोरेव हूयमानार्थवृत्तित्वं, हैहयोस्तु न तदर्थत्वमाभिमुख्य-द्योतकत्वादित्यर्थः। भाष्ये—हैहयोरिति। अतादर्थ्ययोरित्यर्थः। अन्यथेति। 'हैहेप्रयोगे' इत्यनुच्यमाने इत्यर्थः। हे देवदत्तेत्यादौ पूर्वेणैव सिद्धेरिति भावः। आनर्थक्यं व्युत्पादयति—यदेति। द्योत्यार्थाभावादिति। संबोधनेनैवाऽऽभिमुख्यस्य द्योतितत्वादिति भावः। प्रयोग-ग्रहणे तु यथा कथञ्चित्तयोः प्रयोग एव सिद्धे पदस्योच्चारणसामर्थ्याद्धैहयोः प्लुतसिद्धिरित्यर्थः।

गुरोरनृतो०। लघौ त्वन्त्ये इति। तत्र प्लुतयोर्यौगपद्यप्रसङ्ग इत्यर्थः। प्रक्लृप्तिरिति।

**न वाऽनन्त्यस्यापीति वचनमुभयनिर्देशार्थम् ॥ २ ॥**

न वैष दोषः । किं कारणम् ? अनन्त्यस्यापीति वचनमुभयनिर्देशार्थं भविष्यति 'अनन्त्यस्यापि गुरोरन्त्यस्यापि टे'रिति । ननु चैतद् गुर्वपेक्षं स्यात्—अनन्त्यस्यापि गुरोरन्त्यस्यापि गुरोरिति ? नेत्याह । द्व्यपेक्षमेतत्† । अनन्त्यस्यापिगुरोरन्त्यस्यापि टेरिति ॥ अथ प्राग्वचनं किमर्थम् ?

**प्राग्वचनं विभाषार्थम् ॥ ३ ॥**

प्राग्वचनं क्रियते 'विभाषार्थम्' । विभाषा यथा स्यात् ॥

**प्राग्वचनानर्थक्यं चैकैकस्येति वचनात् ॥ ४ ॥**

प्राग्वचनमनर्थम् । किं कारणम् ? 'एकैकस्येति वचनात् । एकैकग्रहणं क्रियते तद्विभाषार्थं भविष्यति ॥ अस्त्यन्यदेकैकग्रहणस्य प्रयोजनम् । किम् ? युगपत्प्लुतो मा भूदिति । अनुदात्तं पदमेकवर्जम् [ ६. १. १५८ ] इति वचनान्नाऽस्ति यौगपद्येन संभवः । असिद्धः प्लुतस्तस्याऽसिद्धत्वान्नियमो न प्राप्नोति । नैष दोषः । यद्यपीदं तत्राऽसिद्धं तत्त्विह सिद्धम् । कथम् । कार्यकालं संज्ञापरिभाष'मिति यत्र कार्यं तत्रोपस्थितं द्रष्टव्यम् । गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्' उपस्थितमिदं भवत्यनुदात्तं पदमेकवर्जमिति । इहापि तर्हि समावेशो न प्राप्नोति—देवदत्ता३* । सिद्धाऽसिद्धावेतौ । यौ हि सिद्धा-

प्र०—प्रकृतद्विः समुच्चीयते न तु गुरुरेवाऽन्त्य इत्यर्थः । विभाषार्थमिति । तेन पक्षे न कस्यचित्प्लुतो भवति । इतरस्तु पक्षेऽनन्त्यस्य प्लुतः पक्षे त्वन्त्यस्य टेरित्येवमर्थं प्राग्ग्रहणमनेनोक्तमिति मत्वाह—प्रागिति । यद्यपीदमिति । यथोद्देशपक्षे । इहापीति । आमन्त्रितस्यादिरुदात्त इत्युदात्तः प्लुतोदात्तत्वेन न समाविशेत्, वर्ज्यमानस्वरप्रसङ्गात् । यदा चाऽऽम एकान्तरमित्यनेन निघातैकश्रुतिनिषेधस्तदेदमुदाहरणम् । सिद्धासिद्धाविति । आमन्त्रितस्यादिरुदात्तः सिद्धः, तस्मिंस्त्वपेक्षिते प्लुतोदात्तोऽ-

उ०—तेन सर्वत्र पर्यायसिद्धिरिति भावः । भाष्ये—उभयनिर्देशार्थमिति । गुर्वगुर्वोरित्यर्थः । इत्येवमर्थमिति । अन्यथोदात्तानुदात्तयोः प्लुतयोः समावेशः स्यादिति वक्ष्यते । भाष्ये—तस्यासिद्धत्वादिति । कार्यकालपक्षेऽपि स्वरितत्वप्रतिज्ञानात्तस्याक्षिपायामप्रवृत्तिः । स्वनितं चेदं षष्ठे, स्वरितो वानुदात्ते इति सूत्रे च भाष्ये । एकदेश्याह—नैष दोष इति । 'यद्यपी'त्यादि भाष्यं 'पूर्वत्रे'त्यत्र व्याख्यातम् । ननु देवदत्त इत्यादावेकश्रुति दूरात्संबुद्धावित्यस्य प्रसङ्गात्कथं पाक्षिकमाद्युदात्तत्वं स्यादत आह—यदा चेति । आम् पचसि देवदत्तेत्यादौ ।

† 'द्व्यपेक्षम्' 'उभयपेक्षम्' इति पाठान्तरे । * १. १. ११८.

वेवाऽसिद्धावेव वा तयोर्नियमः । यस्तर्हि स्वरितः प्लुतस्तेन समावेशः प्राप्नोति—'स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सने' [ ८. २. १०३ ] इति । स्वरितेऽप्युदात्तोऽस्ति† । यस्तर्ह्यनुदात्तप्लुतस्तेन समावेशः प्राप्नोति 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' [ १०० ] इति तस्मात्प्राग्वचनं कर्तव्यम् ॥

**ये यज्ञकर्मणि ॥ ८ । २ । ८८ ॥**

**ये यज्ञकर्मणीत्यतिप्रसङ्गः ॥ १ ॥**

ये यज्ञकर्मणीत्यतिप्रसङ्गो भवति । इहापि प्राप्नोति—ये देवासो दिव्येकादशस्थेति* ॥

**सिद्धं तु ये यजामह इति ब्रूह्यादिषूपसंख्यानम् ॥ २ ॥**

सिद्धमेतत् । कथम् ? ये यजामहेशब्दो ब्रूह्यादिषूपसङ्ख्येयः‡ ।

---

प्र०–सिद्ध इति तदाश्रयो निघातो न भवति । स्वरितेऽपीति । 'अनुदात्तं पदमेकवर्ज'मित्यत्राऽविद्यमानोदात्तमनुदात्तमाश्रीयते । न च पारिभाषिक उदात्तो गृह्यते किं तर्ह्युभयगतिरिह शास्त्र इति धर्मो गृह्यते, स च स्वरितेऽस्तीत्युदात्तस्वरितयोर्यौगपद्याऽभावः । यस्तर्हीति । उदात्तानुदात्तप्लुतयोः समावेशनिवृत्त्यर्थमेकैकग्रहणं, प्राग्ग्रहणं तु पक्षे सर्वेषां प्लुताऽभावार्थम् ॥

---

उ०–अन्ये तु दूरात्संबुद्ध्यभावे इदम्, 'आम एकान्तर'मित्येतद्विषये प्लुताऽप्रवृत्तेस्तत्सूत्रे भाष्ये स्पष्टमुक्तेः । दूराद्धूते इत्यनुवर्तमानमप्यत्र बोधनमात्रोपलक्षणम् । अतएव 'प्रत्यभिवादे' इत्येतद्विषयेऽप्यस्य प्रवृत्तिः, स्पष्टं चेदं वृत्तौ । पादादिस्थस्योदाहरणत्वाच्चात्र न निघात इत्याहुः । तस्मिंस्त्वपेक्षिते इति । प्लुतस्याऽसिद्धत्वे तदेकवाक्यतापन्नस्यानुगत्तं पदमित्यस्याप्यसिद्धत्वान्न निघात इति भावः । भाष्ये—यस्तर्हि स्वरितः प्लुत इति । विहितस्वरितगुणक इत्यर्थः । 'स्वरितमाम्रेडित'मित्यादिभिर्लाघवात्स्वरितगुणमात्रस्यैव विधानात् । एवमनुदात्तं प्रश्नान्तेत्यत्रापि बोध्यमिति केचित् । 'एकं वर्जयित्वा शिष्टमनुदात्तगुणयोगी'ति सूत्रार्थात्स्वरितेऽप्यनुदात्तगुणयोगसत्त्वात्समावेशः स्यादिति भावः । 'अनुदात्त'पदं यौगिकमिति परिहारादयमाह—अनुदात्तं पदमिति । एवं च स्वरितेऽप्युदात्तगुणसद्भावात्र समावेश इति भावः । 'अनुदात्तशब्देनापि पारिभाषिकस्य स्वतंत्रस्याऽच एव ग्रहणं न स्वरितैकदेशस्ये'ति शङ्कां समाधत्ते—न चेति ।

यस्तर्ह्यनुदात्त इति । एतदन्तमेकदेश्युक्तिः । आचार्यस्य तु सर्वप्लुतानां समावेशवारणायैकैकस्येतीत्याशयः । उक्तरीत्या त्रिपाद्यां दोषनिघाताऽप्रवृत्तेः । किञ्च देवदत्तेत्यादौ प्लुताऽसिद्धत्वात्पूर्वं पादादुदात्तत्वे सतः प्लुते तदेकवाक्यतापन्नदोषनिघातो दुर्वारः । तन्मद्भ्युत्तरमस्याऽसिद्धत्वेऽपि दात्यभावात् । भाष्यकृता तु पक्षे एव त्रिपाद्याम—

---

† १. २. ३२. * ऋ० सं० १. १३९. ११. ‡ ८. २. ९१.

## प्रणवष्टेः ॥ ८ । २ । ८९ ॥

'प्रणव' इत्युच्यते कः प्रणवो नाम ? पादस्य वाऽर्द्धर्चस्य वाऽन्त्यमक्षरमुपसंहृत्य तदाद्यक्षरशेषस्य स्थाने त्रिमात्रमोङ्कारं त्रिमात्रमोकारं वा विदधति तं 'प्रणव' इत्याचक्षते ।

अथ टिग्रहणं किमर्थम् ?

### टिग्रहणं सर्वादेशार्थम् ॥ १ ॥

यदा ओकारस्तदा सर्वादेशो यथा स्यात् । यदा ओङ्कारस्तदाऽनेकाल्शित्सर्वस्य [ १. १. ५५ ] इति सर्वादेशो भविष्यति ।

---

प्र०— प्रणवष्टेः । कः प्रणव इति । शास्त्रेऽस्मिन्नपरिभाषितत्वात्प्रश्नः । पादस्येति । शास्त्रान्तरे प्रसिद्ध आश्रीयते देवतावत् । अक्षरम्—अच् । अन्त्यमचं गृहीत्वेत्यर्थः । तदाद्यक्षरशेषस्येति । अक्षरं च शेषश्च—हल्, अक्षरशेषं । तदन्त्यमक्षरमादिर्यस्य तत्तदादि । तदादि च तदक्षरशेषं च तदाद्यक्षरशेषं—टिसंज्ञकमित्यर्थः ।

अथेति । टिस्थानिकयोरेवोङ्कारौकारयोः शास्त्रान्तरे प्रणवसंज्ञाविधानात्प्रश्नः । ओङ्कार इति । असति टिग्रहणेऽलोन्त्यस्येति वचनाट्टेर्योऽन्त्यो हल्तस्यौकारः स्यात् । प्लुतत्वेन प्रणवस्य व्यभिचाराऽभावादविशेषणात् । संज्ञया च विधानेऽच्परिभाषोपस्थानानात् । अथाऽप्यच्परिभाषोपस्थानाट्टिनाऽज्विशेष्यते तथापि टेर्योऽच् तस्य स्यान्न तु सर्वस्य टेः । ओङ्कारस्त्वज्झल्समुदायत्वात्प्लुतो न भवतीति सर्वस्य टेर्वाक्यस्य

---

उ०—स्या भप्रवृत्तेः सिद्धान्तितत्वेनाऽन्त्रस्यस्य स्पष्टमेकदेशयुक्तित्वप्रत्ययेन च न पराक्रान्तमत्रेति बोध्यम् ।

ये यज्ञकर्मणि । सिद्धन्त्विति । पृथक्चेदं सूत्रं तु कर्तव्यमिति भावः ।

प्रणवष्टेः । यज्ञकर्मणि ऋगादीनां टेः प्लुतः प्रणवोऽनेनादेशो विधीयते । यद्यप्यक्षरशब्देन वर्णमात्रं, तथापीहाऽज्विवक्षित इत्याह—अक्षरमजिति । तदाद्यक्षरशेषशब्दे बहुव्रीहिद्वन्द्वगर्भः कर्मधारय इत्याह—अक्षरञ्च शेषश्चेति । अजपेक्षशेषशब्देन हलुच्यते । एतद्विसर्गादेरप्युपलक्षणं, तत्राऽक्षरस्य तदादित्वं व्यपदेशिवद्भावेन, शेषस्य तु मुख्यम् । पादस्यार्धर्चस्य वेति । वाशब्दश्चार्थे । तेन ऋचोऽपि संग्रहः । ननु 'टे' रित्यनुवर्तमाने पुनष्टिग्रहणं किमर्थमत आह—असतीति । ननु प्लुतश्रुत्याऽच्परिभाषोपस्थित्याऽन्त्यस्याऽच एवौकारः स्यान्न तु हलोऽत आह—प्लुतत्वेनेति । प्रणवस्य—ओङ्काररूपस्य । अथापी—त्यभ्युपगमवादः । उपरञ्जकतया प्लुतेन विशेषणसम्भवेनाऽच्परिभाषोपस्थितिरिति भावः ।

**याज्याऽन्तः ॥ ८ । २ । ९० ॥**

अन्तग्रहणं किमर्थम् ? याज्या नामर्चो वाक्यसमुदायस्तत्र यावन्ति वाक्यानि सर्वेषां टेः प्लुतः प्राप्नोति, इष्यते चाऽन्त्यस्य स्यादिति, तच्चान्तरेण यत्नं न सिध्यतीत्येवमर्थमन्तग्रहणम् ।

**अग्नीत्प्रेषणे परस्य च ॥ ८ । २ । ९२ ॥**

**अग्नीत्प्रेषण इत्यतिप्रसङ्गः ॥ १ ॥**

अग्नीत्प्रेषण इत्यतिप्रसङ्गो भवति । इहापि प्राप्नोति—अग्नीदग्नीन्विहर ।

**सिद्धंत्वोश्रावये परस्य चेति वचनात् ॥ २ ॥**

सिद्धमेतत् । कथम् ? ओश्रावये परस्येति वक्तव्यम् । ओ३श्रा३वय । अपर आह—ओश्रावयाश्रावययोरिति वक्तव्यम् । ओ३श्रा३वय । आ३श्रा३वय ।

बहुलमन्यत्रेति वक्तव्यम् । उद्धरा ३ उद्धर । आहरा ३ आहर । तत्तर्हि

---

प्र०-टेरित्यधिकारात्सिध्यति । केचित्तु टिस्थानिकस्यैवौकारस्य प्रणवसंज्ञाविधानाट्टि-ग्रहणमनर्थकमिति प्रतिपन्नाः ।

याज्यान्तः । अन्तग्रहणमिति । 'वाक्यस्य टे' रित्यधिकारादन्त्यस्यैव भवि-ष्यतीति प्रश्नः । याज्या नामेति । ऋक्समुदायो याज्याः, तत्र प्रत्यृचं प्लुतः प्राप्नोतीति ऋक्समुदायस्य योऽन्तस्तस्य प्लुतार्थमन्तग्रहणं । तेनाऽयमर्थो'याज्यानामन्तो यष्टि-स्तस्य योऽच्तस्य प्लुतः' ।

अग्नीत्० । बहुलमिति । तेनौश्रावयाश्रावयाभ्यामन्यत्राग्नीत्प्रेषणे बहुलं प्लुतो भवति, बहुलवचनाच्च नादेर्न परस्य, अपि त्वन्त्यस्यैव प्लुतः ! उद्धरा ३ उद्धरेति ।

---

उ०-यदा हीत्यादि भाष्यं व्याचष्टे—ओङ्कारस्त्विति । प्रतिपन्ना इति । तदा हि सूत्रमेव व्यर्थमित्यरुचिः ।

याज्यान्तः । वाक्यस्य टेरिति । 'टे'रित्यनेन त्वव्यभिचाराद्न्तस्य टेरिते विशेषण-मनर्थकं; टिग्रहणनिवृत्तौ त्वजन्ताया एव याज्यायाः स्यादिति तात्पर्यम् । ऋक्समुदाय इति । याज्यानां वाक्यस्य टेरित्यर्थो ऽन्तग्रहणाऽभावे स्यादिति भावः । ऋचो वाक्यसमुदाय इति भाष्ये । ऋक्समुदायरूपो वाक्यसमुदाय इत्यर्थः ।

अग्नीत्प्रे० । अग्नीध ऋत्विग्विशेषस्य प्रेषण इति कर्मषष्ठ्या समासः । 'अग्नीत्कर्मकेऽ-प्युंक्तृके प्रेषणे आदेः प्लुतो भवति, ततः परस्य द्वितीयाऽच्श्च' इति सूत्रार्थः । भाष्ये—ओश्रावयेपरस्येति । परस्य चाऽऽदेश्चेत्यर्थः । अपि त्वन्त्यस्यैवेति । उद्धर उद्धरेत्यादौ

वक्तव्यम् ? न वक्तव्यम् । योगविभागः† करिष्यते—'अग्नीत्प्रेषणे परस्य च विभाषा' । ततः 'पृष्टप्रतिवचने हेः' । 'विभाषे' त्येव ।

अपर आह—सर्व एव प्लुतः साहसमनिच्छता विभाषा वक्तव्यः ।

**आम्रेडितं भर्त्सने ॥ ८ । २ । ९५ ॥**

**भर्त्सने पर्यायेण ॥ १ ॥**

भर्त्सने पर्यायेणेति वक्तव्यम् । चौरा ३ चौर । चौर चौरा ३ । कुशीला ३ कुशील । कुशील कुशीला ३* ।

**स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ॥ ८ । २ । १०३ ॥**

**असूयादिषु वावचनम् ॥ १ ॥**

असूयादिषु वेति वक्तव्यम् । कन्ये ३ कन्ये । कन्ये कन्ये । शक्तिके ३ शक्तिके । शक्तिके शक्तिके* ।

प्र०-चापले द्विर्वचनम् । योगविभाग इति । व्यवस्थितविभाषा चाश्रीयत इति भावः । एवमुद्धर उद्धरेत्यन्त्यप्लुतो न लभ्यत इति केचिदाहुः । व्यवहितेऽपि परशब्दो वर्तत इति भाष्यकाराभिप्रायमन्य आहुः । साहसमिति । शास्त्रत्यागः साहसं तेन शास्त्रमत्यजताऽभियुक्तस्मरणात्सर्वः प्लुतो विभाषा विधेय इत्यर्थः । एतच्च प्राग्ग्रहणस्य सर्वत्र संबन्धात्सिध्यतीति मन्यन्ते ।

स्वरित० असूयादिष्विति । 'सर्व एव प्लुत' इति वचनमन्यदीयमिति वचनम् ।

उ०-पूर्वान्त्यस्येत्यर्थः । बहुलग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वादिति भावः । अन्त्यस्य प्लुतो नेति । पूर्वान्त्यस्येत्यर्थः । विभाषाग्रहणस्य विकल्पार्थत्वेनोपाधिव्यभिचारार्थकत्वाऽभावादिति भावः । व्यवहितेऽपीति । व्यवस्थितविभाषाश्रयणादेव नादेर्नाव्यवहितपरस्य । क्वचित्तु तस्यैवेति भावः । अविमृश्यकारित्वं—साहसम्, तदिह शब्दप्रयोगे शास्त्राननुसरणम् । तदाह—शास्त्रत्याग इति । प्राग्ग्रहणस्येति । केचित्तु 'विभाषे'ति अत्र योगं विभज्य 'इतः वक्ष्यमाणं च प्लुतजातं वा'—इत्याहुः ।

† ८. २. ९९. * ८. १. ८.

## प्लुतावैच इदुतौ ॥ ८ । २ । १०६ ॥

किमर्थमिदमुच्यते ?

**ऐचोरुभयविवृद्धिप्रसङ्गादिदुतोः प्लुतवचनम् ॥ १ ॥**

ऐचोरुभयविवृद्धिप्रसङ्गादिदुतोः प्लुत उच्यते किमुच्यते 'उभयविवृद्धिप्रसङ्गा'दिति ? यदा नित्याः शब्दाः, नित्येषु च शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायोपजनविकारिभिः । नैष दोषः । 'उभयविवृद्धिप्रसङ्गा'—दिति नैवं विज्ञायते—'उभयोर्विवृद्धिरुभयविवृद्धिरुभयविवृद्धिप्रसङ्गा'दिति । कथं तर्हि ? उभयोर्विवृद्धिरस्मिन् सोऽयमुभयविवृद्धिः, उभयविवृद्धिप्रसङ्गादिति । इमावैचो समाहारवर्णौ, मात्राऽवर्णस्य मात्रेवर्णोवर्णयोरिति तयोः प्लुत उच्यमान उभयविवृद्धिः प्राप्नोति । तद्यथा—अभिवर्धमानो गर्भः सर्वाङ्गपरिपूर्णो वर्धते । अस्ति प्रयोजनमेतत् ? किं तर्हीति ।

प्र०- प्लुतावैच० । लक्षणान्तरेणैचः प्लुतप्रसङ्गे तदवयवयोरिदुतोः प्लुतार्थं वचनम् । ऐचोरिति । समाहारवर्णत्वादवर्णस्येदुतोश्च विवृद्धिः प्राप्नोतीति वचनं, तत्र वचनसामर्थ्याद्वर्णैकदेशयोरपीदुद्ग्रहणेन ग्रहणम् । किमुच्यत इति । उभयविवृद्धिशब्दं तत्पुरुषं मत्वा सिद्धान्तविरोधमुद्भावयति । विवृद्धिर्नित्यता च विरुध्यते, तादवस्थ्यं हि नित्यता । यद्यप्यनित्येष्वपि वर्णेषूच्चरितप्रध्वंसित्वाद्विवृद्धिर्नोपपद्यते, नापि रूपान्तरप्राप्तिस्तथापि स एवेमामवस्थां प्राप्त इति युज्यते वक्तुं तथा च दीर्घीभूत इति च्विना निर्देशः क्रियते । नित्यत्वे तद्विरुध्यते । कूटस्थैरिति । कूटस्थादयः शब्दाः पृथगपि प्रयुज्यमानाः नित्यतामाचक्षते, युगपत्तु प्रयोगे केन चिच्छब्देन कश्चिन्नित्यताविशेष उच्यते । तत्र 'कूटस्थ'शब्देन स्वभावाऽपरित्याग उक्तः । स चाऽवयवविचालेऽप्यस्ति-नित्या पृथिवीति । अविचालिग्रहणेनाऽवयवाऽविचालः प्रतिपाद्यते । अविचालित्वस्य हेतुकथनम्—अनपायेति । इतरः शब्दान्तरमेव प्राप्नोति यस्मिन्विवृद्धिरिवोभयोर्लक्ष्यत इत्याह । नैवमिति तद्यथेति । यथा गर्भे नाऽवस्थिता एवावयवा विवर्धन्ते, किं तर्हि,

उ०- प्लुतावैच० । नेदं प्लुतविधायकं किन्तु अन्यशास्त्रविहितप्लुतस्य विषयशोधकमित्याह—लक्षणान्तरेणेति । एवं स्वरितमित्याद्यपि बोध्यम् । समाहारवर्णत्वादिति । समाह्रियमाणाऽवयववर्णरूपत्वादित्यर्थः । ननु वर्णैकदेशयोः कथमिदुद्ग्रहणेन ग्रहणमत आह—तत्रेति । सिद्धान्तविरोधमिति । शब्दार्थसम्बन्धानां नित्यत्वरूपः सिद्धान्तः । यद्यपीति । वृद्धिरूपान्तरप्राप्तं किञ्चित्कालं स्थितस्यैवोपपद्यते न तु क्षणभङ्गुरस्येति भावः । तथापीति । बुद्धिकल्पितो गौणो व्यपदेश इति भावः । एवंविधव्यवहार एव प्रचुर इत्याह—तथा चेति । नित्यत्वे त्विति । तथा गौणव्यपदेशोऽप्यनुपपन्न इति भावः । कूटस्थादीनां पर्यायत्वमाशङ्क्य निराकरोति—कूटस्थादय इति । ननु बहुव्रीहावपि नित्यताविरोधस्तदवस्थोऽत आह—इतर इति । बहुव्रीह्याश्रयणसामर्थ्यात्तदन्यगर्भः समास आश्रीयते इति भावः । ननु गर्भदृष्टान्तोऽनुपपन्नः, तत्रावयववृद्धेः प्रत्यक्षत्वादत आह—यथा गर्भे इति । अवस्थिता एव

**तत्राऽयथेष्टप्रसङ्गः ॥ २ ॥**

तत्राऽयथेष्टं प्रसज्येत । चतुर्मात्रः प्लुतः प्राप्नोति ।

**सिद्धं त्विदुतोर्दीर्घवचनात् ॥ ३ ॥**

सिद्धमेतत् । कथम् ? इदुतोर्दीर्घो भवतीति वक्तव्यम् । तदेतत्कथं कृत्वा सिद्धं भवति ? यदि समः प्रविभागो—मात्राऽवर्णस्य मात्रेवर्णोवर्णयोः ।

अथ ह्यर्द्धमात्राऽवर्णस्याऽध्यर्द्धमात्रेवर्णोवर्णयोरर्द्धतृतीयमात्रः प्राप्नोति । अथ ह्यध्यर्द्धमात्राऽवर्णस्याऽर्द्धमात्रेवर्णोवर्णयोरर्द्धचतुर्थमात्रः प्राप्नोति । सूत्रं च भिद्यते । यथान्यासमेवाऽस्तु । ननु चोक्तं—तत्रायथेष्टप्रसङ्ग' इति । तत्र सौर्यभगवतोक्तमनिष्टिज्ञो वाडवः पठति । इष्यत एव चतुर्मात्रः प्लुतः ।

**एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ ॥८।२।१०७॥**

**एचः प्लुतविकारे पदान्तग्रहणम् ॥ १ ॥**

---

प्र०–पूर्वमूर्तिविनाशे मूर्त्यन्तरोत्पत्तिः, एवं शब्दान्तरमेवोभयविवृद्धिः प्राप्नोतीत्युच्यते ।

चतुर्मात्र इति । प्लुतावयवत्वात्प्लुत उच्यते, नहि चतुर्मात्रस्य प्लुतसंज्ञाऽस्ति, 'ऊकालोऽ'जिति वचनात् । तदेतमिति । भाष्यकारो वार्तिककारं पर्यनुयुङ्क्ते । 'ऐचो-श्चोत्तरभूयस्त्वा'दिति वदता वार्तिककारेण समप्रविभागत्वं नेष्टमिति भावः ।

इष्यत एवेति । 'ऊकाल एवाऽ'जिति नियमो नाश्रीयते, तेन चतुर्मात्रस्याप्य-च्कार्यं भवति, 'प्रत्यङ्ङै४तिकायने'ति 'ङमो ह्रस्वा'दिति ङमुड् भवति । 'ग्लौ ४त्त्राते' त्यत्राऽनचि चेति तकारस्य द्विर्वचनं भवति। सौर्यभगवतेति। सौर्यं नाम नगरं तत्रत्येनाचार्येणेदमुक्तम् ।

एचोऽप्र० । गौ३रिति । अथ यदा सावपि पदं भवति तदा कस्मान्न भवति ? उक्तमेतद्वाक्यपदयोरन्त्यस्येति । विसर्जनीयश्चाऽत्र वाक्यस्याऽन्तो न त्वेच् । पदान्त-

---

उ०–वर्धन्त इति नेत्यन्वयः । प्लुतावयवत्वादिति । प्लुतसदृशावयवत्वादित्यर्थः । त्रिमात्रत्वेन च सादृश्यम् । कुतो गौणवृत्त्याश्रयणमत आह—न हीति । नाप्यवयवस्य मुख्यं प्लुतत्वम्, अच्त्वाऽभावादित्यपि बोध्यम् । इति वदतेति । एवञ्च वार्तिककारस्य पूर्वाऽपरविरोध इत्यर्थः । तत्रोत्तरस्य भूयस्त्वं पूर्वस्य वेत्यत्र विनिगमनाविरहस्य भाष्यकृतोक्ततया समप्रविभागपक्ष एव भगवतो भाष्यकारस्य सम्मत इति बोध्यम् । ननु एकमात्रिकद्विमात्रिकत्रिमात्रिकाणामेवाऽ-च्त्वात् कथं चतुर्मात्रिकस्याऽच्कार्याणि स्युरत आह—ऊकाल एवेति । तत्र त्रिमात्रग्रहणं एकद्विमात्रभिन्नोपलक्षणमिति भावः । ग्लौ४—त्त्रातेति । समस्तं 'सिद्धं त्विदुतो'रिति वार्तिकं वाडवस्य, तदाह—वाडवः पठतीति ।

ऐचोऽप्रगृह्यस्या० । अथ यदेति । यदा 'असर्वनामस्थाने' इति यभादौ सर्वनामस्थाने प्रतिषेध इति व्याख्यानं तदेत्यर्थः । न च परिगणनेऽदूराद्धूत इति व्यर्थं स्यात् । किन्तु तत्सम्बे

एचः प्लुतविकारे पदान्तग्रहणं कर्तव्यम्। इह मा भूत्—भद्रं करोषि गौ३रिति।

**विषयपरिगणनं च ॥ २ ॥**

विषयपरिगणनं च कर्तव्यम्। 'प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्वि'ति वक्तव्यम्*। प्रश्नान्त—अगमा३ः पूर्वा३न् ग्रामा३न्नग्निभूता३ इ। पटा३ उ। प्रश्नान्त। अभिपूजित—सिद्धोऽसि माणवकाऽग्निभूता३इ। पटा३उ। अभिपूजित। विचार्यमाण—होतव्यं दीक्षितस्य गृहा३इ। विचार्यमाण। प्रत्यभिवाद—आयुष्मानेधि अग्निभूता३इ। प्रत्यभिवाद। याज्यान्त—उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे। स्तोमैर्विधेमाग्नया३इ†।

**आमन्त्रिते छन्दस्युपसंख्यानम् ॥ ३ ॥**

आमन्त्रिते छन्दस्युपसंख्यानं कर्तव्यम्। अग्ना३इ पत्नीवा३ः सजूर्देवेन त्वष्ट्रा सोमं पिब‡।

**तयोर्य्वावचि संहितायाम् ॥ ८। २। १०८ ॥**

अथ कयोरिमौ य्वावुच्येते? 'इदुतो'रित्याह। तदिदुतोर्ग्रहणं कर्तव्यम्। न कर्तव्यम्। प्रकृतमनुवर्तते। क प्रकृतम्? 'पूर्वस्यार्द्धस्यादुत्तरस्येदुता'विति×।

प्र०–ग्रहणमित्यत्र पदशब्देन वाक्यमुच्यते, पद्यते प्रतीयतेऽनेनार्थ इति पदमित्यन्वर्थग्रहणात्। एतच्च 'याज्यान्त' इत्यतोऽन्तग्रहणानुवृत्त्या लभ्यते।

अग्निभूता३यिति। अग्निभूतिशब्दस्य संबुद्धौ रूपम्। आमन्त्रिन इति। अप्राप्तएव प्लुते वचनम्।

तयोः०। कयोरिति। प्रश्नद्वारेण 'तयो' रिति प्रत्याख्यायते, तदन्तरेणाप्यधिकारात्स्थानिलाभात्। प्लुतविकाराविति। प्लुतविषयत्वात्प्लुतविकारावुच्येते, तौ चाऽ-

उ०–तत्रत्य'दूराद्धूत' इति पदस्य सम्बोधनोपलक्षणत्वेन सम्बोधनोदाहरणमसङ्गतमिति वाच्यम्, उपलक्षणत्वे मानाभावात्। किन्तु यथाश्रुतमेव तत्। एवञ्च दूरादाह्वानविशिष्टाऽभिपूजितार्थे 'स्यागच्छ भो माणवकाग्निभूते' इत्यादौ नास्य प्रवृत्तिरित्याहुः। वृत्तिकारास्तु परिगणनेऽदूराद्धूत इति न वक्तव्यं, तस्य सम्बोधनोपलक्षणत्वेन सम्बुद्ध्यन्तभाष्योदाहरणविरोधापत्तेरित्याहुः। तच्चिन्त्यम्। अप्राप्त एव प्लुत इति। प्लुतविकारे इत्यर्थः। दूरादाह्वानस्यापरिगणनात्तस्याऽप्राप्तिः। प्लुतस्तु 'गुरोरनृत' इति प्राप्नोत्येव। तेन वाक्यान्तपदानन्त्यस्यैव प्लुत इत्यत्र न मानम्। केचित्तु गुरोरिति सूत्रं दूराद्धूत इत्यादिविहितप्लुतस्य स्थानिविशेषमात्रसमर्पकं नतु विधायकमिति यथाश्रुतमेव-व्याचक्षते।

तयोर्य्वा०। ननु तयोरित्यनेनेदुतोः स्थानिनोर्निर्देशात्कयोरिति प्रश्नोऽनुपपन्न इत्याशङ्क्यातत्पमाह—कयोरितीति। भाष्ये—तदिदुतोर्ग्रहणं कर्तव्यमिति। तदर्थकं तयोरिति

* ८. २. १००; ९७; ८३; ९०. † ऋ० सं० ८. ४३. ११. ‡ य० वे० ८. १०. × ८. २. १०७.

तद्धै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहाऽर्थः। 'अची' त्येषा सप्तमीदुताविति प्रथमायाः षष्ठीं प्रकल्पयिष्यति-'तस्मिन्निति निर्दिष्टे पूर्वस्य' [ १. १. ६६ ] इति।

किमर्थमिदमुच्यते नेको यणचि [ ६. १. ७७ ] इत्येव सिद्धम्? न सिध्यति। असिद्धः प्लुतः, प्लुतविकारौ चेमौ। सिद्धः प्लुतः स्वरसन्धिषु। कथं ज्ञायते? यदयं प्लुतप्रगृह्या अचि [ ६. १. १२५ ] इति प्लुतस्य प्रकृतिभावं शास्ति। कथं कृत्वा ज्ञापकम्? सतो हि कार्यिणः कार्येण भवितव्यम्। इदं तर्हि प्रयोजनं दीर्घशाकलप्रतिषेधार्थम्। दीर्घत्वं शाकलं चा† मा भूदिति। अग्ना३यिन्द्रम्। पटा३वुदकम्। एतदपि नास्ति प्रयोजनम्। आरभ्यते प्लुतपूर्वस्य 'यणादेशः प्लुतपूर्वस्य दीर्घशाकलप्रतिषेधार्थ' मिति‡। तन्न वक्तव्यं भवति। अवश्यं तद्वक्तव्यं यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थं-भो३यिन्द्र भो३यिडेति। यदि तर्हि तस्य निबन्धनमस्ति तदेव वक्तव्यमिदं न वक्तव्यम्। इदमप्यवश्यं वक्तव्यं स्वरार्थम्। तेन हि सति 'उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य' [ ८. २. ४ ] इत्येष स्वरः प्रसज्येत, अनेन पुनः सत्यसिद्धत्वान्न भविष्यति। यदि तर्ह्यस्य निबन्धनमस्तीदमेव वक्तव्यं तन्न वक्तव्यम्। ननु चोक्तं तदप्यवश्यं वक्तव्यं यौ प्लुतपूर्वाविदुतावप्लुतविकारौ तदर्थं-भो३ यिन्द्र, भो३यिडेति।

---

प्र०-सिद्धकाण्डे पाठाद्यणादेशे कर्तव्येऽसिद्धौ। सिद्धः प्लुत इति। ननु प्लुतस्य सिद्धत्वे कथमिदुतोः सिद्धत्वम्? उच्यते। प्लुतप्रकरणे यत्कार्यं तत्स्वरसन्धिषु सिद्धमिति सामान्यविषयानुमानाश्रयणात्। भो३यिन्द्रेति। इशब्दस्य निपातत्वात्प्रगृह्यत्वात्प्रकृतिभावप्रसङ्गे तद्बाधनार्थोऽपि यण्विधिः। वर्णव्यत्ययेनाऽत्र छान्दसः प्लुतः। स्वरार्थमिति। अकारो यथाविषयमुदात्तादियुक्तः प्लुतः, इदुतौ तु सर्वत्रोदात्तौ, तत्राऽनयोर्य्वोरुदात्तस्वरितयोरिति स्वरिते कर्तव्येऽसिद्धत्वात्स्वरितो न भवति। प्लुतप्रकरणे विहितं च कार्यं स्वरसन्धिषु सिद्धमिति ज्ञापितं, स्वरस्तु स्वरसन्धिर्न भवतीति

---

उ०-कर्तव्यमित्यर्थः। नन्वेष उत्तरार्धविकाराविदुतौ न प्लुतस्येति प्लुतविकाराविरययुक्तमत आह-त्रिपयत्वादिति। प्लुतसहितौ विकाराविति मध्यमपदलोपी समासः। आकारस्य प्लुतस्य विधानात्तत्सन्नियोगशिष्टतयाऽनयोरपि तद्विषयत्वमिति भावः। कथमिदुतोरिति। तयोः प्लुतत्वाऽभावादिति भावः। भाष्ये—दीर्घं च शाकलञ्चेति। दीर्घः सवर्णदीर्घः। शाकलोदाहरणम्—अग्नायाद्येति। सामान्योदसिद्धावपि दीर्घशाकलयोः—अपवादाविरयर्थः।

---

† ६. १. १०१; १२७. ‡ ६. १. ७७.

छान्दसमेतत्, दृष्टानुविधिश्छन्दसि भवति। यत्तर्हि नच्छान्दसम् भो३ यिन्द्रं साम गायति। एषोऽपिच्छन्दसि दृष्टस्यानुप्रयोग इति।

किंतु यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति।
तौ च मम स्वरसन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ॥ १॥
इक् तु यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम्।
तेन तयोश्च न शाकलदीर्घौ यणस्वरबाधनमेव तु हेतुः॥ २॥

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्येऽष्टमस्याध्यायस्य
द्वितीये पादे द्वितीयमाह्निकम्।
पादश्च द्वितीयः समाप्तः।

---

प्र०—तत्राऽसिद्धत्वं य्वोर्भवत्येव। छान्दसमेनदिति। ततश्चोपसङ्ख्यानमन्तरेण वर्णव्यत्ययेन यणसिद्धः। यत्तर्हीति। अप्रतिपन्नविकारस्याऽनुकरणत्वादच्छान्दसत्वाद्यणन प्राप्नोति। एषोऽपीति। कृतयणादेशस्यैवेदमनुकरणमित्यर्थः। पूर्वोक्तार्थसङ्ग्रहश्लोकद्वयम्—किं नु यणेति। 'इको यणची' ति यणादेशेन किं न सिद्धं रूपं यत इदुतोर्य्वौ विदधात्याचार्यस्तौ चेदुतौ स्वरसन्धिषु सिद्धौ, प्लुतप्रगृह्या अचीति ज्ञापकात्। एवं तर्हि इकोऽसवर्णे इति शाकलः प्रकृतिभावः प्राप्नोति, सवर्णदीर्घश्च, तन्निवृत्तये य्वौ विधीयेते। एतदपि न प्रयोजनम्, इकः प्लुतपूर्वस्य वार्तिककारेण शाकलदीर्घस्यापवादस्य यणो विधानात्। एवं तर्ह्युदात्तस्वरितयोरिति यणाश्रयस्वरितप्रसङ्गनिवृत्तये य्वौ विधीयेते।

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपेऽष्टमाध्यायस्य द्वितीयपादे द्वितीयमाह्निकम्।
पादश्च द्वितीयः समाप्तः।

---

उ०—छान्दसः प्लुत इति। अनन्त्यत्वात्। गुरोरनृत इति सूत्रस्य एकैकग्रहणेनानेकाच्क एव प्रवृत्तिरिति भावः। यथाविषयमिति। विचार्यमाणादिषूदात्तः, प्रश्नान्तादावनुदात्तः असूयादौ स्वरित इत्यर्थः। इदुतौ त्विति। अनुवृत्तोदात्तपदेन तयोः संबन्धादित्यर्थः। तत्रानयोरिति। उदात्तेदुत्स्थानिकयवयोरित्यर्थः। ननु प्लुतप्रकरणस्य कार्यस्य सिद्धत्वज्ञापनात्कथं न स्वरोऽत आह—प्लुतप्रकरण इति। वर्णव्यत्ययेनेति। प्लुतवदिति भावः। तदेवमुपसङ्ख्यानं प्रत्याख्यातं, सूत्रं तु स्वरसिद्ध्यर्थं कर्तव्यमिति स्थितम्। अनुकरणमिति। भाष्येऽनुप्रयोगशब्दस्यानुकरणमर्थ इति भावः। किं न सिद्धमिति। सिद्धमेवेत्यर्थः। श्लोके यच्छब्दो निपातो हेतावित्याह—यत इति। नन्वनयोरिदुतोरसिद्धत्वात्कथं तयोरिको यणचीति यणत आह—तौ चेति।

इति श्रीनागोजीभट्टकृते भाष्यप्रदीपोद्द्योतेऽष्टमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम्।
पादश्च द्वितीयः समाप्तः।

---

# अथ तृतीयः पादः

## मतुवसो रु संबुद्धौ छन्दसि ॥ ८ । ३ । १ ॥

### मतुवसोरादेशे वन उपसंख्यानम् ॥ १ ॥

मतुवसोरादेशे वन उपसङ्ख्यानं कर्तव्यम् । 'यस्त्वायन्तं वसुना प्रातरित्वः'* ।

### विभाषा भवद्भगवदघवतामोच्चाऽवस्य ॥ २ ॥

छन्दसि भाषायाञ्च 'भवत्' 'भगवत्' 'अघव'दित्येतेषां विभाषा रुर्वक्तव्यः, ओच्चाऽवस्य वक्तव्यः । भो, भवन् । भगोः, भगवन् । अघोः, अघवन्निति । संबुद्धावित्युच्यते तत्रेदं न सिध्यति—भो ब्राह्मणा इति । तथा 'विभक्तौ लिङ्गविशिष्टग्रहणं नेती'ह न प्राप्नोति—भो ब्राह्मणि ! । नैष दोषः । अव्ययमेष भोःशब्दो नैषा भवतः प्रकृतिः[1] ।

---

प्र०— मतुवसो० । वन इति । कनिब्वनिपोः सामान्यग्रहणम्, अनुबन्धस्याऽनिर्देशात्, तदनुबन्धकपरिभाषानुपस्थानात्कनिपोऽपि ग्रहणम् । प्रातरित्व इति । प्रातरेतीति, 'अन्येभ्योऽपि दृश्यन्त' इति कनिप् । भो ब्राह्मणा इति । जसि रुत्वौत्वे न प्राप्नुतो, नापि रुत्वौत्वयोर्भो इति रूपं सिध्यति । तथा 'भोब्राह्मणि' इत्यत्रापि भवतिशब्दिकारस्य रुत्वे, अवस्य चौत्वेऽपि कृते, संयोगान्तलोपे कर्तव्ये रुत्वस्याऽसिद्धत्वाद्रूपाऽसिद्धिः ।

---

उ०— मतुवसो रुः० । 'वन' इत्युक्त्वा प्रातरित्वेति क्वनिबुदाहरणमसङ्गतमत आह—सामान्यग्रहणमिति । तदनुबन्धकग्रहण इत्यस्यैकानुबन्धोच्चारणे इत्यर्थ इति भावः । भाष्ये—ओच्चावस्येति । 'नानर्थके' इति परिभाषया विशिष्टस्य स्थानिन उच्चारणाच्चौकारः सर्वादेशः । जसीति । सूत्रस्थसंबुद्धावित्यस्य वार्तिकेऽपि संबन्धात् । नापीति । जसः श्रवणप्रसङ्गात् । लिङ्गविशिष्टपरिभाषाऽभ्युपगमेऽपि रूपाऽसिद्धिरित्याह—तथेति । संयोगान्तलोपेऽपि भोदिति स्यादिति रूपाऽसिद्धिः, यणः प्रतिषेधारम्भाच्च स दुर्लभ इत्यपि बोध्यम् ।

भाष्ये—नैषा भवतः प्रकृतिरिति । एषा—प्रकृतिः । अव्ययत्वे सुप ष्टपरोस्य प्रकृतित्वव्यवहारः । सा च न भवतः—भवच्छब्दयन्योरर्थः । प्रवृत्तिरिति पाठे प्रयोग इत्यर्थः

---

* ऋ० मं० १. १२५. २. [1] 'प्रवृत्तिः' पाठान्तरम् ।

कथमव्ययत्वम्? 'विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्ती'ति निपातसंज्ञा, 'निपातोऽव्यय'मित्यव्ययसंज्ञा† ।

**समः सुटि ॥ ८ । ३ । ५ ॥ पुमः खय्यम्परे ॥ ८ । ३ । ६ ॥**

**कानाम्रेडिते ॥ ८ । ३ । १२ ॥**

**संपुंकानां सत्वम् ॥ १ ॥**

संपुंकानां सत्वं वक्तव्यम् । सँस्स्कर्ता, पुँस्कामा, काँस्कानिति ।

**रुविधौ ह्यनिष्टप्रसङ्गः ॥ २ ॥**

---

प्र०—विभक्तिस्वरेति । केचिदाहुः—भूशब्दस्य विजन्तस्य सौ यद्रूपं रेफान्तं तत्प्रतिरूपको निपातः, तत्र रेफस्य यत्वे लोपे च भो ब्राह्मणा इत्यादि सिध्यति । भवच्छब्दस्याऽपि भोःशब्दसिद्धये वार्तिकारम्भः । तेनेतराभ्योऽपि दृश्यन्त इति भवदादियोगे विधीयमानास्तसिलादयस्ततो भोस्तत्र भो इत्यत्रापि भवन्ति । एवं च भवच्छब्दप्रकृतिकभोःशब्दप्रतिरूपकत्वमेव निपातत्वमाश्रयणीयं, भवतेर्विजदर्शनादित्यन्य आहुः ।

समः सुटि । तुल्यविचारत्वाद्भाष्ये त्रिसूत्रीं पठित्वा वाक्यं पठितम्—सम्पुकानामिति । सँस्स्कर्त्तेति । मकारस्य सत्वे कृते यदा पूर्वस्याऽनुनासिकः तदा सत्वस्याऽसिद्धत्वाद्रुत्वाऽभावादनचि चेति सकारस्य द्विर्वचने, 'झरो झरि सवर्णे' इति पाक्षिके लोपे द्विसकारकस्त्रिसकारको वा प्रयोगो, यदा त्वनुस्वारः तदायोगवाहानां च प्रत्याहारेषु विशेषेणोपदेशस्तस्मिन् पक्षे एकसकारको, यदा त्वनुस्वारस्य हल्त्ववदच्त्वमपीष्यते तदा ततः परस्य सकारस्य द्विर्वचने सकारत्रयमपि भवति । यदा चैकीयमतेन मकारलो-

---

उ०—ननु 'भो' इति विभक्त्यन्तस्याऽभावात्कथं तत्प्रतिरूपकत्वमत आह—केचिदाहुर्भूशब्दस्येति । नन्वेवं वार्तिके भवद्ग्रहणं न कर्तव्यं किमत आह—भवच्छब्दस्यापीति । एवञ्चेति । एवञ्च विभक्तिप्रतिरूपकत्वस्य निपातगणसूत्रे शब्दतोऽर्थतश्चाश्रयणेऽपि न दोष इत्याहुः ।

समः सुटि । भाष्येऽग्रयं सूत्रद्वयं प्रदेशान्तरस्थञ्च सहपठितं, तत्रादायमाह—तुल्येति । भाष्ये—सत्वं वक्तव्यमिति । स इति प्रक्रम्य सूत्रत्रयं पठनीयमित्यर्थः । 'स'शब्दः शब्दप्रधानः । तदर्थे प्रकारे भावप्रत्यय इति सत्वं सकार इत्यर्थः । कणा सस्य समफलत्वं दर्शयति—मकारस्येति । यदाऽनुस्वारोऽयोगवाहानां च प्रत्याहारेषु विशेषेणोपदेशस्तस्मिन्पक्षे इति पाठः । विशेषेणेत्यस्य सार्वत्रिकेत्यर्थः । तथा चाऽनुस्वारस्य हल्त्वाज्झरो झरीति लोपः । अच्त्वमपीति । अविशेषेण पाठादिति भावः । त्रयमपीति । अपिना द्वयमपीत्यर्थः । यदाचैकीयेति । अत्र पक्षे द्वित्वे द्विसकारकं, पक्षे त्वेकसकारकमेव । अनुनासिकपक्षेऽप्येवमेव ।

---

† १. ४. ५७ ग०; १. १. ३७.

रुविधौ हि सत्यनिष्टं प्रसज्येत। इह तावत्—सँस्स्कर्त्तेति† वा शरि [ ८. ३. ३६ ] इति प्रसज्येत। 'पुँस्कामे'ति—'इदुदुपधस्ये'ति षत्वं प्रसज्येत‡। 'काँस्का'निति—कुप्वोः ≍क≍पा'विति ≍कः प्रसज्येत*।

तत्तर्हि वक्तव्यम्? न वक्तव्यम्। क्रियते न्यास एव 'समः सुटी'ति द्विसकारको निर्देशः+। समः सुटि सकारो भवति। तत्प्रकृतमुत्तरत्रानुवर्तिष्यते। यदि तदनुवर्तते, 'नश्छव्यप्रशान् [ ८. ३. ७ ] इत्यत्रापि प्राप्नोति 'भवाँस्तत्रे'ति। सम्बधमनुवर्तिष्यते। समः सुटि। 'पुमः' खय्यम्परे सो भवति। 'नश्छव्यप्रशान्' रुर्भवति 'पुमः खय्यम्परे' सकारः। 'उभयथर्क्षु' [ ८ ] 'दीर्घादटि समानपादे' [९] 'नॄन्पे' [ १० ] 'स्वतवान्पायौ' [ ११ ] रुर्भवति, 'पुमः खय्यम्परे सकारः'। कानाम्रेडिते' सकारः। 'पुमः खय्यम्पर' इति निवृत्तम्।

प्र०–पस्तदात्वनुनासिकपक्षे त्वेकसकारकः। यदा त्वनुस्वारस्तदा तस्याऽयोगवाहानां शर्षु उपदेशचोदनाद्धल्त्वाज्झरो झरीति वालोपे पक्षे द्विसकारकस्तदानुस्वारानुनासिकौ केचिन्नेच्छन्ति। तत्त्वयुक्तं मन्यन्ते, रुत्वप्रकरणे विधीयमानसन्नियोगेन तयोर्विधानात्सकारलोपेऽपि सत्व इव ताभ्यां भाव्यम्। एवं च षड्रूपाणि भवन्ति। अनुनासिकपक्षे त्रयः सकारा द्वौ वा एको वा। एवमनुस्वारपक्षेऽपि। षट्स्वपि रूपेषु 'शरः खय' इति वा द्विर्वचने ककारस्य कृत द्वादशरूपाणि भवन्ति। तत्प्रकृतमिति। ननु चाऽनच्कस्य सकारस्य निर्देशात्तत्र स्वरितत्वं प्रतिज्ञातुमशक्यम्। उच्यते। अचां स्वरितत्वं प्रतिज्ञायते। तत्र समुदायाऽनुवृत्तिः सकारस्याऽनुवृत्त्यर्थैव भविष्यति। यदीति। 'भवांस्तरती' त्यादौ सत्वे रुत्वे च विशेषो नास्ति, 'दीर्घादटी'त्यत्र तु विशेषो महाँ इन्द्र इत्यत्र सत्वे सति तस्याऽसिद्धत्वाद्रुत्वाऽभावाद्रूपं न सिध्येत्। सम्बन्धमिति।

उ०–केचिदिति। 'उपधारञ्जनं कुर्यान्नमो रुकरणे सति। लोपे प्रकृतिभावे वा नोपधारञ्जनं मत' मिति वेदभाष्यकृत इत्यर्थः। रुत्वप्रकरणे इति। रुत्वप्रकरणे यो विधीयमानस्तत्संनियोगेन तयोर्विधानादित्यर्थः। अतएव भाष्ये 'समादिषु सत्वं वक्तव्य'मित्युक्तम्। रुत्वपक्षे चानुनासिकाद्यनापत्तिर्दोषत्वेन नोक्ता। तद्ध्वनयन्नाह—सत्व इवेति। भाष्ये—इदुदुपधस्येति। इदमव्युत्पत्तिपक्षे। भाष्ये—द्विसकारक इति। 'सम' इत्यत्र, वा शरी'ति विसर्गस्यैवोच्चारणादेवमुक्तं, समुदायानुवृत्तिः, तत्फलकं स्वरितत्वं, तदनुवृत्तौ फलाभावात्पूर्णमात्रानुवृत्त्यर्थः भविष्यतीत्यर्थं। महच्छत्रीत्यत्र सत्वरुत्वयोरविशेष इत्याशङ्क्योत्तरत्र दोषमाह—

† ८. ३. १५. ‡ ८. २. ४१. * ८. ३. ३७. + ८. ४. ६५.

समो वा लोपमेक इच्छन्ति । संस्कर्ता । सँस्कर्ता ।

**ढो ढे लोपः ॥ ८ । ३ । १३ ॥**

**ढलोपेऽपदान्तग्रहणम् ॥ १ ॥**

ढलोपेऽपदान्तग्रहणं कर्तव्यम् । इह मा भूत्—श्लिड्ढौकते गुडलिड्ढौकते* । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । जश्त्वमत्र बाधकं भविष्यति† ।

**जश्भावादिति चेदुत्तरत्र ढस्याऽभावादपवादप्रसङ्गः ॥ २ ॥**

जश्भावादिति चेदुत्तरत्र ढकारस्याऽभावादसिद्धत्वादपवादोऽयं विज्ञायेत‡ । कस्य ? जश्त्वस्य ।

**तस्मात्सिद्धवचनम् ॥ ३ ॥**

तस्मात्सिद्धत्वं वक्तव्यम् । कस्य ? ष्टुत्वस्य‡ ।

**संग्रहणं वा ॥ ४ ॥**

---

प्र०-सम्बन्धं न हास्यतीत्यर्थः । अनुपूर्वस्य धृत्तेः सकर्मत्वात्सम्बधमिति द्वितीया । कर्मणि वा घञ् । स च नपुंसकेऽपि बाधकाऽभावाद्भवति । स्त्रियां तु क्तिन्नादिभिर्बाध्यमानत्वान्न भवति ।

ढो ढे० । ढलोप इति । क्वचित्स्थानी नास्ति, क्वचिन्निमित्तं नास्तीति वचनसामर्थ्याद्वचनान्तरबाधनादुभयत्रलोपप्रसङ्गः । जश्त्वमत्रेति । एकपदाश्रयत्वादन्तरङ्गत्वात् 'पूर्वत्राऽसिद्ध'मिति वा लोपस्याऽसिद्धत्वात्पूर्वं जश्त्वे प्रवृत्ते लोपस्याऽप्राप्तिरेव बाधा । जश्भावादिति चेदिति । उत्तरत्र ढे यो लोप इष्यते स न प्राप्नोति, लोपे कर्तव्ये ष्टुत्वस्याऽसिद्धत्वात्परस्य ढत्वाऽभावादित्यर्थः । जश्त्व इति । लोपेन तावदसिद्धत्व-

---

उ०-भवांस्तरतीति । सकर्मकत्वादिति । अर्हीमार्थत्वादिति भावः । कर्मणि वा घञिति । अनन्तरसंपदं 'स' इति उत्तरत्रोपतिष्ठते इत्यर्थः । नपुंसकेऽपीति । 'घञजपः पुंसि' इति प्रायोवाद इति भावः ।

ढो ढे लोपः । क्वचित्स्थानीति । श्लिड्ढौकत इत्यत्र जश्त्वात् । क्वचिन्निमित्तमिति । 'लीढ'इत्यादौ ष्टुत्वस्याऽसिद्धत्वादिति भावः । वचनान्तरबाधनादिति । ढलोपैकवाक्यतापक्षस्य ष्टुत्वैकवाक्यतापक्षस्य च पूर्वत्रासिद्धमित्यस्य बाधाल्लीढ इत्यादाविव प्रकृतेऽपि जश्त्वात्परत्वाल्लोपप्रसङ्ग इति भावः । ननु लोपस्याऽसिद्धत्वात्कथं जश्त्वेन लोपस्य बाधोऽत आह—अप्राप्तिरेव बाधेति । वार्तिकेऽपवादशब्दो भावप्रधानः । भाष्ये—कस्य जश्त्वस्येति । लीढ इत्यादावप्रवृत्तेः, जश्त्वस्यापवादोऽयं स्यादित्यर्थः । तस्मादिति । ष्टुत्वस्य सिद्धत्वेन जश्त्वापवादत्वाऽसंभवात् लोपस्याऽसिद्धत्वेन पूर्वं जश्त्वे प्रवृत्ते लोपाऽप्राप्तिरिति भावः । संग्रहणं वेति । 'गुडलिड् ढौकते'

---

* ८. २. ३१. † ८. २. ३९. ‡ ८. ४. ४१.

संग्रहणं* वा कर्तव्यम् । 'सङि ढ' इति वक्तव्यम् ।

तत्तर्हि वक्तव्यं ? न वक्तव्यम् । आनन्तर्यमिहाश्रीयते—'ढकारस्य ढकार' इति । क चिच्च सन्निपातकृतमानन्तर्यं शास्त्रकृतमनानन्तर्यम्, क्वचिच्च नैव सन्निपातकृतं नापि शास्त्रकृतम् । ष्टुत्वे संनिपातकृतमानन्तर्यं शास्त्रकृतमनान्तर्यं, जश्त्वे नैव संनिपातकृतं, नापि शास्त्रकृतम् । यत्तु कुतश्चिदेवानन्तर्यं तदाश्रयिष्यामः ।

## खरवसानयोर्विसर्जनीयः ॥ ८ । ३ । १५ ॥

## विसर्जनीयोऽनुत्तरपदे ॥ १ ॥

विसर्जनीयोऽनुत्तरपद इति वक्तव्यम् । इह मा भूत्—नार्कुटो नार्पत्य इति† ।

प्र०-मवश्यं वाध्यं, तत्र 'लीढ'मित्यादावेकमेवपूर्वत्रासिद्धत्वमतस्तदेव बाध्यते, श्वलिड्ढौकत इत्यत्र तु ढलोपस्य जश्त्वापेक्षया वहिरङ्गत्वात्परत्वाच्च द्विविधमसिद्धत्वमिति न तद्बाध्यते । ततो जश्त्वे कृते नश्रुतिकृतमानन्तर्यं, नापि शास्त्रकृतं, जश्त्वस्याऽसिद्धत्वाऽभावादिति लोपस्याऽयमविषयः ।

खरव० । विसर्जनीय इति । उत्तरपदे सति यो रेफो निष्पन्नस्तन्निमित्तकस्तस्य विसर्जनीयो न भवतीति वाक्यार्थः संपद्यते । तेन दास्याःपुत्रादौ भवत्येव । न ह्यत्र सकारस्य रेफ उत्तरपदनिमित्तकः, किं तर्हि, पदत्वनिमित्तकः । 'नार्कुटः' इत्यादौ तु तद्धितनिमित्तत्वे रेफस्योत्तरपदं निमित्तं, तदपेक्षत्वादकारस्यादित्वस्य । नार्कुट इति । नृकुट्यां भव इत्यण् । नार्पत्य इति । नृपतेरपत्यमिति दित्यदित्येति ण्य । तत्र वृद्धौ

उ०—इत्यादावप्राप्त्युपायेन विकल्पबोधको वाशब्दः । ननु सामर्थ्यात् ष्टुत्वाऽसिद्धत्वबाधे स्वासिद्धत्वमपि बाध्यतां विनिगमकाऽभावादत आह—द्विविधमिति । किञ्च स्वैकवाक्यतापन्नपूर्वत्रासिद्धबाधापेक्षया पश्चादुपस्थितपराङ्गतद्बाधस्यैव न्याय्यत्वमित्यपि बोध्यम् । एतेन त्रिपादीस्थेऽन्तरङ्गे वहिरङ्गाऽसिद्धत्वाऽप्रवृत्तेरिदं चिन्त्यमित्यपास्तम् । अतएव 'झलाञ्जशोऽन्ते-झशी'ति न्यासः खरिचेत्यतः पूर्वं न कृतः ।

खरवसानयोर्विर्जनीयः । नन्वेवं 'यशःसमूह' इत्यादौ उत्तरपदे विसर्गो न स्यादत आह—उत्तरपदे सतीति । नेयं परसप्तमी विधेयविशेषणं, किन्तु सत्सप्तमी रेफविशेषणं, तेन निमित्तत्वं फलतीत्याह—तन्निमित्तक इति । ननु नार्कुटेऽपि नोत्तरपदनिमित्तको रेफ इत्यत आह—नार्कुट इत्यादौ त्विति । ऋकारगताऽऽदित्वस्य वृद्धिनिमित्तस्य तदपेक्षत्वादित्यन्वयः । पूर्वभक्तत्वादिति । रपरोऽण् यत्रत्यः स्थानिद्वारा स्वतो वा तद्भक्तत्वादित्यर्थः । बहिरङ्ग—

* ३, १. ५—३. ४. ७८. † ४. ३. ५१; ४. १. ८५; ७. २. ११७; १. १. ५१.

## न वा बहिरङ्गलक्षणत्वात् ॥ २ ॥

न वा वक्तव्यम् । किं कारणम् ? 'बहिरङ्गलक्षणत्वात्' । बहिरङ्गो रेफोऽन्तरङ्गो विसर्जनीयः । 'असिद्धं बहिरङ्गमन्तरङ्गे' । नैष युक्तः परिहारः । अन्तरङ्गं बहिरङ्गमिति प्रतिद्वन्द्वभाविनावेतौ पक्षौ, सत्यन्तरङ्गे बहिरङ्गं, सति बहिरङ्गेऽन्तरङ्गम् । न चात्रान्तरङ्गबहिरङ्गयोर्युगपत्समवस्थानमस्ति । किं कार-

---

प्र०—कृतायां रपरत्वे च पूर्वभक्तत्वाद्रेफस्य पदान्तत्वाद्विसर्जनीयः प्राप्तः प्रतिषिध्यते । न वेति । बहिरङ्गं लक्षणं निमित्तं स्वभावो वा यस्य रेफस्य स तथोक्तः । अपत्यार्थविहिततद्धिता- पेक्षवृद्धिनिमित्तत्वाद्रेफो बहिरङ्गस्तस्याऽसिद्धत्वात्स्थान्यभावाद्विसर्जनीयाऽभावः । अन्तः अङ्गं यस्य, बहिः अङ्गं यस्येति बहुव्रीहिः । ततः सर्वलिङ्गावन्तरङ्गशब्दावुपपन्नौ । अङ्गशब्दश्चात्रोपकारकवाची । प्रतिद्वन्द्वभाविनाविति । द्वन्द्वं युग्ममुच्यते । प्रतिकूलं परस्परविरुद्धं द्वन्द्वं-प्रतिद्वन्द्वं, तत्र भवतोऽवश्यमित्यावश्यके णिनिः । सत्यन्तरङ्ग इति । अन्तरङ्गे बुद्ध्यापेक्षिते तदपेक्षया बहिरङ्गं भवति, बहिरङ्गे चाऽपेक्षिते तदपेक्षयाऽन्तरङ्गं भवति, अन्तरङ्गव्यपदेशं लभत इत्यर्थः । न चात्रेति । अत्र विषयेऽन्तरङ्गबहिरङ्ग- योर्युगपदेकस्यां बुद्धावपेक्षितपरस्परमवस्थानं नास्ति, पूर्वस्यां परिभाषायां परस्य विसर्ज- नीयस्याऽसिद्धत्वादन्तरङ्गाऽभावाद्रेफस्य तदपेक्षबहिरङ्गत्वाऽभावाद्बहिरङ्गपरिभाषा-

---

उ०—बहिर्भूतनिमित्तं शास्त्रमित्यर्थः । स्वभावो वेति । स्वस्य भावः—उत्पत्तिः । अपत्येति । अपत्यार्थविहिततद्धितमपेक्षते निमित्ततया या वृद्धिः तन्निमित्तत्वं रेफस्य, तया सह विधानाद् रेफशिरस्को हि वृद्धिशब्देन विधीयते विसर्जनीयस्तु पदान्तमात्राश्रितोऽन्तरङ्ग इत्यर्थः । पूर्वमनयोः पुंलिङ्गेन निर्देशं कृत्वा अग्रे नपुंसकत्वेनोल्लेखोऽसङ्गतोऽत आह—अन्तः अङ्गमिति । अङ्गशब्दः संज्ञिविशेषवाची शरीरावयववाची वा न गृह्यते इत्याह—अङ्गशब्दश्चेति । द्वन्द्वं- युग्ममिति । अत्यन्तसहचरिताभिव्यक्तौ द्वन्द्वशब्दनिपातनादिति भावः । तत्र भवतोऽवश्य मिति । विरोधेनैव तावर्थौ नियमेन भवतो नतु कदाचिदपि अविरोधेनेत्यर्थः । भाष्ये—पक्षौ— असिद्धपरिभाषायाः पक्षाविव पक्षौ तत्संबद्धौ पदार्थावित्यर्थः । न वास्तवसत्ता विवक्षिता किन्तु बौद्धीत्याह—बुद्ध्येति । तदपेक्षयेति । तत्प्रतियोगित्वेनेत्यर्थः । बहिरङ्गं भवतीति । तद्व्यपदेश- भाग्भवतीत्यर्थः । अपेक्षितपरस्परम्—अपेक्षितपरस्परधर्मावच्छिन्नम् । अवस्थानं—विषयत्वं, तदुपपादयति—पूर्वस्यामिति । पाद इत्यस्येत्येकदेशस्यायामित्यर्थः । पूर्वत्राऽस्याः परिभाषाया- पादिकेऽन्तरङ्गे न प्रवृत्तिरिति भावः । युक्त्यन्तरमाह—अन्तरङ्गाभावाद्रेफस्येति । नैषापि-

णम् ? 'असिद्धत्वात्'[†] । न चाऽनभिनिर्वृत्ते बहिरङ्गेऽन्तरङ्गं प्राप्नोति, तत्र निमित्तमेव बहिरङ्गमन्तरङ्गस्य । अनिमित्तं बहिरङ्गमन्तरङ्गस्य । किं कारणम् ? 'असिद्धत्वात्' । कथमसिद्धत्वं यावता 'पूर्वत्राऽसिद्ध'मित्यसिद्धा परिभाषा । असिद्धं बहिरङ्गमन्तरङ्गे । कथम् ? 'कार्यकालं संज्ञापरिभाष'मिति । 'खरवसान-

प्र०-नुपस्थानात्प्राप्नोत्येव विसर्जनीयः । नानाभिनिर्वृत्त इति । वस्तुतत्त्वकथनम् । तत्र निमित्तमेवेति । पराभ्युपगमेनाऽन्तरङ्गबहिरङ्गव्यपदेशः । बहिरङ्गाभिमतं बहिरङ्गम् । अन्तरङ्गाभिमतस्यान्तरङ्गस्येत्यर्थः । असिद्धत्वादिति । बहिरङ्गस्य रेफस्याऽन्तरङ्ग विसर्जनीयेऽसिद्धत्वाद्विसर्जनीयाऽभावः । कथमसिद्धत्वं यावता पूर्वत्रासिद्धमित्यसिद्धा परिभाषेति । 'पूर्वत्रासिद्ध'मिति वचनेन विसर्जनीयस्य पूर्वस्यां परिभाषाया-मसिद्धत्वात्तदनुपस्थानात्कथं रेफस्याऽसिद्धत्वमित्यर्थः । अप्रवृत्तिरेव परिभाषाया असिद्धिः । बहिरङ्गपरिभाषा हि 'विप्रतिषेधे परं कार्य'मित्यत्रोपसङ्ख्यानात्तद्देशा 'वाह ऊ'डित्यत्र ज्ञापितत्वादेतद्देशा वेति पूर्वा । इतरः कार्यकालत्वमाश्रित्याह—असिद्धमिति । यथोद्देशत्वमाश्रित्य चोदयति—कथमिति । इतर आह—कार्यकालमिति । तत्र काचित्परिभाषा विधिवाक्येनैकवाक्यत्वं गता स्वकार्यं निष्पादयति, यथेक्परिभाषा मिदे-

उ०-काऽन्तरङ्गस्य सपादसप्ताध्यायीस्थरेफविधायकदृष्ट्याऽसिद्धत्वेनैतन्निरूपितबहिरङ्गत्वमेवतस्य नास्तीत्यर्थः । पूर्वत्रासिद्धमिति । विसर्गस्याऽसिद्धत्वे सति रेफस्य यथा विसर्गप्राप्तिस्त-दाह—भाष्ये—न चानभिनिर्वृत्ते इति । तत्र निमित्तमेव बहिरङ्गमित्याद्येव वक्तव्ये अस्य प्रकृते उपयोगाभावादाह—वस्तुतत्त्वेति । पराभ्युपगमेनेति । एवञ्च बहिरङ्गत्वाऽभावेन परिभाषाऽप्रवृत्तौ प्राप्नोत्येव विसर्ग इति चोद्यं पर्यवसितम् । अत्राशयमजानतः प्रत्युत्तरम्—अनिमित्तमिति । तद्व्याचष्टे—बहिरङ्गस्येति । इतरः स्वाशयं प्रकटयति—कथमित्यादि । स च परिभाषे 'त्यन्त एकवक्तृक एको ग्रन्थ' इत्याशयेन कृत्स्नं भाष्यमुपादत्ते—कथमित्यादि । कथमित्याक्षेपेणैवा' नेनासिद्धत्वं प्राप्नोतीत्यर्थः । तदुपपादयति—पूर्वत्रेति । असिद्धा परि-भाषेत्यस्याप्रवृत्तान्तरङ्गपरिभाषेत्यर्थः । इत्याह—अप्रवृत्तिरेवेति । कार्यकालत्वमिति । तत्पक्षे हि विसर्जनीयस्याऽसिद्धत्वेऽपि परिभाषायाः सिद्धत्वात्तेन तस्याः स्वैकवाक्यता संपादनमिति भावः । तत्र परिभाषाणां विधिशेषत्वं क्वचित्पदैकवाक्यतया, क्वचिद्वाक्यैकवाक्यतयेति दर्श-यति—तत्र काचिदिति । विषये—उदाहरणविशेषे । निमित्तापेक्षा—विप्रतिषेधादिरूप-

† ८. २. १.

योर्विसर्जनीयः', उपस्थितमिदं भवत्यसिद्धं बहिरङ्गमन्तरङ्ग इति । एवमेषा सिद्धा परिभाषा भवति । कुतो नु खल्वेतद् द्वयोः परिभाषयोः सावकाशयोः

---

प्र०-रिको गुणं व्यवस्थापयति । क्वचित्तु विषये निमित्तापेक्षा वाक्यभेदेन प्रधानकार्ये व्याप्रियते, यथा 'विप्रतिषेधे परं कार्य'मिति । एषा हि 'वृक्षे'ष्वित्यादौ 'बहुवचने झल्ये'दित्यस्मिन्प्रवृत्ते 'वृक्षेभ्य' इत्यादावेत्वदीर्घत्वयोर्विप्रतिषेधे परमेत्त्वं प्रवर्तयति । तद्वदसिद्धपरिभाषा हि 'वृक्षस्तिष्ठती'त्यादौ विसर्जनीयशास्त्रे प्रवृत्ते नार्कुटादौ रेफस्याऽसिद्धत्वं विदधती प्रधानं विसर्जनीयं विषयविशेषे व्यवस्थापयन्ती विषयं संस्कुरुते । न च 'पूर्वत्राऽसिद्ध'मित्यनेन योगेन बहिरङ्गपरिभाषा रेफे पूर्वस्मिन्नसिद्धा क्रियते । प्रधानसन्निधौ गुणानां परस्परेणाऽसंबन्धात् । तदुक्तं—'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्या' दिति । विध्यन्तरशेषभावाच्च वाक्यभेदेनाप्युपतिष्ठमाना वाक्यान्तरे विसर्जनीयेनैकवाक्यभावात्पौर्वापर्याऽभावात् 'पूर्वत्रासिद्ध'मित्येनेन विसर्जनीये कर्तव्ये नाऽसिद्धा क्रियते, पूर्वोक्ताद्गुणत्वाद्वा । कुतो न खल्विति । 'असा आदित्य' इत्यादि 'पूर्वत्राऽसिद्ध'मित्यस्याऽवकाशः । 'पचावेद'मित्यादिबहिरङ्गपरिभाषायाः । नार्कुट' इत्यादौ तु द्वयोः सन्निपातः । यद्यपि 'पूर्वत्राऽसिद्ध, मित्यधिकारस्तथापि

---

उ०-निमित्तापेक्षा । व्याप्रियत इति । प्रधानकार्यं विशेषेऽवस्थापयतीत्यर्थः । वृक्षेष्वित्यादाविति । अनेन पूर्वशास्त्रस्य विनाऽपि परिभाषां स्वविषये प्रवृत्तिं दर्शयति । तद्वदिति । 'विप्रतिषेधे पर'मितिवदित्यर्थः । विषयं—लक्ष्यम् । रेफे पूर्वस्मिन्नसिद्धेति । कार्यकालपक्षे बहिरङ्गपरिभाषायास्त्रिपादीस्थत्वेन पूर्वरेफदृष्ट्या असिद्धतया कथं तस्य विसर्गं प्रत्यसिद्धत्वं प्रतिपादयेदिति शङ्कार्थः । प्रधानेति । 'पूर्वत्रे'त्यनेनाऽसिद्धपरिभाषाया नासिद्धत्वं प्रतिपाद्यत इत्यर्थः । नन्वेवं विसर्गविधौ उपस्थिताऽसिद्धपरिभाषाया 'आगन्तूनामन्ते निवेश' इति न्यायेन तदुत्तरत्वात्पूर्वत्र विसर्जनीये तस्या असिद्धत्वात्कथं सा रेफाऽसिद्धत्वं प्रतिपादयेदत आह—विध्यन्तरेति । वाक्यान्तरे इति । वाक्यैकवाक्यतापक्षे महावाक्ये इत्यर्थः । पूर्वोक्तादिति । कार्यकालपक्षे अस्या उपस्थितिसामर्थ्यादेव रेफं प्रत्यपि न विसर्गोऽसिद्धत्वमिति कथं तन्निरूपितं बहिरङ्गत्वमित्यपि न वाच्यम् । अनया एव युक्त्या सर्वत्राऽप्यसिद्धपरिहारः सुकर इति बोध्यम् । एवमेषा परिभाषा सिद्धा भवतीति । बहिरङ्गपरिभाषाऽत्र प्राप्ता भवतीत्यर्थः । यद्वा एवमेषा परिभाषा—पूर्वत्रासिद्धमित्येषा—अप्राप्ता भवतीत्यर्थः । असा आदित्य इति । अत्र वर्णपरयासिद्धत्वार्थापि च । बहिरङ्गेति । तथा पचैत पै इत्यैत्त्वं च । सावकाशत्वमुक्त्वा एकत्र युगपत्प्राप्तिरूपसमवस्थितत्वं दर्शयति—नार्कुट इति । यद्यपीति । एकत्र परिभाषयोरित्युक्त-

समवस्थितयोः 'पूर्वत्रासिद्ध'मिति च 'असिद्धं बहिरङ्गमन्तरङ्ग' इति च, 'पूर्वत्रासिद्ध'मित्येतामुपमृद्याऽसिद्धं बहिरङ्गमन्तरङ्ग इत्येतया व्यवस्था भविष्यति, न पुनरसिद्धं बहिरङ्गमन्तरङ्ग इत्येतामुपमृद्य 'पूर्वत्रासिद्ध'मित्येतया व्यवस्था स्यात् ? अतः किम् ? अतोऽयुक्तः परिहारो 'न वा बहिरङ्गलक्षणत्वा'दिति ।

## रोः सुपि ॥ ८ । ३ । १६ ॥

किमर्थमिदमुच्यते न 'खरवसानयोर्विसर्जनीयः [ ८. ३. १५ ] इत्येव सिद्धम् ? नियमार्थोऽयमारम्भः । 'रोरेव सुपि नान्यस्य सुपि' । क्व मा भूत् ? गीर्षु धूर्षु ।

---

प्र०—सपादां सप्ताध्यायीं प्रति पादत्रयपठितस्य सर्वस्याऽसिद्धत्वप्रतिपादनात्परिभाषासाधर्म्यात्परिभाषाव्यवहारः । तत्रैतयोः परिभाषयोः सावकाशत्वात्तुल्यबलयोरप्रतिपत्तावाश्रीयमाणायां नार्कुटादौ विसर्जनीयप्रसङ्गः । पर्याये चाश्रीयमाणे पक्षेऽनिष्टविसर्जनीयप्राप्तिः । अनयोश्च परस्परनिमित्तव्याघातात्परस्परस्योपमर्दकत्वम् । तथा हि बहिरङ्गपरिभाषा रेफस्याऽसिद्धत्वं कुर्वती पूर्वलक्षणविषयाऽभावात् 'पूर्वत्रासिद्ध'मित्यस्या अप्रवृत्तिं साधयति । 'पूर्वत्रासिद्ध'मित्येषाऽपि विसर्जनीयाऽसिद्धिविधानेनाऽन्तरङ्गाऽभावाद्रेफस्याऽपि तदपेक्षबहिरङ्गत्वाऽभावाद्बहिरङ्गपरिभाषायाः प्रवृत्तिं विहन्ति । ततश्चा-'युक्तोऽयं परिहारो न वा बहिरङ्गलक्षणत्वा'दिति चोद्यान्तमेवेदं भाष्यम् । ततश्च 'विसर्जनीयोऽनुत्तरपद' इति वक्तव्यमेव । यदा तु लक्ष्यदर्शनवशाद्बहिरङ्गपरिभाषाऽऽश्रीयते यथा चक्रकेष्विष्टतो व्यवस्था, तदा युक्त एव परिहारो 'न वा बहिरङ्गलक्षणत्वा'दिति ।

रोः सुपि । नियमार्थ इति । अथ 'सुपी' ति प्रत्याहाराश्रयणात् 'पयोभ्या'

---

उ०—मिति भावः । योरित्ययुक्तमिति भावः । अप्रतिपत्ताविति । क्वचित्प्रवृत्त्या शास्त्रस्य चरितार्थत्वाद्विरोधेऽप्रतिपत्तिरित्यर्थः । पर्याये त्विति । तृजादिवदित्यर्थः । भाष्योक्तमुपमर्दकत्वं व्युत्पादयति—परस्परेति । एवञ्च कार्यकाले यथोद्देशे च त्रिपाद्यां बहिरङ्गासिद्धत्वाऽप्रवृत्तिरिति भाष्याल्लभ्यते । वस्तुतः प्रत्यक्षत्वेन बलवता पूर्वत्रासिद्धमित्येनानुमानिक्या असिद्धपरिभाषाया बाध एवोचितः । भाष्ये—अयुक्त इति । संयोगान्तस्य लोपो रदाभ्यामित्यत्राऽन्यत्र चोक्तोऽसङ्गत इत्यर्थः । यदा त्विति । लक्ष्यवशात्क्वचिदानुमानिकेनाऽपि प्रत्यक्षबाध इत्यभिमानः । लक्षणैकचक्षुषां तु वचनान्येवावश्यकानीति बोध्यम् ।

रोः सुपि । विध्यर्थ इति । कथंचिदपि विध्यर्थत्वे संभवति नियमो न युक्त इति भावः । विध्यर्थानुपपत्त्येति । विधिरूपाऽर्थस्यानुपपत्त्येत्यर्थः ।

## भोभगोअघोअपूर्वस्य योऽशि ॥ ८ । ३ । १७ ॥

### अश्ग्रहणमनर्थकमन्यत्राऽभावात् ॥ १ ॥

अश्ग्रहणमनर्थकम् । किं कारणम्? 'अन्यत्राऽभावात्' । न ह्यन्यत्र रुरस्त्यन्यदतोऽशः* ।

ननु चायमस्ति—छन्दःसु पयःस्विति । किं पुनः कारणं सुकारपर एवोदाह्रियते न पुनरयं वृक्षस्तत्र प्लक्षस्तत्रेति*? अस्त्यत्र विशेषः—विसर्जनीये कृते न भविष्यति । इहापि तर्हि विसर्जनीये कृते न भविष्यति—छन्दःसु पयःस्विति† । स्थानिवद्भावात्प्राप्नोति । ननु चेहापि स्थानिवद्भावात् प्राप्नोति—वृक्षस्तत्र प्लक्षस्तत्रेति । अनल्विधौ स्थानिवद्भावः । अथाऽयमल्विधिः स्था-

प्र०–मित्यादौ विध्यर्थः कस्मादारम्भो न भवति? । 'खरी'त्यनुवृत्त्या खरादेः सुपो ग्रहणात्, न च सप्तमीबहुवचनादन्यः खरादिः सुबस्तीति तस्यैव ग्रहणाद्विध्यर्थानुपपत्त्या नियमार्थ आरम्भः । रोरेवेति । 'रोः सुप्येवे'ति तु नियमो न भवति, 'हलोऽनन्तराः संयोग' इत्यादिनिर्देशात् ।

भोभगो० । अन्यत्राऽभावादिति । यत्राऽशोऽन्यः खर्भवति तत्र 'पूर्वत्राऽसिद्ध'मिति यत्वस्याऽसिद्धत्वाद्विसर्जनीयेन भाव्यमित्यश्येव रुरस्तीत्यर्थः ।

स्थानिवद्भावादिति । ननु च रोरुकारस्यानुबन्धत्वाद्रेफः स्थानीत्यल्विधित्वात्स्थानिवद्भावेन न भाव्यम् । उच्चारणकाले यः श्रुतः स स्थानित्वेनाश्रीयते न तु

उ० भोभोगोअघो० । भाष्ये—अन्यत्वं कुत इत्याशङ्कायामुक्तम्—अन्यदतोऽश इति । भाष्ये—छन्दःस्विति । अत्र हि 'रोः सुपी'ति विसर्गः । तत्र रोः स्थानित्वेन स्थानिवद्भावेन यत्वं सुलभम् । वृक्षस्तत्रेत्यत्र तु 'खरवसाने'ति रेफस्य विसर्गः । न हि तस्य स्थानिवद्भावेन यत्वं सुलभं, स्थानिभूताऽल्धर्मत्वात् । स्थानिभूताल्धर्माश्रये कार्ये निषेध इति भावः । अल्विधित्वादिति । अरुस्थानिकोऽयं विसर्गविधिः, न तु रुस्थानिक इति, अत्रापि स्थान्यल्धर्मत्वाद्विसर्गस्य यत्वं दुर्लभमिति भावः । इति मन्यत इति । सिद्धान्तत्वेनाङ्गीकरोतीत्यर्थः । इदमेवाभिप्रेत्य 'विनिर्दिष्टं स्थितोऽनल्माश्रयते इदं नाम्ने'ति स्थानिवत्सूत्रभाष्ये उक्तमिति अयं सिद्धान्त एव । नियमसूत्राणि वाक्यार्थमर्यादया विधायकान्येव, आर्थिकस्तु निषेध इति पक्षनाशो भाष्ये ध्वनितम् । भाष्ये—ननु चेहापि स्थानिवद्भावादिति । स्थानिभूताऽल्गात-

* ८. ३. १५. † ८. ३. १६.

च्छक्यमश्ग्रहणमवक्तुम् ? बाढं शक्यम् । अल्विधिस्तर्हि भविष्यति । कथम् ? इदमस्ति 'रोरि' [ ८. ३. १४ ] इति । ततो वक्ष्यामि—'खरवसानयो-र्विसर्जनीयो 'रः' । ततो 'रोः सुपि' 'विसर्जनीयो र' इत्येव ।

उत्तरार्थं तर्ह्यश्ग्रहणं कर्तव्यम्—'हलि सर्वेषाम्' [ ८. ३. २२ ] हल्यशीति यथा स्यादिह मा भूत्—वृक्षवयतेरप्रत्ययो—वृक्षव्करोति ।

---

प्र०–प्रतिपत्तिकाले इति मन्यते । अल्विधिस्तर्हीति । रुनैव स्थानी, किं तु तद्विशेषणं, रोर्यो रेफस्तस्य विसर्जनीय इत्यर्थः । ततो वक्ष्यामीति । व्याख्यास्यामीत्यर्थः । वृक्षवयतेरिति । केचिद्वृक्षवन्तमाचष्ट इति णिचि टिलोपे च रूपमित्याहुः । तदयुक्तम् । इष्टवद्भावान्मतुपो लुका भाव्यं, न टिलोपेन तस्माद्वृश्चतेर्वृक्णं वृश्चतीति क्विप्, संप्रसारणे कृते वृक्षवृश्चमाचष्ट इति णिचि टिलोपे च विच्प्रत्ययः क्रियते । क्विपि तु सत्येकदेशविकृतस्यानन्यत्वाद्वृश्चति ग्रहणेन ग्रहणाद्व-कारस्य सम्प्रसारणं स्यात्, 'लोपो व्योर्वली'ति लोपो वा । न च णिलोपस्य स्थानि-वद्भावः, क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसङ्ख्यान'मिति प्रतिषेधात् । विचि तु णिलोपस्य स्थानिवत्त्वाद्वलोपो नास्ति, 'हलि सर्वेषामित्यनेन तु वलोपे कर्तव्ये पूर्वत्रा-सिद्धे न स्थानिवदिति स्थानिवत्त्वनिषेधाद्वलोपः स्यादिति हल्विशेषणार्थमश्ग्रहणं क्रियते । वेतेर्वा वृक्णं वेति वृक्षवीः, वृक्षव्यमाचष्ट इति पूर्ववण्णिजादिः । अथ ककारे परतो 'लोपो व्योर्वली'ति लोपः, कस्मान्न भवति ? न च णिलोपस्य स्थानिवद्भावोऽस्ति, पदान्तविधौ तन्निषेधात् । नैष दोषः । पदान्ते विधीयमाने स्थानिवत्त्वनिषेधो, न च लोपः पदान्तस्तस्याऽभावरूपत्वात् । अश्ग्रहणाऽनुरोधेन चैतद्भाष्यकारेणोदाहृतम् । तथा हि लणित्यत्रोक्तं 'न पदान्ता हलोऽणः सन्ती'ति

---

उ०–वृत्तिधर्माश्रयो नायं षत्वविधिः, समुदाये वर्तमानस्य रुत्वस्य निमित्तत्वान्नवस्थेवात्रापि स्थानिवत्त्वमिति भावः । उत्तरम्—अनल्विधाविति । उक्त आशयः । विसर्जनीय इत्यर्थ इति । एवञ्च 'रोः सुपी'ति सूत्रेऽपि रेफस्यैव स्थानित्वमित्यल्विधित्वास्थानिवत्त्वाभाव इति भावः । न टिलोपेनेति । मतुब्लुकष्टिलोपापवादत्वादिति भावः । ननु णौ परतस्तत्प्रकृतिभूत-प्रातिपदिकस्य लोपविधानेन वृश्चतेः स्थानित्वे मानाऽभावाद्वकारे वृश्चतित्वस्य दुर्लभत्वात्संप्रसा-रणाऽप्राप्तिः । न च छिन्नपुच्छश्वन्यायेन वृश्चतित्वं, बह्ववयवापगमेन वृश्चतित्वाऽप्रत्यभिज्ञानात् । एतेन व्रश्चभ्रस्जेति षत्वं स्यादित्यपास्तम् । न च पदस्येत्यधिकारेण वृश्चान्तत्वस्यापि निमित्तत्वा-त्तत्वं स्थानिवत्त्वेन सुलभम् । झलां जशोऽन्त इत्यन्तग्रहणेनेदृशेषु पदस्येत्यस्य वैयधिकरण्येनै-वान्वयादत आह—लोपो व्योरिति । इदं च तदपवादस्य ऊठ उपलक्षणम् । न च णिलो-पस्येति । न च पदान्तविधित्वं, प्रातिपदिकादेव णिज्जुत्पत्त्या पदान्तत्वाऽभावात्, लोपस्य चरमावयवत्वाभावाच्च । क्विलुगिति । क्वौ लुप्तत्वात्क्वौ विधेश्चेति भावः । विचि त्विति । अन्तर्भूतक्विबाश्रयवलोपस्तु न, बहिर्भूतणिजाद्यपेक्षटिलोपादेरसिद्धत्वात् । अत्र 'अत उपधाया' इति वृद्धिप्राप्तेराह—वेतेर्वेति । अत्र टिलोपस्य स्थानिवत्त्वान्न वृद्धिरिति भावः । पदान्त-

## ओतो गार्ग्यस्य ॥ ८ । ३ । २० ॥

किमर्थमिदमुच्यते न 'लोपः शाकल्यस्य' [ ८.३.१९ ] इत्येव सिद्धम् ?

## ओकाराल्लोपवचनं नित्यार्थम् ॥ १ ॥

ओकाराल्लोपवचनं क्रियते 'नित्यार्थम्' । नित्यार्थोऽयमारम्भः ।

## उञि च पदे ॥ ८ । ३ । २१ ॥

पद इति किमर्थम् ? तन्त्रे उतम्—तन्त्रयुतम्, तन्त्र उतम् ।

पदे इति शक्यमवक्तुम् । कस्मान्न भवति—तन्त्रे उतम्—तन्त्रयुतम् तन्त्र उतमिति ? 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति† । उत्तरार्थं तर्हि पदग्रहणं कर्तव्यं—'ङमो ह्रस्वादचि ङमुण्नित्यम् [ ८. ३. ६२ ] इत्यपदे मा भूत्—दण्डिना शकटिना ।

---

प्र०– ओतो गा० । किमर्थमिति । 'लोपः शाकल्यस्ये'त्यनेन पाक्षिकः सिद्ध एव लोपोऽनेनापि-गार्ग्यस्य मतेन लोपो नान्येषामिति-विकल्पेनैव विधेय इति प्रश्नः । ओकारादिति । गार्ग्यः स्वस्यां स्मृतावोतो नित्यमेव लोपं स्मरतीति पाणिनिरपि तथैवेच्छति । एवञ्च 'भो अत्रे'ति नित्यं भवति, न तु 'भो यत्रे'ति ।

उञि च पदे । अयमपि नित्याऽर्थो योगः ।

---

उ०–विधाविति । विभक्त्यन्तोत्तरसुपा पदत्वमिति भावः । पदान्ते विधीयमान इति । विधिशब्दो भावसाधनः, अन्तशब्दश्चावयववाचीति भावः । अनुरोधेन चेति । एवञ्चेदं भाष्यं पूर्वपक्षैकदेशयुक्तिः । 'हलि सर्वेषा'मित्यनेन भोसादिसाहचर्येण रोरित्यस्यानुवृत्त्या च दस्थानिकस्यैव लोपादित्यपि बोध्यम् ।

ओतो गार्ग्यस्य । इति प्रश्न इति । न च स्वमतप्रत्युत्पन्नायेदं, गार्ग्यशाकल्याभ्यां लोपस्यैव स्मृत्या तद्ग्रहणेऽप्यग्रहणेन तयोरग्रहणादिति भावः ।

उञि च पदे । भाष्ये—दण्डिनेति । न च पदस्येत्यधिकारेण विभक्तिपरिणामेन च ङमन्तात्परो यो ङम् तदन्तं पदं तस्मात्परस्याचो विधीयमानो ङमुट् कथमत्र प्राप्नोति

---

† १. १. १५.

## हे मपरे वा ॥ ८ । ३ । २६ ॥

### यवलपरे यवला वा ॥ १ ॥

यवलपरे हकारे यवला वेति वक्तव्यम् । किं ह्यः, किय्ँह्यः । किं ह्वलयति, किव्ँह्वलयति । किं ह्लादयति, किल्ँह्लादयति† ।

## ङः सि धुट् ॥ ८ । ३ । २९ ॥ नश्च ॥ ८ । ३ । ३० ॥ शि तुक् ॥ ८ । ३ । ३१ ॥ ङ्णोः कुक्टुक् शरि ॥ ८ । ३ । २८ ॥

## ङमो ह्रस्वादचि ङमुण्नित्यम् ॥ ८ । ३ । ३२ ॥

इह धुडादिषु केचित्पूर्वान्ताः क्रियन्ते केचित्परादयः । यदि पुनः सर्व एव पूर्वान्ताः स्युः सर्व एव वा परादयः, कश्चात्र विशेषः ?

### धुगादिषु ष्टुत्वणत्वप्रतिषेधः ॥ १ ॥

धुगादिषु सत्सु ष्टुत्वणत्वयोः प्रतिषेधो वक्तव्यः । ष्टुत्वस्य तावत्—श्वलिट्त्साये, मधुलिट्त्साये । 'ष्टुना ष्टुः' [ ८. ४. ४१ ] इति ष्टुत्वं प्राप्नोति । परादौ पुनः सति न पदान्ताट्टोरनाम् [ ४२ ] इति प्रतिषेधः सिद्धो भवति । णत्वस्य—कुर्वन्नास्ते, कृषन्नास्ते । 'रषाभ्यां नो णः समानपदे [ ८. ४. १ ] इति णत्वं प्राप्नोति । परादौ पुनः सति 'पदान्तस्य ने'ति प्रतिषेधः* सिद्धो भवति । सन्तु तर्हि परादयः ।

प्र०— ङः सि धुट् । योऽयमिह पूर्वन्तपरादि विचारः स स्थितलक्षणस्यार्थस्य लौकिकस्य विरोधाऽभावात् कृतः । ततो यदेके चोदयन्ति—'पूर्वान्तपक्षे हि तत्सहितेन पूर्वेणाऽर्थः प्रत्याय्यः, परादिपक्षे हि तत्सहितेन परेण पदेनेत्ययुक्तो विचार इति ।

उ०—ङमन्तस्य पदत्वाभावादिति वाच्यं, वैयधिकरण्येनानुवृत्तस्यान्वयोपपत्तौ विभक्तिविपरिणामे मानाभावादित्याशयः । एवञ्च पदग्रहणमपि अन्तग्रहणवत्पदाधिकारस्य विशेषणत्वे ज्ञापकं बोध्यम् । भाष्येऽनुक्तमपि सूत्रप्रयोजनं दर्शयति—अयमपीति ।

हे मपरे वा । वार्तिकेन यवला निरनुनासिका एव विधीयमानत्वात् । उदाहरणेषु सानुनासिकलेखस्तु लेखकप्रमादित्याहुः ।

ङः सि धुट् । स्थितलक्षणस्येति । स्थितम्—अप्रच्युतं लक्षणं—स्वरूपं यस्य सः । कोऽसौ ? लौकिको वाक्यार्थरूपस्तस्येत्यर्थः । प्रकृतिप्रत्यययोः पदानां चावापोद्वापलक्षणो बुद्ध्या पृथग्निष्कृष्य कल्पितोऽर्थो न तु स्थितलक्षणः । स हि आगमादेशादिभिरन्यत्रान्यत्रोपसंक्रमत इति भावः । संहितायां—प्रकृतिप्रत्यययोः पदानाञ्च विभागाऽभावकाले । वाक्यार्थोऽभेदादिति । वाक्यस्यैवास्मन्मते बोधकत्वात्, अस्तिर्भवन्तिपर इत्युक्तेरिति भावः । धुटो

† क्वचिदुदाहरणानि विपर्ययेण पठ्यन्ते । क्वचिच्च सानुनासिकपाठो दृश्यते, स च लेखकप्रमादकृतः । द्रष्टव्योऽत्रोद्द्योतः । * ८. ४. ३७.

**परादौ छत्वषत्वविधिप्रतिषेधः ॥ २ ॥**

यदि परादयश्छत्वं विधेयं षत्वं च प्रतिषेध्यम्। छत्वं विधेयम्—कुर्वञ्च्छेते, कृषञ्च्छेते। यद्धि तच्छश्छोऽटि [ ८. ४. ६३ ] इति 'झयः पदान्ता'दित्येवं तत्। किं पुनः कारणं—'झयः पदान्ता'दित्येवं तत्? इह मा भूत् 'पुरा क्रूरस्य विसृपो विरप्शि'न्निति* । षत्वं च प्रतिषेध्यम्—प्रत्यङ्क्सिञ्च, उदङ्क्सिञ्च। 'आदेशप्रत्यययोः' [ ८. ३. ५९ ] इति षत्वं प्राप्नोति। पूर्वान्ते पुनः सति 'सात्पदाद्योः' [ १११ ] इति प्रतिषेधः सिद्धो भवति। तस्मात्सन्तु यथान्यासमेव केचित्पूर्वान्ताः केचित्परादयः। अयं तु खलु शितुक्छत्वार्थं नियोगतः पूर्वान्तः कर्तव्यः, तत्र कुर्वञ्च्छेते कृषञ्च्छेत इति 'रषाभ्यां नो णः समानपद' इति णत्वं प्राप्नोति। नैष दोषः। श्चुत्वे योगविभागः करिष्यते†। इदमस्ति क्षुभ्नादिषु न णकारो भवति‡। ततः—'स्तोः श्चुना'। स्तोः श्चुना संनिपाते न णकारो भवति। ततः—'श्चुः'। श्चुश्च भवति स्तोः श्चुना सन्निपाते।

**ङमो ह्रस्वादचि ङमुण्नित्यम् ॥ ८ । ३ । ३२ ॥**

**ङमुटि पदादिग्रहणम् ॥ १ ॥**

ङमुटि पदादिग्रहणं कर्त्तव्यम्। इह मा भूत्—दण्डिना शकटिनेति।

प्र०—तदसम्बद्धम्। सत्यप्यस्मिन् भेदे संहितायां वाक्यार्थाऽभेदात्। नियोगत इति। परादौ छत्वं न सिध्यतीति वचनादवश्यं पूर्वान्तः कर्तव्य इत्यर्थः। तत्र नकारस्याऽपदान्तत्वाण्णत्वप्रसङ्गः। न च 'नश्चापदान्तस्य झली'ति नकारस्याऽनुस्वारे परसवर्णे च रूपं सिध्यति। अनुस्वारे कर्तव्ये तु तुकोऽसिद्धत्वात्। श्चुत्व इति। णत्वप्रतिषेधे च श्चुत्वमाश्रयात्सिद्धम्।

ङमो ह्रस्वादचि ङमुण्नित्यम्। एवं तर्हीति। ङमा पदस्य विशेषणात्तदन्त-

उ०—विभागक्रमेण भेदमवलम्ब्य टुट् धुट् तुटोऽवलम्ब्य च भाष्ये केचित्परादय इति बहुवचनम्। वचनादिति। यथान्यासं वचनादित्यर्थः। अपदान्तत्वादिति। परादौ तु पदान्तत्वेन 'पदान्तस्य ने'ति णत्वप्रतिषेधसिद्धिरिति भावः। ननु पूर्वस्मिन् णत्वप्रतिषेधे कर्तव्ये परस्य श्चुत्वस्याऽसिद्धत्वात्कथं सिद्धिरत आह—णत्वप्रतिषेध इति।

ङमो ह्रस्वादचि०। भाष्ये—पदादिग्रहणमिति। पदादेरच इत्यर्थः। अचि इति पञ्चम्यर्थे सप्तमी। यद्यपि पदस्येत्यनुवृत्तस्याऽचीति विशेषणं तथा च 'तस्मादित्युत्तरस्या'इत्यादिना पदस्यादेर्नापि सामानाधिकरण्यं संभवति यत्र विशेषणे विशेष्ये च सप्तमी तत्रैव यस्मिन्विधिरिति [illegible] इति भावः। अत एव 'गुडलिड्[illegible]' इत्यादौ [illegible]सिद्धिः। अन्यथा [illegible] पदस्यैव स्यात्। अत एव आर्धधातुकस्येति सूत्रे [illegible]ग्रहणं चरितार्थम्। अन्यथा [illegible]। पदादिति वचनेत इति। [illegible]

* तै० सं० १. १. ९. १. † ८. ४. ४०. ‡ ८. ४. ४१.

तर्हि वक्तव्यम् ? न वक्तव्यम् । 'पदा'दिति+ वर्तते । एवमपि—परमदण्डिना परमच्छत्रिणेत्यत्र प्राप्नोति× ।

नैष दोषः । उक्तमेतत्—'उत्तरपदत्वे चाऽपदादिविधौ लुमता लुप्ते प्रत्ययलक्षणं न भवती'ति* । एवमपि पदादिति वक्तव्यम् । यद्धि तत्प्रकृतं 'प्राक् सुपि कुत्सना'दित्येवं तत्' । एवं तर्हि ङम एवायं ङमुट् क्रियते । कथम् ? 'पदस्ये'ति‡ वर्तते 'ङम' इति च नैषा पञ्चमी । का तर्हि ? संबन्धषष्ठी । 'पदान्तस्य ङमो ङमुड्भवति ह्रस्वादुत्तरस्याऽची'ति । यदि ङम एव ङमुट् क्रियते कुर्वन्नास्ते कृषन्नास्ते—'रषाभ्यां नो णः समानपदे' [ ८. ४. १ ] इति णत्वं प्राप्नोति । 'पदान्तस्य ने'ति†† प्रतिषेधो भविष्यति । पदान्तस्ये'त्युच्यते नैष पदान्तः । पदान्तभक्तः पदान्तग्रहणेन ग्राहिष्यते । एवमपि न सिध्यति ।

प्र०–विधिना ङमन्तस्य पदस्यागमो विधीयमानो 'दण्डिने'त्यादौ ङमन्तस्याऽपदत्वान्न भवति । यद्येवं पदस्यादिङ्मुट् प्राप्नोति । नैष दोषः । 'ह्रस्वा'दित्यनेन ङमा ह्रियते 'ङमन्तस्य पदस्य ह्रस्वात्परो यो ङम् तस्य ङमुड् भवति' । नवेति । न हि पदस्येत्येत-

उ०–इत्यर्थेन दण्डिनेत्यादौ न दोषः । दण्डिनित्यस्य भत्वादिति तात्पर्यम् । एवमपीति । अन्तर्वर्तिविभक्त्या पदत्वमिति भावः । सिद्धान्त्येकदेश्याह—उक्तमेतत्—उत्तरपदत्वे चेति । अत्राऽपदादीति पर्युदासेन पदान्तविधावेवाऽस्य प्रवृत्त्या न लुमतेति सूत्रस्थभाष्यसंमततया अत्र प्रवृत्त्यभावात्, माषकुंभवापेनेत्यादौ णत्वस्य पदव्यवायेऽपीति निषेधसिद्धये यत्र उत्तरपदस्य कार्यित्वं तत्रैव तत्प्रवृत्तेश्च नेयं सिद्धान्त्युक्तिः । एतत्प्रत्याख्यानप्रकारोऽपि तद्भाष्य उक्तो योगविभागस्य इष्टसिद्ध्यर्थतया पदान्तविधिविषय एवेति न दोष इति बोध्यम् । कैयटे 'ह्रस्वादित्यनेन ङमाह्रियते'इति पाठः । आगमित्वेनाक्षिप्यत इति तदर्थः । ङमन्तस्य पदस्य ह्रस्वादिति । 'पदस्ये'त्यवयवषष्ठी । 'ङम'इति च तद्विशेषणं, ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमुडित्यर्थः । ह्रस्वात्परश्च प्रत्यासत्त्योपस्थितो ङमेवेति भावः । भाष्ये—णत्वं प्राप्नोतीति । आगमनस्येति भावः । भाष्ये—पदान्तभक्त इति । अयं भावः—'यदागमा' इत्यस्यायमप्यर्थः—'आगमी यद्यद्धर्मवैशिष्ट्येन भासते आगमस्याऽपि तद्धर्मवैशिष्ट्येन ग्रहण'मिति स गृह्यते येन धर्मेण तेन तद्गुणीभूतागमानामपि ग्रहणमित्यक्षरार्थः परिभाषायाः । स येन शब्देन गृह्यते तेन तद्विशिष्टस्य ग्रहणमिति चेति । एतेन 'यदागमा'इति परिभाषया समुदायस्य पदान्तत्वेऽपि केवलागमनकारस्य तत्त्वाभावः । नत्वं तु तस्याप्यस्त्येवेति अपास्तम् । न हि पदस्येति ।

+ ८. १. १७. × २. ४. ७१; १. १. ६२; १. ४. १४. * १. १. ४१.' † ८. १. ६९. ‡ ८. १. १६. †† ८. ४. ३७.

किं कारणम् ? उक्तमेतत्—'न वा पदाधिकारस्य विशेषणत्वा'दिति* । [ तेन दण्डिना शकटिनेत्यत्र प्राप्नोति ] । एवं तर्हि पद इति वर्तते । क्व प्रकृतम् ? 'उञि च पदे' [ ८. ३. २१ ] इति ।

**मय उञो वो वा ॥ ८ । ३ । ३३ ॥**

किमर्थं 'मय उत्तरस्य उञो वो वे'त्युच्यते नेको यणचि [ ६. १. ७७ ] इत्येव सिद्धम् ? न सिध्यति । 'प्रगृह्यः प्रकृत्ये'ति† प्रकृतिभावः प्राप्नोति । यदि पुनस्तत्रैवोच्येत—'इको यणचि मय उञो वे'ति ? नैवं शक्यमिह हि दोषः स्यात्—'किम्वावपनं महत्‡' । मोऽनुस्वारः [ ८. ३. २३ ] हली'त्यनुस्वारः प्रसज्येत । वत्वे पुनः सत्यसिद्धत्वान्न भविष्यति ।

प्र०-द्विशेष्यं किं तर्हि, विशेषणमिति तदन्तविध्यभावाद्दण्डिनेत्यादौ ङमुट्प्रसङ्गः । एवं तर्हीति । तत्सम्बन्धानुवृत्त्या च पूर्वयोगेष्वसम्बन्धाद्गुडलिट्स्वित्यादौ धुडादयोऽपि भवन्ति ।

मय उञो वो वा । किमर्थमिति । 'उञ' इति योगविभागेन शाकल्यस्य मतेन प्रगृह्यसञ्ज्ञाविधानात्पक्षे यणादेशः सिद्ध इति प्रश्नः । प्रगृह्य इति । 'उञ' इत्यत्रेतावित्यनुवर्तनादनितिपरस्योञो निपात एकाजनाङिति नित्यं प्रगृह्यसञ्ज्ञा । यदि पुनरिति । यण्ग्रहणानुवर्तनाद्वग्रहणं न कर्तव्यं भवतीति भावः ।

यत्व इति । अनुस्वारे कर्तव्ये वत्वस्याऽसिद्धत्वादनुस्वाराऽभावः, हल्परत्वाऽभावात् यदा त्वितिपर उञ्भवति तदा 'किं विति' 'किम्विति' 'किमु इति' 'किमूँ इती'ति रूपचतुष्टयं भवति । प्रगृह्यसञ्ज्ञाऽभावपक्षे वत्वस्यासिद्धत्वाद्यणादेशे सत्यनुस्वारो भवति । प्रगृह्यसञ्ज्ञापक्षे त्वनेन वा वत्वम् । 'ऊँ' आदेशस्यापि स्थानिवद्भावादान्तरतम्यादनुनासिके पाक्षिके वकारे सति रूपपञ्चतयेन भाव्यमित्याहुः ।

उ०-विशेष्यत्वे ह्रस्वात्परङमन्तपदादपि ङमुडित्येवार्थः स्यात्तु त्वयुक्त इति मद्दण्डेनाऽनिष्टं स्यादिति भावः । एवं च 'ह्रस्वात्परो यो ङम् पदावयवस्तस्य ङमु'डित्यर्थे दण्डिनेत्यादौ दोषस्तदवस्थः । पदावयवङमः परस्याऽच इत्यर्थेऽप्यत्र दोष एव । विभक्तिविपरिणामेन 'ङमन्तात्पदात्परस्ये' त्यर्थस्तु न युक्तो विभक्तिविपरिणामे मानाऽभावात् । तत्पक्षेऽपि परमदण्डिनेत्यादौ दोषवारणाय पद इत्यनुवृत्तिः । टकारपदत्वे चैतस्य [illegible] नात्र प्रवृत्तिरित्युक्तम् ।

मय उञ वो वा । ननूञः प्रगृह्यत्वात् कथमिको यणचीत्यनेन यणित्यत आह— उञ इतीति । नित्यमिति । तथा च शमु अस्तु वेदिरित्यादौ पक्षे यत्वं न स्यादिति भावः । इत्याहुरिति । विधीयमानत्वेन सवर्णाऽग्राहकत्वमणुदित्सूत्रेऽण्ग्रहणेन यण्—

* ८. १. १६. १. अयं पाठः क्वचित् । † १. १. १४; ६. १. १२५. ‡ म० वे० ११. ४५.

## विसर्जनीयस्य सः ॥ ८ । ३ । ३४ ॥

इह कस्मान्न भवति—वृक्षः प्लक्ष इति । संहितायामिति† वर्तते । एवमप्यत्र प्राप्नोति । किं कारणम् ? 'परः संनिकर्षः संहिता [ १. ४. १०९ ] इत्युच्यते स यथैव परेण परः सन्निकर्ष एवं पूर्वेणाऽपि । एवं तर्ह्यनवकाशाऽवसानसंज्ञा‡ संहितासंज्ञां बाधिष्यते । अथ वा संहितासंज्ञायां प्रकर्षगतिर्विज्ञास्यते—'साधीयो यः परः सन्निकर्ष' इति । कश्च साधीयः ? यः पूर्वपरयोः ।

यद्येवाऽनवकाशाऽवसानसंज्ञा संहितासंज्ञां बाधतेऽथापि संहितासंज्ञायां प्रकर्षगतिर्विज्ञायते उभयथा दोषो भवति । इष्यन्ते इत उत्तरमवसाने संहिता-

प्र०—विसर्जनीयस्य० । इहेति । स्थानिमात्रं निर्दिष्टं न तु निमित्तविशेष इति प्रश्नः । संहितायामिति । पौर्वापर्यमकालव्यपेतं संहिता, न चाऽत्र परमस्तीति संहिताया अभावः । अन्यथा दधि अत्रेतीगचोरसंहितायामपि इकः पूर्वेणाचः परेण च संहितास्तीति यण् प्रसज्येत । एवमप्यत्रेति । विशेषानुपादानादिति भावः । इको यणचीत्यत्र तु स्थानिनिमित्तयोरुपादानात्तयोरेव संहिता गृह्यते । एवं तर्हीति । एकसञ्ज्ञाधिकारात्सामान्यविहिता संहिता सञ्ज्ञाविशेषविहितयाऽवसानसञ्ज्ञया बाध्यते । ननु सञ्ज्ञिभेदाद्बाधानुपपत्तिः, परस्य सन्निकर्षस्य संहितासञ्ज्ञा, अवसानसञ्ज्ञा तु विरामस्य वर्णस्य विरतेर्वा । उच्यते, संहितावसानकार्ययोरेकवर्णविषयत्वात्कार्यार्थत्वाच्च सञ्ज्ञानां सञ्ज्ञयोरप्येकविषयत्वाद्बाध्यबाधकभावं मन्यते । अथ वेति । सन्निकर्षः संहितेतीयता सिद्धे परशब्दः प्रकर्षगत्यर्थ उपादीयते तेन पूर्वपरविषयः सन्निकर्षः संहितासञ्ज्ञो भवति । यद्येवेति । सञ्ज्ञिभेदात्सञ्ज्ञयोर्बाध्यबाधकभावोऽनुपपन्न इति

उ०—विषये गुणानां भेदकत्वमेव चेत्यरुचिः । अतएव मतुपो मस्य नानुनासिको वकारः । अतएव तद्वानासामिति निर्देशः सङ्गच्छते । अन्यथा नित्योऽनुनासिकः स्यात् ।

विसर्जनीयस्य सः । 'संहिताया'मित्यनुवृत्त्याऽतिप्रसङ्गनिवृत्तिं दर्शयति—पौर्वापर्यमिति । इदं हि तत्र वार्तिककृतोक्तम् । ननु 'वृक्ष' इत्यादावपि पूर्वेण संहिताऽस्तीत्यत आह—अन्यथेति । असंहितायामपीति । कालव्यवायेऽपीत्यर्थः । यथान्यासेऽपि सन्निकर्षस्योभयसापेक्षत्वात् पूर्वपरयोरित्यर्थलाभ इति बोध्यम् । ननु पूर्वेण संहिताया 'दधिअत्रे'त्यत्राऽसंहितायामपि सत्त्वेन यणादेशापत्तिरत आह—इको यणचीत्यत्रत्विति । विरामस्येति । करणे घञिति भावः । विरतेर्वेति । भावे घञिति भावः । प्रकर्षगत्यर्थ इति । कार्यिणः पूर्वस्य परेण सन्निकर्ष इत्यर्थः । 'यद्येवे'त्यभ्युपगमवाद इत्याह—संज्ञिभेदादिति । नन्वणोऽप्रगृह्य-

† ८. २. १०८. ‡ १. ४. ११०.

कार्याणि, तानि न सिध्यन्ति—'अणोऽप्रगृह्यस्यानुनासिकः' [ ८. ४. ५७ ] इति। एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—'न सर्वस्य विसर्जनीयस्य सत्वं भवती'ति यदयं 'खरवसानयोर्विसर्जनीयः [ ८. ३. १५ ] इत्याह इतरथा 'खरवसानयोः सो भवती'त्येव ब्रूयात्। तच्च लघु भवति, 'विसर्जनीयस्य स' इत्येतच्च न वक्तव्यं भवति। अवश्यं 'शर्परे विसर्जनीयः' [ ८. ३. ३५ ] इत्यत्र प्रकृतिनिर्देशार्थं विसर्जनीयग्रहणं कर्तव्यम्। अथेदानीमेतदपि रसान्निध्यार्थं पुरस्तादपकृक्ष्यते—'खरवसानयोः स' इत्यत्रैव, एवमपि 'कुप्वोः ≍क≍पौ च'- [ ८. ३. ३७ ] इत्येवमादिनाऽनुक्रमणेन व्यवच्छिन्नं भोभगोअघोअपूर्वस्य

---

प्र०–भावः। अणोऽप्रगृह्यस्येति। 'वावसान' इति तत्रानुवर्तते, संहिताधिकारश्चोत्तरार्थोऽवश्यानुवर्त्यः। तोर्लीति परसवर्णोऽसंहितायां मा भूदग्निचित् लुनातीति। ततश्च संहितावसानोभयाश्रयोऽनुनासिको दधिँ मधुँ इत्यत्र सिद्धो भवति। यदि तु सत्यपि बाध्यबाधकभावे यत्रैवावसानाश्रयं कार्यं तत्रैव संहिताग्रहणेनाऽसम्बन्धः, उत्तरत्र त्वनुवृत्तिरेव तदा न कश्चिद्दोषः। किं तु प्रतियोगिना विच्छिन्नस्य संहिताग्रहणस्योत्तरत्रोपस्थानं सन्दिह्येतेति भिन्नविषयत्वात्समावेश एवानयोः सञ्ज्ञयोरिष्टव्य इति भाष्यकाराभिप्रायः। प्रकृतिनिर्देशार्थमिति। स्थानिनिर्देशार्थमित्यर्थः। अन्यथा कस्य शर्परे विसर्जनीयः स्यात्। अथेदानीमिति। एवमत्र सन्निवेशः क्रियते—'रोरि' 'खरवसनयोः सः' 'रोः सुपि' 'शर्परे विसर्जनीय' इति। तत्र 'शर्पर' इत्यत्र 'र' इति वर्तते न तु 'रो'रिति। एवमपीति। यदि 'रोः सुपी'त्यस्यानन्तरं 'शर्परे विसर्जनीयः' 'वा शरि' 'कुप्वोः≍क≍पौ चे'त्यादि'र'स्थानिकादेशविधानार्थं पठित्वा 'भोभगो' इति

---

उ०–ननु यत्र संहिताऽधिकाराभावे को दोषोऽत आह—संहिताधिकारश्चेति। सत्यपि बाध्यबाधकभावे इति। पूर्वपरयोः सन्निकर्षस्यैव वा संहितात्वे इत्यपि बोध्यम्। तर्हि तयैवाभीष्टसाधनमत आह—किं त्विति। प्रतियोगिनेति। विरोध्यर्थप्रतिपादकेन 'अवसाने' इत्यनेनेत्यर्थः। परे तु—व्याख्यानाश्रिताऽवधिपरिच्छिन्नेष्वधिकारेषु न मण्डूकप्लुतिः। नदीस्रोतोन्यायेन तेषामधिकारादूर्ध्वमनन्तरसंबन्धात्। विषयभेदेऽपि सत्यपि संभवे बाधनं भवतीति न्यायेन बाधः प्राप्नोतीति, अवसानकार्याणां संहिताविषयत्वे प्रसङ्गाभावात्। आकडारादिति सूत्रं पूर्वत्र परिभाषितसंज्ञाविषयम्, अनयोस्तु लोकविदितायाः केवलायाश्चाऽभावेन न बाध्यबाधकभाव इति भाष्याशयः। 'अणोऽप्रगृह्यस्ये'त्युपलक्षणम्, अवसानविसर्गयोरपि, तत्राऽपि संहिताऽधिकारो नाभूदित्याहुः। ननु रोरितीति। तेन 'पुनः प्रात'रित्यादौ विसर्ज-

योऽशि [ ८. ३. १७ ] इत्यत्र रुग्रहणं कर्तव्यं स्यात् । एवमप्येकं विसर्जनीयग्रहणं व्याजो भवति । सोऽयमेवं लघीयसा न्यासेन सिद्धे सति यद्गरीयांसं यत्नमारभते तज्ज्ञापयत्याचार्यो 'न सर्वस्य विसर्जनीयस्य सत्वं भवती'ति । एवमप्यनैकान्तिकं ज्ञापकम्, एतावज्ज्ञाप्यते 'न सर्वस्य विसर्जनीयस्य सत्वं भवती'ति, तत्र कुत एतदिह भविष्यति—वृक्षस्तत्र प्लक्षस्तत्रेति, इह न भविष्यति-वृक्षः प्लक्ष इति ।

एवं तर्ह्याचार्यप्रवृत्तिर्ज्ञापयति—'नास्य विसर्जनीयस्य सत्वं भवती'ति यदयं 'शर्परे विसर्जनीय' इत्याह । अथवा 'हली'ति वर्तते । क्व प्रकृतम् ? 'हलि सर्वेषाम्' [ ८. ३. २२ ] इति । यदि तदनुवर्तते 'मय उञो वो वा' [ ८. ३. ३३ ] 'हलि चे'ति हल्यपि वत्वं प्राप्नोति* । शमु नः, शमु

प्र०—यत्वं रस्य स्थाने विधीयते तदा 'स्वरत्रे'त्यादावपि प्राप्नोति, रुग्रहणस्य विच्छिन्नत्वात् पुनरुपादानं कर्तव्यं भवतीत्यर्थः । एवमपीति । यथान्यासे त्रीणि ग्रहणानि भवन्ति द्वे विसर्जनीयग्रहणे तृतीयं सग्रहणम्, अन्यथान्यासे तु द्वे ग्रहणे—'स' ग्रहणं 'रु' ग्रहणं च । तत्र 'खरवसानयोः स' इति सग्रहणं 'खरवसानयोर्विसर्जनीय' इति विसर्जनीय' इति विसर्जनीयग्रहणेन निमीयते, रुग्रहणं 'विसर्जनीयस्य स' इति 'स' ग्रहणेन । 'तत्र विसर्जनीयस्ये'ति विसर्जनीयग्रहणमधिकत्वाद्व्याजो भवति । अजेः क्षेपणार्थस्य घञि रूपं क्षिप्यते तेन न पठितव्यं भवतीत्यर्थः । अथ वा व्याजोऽनृतमुच्यते । आनर्थक्यादनृतं भवति । न कर्तव्यं भवतीत्यर्थः । तस्मात्सर्वस्य विसर्जनीयस्य सकारो न भवति । यदयमीति । विपर्यये हि विज्ञायमाने 'पुरुषः त्सरुक' इत्यादौ

उ०—नीयसिद्धिः । ननु यत्वमपि रस्यैव विधेयं, तत्राह—तदा स्वरत्रेति । निमीयत इति । परिवर्त्यत इत्यर्थः । नच तस्य लघुत्वाद् गुरुणा कथं निमानमिति वाच्यं, कुप्वोः ≍क≍पौ चेति-चस्खरवसनयो र इत्येव सिद्धे पर्यायेषु लाघवगौरवानादरेणैव विसर्जनीयपदस्य सत्त्वेन वर्णकृतलाघवगौरवस्याऽप्रयोजकत्वमित्याशयात् । न च कवर्गतृतीयादौ 'कुप्वो'रिति अत्र न्यासे दुर्वारं, मण्डूकानुवृत्त्या खरीत्यस्य 'कुप्वो'रिति सूत्रे संबन्धेनाऽदोषात् । न चैवमपि गीर्ष्विन्त्यादौ 'वा शरी'ति पाक्षिकविसर्गो दुर्वारः । 'रोः सुपी'ति चाऽनन्तरस्येति न्यायात्सत्त्वस्यैव नियमः । 'वा शरी'त्यस्याऽसिद्धत्वाच्च । यथान्यासे तु 'वा शरी'त्यस्य विसर्गस्थानिकतया नियमेन विसर्गस्यैवाऽभावान्न दोष इति वाच्यम् । 'वा शरी'त्यत्राऽपि 'रोः सुपी'त्यनुवर्त्य वाक्यभेदेनाऽर्थाधिकारान्नियमपरतया व्याख्यानेनाऽदोषादिति भावः । घञीति । कर्मणि च सः । यद्येतावदिति । विसर्जनीयपदं च 'वा शरी'त्येतत् संबद्धं पठनीयमिति भावः ।

* ८. १. १५.

योरस्तु । एवं तर्हि 'विसर्जनीयस्य स' इत्यत्र 'खरी'त्यनुवर्तिष्यते । अथ वा संबन्धमनुवर्त्तिष्यते ।

**वा शरि ॥ ८ । ३ । ३६ ॥**

**वा शर्प्रकरणे खर्परेलोपः ॥ १ ॥**

वा शर्प्रकरणे खर्परे लोपो वक्तव्यः । वृक्षा स्थातारः । वृक्षाः स्थातारः ।

**कुप्वोः ×क×पौ च ॥ ८ । ३ । ३७ ॥**

**सस्य कुप्वोर्विसर्जनीयजिह्वामूलीयोपध्मानीयाः ॥ १ ॥**

सस्य कुप्वोर्विसर्जनीयजिह्वामूलीयोपध्मानीया वक्तव्याः ।

---

प्र०—सत्वाऽभावाद्विसर्जनीयोऽस्त्येवेति किं तद्विधानेन ? ननु×क×पनिवृत्त्यर्थं विसर्जनीयविधानं स्यात्—'वासः क्षौममद्भिः प्सात'मिति । नैतदस्ति । यद्येतावत्प्रयोजनं स्यात् 'कुप्वोः×क×पौ चाऽशरी'ति ब्रूयात् । अथवेति । लोपसम्बद्धं हल्ग्रहणमनुवर्तेत इति पूर्वयोगेषु कार्यान्तरेण न सम्बध्यते, इह तु हलीति वर्तते लोप इवि निवृत्तमित्यर्थः ।

कुप्वोः×क×पौ च । सस्येति । ब्राह्मणः पचति, ब्राह्मणः करोतीत्यादावुपध्मानीयजिह्वामूलीयविसर्जनीया इष्यन्ते । वासः क्षौममद्भिः प्सातमित्यादौ तु शर्परयोः कुप्वोर्विसर्जनीय एवेष्यते । एतच्च सस्येति स्थानिनिर्देशे सिध्यति । यो विसर्जनीयस्य सस्तस्य स्थाने कुप्वोरादेशत्रयविधानाच्छर्परयोः कुप्वोः सकारापवादविसर्जनीयविधानात्सकाराऽभावादादेशाऽप्रसङ्गः । यदा तु विसर्जनीयस्थानेऽनेनादेशत्रयं विधीयते तदा शर्परयोरेव कुप्वोः प्राप्नोत्यशर्परयोस्तु कुप्वोः पूर्वत्रासिद्धमिति×क×पयोर-

---

उ०—अत्र पक्षे 'नैषं महतो यत्नान्तस्याद्धनुकृष्यते' इति ऋत्वषु सूत्रोक्तन्यायविरोधोऽतो भाष्ये पक्षान्तरमाह—अथवेति ।

कुप्वोः ×क×पौ च । विसर्जनीयस्येति । स्थानिनि सत्यन्ते स्थान्यन्तरनिर्देशे फलमुपपादयति—ब्राह्मण इति । ननु शर्परयोरपि विसर्जनीयस्य सं बाधित्वा परत्वात् ×क×पौ

**विसर्जनीयादेशे हि शर्परयोरेवादेशप्रसङ्गः ॥ २ ॥**

विसर्जनीयादेशे हि सति शर्परयोरेव कुप्वोः ≍क≍पौ स्याताम्—अद्भिः प्सातम्, वासः क्षौमम् । वचनान्न भविष्यतः ।

अस्ति वचने प्रयोजनम् । किम् ? पुरुषः त्सरुकः । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । यदेतद्विसर्जनीयस्य सः [ ८. ३. ३४ ] इत्यत्र विसर्जनीयग्रहणमेतदुत्तरत्रानुवर्तिष्यते, तस्मिंश्च शर्परे विसर्जनीयोऽसिद्धः । नाऽसिद्धः । कथम् ? अधिकारो नाम त्रिप्रकारः । कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति,

---

प्र०—सिद्धत्वात्सकार एव प्राप्नोति । न च सकारस्य स्थानिवद्भावोऽस्ति, अयोगवाहानामविशेषेण प्रत्याहार उपदेशचोदनादल्विधित्वात् । वचनादिति । यदि 'शर्परे विसर्जनीय' इत्यस्य विसर्जनियस्य ≍क≍पौ स्यातां तदैतद्विसर्जनीयविधानमनर्थकं स्यात् । अस्तीति । यत्र कुपुभ्यामन्यः शर्परः खरस्ति तत्र सकारापवादविसर्जनीयविधानमर्थवत् । कुप्वोस्तुशर्परयोर्विसर्जनीयस्य ≍क≍पप्रसङ्गः । यदेतदिति । 'विसर्जनीयस्य स' इत्यत्र सकारस्य स्थानी यो विसर्जनीय उपात्तः स द्विविधः सम्भवति, खरवसान—लक्षणः शर्परलक्षणश्च । तत्र 'पूर्वत्रासिद्ध'मिति सत्वे शर्परलक्षणस्याऽसिद्धत्वादितरः सस्य स्थानी विज्ञायते । स एव चेहानुवर्तते, तदर्थो वा शब्द इति स एवेह स्थानी गृह्यते । तत्र वचनप्रामाण्यादुत्सर्गे सत्वे कर्तव्येऽपवादयोः ≍क≍पयोरसिद्धत्वाऽभावात्प्रवृत्तौ सत्यां यथेष्टं सिध्यतीत्यर्थः । शर्परलक्षणश्च विसर्जनीय आदेशोऽपूर्वो विसर्जनीयस्य विधीयते न तु तस्यैव सत्त्वबाधनार्था प्रत्यापत्तिरिति दर्शनमाश्रित्यैतदुच्यते । प्रत्यापत्तौ हि विसर्जनीयस्य भेदाऽभावादयुक्तोऽनन्तरोऽर्थः स्यात् । ननु च वक्ष्यत्येतत्—'न योगे योगोऽसिद्धः किन्तु प्रकरणे प्रकरणमसिद्ध'मिति, तत्रैकप्रकरणत्वात्सत्वे 'शर्परे विसर्जनीय' इत्यस्याऽसिद्धत्वं नास्ति । नैष दोषः । कार्यभेदात्प्रकरणभेदात् । एकेन हि सकारो विधीयते, अन्येन विसर्जनीयः । कश्चिदिति ।

---

उ०—स्यातामित्यादेशद्वयं सिद्ध्यतीत्यत आह—अशर्परयोस्त्विति । न च सस्येति । स्थानिवत्त्वेन विसर्गत्वं तस्य स्यादित्यर्थः ।

स एवेति । स्वरितत्वेन तदर्थस्य तस्यैव शब्दस्योत्तरत्रोपस्थानादिति भावः । शब्दान्तराऽनुमानपक्षेऽप्याह—तदर्थो वेति । सति संभवे तदर्थ एव शब्द उत्तरत्राऽनुमीयते नार्थान्तरयुक्त इत्यर्थः । उत्सर्ग इति । सत्वे प्राप्तेऽस्यारंभादितिभावः । न तु सत्वबाधनार्थेति । तथाहि सति 'शर्परेने'त्येव वदेत् । 'कुप्वो'रिति सूत्रेऽपि चेन सत्वं नेत्यनुकृत्य तत्सामर्थ्यात्पक्षे विसर्गसिद्धिरिति भावः । भेदाभावादिति । खरवसानलक्षणशर्परलक्षणयोरविशेषादुभयोरपि स्थानित्वं स्यादिति भावः । एकप्रकरणत्वादिति । सत्वस्य विधेर्विसर्गस्याभिन्नत्वादिति भावः ।

कार्यभेदादिति । स्थानिभेदाऽभावेऽपीत्यर्थः । वस्तुतो 'योगे योगोऽसिद्ध' इत्येव सिद्धान्त इति चतुर्थपादे निरूपयिष्यामः । सर्वशास्त्रावज्वलनमिति । तत्र यथोद्देशपक्षे

---

† ८. ३. १५.

यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माऽभिज्वलयति। अपरो यथा रज्ज्वाऽयसा वा बद्धं काष्ठमनुकृष्यते तद्वत्। अपरोऽधिकारः प्रतियोगं तस्याऽनिर्देशार्थ इति योगे योग उपतिष्ठते। यद्यदेष पक्षः—'अधिकारः प्रतियोगं तस्याऽनिर्देशार्थ' इति तदा हि यदेतद्विसर्जनीयस्य स इत्यत्र विसर्जनीयग्रहणमेतदुत्तरत्राऽनुवृत्तं सदन्यत्संपद्यते। तस्मिंश्च शर्परे विसर्जनीयः सिद्धः। एवं च कृत्वा शर्परयोरेव कुप्वोः≍क≍पौ स्याताम्। अद्भिः प्सातम्, वासः क्षौममिति।

एवं तर्हि योगविभागः करिष्यते। 'शर्परे विसर्जनीयः' [ ३५ ] 'वा शरि' [ ३६ ] ततः 'कुप्वोः'। कुप्वोश्च शर्परयोर्विसर्जनीयस्य विसर्जनीयो भवतीति।

किमर्थमिदम्? कुप्वोः≍क≍पौ वक्ष्यति तद्बाधनार्थम्। ततः ≍क≍पौ भवतः 'कुप्वो'रित्येव।

प्र०—यद्यपि सर्वशास्त्रावज्वलनं परिभाषाधर्मस्तथापि परार्थत्वसामान्याद्भेदाऽपरामर्शेनैतदुक्तम्। तद्वदिति। चकारेणेति भावः। प्रतियोगमिति। यस्य स्वरितत्वमासज्यते तत्सदृशानि शब्दान्तराणि योगान्तरेष्वनुमीयन्ते सादृश्यात्तु तत्त्वाध्यवसायः। योगान्तरोपयोग्यर्थस्य वा तस्यैवाऽनुमानम्। अर्थभेदात्त्वभिन्नस्यापि भेदावसायः। तत्र 'विसर्जनीयस्य स' इति लिङ्गाऽभावान्न परिभाषा, नाऽपि चकारेणोत्तरत्र स्थानिनोऽनुकर्षः। स्वरितत्वात्त्विह सम्बध्यमानोऽपि विसर्जनीयशब्दः सिद्धं विसर्जनीयं स्थानित्वेन प्रतिपादयतीति 'शर्परे विसर्जनीय' इत्यस्यैव ≍क≍पप्रसङ्गः। स हि≍क≍पयोः

उ०—एकदेशस्य स्पष्टमेव, कार्यकालेऽपि सर्वैः शास्त्रैरेकवाक्यतया परत्वादिनियामकदेशस्य पाठस्थानरूपस्यैव सत्त्वेन च एकदेशस्यत्वमव्याहतमेव। भेदापरामर्शेनेति। अभेदाऽध्यवसायादित्यर्थः। चकारेणेति। यथा 'लुटि च क्लृपः' इत्यादौ चेन स्यसनोरनुकर्षः। यस्य स्वरितत्वमिति। अत्र पक्षे योगान्तरेष्वर्थान्तरप्रतिपत्तिर्युज्यते इत्यर्थः। प्रत्यभिज्ञा तु सादृश्यमूलेत्याह—सादृश्यात्त्विति। अर्थभेदेऽप्येकशब्दत्वमिति पक्षमालम्ब्य प्रत्यभिज्ञानुपपत्तिं परिहरति—योगान्तरोपयोग्यर्थस्य वा तस्यैवेति। अत्र पक्षे शब्दान्तरव्यवहारः कथं, तत्राह—अर्थभेदात्त्विति। 'यद्यदेष पक्ष' इति भाष्येणाऽस्यैवात्र संभव इति दर्शयत इत्याह—तत्रेति। एवञ्च यद्यप्यर्थाधिकारे न दोषस्तथापि शब्दाधिकारपक्षे दोष एवेत्यर्थः। भाष्ये—कुप्वोः≍क≍पौ वक्ष्यतीति। इदं 'सोऽपदादौ' इणः षः' 'इदुदुपधस्ये'ति प्रकरणस्यैवोपलक्षणमिति केचित्। वस्तुतः सोऽपदादाविणः ष इत्यनयोः पाशकल्पककाम्येष्वेव प्रवृत्त्या तद्विषये शर्परयोः कुप्वोरसंभवः। एवञ्च सत्वापवादजिह्वामूलीयादिबाधकत्वमस्येति

† ८. १. १७.

'शर्परयो'रिति निवृत्तम् । अथवा 'शर्परे विसर्जनीय' इत्येतत् 'कुप्वोः ≍क≍पौ चे'त्यत्रानुवर्तिष्यते ।

## सोऽपदादौ ॥ ८ । ३ । ३८ ॥

### सोऽपदादावनव्ययस्य ॥ १ ॥

सोपदादावनव्ययस्येति वक्तव्यम् । इह मा भूत्—प्रातःकल्पम् पुनः कल्पम् ।

### रोः काम्ये नियमार्थम् ॥ २ ॥

रोः काम्य इति वक्तव्यम् । किं प्रयोजनम् ? 'नियमार्थम्' । रोरेव काम्ये नान्यस्य । पयस्काम्यति । क मा भूत् ? गीःकाम्यति, पूःकाम्यति ।

उपध्मानीयस्य च सत्वं वक्तव्यम् । किं प्रयोजनम् ? अयमु≍ब्जिरुपध्मानीयोपधः पठ्यते तस्य सत्वे कृते जश्भावो† च 'अभ्युद्गः' 'समुद्ग' इत्येतद्रूपं यथा स्यात् । यद्युपध्मानीयोपधः पठ्यते—उब्जिजिषतीत्युपध्मानीयस्य द्विर्वचनं प्राप्नोति । दकारोपधे पुनः सति 'न न्द्राः संयोगादयः [ ६. १. ३ ] इति

प्र०—कर्तव्ययोः सिद्धः । अथ वेति । योगविभागे प्रसक्तयोः ≍क≍पयोर्निवृत्तिः, अनुवृत्तौ तु प्रसङ्ग एव नास्तीति विशेषः ।

सोपदादौ । प्रातःकल्पमिति । यद्यपि प्रातःशब्दोऽधिकरणवाची तथापि वृत्तिविषये शक्तिमद्वाचीति ईषदसमाप्त्या योग उपपद्यते । यथा दोषाभूतमहर्दिवाभूता रात्रिरित्यादावभूततद्भावः । उपध्मानीयोपध इति । उपध्मानीयस्य पकारमन्तरेणोच्चारयितुमशक्यत्वादु≍ब्ज आर्जवे इत्येतदुच्चारणार्थः पकारः पठ्यते, न तु श्रवणार्थ इत्युपधात्वमुपध्मानीयस्य । कुप्वोः प्रकरणाच्च यत्र जकारस्य कुत्वं तत्रैवोपध्मानीयस्य सकारोऽन्यत्र प्रत्याहारे उपदेशचोदनाद् झलां जश् झशीति, जश्त्वं बकारः ।

उ०—'खरवसानयो'रिति विसर्गस्यैव तत्र स्थानिवत्त्वमिति बोध्यम् । एवञ्चेदुदुपधस्येत्यत्राऽपि तथैवोचितम्, अर्थाधिकारानुरोधादिति तद्विषयेऽपि शर्परकुप्वोर्विसर्ग एवेत्याहुः । ननु योगविभागापेक्षया संपूर्णानुवृत्त्या वाक्यभेदेन व्याख्याने गौरवमत आह—योगविभागे इति । एवञ्च प्रतिपत्तिगौरवं तत्रापीति भावः ।

सोऽपदादौ । उत्तरसूत्रेऽप्यस्य संबन्ध इति ध्वनयन्नुदाहरति—भाष्ये—गीःकाम्यतीति । ननूपध्मानीयोपधत्वमसिद्धं पकारस्योपधारणादित्यत आह—उपध्मानीयस्येति । ननूब्जितेत्यादावप्यनेन सत्वं स्यादित्यत आह—कुप्वोरिति । अन्यत्र—कुत्वविषयाऽभावे । बकार इति । आन्तरतम्यादिति भावः । ननु कुत्वनिषेधार्थेन निपातनेन कथं बो लभ्यतेऽत्र

† ७. १. ५२; ८. ४. ५१.

यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माऽभिज्वलयति । अपरो यथा रज्ज्वाऽयसा वा बद्धं काष्ठमनुकृष्यते तद्वत् । अपरोऽधिकारः प्रतियोगं तस्याऽनिर्देशार्थं इति योगे योग उपतिष्ठते । तद्यदैष पक्षः—'अधिकारः प्रतियोगं तस्याऽनिर्देशार्थ' इति तदा हि यदेतद्विसर्जनीयस्य स इत्यत्र विसर्जनीयग्रहणमेतदुत्तरत्राऽनुवृत्तं सदन्यत्संपद्यते । तस्मिंश्च शर्परे विसर्जनीयः सिद्धः । एवं च कृत्वा शर्परयोरेव कुप्वोः≍क≍पौ स्याताम् । अद्भिः प्सातम्, वासः क्षौममिति ।

एवं तर्हि योगविभागः करिष्यते† । 'शर्परे विसर्जनीयः' [ ३५ ] 'वा शरि' [ ३६ ] ततः 'कुप्वोः' । कुप्वोश्च शर्परयोर्विसर्जनीयस्य विसर्जनीयो भवतीति ।

किमर्थमिदम् ? कुप्वोः≍क≍पौ वक्ष्यति तद्बाधनार्थम् । ततः ≍क≍पौ भवतः 'कुप्वो'रित्येव ।

---

प्र०—यद्यपि सर्वशास्त्रावज्वलनं परिभाषाधर्मस्तथापि परार्थत्वसामान्याद्भेदाऽपरामर्शेनैतदुक्तम् । तद्वदिति । चकारेणेति भावः । प्रतियोगमिति । यस्य स्वरितत्वमासज्यते तत्सदृशानि शब्दान्तराणि योगान्तरेष्वनुमीयन्ते सादृश्यात्तु तत्त्वाध्यवसायः । योगान्तरोपयोग्यर्थस्य वा तस्यैवाऽनुमानम् । अर्थभेदात्त्वभिन्नस्यापि भेदावसायः । तत्र 'विसर्जनीयस्य स' इति लिङ्गाऽभावान्न परिभाषा:, नाऽपि चकारेणोत्तरत्र स्थानिनोऽनुकर्षः । स्वरितत्वात्त्विह सम्बध्यमानोऽपि विसर्जनीयशब्दः सिद्धं विसर्जनीयं स्थानित्वेन प्रतिपादयतीति 'शर्परे विसर्जनीय' इत्यस्यैव ≍क≍पप्रसङ्गः । स हि≍क≍पयोः

---

उ०—एकदेशस्य स्पष्टमेव, कार्यकालेऽपि सर्वैः शास्त्रैरेकवाक्यतया परत्वादिनियामकदेशस्य पाठस्थानरूपस्यैव सत्त्वेन च एकदेशस्यात्वमव्याहतमेव । भेदापरामर्शेनेति । अभेदाऽध्यवसायादित्यर्थः । चकारेणेति । यथा 'लुटि च क्लृप' इत्यादौ चेन स्यसनोरनुकर्षः । यस्य स्वरितत्वमिति । अत्र पक्षे योगान्तरेष्वर्थान्तरप्रतिपत्तिर्युज्यते इत्यर्थः । प्रत्यभिज्ञा [illegible] सादृश्यमूलेत्याह—सादृश्यात्त्विति । अर्थभेदेऽप्येकशब्दत्वमिति पक्षमालम्ब्य प्रत्यभिज्ञानुपपत्तिं परिहरति—योगान्तरोपयोग्यर्थस्य वात स्यैवेति । अत्र पक्षे शब्दान्तरव्यवहारः कथं, तत्राह—अर्थभेदात्त्विति । 'तद्यदैष पक्ष' इति भाष्येणाऽस्यैवात्र संभव इति दर्शयंस्त इत्याह—तत्रेति । एवञ्च यद्यप्यर्थाधिकारे न दोषस्तथापि शब्दाधिकारपक्षे दोष एवेत्यर्थः । भाष्ये—कुप्वोः≍क≍पौ वक्ष्यतीति । इदं 'सोऽपदादौ' इणः 'ष' 'इदुदुपधस्ये'ति प्रकरणस्यैवोपलक्षणमिति केचित् । वस्तुतः सोऽपदादाविणः ष इत्यनयोः पाशकल्पककाम्येष्वेव प्रवृत्त्या तद्विषये शर्परयोः कुप्वोरसंभवः । एवञ्च सत्वापवादजिह्वामूलीयादिबाधकत्वमस्येति

---

† ८. १. १०.

'शर्परयो'रिति निवृत्तम्। अथवा 'शर्परे विसर्जनीय' इत्येतत् 'कुप्वोः ᳲकᳲपौ चे'त्यत्रानुवर्तिष्यते।

## सोऽपदादौ ॥ ८ । ३ । ३८ ॥

### सोऽपदादावनव्ययस्य ॥ १ ॥

सोपदादावनव्ययस्येति वक्तव्यम्। इह मा भूत्—प्रातःकल्पम् पुनः कल्पम्।

### रोः काम्ये नियमार्थम् ॥ २ ॥

रोः काम्य इति वक्तव्यम्। किं प्रयोजनम्? 'नियमार्थम्'। रोरेव काम्ये नान्यस्य। पयस्काम्यति। क्व मा भूत्? गीःकाम्यति, पूःकाम्यति।

उपध्मानीयस्य च सत्वं वक्तव्यम्। किं प्रयोजनम्? अयमुᳲब्जिरुपध्मानीयोपधः पठ्यते तस्य सत्वे कृते जश्भावे† च 'अभ्युद्गः' 'समुद्ग' इत्येतद्रूपं यथा स्यात्। यद्युपध्मानीयोपधः पठ्यते—उब्जिजिषतीत्युपध्मानीयस्य द्विर्वचनं प्राप्नोति। दकारोपधे पुनः सति 'न न्द्राः संयोगादयः [ ६. १. ३ ] इति

---

प्र०—कर्तव्ययोः सिद्धः। अथ वेति। योगविभागे प्रसक्तयोः ᳲकᳲपयोर्निवृत्तिः, अनुवृत्तौ तु प्रसङ्ग एव नास्तीति विशेषः।

सोपदादौ। प्रातःकल्पमिति। यद्यपि प्रातःशब्दोऽधिकरणवाची तथापि वृत्तिविषये शक्तिमद्वाचीति ईषदसमाप्त्या योग उपपद्यते। यथा दोषाभूतमहर्दिवाभूता रात्रिरित्यादावभूततद्भावः। उपध्मानीयोपध इति। उपध्मानीयस्य पकारमन्तरेणोच्चारयितुमशक्यत्वादुᳲब्ज आर्जवे इत्येतदुच्चारणार्थः पकारः पठ्यते, न तु श्रवणार्थ इत्युपधात्वमुपध्मानीयस्य। कुप्वोः प्रकरणाच्च यत्र जकारस्य कुत्वं तत्रैवोपध्मानीयस्य सकारोऽन्यत्र प्रत्याहारे उपदेशचोदनाद् झलां जश् झशीति, जश्त्वं बकारः।

---

उ०—'खरवसानयो'रिति विसर्गस्यैव तत्र स्थानित्वमिति बोध्यम्। एवञ्चेदुदुपधस्येत्यत्राऽपि तथैवोचितम्, अर्थाधिकारानुरोधादिति तद्विषयेऽपि शर्परकुप्वोर्विसर्ग एवेत्याहुः। ननु योगविभागापेक्षया संपूर्णानुवृत्त्या वाक्यभेदेन व्याख्याने गौरवमत आह—योगविभागे इति। एवञ्च प्रतिपत्तिगौरवं तत्रापीति भावः।

सोऽपदादौ। उत्तरसूत्रेऽप्यस्य संबन्ध इति ध्वनयन्नुदाहरति—भाष्ये—गीःकाम्यतीति। ननूपध्मानीयोपधत्वमसिद्धं पकारस्योपधात्वादित्यत आह—उपध्मानीयस्येति। ननूब्जितेत्यादावप्यनेन सत्वं स्यादित्यत आह—कुप्वोरिति। अन्यत्र—कुत्वविषयाऽभावे। बकार इति। आन्तरतम्यादिति भावः। ननु कुत्वनिषेधार्थेन निपातनेन कथं बो लभ्यतेऽत्र

---

† ७. १. ५२; ८. ४. ५१.

प्रतिषेधः सिद्धो भवति । यदि दकारोपधः पठ्यते का रूपसिद्धिः—उब्जिता उब्जितुमिति । असिद्धे भ उदुजेः । इदमस्ति—'स्तोः श्चुना श्चुः [ ८. ४. ४० ] । ततो वक्ष्यामि—'भ उदुजेः' । उदुजेश्च श्चुना सन्निपाते भो भवतीति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । निपातनादेतत्सिद्धम् । किं निपातनम् ? 'भुजन्युब्जौ पाण्युपतापयोः' [ ७. ३. ६१ ] इति । इहापि प्राप्नोति—अभ्युद्गः समुद्गः । अकुत्वविषये निपातनम् । अथवा नैतदुब्जे रूपम् । किं तर्हि ? गमेर्ह्यर्युपसर्गाड्डो विधीयते—अभ्युद्गतः—अभ्युद्गः । समुद्गतः समुद्गतः ।

इणः षः ॥ ८ । ३ । ३९ ॥

किमविशेषेण सत्वमुक्त्वा इण उत्तरस्य सकारस्य षत्वमुच्यते, आहो—स्विदिण उत्तरस्य विसर्जनीयस्यैव षत्वं विधीयते ? किञ्चातः यद्यविशेषेण सत्वमुक्त्वेण उत्तरस्य सकारस्य षत्वमुच्यते, निष्कृतं निष्पीतमित्यत्र* सत्वस्याऽसिद्धत्वात्षत्वं न प्राप्नोति । अथेण उत्तरपदस्य विसर्जनीयस्यैव

प्र०—निपातनादिति । यत्र जकारः श्रूयते तत्र दकारस्य स्तोःश्चुनाश्चुरिति चुत्वे प्राप्ते 'झलां जश् झशी'त्यनेनानन्तरतमोऽपि बकारो भवतीति निपातनेन कुत्वनिषेधार्थेनाप्यनुमीयत इति भावः । तेन 'पूर्वत्रासिद्ध'मिति 'न न्द्राः संयोगादय' इति द्विर्वचननिषेधे बत्वस्याऽसिद्धत्वाद्दकारस्य द्विर्वचननिषेधः । गमेरिति । एवं च दकारोपदेशो द्विर्वचननिषेधार्थ एवेति द्विर्वचने कृते बत्वमिति रूपप्रक्रियायामानुपूर्व्याश्रयते, अनभिधानाच्च घञभावादुब्ग इति न भवति । न चाभ्युद्ग इत्यत्र गमेर्डे घञि वोब्जेः स्वरे विशेषः । डे कृत्स्वरेणाऽन्तोदात्तत्वाद् घञ्यपि थाथादिस्वरेण ।

इणः षः । सत्वस्याऽसिद्धत्वादिति । 'इणः ष' इत्यनेन यदा सस्य षत्वं

उ०—आह—यत्र जकार इति । अनुमीयत इति । बकारोच्चारणान्यथाऽनुपपत्त्येति भावः । एवञ्च द्विर्वचननिषेधोऽपि सिद्ध इत्याह—तेनेति । 'पूर्वत्रासिद्धीयमद्विर्वचने' इति हि द्वित्वे निषेधो न तु तन्निषेध इति भावः । एवञ्चेति । अत्रापि पक्षे दोपधः पठितव्यः । उब्जितसिद्धये उब्जेर्भो वक्तव्यः, ज्ञापकं वाश्रयणीयम् । तत्र ज्ञापकेन साक्षादेव बत्वमिति पक्षेऽपि दकारोपदेशसामर्थ्यात्पूर्वं द्वित्वं पश्चाद्बत्वमिति । रूपप्रक्रियायामिति । प्रयोगप्रक्रियायामित्यर्थः । 'इत्येवंरूपा प्रक्रियायामानुपूर्वी'ति क्वचित्पाठः । नन्वेवमुदुजेर्घञि उब्ग इत्यनिष्टं स्यादत आह—अनभिधानाच्चेति । 'उब्ग इति न भवती'ति पाठः ।

इणः षः । भाष्ये—इण उत्तरस्य सकारस्येति । 'स' इति विपरिणतविभक्तिक-

* ८. ३. ४१.

षत्वं विधीयते सत्वमप्यनुवर्त्तेत उताहो न ? किं चातः ? यद्यनुवर्त्तते सत्वमपि प्राप्नोति । अथ निवृत्तं 'नमस्पुरसोर्गत्योः' [ ८. ३. ४० ] इत्यत्र सकारग्रहणं कर्त्तव्यम् ।

तस्मिंश्च क्रियमाणे षत्वमप्यनुवर्त्तेत उताहो न ? किं चातः ? यद्यनुवर्तते षत्वमपि प्राप्नोति, अथ निवृत्तम्—'इदुदुपधस्य चाऽप्रत्ययस्य' [ ४१ ] इत्यत्र षकारग्रहणं कर्त्तव्यम् । तस्मिंश्च क्रियमाणे सत्वमप्यनुवर्त्तते उताहो न ? किञ्चातः ? यद्यनुवर्त्तते सत्वमपि प्राप्नोति । अथ निवृत्तं 'तिरसोऽन्यतरस्याम् [४२] इत्यत्र सकारग्रहणं कर्त्तव्यम् । तस्मिंश्च क्रियमाणे षत्वमप्यनुवर्त्तेत उताहो न ? किञ्चातः ? यद्यनुवर्त्तते षत्वमपि प्राप्नोति । अथ निवृत्तं—'द्विस्त्रिश्चतुरिति कृत्वोर्थे' [४३] 'इसुसोः सामर्थ्ये' [ ४४ ] 'नित्यं समासेऽनुत्तरपदस्थस्य' [ ४५ ] इति षकारग्रहणं कर्त्तव्यम् । तस्मिंश्च क्रियमाणे सत्वमप्यनुवर्त्तेत उताहो न ?

किञ्चातः ? यद्यनुवर्त्तते सत्वमपि प्राप्नोति । अथ निवृत्तम् 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' [ ४६ ] इति सकारग्रहणं कर्त्तव्यम् ।

---

प्र०–विधीयते तदा 'सोपदादा'वित्यस्यैव सस्य सर्पिष्कादौ षत्वं स्यात् । वक्ष्यमाणयोगेन विधीयमानस्य तु सस्य षत्वेऽसिद्धत्वात्षत्वं न प्राप्नोतीत्यर्थः । असमासेपिग्रहणमिति । अन्तरेणाऽप्यसमासेऽपिग्रहणं विशेषानुपादानात्समासाऽसमासयोर्णत्वं सिध्यति । न च समासे 'पूर्वपदात्संज्ञायामग' इति नियमेन णत्वास्याऽप्राप्तिः । नियमे कर्तव्ये 'उपसर्गा'दित्यस्य णत्वस्याऽसिद्धत्वान्नियमाऽभावात् । तदेतदसमासेऽपिग्रहणं यथोक्तमर्थं ज्ञापयति । यद्यपि स्थानिभेद आदेशभेदश्च, सस्य विसर्जनीयस्थानित्वात्षस्य सकारस्थानित्वात्तथापि कुप्वोरधिकारादेकनिमित्तत्वादेकप्रकरणत्वावसायः । सम्बन्ध-

---

उ०–मनुवर्तेत इति भावः । इणः स इत्यनेनेति । अत्र पक्षे उत्तरत्र सर्वत्र 'कुप्वो'रित्यधिकृत्य सो विधीयते । अनेन तु तस्यैव विसर्जनीयस्येत्यनुवृत्त्या विसर्जनीयस्थानिकस्य सस्येण उत्तरस्य षत्वं क्रियते । तत्र 'विसर्जनीयस्थानिके'ति विशेषणात्पुंस्पुत्र इत्यदौ न दोषः । तत्र हि मस्थानिकः स इत्युक्तं प्राक् । उत्तरत्र विसर्जनीयपदस्य मण्डूकानुवृत्तिश्च न । अनव्यस्येति चात्र पक्षेऽत्र न सम्बध्यते । तेन 'द्विष्कृत'मित्यादौ न दोषः । 'काम्ये रो'रित्यपि न सम्बध्यते, तेन तुरो 'तुष्काम्यती'त्यादौ षत्वसिद्धिः । 'गीःकाम्यती'त्यादौ तु सकाराऽभावादेव न दोषः । अपदादाविति चाऽत्र न सम्बध्यते । तेन 'तुष्करोती'त्यादौ न दोषः । पक्षान्तरे तु त्रितयमपि सम्बध्यते । तेनोच्चैःकं गीःकाम्यति गीःकरोतीत्यादौ न दोषः । ननु समासे पूर्वपदादिति नियमान्न प्राप्नोतीत्यसमासेऽपि इत्युच्यते इत्याशङ्क्य परिहरति—नचेति । भिन्नप्रकरणत्वमाशङ्क्य परिहरति—यद्यपीति । वस्तुतस्तु 'सूत्रे सूत्रमसिद्ध'मिति

यथेच्छसि तथास्तु। अस्तु तावदविशेषेण सत्वमुक्त्वा इण उत्तरस्य सकारस्य षत्वमुच्यते। ननु चोक्तं—"निष्कृतं निष्पीतमित्यत्र सत्वस्याऽसिद्धत्वात्षत्वं न प्राप्नोती"ति। नैष दोषः। आचार्यप्रवृत्तिर्ज्ञापयति 'न योगे योगोऽसिद्धः। किं तर्हि? प्रकरणे प्रकरणमसिद्ध'मिति, यदयमुपसर्गादसमासेऽपि णोपदेशस्य [ ८. ४. १४ ] इत्यसमासेऽपिग्रहणं करोति।

अथवा पुनरस्तु 'इण उत्तरस्य विसर्जनीयस्य षत्वं विधीयते'। ननु चोक्तं—"सत्वमप्यनुवर्तत उताहो न। किञ्चातः? यद्यनुवर्तते सत्वमपि प्राप्नोती"ति। नैष दोषः। सम्बन्धमनुवर्त्तिष्यते। 'सोऽपदादौ' [ ३८ ] 'इणः षः' [ ३९ ] 'नमस्पुरसोर्गत्योः [ ४० ] सकारः, इण उत्तरस्य षकारः। 'इदुदुपधस्य चाऽप्रत्ययस्य' [ ४१ ] षकारः, 'नमस्पुरसोर्गत्योः' सकारः। 'तिरसोऽन्यतरस्याम् [ ४२ ] सकारः, इदुदुपधस्य चाप्रत्ययस्य' षकारः। 'द्विस्त्रिश्चतुरिति कृत्वोर्थे' [ ४३ ] 'इसुसो सामर्थ्ये' [ ४४ ] 'नित्यं समासेऽनुत्तरपदस्थस्य' [४५] इति षकार, 'तिरसोऽन्यतरस्यां' सकारः। 'अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य' [ ४६ ]। सकारोऽनुवर्त्तते, षकारग्रहणं निवृत्तम्।

## इदुदुपधस्य चाऽप्रत्ययस्य ॥ ८ । ३ । ४१ ॥

## इदुदुपधस्य चाप्रत्ययस्येति चेत्पुंमुहुसोः प्रतिषेधः ॥ १ ॥

प्र०-मिति। नचेणः परस्य सकारः प्राप्नोति, षकारेण तस्य बाधनाच्चकाराऽकरणाच्च। तत्र 'स' इति 'ष' इति च स्वरितत्वादुत्तरत्रानुवर्त्तते। उत्तरेऽपि योगाः स्वरितत्वप्रतिज्ञानाद्योगान्तरेषु केचित्षकारसम्बद्धाः केचित्सकारसम्बद्धा अनुवर्त्तन्ते इति यथेष्टं सकारषकारादेशप्रवृत्तिः।

इदुदुपधस्य चाप्रत्ययस्य। पुंमुहुसोरिति। अव्युत्पन्नावेताविति प्रतिषेधश्चोद्यते।

उ०-पक्षेऽपि न दोषः, परेषामसिद्धत्वे सोपदादाविति सत्वे एवाऽस्य प्रवृत्तिः स्यात्। तथा चाऽपदादौ विसर्गस्यैव षत्वविधानेन सिद्धे सस्य विभक्तिविपरिणामेन स्थानित्वकल्पनस्य वैयर्थ्यं स्यादिति। 'तासामप्यनुत्तरेषामसिद्धत्वाऽभाव' इति भाष्यन्तु एकदेशयुक्तिः, अतएवाऽस्य ज्ञापकस्याऽग्रे दूषितत्वेऽपि न दोषः। यद्वैतद्दोषाद्वयं पक्षोऽसाद्गत एवेति तात्पर्यम्। नचेण इत्यादि। 'इदुदुपधस्येत्यादियोगे'रिति दोषः।

इदुदुपधस्य०। ननु प्रत्ययाप्रत्ययत्वेन सूत्रेणैव निषेधसिद्धेराह—अव्युत्पन्नाविति।

इदुदुपधस्य चाऽप्रत्ययस्येति चेत्पुंमुहुसोः प्रतिषेधो वक्तव्यः । पुँस्कामा* । मुहुः काम इति ।

वृद्धिभूतानां षत्वं वक्तव्यम् । दौष्कुल्यम् । नैष्पुरुष्यम् ।

**प्लुतानां तादौ च ॥ २ ॥**

प्लुतानां तादौ च कुप्वोश्चेति वक्तव्यम् । सर्पी३ष्टर । बर्ही३ष्टरं । नी३ष्कुल । दू३ष्पुरुष ।

**न वा बहिरङ्गलक्षणत्वाद्वृद्धेः ॥ ३ ॥**

न वा वक्तव्यम् । किं कारणम् ? 'बहिरङ्गलक्षणत्वाद् वृद्धेः' । बहिरङ्ग-लक्षणा वृद्धिः ।

इह कस्मान्न भवति पितुः‡ करोति, मातुः करोति ?, 'अप्रत्ययविसर्जनीय-स्ये'ति षत्वं प्रसज्येत । 'अप्रत्ययविसर्जनीयस्ये'त्युच्यते प्रत्ययविसर्जनीयश्चाऽ-

प्र०—'सम्पुंकानां सो वक्तव्य' इति वचनात्षत्वं न भविष्यतीति नाऽर्थः पुंसः प्रतिषेधेन । सकारश्चावश्यं वक्तव्यः । रुत्वे हि क्रियमाणे विसर्जनीयस्य प्रतिषिद्धेऽपि षत्वे ✕क ✕पविसर्जनीयश्रवणप्रसङ्गः । ननु सकारस्याऽपि षत्वं प्राप्नोति, 'सकारस्य षत्व'मित्ये-षोऽपि स्थितः पक्षः । नैतदस्ति । सकारविधानसामर्थ्यात्षत्वं न भविष्यति । षत्वे हि सति रोः सस्य च विशेषाऽभावात्किं सत्वविधानेन ? । मातुरिति । उभयादेशस्याऽ-न्यतरतो व्यपदेशाद्रपरत्वे सत्यप्रत्ययविसर्जनीयत्वात्षत्वप्रसङ्गः । प्रत्ययविसर्ज-नीयश्चायमिति । उभयादेशत्वाभावादुः स्थान इति रपरत्वाऽभावात्सकारस्यैव रुत्व-

उ०—अतएव 'चतुष्कपाल'मित्यादौ षत्वमुदाहरिष्यति । नन्विदमेवास्तु, सश्च न वक्तव्योऽत आह—सकारश्चेति । विपक्षे बाधकमाह—रुत्वे हीति । सत्वे तु तस्याऽसिद्धत्वाद्रोरभावेन विसर्जनीयाऽभावान्न दोषः । ध्वनितं चेदं 'पुंस्कामे'त्यत्र षत्वापत्त्या 'पुमः खयी'त्यत्र भाष्ये ।

ननु सकारस्यापीति । विसर्जनीयस्थानिकसस्यैव षत्वविधानान्निर्दलेयं शङ्का । सकारविधानेति । वस्तुतः सामर्थ्यसिद्धस्यैवानुवादो वार्तिके मन्दान्प्रति 'न वा बहिरङ्गे'तिभाष्ये । एवञ्च पूर्वमेव षत्वप्रवृत्तेर्जातस्य निवृत्त्ययोगाच्च कृतसन्धिकार्यादेव तद्धितोत्पत्तेश्च न दोष इति भावः । अप्रत्ययविसर्जनीयत्वादिति । सकारसन्निधिकालेऽकारेण नैव लब्धा प्रत्ययसंज्ञा, समुदायनिवेशनीत्वात्तस्या इति तदादेशस्योरः प्रत्ययत्वाऽभावः । यद्योरत्वे कृतेऽवशिष्टः सकारः प्रत्ययसंज्ञकः, स लुप्त एवेति भावः । नचाऽन्तादिवद्भावेनोर्सित्यस्य प्रत्ययत्वेन सलोपे एकदेशविकृतत्वेनोर्सित्यस्य प्रत्ययतया प्रत्ययावयवत्वं सुलभं, त्रिपाद्या असिद्धत्वेन तत्रान्तवद्भावाऽप्रवृत्तेरिति पूर्वपक्षतात्पर्यम् । विस्तरेण चैतदुरणपर इत्यत्र भाष्यप्रदीपोद्द्योते

* ८. ३. ६. † ८. ३. १०१. ‡ ६. १. १११; २. १. ५२.

यम्। लुप्यतेऽत्र प्रत्ययविसर्जनीयो 'रात्सस्य' [ ८. २. २४ ] इति।
एवं तर्हि—

**भ्रातुष्पुत्रग्रहणं ज्ञापकमेकादेशनिमित्तात् षत्वप्रतिषेधस्य ॥ ४ ॥**

यदयं कस्कादिषु* भ्रातुष्पुत्रशब्दं पठति तज्ज्ञापयत्याचार्यो 'नैकादेशनिमित्तात्षत्वं भवती'ति।

## द्विस्त्रिश्चतुरिति कृत्वोर्थे ॥ ८ । ३ । ४३ ॥

द्विस्त्रिश्चतुर्ग्रहणं किमर्थम्? इह मा भूत्—पञ्चकृत्वः करोति। अथ कृत्वोर्थग्रहणं किमर्थम्? इह मा भूत्—चतुष्कपालः चतुष्कण्टक इति। नैतदस्ति। अस्त्वनेन विभाषा, पूर्वेण† नित्यो विधिर्भविष्यति। नाप्राप्ते पूर्वेणेयं विभाषाऽऽरभ्यते, सा यथैवेह बाधिका भवति चतुःकरोति चतुष्करोतीत्येवं चतुष्कपालेऽपि बाधिका स्यात्। नाऽत्र पूर्वेण षत्वं प्राप्नोति। किं कारणम्? 'अप्रत्ययविसर्जनीयस्ये'त्युच्यते प्रत्ययविसर्जनीयश्चाऽयम्‡। लुप्यतेऽत्र प्रत्ययविसर्जनीयो रात्सस्य [ ८. २. २४ ] इति। तस्मात्कृत्वोर्थग्रहणं कर्त्तव्यम्।

प्र०—विसर्जनीयौ मन्यते। लुप्यत इति। पूर्वोक्तेन न्यायेन रपरत्वं भवत्येव। कस्कादिष्विति। एकादेशशास्त्रं निमित्तं यस्य तस्मात्परस्य विसर्जनीयस्य षत्वं न भवतीति ज्ञाप्यते।

द्विस्त्रिश्चतुरिति कृत्वोर्थे। द्विस्त्रिश्चतुर्ग्रहणमिति। वक्ष्यमाणेनाऽभिप्रायेण दूषणार्थः प्रश्नः। इतरस्त्वगृहीताभिप्रायः प्रत्युदाहरति—पञ्चकृत्व इति। अत्र सकारः प्रसज्येत। अथेति। द्विस्त्रिःशब्दौ कृत्वोर्थावेवेति प्रश्नः। इतरश्चतुःशब्दार्थमेतद्विशेषणमित्याह—चतुष्कपाल इति। 'इदुदुपधस्ये'ति नित्यं षत्वं भवति, अव्युत्पन्नत्वादुणादीनामप्रत्ययविसर्जनीयत्वात्। यदा तु साहचर्यं व्यवस्थाहेतुत्वेनाश्रीयते तदा चतुःशब्दार्थमपि कृत्वोर्थग्रहणं न कर्तव्यम्। प्रत्ययविसर्जनीय इति।

उ०—निरूपितं तत एवावधार्यम्। लुप्यतेऽत्र प्रत्ययविसर्जनीय इति। योऽत्र प्रत्ययस्थानिकत्वेन तवाऽभिमतो विसर्जनीयः स लुप्यते—न दृश्यते, स्थानिनःप्रत्ययस्यैव लोपादिति भावः। ज्ञाप्यत इति। एवञ्च त्रिपाद्यामप्यन्तरङ्गादिप्रवृत्तिरनेन ज्ञाप्यते। तेनामी क्षीरपेणेत्यादौ णत्वे सिद्ध्यत इति भावः।

द्विस्त्रिश्चतुः०। वक्ष्यमाणेनेति। 'इदुदुपधस्ये'त्यनुवृत्तिरूपेणेत्यर्थः। दूषणार्थ इति। तद्ग्रहणकर्तव्यत्वप्रतिपादनायेत्यर्थः। सकार इति। षसयोरुभयोरप्यनुवर्तनेन इणः परस्य षोऽन्यस्य स इति व्याख्यानादिति भावः। न कर्तव्यमिति। एवञ्च तदनित्यत्वज्ञापनार्थ-

* ८. ३. ४८; ग० † ८. ३. ४१. ‡ ५. ४. १८.

द्विस्त्रिश्चतुर्ग्रहणं शक्यमवक्तुम्। कस्मान्न भवति—पञ्चकृत्वः करोतीति ? 'इदुदुपधस्ये'ति* वर्तते। नैवं शक्यम्, अक्रियमाणे द्विस्त्रिश्चतुर्ग्रहणे कृत्वोर्थग्रहणेन विसर्जनीयो विशेष्येत। तत्र को दोषः ? इहैव स्याद् द्विष्करोति द्विःकरोति। इह न स्याच्चतुष्करोति चतुःकरोतीति। द्विस्त्रिश्चतुर्ग्रहणे पुनः क्रियमाणे कृत्वोर्थग्रहणेन द्विस्त्रिश्चतुरो विशेष्यन्ते। 'द्विस्त्रिश्चतुर्णां कृत्वोर्थे वर्तमानानां यो विसर्जनीय' इति। एतदपि नास्ति प्रयोजनम्। 'पदस्ये'ति+ वर्तते। तत्कृत्वोर्थग्रहणेन विशेषयिष्यामः—'पदस्य कृत्वोऽर्थे वर्तमानस्य यो विसर्जनीय' इति।

कृत्वसुजर्थे षत्वं ब्रवीति कस्माच्चतुष्कपाले मा।
षत्वं विभाषयाऽभून्ननु सिद्धं तत्र पूर्वेण ॥ १ ॥

सिद्धे ह्ययं विधत्ते चतुरः षत्वं यदापि कृत्वोर्थे।
लुप्ते कृत्वोऽर्थीये रेफस्य विसर्जनीयो हि ॥ २ ॥

प्र०—सकारस्य रुत्वे कृते पूर्वस्य 'रो री'ति लोपः क्रियत इति भावः। लुप्यत इति। 'रात्सस्ये'ति लोपे कर्तव्ये रुत्वस्याऽसिद्धत्वात्। रोरीति लोपे च 'ढ्रलोप' इति दीर्घप्रसङ्गः। द्विस्त्रिश्चतुर इति। चतुःशब्दः सुजन्तस्यानुकरणमिति प्रकृतावेवाऽदृष्टत्वादाम्न कृतः। 'द्विस्त्रिश्चतुर्णा'मित्यत्र त्वसुजन्तानुकरणत्वान्नुट् कृतः। पदस्य कृत्वोर्थ इति। ननु 'पूर्वत्रासिद्ध'मिति विकल्पस्याऽसिद्धत्वाच्चतुष्करोतीति नित्यं षत्वप्रसङ्गः। नैष दोषः। 'प्रकरणे प्रकरणमसिद्धं न तु योगे योगः' इत्युक्तत्वात। अथ वा इदुदुपधस्य

एवं सति त्विदानीं द्विस्त्रिश्चतुरित्यनेन किं कार्यम् ।
अन्यो हि नेदुदुपधः कृत्वोर्थे कश्चिदप्यस्ति ॥ ३ ॥

अक्रियमाणे ग्रहणे विसर्जनीयस्तदा विशेष्येत ।
चतुरो न सिध्यति तदा रेफस्य विसर्जनीयो हि ॥ ४ ॥

तस्मिंस्तु गृह्यमाणे युक्तं चतुरो विशेषणं भवति ।
प्रकृतं पदं तदन्तं तस्यापि विशेषणं न्याय्यम् ॥ ५ ॥

**नित्यं समासेऽनुत्तरपदस्थस्य ॥ ८ । ३ । ४५ ॥**

अनुत्तरपदस्थस्येति किमर्थम् ? परमसर्पिःकुण्डिका । अथेदानीमनेन मुक्ते पूर्वेण षत्वं विभाषा कस्मान्न भवति—'इसुसोः सामर्थ्ये [ ४४ ] इति ?

नाना पदार्थयोर्वर्तमानयोः ख्यायते यदा योगः ।
तस्मिन् षत्वं कार्यं तद्युक्तं तच्च मे नेह ॥ १ ॥

---

प्र०—कृत्वोर्थवृत्तेर्नाऽप्राप्ते नित्ये षत्वेऽस्यारम्भादस्याऽपवादत्वमित्यपवादो वचनप्रामाण्यान्नाऽसिद्धो भवति ।

नित्यं समासे । अथेदानीमिति । इह समासग्रहणादेकार्थीभाव एव सामर्थ्यं गृह्यते । पूर्वसूत्रे तु विशेषाश्रयणे प्रमाणाऽभावाद् द्विविधसामर्थ्यग्रहणस्य न्याय्यत्वादेवद्विधीयमाननित्यषत्वाभावे पूर्वेण विकल्पः प्राप्नोत्येव । नानापदार्थयोरिति । नानाभूतयोः पदार्थयोर्यौ शब्दौ वर्तेते तयोर्यो योगो व्यपेक्षालक्षणः स ख्यायते—ज्ञायते न त्वेकार्थीभावो गृह्यते । तस्मिन्निति । व्यपेक्षालक्षणे सम्बन्ध इत्यर्थः । तदुक्तमिति । व्यपेक्षालक्षणं सामर्थ्यमाश्रयितुं युक्तं, लक्ष्यानुरोधात् । अथ वा पदविधित्वात्समर्थपरिभाषोपस्थानात्सामर्थ्ये लब्धे पुनः सामर्थ्यग्रहणाद्विशिष्टसामर्थ्यपरिग्रहः । तच्चेति ।

---

उ०—इत्यर्थः । ननु प्रत्ययविसर्गत्वात्पूर्वेण न प्राप्नोतीत्यत आह—लुप्ते इति । एवञ्च टणादीनामनुपलम्भात् प्रत्ययविसर्गोऽयमिति भावः । एवं सतीति । कृत्वोऽर्थग्रहणे सतीत्यर्थः । तदा रेफस्येति । स च न कृत्वोऽर्थे इति भावः । आरम्भमाह—तस्मिंस्त्विति । प्रत्यासत्तिमाह—प्रकृतं पदमिति । तदन्तमिति । विसर्जनीयान्तमित्यर्थः ।

नित्यं समासे० । ननु चैवं व्यपेक्षालक्षणसामर्थ्याश्रयणात् कथं समासे तस्य प्राप्तिरत आह—तदुक्तमिति । अथवा पदविधित्वादिति । इदं चिन्त्यं, तद्धितवृत्तेरपवादान्ताद्विष्णु- [illegible]

व्यपेक्षासामर्थ्ये पूर्वयोगो न चाऽत्र व्यपेक्षासामर्थ्यम् ।

किं पुनः कारणं व्यपेक्षासामर्थ्यमाश्रीयते न पुनरेकार्थीभावो, यथाऽन्यत्र ?

**ऐकार्थ्ये सामर्थ्ये वाक्ये षत्वं न मे प्रसज्येत ।**

ऐकार्थ्ये सामर्थ्ये सति वाक्ये षत्वं न स्यात्—सर्पिष्करोति, सर्पिः करोतीति ।

**तस्मादिह[†] व्यपेक्षां सामर्थ्यं साधु मन्यन्ते ॥ २ ॥**

**अथ चेत्कृदन्तमेतत्ततोऽधिकेनैव मे भवेत्प्राप्तिः ।**

यदि कृदन्तमेतत्ततोऽधिकस्य षत्वं न प्राप्नोति । किं कारणम् ? 'प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवती'ति । वाक्येऽपि तर्हि न प्राप्नोति परमसर्पिष्करोति परमसर्पिः करोतीति ?

**वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्पेत ॥ ३ ॥**

यदयमनुत्तरपदस्थस्येति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो 'भवति वाक्ये विभाषे'ति ।

---

प्र०—व्यपेक्षालक्षणसामर्थ्यमिह परमसर्पिःकुण्डिकेत्यदौ नास्तीति षत्वाऽभावः । यथान्यत्रेति । समासतद्धितसुब्धातुषु यथैकार्थीभाव आश्रीयते तथेह कस्मान्नाश्रीयत इत्यर्थः । ऐकार्थ्य इति । यद्येकार्थीभावलक्षणं सामर्थ्यं पूर्वत्राश्रीयेत तदा वाक्ये षत्वविकल्पो न स्यात् । ननु केवलमैकार्थ्यं पूर्वत्र मा ग्राहि, द्विविधस्य तु सामर्थ्यस्य ग्रहणं कस्मान्न भवति । उक्तमत्रोत्तरम् । अथ वेह समासग्रहणाद् गोबलीवर्दन्यायात्पूर्वत्रापेक्षितप्रवृत्तिनिमित्तविशेषः समर्थशब्द आश्रीयते—सम्प्रेक्षितार्थं समर्थमिति । अथ चेदिति । स्यादेतत् । द्विविधस्यापि सामर्थ्यस्य पूर्वत्र ग्रहणे कृत्प्रत्यययोरिसुसोर्ग्रहणात् प्रत्ययग्रहणपरिभाषया परमसर्पिःकुण्डिकेत्यादौ पाक्षिकं षत्वं न भविष्यतीति, तदयुक्तम् । परमसर्पिष्करोतीत्यादावपि षत्वाऽप्रसङ्गात् । वाक्ये चेति । अनुत्तरपदस्थस्येति

---

उ०—द्देश्यता । न च एतौ तयोर्ग्याविति आद्यपक्ष एव श्रेयान् । 'परमसर्पिःकुण्डिके'ति षष्ठीतत्पुरुषः । उत्तरं—लक्ष्यानुसार रूपम् । प्रवृत्तिनिमित्तविशेषं दर्शयति—सम्प्रेक्षितार्थमिति । पृथगुपस्थितत्वे पृथक् शक्तिग्रहविषयत्वे वा सति परस्परसाकाङ्क्षार्थमित्यर्थः । अथ चेदित्यादि श्लोकार्थं व्याचष्टे—स्यादेतदिति । सर्पिरादिशब्दा व्युत्पन्नाः । अतएव 'सर्पिषे' त्यादौ षत्वसिद्धिरिति भावः । अत्र पक्षे प्रत्ययविसर्गत्वान्न नित्यषत्वप्राप्तिः । प्रत्ययरूपो विसर्ग इत्यर्थस्त्वेतद्भाष्यविरुद्धः । अतएव 'कविभिः कृत'मित्यादौ न षत्वम् । तस्मात्प्रत्ययपदस्य तदवयवलक्षणया प्रत्ययावयवविसर्गस्येत्यर्थ एव इति बोध्यम् । न चेसुस्न्यां तदन्तविधौ तेन पदविशेषणे तदन्तान्तेत्यर्थात् 'परमसर्पिष्कुण्डिके'त्यत्र षत्वं स्यादेवेति वाच्यम् । उपात्तविशेष्यसम्भवे आक्षिप्तेनानन्वयेन तदर्थस्य दुर्लभत्वात् । आक्षेपे मानाऽभावाच्चेत्याशयः । 'वाक्येऽपि तर्ही'त्यादि भाष्यं व्याचष्टे—तदयुक्तं परमेति । अनुत्तर-

---

[†] ८. ३. ४४.

**अथ चेत्संविज्ञानं नित्ये षत्वे ततो विभाषेयम् ।**

अथाऽव्युत्पन्नं प्रातिपदिकं ततो नित्ये षत्वे प्राप्ते इयं विभाषा आरभ्यते† ।

**सिद्धं च मे समासे**

षत्वम् । किमर्थं तर्हीदमुच्यते ?

**प्रतिषेधार्थस्तु यत्नोऽयम् ॥ ४ ॥**

अनुत्तरपदस्थस्येति प्रतिषेधं वक्ष्यामीति ।

नानापदार्थयोर्वर्तमानयोः ख्यायते यदा योगः ।
तस्मिन् षत्वं कार्यं तद्युक्तं तच्च मे नेह ॥ १ ॥
ऐकार्थ्ये सामर्थ्ये वाक्ये षत्वं न मे प्रसज्येत ।
तस्मादिह व्यपेक्षां सामर्थ्यं साधु मन्यन्ते ॥ २ ॥
अथ चेत्कृदन्तमेतत्ततोऽधिकेनैव मे भवेत्प्राप्तिः ।
वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्पेत ॥ ३ ॥
अथ चेत्संविज्ञानं नित्ये षत्वे ततो विभाषेयम् ।
सिद्धं च मे समासे, प्रतिषेधार्थस्तु यत्नोऽयम् ॥ ४ ॥

प्र०—प्रतिषेधाज्ज्ञापकाद्वाक्ये परमसर्पिष्करोतीत्यादौ षत्वं भविष्यतीत्यर्थः । यदि हि षत्वे प्रत्ययग्रहणपरिभाषोपास्थास्यत, अनुत्तरपदस्थस्येति प्रतिषेधो न व्यधास्यत । केचित्तु 'नित्यं समास' इत्येको योगः, 'अनुत्तरपदस्थस्ये'ति द्वितीय इति योगविभागेन समासे सर्वा षत्वप्राप्तिरुत्तरपदस्थस्य प्रतिषिध्यत इति वर्णयन्तो द्विविधसामर्थ्याश्रयेऽपि न दोष इत्याहुः । अथ चेदिति । यद्यव्युत्पन्नं सर्पिरादिकं शब्दरूपं संविज्ञानं—वाचकं तदाऽप्रत्ययविसर्जनीयत्वादिदुदुपधस्येति नित्ये षत्वे प्राप्ते 'इसुसोः सामर्थ्ये' इत्यनेन विकल्पः क्रियते तत्र प्रत्ययग्रहणाऽभावात् प्रत्ययग्रहणपरिभाषानुपस्थानात्परमसर्पिष्करोतीत्यादावपि षत्वविकल्पः सिध्यति ।

किमर्थमिति । 'इसुसोः सामर्थ्ये' इत्यत्रव्यपेक्षालक्षणसामर्थ्यग्रहणात्समासे 'इदुदुपधस्ये'ति नित्यं षत्वं सिद्धं, तत्किमर्थं 'नित्यं समास' इति सूत्रमिति प्रश्नः । प्रतिषेधार्थ इति । उत्तरपदस्थस्य समासे षत्वनिवृत्त्यर्थं सूत्रमित्यर्थः । नित्यग्रहणं तु न कर्तव्यम् ।

उ०—पदस्थस्येति । यतः प्रतिषेधो न प्रकल्पेताऽतो वाक्ये मे विभाषा सिद्धेत्यर्थः । प्रतिषेधस्य ज्ञापकत्वमुपपादयति—यदि हीति । तस्मादनेन प्रतिषेधेनाक्षिप्तस्याऽपि पृथग्विधेः स्पष्टता ज्ञाप्यत इति भावः । एवञ्च 'परमसर्पिःकुण्डिके'त्यादौ षविकल्पवारणाय पूर्वसूत्रे व्यपेक्षैवाश्रयणीयेति तात्पर्यम् । केचित्त्विति । भाष्याऽसम्मतिरत्राऽरुचिः । 'संविज्ञान'-पदार्थमाह—यद्यव्युत्पन्नमिति । भाष्येऽप्ययमेव पक्ष इति भावः । नन्वेतदभावे समासेऽपि 'इसुसो'रित्यनेन विकल्पः स्यादत आह—इसुसोरिति । व्युत्पत्तिपक्ष एवेति ।

† ८. ३. ४१; ४४.

अपदान्तस्य मूर्द्धन्यः ॥ ८ । ३ । ५५ ॥

अथ मूर्द्धन्यग्रहणं किमर्थं, नाऽपदान्तस्य षो भवतीत्येवोच्येत ? तत्राऽयमप्यर्थः षकारग्रहणं न कर्तव्यं भवति । प्रकृतमनुवर्तते । क्व प्रकृतम् ? 'इणः षः' [ ८. ३. ३९ ] इति । नैवं शक्यम् । अवश्यं मूर्द्धन्यग्रहणं कर्तव्यम्—इहार्थमुत्तरार्थं च । इहार्थं तावत्—इणः षीध्वंलुङ्लिटां धोऽङ्गात् [ ८. ३. ७८ ] इत्यत्र मूर्द्धन्यग्रहणं न कर्तव्यं भवति । उत्तरार्थं च—'रषाभ्यां नो णः समानपदे' [ ८. ४. १ ] इत्यत्र णकारग्रहणं न कर्तव्यं भवति । तत्रायमप्यर्थः 'पदान्तस्य ने'ति* प्रतिषेधो न वक्तव्यो भवति । अपदान्ताभिसम्बद्धं मूर्धन्यग्रहणमनुवर्तते ।

इति श्रीभगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्येऽष्टमस्याऽध्यायस्य तृतीये पादे प्रथममाह्निकम् ।

---

प्र०—'समासेऽनुत्तरपदस्थस्ये'ति प्रतिषेधार्थं सूत्रं पठितव्यम् । अव्युत्पत्तिपक्षे त्वाश्रीयमाणे 'सर्पिषा' 'यजुषे'त्यादि न सिध्यतीति षत्वाय व्युत्पत्तिपक्ष एवेसुसन्तस्याश्रयणीयः ।

अपदान्तस्य मूर्द्धन्यः । अथेति । मूर्द्धन्यग्रहणं गुर्विति प्रश्नः । इणः षीध्वमिति । इहाऽक्रियमाणे मूर्द्धन्यग्रहणे 'इणः षीध्व'मित्यत्र ढग्रहणं कर्तव्यं, ततः 'समासेऽङ्गुले'रित्यत्र षग्रहणं कर्तव्यम् । अपदान्ताभिसम्बद्धमिति । रषाभ्यामित्यत्रापदान्तग्रहणानुवर्तनादपदान्तस्येति सूत्रं न कर्त्तव्यं भवतीति लाघवं सम्पद्यते ।

इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे अष्टमस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ।

---

उ०—एवं च नित्यग्रहणमपि कार्यमिति भावः । परेस्त्वथ । चेत्संविज्ञानमिति पाणिनेः पक्षः, सर्पिषेत्यादौ बहुलग्रहणात्क्वचिदन्यदेवेत्यर्थकात्षत्वं सिद्धम् । ध्वनितं चायनेयीति सूत्रे 'प्रातिपदिकविज्ञानाच्च भगवतः सिद्ध'मिति वदताऽस्य पाणिनिपक्षत्वमित्यलम् ।

अपदान्तस्य० । ननु पदेन पदान्तरप्रत्याख्यानमसङ्गमत आह—मूर्द्धन्येति । मूर्धन्यवर्णबोधकं ग्रहणमिति भाष्यार्थ इत्याह—ढग्रहणं कर्तव्यमिति । 'ढग्रहण'मित्येव वक्तव्ये मूर्द्धन्यग्रहणफलमाह—ततः समासे इति । ढग्रहणेन विच्छिन्नतयाऽनुवृत्त्ययोगादिति भावः । भाष्ये—अत्र णकारेति । न चैवं ष्टुत्वपदप्राप्यमूर्द्धन्यपदप्राप्यमाणयोर्विशेषाभावात्प्रियाष्ट्न इत्यादौ 'पूर्वसूत्रासिद्धीय'इत्यस्य 'तस्य दोष'इत्यनेन निषेधे स्थानिवद्भावेन ष्टुत्वाऽनापत्तिः, णग्रहणे तु प्रतिपदोक्तेऽत्रैव स निषेध इति स्थानिवत्त्वाभावात् ष्टुत्वं स्यादेवेति वाच्यम्, एतद्भाष्यप्रामाण्येनाऽनित्यतया णत्वांशे प्रतिपदोक्तपरिभाषासाहचर्यपरिभाषयोरप्रवृत्त्याऽक्षतेः । प्रियाष्ट्न इत्यादेरनभिधानस्य ष्णान्तेति सूत्रे उक्तत्वाच्च ।

इति श्रीनागोजीभट्टविरचिते भाष्यप्रदीपोद्द्योतेऽष्टमस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ।

---

* ८. ४. ३७.

## सहेः साडः सः ॥ ८ । ३ । ५६ ॥

'स'ग्रहणं किमर्थं न 'सहेस्साडो मूर्द्धन्यो भवती'त्येवोच्येत ? 'सहेस्साडो मूर्द्धन्यो भवती'त्युच्यमानेऽन्त्यस्य प्रसज्येत* । ननु चाऽन्त्यस्य मूर्द्धन्यवचने प्रयोजनं नास्तीति कृत्वा सकारस्य भविष्यति । कुतो नु खल्वेतदनन्त्यार्थ आरम्भे सकारस्य भविष्यति न पुनराकारस्य स्यात् ? 'स्थानेन्तरतमो भवती'ति† सकारस्य भविष्यति । भवेत्प्रकृतितोऽन्तरतमनिवृ‍र्त्तौ सत्यां सिद्धं स्यात् । आदेशतस्त्वन्तरतमनिवृ‍र्त्तौ सत्यामाकारस्य प्रसज्येत । तस्मात् सकारग्रहणं कर्त्तव्यम् । उत्तरार्थं च सकारग्रहणं क्रियते । आदेशप्रत्यययोः [ ५६ ] सकारस्य यथा स्यादिह मा भूत्—चितम्, स्तुतम् ।

अथ सहिग्रहणं किमर्थं न 'साडः सो भवती'त्येवोच्येत ? सहेरेव साड्रूपं भवति नान्यस्य । यद्येवम्—

प्र०— सहेः साडः सः । प्रयोजनं नास्तीति । ननु भिन्नरूपमूर्द्धन्यार्थं वचनं स्यात् । नैतदस्ति । 'स्थानेऽन्तरतम' इत्यस्य बाधप्रसङ्गादपदान्तस्येत्यधिकारादन्त्यस्य न भविष्यतीत्ययमप्यत्र परिहारोऽस्ति । कुतो न खल्वतेदिति । ननु वचनसामर्थ्याद्नुसंहारे बाधिते सर्वादेशो मूर्द्धन्यः प्राप्नोति । अयमपरोऽस्य दोषोऽस्तु । स्थानेन्तरतम इति । षग्रहणमिहानुवर्तत इति भावः । मूर्द्धन्यग्रहणानुवृत्तौ तु ऋकार आकारस्य प्राप्नोति । भवेदिति । यद्यन्तरतम इति सप्तम्याश्रीयेत तदायं परिहारः षग्रहणानुवृत्तौ स्यात् । सप्तमीपक्षस्तु दोषदर्शनात् त्यक्तः । सप्तम्यां हीको यणचीति यणोऽर्द्धमात्राकालस्य मात्रिक एवान्तरतमः स्थानी स्यान्न द्विमात्रः । चितमिति । मूर्द्धन्याऽ-

उ०— सहेः सा० । भिन्नरूपेति । ऋवर्णादीत्यर्थः । बाधप्रसङ्गादिति । अबाधेनोपपत्तौ बाधस्यान्याय्यत्वादिति भावः । भाष्यमुपलक्षणमित्याह—अपदान्तस्येति । भाष्ये 'प्रयोजन'शब्दः प्रयोजकनिमित्तपरोऽपि, तेन अपदान्तत्वरूपं प्रयोजकं नास्तीत्यप्यर्थ इति बोध्यम् । अयमपर इति । पूर्वपक्षाद्दोषान्तरमज्ञातो न दोषायेत्यर्थः । वस्तुतस्तु अग्रे 'इण्को' रित्यस्याधिकारादपदान्तपदावधिमतोः सामान्यापेक्षत्वेन मूर्धन्यं प्रति वर्णस्यैव स्थानित्वे-नापदान्तस्येत्यस्याप्राप्ति वर्णस्यव्यवधेयेति भाष्याशय इत्यन्ये । षग्रहणमिति । 'इणः ष'

* १. १. ५१. † १.,१. ५०.

**साडः षत्वे समानशब्दप्रतिषेधः ॥ १ ॥**

साडः षत्वे समानशब्दानां प्रतिषेधो वक्तव्यः । साऽडो दण्डः, साऽडो वृश्चिक इति । अर्थवद्ग्रहणात्सिद्धम् । अर्थवतः साड् शब्दस्य ग्रहणं, न चैषोऽर्थवान् ।

**अर्थवद्ग्रहणात्सिद्धमिति चेत्तद्धितलोपेऽर्थवत्त्वात्प्रतिषेधः ॥ २ ॥**

अर्थवद्ग्रहणात्सिद्धमिति चेत्तद्धितलोपेऽर्थवत्त्वात्प्रतिषेधो वक्तव्यः । सह अडेन साऽडः, साऽडस्यापत्यं साऽडिः* अत्र प्राप्नोति । न वक्तव्यः । षत्वतुकोरेकादेशस्याऽसिद्धत्वान्नैष साड्शब्दः† । एवमपि सह डेन सडः, सडस्यापत्यं साडिः, अत्र प्राप्नोति । तस्मात्सहिग्रहणं कर्तव्यम् ।

**इणकोः ॥ ८ । ३ । ५७ ॥**

**नुम्विसर्जनीयशर्व्यवायेऽपि ॥ ८ । ३ । ५८ ॥**

**नुम्विसर्जनीयशर्व्यवाये निंसेः प्रतिषेधः ॥ १ ॥**

नुम्विसर्जनीयशर्व्यवाये निंसेः प्रतिषेधो वक्तव्यः । निंस्से निंस्स्वेति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । नुमैव व्यवाये, विसर्जनीयेनैव व्यवाये, शरैव व्यवाये

---

प्र०–तुवृत्तौ तकारस्य टः प्रसज्येत, षकारानुवृत्तौ तु षः । साड इति । दण्डस्य वृश्चिकस्य वा अडोऽवयवविशेषः ।

नुम्विसर्जनीयशर्व्यवायेपि । निंसेरिति । यथा 'वृषलैर्न प्रवेष्टव्य'मिति वृषलप्रवेशनिषेधपरत्वाद् वाक्यस्य प्रत्येकं सहितानां च प्रवेशाऽभाव एवं नुमादीनां षत्वाऽप्रतिबन्धहेतुत्वप्रतिपादनायोपादानात्प्रत्येकं समुदायेन च व्यवायैं षत्वप्रसङ्गः ।

---

उ०–इष्यत इत्यभिमानः । षकारानुवृत्तौ त्विति । इदं प्रौढ्या, न तु तदनुवृत्तौ मानमस्ति, पूर्वोक्तपूर्वपक्षाऽनुसारेण वा । भाष्ये–तद्धितलोप इति । तद्धितनिमित्ते लोप इत्यर्थः ।

नुम्विसर्जनीयश० । ननु प्रत्येकं वाक्यपरिसमाप्तिन्यायान्नुमादिभिः प्रत्येकं व्यवाये षत्वेन भाव्यं, समुदायव्यवायाऽसंभवाच्च । एवञ्च प्रकृते न दोषः, नुम्शर्भ्यां व्यवायादित्यत आह—यथा वृषलैरिति । षत्वप्रसङ्ग इति । णत्ववदिति भावः । ननु समुदायेन व्यवायाऽसम्भवात्कस्तन्न्यायावसरोऽत आह—सर्वैश्चेति । प्रत्येकपरिसमाप्तिन्यायाऽभावे तात्पर्यमिति

---

* ४. १. ९५; ६. ४. १४८. † ६. १. ८६.

इति । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टेति । तद्यथा—गुणवृद्धिसंज्ञे प्रत्येकं भवतः । ननु चायमप्यस्ति दृष्टान्तः—समुदाये वाक्यपरिसमाप्तिः । तद्यथा—'गर्गाः शतं दण्ड्यन्तामर्थिनश्च राजानो हिरण्येन भवन्ति, न च प्रत्येकं दण्डयन्ति' । एवं तर्हि—

**योगविभागात्सिद्धम् ॥ २ ॥**

योगविभागः करिष्यते । 'नुम्व्यवाये' । ततो—'विसर्जनीयव्यवाये' । ततः—'शर्व्यवाये' । स तर्हि योगविभागः कर्तव्यः ? न कर्तव्यः । प्रत्येकं व्यवायशब्दः परिसमाप्यते ।

**आदेशप्रत्यययोः ॥ ८ । ३ । ५९ ॥**

**आदेशप्रत्यययोः षत्वे सरकः प्रतिषेधः ॥ १ ॥**

आदेशप्रत्यययोः षत्वे सरकः प्रतिषेधो वक्तव्यः । कृसरः, धूसरः । अत्यल्पमिदमुच्यते 'सरक' इति । सरगादीनामिति वक्तव्यम् । इहापि यथा स्यात्—वर्सम्, तर्समिति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । "उणादयोऽव्युत्पन्नानि प्रातिपदिकानि" । न वा एतत्षत्वे शक्यं विज्ञातुम्—'उणादयोऽव्युत्पन्नानि प्रातिपदिकानी'ति । इह हि न स्यात्—सर्पिषः यजुष इति । एवं तर्हि—

प्र०–नुमैवेति । एवमुच्यमानेऽनेकव्यवाये षत्वाऽप्रसङ्गः । ननु चायमिति । सर्वेषां व्यवायाऽसम्भवाद्यथासम्भवं क्वचित्प्रत्येकं क्वचिद् द्वाभ्यां व्यवाये षत्वप्रसङ्गः । एवं तर्हीति । योगविभागे सति द्वाभ्यां व्यवाये षत्वाऽभावः । 'इण्को'रिति पञ्चमीनिर्देशादान्तर्ये षत्वप्रतिपादनाद्योगत्रयेण चैकैकव्यवाये षत्वाऽभ्यनुज्ञानात् । प्रत्येकमिति । लक्ष्यदर्शनवशाल्लक्षणव्यवस्था 'ततश्चैतद्वाक्योपायानि प्रक्रियावाक्यानि त्रीण्युपप्लवन्त इति योगविभागसाध्यफलसिद्धिः ।

आदेशप्रत्यययोः । कृसर इति । 'अशेः सर'न्नित्यतः सरन्प्रत्ययो 'कृधूमादिभ्यः कि'दित्यत्रानुवर्तते । कित्त्वातिदेशाच्च कित्कार्यलाभाद्भाष्यवार्तिकयोः सरक्पठितः । वर्समिति । 'वृतृवदि'इति सप्रत्ययः । उणादय इति । अबुधबोधनाय व्युत्पाद्यमाना अप्युणादयो व्युत्पत्तिनिमित्तं कार्यं न लभन्ते, 'अतः कृकमिकंसे'त्यत्र पृथक्कंसग्रहणात् । नवै एतदिति । षत्वं व्युत्पत्तिहेतुकमुणादीनामवश्याभ्युपेयं सर्पिषा

उ०–भावः । एतद्वाक्योपायानीति । एतत्संप्रापकवाक्यमुपायो येषाम्, 'अपाय'इति पाठे अपायाणं वा येषामित्यर्थः । क्वचित्तु 'एतद्वाक्यान् प्रक्रियावाक्यानी'त्येव पाठः ।

आदेशप्रत्यययोः । सरक उणादिष्वप्रसिद्धत्वादाह—अशेरिति । ननु व्युत्पत्तिमभिप्रायाव्युत्पन्नत्ववचनमसङ्गतमत आह—अबुधेति । कृशो अशेः सरन्प्रत्ययः । षत्वे कर्तव्ये

बहुलवचनात्सिद्धम् ॥ २ ॥

बहुलं प्रत्ययसंज्ञा भवति ।

अथ किं पुनरियमवयवषष्ठी—'आदेशस्य यः सकारः' 'प्रत्ययस्य यः सकार' इति । आहोस्वित् समानाधिकरणा—'आदेशो यः सकारः' 'प्रत्ययो यः सकार' इति । कश्चात्र विशेषः ?

आदेशप्रत्यययोरित्यवयवषष्ठी चेदाद्विर्वचने प्रतिषेधः ॥ ३ ॥

आदेशप्रत्यययोरित्यवयवषष्ठी चेद्द्विर्वचने प्रतिषेधो वक्तव्यः । बिसम् बिसम् । मुसलमुसलम्* ।

समानाधिकरणानां चाऽप्राप्तिः ॥ ४ ॥

समानाधिकरणानां च षत्वस्याऽप्राप्तिः । एषः† अकार्षीत्‡ ।

अस्तु तर्हि समानाधिकरणा । यदि समानाधिकरणा सिषेच सुष्वाप+— अत्र न प्राप्नोति । न धातुद्विर्वचने स्थाने द्विर्वचनं शक्यमास्थातुम् । इहापि हि

---

प्र०-वृक्ष इत्यादिसिद्ध्यर्थमित्यर्थः। एवं तर्हीति । कुसरादिषु षत्वे कर्तव्ये प्रत्ययसंज्ञा न भवति । अथेति । अवयवषष्ठ्यामस्यां 'स' इत्यस्यानुवृत्तस्य वचनविपरिणामो न कर्तव्यो भवति, कार्येण त्वादेशप्रत्यययोरसम्बन्धः सकारविशेषणत्वात्, सामानाधिकरण्ये त्वादेशप्रत्यययोः सकारयोरिति द्विवचनं विपरिणाम्यं, कार्येण त्वादेशप्रत्यययोश्चोदनाया अनुग्रह इति साम्यात्पक्षद्वयसम्भवः । बिसबिसमिति । 'स्थाने द्विवचन'मिति मत्वा दोषोपन्यासः । एष इति । एतदस्तकारस्य 'तदोः सः सावनन्त्ययो'रिति सकार आदेशो नादेशावयव इति षत्वं न प्राप्नोति । एवमकार्षीदित्यत्रादेशः प्रत्ययो वा सकारो, न तु तदवयवः । सिषेचेति । स्थाने द्विर्वचन आदेशावयवः

---

उ०-इति । एतेन 'वर्स'मित्यादावन्तरङ्गत्वादिनिमित्ते गुणे प्रत्ययसंज्ञा भवतीति सूचयति—प्रत्ययसंज्ञानेति । परे तु 'सर्पिष' इत्यादावव्युत्पत्तिपक्षेऽपि 'बहुल'मित्युक्तेर्बाहुलकात्प्रत्ययसंज्ञानिमित्तं षत्वं भवतीत्यर्थः । सरगादिविषयं तु नेदं, तथा सति बहुलवचनात्प्रत्ययसंज्ञा न भवतीत्येव वदेत् । अतएव 'नित्यं समास'इति सूत्रस्थमथचेत्संविज्ञानमित्यादि सर्पिःशब्दोपक्रमेण प्रवृत्तं भाष्यं वार्तिकं च सङ्गच्छते 'एवन्तर्हि बहुलवचनात्सिद्ध' मित्यस्य सर्पिष इत्यादीति शेषोऽपि । पक्षद्वयेऽपि दोषपरिहारार्थमेवोक्तम् । भाष्ये—'उणादयो बहुल'मित्यस्योणाद्यन्ताः शब्दाः प्रत्ययप्रकृतिविभागेन व्याकरणान्तरे साधितास्तत्र सकलकार्यसिद्ध्यर्थं बहुलग्रहणं, मच्छास्त्रे चाव्युत्पन्नानामपि तेषां सकलकार्यसिद्ध्यर्थं बहुलग्रहणं कर्तव्यमित्यर्थ इत्याहुः । ननु सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्याऽन्याय्यत्वात्प्रश्नानुपपत्तिरत आह—अवयवेति । कार्येणेति । कार्येण षत्वेनादेशप्रत्यययोर्या चोदना साक्षाच्छ्रुतिस्तस्या अनुग्रह इत्यर्थः । साक्षाच्छ्रुतयोरेव कार्येण सम्बन्ध इति भावः । साम्या-

---

* ८. १. १; ४. † ७. २. १०६. ‡ ३. १. ४४. + ९. १. १; ८.

प्रसज्येत—सरीसृप्यत इति। तस्मात्तत्र द्विःप्रयोगो द्विर्वचनम्*। इह तर्हि करिष्यति हरिष्यति—'प्रत्ययो यः सकार' इति षत्वं न प्राप्नोति।

अस्तु तर्ह्यादेशो यः सकारः प्रत्ययस्य यः सकार इति। इह तर्हि—अकार्षीत्, प्रत्ययस्य यः सकार इति षत्वं न प्राप्नोति। मा भूदेवम्, 'आदेशो यः सकार' इत्येवं भविष्यति। इह तर्हि—जोषिषत्† मन्दिषदिति‡ प्रत्ययस्य यः सकार इति षत्वं न प्राप्नोति। एषोऽपीटि कृते प्रत्ययस्य सकारः। इह तर्हि—इन्द्रो मा वक्षत्, स देवान् यक्षत्×।

**नानाविभक्तीनां च समासानुपपत्तिः ॥ ५ ॥**

नानाविभक्तीनां च समासो नोपपद्यते आदेशप्रत्यययोरिति।

**योगविभागात्सिद्धम् ॥ ६ ॥**

योगविभागः करिष्यते। 'आदेशस्य' षो भवतीति। ततः 'प्रत्ययस्य' सकारस्य षो भवतीति।

स तर्हि योगविभागः कर्तव्यः? न कर्तव्यः। कथम्? अस्तु तावदवयवषष्ठी। ननु चोक्तमादेशप्रत्यययोरित्यवयवषष्ठी चेद् द्विर्वचने प्रतिषेध इति। नैष दोषः। द्विःप्रयोगो द्विर्वचनम्। यदप्युच्यते—समानाधिकरणानां चाप्राप्तिरिति, व्यपदेशिवद्भावेन भविष्यति।

---

प्र०–सकारो न त्वादेश इति षत्वाप्रसङ्गो, यथा बिसमित्यादौ। सरीसृप्यत इति। ननु समानाधिकरणपक्षे षत्वस्याऽप्रसङ्गः। उच्यते। सिषेचादिसिद्धये यदि व्यधिकरणपक्ष आश्रीयते तदा स्थाने द्विर्वचने सरीसृप्यत इत्यत्रापि प्राप्नोति। द्विःप्रयोगे त्वत्र न दोषः। 'सिषेचे'त्यादौ तु 'धात्वादेः षः स' इति य आदेशस्तस्य सामानाधिकरण्याश्रयेण षत्वं सिध्यति। जोषिषदिति। लेट्, व्यत्ययेन परस्मैपदं, तिप्, 'इतश्च लोप'इत्यादिनेकारलोपः, 'लेटोऽडाटा'वित्यट्, 'सिब्बहुलं लेटी'ति सिप्। इटि कृत इति। सागमकस्य प्रत्ययत्वात्तदवयवः सकारः। वक्षद्यक्षदिति। वचियजिभ्यां लेट्। नानाविभक्तीनामिति। आदेशस्येति षत्वापेक्षया स्थानषष्ठी, प्रत्ययस्येति सकारा-

---

उ०–दिति। युक्तिसाम्यादित्यर्थः। आदेशः प्रत्ययो वेति। च्लेः सिज्विधानादादेशत्वं, स्थानिवद्भावेनाधिकरेण वा प्रत्ययत्वमिति भावः। भाष्ये—इहापि तर्हीति। तर्हि स्थाने द्विर्वचनत्वे इत्यर्थः। ननु समानेति। समानाधिकरणपक्षं प्रक्रम्य ह्येतदुक्तम्। ननु द्विःप्रयोगे 'सिषेचे'त्यस्याऽसिद्धिरत आह—सिषेचेत्यादौ त्विति। षत्वापेक्षयेति। सकार-

---

* १. १. ५४. † ऋ० सं० २. ३५. १. ‡ १. १. ३४. × ऋ० सं० १. ४. १.

अथ वा पुनरस्तु समानाधिकरणा । कथं करिष्यति हरिष्यति ? आचार्यप्रवृत्तिर्ज्ञापयति 'भवत्येवंजातीयकानां षत्व'मिति यदयं 'सात्पदाद्योः' [ ८. ३. १११ ] इति सात्प्रतिषेधं शास्ति ।

अथ वा पुनरस्त्वादेशो यः सकारः प्रत्ययस्य यः सकार इति । कथमिन्द्रो मा वक्षत्, स देवान् यक्षत् ? व्यपदेशिवद्भावेन भविष्यति । स तर्हि व्यपदेशिवद्भावो वक्तव्यः ? न वक्तव्यः ।

**उक्तं वा ॥ ७ ॥**

किमुक्तम् ? 'तत्र व्यपदेशिवद्वचनमेकाचो द्वे प्रथमार्थं, षत्वे चादेशसंप्रत्ययार्थम्, अवचनाल्लोकविज्ञानात्सिद्ध'मिति† ।

यदपि 'नानाविभक्तीनां च समासानुपपत्ति'रिति । आचार्यप्रवृत्तिर्ज्ञापयति—'नानाविभक्त्योरेष समास' इति, 'यदयं शासिवसिघसीनां च' [ ८.३.६० ] इति घसिग्रहणं करोति । कथं कृत्वा ज्ञापकम् ? यदि ह्यादेशस्य यः सकार इत्येवं स्याद् घसिग्रहणमनर्थकं स्यात्‡ । पश्यति त्वाचार्यः—'आदेशो यः सकारस्तस्य षत्व'मिति, ततो घसिग्रहणं करोति ।

प्र०–पेक्षयाऽवयवषष्ठीति सहविवक्षाऽभावाद् द्वन्द्वानुपपत्तिः । व्यपदेशिवद्भावेनेति । ननु सिप्सिचोरर्थवत्त्वादर्थस्य त्यागोपादानाभ्यां युक्तो व्यापदेशिवद्भावः, इडागमभावभावाभ्यामनेकरूपत्वाद्वा । 'एष'इत्यत्र तु सकारस्यानर्थक्यादयुक्तो व्यपदेशिवद्भावः । तथा चोक्त'मर्थवता व्यपदेशिवद्भाव' इति । एवं तर्ह्यवयवसमुदायापेक्षो व्यपदेशिवद्भावः, स्यः सः एषोऽसाविति सकारसमुदायस्यादेशस्यैष इत्यत्र सकारोवयवो भवतीति षत्वं प्रवर्तते । यदयमिति । प्रत्ययावयवस्यापि सकारस्य षत्वं भवति न केवलं प्रत्ययस्य सकारस्येति प्रतिषेधेन ज्ञाप्यते । नानाविभक्त्योरिति । नन्वाचार्यस्यार्थेष्ववैभवात्कथं भिन्नप्रस्थानयोर्द्वन्द्वः । उच्यते । एकविभक्त्योरयं द्वन्द्वो, नानाविभक्ति तुल्यफलत्वान्नानाविभक्तिरुक्तः । साद्ग्रहणाद् घसिग्रहणात्र नोभयत्र सामानाधिकरण्यं वैयधिकरण्यं वा । तत्र प्रत्ययावयववृत्तित्वात्प्रत्ययशब्दस्य सामानाधिकरण्येऽपि-वैयधिकरण्यफललाभः ।

उ०–रूपादेशस्य प्रत्ययावयवसस्य चेत्यर्थादिति भावः । सिप्सिचोरर्थवत्त्वादिति । द्योत्यार्थेनाऽर्थवत्त्वादित्यर्थः । इदं चिन्त्यमित्याद्यन्तवत्सूत्रे निरूपितमतः पक्षान्तरमाह—इडित्यादि । सकारोऽवयव इति । आहार्यारोपेण लोकसिद्धेन शास्त्रव्यवहारोपपत्तेरयं प्रयासो वृथा । ज्ञाप्यत इति । सातेः सकारस्याऽप्रत्ययत्वात् प्राप्त्यभावेन प्रतिषेधोऽनर्थकः सन् प्रत्ययस्य विधीयमानं षत्वं तदवयवस्यापि भवतीति ज्ञापयतीत्यर्थः । साद्ग्रहणादिति । साद्ग्रहणान्नोभयत्र मुख्यार्थेन सामानाधिकरण्यं, घसिग्रहणाच्च नोभयत्र वैयधिकरण्यं,

† १. १. २१.* ‡ २. ४. ३७–४०.

**स्तौतिण्योरेव षण्यभ्यासात्॥ ८ । ३ । ६१ ॥**

स्तौतिणिग्रहणं किमर्थम्? अस्तौतिण्यन्तानां मा भूत्—सिसिक्षति। अथैवकारः किमर्थः? नियमार्थः। 'स्तौतिण्यन्तानामेव नान्येषा'मिति। नैतदस्ति प्रयोजनम्। सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारकरणं नियमार्थो भविष्यति। 'इष्टतोऽवधारणार्थस्तर्हि'। यथैवं विज्ञायेत 'स्तौतिण्योरेव षणी'ति। मैवं विज्ञायि—'स्तौतिण्योः षण्ये'वेति। इह न स्यात्—तुष्टाव।

अथ षणीति किमर्थम्? सेषीव्यते। को विनतेऽनुरोधः*? अविनते नियमो मा भूत्—सुषुप्सतीति। कः सानुबन्धेऽनुरोधः? षशब्दमात्रे नियमो मा भूत्—सुषुपिष इन्द्रम्। सुषुपिष इहेति।

अभ्यासादिति किमर्थम? अभ्यासाद्या प्राप्तिस्तस्या नियमो यथा स्यादुपसर्गाद्या प्राप्तिस्तस्या नियमो मा भूत्—अभिषिषिक्षति†। नैतदस्ति। असिद्धमुपसर्गात् षत्वम्, तस्याऽसिद्धत्वान्नियमो न भविष्यति। इदं तर्हि प्रयोजनम्—सनि योऽभ्यासस्तस्माद्या प्राप्तिस्तस्या नियमो यथा स्याद्यङि योऽभ्यासस्तस्माद्या

---

प्र०—स्तौति०। नियमार्थ इति। विशिष्टेष्टनियमार्थ इत्यर्थः। सुषुपिष इन्द्रमिति। स्वपेलिट्, छान्दसत्वाद्व्यत्ययेन थास्, थासः से, तस्य षत्वेऽयादेशे यलोपे च नियमाऽभावादभ्यासात्परस्य धातुसकारस्य षत्वं भवत्येव। अभिषिषिक्षतीति। स्थादिष्वभ्यासेनेऽति वर्तमान 'उपसर्गात्सुनोती'तिषत्वम्। असिद्धमिति। 'प्रकरणे प्रकरणमसिद्धं न तु योगे योग'इत्येतन्नाश्रितम्। सनि योऽभ्यास इति। यथाऽत एकहल्मध्य इत्यत्र लिटाऽऽदेशो विशेष्यते तथेह सनाऽभ्यासः,—'सनि योऽभ्यासस्तस्मात्स्तौतिण्योरेवे'ति।

---

उ०—घसेरादेशत्वेनादेशावयवस्येति षत्वस्य सिद्धत्वेन 'शासिवसी'ति सूत्रे घसिग्रहणवैयर्थ्योपत्तेः तस्मात्प्रत्ययशब्दस्य लक्षणयोभयत्रापि सामानाधिकरण्यमिति भावः।

स्तौतिण्योरेव०। एवकारं विनाऽपि आरम्भसामर्थ्यान्नियमसिद्धेराह—विशिष्टेति। भाष्ये—को विनत इति। 'विनाम'शब्देन षत्वमुच्यते व्याकरणान्तरप्रसिद्ध्या। अनुरोधः—प्रयोजनम्। कृतषत्वनिर्देशे किं प्रयोजनमित्यर्थः। स्वपेः परस्मैपदित्वादाह—व्यत्ययेनेति। नियमाऽभावादिति। नकारानुबन्ध एव नियमादित्यर्थः। इतिषत्वमिति। उभयोरपीत्यर्थः। तथेह सनेति। 'गुणः कृतात्मसंस्कार'इति न्यायादिति भावः। अत्राऽ-

---

* "विनत इति पूर्वाचार्यसञ्ज्ञा षत्वणत्वयोः" इति न्यासकारः १०७२ पृष्ठे। 'विनामशब्देन षत्वमुच्यते' इति कोद्द्योतकारः। † ८. ३. ६५.

प्राप्तिस्तत्र नियमो मा भूदिति। सोषुप्यतेः सन्—सोषुपिषते। अथ वाऽभ्यासाद्या प्राप्तिस्तस्या नियमो यथा स्याद्धातोर्या प्राप्तिस्तस्या नियमो मा भूत्—अधीषिषति। ननु च षणीत्युच्यते। 'षणी'ति नैषा परसप्तमी शक्या विज्ञातुम्। सन्यङन्तं हि द्विरुच्यते*। तस्मादेषा सत्सप्तमी 'षणि सती'ति। सत्सप्तमी चेत्प्राप्नोति।

प्र०—तेन यङि योऽभ्यासस्तस्माद्धात्वन्तरस्यापि षणि षत्वं भवति। सोषुपिषत इति। अत्र तु शक्यं वक्तुमन्तरङ्गं षत्वं बहिरङ्गो नियमस्ततोऽसिद्धं बहिरङ्गमन्तरङ्ग इति सिद्धं षत्वम्। अथ वा सनः षत्वं बहिरङ्गत्वादसिद्धम्। यङ्निमित्तादभ्यासाद्धातुसकारस्य षत्वे कर्तव्येऽविनत च नियमाऽभावो यथा—'सुषुप्सती'ति। अधीषिषतीति। इणो बोधनार्थत्वाद् गम्यादेशाऽभावः। 'अजादेर्द्वितीयस्ये'ति 'स'शब्दस्य द्विर्वचनम्। 'सन्यत' इतीत्वम्। धात्वाश्रयमभ्यासस्य षत्वमभ्यासाश्रये प्रत्ययस्य षत्वे कृते नियमाऽभावात्प्रवर्तते। ननु च षणीति। 'षणी'ति परसप्तमी, ततश्च 'षणि परतः स्तौतिण्योरेव षत्व'मिति नियमः क्रियमाणस्तुल्यजातीयस्य षणपरस्य 'सिसिक्षती'त्यादौ षत्वं व्यावर्तयति। अधीषिषतीत्यादौ तु सन एव द्विर्वचनविधानात्षणपरत्वाऽभावात्तस्य नियमो न प्रवर्तिष्यत इति नार्थोऽभ्यासग्रहणेनेत्यर्थः। सन्यङन्तमिति। समुदाय एव सन्यङन्तोऽवयवद्वारेण द्विर्वचनभागित्यर्थः। सत्सप्तमीति। तुल्यजातीयस्यापि नियमेन निवृत्तिः क्रियमाणा सन्नन्तसमुदायावयवत्वेन धर्मेण तुल्यजातीयस्याधीषिषतीत्यादावपि स्यादित्यभ्यासग्रहणम्। यदि च सन्प्रदेशेषु परसप्तमी स्यात्तदा सन्यत इतीत्वमधीषिषतीत्यत्र न स्यात्समुदायस्य सन्रूपत्वात्पौर्वापर्याऽभावात्।

उ०—स्वरसान्नाप्ये पक्षान्तरमित्याह—अत्र त्विति। अन्तरङ्गमिति। यङ्निमित्तद्वित्वाश्रयत्वात्। सनः षत्वस्याऽसिद्धत्वे किं जातमित्याह—अविनत इति। 'अत्र त्वि'त्यारभ्य 'यथा सुषुप्सती'त्यन्तं चिन्त्यं, त्रिपाद्यां बहिरङ्गपरिभाषाया अप्रवृत्तेः। षत्वे कृते इति। नित्यत्वदिति भावः। धात्वाश्रयमभ्यासस्य षत्वं, तस्मिन्कृते सामान्यनियमपक्षे न प्राप्नोतीत्यनित्यमिति बोध्यम्। परसप्तमीति। स्वरसतः प्राप्तत्वात्। सन एव द्विर्वचनविधानादिति। स्थाने द्विर्वचने इदम्। तदा हि स्थानिवत्त्वेन समुदायस्य सन्त्वं, द्विः प्रयोगे तु न दोषः। उत्तरखण्डस्य सन्त्वात्। अतएवाऽऽटिटदित्यादौ उत्तरखण्डे णिलोप इति बोध्यम्। एवञ्च स्थाने द्विर्वचनवादिनः शङ्का, 'नैषे'त्याद्येकदेशिन उत्तरम्। 'सन्यङन्तं ही'त्यस्य सन्यङन्तावयवैकाच इत्यर्थः। तथा च सर्वत्र सनवयवसहितस्य सन एव वा स्थाने द्विर्वचनोक्तेः षणपरत्वमभ्यासस्याऽसम्भवमिति भावः। तदाह—समुदाय एवेति। भाष्ये सत्सप्तमीति। 'षणि सति षण्यन्तसमुदायावयवस्य चेत्षत्वं तदा स्तौतिण्योरेवे'ति सूत्रार्थः। तदाह—षणन्त-

* ६. १. ९.

## स्थादिष्वभ्यासेन चाभ्यासस्य ॥ ८ । ३ । ६४ ॥

किमर्थमिदमुच्यते ?

**स्थादिष्वभ्यासवचनं नियमार्थम् ॥ १ ॥**

नियमार्थोऽयमारम्भः—'स्थादिष्वभ्यासस्य यथा स्यादिह मा भूत्—अभिसुसूषति* ।

अथ किमर्थमभ्यासेन चेत्युच्यते ?

**तद्व्यवाये चाषोपदेशार्थम् ॥ २ ॥**

तद्व्यवायेऽभ्यासव्यवाये चाऽषोपदेशस्यापि यथा स्यात्—अभिषिषेणयिषति ।

**अवर्णान्ताभ्यासार्थं† षणिप्रतिषेधार्थं च ॥ ३ ॥**

अवर्णान्ताभ्यासार्थं तावत्—अभितष्ठौ । षणिप्रतिषेधार्थम्*—अभिषिषिक्षति ।

---

प्र०— स्थादिष्वभ्यासेन चाभ्यासस्य । अभिसुसूषतीति । 'पू प्रेरणे', सन्, 'सनिग्रहगुहोश्चे'तीट्प्रतिषेधः । अत्र धातुसकारस्य 'स्तौतिण्यो'रिति नियमात्षत्वाऽभावः । अभ्याससकारस्य त्वस्मान्नियमात् । अभिषिषेणयिषतीति । अव्युत्पन्नः सेनाशब्दः । अथ वा सहेनेन सेना, 'सहस्य सः संज्ञाया'मिति सादेशः । यदा तु 'कृवृजृषी'ति सिनोतेर्नप्रत्ययेन सेनाशब्दो व्युत्पाद्यते तदाऽस्त्येव षोपदेशत्वम् ।

---

उ०—समुदायावयवत्वेन धर्मेणेति । 'अवयवित्वेने'ति त्वपपाठः । सर्वत्रैव सनीति । सत्सप्तम्याश्रयणीयेतीहापि तदाश्रयणे न दोष इत्याह—यदि च सन्प्रदेशेष्विति । सनि सति योऽभ्यासः प्रत्यासत्त्या सनन्तत्वनिमित्तक इत्यर्थः । अतएव पापचिषत इत्यादौ न दोषः । 'द्विःप्रयोग' इति सिद्धान्ते तु परसप्तमीपक्षेऽपीदं फलं बोध्यम् । 'सन्यत' इत्यदौ च न दोष इति तत्त्वम् ।

स्थादिष्व० । भाष्ये—किमर्थमीति । अभ्यासस्योपसर्गात्सुनोतीत्यादिना सिद्धेरिति भावः । न चऽभ्यासस्य नैरर्थक्यात्कथं तेन सिद्धिरित्यस्य विध्यर्थत्वमेवोचितम् । सुनोतीत्यादीनां यः सकार इत्यत्रावयवत्वमिव तत्सम्बन्ध्यवयवत्वस्यापि षष्ठ्यर्थत्वेनाऽदोषात् । पू प्रेरण इति । अस्यैव उत्तरसूत्रेण प्राप्तेः । दैवादिकाऽदादिकयोस्तु सुषतीति निर्देशात्षत्वाऽप्राप्तेः । अत्रेति । 'आदेशप्रत्यययो'रिति प्राप्तिः । धातुसकारस्येति । उत्तरखण्डस्यैव धातुत्वमिति भावः । अथ किमर्थमीति । 'आदेशप्रत्यययो'रित्यनेनैव सिद्धेरिदं किमर्थमिति प्रश्नः । तदास्त्येवेति । एवञ्च नेदं प्रयोजनमिति भावः । वस्तुत 'उणादयोऽव्युत्पन्ना एवे'ति पाणिनीयमतेनेदं भाष्यम् । भाष्ये—षणिप्रतिषेधार्थमिति । न च 'उपसर्गा'दित्यस्य बहिरङ्गत्वं, त्रिपाद्यां बहिरङ्गपरिभाषाया अप्रवृत्तेः ।

---

* ८. ३. ६१. † 'अवर्णार्थमिति' पाठान्तरम् ।

## उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् ॥ ८ । ३ । ६५ ॥

### उपसर्गात्षत्वे निस उपसंख्यानमनिणन्तत्वात् ॥ १ ॥

उपसर्गात् षत्वे निस उपसङ्ख्यानं कर्तव्यम् । निष्षुणोति । निष्षिञ्चति । किं पुनः कारणं न सिध्यति ? 'अनिणन्तत्वात्' । इणन्तादुपसर्गात्षत्वमुच्यते न च निसिणन्तः ।

### न वा वर्णाश्रयत्वात् षत्वस्य तद्विशेषक उपसर्गो धातुश्च ॥ २ ॥

न वा वक्तव्यम् । किं कारणम् ? 'वर्णाश्रयत्वात् षत्वस्य' । वर्णाश्रयं षत्वम् । 'तद्विशेषक उपसर्गो धातुश्च' । नैवं विज्ञायते—'इणन्तादुपसर्गा'-दिति । कथं तर्हि ? 'इण उत्तरस्य सकारस्य, स चेदिणुपसर्गस्य', 'स चेत्सकारस्सुनोत्यादीना'मिति । तत्र 'शर्व्यवाये'इत्येव सिद्धम्* ।

प्र०- उपसर्गात्० । अनिणन्तत्वादिति । इण्ग्रहणेन प्रकृतेनोपसर्गो विशेष्यत इति तदन्तविधिनेणन्तादुपसर्गात्षत्वेन भाव्यम् । न वेति । उपसर्गेणेण्विशेष्यत इति तदन्तविध्यभावः । शर्व्यवायश्चाश्रित इति सिद्धं षत्वम् । वर्णाश्रयत्वादिति । वर्णाविवर्णसकारावाश्रयो यस्य तद्वर्णाश्रयम् । यद्येवमिति । यद्युपसर्गेणेण्विशेष्यते न तु सुनोत्यादयस्तदाऽतिप्रसङ्गः । सुनोत्यादिभिरिति । सुनोत्यादिभिः सकारो न विशेष्यते, अपि तूपसर्गः । सुनोत्याद्युपसर्गस्थाच्चेणः परः सकारः सामर्थ्यात्सुनोत्याद्यवयव एव भवति । उपसर्गस्थस्य तु सकारस्याऽपदान्तस्येत्यधिकारात्षत्वस्याऽप्रवर्तनम् । ननु चोपसर्गादिति पञ्चमीनिर्देशात्कथमिण्विशेष्यते ? तात्स्थ्यात्ताच्छब्द्यं भविष्यतीत्यदोषः । सुनोत्यादीनां य उपसर्गस्तत्स्थादिणः परस्य सकारस्य षत्वे विज्ञायमाने न कश्चिद्दोषः । सुनोत्यादीनां षत्व इति । यथा 'विसेचक'इत्यत्र गमेरुपसर्गो विशब्दो न सिचेरिति

उ०-उपसर्गात्सुनो० । भाष्ये—निस इति । निरोऽपि विसर्गे 'वा शरी'ति कृतसत्वस्य प्रयोगस्थस्याऽनुकरणं, दुर्दुसोस्तूपसर्गत्वप्रतिषेध एवेति भावः । इण्ग्रहणेति । श्रुतस्य विशेष्यताया न्याय्यत्वादिति भावः । उपसर्गेणेति । लक्ष्यानुरोधादिति भावः । 'उपसर्गा'दिति तत्स्थलाक्षणिकम् । वर्णाविति । पौर्वापर्यमापन्नावित्यर्थः । नन्वेवं सकारस्तैर्न विशेषितः स्यात् । एवञ्चोपसर्गस्थसस्यापि 'निरपिच'दित्यादौ स्यादत आह—सामर्थ्यादिति । तत्र सत्वं बाधकमिति भावः । युक्त्यन्तरमप्याह—उपसर्गस्थस्येति । ननु चेति । षष्ठीनिर्देशे हि तदुपपत्तिः । तात्स्थ्यादिति । इण्रूपोपसर्गाऽभावेन लक्षणेति भावः । यथा विसेचक इति । सुनोत्यादीनामर्थद्वारा सम्बन्धी या उपसर्गस्तत्स्थेणः परस्य सस्य सुनोत्याद्यवयवस्य षत्वमित्यर्थसत्त्वादिति भावः । भाष्ये—आधिक्यमर्थतो विवक्षितं न

* ८. ३. ५८.

यद्येवं धातूपसर्गयोरभिसम्बन्धोऽकृतो भवति। तत्र को दोषः ? इहापि प्राप्नोति—विगताः सेचका अस्माद् ग्रामात्—विसेचको ग्रामः। धातूपसर्गयोश्चाऽभिसम्बन्धः कृतः। कथम् ? सुनोत्यादिभिरत्रोपसर्गं विशेषयिष्यामः 'सुनोत्यादीनां य उपसर्गस्तस्य य इ'ण्णिति।

**सुनोत्यादीनां षत्वे ण्यन्तस्योपसंख्यानमधिकत्वात् ॥ ३ ॥**

सुनोत्यादीनां षत्वे ण्यन्तस्योपसङ्ख्यानं कर्तव्यम्। अभिषावयति। किं कारणम् ? 'अधिकत्वात्'। व्यतिरिक्तः सुनोत्यादिरिति कृत्वोपसर्गात्सुनोत्यादीनामिति षत्वं न प्राप्नोति।

**न वाऽवयवस्याऽनन्यत्वात् ॥ ४ ॥**

न वा वक्तव्यम्। किं कारणम् ? 'अवयवस्यानन्यत्वात्'। अवयवोऽश्चाऽनन्यः।

**नामधातोस्तु प्रतिषेधः ॥ ५ ॥**

नामधातोस्तु प्रतिषेधो वक्तव्यः। सावकमिच्छत्यभिसावकीयति, परिसावकीयति।

**न वाऽनुपसर्गत्वात् ॥ ६ ॥**

न वा वक्तव्यः। किं कारणम् ? 'अनुपसर्गत्वात्'। यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो न चाऽत्र सुनोतिं प्रति क्रियायोगः। किं तर्हि ? सावकीयतिं प्रति। इहापि तर्हि न प्राप्नोति—अभिषावयति। अत्रापि न सुनोतिं प्रति क्रियायोगः। किं तर्हि ? सावयतिं प्रति। सुनोतिं प्रत्यत्र क्रिया-

---

प्र०–षत्वं न भवत्येवं ण्यन्तस्याभिषावयतीत्यादावभ्यादिरुपसर्ग इति षत्वाऽप्रसङ्गः। 'हेतुमति चे'त्यत्र प्रत्ययार्थविशेषणपक्षेऽर्थाधिक्यादधिकत्वमुच्यते। नवेति। ण्यन्तस्य योऽवयवो णिच्प्रकृतिस्तस्याऽनन्यत्वादुसर्गत्वस्य सिद्धं षत्वम्। नामधातोरिति। तत्रापि स एव सुनोत्यादिरिति षत्वप्रसङ्गः। नवेति। अभिः क्यजर्थस्येच्छाया विशेषणत्वात्तदुपसर्गो न सुनोतेः। सुनोत्युपसर्गत्वे त्वभिषावकमिच्छति अभिषावकीयतीति भवत्येव षत्वम्। नासावेवमिति। यदा ण्यर्थस्याऽभिर्विशेषणत्वात्तदुपसर्गस्तदा

---

उ०–सु शब्दतः। तदाधिक्यस्य प्रकृते हेतुत्वाऽयोगादित्याह—हेतुमति चेत्यत्रेति। प्रत्ययार्थविशेषणपक्षे इति। प्रयोजकव्यापारस्य प्रत्ययार्थत्वपक्षे इत्यर्थः। स एव च तत्र सिद्धान्त इति भावः। तदाह—भाष्ये—व्यतिरिक्तः सुनोत्यादिरिति। अतिरिक्तेन प्रयोजकव्यापारेण विशिष्ट इति प्रधानतया तस्यैवाभ्यादिरुपसर्ग इति सुनोत्युपसर्गाऽभावात्षत्वं न प्राप्नोतीत्यर्थः। तस्यानन्यत्वादिति। 'ण्यर्थान्वये न स्या'दिति पूर्वपक्षे इष्टापत्त्या इदमुत्तरमिति बोध्यम्। भवत्येवेति। प्राग्वदेवेमे शङ्कोत्तरे विपर्यस्ताशयतया बोध्ये।

योगः। कथम्? नासावेवं प्रेष्यते—'सुन्वमी'ति। किं तर्हि? उपसर्गविशिष्टामसौ क्रियां प्रेष्यते—अभिषुणिवति।

**स्तम्भेः ॥ ८ । ३ । ६७ ॥**

अप्रतेरिति* वर्तते उताहो निवृत्तम्? 'निवृत्त'मित्याह। कथं ज्ञायते? योगविभागकरणसामर्थ्यात्। इतरथा हि 'सदिस्तम्भयोरप्रते'रित्येव ब्रूयात्। अस्त्यन्यद्योगविभागकरणे प्रयोजनम्। किम्? 'अवाच्चालम्बनाविदूर्ययोः' [ ६८ ] इति वक्ष्यति तत्स्तम्भेरेव यथा स्यात्सदेर्मा भूदिति। नैतदस्ति प्रयोजनम्। एकयोगेऽपि सति यस्यालम्बनाविदूर्यें स्तस्तस्य भविष्यति। कस्य चाऽऽलम्बनाविदूर्यें स्तः? स्तम्भेरेव।

**अनुविपर्यभिनिभ्यः स्यन्दतेरप्राणिषु ॥ ८ । ३ । ७२ ॥**

अथ यः प्राण्यप्राणी च कथं तत्र भवितव्यम्, अनुष्यन्देते मत्स्योदके इति, आहोस्विदनुस्यन्देते मत्स्योदके इति? यदि तावदप्राणी विधिनाश्रीयते, अस्त्यत्राप्राणीति कृत्वा भवितव्यं षत्वेन, अथ प्राणी प्रतिषेधेनाश्रीयते, अस्त्यत्र प्राणीति कृत्वा भवितव्यं प्रतिषेधेन।

किं पुनरत्राऽर्थसतत्त्वम्? देवा एतज्ज्ञातुमर्हन्ति।

---

प्र०—नास्ति षत्वं, यदा तूपसर्गविशिष्टायां क्रियायां प्रयोज्यो नियोज्यते तदा प्रतिबन्धकाऽभावात् षत्वं प्रवर्तत एवेत्यर्थः। सुनु अभीति। नायं लौकिकप्रयोगः, केवलस्योपसर्गस्य प्रयोगाऽभावात्, किन्तर्हि? सुनोतिसंबन्धाऽभावप्रदर्शनाय कल्पितः। प्रयोजकव्यापारेणाऽभेः संबन्धो न सुनोतिनेति ह्यनेन प्रतिपाद्यते।

अनुवि०। देवा इति। पण्डिताः पर्युदासं मन्यन्ते, संभवत्येकवाक्यत्वे

---

उ०—नासावेव'मित्यादिना षत्वाषत्वप्रयोगस्य विषयविभागः प्रदर्श्यत इत्याह—यदेति। सुनोतिसम्बन्धाऽभावप्रदर्शनमेवोपपादयति—प्रयोजकेति। परे तु 'नासावेव'मिति भाष्येणोपसर्गाणां स्वभावात्प्रकृत्यर्थविशेषणत्वमेव न ण्यर्थविशेषणत्वमिति अतोऽभिसावयतीत्यसाधुरेव प्रयोगः। अत एव वचनारम्भणसमफलतेत्याहुः।

अनुवि०। 'किं पुनरत्राऽर्थसतत्त्व'मिति भाष्ये पाठः। 'सतत्त्व'शब्दस्तत्त्वपर्यायः। पर्युदासमिति। तत्पक्षेऽपि तस्यैव यत्र सत्ता तत्रैवेदमिति सर्वथाऽत्र षत्वाभाव एव न्याय्यः। प्रतिषेधपक्षे समासेऽवधारणाऽलाभादित्यन्ये।

---

* ८. ३. ६६.

परेश्च ॥ ८ । ३ । ७४ ॥

अनिष्ठायामिति वर्तते उताहो निवृत्तम् ? 'निवृत्त'मित्याह । कथं ज्ञायते ? योगविभागकरणसामर्थ्यात् । इतरथा हि 'विपरिभ्यां च स्कन्देरनिष्ठाया'मित्येव ब्रूयात् ।

इणः षीध्वंलुङ्लिटां धोऽङ्गात् ॥ ८ । ३ । ७८ ॥

विभाषेटः ॥ ८ । ३ । ७९ ॥

इण्ग्रहणं किमर्थम् ?

**इण्ग्रहणं ढत्वे कवर्गनिवृत्त्यर्थम् ॥ १ ॥**

इण्ग्रहणं क्रियते कवर्गाड्ढत्वं मा भूदिति[†] । पक्षीध्वम्, यक्षीध्वम् ।

किं पुनरिदमिण्ग्रहणं प्रत्ययविशेषणम्—'इण उत्तरेषां षीध्वंलुङ्लिटां यो धकार' इति, आहो स्विद्धकारविशेषणम्—'इणः उत्तरस्य धकारस्य, स चेत्षीध्वंलुङ्लिटान्धकार' इति । कश्चात्र विशेषः ?

**तत्र प्रत्ययपरत्वे इटो लिटि ढत्वे परादित्वात् ॥ २ ॥**

तत्र प्रत्ययपरत्वे इटो लिटि ढत्वं न प्राप्नोति । लुलुविढ्वे, लुलुविध्व इति । किं कारणम् ? 'परादित्वात्' इट् परादिः । वचनाद्भविष्यति । अस्ति वचने प्रयोजनम् । किम् ? अलविढ्वम्, अलविध्वम् । अस्तु तर्हि धकारविशेषणम् ।

---

प्र०-वाक्यभेदाश्रयणस्याऽयुक्तत्वात् । प्रसज्यप्रतिषेधे हि वाक्यभेदोऽवश्यं भावी ।

इणः षी० । इण्ग्रहणमिति । 'इण्को'रित्यत इण्ग्रहणमनुवर्तत एवेति प्रश्नः । कवर्गनिवृत्त्यर्थमिति । पूर्वयोगेषु द्वयोरनुवर्तनात्केवलस्येण इहाऽनुवृत्तिर्दुर्लभा ।

किं पुनरिति । वार्तिकानुसारेण 'इड्ग्रहण'मिति पाठो युक्तः । 'इण्ग्रहण'मिति तु भाष्ये प्रायेण पाठः । किं षीध्वमादयो विशेषणेन प्राक्संबध्यन्ते पश्चात्प्रधानेन धकारेणाऽथ धकार एव विशेषणद्वयेन संबध्यत इति प्रश्नः । प्रत्ययपरत्वे इति । इटः परेषां षीध्वंलुङ्लिटां धकारस्येति विज्ञायमन इटो लिङ्भक्तत्वात्पौर्वापर्याऽयोगाद्विकल्पाऽप्रसिद्धिः । लिड्ग्रहणं चोपलक्षणं, षीध्वमोऽपि इटा पौर्वापर्याऽयोगात् । वचनादिति । लिड्ग्रहणाऽनुवृत्तिसामर्थ्यादित्यर्थः अस्तिवचन इति । समुदायानुवृत्तौ कचिदेकदेशे प्रवृत्तं कार्यं समुदाये प्रवृत्तं भवतीत्यर्थः ।

---

उ०- इणः षीध्वं० । प्रायेण पाठ इति । स तु न युक्त इत्यर्थः । अतएव 'विभाषेट' इत्यस्य ग्रहणं प्राक्कृतम् । पक्षद्वयोपपत्तिमाह—किमिति । 'गुणः कृतात्मसंस्कार'इति न्याय आद्यपक्षबीजम् । अथेति । महत उपकारस्याऽदर्शनादुभयोरपि प्रधानसम्बन्ध

---

† ८. २. ५७.

**धकारपरत्वे षीध्वम्यनन्तरत्वादिटो विभाषाऽभावः ॥ ३ ॥**

धकारपरत्वे षीध्वम्यनन्तरत्वादिटो विभाषा न प्राप्नोति । लविषीढ्वम्, लविषीध्वमिति । वचनाद्भविष्यति । अस्ति वचने प्रयोजनम् । किम् ? लुलुविढ्वे लुलुविध्वे इति ।

**इण्ग्रहणस्य चाऽविशेषणत्वात् ष्यादिमात्रे ढत्वप्रसङ्गः ॥ ४ ॥**

इण्ग्रहणस्य चाऽविशेषणत्वात् ष्यादिमात्रे ढत्वं प्राप्नोति । पक्षीध्वम्, यक्षीध्वमिति । नैष दोषः । अङ्गादिति वक्ष्यामि । अङ्गग्रहणाच्च दोषः । इह न प्राप्नोति—उपदिदीयिध्वे उपदिदीयिढ्वे* । यो ह्यत्राऽङ्गाऽन्त्य इण् न तस्मादुत्तर इट् । यस्माच्चोत्तर इड् नाऽसावङ्गान्त्य इणिति ।

प्र०—धकारपरत्वे इति । 'इटः परस्य धकारस्ये'ति व्याख्याने षीशब्देन व्यवधानात् पाक्षिकढत्वाऽप्रसङ्गः । वचनादिति । षीध्वमोऽनुवृत्तौ येन नाऽव्यवधानमाश्रीयत इत्यर्थः । 'अस्ति वचने प्रयोजनं, किं लुलुविढ्वे लुलुविध्वे' इत्यस्याऽनन्तर' 'मिण्ग्रहणस्ये'ति—युक्तः पाठः । क्वचित्तु 'नैष दोषः इण उत्तरस्ये' त्यादि पठ्यते, यदयुक्तम् ग्रन्थसङ्गत्यभावात् । इण्ग्रहणेन यदा धकारो विशेष्यते न तु प्रत्ययस्तदा षीध्वमो धकार इणः परो न भवति, षीशब्देन व्यवधानात् ईकारेण षीशब्दावयवेन व्यभिचाराऽभावाद्धकारस्य विशेषणाऽयोगः । अङ्गादिति । वक्ष्यामीति । 'इणन्तादङ्गादुत्तरस्य धकारस्य षीध्वमोऽवयवस्य ढत्वं भवती'त्यर्थः । तत्र 'येन नाव्यवधान'मिति 'च्योषीढ्व'मित्यादौ ढत्वं भवति, 'पक्षीध्व'मित्यादौ त्वङ्गस्याऽनिणन्तत्वाड्ढत्वाऽभावः । उपदिदीयिढ्वे इति । युटः

उ०—एव न्याय्य इति भावः । लिङ्ग्रहणानुवृत्तीति । इदमपि षीध्वमुपलक्षणं बोध्यम् । क्वचिदेकदेश इति । लुङि सिच इड्विधानेन पौर्वापर्यं युक्तमित्यर्थः । षीशब्देनेति । लुङ्लिटोस्त्वव्यवधानाड्ढत्वं प्रवर्तते इति भावः । सङ्गत्यभावादिति । षीध्वमि ढत्वाऽप्राप्तौ चोदितायां तत्परिहारत्वेनाऽयं ग्रन्थो न सङ्गत इति भाव । इण्ग्रहणेनेति । यदि 'विभाषेट'इत्यत्रेड्ग्रहणे न ध्वो विशेष्यते तदा 'इणः' षीध्वमित्यत्रेण्ग्रहणेनापि ध एव विशेष्येत, तुल्यप्रस्थानत्वात्, ततश्च षीध्वमि दोष इत्यर्थः । ननु षीध्वंशब्दावयवेकारमादाय इणः परत्वमस्त्येवेत्यत आह—ईकारेणेति । एवञ्च षीध्वमि इण इत्यस्य धकाराऽविशेषणत्वेन सर्वत्र षीध्वमो धस्य ढत्वप्रसङ्ग इति भावः । तदुक्तं—भाष्ये ष्यादिमात्रे इति । युटा व्यवधानादिति । समुदायभक्तो युट् तमेव न व्यवदध्यात् इटं तु व्यवदधात्येवेति

* १, ४, ६१.

यथेच्छसि तथाऽस्तु । अस्तु तावत्प्रत्ययविशेषणम् । ननु चोक्तं—'तत्र प्रत्ययपरत्वे इटो लिटि ढत्वं परादित्वात्—लुलुविढ्वे, लुलुविध्व' इति । वचनाद्भविष्यति । ननु चोक्तमस्ति वचने प्रयोजम् । किम् ? अलविढ्वम्, अलविध्व'मिति । यदेतस्मिन् योगे† लिड्ग्रहणं तदनवकाशं तस्याऽनवकाशत्वाद्वचनाद्भविष्यति ।

अथवा पुनरस्तु—धकारविशेषणमिति । ननु चोक्तं 'धकारविशेषणत्वे षीध्वम्यनन्तरत्वादिटो विभाषाऽभावो लविषीढ्वं लविषीध्व'मिति । वचनाद्भविष्यति । ननु चोक्त'मस्ति वचने प्रयोजनम्, किम् ? लुलुविढ्वेलु लुविध्व इति । यदेतस्मिन् योगे षीध्वंग्रहणं तदनवकाशं, तस्याऽनवकाशत्वाद्वचनाद्भविष्यति । यदप्युच्यते—'इण्ग्रहणस्य चाऽविशेषणत्वात् ष्यादिमात्रे ढत्वप्रसङ्ग' इति । अङ्गादिति वक्ष्यामि । ननु चोक्त'मङ्गग्रहणाच्च दोष' इति । पूर्वस्मिन् योगे यदङ्गग्रहणं तदुत्तरत्र निवृत्तम् । अथवा पूर्वस्मिन् योगे इण्ग्रहणं प्रत्ययविशेषणमुत्तरत्र धकारविशेषणम् ।

## अग्नेः स्तुत्स्तोमसोमाः ॥ ८ । ३ । ८२ ॥

### अग्नेर्दीर्घात्सोमस्य ॥ १ ॥

अग्नेर्दीर्घात्सोमस्येति वक्तव्यम् । अग्नीषोमौ‡ ।

### इतरथा ह्यनिष्टप्रसङ्गः ॥ २ ॥

प्र०–परादित्वादिणन्तादङ्गात्पर इण्न भवति, युट व्यवधानात् । यदेतस्मिन्निति । सर्वेषामवयवानामनुवर्तनसामर्थ्यात्कार्ययोग इति भावः । पूर्वस्मिन्निति । अङ्गग्रहणाऽननुवृत्तौ युट एवेण उत्तर इडिति ढत्वविकल्पः सिध्यति । अथ वेति । 'इणः परो यो धकार इटश्च तस्य षीध्वंलुङ्लिटां संबन्धिनो विभाषा मूर्द्धन्य' इत्यर्थः । तत्र 'येन नाव्यवधान'मिति षीध्वमि षीशब्देन व्यवधानमाश्रीयते, उपदिदीयिढ्व इत्यत्र यकारादेवेणः परो धकार इति सिद्धो ढत्वविकल्पः ।

अग्नेः स्तुत्स्तोमसोमाः । अग्नेर्दीर्घादिति । देवताद्वन्द्वे षत्वं भवतीत्यर्थः ।

उ०–भाष्यः । एवञ्च 'विभाषेट' इत्यत्र दोष इति तात्पर्यम् । सर्वेषामिति । अनुवृत्तिसामर्थ्यात् स्वावयवेनाऽपि पौर्वापर्यमाश्रीयते इत्यर्थः । युट एवेति । अत्र पक्षे 'इण उत्तरो य इट् ततः परस्य धकारस्य षीध्यादिसम्बन्धिनो मूर्धन्य' इत्यर्थः । इणः परो यो धकार इटश्चेति । तत्रेटोऽनन्तरम्, इणस्त्विटा व्यवहित इति सामर्थ्यात्सिद्ध्यतीत्यर्थः । षीध्वमि इटोऽप्यनन्तरो नास्तीत्यनुवृत्तिसामर्थ्यायेन नाव्यवधानमाश्रीयत इत्याह—तत्रेति ।

अग्नेः स्तुत्स्तो० । देवताद्वन्द्व इति । 'ईदग्नेः सोमे'ति तत्रैव ईकारविधानादिति

† ८ . ३ . ७९. ‡ ६. ३. २७.

इतरथा ह्यनिष्टं प्रसज्येत अग्निसोमौ माणवकाविति ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । 'गौणमुख्ययोर्मुख्ये सम्प्रतिपत्तिः' । तद्यथा—'गौरनुबन्ध्योऽजोऽग्नीषोमीय' इति न वाहीकोऽनुबध्यते । कथं तर्हि वाहीके वृद्ध्यात्वे भवतो*—गौस्तिष्ठति गामानयेति ? अर्थाश्रय एतदेवं भवति । यद्धि शब्दाश्रयं शब्दमात्रे तद्भवति । शब्दाश्रये च वृद्ध्यात्वे ।

प्र०–गौणमुख्ययोरिति । लौकिक एवाऽयं न्यायः शास्त्रे आश्रीयते 'स्वं रूपं शब्दस्ये'ति रूपग्रहणादर्थवद् रूपमाश्रीयते । स चार्थो मुख्य एव गृह्यते न तु गौणः । तत्र प्रसिद्ध्यप्रसिद्धिभ्यां मुख्यगौणव्यवस्थेति माणवके संज्ञात्वेन विनियुक्तावग्निसोमशब्दौ गौणार्थाविति षत्वाऽभावः । शब्दाश्रये चेति । प्रातिपदिकस्य वृद्ध्यात्वे, प्रातिपदिकन्तु न लौकिकेनार्थेनाऽर्थवत्, किं त्वन्वयव्यतिरेकाभ्यां कल्पिताभ्यां कल्पितेन । तस्यां चावस्थायां लौकिकार्थत्वाऽभावाद् गौणमुख्याभावाद्रूपमात्राश्रयं कार्यं प्रवर्तते । तस्मिन्प्रवृत्ते मुख्येऽर्थे गौणे वाऽर्थे प्रयोगः । अथ वा शब्दो न कदाचित्स्वार्थपरित्यागेनाऽर्थान्तरे प्रवर्तते, अर्थस्त्वर्थान्तरे समारोपितो यदा शब्दप्रवृत्तिनिमित्तं भवति तदा गौणव्यवहारः । तत्र प्रातिपदिकं स्वार्थे एव वर्तमानं वृद्ध्यात्वे

उ०–भावः । भाष्ये—अग्निसोमाविति । तन्नामानावित्यर्थः । यद्वाऽयं माणवकोऽग्निरयं सोम इति केनचिदुक्ते तयोर्द्वन्द्वप्रयोगेण किंचित्कार्यं बोधयितुं यदा 'अग्निसोमौ भोजये'ति प्रयुज्यते तदेदमुदाहरणम् । रूपग्रहणादिति । 'स्व'मित्येवान्तरङ्गत्वादिहेतुभी रूपपरिग्रहे सिद्धे रूपग्रहणं रूपवदर्थपरिग्रहार्थम् । स चार्थ इति । शीघ्रोपस्थितिकत्वादित्यर्थः । ननु यदि सादृश्यादग्निषोमशब्दस्यान्यत्र वृत्तिस्तदान्तरङ्गत्वात्स्वार्थमादाय षत्वप्रवृत्तिरस्त्येव । संज्ञाशब्दयोर्द्वन्द्वे तु कथं गौणत्वमत आह—तत्र प्रसिद्धीति । ननु 'गोत' इत्यादौ गोशब्दादेः प्रातिपदिकस्यान्वयव्यतिरेकाभ्यां कल्पितार्थवत्त्वसत्त्वात् कुतो न गौणमुख्यन्यायावतार इत्यत आह—प्रातिपदिकस्येति । तस्याञ्चेति । शब्दान्तरसन्निधानाद्धि गौणार्थप्रतिपत्तिः । न च तत्प्रातिपदिकस्य, केवलस्य लोकेऽप्रयोगादिति भावः । गौणमुख्यत्वं लोकव्यवहारगम्यमिति लौककाऽर्थनिष्ठमेव तत्, नत्वन्वयव्यतिरेककल्पितार्थनिष्ठमिति तात्पर्यम् । वस्तुतस्त्वेवं सति 'महद्भूत'इत्यादिघटकमहदादीनामपि शास्त्रीयप्रक्रियायां कल्पितैवार्थवत्तेति तत्रापिन्यायाऽप्रवृत्त्यापत्तिः । तस्मात्कल्पितार्थवत्त्वमादायाऽर्थवत्परिभाषाया यथा प्रकृतिप्रत्ययविषये प्रवृत्तिस्तथा कल्पितगौणमुख्यत्वमादाय गौणमुख्यन्यायस्याऽपि प्रवृत्तिरावश्यकीति चिन्त्यमेतत् । गामित्यादौ यथात्वप्रवृत्तिस्तथा ओत्सूत्रे निरूपितम् । इत एवाऽस्वरसात्—'गोत्वादियोगो वाहीके निमित्तात्कैश्चिदिष्यते । अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे

* ७. २. ९०; ६. १. ९३.

## मातुःपितुर्भ्यामन्यतरस्याम् ॥ ८ । ३ । ८५ ॥

सान्ताभ्यां चेति वक्तव्यम्* । इहापि यथा स्यात्—मातुःष्वसा, मातुःस्वसा । पितुःष्वसा, पितुःस्वसेति ।

**मातुः पितुरिति सान्तग्रहणानर्थक्यमेकदेशविकृतस्यानन्यत्वात् ॥१॥**

मातुः पितुरिति सान्तग्रहणमनर्थकम् । किं कारणम् ? 'एकदेशविकृतस्यानन्यत्वात्' । 'एकदेशविकृतमनन्यवद्भवती'ति सान्तस्यापि भविष्यति ।

## उपसर्गप्रादुर्भ्यामस्तिर्यच्परः ॥ ८ । ३ । ८७ ॥

अस्तिग्रहणं किमर्थम् ? इह मा भूत्—अनुसृतम्, विसृतमिति । नैतदस्ति प्रयोजनम् । यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो न चैतं सकारं प्रति

---

प्र०—प्रतिपद्यते, पश्चात्तु पदार्थान्तरारोपितस्वार्थस्य गौणत्वमिति पदाश्रयेष्वेव कार्येषु गौणमुख्यव्यवस्थाश्रयणम् ।

मातुः० । सान्ताभ्यामिति । रेफान्तयोर्निर्देशान्न प्राप्नोति । एकदेशविकृतस्येति । । स्वसृशब्दे परतो नास्ति रेफस्य श्रवणं, 'वा शरी'ति पक्षे विसर्जनीयस्य विसर्जनीयविधानात्, पक्षे 'विसर्जनीयस्य स' इति सकारविधानात् । तस्माद्रेफनिर्देशस्तद्विकारप्रतिपत्त्यर्थः ।

उपसर्ग० । अस्तिग्रहणमिति । अस्तिसकार एवाऽकारे लुप्ते क्रियावाचित्वा-

---

उ०—व्यवस्थित'इति रीत्या प्रातिपदिककार्येषु तन्न्यायाऽप्रवृत्तिं दर्शयति—अथवेति । न कदाचिदिति । शब्दार्थसम्बन्धाऽनित्यत्वप्रसङ्गादिति भावः । पदान्तरारोपितेति । पदान्तरसन्निधानेनाऽऽरोपितस्वार्थस्येत्यर्थः । 'पदार्थान्तरे'ति पाठे पदार्थान्तर आरोपितस्वार्थस्येत्यर्थः । स्वार्थः—स्वप्रवृत्तिनिमित्तम् ।

मातुःपितुर्भ्यां । रेफान्तयोरिति । उत्तरपदे रेफान्तत्वं स्पष्टं पूर्वपदेऽपि तत्साहचर्यात्तथैव, विसर्गस्तु लाक्षणिकः । तत्र रेफान्तस्य स्वसृशब्दे परे क्वाप्यप्रयोगात्सामर्थ्येन साक्षात्स्थानिविकारोपलक्षणत्वेन विसर्गान्त एव स्यात्, न तु विसर्गस्थानिकसान्त इति वार्तिकारम्भ इति भावः । ननु रेफान्ताभ्यां परस्य षत्वे सम्भवत्येकदेशविकृतन्यायाश्रयेण सान्तग्रहणं व्यर्थमत आह—स्वसृशब्द इति । एवञ्च उभयत्राप्येकदेशविकृतन्यायेनैव सूत्रप्राप्तिरिति भावः । भाष्ये—सान्तस्यापीति । अपिना विसर्गान्तम्' ।

उपसर्गप्रा० । अस्ति सकार एवेति । सकारस्य प्रयुक्तत्वात्तदर्थान्वयिनोरेवोपसर्ग-

---

* ८. ३. ३६; ३४.

क्रियायोगः । इहापि तर्हि न प्राप्नोति—अभिषन्ति, विषन्तीति । न ह्यस्तिः क्रियावचनः । कः पुनराह 'नाऽस्तिः क्रियावचन' इति । क्रियावचनोऽस्तिः । अतश्च क्रियावचनः—व्यत्यनुषते 'कर्तरि कर्मव्यतिहारे' [ १. ३. १४ ] इत्यनेनात्मनेपदं भवति । कर्मव्यतिहारश्च कः ? क्रियाव्यतिहारः ।

प्रादुःशब्दात्तर्हि मा भूत् । प्रादुःशब्दश्च नियतविषयः कृभ्वस्तियोग एव वर्तते । उपसर्गात्तर्हि स्यतेर्मा भूदिति । इष्यते उपसर्गात्स्यतेः षत्वम् । अतश्चेष्यत एवं ह्याह—'उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम् [ ८. ३. ६५ ] इति । प्रादुःशब्दात्तर्हि स्यतेर्मा भूदिति । प्रादुःशब्दश्च नियतविषयः कृभ्वस्तियोग एव वर्तते । इदं तर्हि प्रयोजनमिह मा भूत्—अनुसुतेरपत्यम्—अनुसूः† अनुस्वोऽपत्यमानुसेयः‡ ।

**सुविनिर्दुर्भ्यः सुपिसूतिसमाः ॥ ८ । ३ । ८८ ॥**

किमर्थं स्वपेः सुपिभूतस्य ग्रहणं क्रियते ?

**सुपः षत्वं स्वपेर्मा भूत्**

सुपेः षत्वमुच्यते तत्स्वपेर्मा भूदिति । सुस्वप्नः, विस्वप्नगिति ।

**विसुष्वापेति केन न ।**

विसुष्वापेत्यत्र+ कस्मान्न भवति ?

प्र०—दुपसर्गप्रादुर्भ्यां परः संभवति नान्य इति प्रश्नः । न ह्यस्तिरिति । परिस्पन्दनरूपस्यैवाऽर्थस्य क्रियात्वादिति भावः । क्रियावचन इति । न परिस्पन्द एवैकः क्रियेति भावः । 'कर्मस्थभावकानां कर्मस्थक्रियाणा'मित्यत्र तु भावक्रिययोर्भेदेनोपादानात्परिस्पन्दलक्षणविशिष्टक्रियावृत्तिः क्रियाशब्दः, 'यत्क्रियायुक्ता' इत्यादौ तु क्रियामात्रवृत्तिरित्यविरोधः । व्यत्यनुषत इति । व्यत्यनुभवन्त इत्यर्थः । प्रादुःशब्दश्चेति । केषां चिच्छब्दानां नियतविषयत्वदर्शनात् । अनुसूतेरिति । अनुसूत इत्यनुसूः । 'सत्सूद्विषे'ति क्विप्, 'चतुष्पाद्भ्यो ढ'ञिति ढञ्, 'ढे लोपोऽकद्र्वा' इत्युकारलोपे कृते सकारमात्रं क्रियावाचीति षत्वप्रसङ्गः ।

सुविनिर्दु० । विस्वप्नगिति । 'स्वपितृषोर्नजि'ङिति नजिङ्प्रत्ययः ताच्छीलि-

उ०—प्रादुसोर्ग्रहणमिति भावः । न परिस्पन्द एवेति । किन्तु धात्वर्थमात्रमिति भावः । भूवादिसूत्रे विस्तरेणैतत्प्रतिपादितम् । व्यत्यनुभवन्त इति । परस्परमनुभवन्त इत्यर्थः । भाष्ये—प्रादुःशब्दात्तर्हीति । 'प्रादुःसत'मित्यादाविति भावः । नियतविषयत्वेति । यथोक्तं भाष्ये—'समाने रक्ते वर्णे गौर्लोहितोऽश्वः शोण' इत्यादि ।

सुविनिर्दुर्भ्यः ० । ननु ताच्छीलिकानां रूढिशब्दत्वेन क्रियाप्रवृत्तिनिमित्तत्वाऽभावात्

† ३. २. ६१. ‡ ४. १. १३५; ६. ४. १४७. + ६. १. १७.

**हलादिशेषान्न सुपिः**

हलादिशेषे कृते नैष सुपिर्भवति। इदमिह संप्रधार्यम्, हलादिशेषः क्रियतां संप्रसारणमिति; किमत्र कर्तव्यम्? परत्वाद्धलादिः शेषः।

**इष्टं पूर्वं प्रसारणम् ॥ १ ॥**

इष्यते हलादिशेषात्पूर्वं संप्रसारणम्। आतश्चेष्यत एवं ह्याह—अभ्यास-सम्प्रसारणं हलादिशेषाद्विप्रतिषेधेने'ति‡। एवं तर्हि 'स्थादिष्वभ्यासेन चाभ्या-सस्ये'त्येतस्मान्नियमान्न भविष्यति+।

**स्थादीनां नियमो नात्र प्राक्सितादुत्तरः सुपिः।**

'प्राक्सितसंशब्दनात्स नियमः×, उत्तरश्च सुपिः पठ्यते। एवं तर्ह्यर्थवद्-ग्रहणेनानर्थकस्येत्येवमेतस्य न भविष्यति।

**अनर्थके विषुषुपुः**

यद्यर्थवतो ग्रहणं 'विषुषुपु'रिति न सिध्यति। नैष दोषः। कथम्?

**सुपिभूतो द्विरुच्यते ॥ २ ॥**

प्र०–केष्वपि क्वचिदस्ति क्रियाणामुपसर्गयोगः—'आगामुक'मित्यादौ। साधुकारिणि वा प्रत्ययविधानात्। विसुष्वापेति। 'लिट्यभ्यासस्योभयेषा'मिति संप्रसारणे कृतेऽकृत एव हलादिः शेषे धातूपसर्गाश्रयस्य कार्यस्याऽन्तरङ्गत्वात्षत्वप्रसङ्गः। कृते वा हलादिः शेषे एकदेशविकृतस्याऽनन्यत्वात्। हलादिः शेषादिति। संप्रसारणात्प्रागेव परत्वाद्ध-लादिशेषः। इष्टं पूर्वमिति। 'विव्याधे'त्यादिसिद्धये। स्थादिष्विति। स्थादीनामेवा-भ्यासस्य सकारस्य षत्वं न धात्वन्तरस्येति नियमादत्र षत्वाऽभावः। स्थादीनामिति। स्थादीनां संबन्धी नियमो नाऽत्र प्रवर्तते। यस्मात्स्थादिसूत्रे प्राक्सितादिति वर्तते, तेन 'प्राक्सिताद्ये धातवस्तेषां स्थादिष्वेवाभ्यासस्य षत्व'मित्येवं नियमेन सुनोतिसुवतिस्यतय एव निवर्त्यन्ते, सुपिस्तु सितादुत्तर इति न निवर्त्यते। अर्थवद्ग्रहण इति। स्थाने

उ०–कथमुपसर्गयोगोऽत आह—ताच्छीलिकेष्विति। 'उपसर्गा'दिति अत्रापि सम्बध्यत इति कैयटस्वरसः। 'पूर्वं धातुः साधनेने'ति पक्षे। त्रिपाद्यामन्तरङ्गपरिभाषाया अप्रवृत्तिपक्षे त्वाह—कृते वेति। प्रागेव परत्वादिति। अभ्यासविकारेषु बाधकानामबाधकत्वस्य न समावेशे तात्पर्यम्। स च न्यायक्रमेणैवेति भावः। एवं च यकारस्य सम्प्रसारणेऽपि सुपिरूपाऽभाव इति तात्पर्यम्। विव्याधेति। परत्वाद्धलादिः शेषे यकारधकारयोर्निवृत्तौ यस्य सम्प्रसारणेऽपि रूपाऽसिद्धेति भावः। तस्मात्पूर्वविप्रतिषेधेनोभयेषांग्रहणेन वा पूर्वं सम्प्रसारणं, पश्चाद्धलादिः शेष एष्टव्यः। ततश्च सुपिरूपत्वात्षत्वप्रसङ्गः। स्यतय एवेति। स्तौतिण्योरपि त्वयो 'शर्पूर्वाः' इति खयः शेषे षत्वप्राप्तेरेवाऽभावादिति भावः। अवयवयो-

† ७. ४. ६०. ‡ ६. १. १७.* + ८. ३. ६४. × ८. ३. ७०.

सुपिभूतस्य द्विर्वचनम्[††] ।

सुपेः षत्वं स्वपेर्मा भूद्विसुष्वापेति केन न ।
हलादिःशेषान्न सुपिरिष्टं पूर्वं प्रसारणम् ॥ १ ॥
स्थादीनां नियमो नाऽत्र प्राक्सितादुत्तरः सुपिः ।
अनर्थके विषुषुपुः सुपिभूतो द्विरुच्यते ॥ २ ॥

**कपिष्ठलो गोत्रे ॥ ८ । ३ । ९१ ॥**

**कपिष्ठलो गोत्रप्रकृतौ ॥ १ ॥**

कपिष्ठलो गोत्रप्रकृताविति वक्तव्यम् । 'गोत्र' इत्युच्यमाने इहैव स्यात्—

---

प्र०-द्विर्वचने समुदाय एवाऽर्थवानवयवयोश्चानर्थक्यं, द्विःप्रयोगेऽप्यर्थस्यानावर्त्तनाद्-द्वाभ्यामर्थः प्रत्याय्यत इत्येकस्यानर्थक्यम् ।

सुपिभूत इति । परत्वात्संप्रसारणे कृते सुपेर्द्विर्वचनम् । तत्र स्थानिवत्त्वात्सु-ब्ग्रहणेन समुदायस्य ग्रहणात्सिद्धं षत्वम् । द्विःप्रयोगेऽपि स एव सुपिद्विरुक्त इति समुदायाश्रयमेव षत्वम् । 'विसुष्वापे'त्यत्र तु स्वपेर्द्विर्वचनं तत्र स्थानिवत्त्वात् सुपेरिति षत्वाऽभावः । केचित्तु 'षुपिभूतो द्विरुच्यत' इति पठन्ति । पूर्वत्रासिद्धीयमद्विर्वचन इति कृतषत्वस्य द्विर्वचनमिति तेषां भावः ।

कपिष्ठलो० । कपिष्ठल इति । गोत्रमिह पारिभाषिकं पौत्रप्रभृति गृह्यते, तेन यत्र गोत्राभिधानं तत्र कपेः परस्य 'स्थल'सकारस्य षत्वेन भाव्यं न तु परमप्रकृतौ, नापि यूनीति वार्त्तिकारम्भः । यस्माद्गोत्रं प्रक्रियते—प्रवर्तते गोत्रस्य वा या प्रकृतिः—

---

उ०-आनर्थक्यमिति । उत्तरखण्डस्याऽर्थवत्त्वधातुत्वादेरेकाचो द्वे प्रथमस्येति ... लिङ्गीत्यादिसूत्रस्य-भाष्यादावश्यकत्वेन द्विवचनमयुक्तम् । 'अभ्यासस्यानर्थक्य'मित्येव तु भाष्याशयः । यथा चैतत्तथा 'एकाचो द्वे'इत्यत्र निरूपितम् । परत्वादिति । 'वचिस्वपी'ति यत्सम्प्रसारणं तस्य द्वित्वात्परत्वात् । लिट्यभ्यासस्येति त्वभ्यासस्य विधानादृद्वित्वोत्तरमेव । तद्वदति—विसु-ष्वापेत्यत्रत्विति । समुदायाश्रयमेवेति । सुपेरेवायं द्विः प्रयोग इति पर्यालोचनया समुदाये सुप्त्वबुद्धिरित्यर्थः । इदमपि चिन्त्यं, समुदाये तत्त्वस्य दुरुपपादत्वात् । अन्यथैच्छिकद्विः-प्रयोगेऽपचपचदित्यादेः साधुत्वापत्तिस्तुल्यन्यायादिति । अतएव पाठान्तरं दर्शयति—केचित्त्विति । परे तु स्वादिभ्यः परेषां सुप्यादीनां सस्य षत्वमिति सूत्रार्थः । तत्रावयवत्ववृत्त-रसम्बन्धयवयवत्वमपि षष्ठ्यर्थ इति तत्सिद्धिः । अतएव 'स्थादिष्वि'त्यस्य नियमार्थत्वमुप-पद्यते । यद्वाऽत्र प्रकरणे तत्तद्धातोस्तत्समानाकारस्य च ग्रहणमिति न दोष इत्याहुः ।

कपिष्ठलो गोत्रे । पारिभाषिकमिति । कृत्रिमाऽकृत्रिमन्यायादिति भावः । 'अप-त्याधिकारादन्यत्र लौकिकं गोत्र'मिति तु ज्ञापकसिद्धस्याऽसार्वत्रिकत्वात्सार्थयते, अस्य ज्ञापकसूत्रदृष्ट्याऽसिद्धत्वाद्वेति बोध्यम् । गोत्राभिधानमिति । गोत्रप्रत्यय इत्यर्थः । प्रकृतिग्रहणे सर्वत्र सिद्धिं दर्शयति—यस्मादिति । 'अकर्त्तरि कारके'इत्यपादाने क्तिन् ।

---

†† ६. १. १५; ८.

कापिष्ठलिः । इह न स्यात्—कपिष्ठलः कापिष्ठलायनः । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । नैवं विज्ञायते 'कपिष्ठल इति गोत्रे निपात्यत' इति । कथं तर्हि ? 'गोत्रे यः कपिष्ठलशब्दस्तस्य षत्वं निपात्यते यत्र वा तत्र वे'ति ।

**अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्कङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ॥ ८ । ३ । ९७ ॥**

'स्थ' इति किमिदं धातुग्रहणमाहो स्विद्रूपग्रहणम् ? किं चातः ? यदि धातुग्रहणं गोस्थान'मित्यत्र प्राप्नोति । अथ रूपग्रहणं सव्येष्ठाः परमेष्ठी सव्येष्ठा सारथिरित्यत्र न प्राप्नोति । यथेच्छसि तथास्तु । अस्तु तावद्धातुग्रहणम् । कथं गोस्थानमिति ? सवनादिषु* पाठः करिष्यते ।

अथ वा पुनरस्तु रूपग्रहणम् । कथं सव्येष्ठाः परमेष्ठी सव्येष्ठा सारथिरिति ?

**स्थःस्थास्थिन्स्थॄणामिति वक्तव्यम् ।**

---

प्र०–कारणं तदभिधाने षत्वं तेन सर्वमिष्टं सिद्धयति । नैवं विज्ञायत इति । न गोत्रं षत्वस्य विषयत्वेन निर्दिष्टं, किं तर्हि, दर्शनस्य गोत्रे यो दृष्टः कपिष्ठलशब्दः स साधुर्भवतीति । तेन कपिस्थानवाचिनः षत्वं न भवतीत्युक्तं भवति । अथ वा प्रवराध्यायपठितं गोत्रं गृह्यत इति षत्वविषयत्वेनापि गोत्रस्याश्रयणेन दोषः ।

अम्बा० । किमिदमिति । यदि स्थशब्दः प्रथमया निर्दिश्यते, 'स्थशब्दः सकारस्य मूर्द्धन्यं प्रतिपद्यत' इति, तदा रूपग्रहणम् । अथ स्थःशब्दः षष्ठ्या निर्दिश्यते ततो धातुग्रहणमिति भावः । सवनादिष्विति । आदिशब्दस्य प्रकारार्थत्वाद् गोस्थानभूमिस्थानादयोऽनिष्यमाणषत्वाः सर्वे सवनादयः । स्थस्थास्थिन्स्थॄणामिति । स्थाशब्दः क्विबन्तः 'ईत्वे वकारप्रतिषेध' इति वचनात्प्रत्ययलक्षणेनेत्वं न भवति । 'स्थि'न्निति-न्प्रत्ययान्तः । 'स्थॄ'शब्द ऋप्रत्ययान्तः ।

---

उ०–कपिस्थानवाचिन इति । यौगिकस्येत्यर्थः । प्रवराध्यायेति । स्वसन्तानस्य व्यपदेशहेतुराद्यः पुरुषो वसिष्ठादिरपि तत्र गोत्रशब्देनोच्यते ।

अम्बाम्बगो० । प्रथमयेति । अत्र पक्षे 'मूर्द्धन्य'इत्यनुवृत्तं द्वितीयया विपरिणम्यते । 'प्रतिपद्यते' इति वाऽऽध्याह्रियत इत्याह—स्थशब्द इति । प्रकारः—सादृश्यम् । तच्च प्रयोगेऽनिष्टषत्वेनेत्याह—अनिष्यमाणषत्वा इति । वचनादिति । भाष्यप्रयोगादेवेत्यन्ये । अत्र पिजेवेत्यन्ये ।

---

* ८. ३. ११०.

**सुषामादिषु च ॥ ८ । ३ । ९८ ॥**

अविहितलक्षणो मूर्द्धन्यः सुषामादिषु द्रष्टव्यः ।

**ह्रस्वात्तादौ तद्धिते ॥ ८ । ३ । १०१ ॥**

**ह्रस्वात्तादौ तिङि प्रतिषेधः ॥ १ ॥**

ह्रस्वात्तादौ तिङि प्रतिषेधो वक्तव्यः । भिन्द्युस्तराम् । छिन्द्युस्तरामिति ।

**स्तुतस्तोमयोश्छन्दसि ॥ ८ । ३ । १०५ ॥**

**स्तुतस्तोमयोश्छन्दस्यनर्थकं वचनं पूर्वपदादिति सिद्धत्वात् ॥ १ ॥**

स्तुतस्तोमयोश्छन्दसि वचनमनर्थकम् ? किं कारणम् ? 'पूर्वपदादिति सिद्धत्वात्' । पूर्वपदात् [ ८. ३. १०६ ] इत्येव सिद्धम् ।

**सनोतेरनः ॥ ८ । ३ । १०८ ॥**

**सनोतेरन इति च ॥ १ ॥**

किम् ? वचनमनर्थकमित्येव । किं कारणम् ? पूर्वपदादिति सिद्धत्वात्* । नियमार्थं तर्हीदं वक्तव्यम्—'सनोतेरनकारस्यैव यथा स्यादिह मा भूत्—गोसनि'मिति ।

**सनोतेरन इति नियमार्थमिति चेत्सवनादिकृतत्वात्सिद्धम् ॥ २ ॥**

सनोतेरन इति नियमार्थमिति चेत्सवनादिषु† पाठः करिष्यते ।

**सन्नर्थं तु ॥ ३ ॥**

सन्नर्थं त्विदं वक्तव्यम् । सिसनिषति । एतदपि नास्ति प्रयोजनम् । 'स्तौतिण्योरेव षण्यभ्यासात्' [ ८. ३. ६१ ] इत्येतस्मान्नियमान्न भविष्यति ।

प्र०- स्तुतस्तो० । पूर्वपदादिति सिद्धत्वादिति । पूर्वं पदं पूर्वपदमिति सामान्येन तत्राश्रीयते न तु समासावयव एवेति वाक्येऽपि षत्वं प्रवर्तते । तदत्र स्तुतस्तोमग्रहणं प्रत्याख्यायते, छन्दोग्रहणं सूत्तरार्थं वक्तव्यमेव ।

सनोतेरनः । सिसनीरिति । एतस्मिंश्च प्रयोजने सति सामर्थ्याऽभावाण्ण्यन्तस्य नियमाऽभावात्सिषाणयिषतीति षत्वेन भाव्यमित्याहुः ।

उ०- सुषामा० । भाष्ये—अविहितलक्षणेति । अविहितो लक्षणेन मूर्द्धन्यो यस्येत्यर्थः । भिन्नपदपाठे—मूर्द्धन्य इत्यर्धभागजन्याम् 'अविहितलक्षण'इत्यस्याऽकृतशास्त्र इत्यर्थः ।

स्तुतस्तोम० । ननु पूर्वपदादित्येतदुत्तरसूत्रे पूर्वपदशब्दस्य समासावयवे रूढत्वात् 'नृभिष्टुतस्ये'ति वाक्ये कथं तेन सिद्धिरत आह—पूर्वपदमिति । सर्वत्र पूर्वपदशब्द एवमेवेत्याहुः ।

सनोतेरनः । अस्य 'गोषा' इति विड्न्तमुदाहरणम् । सवनादिष्विति । एवञ्च

* ८. ३. १०५. † ८. ३. ११०.

णयर्थं तर्हीदं वक्तव्यं—सिसानयिषतीति। कथं पुनरणयन्तस्य प्रतिषेधे णयन्तः शक्यो विज्ञातुम्? सामर्थ्यात्। 'अणयन्तस्य प्रतिषेधवचने प्रयोजनं नास्ती'ति कृत्वा णयन्तो विज्ञास्यते। अथवाऽयमस्त्यणयन्तः सिसनिषतेरप्रत्ययः—सिसनीः।

**न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ॥ ८ । ३ । ११० ॥**

किमर्थं सवनादिष्वश्वसनिशब्दः पठ्यते? 'पूर्वपदात्' [ ८. ३. १०६ ] इति षत्वं प्राप्नोति तद्बाधनार्थम्। नैतदस्ति प्रयोजनम्। इणन्तादिति* तत्राऽनुवर्तते, अनिणन्ताश्चायम्। नैव प्राप्नोति नाऽर्थः प्रतिषेधेन। एवं तर्हि सिद्धे सति यत्सवनादिष्वश्वसनिशब्दं पठति तज्ज्ञापयत्याचार्योऽनिणन्तादपि षत्वं भवती'ति। किमेतस्य ज्ञापने प्रयोजनम्? जलाषाहं माष इत्येतत्सिद्धं भवति†। अथवैकदेशविकृतार्थोऽयमारम्भः अश्वषा इति‡।

**सिचो यङि ॥ ८ । ३ । ११२ ॥**

उपसर्गादिति+ या प्राप्तिः—भवितव्यं तस्याः प्रतिषेधेनोताहो न? न भवितव्यम्। किं कारणम्? उपसर्गात् षत्वं प्रतिषेधविषय आरभ्यते, तद्यथैव पदादिलक्षणं× प्रतिषेधं बाधते एवं 'सिचो यङी'त्येतमपि बाधते। न बाधते। किं कारणम्? येन नाऽप्राप्ते तस्य बाधनं भवति, न चाऽप्राप्ते पदादिलक्षणे प्रतिषेधे उपसर्गात् षत्वमारभ्यते, 'सिचो यङी'त्येतस्मिन् पुनः प्राप्ते चाऽप्राप्ते च। अथवा 'पुरस्तादपवादा अनन्तरान्वि-

प्र०— न रपर०। माप इति। मानं माः, मां सनोतीति। जनसनेति विट्। विड्वनोरित्यात्वम्। विभक्तौ ङसि परत 'आतो धातो'रित्याल्लोपः। एकदेशविकृतार्थ इति। अश्वशब्दविषयमेव ज्ञापकम्—अनिणन्तादप्यश्वशब्दात्षत्वं भवतीति मापो जलपाहमित्यत्र तु सुषामादित्वात्षत्वसिद्धिः।

सिचो यङि। तस्मादभिसेसिच्यत इति। ननु 'पूर्वत्राऽसिद्ध'मिति प्रति-

उ०—'गोपणि'मिति सषत्वपाठो वेदे प्रामादिकः। 'सर्वविधीनां छन्दसि वैकल्पिकत्वात्सोऽपि साधु'रिति कश्चित्। इत्याहुरिति। अत्राऽरुचिबीजन्तु प्रकृतिभागस्य सनोतित्वाऽनपायः। सवनादिपाठो वा।

न रपर०। माप इत्यत्र सनोतेरन इति षत्वप्राप्तिं दर्शयति—मानं मा इति। जलाषाहे पूर्वपदादिति षत्वम्। पूर्वपरिहारानुसारस्य विशेषं दर्शयति—अश्वेति।

सिचो यङि। प्रकरणे इति। वस्तुतस्त्वेयं स्थादेशप्रत्यययोरित्यस्यैवेदं बाधकं

* ८. ३. ७८. † ८. ३. १०९; १०८ ‡ ८. ३. १०८. + ८. ३. ६५. × ८. ३. १११.

धीन् बाधन्त' इत्येवमुपसर्गात्षत्वं पदादिलक्षणं प्रतिषेधं बाधिष्यते। 'सिचो यङी'त्येतन्न बाधिष्यते। तस्मादभिसेसिच्यते इति भवितव्यम्।

**सोढः॥ ८। ३। ११५॥**

किमर्थं सहिः सोढभूतो गृह्यते? यत्रास्यैतद्रूपं तत्र यथा स्यादिह मा भूत्परिषहत इति*।

**स्तम्भुसिवुसहां चङि॥ ८। ३। ११६॥**

**स्तम्भुसिवुहां चङ्युपसर्गात्॥ १॥**

स्तम्भुसिवुसहां चङ्युपसर्गादिति वक्तव्यम्। किं प्रयोजनम्? उपसर्गाद्या प्राप्तिस्तस्याः प्रतिषेधो यथा स्यादभ्यासाद्या प्राप्तिस्तस्याः प्रतिषेधो मा भूदिति। पर्यसीषहत्।

**सुनोतेः स्यसनोः॥ ८। ३। ११७॥**

सनि किमुदाहरणम्? सुसूषति। नैतदस्ति प्रयोजनम्। 'स्तौतिण्योरेव षण्यभ्यासा'दित्येतस्मान्नियमान्न भविष्यति†। इदं तर्हि—अभिसुसूषति। एतदपि नास्ति प्रयोजनम्। 'स्थादिष्वभ्यासेन चाऽभ्यासस्य' [८. ३. ६४] इत्येतस्मान्नियमान्न भविष्यति‡। इदं तर्हि प्रयोजनम्—अभिसुसूषतेरप्रत्ययः—अभिसुसूः।

**सदेः परस्य लिटि॥ ८। ३। ११८॥**

**सदो लिटि प्रतिषेधे स्वञ्जेरुपसंख्यानम्॥ १॥**

सदो लिटि प्रतिषेधे स्वञ्जेरुपसंख्यानं कर्तव्यम्। परिषस्वजे।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्येऽष्टमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम्। पादश्च समाप्तः।

---

प्र०—षेधस्यासिद्धत्वादुपसर्गादिति षत्वं प्राप्नोति। उच्यते। 'प्रकरणे प्रकरणमसिद्धं न तु योगे योगः'। विधिप्रतिषेधयोश्चैकं प्रकरणमिति सिद्धमिष्टम्।

इत्युपाध्याय जैयटपुत्रकैयटकृते भाष्यप्रदीपेऽष्टमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम्। पादश्च तृतीयः समाप्तः।

---

उ०—स्यात्। एवञ्च स्पष्टप्रतिपत्तये 'उपसर्गा'दित्यतः प्रागेव निषेधप्रकरणे कर्तव्ये दत्तत्र करणेन, 'निषेधाश्च बलीयांस' इति न्यायेन चाऽस्य निषेधस्य बलवत्त्वान्न दोषः।

इति श्रीनागोजीभट्टकृते भाष्यप्रदीपोद्द्योतेऽष्टमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम्। पादश्च समाप्तः।

---

* ८. ३. ७०. † ८. ३. ६१. ‡ ८. ३. ६५.

ण्यर्थं तर्हीदं वक्तव्यं—सिसानयिषतीति। कथं पुनरण्यन्तस्य प्रतिषेधे ण्यन्तः शक्यो विज्ञातुम्? सामर्थ्यात्। 'अण्यन्तस्य प्रतिषेधवचने प्रयोजनं नास्ती'ति कृत्वा ण्यन्तो विज्ञास्यते। अथवाऽयमस्त्यण्यन्तः सिसनिषतेरप्रत्ययः—सिसनीः।

**न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ॥ ८ । ३ । ११० ॥**

किमर्थं सवनादिष्वश्वसनिशब्दः पठ्यते? 'पूर्वपदात्' [ ८. ३. १०६ ] इति षत्वं प्राप्नोति तद्बाधनार्थम्। नैतदस्ति प्रयोजनम्। इणन्तादिति* तत्रानुवर्तते, अनिणन्ताश्चायम्। नैव प्राप्नोति नाऽर्थः प्रतिषेधेन। एवं तर्हि सिद्धे सति यत्सवनादिष्वश्वसनिशब्दं पठति तज्ज्ञापयत्याचार्योऽनिणन्तादपि षत्वं भवती'ति। किमेतस्य ज्ञापने प्रयोजनम्? जलाषाहं माष इत्येतत्सिद्धं भवति†। अथवैकदेशविकृतार्थोऽयमारम्भः अश्वषा इति‡।

**सिचो यङि ॥ ८ । ३ । ११२ ॥**

उपसर्गादिति+ या प्राप्तिः—भवितव्यं तस्याः प्रतिषेधेनोताहो न? न भवितव्यम्। किं कारणम्? उपसर्गात् षत्वं प्रतिषेधविषय आरभ्यते, तद्यथैव पदादिलक्षणं× प्रतिषेधं बाधते एवं 'सिचो यङी'त्येतमपि बाधते। न बाधते। किं कारणम्? येन नाऽप्राप्ते तस्य बाधनं भवति, न चाऽप्राप्ते पदादिलक्षणे प्रतिषेधे उपसर्गात् षत्वमारभ्यते, 'सिचो यङी'त्येतस्मिन् पुनः प्राप्ते चाऽप्राप्ते च। अथवा 'पुरस्तादपवादा अनन्तरान्वि-

प्र०— न रपर०। माप इति। मानं माः, मां सनोतीति। जनसनेति विट्। विड्वनोरित्यात्वम्। विभक्तौ ङसि परत 'आतो धातो'रित्याल्लोपः। एकदेशविकृतार्थ इति। अश्वशब्दविषयमेव ज्ञापकम्—अनिणन्तादप्यश्वशब्दात्षत्वं भवतीति मापो जलपाहमित्यत्र तु सुषामादित्वात्षत्वसिद्धिः।

सिचो यङि। तस्मादभिसेसिच्यत इति। ननु 'पूर्वत्राऽसिद्ध'मिति प्रति-

उ०—'गोपणि'मिति सषत्वपाठो वेदे प्रामादिकः। 'सर्वविधीनां छन्दसि वैकल्पिकत्वात्सोऽपि साधु'रिति कश्चित्। इत्याहुरिति। अत्राऽरुचिबीजन्तु प्रकृतिभागस्य सनोतित्वाऽनपायः। सषनादिपाठो वा।

न रपर०। माप इत्यत्र सनोतेरन इति षत्वप्राप्तिं दर्शयति—मानं मा इति। जलापाहे पूर्वपदादिति षत्वम्। पूर्वपरिहारादुत्तरस्य विशेषं दर्शयति—अश्वेति।

सिचो यङि। प्रकरणे इति। वस्तुतस्त्वेवं स्थ्यादेशप्रत्यययोरित्यर्थमेवेदं बाधकं

* ८. ३. ७८. † ८. ३. १०१; १०८ ‡ ८. ३. १०८. + ८. ३. ६५. × ८. ३. १११.

धीन् बाधन्त' इत्येवमुपसर्गात्षत्वं पदादिलक्षणं प्रतिषेधं बाधिष्यते । 'सिचो यङी'त्येतन्न बाधिष्यते । तस्मादभिसेसिच्यते इति भवितव्यम् ।

**सोढः ॥ ८ । ३ । ११५ ॥**

किमर्थं सहिः सोढभूतो गृह्यते ? यत्रास्यैतद्रूपं तत्र यथा स्यादिह मा भूत्परिषहत इति* ।

**स्तम्भुसिवुसहां चङि ॥ ८ । ३ । ११६ ॥**

**स्तम्भुसिवुहां चङ्युपसर्गात् ॥ १ ॥**

स्तम्भुसिवुसहां चङ्युपसर्गादिति वक्तव्यम् । किं प्रयोजनम् ? उपसर्गाद्या प्राप्तिस्तस्याः प्रतिषेधो यथा स्यादभ्यासाद्या प्राप्तिस्तस्याः प्रतिषेधो मा भूदिति । पर्यसीषहत् ।

**सुनोतेः स्यसनोः ॥ ८ । ३ । ११७ ॥**

सनि किमुदाहरणम् ? सुसूषति । नैतदस्ति प्रयोजनम् । 'स्तौतिण्योरेव षण्यभ्यासा'दित्येतस्मान्नियमान्न भविष्यति† । इदं तर्हि—अभिसुसूषति । एतदपि नास्ति प्रयोजनम् । 'स्थादिष्वभ्यासेन चाऽभ्यासस्य' [८. ३. ६४] इत्येतस्मान्नियमान्न भविष्यति‡ । इदं तर्हि प्रयोजनम्—अभिसुसूषतेरप्रत्ययः—अभिसुसूः ।

**सदेः परस्य लिटि ॥ ८ । ३ । ११८ ॥**

**सदो लिटि प्रतिषेधे स्वञ्जेरुपसंख्यानम् ॥ १ ॥**

सदो लिटि प्रतिषेधे स्वञ्जेरुपसंख्यानं कर्तव्यम् । परिषस्वजे ।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्येऽष्टमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् । पादश्च समाप्तः ।

---

प्र०—षेधस्यासिद्धत्वादुपसर्गादिति षत्वं प्राप्नोति । उच्यते । 'प्रकरणे प्रकरणमसिद्धं न तु योगे योगः' । विधिप्रतिषेधयोश्चैकं प्रकरणमिति सिद्धमिष्टम् ।

इत्युपाध्याय जैयटपुत्रकैयटकृते भाष्यप्रदीपेऽष्टमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् । पादश्च तृतीयः समाप्तः ।

---

उ०—स्यात् । एवञ्च स्पष्टप्रतिपत्तये 'उपसर्गा'दित्यतः प्रागेव निषेधप्रकरणे कर्तव्ये ऽत्रारम्भकरणेन, 'निषेधाश्च बलीयांस' इति न्यायेन षाऽस्य निषेधस्य बलवत्त्वान्न दोषः ।

इति श्रीनागोजीभट्टकृते भाष्यप्रदीपोद्योतेऽष्टमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् । पादश्च समाप्तः ।

---

* ८. ३. ७०. † ८. ३. ६१. ‡ ८. ३. ६५.

# अथ चतुर्थः पादः

## रषाभ्यां नो णः समानपदे ॥ ८ । ४ । १ ॥

### रषाभ्यां णत्वे ऋकारग्रहणम् ॥ १ ॥

रषाभ्यां णत्वे ऋकारग्रहणं कर्तव्यम् । 'रषाभ्यां नो णः समानपदे' 'ऋकाराच्चे'ति वक्तव्यम् । इहापि यथा स्यात्—मातॄणां पितॄणामिति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । योऽसावृकारे रेफस्तदाश्रयं णत्वं भविष्यति । न सिध्यति । किं कारणम् ? न हि वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते ।

### एकदेशे नुडादिषु चोक्तम् ॥ २ ॥

किमुक्तम् ? अग्रहणं चेन्नुड्विधिलादेशविनामेष्वृकारग्रहण'मिति* । तस्माद्

---

प्र०— रषाभ्यां नो णः समानपदे । रषाभ्यामुच्यमानं णत्वं वर्णान्तरान्न प्राप्नोतीति मत्वाह—रषाभ्यामिति । योऽसावृकार इति । येषां दर्शनमर्द्धमात्राकालो रेफ ऋकारेऽस्तीति, तन्मतेन केवलस्याऽप्रयोगादास्तीर्णादिषु वर्णान्तरोपाश्रयाद्रेफाण्णत्वं भवत्येवं मातॄणामित्यादावपि भविष्यति । येषामपि दर्शनं मात्राचतुर्भागो रेफ ऋकार इति, तन्मतेऽपि 'रषाभ्या'मिति रेफो गृह्यमाणोऽणत्वाद्भिन्नकालस्यापि ऋकारस्थस्य ग्राहक इति णत्वं सिध्यति । यत्तूच्यते रेफोष्मणां सवर्णा न सन्तीति, तद्भिन्नाऽऽस्यप्रयत्नवर्णान्तरापेक्षया । अथवा रषाभ्यामिति रेफाकृतिर्निर्दिश्यत इति ऋकारस्थादपि रेफाण्णत्वं सिध्यतीति भावः । न हि वर्णैकदेशा इति । नाऽव्यपवृक्तस्याऽवयवे तद्विधिर्यथा द्रव्ये'ष्वित्युक्तं सन्ध्यक्षरवार्तिके । तथा च 'मांसं न विक्रेतव्य'मिति सत्यपि निषेधे गावो विक्रीयन्ते, तत्र मांसबुद्धेरभावात् । यदप्युक्तम्—अणत्वाद्रेफ ऋकारस्थं रेफं सावर्ण्याद्गृह्णातीति । तदयुक्तम् । नहि ऋकारस्थरेफस्य स्थानप्रयत्नत्वम् । तस्मादसति

---

उ०—रषाभ्यां । न च संसृष्टस्याऽर्द्धमात्रिकस्य रेफस्य सम्भवे कथमृकारस्थस्य ग्रहणं स्यादित्यत आह—येषां दर्शनमिति । केवलस्येति । वर्णान्तरानुपाश्रितस्येत्यर्थः । आस्तीर्णेति । 'यथे'तिशेषः । तद्भिन्नस्येति । रेफातिरिक्तवर्णान्तरं सर्वं रेफेन भिन्नाऽऽस्यप्रयत्नमेवेत्यर्थः । एकदेशस्याऽण्ग्रहणेनाऽग्रहणे ग्राहकसूत्रेऽण्ग्रहणप्रत्याख्याने वा युक्त्यन्तरमाह—अथवेति । ऋकारादेर्नरसिंहवद्वर्णान्तरत्वादवयवे तज्जातिसत्त्वे मानाऽभावाच्च नेदं युक्तम् । 'रश्रुतिर्निर्दिश्यते' इति युक्तं वक्तुम् । नान्यपवृक्तस्येति । अभिन्नबुद्धिविषयस्य समुदायस्य योऽवयवस्तस्मिंस्तद्विधिः—पृथग्भूतवर्णविधिर्न भवतीति वार्तिकार्थः । अथवा 'रेफाकृतिनिर्देशा'दिति

---

* अणुदित्सू० १.

गृह्यन्ते । एवमपि न सिध्यति । किं कारणम् ? 'अननन्तरत्वात्' । यत्त-द्रेफात्परं भक्तेस्तेन व्यवहितत्वान्न प्राप्नोति । 'अड्व्यवाये†' इत्येवं भविष्यति । न सिध्यति । किं कारणम् ? वर्णैकदेशाः के वर्णग्रहणेन गृह्यन्ते ये व्यपवृक्ता अपि वर्णा भवन्ति । यच्चात्र रेफात्परं भक्तेर्न तत्कचिदपि व्यपवृक्तं दृश्यते । एवं तर्हि योगविभागः करिष्यते† 'रषाभ्यां नो णः समानपदे' । ततो 'व्यवाये' । व्यवाये च रषाभ्यां नो णो भवतीति । ततः—'अट्कुप्वाङ्-नुम्भि'रिति । इदमिदानीं किमर्थम् ? नियमार्थम्—'एतैरेवाक्षरसमाम्नायिकै-र्व्यवाये नान्यै'रिति । अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति 'भवति ऋकाराण्णत्व'मिति

प्र०–सावर्ण्ये कुतो ग्राह्यत्वम् । यथा च नरसिंहावयवानां नरत्वसिंहत्वजातियोगाऽभावा-त्पुरुषमृगराजाभ्यामेकाकृतियोगाऽभावः, एवं वर्णग्रहणे वर्णैकदेशयोरपीति भावः । तुडादिषु चोक्तमिति । अग्रहणपक्षे तुडादिषु ऋकारग्रहणं कर्त्तव्यं भवेदिति ग्रहणपक्ष आश्रीयते । इह समुदायस्य कार्येषु व्यापारे अवयवस्य स्वनिमित्ते कार्ये मा भूद्व्यापारः, यथा अग्न इन्द्र इत्यादावेकारोऽयादेशं प्रतिपद्यते न तु तदवयव इकारः सवर्णदीर्घ-त्वम् । इह तु 'मातृणा'मिति समुदायस्य न कस्मिंश्चिद्विधौ निषेधे वा व्यापार इत्यवयवः स्वाश्रयकार्यं प्रति कस्मान्निमित्तत्वं न प्रतिपद्यते ? भेदेन चोपलम्भान्नाव्यपवृक्तस्येति न्यायो नास्ति । यत्तद्रेफादिति । रेफ एव भक्तिस्तस्या यत्परमित्यर्थः । ऋकारभागं च व्यवधायकमिच्छन्ति । न तत्क्वचिदिति । मात्राचतुर्थस्य पृथगभावात् । एतैरेवेति । येऽक्षरसमाम्नाये पठ्यन्तेऽकारादयः, ये च तैर्गृह्यन्ते आकारादयः सर्वे ते आक्षरस-माम्नायिकाः । अत्र च 'बह्वचोऽन्तोदात्ताट्ठ'ञिति भवार्थे ठञ्, 'प्रयोजन'मित्यनेन वा ।

उ०–यदुक्तं तत्राह—यथा चेति । पुरुषमृगराजाभ्यामेकाकृतीति । अत्र नरसिंहावयवाना-मित्यनुकष्टव्यम् । ननु समुदाये एवाऽवयवानां गुणभावेन प्रधाने कार्यसंप्रत्यय इति न्याया-त्कथं कार्ययोगः स्यादित्याशङ्क्य प्रधानकार्याऽभावे गुणा अपि कार्यं प्रतिपद्यन्त इत्याह— इह समुदायस्येति । भेदेन चेति । यथा 'माषा न भोक्तव्या' इति निषेधो मिश्रेष्वपि प्रवर्त्तते, तत्र तद्बुद्धिसद्भावात्, एवमृकारस्थो रेफो भेदेन प्रतिभासात्कार्यं प्रतिपद्यत एवेत्यर्थः । 'रेफाद्भक्ते'रिति समानाधिकरणमित्याह—रेफ एवेति । भक्तिः—भागः । ऋकारभागं—तदन्तर्वर्त्यज्भागमित्यर्थः । 'ऋकारभाग'मिति पाठेऽज्भाग ऋकारसदृश इति मतेन बोध्यः । अतएवाऽत्र कहडचक्रे ऋ ॠ लृ ॡ इति चतुर्णामिकाररादया निर्णय दकः स्वरशास्त्रे । मात्रातुर्यस्येति । रेफोऽर्द्धमात्र, उभयतोऽज्भक्तिरर्द्धमात्रा । अत्र मानं प्रत्याहारा-ह्निके उक्तम् । एवञ्च परभागो मात्रातुर्यं इति स्पष्टमेव । एवञ्च 'नाव्यपवृक्तस्ये'तिन्यायादद-

† ८. ४. २,

यदयं क्षुभ्नादिषु नूनमनशब्दं पठति*। नैतदस्ति ज्ञापकम्। वृद्ध्यर्थमेतत्स्यात्—नार्नमनिरिति। यत्तर्हि तत्रैव 'तृप्नोति'शब्दं पठति। यच्चाऽपि नूनमनशब्दं पठति। ननु चोक्तं 'वृद्ध्यर्थमेतत्स्या'दिति। बहिरङ्गा वृद्धिरन्तरङ्गं णत्वम्। 'असिद्धं बहिरङ्गमन्तरङ्गे'। अथवोपरिष्टाद्योगविभागः करिष्यते†। ऋतो नो णो भवति। ततः 'छन्दस्यवग्रहात्' 'ऋत' इत्येव।

## अट्कुप्वाङ्नुम्व्यवायेऽपि ॥ ८ । ४ । २ ॥

### अड्व्यवाये णत्वेऽन्यव्यवाये प्रतिषेधः ॥ १ ॥

अड्व्यवाये णत्वेऽन्यव्यवाये प्रतिषेधो वक्तव्यः। आदर्शेन, अक्षदर्शेन।

### न वाऽन्येन व्यपेतत्वात् ॥ २ ॥

न वा वक्तव्यः। किं कारणम्? 'अन्येन व्यपेतत्वात्'। अन्येनाऽत्र व्यवायः। यद्यप्यत्रान्येन व्यवायोऽटाऽपि तु व्यवायोऽस्ति। तत्रास्त्यड्व्यवाय

---

प्र०-यदयमिति। इदं ज्ञापकमृकारादपि नो णो भवतीत्यनुमापयति। अथ वा वर्णैकदेशोऽपीह रेफो गृह्यते, रेफाकृतिर्वा निर्दिश्यते, भक्तिव्यवधानेऽपि वा णत्वं भवतीत्यनुमीयते।

अट्कुप्वा०। अड्व्यवाये इति। एतत्सूत्रारम्भाद्रषाभ्यामित्यत्राऽडादिव्यवायविषये 'तस्मादित्युत्तरस्ये'ति परिभाषा निर्दिष्टाङ्गविकलोपतिष्ठत इति यत्राऽडादिव्यवायोऽन्यव्यवायश्च तत्र णत्वप्रसङ्गः। न वेति। 'रषाभ्या'मित्यत्र 'तस्मा'दिति परिभाषोपस्थाना-

---

उ०-ग्रहणेन ग्रहणाऽभाव इति भावः। प्रयोजनमित्यनेन वेति। प्रयोजनशब्दश्च प्रकृते प्रयोजकपरः। शेषं भाष्यं प्रत्याहाराह्निके व्याख्यातम्। तत्र बहिरङ्गा वृद्धिरित्येतद्वार्तिकमतेन। भाष्यकृता 'खरवसानयो'रिति सूत्रे कार्यकालपक्षेऽपि त्रैपादिकेऽन्तरङ्गे तदप्रवृत्तेः सिद्धान्तितत्वात्।

अट्कुप्वा०। ननु व्यवाये 'तस्मादित्युत्तरस्ये'ति परिभाषोपस्थित्या णत्वाऽप्राप्तेः किं प्रतिषेधेनेत्यत आह—एतत्सूत्रेति। अडादिव्यवाये इति। तद्व्यवाये विधानसामर्थ्यात्तावन्मात्रकृतानन्तर्याऽभावेऽपि णत्वं भवति। अन्यव्यवाये तु निर्दिष्टग्रहणेन तद्व्यावृत्तेर्न

---

* ८. ४. ३९. † ८. ४. २९.

इति प्राप्नोति। अटैव व्यवाये भवति। किं वक्तव्यमेतत्? न हि। कथमनुच्यमानं गंस्यते? अड्ग्रहणसामर्थ्यात्। यदिहि यत्राऽटा चाऽन्येन च व्यवायस्तत्र स्यादड्ग्रहणमनर्थकं स्यात्। 'व्यवाये नो णो भवती'त्येव ब्रूयात्। अस्त्यन्यदड्ग्रहणस्य प्रयोजनम्। किम्? योऽनिर्दिष्टैरेव व्यवायस्तत्र मा भूत्—कृत्स्नम्, मृत्स्नेति। यद्येतावत्प्रयोजनं स्याच्छर्व्यवाये नेत्येव ब्रूयात्।

**तत्समुदाये णत्वाऽप्रसिद्धिर्यथान्यत्र ॥ ३ ॥**

तत्समुदाये—व्यवायसमुदाये णत्वस्याऽप्रसिद्धिः—अर्केण, अर्घेण। यथाऽन्यत्रापि व्यवायसमुदाये कार्यं न भवति। क्वाऽन्यत्र? 'नुम्विसर्जनीयशर्व्यवायेऽपि' [ ८. ३. ५८ ] निंस्से निंस्स्वेति।

किं पुनः कारणमन्यत्रापि व्यवायसमुदाये कार्यं न भवति? 'प्रत्येकं वाक्यपरिसमाप्तिर्दृष्टे'ति। तद्यथा—गुणवृद्धिसंज्ञे प्रत्येकं भवतः। ननु चायमप्यस्ति दृष्टान्तः—'समुदाये वाक्यपरिसमाप्ति'रिति। तद्यथा—'गर्गाः शतं दण्ड्यन्ता'मिति, अर्थिनश्च राजानो हिरण्येन भवन्ति न च प्रत्येकं दण्डयन्ति। यद्येवमेकेन व्यवाये न प्राप्नोति—किरिणा गिरिणेति। उभयथापि वाक्यपरिसमाप्तिर्दृश्यते, तद्यथा—'गर्गैः सह न भोक्तव्य'मिति, प्रत्येकं च न भुज्यते समुदितैश्च।

**कुव्यवाये हादेशेषु प्रतिषेधः ॥ ४ ॥**

---

प्र०—द्व्यवाये णत्वाऽप्रसङ्गादेतत्सूत्रमारभ्यमाणमडादिव्यवाये णत्वमनुजानाति नाऽन्यव्यवाये, तस्य निर्दिष्टग्रहणेन निवर्तितत्वादितिभावः। अड्ग्रहणसामर्थ्यादिति। सामर्थ्येनाऽप्यनन्तरोक्तमर्थं प्रतिपादयति। अड्व्यवायमन्तरेणान्येन केवलेन व्यवायाऽसम्भवाद्व्यवाय इत्येवाऽड्व्यवायस्याक्षिप्तत्वादड्ग्रहणमटैव व्यवाय इत्यवधारणार्थं विज्ञायत इत्यर्थः। अनिर्दिष्टैरिति। अडादिव्यतिरिक्तैः। शर्व्यवाये नेति। अस्मादेव च निषेधादन्यव्यवाये णत्वमुपास्यते। यद्येवमेकेनेति। द्वाभ्यामपि व्यवाये न प्राप्नोति-अर्केणेति। उभयथेति। व्यवायोपलक्षणायाऽडादीनामुपादानादेकेन द्वाभ्यां

---

उ०—प्रवर्तते इति भावः। न च व्यवायपदश्रुत्या विरोधान्निर्दिष्टाऽशाऽप्रवृत्तिः। निर्दिष्टपदस्य तदतिरिक्ताऽक्षरसमाम्नायिकक्रुताऽव्यवायपरत्वात्। तदाह—सामर्थ्येनापीति। अनेनास्यैकदेशयुक्तित्वं ध्वनयति। अन्यथा नञ्घटितेन गुर्वर्थेन न्यायेन कथमन्यथासिद्धिमस्य वदेत्। भाष्ये—शर्व्यवायेनेति। शर्ग्रहणं छुड्तुल्यानामप्युपलक्षणम्। अतएवाऽऽर्चीत्यादौ न दोषः। द्वाभ्यामपीति। समुदाये वाक्यपरिसमाप्तिरिति न्यायाश्रयणे सर्वैरेव व्यवाये णत्वं स्यान्नैकेन न द्वाभ्यामित्यर्थः। व्यवायोपलक्षणायेति। व्यवायकर्तृबोधनायेत्यर्थः। यथा 'वृषाणि'

कुव्यवाये ह्रादेशेषु प्रतिषेधो वक्तव्यः । किं प्रयोजनम् ?

**प्रयोजनं वृत्रघ्नः स्रुघ्नः प्राघानीति ॥ ५ ॥**

हन्तेरत्पूर्वस्य [ ८. ४. २२ ] इत्यत्पूर्वग्रहणं न कर्तव्यं भवति ।

**नुम्व्यवाये णत्वेऽनुस्वाराऽभावे प्रतिषेधः ॥ ६ ॥**

नुम्व्यवाये णत्वेऽनुस्वाराऽभावे प्रतिषेधो वक्तव्यः । प्रेन्वनम् प्रेन्वनीयम्* ।

**अनागमे च णत्वम् ॥ ७ ॥**

अनागमे च णत्वं वक्तव्यम् । तृम्पणम्, तृम्पणीयम् ।

**अनुस्वारव्यवायवचनात् तु सिद्धम् ॥ ८ ॥**

अनुस्वारव्यवाये नो णो भवतीति वक्तव्यम् । तदनुस्वारग्रहणं कर्तव्यम् ? न कर्तव्यम् । क्रियते न्यास एव । नकारेऽनुस्वारः परसवर्णीभूतो निर्दिश्यते । इहापि तर्हि प्राप्नोति—प्रेन्वनम्, प्रेन्वनीयम् । अनुस्वारविशेषणं नुम्ग्रहणम्—'नुमो योऽनुस्वार' इति । इहापि तर्हि न प्राप्नोति—तृम्पणं तृम्पणीयम् ।

एवं तर्ह्ययोगवाहानामविशेषेणोपदेशश्चोदितस्तत्राऽनुस्वारे कृतेऽड्व्यवाये इत्येव सिद्धम्† । यद्येवं नार्थो नुम्ग्रहणेन । अनुस्वारे कृतेऽड्व्यवाय इत्येव सिद्धम् ।

प्र०-बहुभिश्च यथासम्भवं व्यवाये णत्वं भवति । वृत्रघ्न इति । 'प्रातिपदिकान्ते'ति णत्वप्रसङ्गः । स्रुघ्न इति । स्रुचो हन्यन्तेऽस्मिन्निति घञर्थे कविधानमिति कः । प्रेन्वनमिति । 'इजादेः सनुम' इति णत्वप्रसङ्गः । नकारेऽनुस्वार इति । द्विनकारको निर्देश इति भावः । नुमो योऽनुस्वार इति । सौत्रत्वान्निर्देशस्य षष्ठ्यन्तस्य परनिपातः ।

उ०-प्रवेष्टव्य'मिति वृषलस्य प्रवेशनिषेधपरनोदनायां प्रत्येकं संहतानाञ्च प्रवेशो निषिध्यते एवमिहापीत्यर्थः । प्रातिपदिकान्तेति । 'कुमति चे'त्यस्याप्युपलक्षणमिदम् । 'स्रुघ्न' इत्यत्र 'पूर्वपदात्संज्ञाया'मिति प्राप्तिः । अतएव ऋगयने निपातनमाश्रित्य 'अग' इति तत्र प्रत्याख्यातं भाष्ये । अत्पूर्वग्रहणं न कर्तव्यं भवतीति । तत्करणेऽपि 'बहुवृत्रहाणी'त्यसिद्धेः, उपसर्गसंबन्धसत्त्वेन 'वृत्रघ्न' इत्यसिद्धेश्च, 'प्रघनाघन' इत्यत्र णत्वापत्तेश्चेति भावः । वार्तिकस्य त्वत्र करणात्सवर्णत्वनिषेधकत्वमिति बोध्यम् । 'ह्रादेशेष्वि'ति विशेषणात् 'वृघण' इत्यादौ 'पूर्वपदा'दिति णत्वं भवत्येव । तत्र हि अायुत्पदे हन्तेरप् घनादेशश्च हन्तेरन्तोदात्तो विधीयते । द्विनकारक इति । तत्र पूर्वो नकारोऽनुस्वारस्य परसवर्णेन निर्दिष्ट इति व्याख्यास्यत इति भावः ।

* ७. १. ५८; ( ८. ३. २४ ) † प्रत्या० सू० ५,

## पूर्वपदात्संज्ञायामगः ॥ ८ । ४ । ३ ॥

### पूर्वपदात्संज्ञायामुत्तरपदग्रहणम् ॥ १ ॥

पूर्वपदात्संज्ञायामुत्तरपदग्रहणं कर्तव्यम् । किं प्रयोजनम् ?

### तद्धितपूर्वपदस्थाऽप्रतिषेधार्थम् ॥ २ ॥

तद्धितस्थस्य पूर्वपदस्थस्य च प्रतिषेधो मा भूत् । खारपायणः† कर्णप्रियः ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । पूर्वपदमुत्तरपदमिति संबन्धिशब्दावेतौ । सति पूर्वपद उत्तरपदं भवति, सति चोत्तरपदे पूर्वपदं भवति । तत्र सम्बन्धादेतदवगन्तव्यं—'यत्प्रति पूर्वपदमित्येतद्भवति तत्स्थस्य नियम' इति । किं च प्रत्येतद्भवति ? उत्तरपदं प्रति ।

### संज्ञायां नियमवचनेऽगप्रतिषेधान्नियमप्रतिषेधः ॥ ३ ॥

संज्ञायां नियमवचनेऽगप्रतिषेधान्नियमस्याऽयं प्रतिषेधो विज्ञायते—'अग' इति । तत्र को दोषः ?

### तत्र नित्यं णत्वप्रसङ्गः ॥ ४ ॥

तत्र पूर्वेण‡ संज्ञायां चाऽसंज्ञायां च नित्यं णत्वं प्राप्नोति ।

### योगविभागात्सिद्धम् ॥ ५ ॥

योगविभागः करिष्यते—'पूर्वपदात्संज्ञायाम्' । ततः 'अगः' । गान्तात्पूर्वपदाद्या च यावती णत्वप्राप्तिस्तस्याः सर्वस्याः प्रतिषेधः ।

---

प्र०- पूर्वपदा० । तद्धितेति । 'पूर्वपदे यौ रषौ ताभ्यां परस्य नकारस्य संज्ञायामेव णत्व'मिति नियमादसंज्ञायां तद्धितपूर्वपदस्थस्यापि णत्वं न प्राप्नोतीत्युत्तरपदग्रहणं कर्तव्यम् । खारपायण इति । खरपस्यापत्यं गोत्रं नडादित्वात् फक् ।

सम्बन्धिशब्दाविति । पूर्वपदावयवो रेफः षकारश्च पूर्वपदशब्देनोच्यते । समुदायेषु हि वृत्ताः शब्दा अवयवेष्वापि वर्तन्ते । पूर्वपदत्वं चोत्तरपदापेक्षमिति तद्धितपूर्वपदस्थस्य णत्वं भवत्येव । समानपदमेवेति । समासे च पूर्वपदोत्तरपदविभागाऽपेक्षया भिन्नपदत्वमप्यस्तीति णत्वाऽप्रसङ्गः । एवं च विध्यर्थमेतत्सूत्रं, न नियमार्थम् । अथ खारपायण इत्यत्र कथं णत्वं, यावता खरशब्दस्यापि पदत्वमस्तीति, तत्स्थत्वाद्रेफस्य समानपदत्वमेव नास्ति । अत्राहुः—यत्र द्वावपि निमित्तनिमित्तिनौ समानपदस्थत्वं

---

उ०- पूर्वपदात्० । पूर्वपदे याविति । पूर्वपदग्रहणं तत्स्थे लाक्षणिकमिति भावः । नियमादिति । समासे समानपदत्वात्पूर्वेण सिद्धेऽस्यारम्भादित्यर्थः । पूर्वपदावयव इति । आक्षेपोऽप्युत्तरपदावयवनस्येति भावः । पूर्वपदशब्दो रूढ इति तात्पर्यम् । भाष्ये—नित्यं णत्वप्रसङ्गः इति । सर्वत्र संज्ञायामसंज्ञायां च णत्वप्रसङ्गः इत्यर्थः । ऋगयनादिभ्य इति । ऋगयनव्यतिरिक्तानां तु गव्यवधाने णत्वप्राप्तियोग्यानामनभिधानमिति भावः ।

---

† ४. १. ९९ ‡ ८. ४. १.

कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः । किं प्रयोजनम् ?

**प्रयोजनं वृत्रघ्नः स्रुघ्नः प्राघानीति ॥ ५ ॥**

हन्तेरत्पूर्वस्य [ ८. ४. २२ ] इत्यत्पूर्वग्रहणं न कर्तव्यं भवति ।

**नुम्व्यवाये णत्वेऽनुस्वाराऽभावे प्रतिषेधः ॥ ६ ॥**

नुम्व्यवाये णत्वेऽनुस्वाराऽभावे प्रतिषेधो वक्तव्यः । प्रेन्वनम् प्रेन्वनीयम्* ।

**अनागमे च णत्वम् ॥ ७ ॥**

अनागमे च णत्वं वक्तव्यम् । तृम्पणम्, तृम्पणीयम् ।

**अनुस्वारव्यवायवचनात् तु सिद्धम् ॥ ८ ॥**

अनुस्वारव्यवाये नो णो भवतीति वक्तव्यम् । तदनुस्वारग्रहणं कर्तव्यम् ? न कर्तव्यम् । क्रियते न्यास एव । नकारेऽनुस्वारः परसवर्णीभूतो निर्दिश्यते । इहापि तर्हि प्राप्नोति—प्रेन्वनम्, प्रेन्वनीयम् । अनुस्वारविशेषणं नुम्ग्रहणम्—'नुमो योऽनुस्वार' इति । इहापि तर्हि न प्राप्नोति—तृम्पणं तृम्पणीयम् ।

एवं तर्ह्ययोगवाहानामविशेषेणोपदेशश्चोदितस्तत्राऽनुस्वारे कृतेऽड्व्यवाये इत्येव सिद्धम्† । यद्येवं नार्थो नुम्ग्रहणेन । अनुस्वारे कृतेऽड्व्यवाय इत्येव सिद्धम् ।

प्र०-बहुभिश्च यथासम्भवं व्यवाये णत्वं भवति । वृत्रघ्न इति । 'प्रातिपदिकान्ते'ति णत्वप्रसङ्गः । स्रुघ्न इति । स्रुचो हन्यन्तेऽस्मिन्निति घञर्थे कविधानमिति कः । प्रेन्वनमिति । 'इजादेः सनुम' इति णत्वप्रसङ्गः । नकारेऽनुस्वार इति । द्विनकारको निर्देश इति भावः । नुमो योऽनुस्वार इति । सौत्रत्वान्निर्देशस्य षष्ठ्यन्तस्य परनिपातः ।

उ०-प्रवेष्टव्य'मिति वृषलस्य प्रवेशनिषेधपरनोदनायां प्रत्येकं संहतानाञ्च प्रवेशो निषिध्यते एवमिहापीत्यर्थः । प्रातिपदिकान्तेति । 'कुमति चे'त्यस्याप्युपलक्षणमिदम् । 'स्रुग्घ्न' इत्यत्र 'पूर्वपदात्संज्ञाया'मिति प्राप्तिः । अतएव ऋगयने निपातनमाश्रित्य 'अग' इति तत्र प्रत्याख्यातं भाष्ये । अत्पूर्वग्रहणं न कर्तव्यं भवतीति । तत्करणेऽपि 'बहुघ्नहाणी'त्यसिद्धेः, उपसर्गसंबन्धसत्त्वेन 'वृत्रघ्न' इत्यसिद्धेश्च, 'प्रघनाघन' इत्यत्र णत्वापत्तेश्चेति भावः । वार्तिकस्य त्वत्र करणात्सवर्णत्वनिषेधकत्वमिति बोध्यम् । 'हादेशेष्वि'ति विशेषणात् 'द्रुघण' इत्यादौ 'पूर्वपदा'दिति णत्वं भवत्येव । तत्र हि द्रावुत्पदे हन्तेरप् घनादेशश्च हन्तेरन्तोदात्तो विधीयते । द्विनकारक इति । तत्र पूर्वो नकारोऽनुस्वारस्य परसवर्णेन निर्दिष्ट इति व्याख्यास्यत इति भावः ।

* ७. १. ५८; ( ८. ४. २४ ) † प्रत्या० सू० ५,*

**पूर्वपदात्संज्ञायामगः ॥ ८ । ४ । ३ ॥**

**पूर्वपदात्संज्ञायामुत्तरपदग्रहणम् ॥ १ ॥**

पूर्वपदात्संज्ञायामुत्तरपदग्रहणं कर्तव्यम् । किं प्रयोजनम् ?

**तद्धितपूर्वपदस्थाऽप्रतिषेधार्थम् ॥ २ ॥**

तद्धितस्थस्य पूर्वपदस्थस्य च प्रतिषेधो मा भूत् । खारपायणः[†] करणप्रियः ।

तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । पूर्वपदमुत्तरपदमिति संबन्धिशब्दावेतौ । सति पूर्वपद उत्तरपदं भवति, सति चोत्तरपदे पूर्वपदं भवति । तत्र सम्बन्धादेतदवगन्तव्यं—'यत्प्रति पूर्वपदमित्येतद्भवति तत्स्थस्य नियम' इति । किं च प्रत्येतद्भवति ? उत्तरपदं प्रति ।

**संज्ञायां नियमवचनेऽगप्रतिषेधान्नियमप्रतिषेधः ॥ ३ ॥**

संज्ञायां नियमवचनेऽगप्रतिषेधान्नियमस्याऽयं प्रतिषेधो विज्ञायते—'अग' इति । तत्र को दोषः ?

**तत्र नित्यं णत्वप्रसङ्गः ॥ ४ ॥**

तत्र पूर्वेण[‡] संज्ञायां चाऽसंज्ञायां च नित्यं णत्वं प्राप्नोति ।

**योगविभागात्सिद्धम् ॥ ५ ॥**

योगविभागः करिष्यते—'पूर्वपदात्संज्ञायाम्' । ततः 'अगः' । गान्तात्पूर्वपदाद्या च यावती णत्वप्राप्तिस्तस्याः सर्वस्याः प्रतिषेधः ।

---

प्र०- पूर्वपदा० । तद्धितेति । 'पूर्वपदे यौ रषौ ताभ्यां परस्य नकारस्य संज्ञायामेव णत्व'मिति नियमादसंज्ञायां तद्धितपूर्वपदस्थस्यापि णत्वं न प्राप्नोतीत्युत्तरपदग्रहणं कर्तव्यम् । खारपायण इति । खरपस्यापत्यं गोत्रं नडादित्वात् फक् ।

सम्बन्धिशब्दाविति । पूर्वपदावयवो रेफः षकारश्च पूर्वपदशब्देनोच्यते । समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते । पूर्वपदत्वं चोत्तरपदापेक्षमिति तद्धितपूर्वपदस्थस्य णत्वं भवत्येव । समानपदमेवेति । समासे च पूर्वपदोत्तरपदविभागाऽपेक्षया भिन्नपदत्वमप्यस्तीति णत्वाऽप्रसङ्गः । एवं च विध्यर्थमेतत्सूत्रं, न नियमार्थम् । अथ खारपायण इत्यत्र कथं णत्वं, यावता खरशब्दस्यापि पदत्वमस्तीति, तत्स्थत्वाद्रेफस्य समानपदत्वमेव नास्ति । अत्राहुः—यत्र द्वावपि निमित्तनिमित्तिनौ समानपदस्थत्वं

---

उ०- पूर्वपदात्० । पूर्वपदे याविति । पूर्वपदग्रहणं तत्स्थे लाक्षणिकमिति भावः । नियमादिति । समासे समानपदत्वात्पूर्वेण सिद्धेऽस्यारम्भादित्यर्थः । पूर्वपदावयव इति । आक्षेपोऽप्युत्तरपदावयवनस्येति भावः । पूर्वपदशब्दो रूढ इति तात्पर्यम् । भाष्ये—नित्यं णत्वप्रसङ्गः इति । सर्वत्र संज्ञायामसंज्ञाया च णत्वप्रसङ्गः इत्यर्थः । ऋगयनादिभ्य इति । ऋगयनव्यतिरिक्तानां तु गव्यवधाने णत्वप्राप्तियोग्यानामनभिधानमिति भावः ।

---

† ४. १. ९९ ‡ ८. ४. १.

## अप्रतिषेधो वा यथा सर्वनामसंज्ञायाम् ॥ ६ ॥

न वाऽर्थः प्रतिषेधेन । णत्वं कस्मान्न भवति ? 'यथा सर्वनामसंज्ञायाम्' । उक्तं च सर्वनामसञ्ज्ञायां—'सर्वनामसंज्ञायां निपातनाण्णत्वाभाव' इति* । यथा पुनस्तत्र निपातनं क्रियते—सर्वादीनि सर्वनामानि [ १. १. २७ ] इति, इहेदानीं किं निपातनम् ? इहापि निपातनमस्ति । किम् ? 'अणृगयनादिभ्यः' [ ४. ३. ७३ ] इति ।

नैव वा पुनरत्र पूर्वेणाणत्वं प्राप्नोति । किं कारणम् ? 'समानपद' इत्युच्यते, न चैतत्समानपदम् । समासे कृते समानपदम् । समानपदमेव यन्नित्यं न चैतन्नित्यं समानपदमेव । किं वक्तव्यमेतत् ? न हि । कथमनुच्यमानं गंस्यते ? समानग्रहणसामर्थ्यात्' यदि हि यत्समानं चाऽसमानं च तत्र स्यात्समानग्रहणमनर्थकं स्यात् ।

## विभाषौषधिवनस्पतिभ्यः ॥ ८ । ४ । ६ ॥

द्व्यक्षरत्र्यक्षरेभ्य इति वक्तव्यम् । इह मा भूत्—देवदारुवनम् । इरिकादिभ्यः प्रतिषेधो वक्तव्यः । इरिकावनम् । तिमिरवनम् ।

## अह्नोऽदन्तात् ॥ ८ । ४ । ७ ॥

अदन्तादन्तस्येति वक्तव्यम् । इह मा भूत्—दीर्घाह्नी शरदिति । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । नैषाऽहञ्छब्दात्षष्ठी । का तर्हि ? अह्नशब्दात्प्रथमा‡ पूर्वसूत्रनिर्देशश्च ।

---

प्र०—व्यभिचरतस्तत्र णत्वाऽभावः । इह तु रेफस्य व्यभिचारेऽपि नकारस्य समानपदस्थत्वाऽव्यभिचाराण्णत्वं प्रवर्तते । समानग्रहणमिति । 'पद'इत्येवाऽपदस्थयोर्निमित्तनिमित्तिनोरसम्भवात्सामर्थ्यादेकत्वसङ्ख्याया विवक्षया समानत्वे लब्धे समानश्रुतिरङ्गीकृताऽवधारणा विज्ञायत इत्यर्थः ।

---

उ०—यत्र द्वावपीति । एवं च निमित्तानधिकरणनिमित्तिमत्पदाऽघटितत्वमेव समानपदत्वमिति भावः । सामर्थ्यादेकत्वेति । अनुवादगतत्वेऽपि सामर्थ्यात्तद्विवक्षेति भावः । इदं चिन्त्यं, पदान्तरेऽप्रवृत्त्यापत्तेः । तस्मात्पदे इत्युक्त्यैव प्रत्यासत्त्या रषनानामेक पदस्थत्वे लब्धे तत्सामर्थ्यात्तल्लाभ इति बोध्यम् ।

विभाषौषधि० । भाष्ये—द्व्यक्षरेति । अत्राऽक्षरशब्देनाऽच्सहितं व्यञ्जनम् । अतएवेरिकादिभ्यः प्रतिषेधः सार्थकः ।

---

* १. १. २७ † ८. ४. १. ‡ ५. ४. ८८.

अथ वा युवादिषु* पाठः करिष्यते ।

**वाहनमाहितात् ॥ ८ । ४ । ८ ॥**

आहितोपस्थितयोरिति वक्तव्यम् । इहापि यथा स्यात्—इक्षुवाहणम्, शरवाहणम् । अपर आह—

**वाहनं वाह्यादिति वक्तव्यम् ।**

यदा हि गर्गाणां वाहनमपविद्धं तिष्ठति तदा मा भूत्—गर्गवाहनमिति ।

**वा भावकरणयोः ॥ ८ । ४ । ११ ॥**

**वाप्रकरणे गिरिनद्यादीनामुपसंख्यानम् ॥ १ ॥**

वाप्रकरणे गिरिनद्यादीनामुपसंख्यानं कर्तव्यम् । गिरिणदी, गिरिनदी । चक्रणितम्बा, चक्रनितम्बा ।

**प्रातिपदिकान्तनुम्विभक्तिषु च ॥ ८ । ४ । ११ ॥**

**प्रातिदिकान्तस्य णत्वे समासान्तग्रहणमसमासान्तप्रतिषेधार्थम् १**

प्रातिपदिकान्तस्य णत्वे समासान्तग्रहणं कर्तव्यम् । किं प्रयोजनम् ? 'असमासान्तप्रतिषेधार्थम्' । असमासान्तस्य मा भूत्–गर्गभगिनी, दक्षभगिनीति ।

प्र०– अह्नोऽदन्तात् । पूर्वसूत्रनिर्देशश्चेति । पूर्वाचार्याः कार्यभाजः षष्ठ्या न निरदिक्षन्नित्यर्थः । अथवेति । अवश्यकर्तव्यश्च युवादिषु पाठः, 'प्रातिपदिकान्ते'ति विकल्पेन णत्वं मा भूत् ।

वाह० । आहितोपस्थितयोरिति । आहितशब्देन भूतकालक्रियानिर्देशाद्यदा वाह्यं नारोपितं केवलं सन्निहितं तदा न प्राप्नोतीति वचनम् । 'स्वस्वामिभावनिवृत्तिपरत्वाद्भूतकालस्येहाविवक्षे'त्यन्ये आहुः । वाहनं वाह्यादिति । वहनीयवाचिन इत्यर्थः । अपविद्धमिति । वहनशक्तिविकलं प्रनष्टमित्यर्थः । यदा गर्गा वाह्यत्वेन विवक्ष्यन्ते न तु स्वामित्वेन तदा णत्वं भवत्येव ।

प्रातिपदिका० । समासान्तग्रहणमिति । समासस्य प्रातिपदिकस्य योऽन्त्यो

उ०– अह्नोऽदन्तात् । अवश्येति । एवं चाऽदन्तानुकरणक्लेशो वृथैवेति भावः ।

वाहनमा० । आहितम्—आरोपितम् । वाह्यम्—उपस्थितम् । अनारोपितवाह्यमपि सन्निहितवाह्यम् । वचनमिति । उपस्थितेत्येतदित्यर्थः । सूत्राक्षरैरेवाऽस्याऽर्थस्य सिद्धिं दर्शयति—स्वस्वामीति । वहनीयेति । वहनीयाऽर्थवाचकात्परस्य वाहनस्य णत्वमित्यर्थः । तर्हि गार्ग्यवाहणमित्यसाध्वेव, नेत्याह—यदेति ।

प्रादिपदिकान्त० । ननु कृतेऽपि समासान्तग्रहणे समासप्रातिपदिकावयवत्वात् णत्वं

* ८. ४. ११.

न वा भवति—गर्गभगिणीति ? भवति यदैतद्वाक्यं—गर्गाणां भगो गर्गभगः, गर्गभगोऽस्याऽस्तीति* । यदा त्वेतद्वाक्यं भवति—गर्गाणां भगिनी गर्गभगिनीति, तदा न भवितव्यं, तदा मा भूदिति । यदि समासान्तग्रहणं क्रियते माषवापिणी व्रीहिवापिणीत्यत्र न प्राप्नोति ।

**लिङ्गविशिष्टग्रहणे चोक्तम् ॥ २ ॥**

किमुक्तम् ? 'गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक् सुबुत्पत्ते'रिति† ।

**तत्र युवादिप्रतिषेधः ॥ ३ ॥**

तत्र युवादीनां प्रतिषेधो वक्तव्यः । आर्ययूना, क्षत्रिययूना, प्रपक्वानि, परिपक्वानि, दीर्घाह्नी शरदिति ।

**कुमति च ॥ ८ । ४ । १३ ॥**

अथेह कथं भवितव्यं—माषकुम्भवापेण व्रीहिकुम्भवापेणेति, नित्यं णत्वेन भवितव्यमाहोस्विद्विभाषया‡ ? यदा तावदेतद्वाक्यं भवति—कुम्भस्य वापः कुम्भवापः, माषाणां कुम्भवापो माषकुम्भवाप इति, तदा नित्यं णत्वेन

---

प्र०-नकारस्तस्य णत्वमित्यर्थः । गर्गभगिनीति । 'भगि'न्नित्येतस्य प्रातिपदिकस्याऽन्तो नकार इति णत्वप्रसङ्गः । अन्तशब्दश्चाऽवसानवर्त्येकदेशवाची । यथा वस्त्रान्त इति । गर्गभगोऽस्यास्तीति । खारपायणवत्समानपदस्थत्वाद्रेफनकारयोः पूर्वेणैवाऽत्र णत्वं न त्वनेन । माषवापिणीति । ईकारान्तेन समास इति पूर्वपक्षः । नकारान्तेन समासः पश्चादीकार इति सिद्धान्तः । प्रपक्वानीति । अत्र 'कुमति चे'ति नित्यं णत्वं प्राप्नोति ।

कुमति च । अथेति विचारो निष्प्रयोजन इत्याहुः । विग्रहद्वयेऽप्यर्थाभेदाद्रूपद्वयसिद्धौ च विकल्पस्यैव समर्थनान्नित्यणत्वोपन्यासस्याजागलस्तनतुल्यत्वात् । न चाऽत्र णत्वेन भाव्यम्, 'पदव्यवाय' इति प्रतिषेधात् । केचित्त्वाहुः—यदा माषाणां कुम्भो माषकुम्भस्तस्य वाप इति प्रक्रिया तदोत्तरपदत्वे चाऽपदादिविधाविति प्रत्यय-

---

उ०-स्यादेवेत्यत आह—अन्तशब्दश्चेति । न त्वेकदेशमात्रवाचीति भावः । नत्वनेनेति । समासप्रातिपादिकान्तत्वाऽभावान्नकारस्येति भावः ।

कुमति च । निष्प्रयोजनत्वमुपपादयति—विग्रहद्वयेऽपीति । निषेधप्रतिषेधप्रतियोगिनः प्राप्तिमात्रनिरूपणपरं भाष्यमित्यन्ये । केचिदाहुरिति । अत्राऽरुचिबीजन्तु प्रत्यासन्नस्योत्तरपदस्य कार्यित्व एव निषेधप्रवृत्त्याऽत्र तस्य दुर्लभत्वम् । किं चाऽपदादिविधाविति

---

* ८. ४. १. † ४. १. ४८.* ‡ ८. ४. ११.

भवितव्यम् । यदा त्वेतद्वाक्यं भवति—माषाणां कुम्भो माषकुम्भः, माषकुम्भस्य वापो माषकुम्भवाप इति, तदा विभाषया भवितव्यम् ।

## उपसर्गादसमासेऽपि णोपदेशस्य ॥ ८ । ४ । १४ ॥

असमासग्रहणं किमर्थम् ? समास इति वर्त्तते, असमासेऽपि यथा स्यात्—प्रणमति परिणमति । क्व पुनः समासग्रहणं प्रकृतम् ? 'पूर्वपदात्संज्ञायामगः' [ ८. ४. ३ ] इति । कथं पुनस्तेन समासग्रहणं शक्यं विज्ञातुम् ? पूर्वपदग्रहणसामर्थ्यात् । समास एवैतद्भवति पूर्वपदमुत्तरपदमिति ।

अथाऽपिग्रहणं किमर्थम् ? समासेऽपि यथा स्यात्—प्रणामकः, परिणामकः । यदि तर्हि समासे चाऽसमासे चेष्यते नार्थो'ऽसमासेऽपि'ग्रहणेन । निवृत्तं पूर्वपदादिति । अविशेषेणोपसर्गाण्णत्वं वक्ष्यामि । समासे नियमान्न प्राप्नोति । असिद्धमुपसर्गाण्णत्वं, तस्याऽसिद्धत्वान्नियमो* न भविष्यति ।

---

प्र०—लक्षणनिषेधात्पदत्वाऽभावान्निषेधाऽप्रवृत्तिः । कुम्भस्य वापः कुम्भवापो, माषाणां कुम्भवापो माषकुम्भवाप इत्यस्यां तु प्रक्रियायां णत्वप्रतिषेध इति ।

उपसर्गा० । समास एतद्भवतीति । ननु 'सुबामन्त्रित' इत्यत्रोक्तम्—'अविशेषेणैतद्भवति पूर्वपदमुत्तरपदमिति, तेन चर्मनमन्नित्यत्र णत्वं न भविष्यती'ति । उच्यते । स्वरग्रहणप्रत्याख्यानाय तदुक्तं न त्वेष पक्षः स्थितः । समासे नियमादिति । यदा 'पूर्वपदात्संज्ञायामग' इति सूत्रं नियमार्थमिति पक्षस्तदैतदुच्यते । समासपदे हि समाने निमित्तनिमित्तिनोर्भावात्सिद्धं णत्वं नियम्यते । यदा तु समानग्रहणात्समानमेव यन्नित्यं पदं तदाश्रीयते तदा पूर्वपदादित्यस्य विध्यर्थत्वादसमासेपिग्रहणस्य ज्ञापकत्वाऽ-

---

उ०—पर्युदासेनाऽपदान्तविधावेव तत्प्रवृत्तेर्न लुमतेति सूत्रभाष्ये ध्वनितत्वम् । एवञ्चेदं भाष्यमेकदेश्युक्तिरिति तात्पर्यम् ।

उपसर्गाद० । स्वरग्रहणप्रत्याख्यानायेति । तत्र हि चर्मनमन्, कूपे सिञ्चन्नित्यादौ णत्वपरत्ववारणाय स्वरग्रहणमित्युक्ते, पूर्वपदादिति नियमाण्णत्वं न भविष्यति—इति चोदिते 'समासे एतद्भवतिपूर्वपद'मित्याद्युक्त्वा 'नेत्याह अविशेषणे' त्यादिना स्वरग्रहणं प्रत्याख्यातम् । तच्चाऽयुक्तमिति 'रूढिर्योगमपहरती'ति न्यायसिद्धेस्तद्भाष्यादृष्टिज्ञायते, तदाह—नत्वेष इति । विध्यर्थत्वादिति । अयमेव युक्तः पक्षस्तत्र सिद्धान्तितश्चेति ज्ञापकत्वमसङ्गतम् । एवं चाऽसमासेऽपीति सूत्रं व्यर्थमेवेति भावः । ननु प्रत्येकं योगानामानर्थक्यं मानाभावात् स्वत्व—

---

* ८. ४. ३.

एवं तर्हि सिद्धे सति यदसमासेऽपिग्रहणं करोति तज्ज्ञापयत्याचार्यो 'न योगो योगेऽसिद्धः'। किं तर्हि ? 'प्रकरणे प्रकरणमसिद्ध'मिति। किमेतस्य ज्ञापने प्रयोजनम् ? यत्तदुक्तं—निष्कृतम्, निष्पीतमित्यत्र सत्वस्याऽसिद्धत्वात् षत्वं न प्राप्नोती'ति† न स दोषो भवति।

**णोपदेशं प्रत्युपसर्गाभावादनिर्देशः ॥ १ ॥**

अगमको निर्देशोऽनिर्देशः। यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो, न च णोपदेशं प्रति क्रियायोगः। एवं तर्ह्याहाऽयमुपसर्गादसमासेऽपि णोपदेशस्येति, न च णोपदेशं प्रत्युपसर्गोऽस्ति, तत्र वचनाद्भविष्यति।

**वचनप्रामाण्यादिति चेत्पदलोपे प्रतिषेधः ॥ २ ॥**

वचनप्रामाण्यादिति चेत्पदलोपे प्रतिषेधो वक्तव्यः। प्रगता नायका अस्माद्ग्रामात्—प्रनायको ग्राम इति।

**सिद्धं तु यं प्रत्युपसर्गस्तत्स्थस्येति वचनात् ॥ ३ ॥**

सिद्धमेतत्। कथम् ? यं प्रत्युपसर्गस्तत्स्थस्य णो भवतीति वक्तव्यम्। सिद्ध्यति। सूत्रं तर्हि भिद्यते। यथान्यासमेवाऽस्तु। ननु चोक्तं 'णोपदेशं प्रत्युपसर्गाऽभावादनिर्देश इति। नैष दोषः। णोपदेश इति नैवं विज्ञायते—ण उपदेशो णोपदेशः, णोपदेशस्येति। कथं तर्हि ? ण उपदेशोऽस्य सोऽयं णोपदेशः, णोपदेशस्येति।

प्र०—नुपपत्तिः। न्यायात्तु प्रकरणे प्रकरणस्यासिद्धत्वं व्यवस्थाप्यते, प्रकरणस्यार्थवद्वाक्यत्वात्तदन्तर्गतानां योगानामानर्थक्याद्योगे योगस्याऽसिद्धत्वायोगात्। असिद्धत्वेन कार्याऽसम्पादनादनर्थकत्वमितिभावः। प्रकरणाऽसिद्धत्वेपि तस्यार्थवद्वाक्यत्वाद्बहूनामानर्थक्यम्। अथवा 'निष्कृत'मित्यादौ विसर्जनीयस्यैव षत्वं विधेयं न तु सकारस्य। णोपदेशं प्रतीति। उपदिश्यत इत्युपदेशो, णश्चासावुपदेशो णोपदेश इति कर्मधारयं मत्वा चोद्यते। नैवं विज्ञायत इति। उपसर्गग्रहणस्य मा भूद्गौणार्थत्वमिति मुख्यार्थग्रहणाय बहुव्रीहिराश्रीयते।

उ०—साध्यप्रयोगसाधनेन सार्थक्याच्चेत्यत आह—अथवेति। एवंच्चैतत्पक्षाश्रयणे न किंचित्फलमिति भावः। कर्मधारयमिति। अन्तरङ्गत्वादिति भावः। भाष्ये—सिद्धन्तु यं प्रतीति। यं प्रत्युपसर्गस्तत्स्थस्य णोपदेशस्य नस्य ण इत्यर्थ इति भावः। अन्तरङ्गकर्मधारये संभवति कथं बहिरङ्गबहुव्रीह्याश्रयणमत आह—उपसर्गेति। तथा उपसर्गग्रहणं प्रादुपलक्षण—मित्याश्रयणीयं स्यादिति भावः।

† ८. ३. ३९.

## हिनुमीना ॥ ८ । ४ । १५ ॥

### हिनुमीनाग्रहणे विकृतस्योपसंख्यानम् ॥ १ ॥

हिनुमीनाग्रहणे विकृतस्योपसंख्यानं कर्त्तव्यम् । प्रहिणोति, प्रमीणीते । वचनाद्भविष्यति । अस्ति वचने प्रयोजनम् । किम् ? प्रहिणुतः, प्रमीणाति ।

### सिद्धमचः स्थानिवत्त्वात् ॥ २ ॥

सिद्धमेतत् । कथम् ? 'अचः स्थानिवत्त्वात्' । स्थानिवद्भावादत्र णत्वं भविष्यति । प्रतिषिध्यतेऽत्र स्थानिवद्भावः 'पूर्वत्रासिद्धे न स्थानिव'दिति* । दोषा एवैते तस्याः परिभाषायाः—'तस्य दोषः संयोगादिलोपलत्वणत्वे'ष्विति* ।

## आनि लोट् ॥ ८ । ४ । १६ ॥

लोडिति किमर्थम् ? प्रहिमाणि कुलानि, प्रवपाणि मांसानि ।

### आनिलोड्ग्रहणानर्थक्यमर्थवद्ग्रहणात् ॥ १ ॥

आनिलोड्ग्रहणमनर्थकम् । किं कारणम् ? 'अर्थवद्ग्रहणात्' । अर्थवत आनिशब्दस्य ग्रहणं, नैषोऽर्थवान् ।

### अनुपसर्गाद्वा ॥ २ ॥

अथवा यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवतो, न चैतमानिशब्दं प्रति क्रियायोगः । इहापि तर्हि न प्राप्नोति—प्रयाणि, परियाणीति । अत्रापि नाऽऽनिशब्दं प्रति क्रियायोगः । आनिशब्दं प्रत्यत्र क्रियायोगः । कथम् ? यत्क्रियायुक्ता इति नैवं विज्ञायते—'यस्य क्रिया यत्क्रिया, यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत' इति । कथं तर्हि ? या क्रिया यत्क्रिया, यत्क्रियायुक्तास्तं प्रति गत्युपसर्गसंज्ञे भवत इति ।

---

प्र०- आनि लोट् । आनिशब्दमिति । क्रियायोगग्रहणस्यैव 'यत्क्रियायुक्तास्तं प्रती'ति व्याख्यानम् । योगश्चाऽर्थलक्षणः । तत्र प्रयोगविषया क्रियाऽऽश्रीयते । सा च न क्वचिदसंसृष्टाऽस्तीति समुदायस्था आश्रीयत इति आनिशब्दान्तसमुदायं प्रति क्रियायोगः । तत्राऽयं सूत्रार्थः—'उपसर्गात्परस्य समुदायस्य य आनिशब्दस्तन्नकारस्य णत्व'मिति । तदेवं प्रत्याख्यातं लोड्ग्रहणम् ।

---

उ०- हिनुमि० । भाष्ये—स्थानिवत्त्वादिति । बहिरङ्गाऽसिद्धत्वं [illegible] न, त्रिपादीस्थेऽन्तरङ्गे तदप्रवृत्तेः । एकदेशविकृतन्यायेनापीदं सिध्यतीतीदं भाष्यमेकदेश्युक्तिरिति केचित् ।

आनि।लोट् । यत्क्रियेत्यत्र कर्मधारयाश्रयणे हेतुं दर्शयन् तत्पक्षे इष्टसिद्धिं दर्शयति—क्रियायोगेति । प्रयोगविषयेति । तस्या एव मुख्यत्वात् । ननु शास्त्रीयान्वयव्यतिरेकविषयेति भावः । न क्वचिदिति । पदस्यैव लोके प्रयोगात् । एतेन निरासमन्ताकयति तत्कुलं

---

* १. १. ५८.*

**नेर्गदनदपतपदघुमास्यतिहन्तियातिवातिद्रातिप्सातिवपति-वहतिशाम्यतिचिनोतिदेग्धिषु च ॥ ८ । ४ । १७ ॥**

**नेर्गदादिषु अड्व्यवाय उपसंख्यानम् ॥ १ ॥**

नेर्गदादिष्वड्व्यवाय उपसंख्यसानं कर्त्तव्यम् । प्रण्यगदत्, परिण्यगदत् । आडा चेति वक्तव्यम् । प्रण्यागदत् । ननु चाऽयमड् गदादिभक्तो गदादिग्रहणेन ग्राहिष्यते । न सिध्यति । अङ्गस्याऽडुच्यते*, विकरणान्तं चाऽङ्गम्, सोऽसौ संघातभक्तोऽशक्यो गदादिग्रहणेन ग्रहीतुम् । एवं तर्ह्यड्व्यवाय इति वर्त्तते । क्व प्रकृतम् ? 'अट्कुप्वाङ्नुम्व्यवायेऽपि' [ ८. ४. २ ] इति । तद्वै कार्यि-विशेषणं निमित्तविशेषणेन चेहार्थः । तत्रापि निमित्तविशेषणमेव ।

**अनितेः ॥ ८ । ४ । १९ ॥ अन्तः ॥ ८ । ४ । २० ॥**

अन्तग्रहणं किमर्थम् ?

**अनितेरन्तग्रहणम् संबुद्ध्यर्थम् ॥ १ ॥**

अनितेरन्तग्रहणं क्रियते 'संबुद्ध्यर्थम्' । हे प्राण् ।

अपर आह--

**अनितेरन्तः पदान्तस्य**

अनितेरन्तग्रहणं क्रियते, 'पदान्तस्य ने'ति प्रतिषेधः प्राप्नोति तद्बाधनार्थम् ।

**यो वा तस्मादनन्तरः ।**

---

प्र०— नेर्गदनद० । तदिति । तत्र हि निमित्तयो रेफपकारयोर्निमित्तनश्च नकार-स्याऽटा व्यवाय आश्रितः । इह तु नेः परे गदादयो व्यवहिता इति णत्वाप्रसङ्गः । तत्रापीति । यत्र यन्निमित्तं तत्राऽस्याऽडादिभिर्व्यवाये णत्वमिति गदादीनामपि निमित्तत्वसद्भावाद्व्यवाये णत्वं सिध्यतीत्यर्थः ।

अनितेः । सम्बुद्ध्यर्थमिति । अनितेर्नकारोऽन्त एवेऽत्यन्तग्रहणसामर्थ्यात् पदस्याऽन्तो विज्ञायत इति 'पदान्तस्ये'ति प्रतिषेधो योगविभागेन बाध्यते । अपर आहेति—पाठभेदं दर्शयति । वस्तुतस्तु नाऽस्ति भेदः । यो वा तस्मादिति । अस्मिन्

---

उ०-निरानीत्यादौ णत्वस्याप्रवृत्त्यर्थं, तदुपसर्गत्वादर्थवत्त्वाच्चेति परास्तं, भाष्यप्रामाण्येन तथा-प्रयोगानभिधानादिति दिक् ।

नेर्गद० । कार्यिशब्देन नकारो गृह्यत इत्याह—नकारस्येति । 'नेः परे गदादय' इति पाठः । यत्र यदिति । पूर्वपरस्यापि निमित्तत्वात्तन्निमित्तनिमित्तिनोरटा व्यवाये णत्वमित्यर्थः समान इत्यर्थः ।

अनितेरन्तः । संबुद्ध्यर्थत्वेऽपि योगविभागस्य पूर्वसूत्रेऽन्त इत्यपकृष्यते इत्याह—यो वेति । बाधाद्यर्थाऽर्थे । सामर्थ्यादिति । अनितेः समीपे यो रेफस्तस्मात्तस्येति भाष्यो-

---

* १. ४. ७१

अथवा—अयमन्तशब्दोऽस्त्येवाऽवयववाची । तद्यथा—वस्त्रान्तो वसनान्त इति । अस्ति सामीप्ये वर्त्तते । तद्यथा—उदकान्तं गतः । उदकसमीपं गत इति गम्यते । तद्यः सामीप्ये वर्त्तते तस्य ग्रहणं विज्ञायते । अनितेः समीपे यो रेफस्तस्मान्नस्य यथा स्यात्—प्राणिति । इह मा भूत्—पर्यनिति ।

**उभौ साभ्यासस्य ॥ ८ । ४ । २१ ॥**

**साभ्यासस्य द्वयोरिष्टम्**

साभ्यासस्य द्वयोर्णत्वमिष्यते, प्राणिणिषति ।

**हन्तेरत्पूर्वस्य ॥ ८ । ४ । २२ ॥**

हन्तेरत्पूर्वस्येति किमर्थम् ? प्रघ्नन्ति, परिघ्नन्ति ।

**हन्तेरत्पूर्वस्य वचने उक्तम्**

किमुक्तम् ? 'कुव्यवाये हादेशेषु प्रतिषेध' इति* ।

प्र०—पक्षे 'प्रा'णिति सम्बुद्ध्यर्थमावर्त्तनीयमन्तग्रहणम् । तद्यः सामीप्य इति । एकवर्णव्यवधानं च सामर्थ्यादाश्रीयते । 'पर्य्यनिती'त्यत्र तु वर्णद्वयव्यवधानाण्णत्वाऽभावः ।

उभौ साभ्यास । साभ्यासस्य द्वयोरिति—उभौग्रहणस्य प्रयोजनं दर्शयति । उभावित्यस्मिन्नसति साऽभ्यासस्यानितेर्णो भवतीत्युच्यमाने वचनसामर्थ्याच्च पूर्वत्रासिद्धीयमद्विर्वचन इत्यनाश्रीयमाणेऽकृतणत्वस्य द्विर्वचने कृतेऽनन्तरस्य पूर्वेण णत्वस्य सिद्धत्वाद्व्यवहितार्थमिदं णत्वं स्यात् । अनन्तरस्य तु तक्रकौण्डिन्यन्यायेन न स्यादित्युभावित्युच्यते ।

उ०—क्तेरेकादेशस्य परादिवद्भावेन रेफस्याऽनितिसमीपत्वाऽक्षतेरिदं किमर्थमिति चिन्त्यम् । यत्तु 'न पदान्त'सूत्रे नव्यैर्निमित्तसमीपस्थो योऽनितेर्नकार इति, निमित्तसमीपस्थाऽनितेर्यो नस्तस्य णत्वमिति द्वेधा व्याख्यानं भाष्ये स्थितमित्युक्तं, तत्कथं भाष्याक्षरस्वरससिद्धमिति चिन्त्यम् । अन्तशब्दश्चाऽत्राऽव्यवहितसमीपवाची, व्याख्यानात् । प्राणितीत्यत्र स्थानिवत्त्वं [illegible] न, अपूर्वविधित्वात्पञ्चमीसमासस्याऽनित्यत्वाच्चेति दिक् । भाष्ये—समीपे यो रेफ इति । 'अन्त' इति विभक्त्यन्तरेण विपरिणम्यते इति भावः ।

उभौ साभ्या० । वचनसामर्थ्याच्चेति । अनेन तदनित्यत्वस्यापि ज्ञापनादिति भावः । 'साभ्यासस्ये'ति च गुणः कृतात्मसंस्कार' इति न्यायेनाऽनितेर्विशेषणं, न नस्य । एतेनाऽभ्याससहितनस्येत्यर्थे रमागमेन रोपवयोरिवाऽभ्यासनिवृत्त्यापत्तिरित्यपास्तम् । तक्रकौण्डिन्येति । वस्तुतस्तु एवं हि 'न' इत्यस्य पदान्तस्याधिकारादुभयोरिति वदेत्, अपूर्णत्वेन [illegible] । अतएव 'यो रेफस्तस्मात्परस्ये'ति 'अनिते'रित्यत्र भाष्ये उक्तम् । [illegible] पूर्वेण सिद्धिरित्यपि चिन्त्यम् । [illegible] भाष्यं [illegible] । तथाहि—अभ्यासस्यानर्थक[illegible] व्यवहितत्वात् पूर्वेणैवास्यापि सिद्धिः । अत्र

* ८. ४. १.

## उपसर्गादनोत्परः ॥ ८ । ४ । २८ ॥

कथमिदं विज्ञायते—ओकारात्परः—ओत्परः, न ओत्परोऽनोत्पर इति, आहोस्विदोकारः परोस्मात्सोऽयमोत्परः, न ओत्परोऽनोत्पर इति ? किं चातः ? यदि विज्ञायते—'ओकारात्पर ओत्परः, न ओत्परोऽनोत्पर इति, 'प्र नो मुञ्चतम्' अत्रापि प्राप्नोति । अथ विज्ञायते—ओकारः परोऽस्मात्सोऽयमोत्परः, न ओत्परोऽनोत्पर इति, 'प्राणो वनिर्देवकृता' अत्र न प्राप्नोति । उभयथा च प्रक्रमे दोषो भवति । प्र नः मुञ्चतम्—प्र नो मुञ्चतम् । प्र उ नः—प्रोनः ।

**भाविन्यप्योति नेष्यते ॥ १ ॥**

भाविन्यप्योकारे णत्वं नेष्यते । एवं तह्युपसर्गाद्बहुलमिति वक्तव्यम् ।

अनितेरन्तः पदान्तस्य, यो वा तस्मादनन्तरः ।
साभ्यासस्य द्वयोरिष्टम् भाविन्यप्योति नेष्यते ॥ १ ॥†

---

प्र०- उपसर्गादनोत्परः । उभयथा च प्रक्रम इति । प्रक्रमो ग्रन्थपरिचयाऽर्थः क्रमपाठः । भाविन्यपीति । यद्यपि क्रमपाठे ओकारो नास्ति, संहितापाठे तु भावीति णत्वं न प्रवर्त्तते, सांप्रतिकसद्भावे तु भाविगतिर्दुर्लभेति पाठान्तरमाश्रितम् । अथवो-भयथा च प्रक्रमे इत्यस्याऽयमर्थः,—उभयथा चाश्रीयमाणे इह दोष इति । भाविनीति । ओकारार्थ उकार ओशब्देनोच्यत इत्यर्थः । मुख्यार्थसम्भवे गौणार्थग्रहणमयुक्तमिति पाठान्तरसमाश्रयः ।

---

उ०—सूत्रेऽभ्यासेनेत्यभ्यासस्येति वा करणेऽपि द्वयोर्न सिद्धिः । अतः साभ्यासस्येत्युक्तमिति । अत एव वार्तिककृता साभ्यासस्येति पदं गृहीत्वा 'द्वयोरिष्ट'मित्युक्तम् । द्वयोर्ग्रहणप्रयोजनं तु 'एकः पूर्वपरयो'रित्यत्र भाष्ये उक्तम्—आदेशद्वयलाभार्थमिति । अन्यथा कृत्वा एकवच सकृत्प्रवृत्त्यैवोभयोर्निवृत्तौ स्थान्यभावादेव पुनः प्रवृत्त्यभावेनादेशद्वयलाभो न स्यात् । एवं च भाष्ययोर्न विरोध इति दिक् ।

उपसर्गादनोत्परः । भाष्ये—उभयथा चेति । तन्त्रेण समासद्वयाङ्गीकारे इत्यर्थः । प्रक्रमे दोष इत्यत्र 'प्रक्रम'शब्दार्थमाह—ग्रन्थेति । क्रमपाठ इति । पदसंहितयोर्द्वयोरपि बुद्ध्यारोहणाभ्यासार्थः पाठः क्रमपाठ इत्युच्यते । अत्र व्याख्याने 'क्रमे' इत्येव सिद्धे 'प्र'शब्दो व्यर्थोऽतः पक्षान्तरमाह—अथवेति । ओकारार्थ इति । ओकार उकारश्च ओकारशब्देनोच्यत इत्यर्थः । मुख्येऽव्यवहितग्रहणमुपलक्षणं बोध्यम् । अत्र पाठान्तराश्रयणे बीजमाह—

---

† कारिकेयं [illegible] पठ्यते । अस्यां हि पादत्रयेऽनितेरन्तः सूत्रस्य व्याख्यानम्, तृतीयश्चतुर्थो साभ्यासस्य, चतुर्थः उपसर्गादनोत्परस्येति [illegible] गृहीता । यद्यप्यस्याः प्रथमः पादो [illegible] पुनरपि भाष्याविरोधाय मया कारिकामूलपर्यंषे पृथक् प्रकाशितः ।

## कृत्यचः ॥ ८ । ४ । २९ ॥

### कृत्स्थस्य णत्वे निर्विण्णस्योपसंख्यानम् ॥ १ ॥

कृत्स्थस्य णत्वे निर्विण्णस्योपसङ्ख्यानं कर्तव्यम् । निर्विण्णो*ऽहमनेन वासेन ।

## णेर्विभाषा ॥ ८ । ४ । ३० ॥

### णेर्विभाषायां साधनव्यवाये उपसंख्यानम् ॥ १ ॥

णेर्विभाषायां साधनव्यवाये उपसंख्यानं कर्तव्यम् । प्राप्यमाणम्, प्राप्यमानम् ।

### तद्विधानात्सिद्धम् ॥ २ ॥

विहितविशेषणं णिग्रहणं 'ण्यन्ताद्यो विहित' इति ।

### अड्धिकाराद्वा ॥ ३ ॥

अथ वाऽड्व्यवाय इति† वर्तते ।

## इजादेः सनुमः ॥ ८ । ४ । ३२ ॥

किमर्थमिदमुच्यते न 'कृत्यचः' [ २९ ] इत्येव सिद्धम् ?

नियमार्थोऽयमारम्भः । इजादेरेव च सनुम्कान्नान्यस्मात्सनुम्कादिति । क्व मा भूत् ? प्रमङ्गनम्, परिमङ्गनम् ।

प्र०— कृत्यचः । निर्विण्णस्येति । अचः परः कृत्स्थो मकारो न भवतीति वचनम् । तत्र परस्य णत्वं, पूर्वस्य ष्टुत्वम् ।

णेर्वि० । णेरिति पञ्चमीनिर्देशादनन्तर एव कृति णत्वं स्यादिति णेरिति वार्त्तिकारम्भः । साधनव्यवाय इति । साधनाभिधायिनि सार्वधातुके विधानाद्विकरणः 'साधन'शब्देनोच्यते । विकरणः साधनाभिधायीति केषांचिन्मतेन वा । तद्विधानादिति । सूत्रेषु यथेष्टं वाक्यशेषाध्याहाराण्ण्यन्ताद्यो विहितः कृदित्याश्रीयते । अड्धिकाराद्वेति । 'ण्यन्तात्परो यः कृ'दित्येवमप्याश्रीयमाणे न दोषो, ण्यन्तस्य कृतां चाड्व्यवायेपि णत्वाभ्यनुज्ञानात् ।

इजादे:० । सनुमो णत्व इति । नियमे प्राप्तबाधः, सिद्धस्य पुनरुपादानादनु-

उ०—मुख्यार्थेति । पाठान्तरेति । उभयथाचार्येण शिष्येभ्यः सूत्रं पठितमिति भावः । यद्वा पाठान्तरशब्देन न्यासान्तरम् ।

णेर्विभाषा । साधनाभिधायिनीति । निमित्तनिमित्तिनोरभेदोपचाराद् गौणोऽयं व्यपदेश इत्यर्थः । विकरण इति । अत्र पक्षे साधनशब्देन साधनाभिधायी उच्यते । तस्मादिति परिभाषायां सत्यां कथं विहितविशेषणलाभोऽत आह—सूत्रेष्विति । विहितपदाध्याहारसामर्थ्यात्तस्या अत्राऽप्रवृत्तिरिति भावः । परिभाषाप्रवृत्त्यभिप्रायेण पक्षान्तरमित्याह—ण्यन्तात्पर इति ।

* ८. ४. ४१. † ८. ४. २.

**सनुमो णत्वेऽवधारणाऽप्रसिद्धिर्विधेयभावात् ॥ १ ॥**

सनुमो णत्वेऽवधारणस्याऽप्राप्तिः । किं कारणम् ? 'विधेयभावात्' । कैमर्थ्यान्नियमो भवति ? विधेयं नास्तीति कृत्वा । इह चाऽस्ति विधेयम् । किम् ? ण्यन्ताद्विभाषा प्राप्ता† तत्र नित्यं णत्वं विधेयम् । तत्राऽपूर्वो विधिरस्तु नियमोऽस्त्विति, अपूर्वो विधिर्भविष्यति न नियमः ।

**सिद्धं तु प्रतिषेधाधिकारे सनुम्ग्रहणात् ॥ २ ॥**

सिद्धमेतत् । कथम् ? 'प्रतिषेधाधिकारे सनुम्ग्रहणात्' । प्रतिषेधाधिकारे सनुम्ग्रहणं कर्त्तव्यम् । 'न भाभूपूकमिगमिप्यायीवेपिसनुमा'मिति‡ । इहापि तर्हि न प्राप्नोति—प्रेङ्खणम्, प्रेङ्खणीयम्+ ।

**कृत्स्थस्य च णत्व इजादेः सनुमो ग्रहणम् ॥ ३ ॥**

कृत्स्थस्य च णत्वे× इजादेः सनुमो ग्रहणं कर्त्तव्यम् । सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु । ननु चोक्तं—'सनुमो णत्वेऽवधारणाप्रसिद्धिर्विधेयभावा'दिति । नैष दोषः । 'हल' इति वर्त्तते । क्व प्रकृतम् ? 'हलश्चेजुपधात्' [३१] इति । तद्वै तत्रादिविशेषणमन्तविशेषणेन चेहार्थः । कथं पुनर्ज्ञायते—'तत्रादिविशेषण'मिति ? 'इजुपधा'दित्युच्यते तत्र नाऽर्थोन्तविशेषणेन । तत्रादिविशेषणं सदिहाऽन्तविशेषणं भविष्यति । कथम् ? 'इजादे'रित्युच्यते तत्र नाऽर्थ आदिविशेषणेन । अथवा 'इजादेः सनुमः' [ ८. ४. ३२ ] इत्यत्र 'णेर्विभाषा' [ ३० ] इत्येतदनुवर्त्तिष्यते ।

प्र०-वाददोषश्च । विधौ तु न प्राप्तबाधो नाप्यनुवाददोष इति विधिनियमसंभवे विधिरेव ज्यायानिति भावः । सिद्धं त्विति । तेन 'प्रमङ्गन'मित्यादौ णत्वं न भवति । तत 'इजादेः सनुम' इति योगो विध्यर्थः सम्पद्यते । तत्र नाऽर्थोऽन्तविशेषणेनेति । इजुपधस्य हलन्तत्वाऽव्यभिचारात्सामर्थ्यात्तत्रादिविशेषणं हल्ग्रहणम् । तत्र नार्थ इति । इजादेर्हलादित्वाऽसम्भवादन्तविशेषणं हल्ग्रहणं सम्पद्यत इति 'हलन्तादिजादेः सनुमो यो विहितः कृत्तत्रस्थस्ये'त्येवं विज्ञायमाने ण्यन्ताद्विध्यर्थोऽयं योगो न भवतीति नियमाय सम्पद्यते ।

उ०- इजादेः सनुमः । नियमादिप्रयोजनमाह—नियम इति । विध्यर्थे इति । सर्वत्र णत्वप्रतिषेधाऽप्राप्तिरिति भावः ।

† ८. ४. ३०. ‡ ८. ४. ३४. + प्रेङ्खणमिति पाठान्तरम् । × ८. ४. २९.

## न भाभूपूकमिगमिप्यायीवेपाम् ॥ ८ । ४ । ३४ ॥

### भादिषु पूञ्ग्रहणम् ॥ १ ॥

भादिषु पूञ्ग्रहणं कर्त्तव्यम् । इह माभूत्—प्रपवणं सोमस्येति ।

### ण्यन्तस्य चोपसंख्यानम् ॥ २ ॥

ण्यन्तस्य चोपसंख्यानं कर्त्तव्यम् । किं पूञ एव ? 'ने'त्याह । अविशेषेण । प्रभापनम्, परिभापनम् ।

## षात्पदान्तात् ॥ ८ । ४ । ३५ ॥

### षात्पदादिपरवचनम् ॥ १ ॥

षात्पदादिपरग्रहणं कर्त्तव्यम् । इहैव यथा स्यात्—निष्पानम्, दुष्पानम् । इह मा भूत्—ससर्पिष्केण, सयजुष्केण* । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । नैवं विज्ञायते—'पदस्यान्तः पदान्तः, पदन्ता'दिति । कथं तर्हि ? पदेऽन्तः पदान्तः, पदान्तादिति ।

## नशेः षान्तस्य ॥ ८ । ४ । ३६ ॥

### नशेरशः ॥ १ ॥

नशेरश इति वक्तव्यम् । इहापि यथा स्यात्—प्रनङ्क्ष्यति । परिनङ्क्ष्यति† । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । इह नशेः ष इतीयता सिद्धम्, सोऽयमेवं सिद्धे सति यदन्तग्रहणं करोति तस्यैतत्प्रयोजनं षान्तभूतपूर्वस्यापि यथा स्यात् ।

---

प्र०— न भा० । ण्यन्तस्य चेति । ण्यन्तस्य धात्वन्तरत्वान्निषेधो न प्राप्नोतीति वचनम् ।

षात्प० । षात्पदादीति । 'पदादौ परतो यः षकारस्तस्मात्परस्य पदस्य यो नकारस्तस्य णत्वं न भवती'त्यर्थः । पदेऽन्त इति । 'षात्पदा'दित्येन षकारेण पदस्य विशेषणात्षान्तात्पदादीति लब्धेऽर्थेऽन्तग्रहणात्सप्तमीसमास आश्रीयते ।

नशेः षान्त० । प्रनङ्क्ष्यतीति । नशेः षत्वे 'षढोः कः सी'ति कत्वे कृते रूपं, 'मस्जिनशोर्झली'ति नुमागमः । स च षत्वात्पूर्वमेव प्रवर्त्तते, पूर्वत्राऽसिद्धमिति वचनात् । षान्तेति । अन्तग्रहणसामर्थ्याद्यश्च संप्रति षान्तो यश्च भूतपूर्वस्तस्य सर्वस्य णत्वनिषेधः ।

---

उ०—न भाभू० । धात्वन्तरत्वादिति । 'प्रभायमान'मित्यादिसिद्धये 'भादिभ्य' इति विहित-विशेषणमिति भावः ।

षात्पदा० । सप्तमीसमास इति । 'पदे' इत्येव तु नोक्तं, विधेयविशेषणत्वशङ्कावारणार्थत्वात् । अत्र पक्षे 'निष्पान'मित्यादौ सुबुत्पत्त्यनन्तरमेव समासोऽङ्गीकार्यः । पदग्रहणं वा तद्योग्यपरम् ।

---

* 'सुसर्पिष्केण' 'अयजुष्केण' पा० । † ८. २. ३६; ४१; ७. १. ६०.

## पदव्यवायेऽपि ॥ ८ । ४ । ३८ ॥

## पदव्यवायेऽतद्धिते ॥ १ ॥

पदव्यवायेऽतद्धित इति वक्तव्यम् । इह मा भूत्—आर्द्रगोमयेण, शुष्कगोमयेण । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । नैवं विज्ञायते—'पदेन व्यवायः पदव्यवायः, पदव्यवाये' इति । कथं तर्हि ? 'पदे व्यवायः पदव्यवायः, पदव्यवाये' इति ।

## क्षुभ्नादिषु च ॥ ८ । ४ । ३९ ॥

अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः ।

## स्तोः श्चुना श्चुः ॥ ८ । ४ । ४० ॥

किमर्थं तृतीयानिर्देशः क्रियते न श्चावित्येवोच्येत ? आनन्तर्यमात्रे श्चुत्वं यथा स्यात्—यज्ञः, राज्ञः याच्ञा । अथ संख्यातानुदेशः* कस्मान्न भवति ? आचार्यप्रवृत्तिर्ज्ञापयति—संख्यातानुदेशो नेहेति यदयं शात्प्रतिषेधं शास्ति† ।

## ष्टुना ष्टुः ॥ ८ । ४ । ४१ ॥

किमर्थं तृतीयानिर्देशः क्रियते न ष्टावित्येवोच्येत ? आनन्तर्यमात्रे ष्टुत्वं यथा स्यात्—पेष्टा, लेढा । अथ संख्यातानुदेशः कस्मान्न भवति ? आचार्यप्रवृत्ति-

---

प्र०- क्षुभ्नादिषु च । अविहितेति । 'न भाभूपूकमिगमी'त्यादयस्तु योगा अस्यैव प्रपञ्चार्थाः ।

---

उ०- पदव्यवायेऽपि । भाष्ये—अतद्धित इति । व्यवधायकपदस्य तद्धितभिन्नपदत्वं पदव्यवाय इति । अविशेषणत्वेऽपि सौत्रत्वाद्वृत्तिरिति भावः । तस्य तु न विशेषणम्, आर्द्रगोमयेणेत्युदाहरणाऽसङ्गतेः । पदे व्यवाय इति । अतएव 'रम्यवीणे'त्यादौ 'प्रातिपदिकान्ते'ति णत्वं भवत्येव । वार्तिकमतेऽपि एकत्वावयवतया णत्वाश्रयातिरिक्ततद्धितभिन्ने परतः पदेन व्यवाये नेत्यर्थान्न दोषः । न चोत्तरपदत्वे चापदादिविधाविति निषेधादुदाहरणदौर्लभ्यम् । अपदादिविधाविति पर्युदासेन पदान्तविधावेव निषेधप्रवृत्तेः, प्रत्यासत्त्योत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तेश्च, 'असर्वनामस्थाने यचि भ'मिति तत्प्रत्याख्यानप्रकारोऽपि योगविभागस्येष्टसिद्ध्यर्थतया पदान्तविधिविषय एवेति भावः ।

क्षुभ्नादि० अविहितेति । अविहितो लक्षणेन णत्वप्रतिषेधो यस्येत्यर्थः । गिरिनद्यादिपाठे णत्वप्रतिषेधशब्देनाऽर्थाभावमात्रमनूद्यते । 'अविहितलक्षण'इत्यस्याऽकृतशास्त्र इत्यर्थः ।

स्तोः श्चु० । आनन्तर्यमात्रे इति । पूर्वस्मिन् परस्मिंश्चेत्यर्थः । अत्र संयोग इत्यध्याह्रियते । तेन 'चित'मित्यादौ न दोषः । अतएव 'चितत्क्षमाति', 'उच्चाटितम्' इत्यादिनिर्देशाः सङ्गच्छन्ते ।

---

* १. १. १०. † ८. ४. ४४.

ज्ञापयति 'नेह संख्यातानुदेशो भवती'ति यदयं 'तोः षि' [ ८. ४. ४३ ] इति प्रतिषेधं शास्ति।

न पदान्ताट्टोरनाम् ॥ ८ । ४ । ४२ ॥

अनामिति किमर्थम् ? षण्णां भवति काश्यपः। अत्यल्पमिदमुच्यते—'अना'मिति। अनाम्नवतिनगरीणां चेति वक्तव्यम्। षण्णाम्, षण्णवतिः, षण्णगर्यः।

यरोऽनुनासिकेऽनुनासिको वा ॥ ८ । ४ । ४५ ॥

यरोऽनुनासिके प्रत्यये भाषायां नित्यवचनम् ॥ १ ॥

यरोऽनुनासिके प्रत्यये भाषायां नित्यमिति च वक्तव्यम्। वाङ्मयम्। त्वङ्मयमिति।

अनचि च ॥ ८ । ४ । ४७ ॥

द्विर्वचने यणो मयः ॥ १ ॥

द्विर्वचने यणो मय इति वक्तव्यम्। किमुदाहरणम् ? यदि यण इति पञ्चमी मय इति षष्ठी, उल्क्का वल्म्मीकमित्युदाहरणम्। अथ मय इति पञ्चमी यण इति षष्ठी दध्य्यत्र मध्व्वत्रेत्युदाहरणम्।

शरः खयः ॥ २ ॥

शरः खय इति वक्तव्यम्। किमुदाहरणम् ? यदि'शर' इति पञ्चमी'खय' इति षष्ठी, 'स्थ्थाली स्थ्थाते'त्युदाहरणम्। अथ 'खय' इति पञ्चमी 'शर' इति षष्ठी, वत्स्सक्षीरम् अप्स्सरा इत्युदाहरणम्।

अवसाने च ॥ ३ ॥

अवसाने च द्वे भवत इति वक्तव्यम्। वाक्क्, वाक्। त्वक्क्, त्वक्।

---

प्र०— अनचि च। नायं प्रसज्यप्रतिषेध इति। पाठोऽयं लेखकप्रमादात्कृष्टः,—पर्युदासे ह्यच्सदृशस्य वर्णान्तरस्य निमित्तत्वेनोपादानादवसाने द्विर्वचनस्याऽप्रसङ्गात्। तस्मात् "नायं पर्युदासो यदन्यदच इति। किं तर्हि ? प्रसज्यप्रतिषेधोऽचि ने"त्ययं पाठः। तत्र प्रसज्यप्रतिषेधे विधिरनुमीयते। अच उत्तरस्य यरो नूनं द्विर्वचनं

उ०—अनचि च। भाष्ये—क्षीरमिति। अव्युत्पत्तिपक्षे इदम्। व्युत्पत्तिपक्षे घसः क्षीरन्प्रत्यये अल्लोपे पूर्वत्रासिद्धमद्विर्वचने इति चर्त्वे त्रयः परत्वं बोध्यम्। एतेन 'द्वित्वे परसवर्णत्वं सिद्धं वक्तव्य'मिति वचनसामर्थ्यादस्य वर्णद्वित्वेऽप्रवृत्तेः प्रवृत्तौ वा द्वित्वभाज एवाऽसिद्धत्वनिषेध-कमेतदित्यपास्तम्। मानाभावाच्च। तस्मादस्यैव तत्रपक्ष इति बोध्यम्। 'दरोऽचा'ति तु सौत्रस्यैव निषेधः। तदेव ध्वनयन्नाह—वाक् इति। अन्यथा चर्त्वस्याऽसिद्धत्वाद् गस्यैव द्वित्वेऽन्त्यस्य वाऽवसान इति चर्त्वे पूर्वत्र गस्यैव श्रवणं स्यात्, न च तन्नास्ति 'खरि'चेति चर्त्वं, वाऽवसान इत्यस्यासिद्धत्वेन खर्परत्वाभावात्। प्रकरणे 'प्रकरणमसिद्ध'मिति पक्ष-

## पदव्यवायेऽपि ॥ ८ । ४ । ३८ ॥

### पदव्यवायेऽतद्धिते ॥ १ ॥

पदव्यवायेऽतद्धित इति वक्तव्यम् । इह मा भूत्—आर्द्रगोमयेण, शुष्कगोमयेण । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् । नैवं विज्ञायते—'पदेन व्यवायः पदव्यवायः, पदव्यवाये' इति । कथं तर्हि ? 'पदे व्यवायः पदव्यवायः, पदव्यवाये' इति ।

## क्षुभ्नादिषु च ॥ ८ । ४ । ३९ ॥

अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्यः ।

## स्तोः श्चुना श्चुः ॥ ८ । ४ । ४० ॥

किमर्थं तृतीयानिर्देशः क्रियते न श्चावित्येवोच्येत ? आनन्तर्यमात्रे श्चुत्वं यथा स्यात्—यज्ञः, राज्ञः याच्ञा । अथ संख्यातानुदेशः* कस्मान्न भवति ? आचार्यप्रवृत्तिर्ज्ञापयति—संख्यातानुदेशो नेहेति यदयं शात्प्रतिषेधं शास्ति† ।

## ष्टुना ष्टुः ॥ ८ । ४ । ४१ ॥

किमर्थं तृतीयानिर्देशः क्रियते न ष्टावित्येवोच्येत ? आनन्तर्यमात्रे ष्टुत्वं यथा स्यात्—पेष्टा, लेढा । अथ संख्यातानुदेशः कस्मान्न भवति ? आचार्यप्रवृत्ति-

प्र०- क्षुभ्नादिषु च । अविहितेति । 'न भाभूपूकमिगमी'त्यादयस्तु योगा अस्यैव प्रपञ्चार्थाः ।

उ०- पदव्यवायेऽपि । भाष्ये—अतद्धित इति । व्यवधायकपदस्य तद्धितभिन्नपदत्वं पदव्यवाय इति । सविशेषणत्वेऽपि सौत्रत्वाद्वृत्तिरिति भावः । तस्य तु न विशेषणम्, आर्द्रगोमयेणेत्युदाहरणाऽसङ्गतेः । पदे व्यवाय इति । अतएव 'रम्यवीणे'त्यादौ 'प्रातिपदिकान्ते'ति णत्वं भवत्येव । वार्तिकमतेऽपि एकवाक्यतया णत्वाश्रयातिरिक्ततद्धितभिन्ने परतः पदेन व्यवाये नेत्यर्थान्न दोषः । न चोत्तरपदत्वे चापदादिविधाविति निषेधादुदाहरणदौर्लभ्यम् । अपदादिविधाविति पर्युदासेन पदान्तविधावेव निषेधप्रवृत्तेः, प्रत्यासत्त्योत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तेश्च, 'असर्वनामस्थाने यचि भ'मिति तद्व्याख्यानप्रकारोऽपि योगविभागस्येष्टसिद्ध्यर्थतया पदान्तविधिविषय एवेति भावः ।

क्षुभ्नादि० अविहितेति । अविहितो लक्षणेन णत्वप्रतिषेधो यस्येत्यर्थः । गणपाठे णत्वप्रतिषेधदर्शनाऽदर्शनाभ्यां तदनुमीयते । 'अविहितलक्षण' इत्यस्याऽकृतगण इत्यर्थः ।

स्तोः श्चु० । आनन्तर्यमात्रे इति । पूर्वस्मिन् परस्मिंश्चेत्यर्थः । अत्र संयोग इत्यध्याह्रियते । तेन 'चित'मित्यादौ न दोषः । अतएव 'पितृभ्रातृषु', 'दरदादिभ्य' इत्यादि निर्देशाः सङ्गच्छन्ते ।

* १. ३. १०. † ८. ४. ४४.

ज्ञापयति 'नेह संख्यातानुदेशो भवती'ति यदयं 'तोः षि' [ ८. ४. ४३ ] इति प्रतिषेधं शास्ति।

न पदान्ताट्टोरनाम् ॥ ८ । ४ । ४२ ॥

अनामिति किमर्थम् ? षण्णां भवति काश्यपः। अत्यल्पमिदमुच्यते—'अना'मिति। अनाम्नवतिनगरीणां चेति वक्तव्यम्। षण्णाम्, षण्णवतिः, षण्णगर्यः।

यरोऽनुनासिकेऽनुनासिको वा ॥ ८ । ४ । ४५ ॥

यरोऽनुनासिके प्रत्यये भाषायां नित्यवचनम् ॥ १ ॥

यरोऽनुनासिके प्रत्यये भाषायां नित्यमिति च वक्तव्यम्। वाङ्मयम्। त्वङ्मयमिति।

अनचि च ॥ ८ । ४ । ४७ ॥

द्विर्वचने यणो मयः ॥ १ ॥

द्विर्वचने यणो मय इति वक्तव्यम्। किमुदाहरणम् ? यदि यण इति पञ्चमी मय इति षष्ठी, उल्का वल्मीकमित्युदाहरणम्। अथ मय इति पञ्चमी यण इति षष्ठी दध्य्यत्र मध्व्वत्रेत्युदाहरणम्।

शरः खयः ॥ २ ॥

शरः खय इति वक्तव्यम्। किमुदाहरणम् ? यदि 'शर' इति पञ्चमी 'खय' इति षष्ठी, 'स्थ्थाली स्थ्थाते'त्युदाहरणम्। अथ 'खय' इति पञ्चमी 'शर' इति षष्ठी, वत्स्सक्ष्षीरम् अप्स्सरा इत्युदाहरणम्।

अवसाने च ॥ ३ ॥

अवसाने च द्वे भवत इति वक्तव्यम्। वाक्क्, वाक्। त्वक्क्, त्वक्।

---

प्र०— अनचि च। नायं प्रसज्यप्रतिषेध इति। पाठोऽयं लेखकप्रमादात्रष्टः,—पर्युदासे ह्यच्सदृशस्य वर्णान्तरस्य निमित्तत्वेनोपादानादवसाने द्विर्वचनस्याऽप्रसङ्गात्। तस्मात् "नायं पर्युदासो यदन्यदच इति। किं तर्हि ? प्रसज्यप्रतिषेधोऽचि ने"त्ययं पाठः। तत्र प्रसज्यप्रतिषेधे विधिरनुमीयते। अच उत्तरस्य यरो नूनं द्विर्वचनं

---

उ०—अनचि च। भाष्ये—क्षीरमिति। अव्युत्पत्तिपक्षे इदम्। व्युत्पत्तिपक्षे घसः कीरन्प्रत्यये अल्लोपे पूर्वत्रासिद्धमद्वित्वे इति चर्त्वे ख्यः परत्वं बोध्यम्। एतेन 'द्वित्वे परसवर्णत्वं सिद्धं वक्तव्य'मिति वचनसामर्थ्यादस्य वर्णद्वित्वेऽप्रवृत्तेः प्रवृत्तौ वा द्वित्वभाज एवाऽसिद्धत्वनिषेध-फलमेतदित्यपास्तम्। मानाभावाच्च। तस्मादस्यैव तत्प्रपञ्च इति बोध्यम्। 'शरोऽची'ति तु सौत्रस्यैव निषेधः। तदेव ध्वनयन्नाह—वाक्क् इति। अन्यथा चर्त्वस्याऽसिद्धत्वाद् गस्यैव द्वित्वेऽन्त्यस्य वाऽवसान इति चर्त्वे पूर्वत्र गस्यैव श्रवणं स्यात्, न च तत्रापि 'खरि'चेति चर्त्वं, वाऽवसान इत्यस्यासिद्धत्वेन खर्परत्वाऽभावात्। प्रकरणे 'प्रकरणमसिद्ध'मिति पक्ष०

स्रुक्क् स्रुक् । तत्तर्हि वक्तव्यम् ? न वक्तव्यम् ।† नायं प्रसज्यप्रतिषेधः—अचि ने'ति । किं तर्हि ? पर्युदासोऽयं 'यदन्यदच' इति ।

**नादिन्याक्रोशे पुत्रस्य ॥ ८ । ४ । ४८ ॥**

**नादिन्याक्रोशे पुत्रस्येति तत्परे च ॥ १ ॥**

नादिन्याक्रोशे पुत्रस्येत्यत्र 'तत्परे चे'ति वक्तव्यम् । पुत्रपुत्रादिनि ।

**वा हतजग्धपरे च ॥ २ ॥**

वा हतजग्धपरे इति वक्तव्यम् । पुत्रहती, पुत्त्रहती । पुत्रजग्धी । पुत्त्रजग्धी ।

**चयो द्वितीयाः शरि पौष्करसादेः ॥ ३ ॥**

चयो द्वितीया भवन्ति शरि परतः पौष्करसादेराचार्यस्य मतेन । वथ्सः, ख्षीरम्, अफ्सराः ।

**अभ्यासे चर्च ॥ ८ । ४ । ५४ ॥**

प्रकृतिचरां प्रकृतिचरो भवन्ति । चिचीषति । प्रकृतिजशां प्रकृतिजशश्च भवन्ति । जिजनिषति, बुबुधे, ददौ ।

---

प्र०—सर्वत्राऽस्ति यतोऽचि प्रतिषिध्यते । एवं चाऽनैमित्तिकं द्विर्वचनमवसानेऽपि भवति । वेत्यधिकाराच्च वा भवति ।

नादिन्या० । वा हतजग्धपर इति । हतं जग्धं च तत्परं चेति विशेषणसमासो, राजदन्तादित्वाच्च परशब्दस्य परनिपातः । पुत्रहतीति । बहुव्रीहिः । 'अस्वाङ्गपूर्वपदाद्वे'ति वा ङीप् ।

---

उ०—स्वस्मुच्चय इति स्पष्टमेव 'असमासेऽपी'ति सूत्रे कैयटे । न चाऽसिद्धत्वाभावेऽपि वावसान इति चर्त्वस्याऽसिद्धत्वाद् गकारे झशि परे झलां जशिति जश्त्वे उक्तरीत्यैव चर्त्वाभावे गश्रवणं दुर्वारम् । अस्मादेव भाष्योदाहरणात्पूर्वत्रासिद्धमित्यस्य द्वित्वे कर्तव्येऽसिद्धत्वं न, कृते च तस्मिन्प्रत्यासत्त्या द्वित्वाश्रयस्य कार्ये कर्तव्ये द्वित्वातिरिक्तस्यासिद्धत्वं नेत्यर्थान्न दोष इत्याहुः । इत्ययं पाठ इति । पूर्वपाठेऽपि 'न वक्तव्य'मित्यस्य 'सूत्रेण सिद्धेरि'ति शेषः । तत्खण्डयति आरंभवादीति योजनीयमित्यन्ये । अच उत्तरस्येति । चकारो वा विध्यर्थ इति बोध्यम् । द्वित्वाभावविशिष्टस्यापि भाष्ये उदाहरणादाह—वेत्यधिकाराच्चेति । 'सर्वत्र शाकल्यस्ये'ति वा विकल्प इति बोध्यम् ।

नादिन्या० । तत्परे इति, षष्ठ्यर्थे सप्तमी । पुत्रशब्दपरे पुत्रशब्दे विद्यमानस्य यर इति चार्थः । सूत्रे आदिनीति लुप्तसप्तमीकमित्याशयेनोदाहरति—पुत्रपुत्रादिनीति । आक्रोशस्य स्त्रीष्वेव प्रसिद्धत्वाच्च । अतएव पूर्वसाहचर्याच्च हतजग्धयोरपि स्त्रियामेव । तदाह—पुत्रहतीति । अस्वाङ्गेति । तत्र 'जाते'रित्यस्य संबन्धादिदं चिन्त्यम् । पुत्रशब्दस्याऽजातित्वात् । तस्माद् गौरादिष्विमौ पाठ्यावित्याहुः । वथ्सः अफ्सरा इति । नचात्राऽऽद्ये वदेः

---

† पाठोऽयं लेखकप्रमादागत इति कैयटः । तेन स्वीकृतः पाठस्त्वयम्—"नायं पर्युदासः । यदन्यदच इति । किं तर्हि ? प्रसज्यप्रतिषेधः । अचि नेति ।"

## उदः स्थास्तम्भोः पूर्वस्य ॥ ८ । ४ । ६१ ॥

**उदः पूर्वत्वे स्कन्देश्छन्दस्युपसंख्यानम् ॥ १ ॥**

उदः पूर्वत्वे स्कन्देश्छन्दस्युपसंख्यानं कर्तव्यम् । अघ्न्ये दूरमुत्कन्द । रोगे चेति वक्तव्यम् । उत्कन्दको रोगः ।

## शश्छोऽटि ॥ ८ । ४ । ६३ ॥

**छत्वममि तच्छ्लोकेन तच्छ्मश्रुणेति प्रयोजनम् ॥ १ ॥**

छत्वममीति वक्तव्यम् । किं प्रयोजनम् ? तच्छ्लोकेन तच्छ्मश्रुणेति ।

## झरो झरि सवर्णे ॥ ८ । ४ । ६५ ॥

सवर्णग्रहणं किमर्थम् ?

**झरो झरि सवर्णग्रहणं समसङ्ख्यप्रतिषेधार्थम् ॥ १ ॥**

झरो झरि सवर्णग्रहणं क्रियते 'समसंख्यप्रतिषेधार्थम्' । सख्यातानुदेशो* मा भूदिति । किं च स्यात् ? इह न स्यात्—शिण्ढि पिण्ढि ।

## अ अ ॥ ८ । ४ । ६८ ॥

किमर्थमिदमुच्यते ? अकारोऽयमक्षरसमाम्नाये विवृत उपदिष्टस्तस्य संवृतताप्रत्यापत्तिः क्रियते । किं पुनः कारणं विवृत उपदिश्यते ?

---

प्र०— झरो झरि सवर्णे । शिण्ढीति । डकारस्य ढकारे परतो लोपः यथासंख्याश्रयणे तु न स्यात् । सवर्णग्रहणात्तु—यथासंख्याऽभावः । नहि यथासंख्ये सत्यप्यसवर्णो झरस्ति यद्व्यावृत्त्यर्थं सवर्णग्रहणं स्यात् ।

अ अ किमर्थमिति । अकारस्याऽकारवचने प्रयोजनाऽभावात्प्रश्नः । अकारोऽयमिति । सवर्णार्थमिह शास्त्रे विवृतदोषयुक्तोऽकार उपदिष्टस्तस्य प्रयोगे संवृतस्यैवोच्चारणार्थमिदं प्रत्यापत्तिवचनम् । अक्षरसमाम्नायग्रहणं सकलशास्त्रोपलक्षणम् । किं पुनरिति । कस्मात्पुनः कारणादित्यर्थः । निमित्तकारणहेतुषु सर्वासां प्रायदर्शन'मिति

---

उ०—सः, अन्त्येऽप्यपूर्वात्सत्तेरसिः उभयत्रापि चर्त्वेन चयिति चर्त्वस्याऽसिद्धत्वाच्चयमेतदुदाहरणमिति वाच्यम् । पाणिनिमतसिद्धाऽव्युत्पत्तिपक्षाभिप्रायेण सत्त्वात् ।

उदः स्था० । उत्कन्दक इति । न च सस्यान्तरतम्याल्पकारे तस्याऽसिद्धत्वाच्चर्त्वं दुर्लभं, भाष्येऽभ्यासे चर्त्वस्य परत्र पाठेन चर्त्वस्यैव परत्वेन तं प्रत्यस्याऽसिद्धत्वाभावादित्याहुः । पृथग्युक्तः पाठस्तु चिन्त्य एव ।

## सिद्धं तु तपरनिर्देशात् ॥ ३ ॥

सिद्धमेतत् । कथम् ? 'तपरनिर्देशात्' । तपरनिर्देशः कर्तव्यः+ 'अद' इति ।

अपर आह—अकारस्य प्रत्यापत्तौ दीर्घप्रतिषेधः । अकारस्य प्रत्यापत्तौ दीर्घस्य प्रतिषेधो वक्तव्यः । खट्वा माला । नैष दोषः । दीर्घोच्चारणसामर्थ्यान्न भविष्यति । इदं तर्हि प्रयोजनम् । वृक्षाभ्यां प्लक्षाभ्याम्× । अत्रापि दीर्घवचनसामर्थ्यान्न भविष्यति । इदं तर्हि—अपि काकः श्येनायते† । ननु चाऽत्रापि दीर्घवचनसामर्थ्यादेव न भविष्यति ? अस्त्यन्यद्दीर्घवचने प्रयोजनम् । किम् ? दधीयति मधूयति । अत्रैव चैष दोष आदेशस्य चाऽनण्त्वात्सवर्णानां ग्रहणं न प्राप्नोति । केषाम् ? उदात्तानुदात्तस्वरितानुनासिकानाम् । सिद्धं तु तपरनिर्देशात् । सिद्धमेतत् । कथम् ? तपरनिर्देशात् । तपरनिर्देशः कर्तव्यः । 'अद'दिति ।

प्र०—ततश्च यद्गुणयुक्तः संवृत उच्चारितस्तद्गुण एव त्रयाणामपि ह्रस्वदीर्घप्लुतानां प्राप्नोतीत्यनिष्टप्रसङ्गः, इष्टं च न सिध्यतीति, सर्वगुणस्य मात्रिकस्य प्रत्यापत्तेरिष्टत्वात् । सिद्धं त्विति । 'अद' इति सूत्रं कर्तव्यम् । तत्र तः परो यस्मादिति पूर्वोऽकारस्तपरः । तात्परस्तपर इत्येवं द्वितीयस्तपरः । एवन्त्विति । यतस्तपरस्ततः स्थान्यकारो भिन्नकालौ दीर्घप्लुतौ न ग्रहीष्यति । आदेशस्तु तत्कालान्गुणान्तरयुक्तान्ग्रहीष्यति । केचिद-

उ०—चेति । इष्टं चेति । उदात्तादिगुणयुक्तह्रस्वस्थाने तद्गुणकस्यैव प्रत्यापत्तिरिष्टा, सा च सवर्णग्रहणाऽभावे न सिध्यतीत्यर्थः । अत्र सिद्धन्त्विति प्रथमवार्तिके 'अत्-अ' इति, उत्तरत्र तपरत्वरहितः पाठः । 'अपर आहे'ति पक्षे उभयत्रापि तपरनिर्देश इति भेदः । तद्ध्वनयन् व्याचष्टे—अद इति सूत्रमिति । तः पर इति । तपरसूत्रे तन्त्रेणार्थद्वयाश्रयणादिति भावः । भिन्नकालाविति । नियमफलकविध्यर्थं च तत्सूत्रं । तद्ध्वनयन्नाह—आदेशस्तु तत्कालानिति । 'अपर आहे' त्येतद्व्याचष्टे—केचिदिति । पदमात्रिका इति । एकश्रुतिविपर्ययेण सहोदात्तानुदात्तस्वरितानुनासिकाऽननुनासिकाः पठित्यर्थः । यद्वा उदात्तादित्रयमनुनासिकत्वतदभावाभ्यां द्विधेति षट् । सामर्थ्यादिति । अन्यथैकशेषाध्ययणमनर्थकं स्यादिति भावः । स्थानिभिरिति । आदेशैस्सवर्णत्वादेव न गृह्येतेति भावः । सिद्धमिष्टमिति । अनेन व्याकरणाध्ययनप्रयोजनाभ्यां सकलपुरुषार्थसिद्धिं दर्शयति । अन्ते मङ्गलाचरणं च कृतं भवति । एवं सूत्रकारेणाऽपि विष्णुवाचकाऽकारस्य द्विरुच्चारणाद्विष्णुस्मरणरूपं मङ्गलाचरितम् । किं चा'ऽकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना नानारूपा भवती'ति श्रुतेरकारस्य सर्वशब्दप्रकृतित्वात्, 'अ' इति ब्रह्मे'ति शब्दब्रह्मरूपत्वश्रवणाच्च महामङ्गलार्थता । वार्तिककृताऽपि 'भगवतः पाणिनेः सिद्ध'मिति सिद्धशब्दोच्चारणेन कृतं मङ्गलम् । भगवता पतञ्जलिनाऽपि 'एकशेषनिर्देशोऽयम स' इत्यन्ते वदता कृतं मङ्गलम् । एवञ्च तृ-

\+ १. १. ७०. × ७. ३. १०२. † ७. ४. २५.

**एकशेषनिर्देशाद्वा स्वरभिन्नानां भगवतः पाणिनेः सिद्धम् ॥ ४ ॥**

एकशेषनिर्देशाद्वा स्वरभिन्नानां भगवतः पाणिनेराचार्यस्य सिद्धम् । एकशेषनिर्देशोऽयम्—अ अ अ इति ।

इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्येऽष्टमस्याऽध्यायस्य चतुर्थे पादे प्रथममाह्निकम् । पादश्च समाप्तः ।

**॥ अष्टमोऽध्यायः समाप्तः ॥**

---

॥ इति श्रीभगवत्पतञ्जलिविरचितं व्याकरणमहाभाष्यं सम्पूर्णम् ॥

॥ शुभं भूयात् ॥

---

प्र०—ददिति द्वावपि तपरौ पठितव्यावित्याहुः । एकशेषनिर्देशाद्वेति । षण्मात्रिका अकाराः स्थानिनो निर्दिश्यन्ते । एवमादेशा अपि षडेव । ततश्चैकशेषः, तत्र षण्णां स्थानिनां निर्देशसामर्थ्याद्भिन्नकालौ दीर्घप्लुतौ स्थानिभिर्न गृह्येते । तत्र यथासंख्यं षण्णां विवृतानां स्थाने षडादेशाः संवृता भवन्तीति सिद्धमिष्टम् ।

*श्रुत्वा शास्त्राणि विद्वद्भ्यो यथाप्रज्ञं यथाऽऽगमम् । भाष्यदीपं व्यधत्तेमं कैय्यटो जैय्यटात्मजः ॥ १ ॥

इत्युपाध्यायजैयटपुत्रकैयटकृते भाष्यप्रदीपेऽष्टमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् । पादोऽध्यायश्च समाप्तः ।

---

उ०—ध्यायिनां प्रवक्तॄणां च सकलपुमर्थसिद्धिर्दर्शिता । यथोक्तम्† 'इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् । इयं सा मोक्षमाणानामजिह्मा राजपद्धतिरिति' सर्वेष्टसिद्धिः ।

भाष्याब्धेः सप्रदीपस्य भगवत्कृपया मया । यथामति कृता व्याख्या प्रीयतां भगवांस्तया ॥ १ ॥

गङ्गा शिवश्च शेषश्च रक्षन्त्वेनां तु सर्वतः । सतां हृदयपद्मेषु प्रसिद्धिं प्रापयन्तु च ॥ २ ॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्द्योतेऽष्टमाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् । पादोऽध्यायश्च समाप्तः ।‡

---

* इदं क्वचिन्न दृश्यते । † भर्तृहरिणा वाक्यप्रदीपे (१।१६)

‡छात्राणामुपकाराय वेदसंरक्षणाय च ।
पातञ्जलं महाभाष्यं सटीकं शोधितं मया ॥ १ ॥
स्वाभिप्रायेण मयका किञ्चिदप्यत्र नेरितम् ।
ग्रन्थान्तराणि त्वालोच्य निबन्धांश्च पृथग्विधान् ॥ २ ॥
व्याकरणाचार्येण वेदव्रतेन शास्त्रिणा ।
युक्तियुक्तमयः पाठः सर्वेषां सन्निवेशितः ॥ ३ ॥
न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः ।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां विभासते ॥ ४ ॥

# महाभाष्यपरिशिष्टम्

## सप्तमाष्टमाध्यायस्थश्लोकवार्तिकसङ्ग्रहः

## अथ सप्तमोऽध्यायः

### अतो भिस ऐस् ॥ ७ । १ । ९ ॥

१. एत्त्वं भिसि परत्वाच्चेदत ऐस्क भविष्यति ।
कृत एत्त्वे भौतपूर्व्यादैस्तु नित्यस्तथा सति ॥१॥

### औङ आपः ॥ ७ । १ । १८ ॥

२. औकारोऽयं शीविधौ ङिद्गृहीतो ङिच्चास्माकं नास्ति कोऽयं प्रकारः ।
सामान्यार्थस्तस्य चाऽऽसञ्जनेऽस्मिन् ङित्कार्यं ते श्यां प्रसक्तं स दोषः ॥१॥

३. ङित्त्वे विद्याद्वर्णनिर्देशमात्रं वर्णे यत् स्यात्तच्च विद्यात्तदादौ ।
वर्णश्चाऽयं तेन ङित्त्वेऽप्यदोषो निर्देशोऽयं पूर्वसूत्रेण वा स्यात् ॥२॥

### अष्टाभ्य औश् ॥ ७ । १ । २१ ॥

४. औशभावस्तु लुक् तत्र षड्भ्योऽप्येवं प्रसज्यते ।
अपवादो यस्य विषये यो वा तस्मादनन्तरः ॥१॥

५. आत्वं यत्र तु तत्रौश्त्वं तथा ह्यस्य ग्रहः कृतः ।
स्वमोर्लुक् च त्यदादीनां कृते ह्यत्वे न लुग् भवेत् ॥२॥

### युष्मदस्मद्भ्यां ङसोऽश् ॥ ७ । १ । २७ ॥

६. सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः ।
एकदेशविकारे हि नित्यत्वं नोपपद्यते ॥१॥

### समासेऽनञ्पूर्वे क्त्वो ल्यप् ॥ ७ । १ । ३७ ॥

७. किं नञः प्रतिषेधेन न गतिर्न च कारकम् ।
यावता नञि पूर्वे तु ल्यब्भावो न भविष्यति ॥१॥

८. प्रतिषेधात्तु जानीमस्तत्पूर्वं नेह गृह्यते ।
प्रत्ययग्रहणे यावत् तावदभवितुमर्हति ॥२॥

### अमो मश् ॥ ७ । १ । ४० ॥

९. अमो मश् न मकारस्य वचनादन्यबाधनम् ।
द्विमकार ईडपृक्ते यकारादौ न दुष्यति ॥१॥

### इकोऽचि विभक्तौ ॥ ७ । १ । ७३ ॥

१०. इकोचि व्यञ्जने मा भूदस्तु लोपः स्वरः कथम् ।
स्वरो वै श्रूयमाणोऽपि लुप्ते किं न भविष्यति ॥१॥

११. रायात्वं तिसृभावश्च व्यवधान्नुमा अपि ।
नुड् वाच्य उत्तरार्थं तु इह किञ्चित् त्रपो इति ॥२॥

### तृज्वत् क्रोष्टुः ॥ ७ । १ । ९५ ॥ स्त्रियां च ॥ ७ । १ । ९६ ॥

१२. तृज्वत् स्त्रियां विभक्तौ चेत् क्रोष्ट्रीभक्तिर्न सिध्यति ।
ईकारे तन्निमित्तः सः, गौरादिषु न पठ्यते ॥१॥

१३. तेनैव भावनं चेत् स्यादनिष्टोऽपि प्रसज्यते ॥२॥

### वदव्रजहलन्तस्याचः ॥ ७ । २ । ३ ॥

१४. एकाचस्तौ वलीति वा ॥१॥

### त्यदादीनामः ॥ ७ । २ । १०२ ॥

१५. त्यदादीनामकारेण सिद्धत्वाद् युष्मदस्मदोः ।
शेषे लोपस्य लोपेन ज्ञायते प्राक् ततोऽदिति ॥१॥

१६. अपि वोपसमस्तार्थमत्वाभावात् कृतं भवेत् ।
टिलोपणाचभावार्थः कर्त्तव्य इति तत्स्मृतम् ॥२॥

१७. अथवा शेष सप्तम्या शेषे लोपो विधीयते ।
लुप्तशिष्टे हि तस्याऽऽहुः कार्यसिद्धिं मनीषिणः ॥३॥

### अदस औ सुलोपश्च ॥ ७ । २ । १०७ ॥

१८. अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते ।
ह्रस्वाल्लुप्येत सम्बुद्धिर्न हलः प्रकृतं हि तत् ॥१॥

१९. आप एत्वं भवेत्तस्मिन्न झलीत्यनुवर्तनात् ।
अन्यपक्षाच्च कादित्वं शीभावश्च प्रसज्यते ॥२॥

**न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥ ७ । ३ । ३ ॥**

२०. य्वाभ्यां परस्यावृद्धित्वमपवादौ वृद्धेर्हि तौ ।
नित्यावैचौ तयोर्वृद्धिः किमर्थं नेति शिष्यते ॥१॥

२१. यत्र य्वाभ्यां परा वृद्धिस्तत्राध्यश्वेर्यथा न तौ ।
अचामादेर्य्वभ्यां हि तौ कथं द्व्याशीतिके न तौ ॥२॥

२२. यत्र वृद्धिरचामादेस्तत्रैचावत्र योर्हि सा ।
अथ कस्मात् पदान्ताभ्यां यथेणो न भवेद् यणः ॥३॥

**पुगन्तलघूपधस्य च ॥ ७ । ३ । ८६ ॥**

२३. संयोगे गुरुसञ्ज्ञायां गुणो भेत्तुर्न सिध्यति ।
विध्यपेक्षं लघोश्चासौ कथं कुण्डिनं दुष्यति ॥१॥

२४. धातोर्नुमः कथं रञ्जेः स्यन्दिश्रन्थ्योर्निपातनात् ।
अनङ्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः ॥२॥

२५. अभ्यस्तस्य यदाहाचि लङर्थं तत् कृतं भवेत् ।
क्नुसनोर्यत् कृतं किर्वं ज्ञापकं स्याल्लघोर्गुणे ॥३॥

**शाच्छोरन्यतरस्याम् ॥ ७ । ४ । ४१ ॥**

२६. देवत्रातो गलो ग्राह इति योगे च सद्विधिः ।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥१॥

**दो दद् घोः ॥ ७ । ४ । ४६ ॥**

२७. अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥१॥

२८. तान्ते दोषो दीर्घत्वं स्याद् दान्ते दोषो निष्ठानत्वम् ।
धान्ते दोषो धत्वप्राप्तिः थान्तेऽदोषस्तस्मात् थान्तः ॥२॥

**अपो भि ॥ ७ । ४ । ४८ ॥**

२९. स्ववस्स्वतवसोर्मास उषसश्च त इष्यते ॥१॥

**ऋतश्च ॥ ७ । ४ । ९२ ॥**

३०. किरतिं चर्करीतान्तं पचतीत्यत्र यो नयेत् ।
प्रासिद्धं तमहं मन्ये प्रारब्धस्तेन संग्रहः ॥१॥

# अथाष्टमोऽध्यायः

**कुत्सने च सुप्यगोत्रादौ ॥ ८ । १ । ६९ ॥**

३१. सुपि कुत्सने क्रियाया, मकारलोपोऽतिङीति चोक्तार्थम् ।
पूतिश्चानुबन्धो विभाषितं चापि बह्वर्थम् ॥१॥

**गतिर्गतौ ॥ ८ । १ । ७० ॥**

३२. गतिना तु विशिष्टस्य गतिरेव विशेषकः ।
साधने केन ते न स्याद्बाह्यमाभ्यन्तरो हि सः ॥१॥

**धि च ॥ ८ । २ । २५ ॥**

३३. धिसकारे सिचो लोपश्चकाद्धीति प्रयोजनम् ।
आशाध्वं तु कथं ते स्याज्जश्त्वं सस्य भविष्यति ॥१॥

३४. सर्वत्रैवं प्रसिद्धं स्याच्छ्रुतिश्चापि न भिद्यते ।
लुङश्चापि न मूर्धन्ये ग्रहणं सेटि दुष्यति ॥२॥

३५. घसिभस्योर्न सिध्येत्तु तस्मात् सिज्ग्रहणं न तत् ।
छान्दसो वर्णलोपो वा यथेष्कर्तारमध्वरे ॥३॥

**अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः ॥ ८ । २ । ५५ ॥**

३६. कृशेः क एष विहित इगुपधात्
स्वरे हि दोषो भवति परिकृशे ।
पदस्य लोपो विहित इति मतं
जगत्यनूना भवति हि रुचिरा ॥१॥

**वित्तो भोगप्रत्यययोः ॥ ८ । २ । ५८ ॥**

३७. यस्य विदेः श्नशकौ तपरत्वे, तनवचने तदु वा प्रतिषेधौ ।
श्यन्विकरणान्न विधिश्छिदितुल्यो, लुग्विकरणो बलि पर्यवपन्नः ॥१॥

एष एवार्थः—

३८. ययोर्विदोः श्नशकावुक्तौ तयोर्नत्वस्य यानञौ ।
ययोस्तु श्यंल्लुकौ ताभ्यां छिदिवन्नेड्वदिष्यते ॥२॥

अपर आह—

३९. वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ।
विन्तेर्विन्नश्च वित्तश्च वित्तो भोगेषु विन्दतेः ॥३॥

**भित्तं शकलम् ॥ ८ । ५ । ५९ ॥**

४०. तत्वमभिधायकं चेच्छकलस्यानर्थकः प्रयोगः स्यात् ।
शकलेन चाप्यभिहिते न भवति तत्वं निगमयामः ॥१॥

**क्विन्प्रत्ययस्य कुः ॥ ८ । २ । ६२ ॥**

४१. क्विनः कुरिति वक्तव्ये प्रत्ययग्रहणं कृतम् ।
क्विन्प्रत्ययस्य सर्वत्र पदान्ते कुत्वमिष्यते ॥१॥

**अदसोऽसे र्दादु दो मः ॥ ८ । २ । ८० ॥**

४२. अदसोऽद्रेः पृथङ् मुत्वं केचिदिच्छन्ति लत्ववत् ।
केचिदन्त्यसदेशस्य, नेत्येकेऽसे हिं दृश्यते ॥१॥

**तयोर्य्वावचि संहितायाम् ॥ ८ । २ । १०८ ॥**

४३. किं नु यणा भवतीह न सिद्धं य्वाविदुतोर्यदयं विदधाति ।
तौ च मम स्वर सन्धिषु सिद्धौ शाकलदीर्घविधी तु निवर्त्यौ ॥१॥

४४. इक तु यदा भवति प्लुतपूर्वस्तस्य यणं विदधात्यपवादम् ।
तेन तयोश्च न शाकलदीर्घौ यण्स्वरबाधनमेव तु हेतुः ॥२॥

**द्विस्त्रिश्चतुरिति कृत्वोऽर्थे ॥ ८ । ३ । ४३ ॥**

४५. कृत्वसुजर्थे षत्वं ब्रवीति कस्माच्चतुष्कपाले मा ।
षत्वं विभाषया भून्ननु सिद्धं तत्र पूर्वेण ॥१॥

४६. सिद्धे ह्ययं विधत्ते चतुरः षत्वं यदापि कृत्वोऽर्थे ।
लुप्ते कृत्वोऽर्थीये रेफस्य विसर्जनीयो हि ॥२॥

४७. एवं सति त्विदानीं द्विस्त्रिश्चतुरित्यनेन किं कार्यम् ।
अन्यो हि नेदुदुपधः कृत्वोऽर्थे कश्चिदप्यस्ति ॥३॥

४८. अक्रियमाणे ग्रहणे विसर्जनीयस्तदा विशेष्येत ।
चतुरो न सिध्यति तदा रेफस्य विसर्जनीयो हि ॥४॥

४९. तस्मिंस्तु गृह्यमाणे युक्तं चतुरो विशेषणं भवति ।
प्रकृतं पदं तदन्तं तस्यापि विशेषणं न्याय्यम् ॥५॥

**नित्यं समासेऽनुत्तरपदस्थस्य** ॥ ८ । ३ । ४५ ॥

५०. नानापदार्थयोर्वर्तमानयोः ख्यायते यदा योगः ।
तस्मिन् षत्वं कार्यं तद्युक्तं तच्च मे नेह ॥१॥

५१. ऐकार्थ्ये सामर्थ्ये वाक्ये षत्वं न मे प्रसज्येत ।
तस्मादिह व्यपेक्षां सामर्थ्यं साधु मन्यन्ते ॥२॥

५२. अथ चेत् कृदन्तमेतत्ततोऽधिके नैव मे भवेत् प्राप्तिः ।
वाक्ये च मे विभाषा प्रतिषेधो न प्रकल्पेत ॥३॥

५३. अथ चेत् संविज्ञानं नित्ये षत्वे ततो विभाषेयम् ।
सिद्धं च मे समासे प्रतिषेधार्थस्तु यत्नोऽयम् ॥४॥

**सुविनिर्दुर्भ्यः सुपिसूतिसमाः** ॥ ८ । ३ । ८८ ॥

५४. सुपेः षत्वं स्वपेर्मा भूद् विसुष्वापेति केन न ।
हलादिशेषान्न सुपिरिष्टं पूर्वं प्रसारणम् ॥१॥

५५. स्थादीनां नियमो नात्र प्राक् सितादुत्तरः सुपिः ।
अनर्थके विषुषुपुः सुपिभूतो द्विरुच्यते ॥२॥

**अनितेः** ॥ ८ । ४ । १९ ॥ **अन्तः** ॥ ८ । ४ । २० ॥

**उभौ साभ्यासस्य** ॥ ८ । ४ । २१ ॥

**उपसर्गादनोत्परः** ॥ ८ । ४ । २८ ॥

५६. अनितेरन्तः पदान्तस्य यो वा तस्मादनन्तरः ।
साभ्यासस्य द्वयोरिष्टम् माविन्यप्योति नेष्यते ॥१॥

**अ अ** ॥ ८ । ४ । ६८ ॥

५७. आदेशार्थं सवर्णार्थमकारो विवृतः स्मृतः ।
आकारस्य तथा ह्रस्वस्तदर्थं पाणिनेर अ ॥१॥

॥ इत्यष्टमोऽध्यायः ॥

---

# पञ्चमभागस्थभाष्यशुद्धिपत्रकम्

## [ तत्र सप्तमाध्याये ]

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|---|---|---|
| ४ | ३ | भुज्व्यादिनां | भुज्व्यादीनां | ८१ | ४ | स्था– | स्थानि– |
| १४ | ८ | विशेपण | विशेपणं | ८६ | ३ | दीर्घमावि | दीर्घभावि |
| १५ | १ | पर्वायः | पर्यायः | ९३ | १ | ऋत | ॠत |
| १५ | ९ | वक्क्तयः | वक्तव्यः | ९४ | २ | परस्म | परस्मै |
| १६ | ४ | प्रतिषे | प्रतिषेधं | १०५ | ३ | पुनस्तादपि | पुरस्तादपि |
| १६ | ९ | स्वावयाति | च्यावयाति | ११८ | १५ | नेन्येवान्यत्र | नेत्येवान्यत्र |
| २० | ९ | पतिर्न | पत्तिर्न | ११९ | २-३ | ग्लिष्ठम | ग्लिष्टं |
| २२ | ७ | इति । न | इति न | १२२ | ७ | अकर्मश्चापि | अकर्मकाश्चापि |
| ३० | ९ | यष्म | युष्म | १३६ | ३ | वृत्यर्थ | वृत्त्यर्थम् |
| ३४ | २ | निवत्ति | निवृत्ति | १४१ | ७ | देशाण्विड् | देशेण्विड् |
| ३५ | ४ | निदिश्य | निर्दिश्य | १६६ | १० | अतिक्रन्तौ | अतिक्रान्तौ |
| ४० | ५ | प्राप्नोति | प्राप्नोति | १७१ | ३ | रादेशो | रादेशे |
| ४५ | २ | नु | न | १८७ | ५ | तकदा | तकदानं |
| ४८ | ९ | शय नम् | शयानम् | १८९ | २ | दैविका | देविका |
| ४८ | १० | ख्यानां | ख्यानं | १९३ | ९ | अचामादीना | अचामादिना |
| ४९ | ३ | अमो | अमो मश् | १९७ | ८ | ग्रहस्य | ग्रहणस्य |
| ५१ | १ | प्रसङ्गा | प्रसङ्ग | २२३ | ९ | क्लम्बु | क्लमु |
| ५१ | १२ | सुक्कक्तव्यो | सुग्वक्तव्यो | २३१ | ५ | सार्धधातुके | सार्वधातुके |
| ५५ | ४-५ | सूत्र | सूत | २३३ | ६ | भूसुवाः | भूसुवोः |
| ५६ | १० | धादूपदेशो | धातूपदेशे | २३४ | ३ | अता | अतो |
| ६२ | ४ | प्रेयोजनम् | प्रयोजनम् | २३७ | २ | वावचन | वावचनं |
| ६२ | ९ | उगिल्लणं | उगिल्लक्षणं | २४२ | ७ | हीदानां | हीदानीं |
| ६४ | ६ | उगिलल्लक्षण | उगिल्लक्षण | २५० | ७ | कि | किं |
| ७० | २ | ुंवद्भावेना | पुंवद्भावेना | २५७ | ६ | पुत्रायन्तः | पुत्रीयन्तः |
| ७० | १० | पुंस्कस्यादितिश्येत | पुंस्कस्यातिदिश्येत | २५९ | ११ | धान्ते | धान्तो |
| ७१ | ९ | पुनाननेन | पुमाननेन | २६१ | ६ | ाम | मि |
| ८० | १७ | प्रतिषिम्यते | प्रतिषिध्यते | २७४ | ४ | सिद्धि | सिद्धिः |

# [ अष्टमाध्याये ]

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८८ | ६ | तह्यँ | तह्युँ |
| ३१९ | १० | द्वद्व | द्वन्द्व |
| ३४२ | ७ | कुत्सिने | कुत्सने |
| ३४३ | १ | ,, | ,, |
| ३४३ | ३ | पूतिश्चानु | पूतिश्चचानु |
| ३४३ | ६ | पू र्ति | पूर्ति |
| ३६० | ४ | पीति | पिति |
| ३६१ | ८ | षिद्धिः | सिद्धिः |
| ३६५ | ४ | अन्तर | अन्तरङ्ग |
| ६६७ | १० | नुमोऽनद्य | नुमो नद्य |
| ३६८ | २ | नुदत्ता | नुदात्त |
| ३७० | ६ | घीट | धीट |
| ३८१ | १२ | सुष्टुभा | सुष्टुभा |
| ३८४ | १६ | प्रतिषिष्यते | प्रतिषिध्यते |
| ३८७ | ८ | सयोगा | संयोगा |
| ३८९ | ४ | दनुर्तिष्यते | दनुवर्तिष्यते |
| ३८९ | ११ | ध्वमत्यत्र | ध्वमित्यत्र |
| ३९१ | ४ | मिग्न | मग्न |
| ३९४ | ४ | भिहा | मिहा |
| ३९४ | १५ | पञ्जलि | पतञ्जलि |
| ३९८ | ८ | रेवयिमङा | रेवमियङा |
| ४०२ | ६ | इगुदधात् | इगुपधात् |
| ४०६ | ५ | प्रत्यययस्य | प्रत्ययस्य |
| ४२६ | ९ | वैचो | वैचौ |
| ४५४ | ७ | समुद्गतः | समुद्गः |
| ४५९ | ५ | द्विस्त्रिश्चुर्णा | द्विस्त्रिश्चतुर्णा |
| ४६५ | ६ | अथर्वद् | अर्थवद् |
| ४६७ | ८ | मुसलमुसलम् | मुसलम् मुसलम् |
| ४७८ | ८ | लुलुविद्वेलु लुविध्व | लुलुविद्वे लुलुविध्व |
| ४८७ | ७ | सिवुहां | सिवुसहां |